SARASVATĪBHAVANA-GRANTHAMĀLĀ
[Vol. 135]

# KĀTANTRAVYĀKARAṆA

OF

ĀCĀRYA ŚARVAVARMĀ

[PART-FOUR]

*With four Commentaries*

'VṚTTI' & 'ṬĪKĀ'

By

ŚRĪ DURGASINGH

'KĀTANTRAVṚTTIPAÑJIKĀ'

By

ŚRĪ TRILOCANADĀSA

KALĀPACANDRA

By

KAVIRĀJA SUṢEṆA ŚARMĀ

'SAMĪKṢĀ'

By Editor

*FOREWORD BY*

PROF. ASHOK KUMAR KALIA

VICE-CHANCELLOR

*EDITED BY*

PROF. JĀNAKĪPRASĀDA DWIVEDĪ
Ex-Head, Śabdavidyā-Saṅkāya
Central Institute of Higher Tibetan Studies
(Deemed University)
Sarnath, Varanasi



VARANASI
2005

*Research Publication Supervisor—*
**Director, Research Institute**
Sampurnanand Sanskrit University
Varanasi.

ISBN : 81-7270-006-7 (Set)
ISBN : 81-7270-160-8 (Vol- IV)



*Published by—*
**Dr. Harish Chandra Mani Tripathi**
***Director, Publication Institute***
Sampurnanand Sanskrit University
Varanasi-221-002.



*Available at—*
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002.



**First Edition,** 500 Copies

**Price** : Rs. 800.00



*Printed by—*
**Anand Printing Press**
C. 27/170-A, Jagatganj,
Varanasi-221002

सरस्वतीभवन-ग्रन्थमाला
[ १३५ ]

आचार्यशर्ववर्मप्रणीतं

# कातन्त्रव्याकरणम्

[ चतुर्थो भागः ]

श्रीदुर्गसिंहकृताभ्यां कातन्त्रवृत्ति-टीकाभ्यां
श्रीमत्त्रिलोचनदासकृतया 'कातन्त्रवृत्तिपञ्जिका'-टीकया
कविराजसुषेणशर्मकृतया 'कलापचन्द्र'-टीकया
सम्पादकीयसमीक्षया

कुलपतेः प्रो. अशोककुमारकालियामहोदयस्य प्रस्तावनया च विभूषितम्

सम्पादकः
प्रो. जानकीप्रसादद्विवेदी
अध्यक्षचरः, शब्दविद्यासङ्कायस्य
केन्द्रीय-उच्चतिब्बती-शिक्षासंस्थानम्
सारनाथः, वाराणसी



वाराणस्याम्
२०६२ तमे वैक्रमाब्दे १९२७ तमे शकाब्दे २००५ तमे खैस्ताब्दे

ISBN : 81-7270-006-7 (Set)
ISBN : 81-7270-160-8 (Vol- IV)

*अनुसन्धान-प्रकाशन-पर्यवेक्षकः*
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी।

❑

*प्रकाशकः—*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
***निदेशकः, प्रकाशन-संस्थानस्य***
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी-२२१००२

❑

*प्राप्ति-स्थानम्—*
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१००२

❑

**प्रथमं संस्करणम्** – ५०० प्रतिरूपाणि
**मूल्यम्** – ८००.०० रूप्यकाणि

❑

*मुद्रकः—*
**आनन्द प्रिण्टिंग प्रेस**
सी. २७/१७०-ए, जगतगंज
वाराणसी-२२१००२

TITLE : Kātantravyākaraṇam /
AUTHOR STAT : Ācāryaśarvavarmapraṇītam ; Durgasiṃhakṛtābhyāṃ Kātantra
EDITION STAT : 1. saṃskaraṇam
IMPRINT : Vārāṇasī :, 2005
LANGUAGE : In Sanskrit; commentaries in Hindi and Sanskrit; introductory
VOLUME : v. 4
D.K Agencies (P) Ltd.
www.dkagencies.com
DKSAN-6309

# प्रस्तावना

अस्ति महतो हर्षप्रकर्षस्य विषयोऽयं यत् **प्रो. जानकीप्रसादद्विवेदैः** सम्पादितं व्याख्याचतुष्टयोपेतं चतुर्थभागात्मकं कातन्त्रव्याकरणं सम्पूर्णानन्द-संस्कृतविश्वविद्यालयस्य प्रकाशनसंस्थानद्वारा प्रकाशपदवीं नीयते। भाषां विना जगदिदमन्धे तमसि मज्जेत्। यथोक्तं दण्डिना—

**इन्दमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।**

भाषाया विशुद्धये व्याकरणस्यापेक्षा। न हि व्याकरणज्ञानशून्यः साधून् शब्दान् प्रयोक्तुमीशः। अत एव 'मुखं व्याकरणं स्मृतम्'। वेदस्य रक्षार्थं व्याकरणाध्ययनमत्यावश्यकम्, 'रक्षार्थं वेदानामध्येयं व्याकरणम्, लोपागम-वर्णविकारज्ञो हि पुरुषः सम्यग् वेदान् परिपालयिष्यति' इति पतञ्जलिः। व्याकरणान्यष्टौ भविष्यपुराणे ब्राह्मपर्वणि—

**प्रथमं प्रोच्यते ब्राह्मं द्वितीयमैन्द्रमुच्यते।**
**याम्यं प्रोक्तं ततो रौद्रं वायव्यं वारुणं तथा।।**

**सावित्रं च तथा प्रोक्तमष्टमं वैष्णवं तथा।।**

लघुत्रिमुनिकल्पतरुकृतानि व्याकरणानि नवसंख्याकानि समाम्नातानि—

**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।**
**सारस्वतं चापिशलं शाकलं पाणिनीयकम्।।**

व्याकरणानामष्टविधत्वमेव प्रसिद्धम्, यथोक्तं भास्करेण—'अष्टौ व्याकरणानि षट् च भिषजां व्याचष्टा ताः संहिताः' इति भविष्यपुराणोक्तानि व्याकरणानि तु न प्रसिद्धानि। ऐन्द्रादीन्येव लोकविश्रुतानि। सर्वेष्वपि व्याकरणेषु लौकिकवैदिकोभयविधशब्दसाधकतया पाणिनीयव्याकरणस्य प्राधान्यम्। अत एव पाणिन्युपज्ञं व्याकरणं प्रसिद्धम्। समीक्षामर्मज्ञैः कोविदैः पाणिनीयव्याकरणे पतञ्जलिकृतं महाभाष्यम्, जयादित्यविरचिता काशिकावृत्तिः, जिनेन्द्रबुद्धिना रचितः काशिकान्यासः, हरदत्तेनाभिहिता पदमञ्जरी इति ग्रन्थचतुष्टयस्य यन्महत्त्वमङ्गीक्रियते, तदेव महत्त्वं कातन्त्रव्याकरणे श्रीदुर्गसिंहकृतयोः **कातन्त्रवृत्तितट्टीकयोः**, श्रीमत्त्रिलोचनदासीय**विवरणपञ्जिकायाः**, सुषेणविद्या-भूषणकृतस्य **कलापचन्द्रस्य** चाप्यसन्दिग्धं स्वीक्रियते।

कातन्त्रव्याकरणस्य रचना पाणिनिव्याकरणानुसारिण्येव। व्याकरणेऽस्मिन् चतुर्दशशतमितानि सूत्राणि विद्यन्ते। कार्तिकेयस्य कुमारस्य वा साहाय्येन निर्मितमिदं व्याकरणं **कौमारव्याकरण**मपि कथ्यते। वस्तुत आचार्य-

शर्ववर्मविरचितं कातन्त्रव्याकरणमिदं काश्मीरदेशे प्रचारं प्राप्तम्। व्याकरणविषयावबोधः सुखेन स्यादिति कातन्त्रव्याकरणस्य प्रतिज्ञा। सा च चरितार्था दृश्यते व्याकरणेऽस्मिन्।

सारनाथस्थस्य केन्द्रीय-उच्चतिब्बती-शिक्षासंस्थानस्य शब्दविद्या-सङ्कायाध्यक्षचरा आचार्यजानकीप्रसादद्विवेदा दीर्घदीर्घेभ्यो वर्षेभ्यः कातन्त्र-व्याकरणस्य समुद्धाराय बद्धपरिकराः सन्ति। श्रीदुर्गसिंहकृतां कातन्त्रवृत्तिं कातन्त्रटीकां, त्रिलोचनदासकृतां कातन्त्रवृत्तिपञ्जिकां, कविराजसुषेणशर्मकृतां कलापचन्द्रटीकाम्, बिल्वेश्वरकृतां टीकाञ्च सम्यग्रूपेण परिशील्य प्रो. द्विवेदिनो राष्ट्रभाषोपनिबद्धया स्वसमीक्षया कातन्त्रव्याकरणस्याभिप्रायं प्रस्फोरितवन्तः। तत्सारस्वताध्यवसायोऽयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयप्रकाशनसंस्थानेन विविधैर्भागैः प्रकाशितः। इतः पूर्वं सन्धिप्रकाशात्मकः प्रथमभागः १९९७ मितख्रिस्ताब्दे, द्वितीयभागस्य प्रथमखण्डो नामचतुष्टयाध्यायस्य पूर्वार्द्धपादत्रयात्मकः १९९८ मितख्रिस्ताब्दे, तस्यैवाध्यायस्योत्तरार्द्धपाद-त्रयात्मको भागो द्वितीयभागस्य द्वितीयखण्डात्मकः १९९९ मितख्रिस्ताब्दे, तृतीयभागस्य प्रथमखण्डः क्रियापदान्वयात्मकः २००० मितख्रिस्ताब्दे, तृतीयभागस्य द्वितीयखण्ड आख्याताध्यायस्यावशिष्टान् पञ्चपादान् क्रोडीकृत्य २००३ मितख्रिस्ताब्दे क्रमेण प्राकाश्यतामुपगताः।

तस्यैव कातन्त्रव्याकरणस्य वृत्ति-टीका-विवरणपञ्जिका-कलापचन्द्रेति व्याख्याचतुष्टयोपेतस्य सूत्रार्थरूपसिद्धिविविधपरिशिष्टसमीक्षासंवलितस्य च कृत्प्रत्ययाध्यायात्मकश्चतुर्थो भागः **प्रो. जानकीप्रसादद्विवेदा**नामध्यवसायेन मम कौलपत्ये प्राकाश्यतामुपनीयते प्रकाशन-संस्थानेनेति महतीं मुदमनुभवामि। एतदर्थम् आचार्यद्विवेदान् कातन्त्रव्याकरणे कृतभूरिपरिश्रमान् भूयो भूयोऽभिवादये जयजीवशब्दैश्च बहुशः सभाजये। अतः परं प्रकाशनसंस्थाननिदेशकानां **डॉ. हरिश्चन्द्रमणित्रिपाठिनां** तद्वशंवदानां **डॉ. ददन-उपाध्याय - डॉ.हरिवंशकुमारपाण्डेय**प्रभृतीनामहर्निशोद्यममहिम्नैव प्रकाशनकार्यं सारस्वतजगति प्रथिम्नः परां काष्ठामधिरूढमिति समनुभूय सपरिकराय डॉ. त्रिपाठिवर्याय समुपहरामि माङ्गल्याशीर्वचांसि।

अन्ते ग्रन्थरत्नमिदं साम्बाय सान्नपूर्णाय श्रीकाशीविश्वनाथाय समर्प्य कामये यदिदं शब्दानुशासनरसिकेभ्यः परां प्रीतिमुपनयत्विति।

अशोककुमार कालिया

**वाराणसी**
श्रावणपूर्णिमा,
वि.सं. २०६२

**( प्रो. अशोककुमारकालिया )**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

।। श्रीः ।।

# भूमिका

कातन्त्रकौमारकलापशब्दै-
र्यद् विश्रुतं भारतभूमिभागे ।
नेपालभूटानत्रिविष्टपादौ
यद् गौरवं जैन-परम्परायाः ।। १ ।

यच्चान्ध्रदेशीयसभासुपूज्य-
श्चक्रे कृती पण्डितशर्ववर्मा ।
संक्षेपतश्चारुतयाल्पकाले
लोकाभिधानस्य सुबोधनार्थम् ।। २ ।

तस्यैव सम्पादनकार्यजातं
सार्धं समीक्षादिविधाभिराढ्यम् ।
श्रेयःसनाथाभ्युदयाय भूयात्
स्कन्दप्रभावात् समुपासकानाम् ।। ३ ।

'वृत्ति-टीका-विवरणपञ्जिका-कलापचन्द्र' इति व्याख्याचतुष्टयोपेतस्य, सूत्रार्थ-रूपसिद्धि-विविधपरिशिष्ट-समीक्षासंवलितस्य च कातन्त्रव्याकरणस्य कृत्प्रत्यया-ध्यायात्मकं चतुर्थभागं समुपस्थापयन्निदानीं महतीं मुदमनुभवामि। इदमवश्यमव-गन्तव्यं यत् पाणिनीयव्याकरणे महाभाष्य-काशिकावृत्ति-न्यास-पदमञ्जरीति ग्रन्थचतुष्टयस्य यन्महत्त्वमङ्गीक्रियते समीक्षकैस्तदेव महत्त्वं कातन्त्रव्याकरणे दुर्गवृत्तेर्दुर्गटीकायास्त्रिलोचनदासीयविवरणपञ्जिकायाः सुषेणविद्याभूषणकृत-कलापचन्द्रस्य चाप्यसन्दिग्धं स्वीक्रियते। यत्रांशे कलापचन्द्रटीका नोपलभ्यते तत्र 'कृत्-शिरोमणि' इत्यपरपर्याया रघुनन्दनभट्टाचार्यशिरोमणिप्रणीता कलापतत्त्वार्णवाख्या व्याख्या संगृहीता प्रकृते षष्ठे खण्डे।

इदमप्यवगन्तव्यं यत् २।२।९० तमे दिनाङ्के या प्रकाशनयोजना मया सम्पूर्णानन्द-संस्कृतविश्वविद्यालये प्रस्तुता, यस्या अपेक्षितं स्पष्टीकरणं च २०/६/९४ तमे दिनाङ्के कृतमासीत्, सा ५/७/१९९६ तमे दिनाङ्के विश्वविद्यालयेन स्वीकृता, साम्प्रतमस्य चतुर्थभागस्य प्रकाशनेन परिपूर्णतां प्राप्नोति। इतः पूर्वं १९९७ तमे यीशवीयवत्सरे सन्धिप्रकरणात्मकः प्रथमो भागः, -१९९८ तमे यीशवीयवत्सरे नामचतुष्टयाध्यायात्मकद्वितीयभागस्य प्रथमखण्डम्, -१९९९ तमे

यीशवीयवत्सरे द्वितीयभागस्य द्वितीयखण्डम्, २००० तमे यीशवीयवत्सरे आख्याताध्यायात्मकतृतीयभागस्य प्रथमखण्डम्, २००३ तमे च यीशवीयवत्सरे तृतीयभागस्य द्वितीयखण्डं प्रकाशितम्। अयं चान्तिमो वर्तते कृत्प्रत्ययात्मकश्चतुर्थभागः।

इदं नाविदितं विदुषां यत् **'मोदकं देहि'** इति वचने 'मा+उदकम्' इति सन्धिविच्छेदमाश्रित्य सन्धिप्रकरणम्, 'मोदकम्' इति स्याद्यन्तपदमधिकृत्य नामचतुष्टयाध्यायम्, 'देहि' इति क्रियापदमनुसृत्याख्याताध्यायं च प्रायेण यीशवीयप्रथमशताब्द्यां रचितवान् आचार्यः शर्ववर्मा। वृक्षादिशब्दवदन्यानपि कृत्प्रत्ययान्तान् शब्दान् रूढानङ्गीकृत्य स कृत्प्रत्ययविधायकानि सूत्राणि नैव प्रणिनाय। तस्य भागस्य सम्पूर्तिः कृता वररुचिना कात्यायनेन। यथोच्यते ग्रन्थादौ वृत्तिकारेण दुर्गसिंहेन—

**वृक्षादिवदमी रूढाः कृतिना न कृताः कृतः।**
**कात्यायनेन ते सृष्टा विबुद्धिप्रतिबुद्धये।।इति।**

संस्कृतसाहित्ये कात्यायननाम्ना प्रसिद्धा अनेके आचार्या उपलभ्यन्ते। पाणिनीयसूत्राणां वार्त्तिककारस्य शुक्लयजुःप्रातिशाख्यकारस्य चापि नामधेयं कात्यायन आसीत्। कलापचन्द्रकारः कविराजसुषेणविद्याभूषणो वररुचिं कातन्त्रैकदेशीयमाचार्यं मनुते। एतेन कृत्सूत्ररचनाकारो वररुचिकात्यायनो बभूवेति वक्तुं शक्यते। कृद्भागो वर्तते कातन्त्रव्याकरणस्यैकदेशस्तस्य प्रणेता वररुचिर्भवति कातन्त्रैकदेशीयाचार्यः।

**''औरिम्''** (२।१।४१) इति सूत्रव्याख्याने विवरणपञ्जिकाकारेण **त्रिलोचनदासेन** यदुक्तं **''कैश्चित् कातन्त्रैकदेशीयैः''** इत्यादि, तत्र कातन्त्रैकदेशीयैरिति प्रतीकपदं व्याचक्षाणः कलापचन्द्रकारः कविराजसुषेणविद्याभूषणाचार्य एवं वदति— **''कैश्चित् कातन्त्रैकदेशीयैरिति पञ्जी। कातन्त्रशब्दोऽत्र सकलवैयाकरणपरः। कातन्त्रं ये विदन्ति सूरयः इत्यर्थेऽण्प्रत्ययविधानात् तदेकदेशीयैर्वररुचिप्रभृतिभिरित्यर्थः''** (क०च० २।१।४१) इति। तदनुसारं कातन्त्रपदेन कातन्त्रव्याकरणवेत्तारः सर्वे विद्वांसो गृह्यन्ते, तेषां मध्ये कृत्प्रत्ययरूपैकदेशीयरचनादिवशाद् वररुचिप्रभृतयः केचिदाचार्या भवन्ति कातन्त्रैकदेशीयाः।

एकस्मिन् स्थले कलापचन्द्रकारः कृत्प्रत्ययानां रचनाकारस्य नामधेयं वररुचिं वदति, किं च स एवमपि स्वीकरोति यदाचार्यशर्ववर्मसम्मतसिद्धान्तानुसारमेव वररुचिः कृत्सूत्राणां प्रणयनं चकार। एतेन शर्ववर्मसिद्धान्तैः सह वररुचिसिद्धान्तानामभेदः सिध्यतीत्यनयैव धिया दुर्गसिंहः कृत्सूत्राणि व्याचष्टे— **''वररुचिना तृनादिकं पृथगेवोक्तम्, ततश्च वररुचिशर्ववर्मणोरेकबुद्ध्या दुर्गसिंहेनोक्तम्''** (कलापचन्द्रः २।१।६८) इति। अर्थात् शर्ववर्मप्रणीतसूत्रव्याख्यानन्तरं दुर्गसिंहो यत् कृत्सूत्राणि व्याख्यातवान्, तत्र कारणं

वर्तते शर्ववर्माभिमतप्रक्रियासिद्धान्तैः सह वररुचिप्रणीत-कृत्सूत्रप्रक्रियासिद्धान्तानाम-भिन्नतावबोधः।

संस्कृतव्याकरणशास्त्रस्येतिहासग्रन्थे युधिष्ठिरमीमांसकस्य समुद्भावनानुसारेण महाराजविक्रमस्य पुरोहितः कात्यायनगोत्रीयो वररुचिरेव कृत्सूत्रप्रणेता भवेत्। अहमदाबादस्थे लालभाई-दलपतभाईभारतीसंस्कृतिविद्यामन्दिरे वररुचिना कृता कृद्वृत्तिरवाप्यते। स वररुचिः कृत्सूत्रकाराद् वररुचेर्भिन्नः कश्चित् प्रतीयते, यतो हि दुर्गसिंहकृतं **'वृक्षादिवदमी रूढाः'** इत्यादिश्लोकवचनं तत्रापि समुद्धृतमुपलभ्यते। वृत्तेरन्ते पाठो वर्तते— **"इति पण्डितवररुचिकृतायां कृद्वृत्तौ षष्ठः पादः समाप्तः"** इति।

प्रसङ्गेऽस्मिन्निदमप्यवधेयं यद् वररुचिप्रणीतकृत्सूत्राण्यधिकृत्याचार्येण वररुचिना चैत्रकूटीवृत्तिरेका लिखितासीद् या साम्प्रतं नोपलभ्यते। वृत्तेस्तस्याः प्रारम्भे वररुचिकृतं श्लोकवचनं दुर्गसिंहः स्वकीयवृत्तिग्रन्थस्यादौ समुद्धरति—

**देवदेवं प्रणम्यादौ सर्वज्ञं सर्वदर्शिनम्।**
**कातन्त्रस्य प्रवक्ष्यामि व्याख्यानं शार्ववर्मिकम्।।** इति।

व्याख्यासाराख्यव्याख्यायां हरिरामभट्टाचार्यः कलापचन्द्रे कविराजसुषेण-विद्याभूषणश्चोक्तवचनं वररुचिना कृतमिति स्पष्टतः समाख्याति।

कृत्सूत्राणां व्याख्याग्रन्थाः साम्प्रतमुपलभ्यन्ते— १. दुर्गसिंहकृता वृत्तिः। २. दुर्गसिंहकृता वृत्तिटीका। ३. त्रिलोचनदासकृता विवरणपञ्जिका। ४. कविराजसुषेण-विद्याभूषणकृतः कलापचन्द्रः। ५. रघुनन्दनभट्टाचार्यशिरोमणिकृतः कृत्शिरोमणीत्यपरपर्यायः कलापतत्त्वार्णवः। ६. हरिरामभट्टाचार्यप्रणीतो व्याख्यासारः। ७. वादिपर्वतवज्र-भावसेनप्रणीता कातन्त्ररूपमाला। ८. शिवरामशर्मकृता कृन्मञ्जरी। ९. जगद्धरभट्टकृता बालबोधिनी। १०. उग्रभूतिकृतो बालबोधिनीन्यासः। ११. वर्धमानविरचितः कातन्त्रविस्तरः। १२. कर्मधरप्रणीतः कातन्त्रमन्त्रप्रकाशः। १३. राजानकशितिकण्ठप्रणीतो बालबोधिनीन्यासः। १४. कातन्त्रकौमुदीप्रभृतयश्च।

कातन्त्रीयकृत्प्रकरणे षट्चत्वारिंशदधिकपञ्चशतसूत्राणि (५४६) पठ्यन्ते। प्रथमे सिद्धिपादे चतुरशीतिः (८४), द्वितीये धातुपादे षट्षष्टिः (६६), तृतीये कर्मपादे पञ्चनवतिः (९५), चतुर्थे क्वन्सुपादे द्विसप्ततिः (७२), पञ्चमे उणादिपादे त्रयोदशाधिकशतम् (११३), षष्ठे धातुसम्बन्धपादे च षोडशाधिकैकशतं (११६) सन्ति सूत्राणि।

सम्पादितानां चतसृणां व्याख्यानां संक्षिप्तपरिचयः प्रथमभागस्य भूमिकायां (पृ० ८-११) प्रस्तुतः। प्रकृतखण्डस्य षष्ठपादे कविराजसुषेणविद्याभूषणकृतः कलापचन्द्रो

नोपलभ्यते। तत्र रघुनन्दनभट्टाचार्यकृता कलापतत्त्वार्णवाख्या व्याख्या समुपन्यस्ता। व्याख्याकारस्य वंशकालादिपरिचयः कश्चिन्नोपलभ्यते, तथापि भट्टाचार्येत्युपाधिवशाद् वङ्गाक्षरेषु व्याख्याया उपलब्धिवशाच्चायं वङ्गदेशीयो बभूवेति निश्चयेन वक्तुं शक्यते। प्रतिज्ञावचनानुसारेण व्याख्याकारः कृष्णभक्तो वैष्णवः प्रतीयते। व्याख्यायां वृत्ति-टीकादिव्याख्यानानामभिमतानि संगृहीतानि। अन्य-कश्चिदित्यादिप्रतीकैः पूर्वाचार्याणामपि केषांचिन्मतानि समीक्षितानि। कृत्प्रकरणस्य सर्वेषु षट्सु पादेषु वृत्तिरियं प्राप्यते। तदीयं प्रतिज्ञावचनं श्लोकद्वये एवमुपलभ्यते—

**प्रणम्य परमं देवं गोपालं चित्तनन्दनम्।**
**करोमि शब्दशास्त्रस्य वृत्तिं प्रस्फुटितां शुभाम्।।१।**
**सदर्थामृतलाभाय सूक्तिरत्नाय च द्रुतम्।**
**कलापपूर्वतत्त्वात्मा समुद्रः सेव्यतामयम्।।२। इति।**

कातन्त्रव्याकरणस्याध्ययनमहमष्टषष्ट्यधिकैकोनविंशतिशततमयीशवीयाब्दस्य जनवरीमासे आरब्धवान्, कातन्त्रव्याकरणविमर्शमधिकृत्य द्विसप्तत्युत्तरैकोनविंशतिशततमयीशवीयाब्दस्य मार्चमासे वाराणसेयसंस्कृतविश्वविद्यालयीयं **वाचस्पति-** (डी०लिट्०) शोधोपाधिं च सम्प्राप्तवान्। ततः प्रारभ्याद्यावधि कातन्त्रव्याकरण-विषयकान् नवसंख्याकान् ग्रन्थान् सम्पादितवान्, अष्टादशशोधलेखांश्च तत्र लिखितवान्। एषा सर्वा सामग्री प्रायेण प्रकाशिता वर्तते। **'कातन्त्रव्याकरण का बृहद् इतिहास'** प्रभृतयः केचिन्महनीया ग्रन्था लेखनसम्पादनयोजनाधीनाश्च सन्ति। एवं कातन्त्रीयाध्ययनानुशीलनसमीक्षादिभिः कश्चिदनुभवविशेषस्तस्य मया सम्प्राप्तः।

व्याकरणं भवति शब्दानुशासनम्, अत एव तद् शब्दविद्यापदेनाप्यभिधीयते। एवं मन्यते यत् शब्दविद्यायाः प्रादुर्भावो ब्रह्मणः सकाशादेव सञ्जातः। तदनन्तरम् इन्द्रादिभिराचार्यैः प्रकृतिप्रत्ययादेशागमादिभिरियं विशेषेण संस्कृता। सूत्रेषु निबद्धेयं बहुभिराचार्यैर्वृत्तिवार्तिकभाष्यादिभिः संवर्धिता। इदं नाविदितं विदुषां यद् भगवता महेश्वरेण वर्णसूत्रमाध्यमेन स्वकीयं व्याकरणं पाणिनये उपदिष्टमासीत्। **विद्यावारिधि (पी-एच०डी०)-** उपाधेः शोधकार्यपर्यन्तमनवरतं मया तदेवाधीतम्, परं **वाचस्पति-** (डी०लिट्०) उपाधेः शोधकार्यादारभ्य शर्ववर्माचार्यप्रणीतं कातन्त्रव्याकरणं मया मुख्यतोऽधीतम् अनुशीलितं च। अथ कातन्त्रीयसूत्राणां चतुर्दशशतपरिमितानां पाणिनीयसूत्रैः सह, षष्ट्यधिकशतत्रयसूत्राणां च कच्चायनव्याकरणस्य सूत्रैः सहोत्कर्षापकर्षविवेकादिरूपा या समीक्षा कृता, ततः संग्राह्यः कश्चिदनुभवविशेषोऽपि सम्प्राप्तः। एवं शब्दविद्यायाः प्रादुर्भावादारभ्य कातन्त्रीयरचनानुभवविशेषप्राप्तिपर्यन्तं तदीयविषयाणामुपनिबन्धनम् एकस्मिन्नष्टादश-पद्यात्मके गीते मया कृतम्। अष्टादशपद्येषु निदर्शितानां विषयाणां संक्षेपेण परिचय

एवमवगन्तव्य:—

गीतस्य ध्येयमस्ति यत् शब्दानामनुशासनं यत्र यया वा क्रियते सा शब्दविद्या शब्दब्रह्मण: सिद्धौ सोपानायते। अत: सा सदैव सेवनीयेति। प्रथमपद्ये शब्दविद्याया: प्रादुर्भावस्तत्र विविधा: संस्कारास्तस्या: सूत्रेषु निबन्धनं संवर्धनं च दर्शितम्। द्वितीयपद्ये कथं महेश्वरेण स्वकीयं व्याकरणं पाणिनये उपदिष्टम्, पाणिनिना तत् कथं संवर्धितम्, कथं च तद् ग्राह्यं भवतीति निर्दिष्टम्। तृतीयपद्ये यस्या: शब्दविद्याया देशे देशान्तरेषु च वृत्त्यादयो विविधव्याख्याग्रन्था विलसन्ति, सा श्रेय:सम्प्राप्तये नूनमेवाश्रयणीयेत्यवगन्तव्यम्। चतुर्थे पद्ये या शब्दविद्या वाग्दोषाणामौषधम्, मुमुक्षूणां कृते सरला राजपद्धतिश्चाभाति, सा देवादिभि: समादृता सती साम्प्रतं स्त्रीजनैर्बालैर्बालाभिश्चापि समादरणीयेति भाव: प्रकाशित:। पञ्चमे पद्ये शब्दसिद्ध्यर्थमद्यत्वे आश्रीयमाणं पाणिनीयं व्याकरणं दुष्करमपि शिष्टज्ञानार्थमवश्यमेवावधारणीयमिति तात्पर्यमभिव्यञ्जितम्।

षष्ठे पद्ये आचार्यशर्ववर्मप्रणीतं कातन्त्रव्याकरणं कार्त्तिकेयेनोपदिष्टं सद् महेश्वरस्यापि सम्मतं वर्तते। सरलता संक्षेपश्चेति वैशिष्ट्यद्वयेन तदवश्यमध्येतव्यमिति स्वकीयं हार्दमुक्तम्। सप्तमे पद्ये दर्शितं यद् आन्ध्रदेशीयो राजा सातवाहनो यदा महिषीभि: समं दीर्घकालपर्यन्तं जलक्रीडायां निरतो बभूव, तदा काचिदेका राज्ञी तं प्रार्थयते जलविहाराद् विरामग्रहणाय। अष्टमे पद्ये व्याकरणज्ञानशीला, जलविहारेण नितान्तं श्रान्ता सती कल्याणी कनिष्ठा ब्राह्मणजातीया राज्ञी **'मह्यम् उदकम् मा देहि'** इत्यभिप्रायेण **'मोदकं देहि'** इति वचनं भाषितवती। नवमे पद्ये व्याकरणानभिज्ञो राजा सातवाहनो मोदकमित्यत्र 'मा+उदकम्' इति सन्धिविच्छेदं नैव विज्ञातवान्। अतस्तेन तदानीं प्रीतिपूर्वं बहवो मोदका: समर्पिता:। अनवसरे मोदकप्रदानरूपं राज्ञ: कार्यमिदमुपहासास्पदं बभूव। दशमे पद्ये राज्ञो मूर्खतामाकलयन्ती राज्ञी राजानमाक्षिप्तवती (उपहसितवती), उपहासेन तिरस्कृतो राजा मनसि व्याकरणज्ञानप्राप्तिं प्रतिज्ञाय राजसभां नैव प्रविवेश। एकादशे पद्ये राज्ञोऽभिप्रायं विज्ञाय सभापण्डित: शर्ववर्मा संकल्पितवान् यदहमेतादृशं व्याकरणं विरचयितुं समर्थोऽस्मि, यस्याध्ययनेन कोऽपि जन: षट्सु मासेष्वेव व्याकरणज्ञानसम्पन्नो भवेदिति। ततस्तेन रात्रौ सूत्रसम्प्राप्तये भगवान् भवानीसुत: कार्त्तिकेय: समाराधितस्तोषितश्च। द्वादशे पद्ये निजव्याकरणज्ञानमाविर्भावयितुं स्वामिकार्त्तिकेयो लौकिकवर्णसमाम्नायबोधकं पद्यपादरूपं सूत्रमुपदिदेश— **"सिद्धो वर्णसमाम्नाय:"** इति।

त्रयोदशे पद्ये सूत्रसम्प्राप्त्यनन्तरम् आचार्य: शर्ववर्मा 'मोदकम्' इत्यत्र 'मा+उदकम्' इति सन्धि-विच्छेदमनुसृत्य पञ्चपादात्मकं सन्धिप्रकरणमादौ

एकोनाशीतिसूत्रैः (७९) निबबन्ध। ततश्च मोदकमिति स्याद्यन्तपदम् (नामपदम्) अनुसृत्य षट्सु पादेषु नामचतुष्टयाख्यं प्रकरणं च सप्तत्रिंशदधिकशतत्रयमितैः (३३७) सूत्रैर्निबद्धवान्। चतुर्दशे पद्ये नामचतुष्टयप्रकरणस्य चतुर्थे पादे द्विपञ्चाशत्सूत्रैः षड्विधं कारकम्, पञ्चमे पादे छन्दोबद्धैरेकोनत्रिंशत्सूत्रैः षड्विधं समासम्, छन्दोबद्धैः पञ्चाशत्सूत्रैर्दाक्षिणात्यादृतं तद्धितं च रचयामास शर्ववर्मेति विवृतम्। पञ्चदशे पद्ये मोदकानन्तरं 'देहि' इति यत् त्याद्यन्तरूपं पदं प्रयुक्तम्, तदनुसारेणाष्टसु पादेषु एकोनचत्वारिंशदधिकशतचतुष्टयमितैः (४३९) सूत्रैराख्यातप्रकरणं परिभाषितम्। अत्र गुणवृद्ध्यादिभिर्विविधैः कार्यैः कालभेदाः प्रकीर्तिताः सन्ति। षोडशे पद्ये कृत्यप्रत्ययान्तान् शब्दान् वृक्षादिशब्दवद् रूढान् मन्यमानः शर्ववर्मा तदर्थं नैव सूत्राणि रचयामास। ततोऽभेदबुद्ध्या कात्यायनमुनिः षट्चत्वारिंशदधिकपञ्चशतमितैः (५४६) सूत्रैः षट्सु पादेषु कृत्प्रकरणं प्रणीतवान्। एतावदेवाध्यायचतुष्टयात्मकं पञ्चविंशतिपादात्मकमेकाधिकचतुर्दशशतसूत्रात्मकं च कातन्त्रव्याकरणं मूलभूतमवगन्तव्यमस्ति। सप्तदशे पद्ये कातन्त्रव्याकरणमधिकृत्याचार्य-उमास्वामि-पुरस्कारेण सम्मानप्रदानपरस्य श्रीकुन्दकुन्दभारतीन्याससर्वस्वस्य महाराजश्रीविद्यानन्दमुनेरभिनन्दनीयता प्रकाशिता। अष्टादशे पद्ये महाराजश्रीविद्यानन्दमुनेः प्रीतये साम्प्रतं जैनसमाजेन गौरवग्रन्थस्यास्य कातन्त्रव्याकरणस्याध्ययनादिव्यवस्था सुचारुरूपेण विधेयेति स्वकीयमनोभावः प्रकाशितः।

## गीतम्

शब्दविद्याऽनुशासनपरा सेव्यताम्।
सिद्धिसोपानरूपा सदा सेव्यताम्।।

१. ब्रह्मणाऽऽविष्कृता संस्कृतेन्द्रादिभिः,
सूत्रिता या शुभा शर्ववर्मादिभिः।
दाक्षिपुत्रेण चन्द्रामरस्वामिभिः,
प्रापिता या समृद्धिं सदाऽधीयताम्।।१।
शब्दविद्याऽनुशासनपरा सेव्यताम्।

२. बोधिता वर्णसूत्रैः स्वयं शम्भुना,
दाक्षिपुत्राय ढक्कानिनादेन या।
वर्धिताऽज्झल्खरिक्शर्यणिण्णादिभिः,
शब्दसारस्य संग्राहकैर्गृह्यताम्।।२।
शब्दविद्याऽनुशासनपरा सेव्यताम्।

३. सूत्रभाष्यानुवादैश्च खिलवार्त्तिकैः,
कौमुदीफक्किकान्यासटीकादिभिः।
देशदेशान्तरे भाति या वृत्तिभि-
स्तत्र सद्भिः स्वतः श्रेयसे स्थीयताम्।।३।
शब्दविद्याऽनुशासनपरा सेव्यताम्।
४. वाङ्मलस्यौषधिः सम्मता सा बुधै-
र्मोक्षमाणस्य स्यात् सत्कृता पद्धतिः।
धारिता देवदेवारिभिर्मानवै-
रङ्गनाबालबालादिभिर्ध्यार्यताम्।।४।
शब्दविद्याऽनुशासनपरा सेव्यताम्।
५. पाणिनेः प्रक्रिया दृश्यते दुष्करा,
शब्दसिद्ध्यर्थमाश्रीयते याऽधुना।
सूत्रकार्यादिवैचित्र्यनिर्बन्धतः
शिष्टबोधाय धीमद्भिराधीयताम्।।५।
शब्दविद्याऽनुशासनपरा सेव्यताम्।
६. शर्ववर्मप्रणीता कलापाभिधा,
या च कातन्त्रनाम्नाऽप्यलं विश्रुता।
शम्भुना कार्त्तिकेयेन सम्मानिता,
शब्दरूपाऽऽशुबोधाय साऽऽराध्यताम्।।६।
शब्दविद्याऽनुशासनपरा सेव्यताम्।
७. श्रूयते आन्ध्रदेशीयशासनरतः,
सातवाहननृपो भूतले विश्रुतः।
एकदाऽऽक्रीडमानो यदासीज्जले,
तावदेका प्रिया भाषते श्रूयताम्।।७।
शब्दविद्याऽनुशासनपरा सेव्यताम्।
८. या बभूवातिश्रान्ताऽम्बुप्रक्षेपतः,
शब्दविद्याऽवबोधे बुधैर्वन्दिता।
सम्मता या सतां श्रेयसा संस्कृता,
'मोदकं देहि मह्यम्' प्रभो! प्रीयताम्।।८।
शब्दविद्याऽनुशासनपरा सेव्यताम्।

९. तत्र सन्धिप्रभेदं न जानन् नृपः,
'मोदके' गुणकृतं 'मा-उदक' शब्दयोः।
मोदकानर्पयन् प्रीतिमादर्शयन्,
संबभूवोपहासार्ह आध्यायताम्।।९।
शब्दविद्याऽनुशासनपरा सेव्यताम्।
१०. मूर्खतामाक्षिपन्ती तु राज्ञी तदा,
मन्दहासेन चक्रे नृपं चिन्तितम्।
नैव विद्धः स लेभे क्वचिन्निर्वृतिं
शब्दविद्यारहस्यं यतो ज्ञायताम्।।१०।
शब्दविद्याऽनुशासनपरा सेव्यताम्।
११. शाब्दिकः शर्ववर्मा प्रतिज्ञातवान्,
षट्सु मासेषु विद्यां प्रदास्यामि ते।
इष्टदेवो रजन्यां समाराधित-
स्तेन सूत्रं तदीयं मया प्राप्यताम्।।११।
शब्दविद्याऽनुशासनपरा सेव्यताम्।
१२. कार्त्तिकेयेन सूत्रं प्रदत्तं प्रियं
शर्ववर्माभिधाचार्यवर्याय वै।
वादसमाम्नायतत्त्वस्य संबोधकं
लोकसिद्धस्य सर्वं बुधैर्बुध्यताम्।।१२।
शब्दविद्याऽनुशासनपरा सेव्यताम्।
१३. मोदमासाद्य सूत्रस्य संप्राप्तितः,
'मोदकं देहि'- वाक्यं तदा संस्मरन्।
पञ्चपादेषु सन्धिं विधायादितः
षट्सु नाम्नां चतुष्कं च संधार्यताम्।।१३।
शब्दविद्याऽनुशासनपरा सेव्यताम्।
१४. उत्तरार्धत्रिके कारकं षड्विधं
षड्विधो वै समासस्ततो दृश्यते।
वर्णितस्ताद्धितो दाक्षिणात्यादृतो
मोदके सन्धिनामद्वयं गीयताम्।।१४।
शब्दविद्याऽनुशासनपरा सेव्यताम्।
१५. 'देहि'- त्याद्यन्तरूपं पदं भाषितं
मोदकानन्तरं तन्निबद्धं ततः।

अष्टपादेषु गुणवृद्ध्यनिट्लोपतः,
शर्ववर्मप्रणीतं त्रिकं कीर्त्यताम्।।१५।
शब्दविद्याऽनुशासनपरा सेव्यताम्।

१६. शब्दराशिस्तु रूढः कृदन्ताभिधः
शर्ववर्मा न जग्रन्थ तं सूत्रतः।
निर्ममेऽभेदबुद्ध्या तु कात्यायनो
वन्दनीयं कलापं बुधैर्वन्द्यताम्।।१६।
शब्दविद्याऽनुशासनपरा सेव्यताम्।

१७. राजते राजधान्यां तु न्यासः शुभः,
कुन्दकुन्दाश्रितो भारतीभासितः।
तत्र दिग्वस्त्रजैनीयशासनरतो
विद्ययानन्दमाप्तो मुनिर्नन्द्यताम्।।१७।
शब्दविद्याऽनुशासनपरा सेव्यताम्।

१८. शब्दविद्यानुरागः समुज्जृम्भते
यस्य कातन्त्रसूत्रीयसंक्षेपतः।
दानमानादिना तस्य संप्रीतये,
साधुभिस्तत्समृद्धिः सदा चिन्त्यताम्।।१८।
शब्दविद्याऽनुशासनपरा सेव्यताम्।
सिद्धिसोपानरूपा सदा सेव्यताम्।।

प्रकृतकृत्प्रकरणस्यास्य चतसृषु व्याख्यासु बहूनि वैशिष्ट्यानि सन्निहितानि सन्ति। यदि क्वचिदनभिधानवशात् कार्याणि नैव प्रवर्तन्ते तर्हि कानिचित् कार्याणि अभिधानवशादेव विधीयन्ते। कृत्तद्धितसमासानामभिधानलक्षणत्वमङ्गीकृतम्, अभिधानबलेन कतिपये छान्दसाः शब्दा अपि भाषायां प्रयुज्यन्ते। शर्ववर्माचार्यस्याभिमतमस्ति यद् औणादिकाः शब्दाः सन्ति अव्युत्पन्ना इति सम्प्रदायेऽप्रचलितं मतमिहानाद्रियते। उक्तार्थानामप्रयोग इति पूर्वाचार्यमतं व्यवस्थापयता व्याख्याकारेण ऋषिवचनस्य प्रामाण्यमुद्घोषितम्। 'गुरुलाघवचिन्ता छान्दसानां शब्दानामिहानादरः, प्रतिपत्तिरियं गरीयसी, रूढितः सिद्धिः, विवक्षा गरीयसी, विवक्षातः कारकाणि' इत्यादिविषयेषु विवेचनापुरस्सरं स्वाभिप्रायः प्रकाशितो व्याख्याकारैः। शिष्टप्रयुक्तकार्यस्य प्रामाण्यमङ्गीकृतं सर्वत्र। क्वचित् सूत्ररचनाया वैचित्र्यमुद्घोषयताऽरुचिः प्रदर्शिता। 'अयमर्थः— अस्यार्थः, वस्तुतः' इत्यादिशब्दविशेषैर्मतभेदसमीक्षणपुरस्सरं तत्तद्विषये स्वीयं तात्पर्यं व्यवस्थापितम्। अनुबन्धादियोजनाविषये समाधानपक्षप्रदर्शनोद्देश्येनेदमसन्देहार्थम् उच्चारणा

ज्ञापनार्थं नियमार्थं बाधकबाधनार्थं मङ्गलार्थं मन्दधियां सुखार्थं लक्ष्यानुरोधार्थं स्पष्टार्थं वा सूत्रकारेण वृत्तिकारादिभिश्च संगृहीतमिति स्वकीयसम्मत्या तत् प्रमाणीकृतम्। अत्र तत्तद्वैशिष्ट्यबोधकानि मूलवचनानि पृष्ठसन्दर्भपुरस्सरमुपस्थाप्यन्ते। तद् यथा—

**१. अतन्त्रम – १**

प्रत्येकं लुप्तप्रथमैकवचनम्, तच्चातन्त्रम् (पृ० ६१३)।

**२. अनभिधानात् – ५**

१. 'षणु दाने' न 'षण सम्भक्तौ' इति, अनभिधानात् (पृ० १२६)।
२. 'रामो जामदग्न्यः' इत्यादिवत् समासस्यानभिधानात् (पृ० २०४)।
३. 'दाप् लवने' एवेति, न 'दैप् शोधने' इत्यस्यानभिधानात् (पृ० ४०४)।
४. इहाग्रादीनां णमन्तेनोपपदसमासो नास्ति, अनभिधानात् (पृ० ५३२)।
५. भृत्ये तु कदाचिदपि नियोग्य इति न स्याद् अनभिधानात् (पृ० ५९८)।

**३. अनेकार्थत्वाद् धातूनाम् – ३**

१. अपमृषितमिति। अपक्लिष्टमित्यर्थः, अनेकार्थत्वाद् धातूनाम् (पृ० ३६)।
२. 'अनेकार्था हि धातवः' इति घटेरपि हन्त्यर्थः (पृ० २७७)।
३. अनेकार्थत्वाद् धातूनाम् (पृ० ६१६)।

**४. अन्वर्थबलात् – १**

१. उप समीपे धातोः समीपे सृज्यते इत्यन्वर्थबलात् (पृ० १५२)।

**५. अभिधानात् – २७**

१. अभिधानलक्षणा हि कृत्तद्धितसमासाः (पृ० १, २, १५३, ६१६)।
२. अभिधानव्यवस्था लघीयसी (पृ० १)।
३. अभिधानाद् आङ्पूर्वश्चमिरिति (पृ० १०)।
४. एकदेशस्येत्यपेक्षायामपि भिन्नाधिकरणो बहुव्रीहिरभिधानात् (पृ० १३)।
५. तदिदमभिधानादधिकृतस्य वाशब्दस्य बहुलार्थत्वात् सिद्धमिति (पृ० ८५)।
६. अस्वरपरत्वाद् इह द्विर्भावो न स्यात्? सत्यम्, अभिधानात् (पृ० १०५)।
७. अभिधानाद् भाषायामपि दृश्यते (पृ० ११०)।
८. अभिधानादिति वररुचिः (पृ० १९४)।
९. दीङः प्रागात्वे सति आतो णो भवति, अभिधानात् (पृ० २११)।
१०. कुत इत्याह— अभिधानादिति (पृ० २२०)।
११. एतदभिधानात् प्रतिपत्तव्यमित्यर्थः (पृ० २२६)।
१२-२७. पृ० २३९, २५१, २७१, ३०५, ३३०, ३४४, ३६७, ३७७, ४०५, ४२९, ४६८, ४७८, ५१३, ५९२, ६००, ६३३।

६. अव्युत्पन्ना उणादयः-१

१. उणादय इति। इहाव्युत्पन्ना वेति दर्शनम्, मतान्तरेण सूत्रमिति भावः (पृ० ४११)।

७. असाम्प्रदायिकत्वात्-१

१. एतत् सकलं समालोच्य लोप एव स्यादिति ब्रूते, तन्नाजीगणत्, असाम्प्रदायिकत्वात् (पृ० १२२)।

८. उक्तार्थानामप्रयोगः-२

१. ननु यद्येते दोषाः सन्ति तदा कथमन्यथैवमित्यादिवचनम् उक्तार्थानामप्रयोग इत्यस्य ज्ञापकम्? (पृ० ५५३)।

२. उक्तानार्थानाप्रयोगोऽनुक्तानामप्रयोग इति यथायोगं द्वितीया तृतीया च दर्शिता (पृ० ५७६)।

९. ऋषिप्रमाणात्-१

१. तर्हि 'चन्द्रसूर्यग्रहे चैव श्रृतमन्नं विवर्जयेत्' इति कथं भविष्यति? सत्यम्, ऋषिप्रमाणात् (पृ० ८९)।

१०. गुरुलाघवचिन्ता-१

१. यद् वा न च सन्देहे गुरुलाघवचिन्ता युक्तिमती (पृ० २२९, ३५०)।

११. छान्दसानामनादरात्-१

१. न चैतच्छन्दोविषयतया चरितार्थमिति शक्यते वक्तुम्, छान्दसानां शब्दानामिहानादरादिति (पृ० ३४१)।

१२. प्रतिपत्तिर्गरीयसी-८

१. इन्व्यवधाने भविष्यति? सत्यम्, प्रतिपत्तिरियं गरीयसी (पृ० ३९-४१)।

२. अनर्थकस्यापि ग्रहणं स्यादेव, किन्तु प्रतिपत्तिरियं गरीयसी (पृ० ८२)।

३. किमनेन? सत्यम्, प्रतिपत्तिरियं गरीयसीति।

४-७. पृ० ४३३, ४९०, ५७६, ५८२

८. तथा च सति प्रतिपत्तिलाघवं शब्दलाघवं च भवति (पृ० ४५)।

१३. भाषायाम्-१३

१. भाषायां लुगन्तचेक्रीयितानादरात् (पृ० ८)।

२. दिदिवान्, सिषिवान्। भाषायामपि क्वन्सुः (पृ० ७०)।

३. केचिच्चेक्रीयितलुगन्तं भाषायामपि मत्वा 'शंशान्तः, तंतान्तः, दंदान्तः' इति क्तादावुदाहरन्ति (पृ० १०२)।

४. वृत्तिकारस्याभिप्रायेण भाषायामप्यविशेषेण प्रयोगोऽस्ति न भाष्यकारस्य (पृ० १२३)।

५. न खलु भाषायां त्यत्करः इति प्रयोगो दृश्यते (पृ० २५३)।

६. शृणोत्यादय एवामी भाषायां रूढाः (पृ० ३३८)।

७-१३. पृ० ३४१, ३९१, ३९८, ४०१, ४४६, ४५४, ६२६.

१४. रूढिवशात्-२६

१. कृति णकारानुबन्धे यत् कार्यमुक्तं तद्धिते तत् कथमित्याह— रूढितः सिद्धिरिति (पृ० ८)।

२. रूढिवशात् सूत्रकारादय इव वस्तुविशेषा अभिधीयन्ते (पृ० ४९)।

३. भगं दारयतीति भगन्दरो रोगो रूढित एव (पृ० ५८)।

४. स्वाङ्गशब्दस्य रूढत्वादुत्तरकालेऽन्य एवार्थः प्रतीयते (पृ० ८५)।

५-२४. पृ० १०७, १०८, १३५, १६४, १९७, १९८, २३७, २५३, २८३, २८९, ३०३, ३८५, ३९८, ४०५, ४१०, ४११, ४३२, ४३८, ४५९, ४७६.

२५. रूढिशब्देष्वपि कश्चित् क्रियाकारकसम्बन्धो दृश्यते (पृ० ५९०)।

२६. रूढित्वात् तत्र व्यवस्थितवाधिकाराद् वा अजेर्वीभावो न भवति (पृ०५९४)।

१५. लोके-१०

१. यथा लोके धनुश्चक्रं चानयेति धनुःसान्निध्यात् प्रहरणे चक्रे प्रत्ययः (पृ० ४४)।

२. लोके धूर्तशब्दस्य विशिष्टाभिधेयतया रूढित्वात् (पृ० १०९)।

३. न च कारकुम्भ इति प्रवाही शब्दो लोके प्रयुज्यते (पृ० १५१)।

४. साधु कुर्वाण एव लोके शिल्पीत्युच्यते (पृ० २२४)।

५-१०. पृ० २८८, २९१, २९२, ३०५, ६२५, ६५५.

१६. लोकोपचारात् -७

१. मित्रहूरिति लक्ष्यस्य लोकप्रसिद्धस्यासिद्धिप्रसङ्गात् (पृ० १००)।

२-४. पृ० २९९, ४११, ५२५

५. ननु लोकोपचारादेव विभक्तित्वं स्यात् (पृ० ३३८)।

६-७. पृ० ५४९, ५६४.

१७. लौकिकसंज्ञा-१

१. तत्र लक्ष्यदृष्ट्या व्याप्तिन्यायाल्लौकिकसञ्ज्ञाया अपि ग्रहणम् (पृ०५६६)।

१८. विचित्रा सूत्रस्य कृतिः-२

१. वनतिप्रतिषिद्धेट्तनोत्यादीनामित्यपि न कृतम्, विचित्रा हि सूत्रस्य कृतिरिति (पृ० ११०)।

२. प्रतिषेधेऽलंखल्वोरिति न कृतम्, प्रतिषेधे वर्तमानयोरिति। विचित्रा हि सूत्रस्य कृतिरिति भावः (पृ० ५२२)।

१९. **विवक्षावशात्–१५**

१. विवक्षावशादेक एवार्थः कर्ता कर्म च वर्तते (पृ० ४१)।

२. सामान्येन द्वन्द्वे कृते पश्चात् प्रकरणबलात् स्त्रीत्वविवक्षा समुदायस्य (पृ० ४२)।

३. हेत्वानुलोम्ययोरविवक्षा स्थितैव (पृ० २५१)।

४. तदाद्यादिषु सर्वदा हेत्वादिविवक्षा गरीयसीति सूत्रम् (पृ० २५३)।

५-८. पृ० २६९, ३७२, ४०७, ४०८.

९. विवक्षातो हि कारकाणि भवन्ति (पृ० ४२८)।

१०-१३. पृ० ४२८, ४७६, ५७४, ५९१.

१४. व्यादानस्य लौकिकी पूर्वकालविवक्षाऽस्तीति न दुष्यति (पृ० ५२८)

१५. यन्मते लौकिकी पूर्वकालविवक्षाऽत्रापि विद्यते तन्मतमाह (पृ० ५५६)।

२०. **विशेषणविशेष्यभावस्य–१**

१. न तु पूर्ववर्तिना क्त्वान्तेनेति विशेषणविशेष्यभावस्य प्रयोक्तुरायत्तत्वात् (पृ० ५९०)।

२१. **शिष्टप्रयुक्तत्वात्–३**

१. शिष्टप्रयुक्ता हि दृश्यन्ते 'क्षेष्णवे स्वर्गाय' इत्यादयः (पृ० ३६५)।

२. 'त्वया ज्ञातः, मया ज्ञातः, सुरैः पूजितः' इति शिष्टप्रयोगाश्च दृश्यन्ते (पृ० ४०८)।

३. तथापि काष्ठानां तृणानां च संघ इति न प्रयुज्यते शिष्टैः (पृ० ४१५)।

२२. **सूत्रकारभाषितप्रलापात्–१**

१. अस्मन्मते 'परमरैमन्यः' इति विरोधाद् इत्युक्तम् इत्यस्माकं पर्यनुयोग. सूत्रकारभाषितप्रलापात् (पृ० ४३)।

२३. **अयमभिप्रायः–११**

१. अस्यापि स्वाङ्गत्वादित्यभिप्रायः (पृ० ८४)।

२. अयमभिप्रायः— साधनस्य साध्यापेक्षत्वात् साध्यसाधनसम्बन्धे तव्यादयो भविष्यन्ति (पृ० १४४)।

३-११. पृ० १५१, २२२, २३५, २३६, ४११, ५३३, ५३५, ५७०, ६११.

२४. **अयमर्थः–२५**

१. अयमर्थः ञ्णानुबन्धस्येचि कृतं कार्यमतिदिश्यते (पृ० ११)।

२. तेनायमर्थः— न विद्यते नकारः प्रध्वस्तो येषां तेऽनो धातव नलोपवर्जिता इत्यर्थः (पृ० १४)।

३. तेनायमर्थः— नामिनोऽमागमो भवति स च प्रत्ययवदिति (पृ० ४६)।
४-२५. पृ० ६०, ६१, ६६, ८८, ८९, १०९, १४४, २२७, २८४, ३०७, ३०८, ३१०, ३१२, ३२२, ३५२, ३७०, ३७८, ४१६, ४२६, ५११, ६०९, ६११ (अयमत्र सङ्कलितार्थः), ६३७.

२५. अयमाशयः-४

१. अयमाशयः— सेनानीयवलूशब्दौ शब्दान्तरनिरपेक्षौ पुंस्येव वर्तेते (पृ० ६१)।
२. अयमाशयः— दा-इत्युक्ते द्वयमुपस्थितं सञ्ज्ञा रूपं च (पृ० १२९)।
३-४. पृ० १६८, २५०.

२६. अस्यार्थः-९

१. अस्यार्थः— गवि जले यः स्वपिति शेते तस्मै नमः (पृ० ४६)।
२. अस्यार्थः— वनो नकारस्य रेफो भवति चकाराद् ईश्च (पृ० १२१)।
३-९. पृ० २२७, २७७, २९०, ३२२, ४७८, ४९७, ६३७.

२७. वस्तुतः-२२

१. वस्तुतस्तु पूर्वसूत्रेऽसम्भवात् सेटो नानुवृत्तिः (पृ० ३०)।
२. वस्तुस्तु अन्तरङ्गत्वाद् यलोपो भवतु (पृ० ७०)।
३-२२. पृ० ८५, ८६, ८९, १६९, १७६, १७९, २०६, २३१, २३५, २४०, २८६, ३०४, ३२३, ४१६, ४२६, ५०७, ५१२, ५२३, ५४१, ५४२.

२८. अगुणार्थः-३

१. ककारोऽगुणार्थस्तेन सम्प्रसारणम् (पृ० २२०)।
२-३. पृ० ३५४, ३९४.

२९. अण्बाधनार्थम्-१

१. अलन्तादस्त्यर्थे इना सिद्धे कुत्सायामण्बाधनार्थं वचनमिदम् (पृ० ३२९)।

३०. अधिकाराविच्छेदार्थम्-१

१. यत् पुनरुक्तम् अगुणे पञ्चमे चेति, तदधिकाराविच्छेदार्थमेव (पृ० १०९)।

३१. अनित्यार्थम्-१

१. प्रक्षीणमिदं छात्रस्य। दीर्घ इति सञ्ज्ञापूर्वकत्वादनित्यार्थम् (पृ० ८१)।

३२. अन्त्यस्वरादिलोपार्थः-१

१. डकारोऽन्त्यस्वरादिलोपार्थः (पृ० २११)।

३३. अपूर्वकालार्थम्-१

१. तथाहि य एवापमयते स एव याचते इत्येककर्तृकताऽस्तीत्याह— अपूर्वकालार्थमिति (पृ० ५२४)।

३४. अभिन्नबुद्ध्यर्थम्–१

१. तद्ग्रहणमभिन्नबुद्ध्यर्थम् (पृ० ९८)।

३५. अवधारणार्थम्–१

१. अनेन सामान्येनैव सिद्धे शीङ्पूङित्यादिवचनमवधारणार्थं भविष्यति (पृ० २५)।

३६. अवादेशार्थम्–१

१. अवादेशार्थमिदं वचनमिति (पृ० ६३)।

३७. अविसंवादार्थम्–१

१. तदाद्यादिग्रहणमविसंवादार्थम् (पृ० २५३)।

३८. असन्देहार्थः–१

१. जृष इति सिद्धे तिब्निर्देशः पाठसुखार्थोऽसन्देहार्थश्च भवतीति (पृ०३३७)।

३९. इज्वद्भावार्थः–२

१. णकार इज्वद्भावार्थः (पृ० १९२, ३६७)।

२. ञानुबन्ध इज्वद्भावार्थः (पृ० ४२३)।

४०. इष्णुज्बाधनार्थः–८

१. अनेकस्वरत्वात् सिद्धे विनाशेः पाठो "भ्राज्यलंकृञ०" इत्यादिना इष्णुज्-बाधनार्थः (पृ० ३७५)।

४१. उच्चारणार्थः–१४

१. अथोच्चारणार्थ इति कथमुक्तम् (पृ० ६)।

२. म इत्यकार उच्चारणार्थः (पृ० ४८)।

३. वेरितीकार उच्चारणार्थः, वकारमात्रस्य लोपः (पृ० ६८)।

४. इकार उच्चारणार्थः (पृ० १३७)।

५. ऌकार उच्चारणार्थः (पृ० १३८)।

६-१४. पृ० १८०, २८९, २९४, ३३७, ३४३, ३६७, ३९४, ३९८, ४०३

४२. उत्तरार्थम्–१०

१. उत्तरार्थं क्त्वाग्रहणमवश्यं कर्तव्यम् (पृ० २७)।

२. योगविभाग उत्तरार्थः (पृ० ९६)।

३. पृथग्योग उत्तरार्थ इति हेमकरः (पृ० ११२)।

४-१०. पृ० १७८, १७९, २६७, ४२७, ४३०, ६२२, ६२३

४३. एकबुद्ध्यर्थम्–१

१. तद्ग्रहणमभिन्नबुद्ध्यर्थम्।.........कृदाख्यातयोरेकबुद्ध्यर्थम् (पृ० ९८)।

४४. **कत्वगत्वार्थः–२**

१. घिणिनिति घकारः कत्वगत्वार्थः (पृ० ३६७)।

२. घानुबन्धः (घञि) चजोः कगाविति कत्वगत्वार्थः (पृ० ४२३)।

४५. **कर्तृप्रतिपत्त्यर्थम्–१**

१. संयोगग्रहणं फलवत्कर्तृप्रतिपत्त्यर्थम् (पृ० ३५८)।

४६. **क्रियासिद्ध्यर्थम्–१**

१. कर्ता हि क्रियासिद्ध्यर्थं साक्षात् करणमपेक्षते (पृ० २७६)।

४७. **गुणप्रतिषेधार्थः–१**

१. ककारो गुणप्रतिषेधार्थः (पृ० ३६६)।

४८. **चेक्रीयितलुङ्निवृत्त्यर्थः–१**

१. येषां तनोतेरिति सूत्रमस्ति, तेषां निर्देशार्थ एव न चेक्रीयितलुङ्निवृत्त्यर्थः (पृ० १२४)।

४९. **ज्ञापनार्थम्–८**

१. आत्मनेग्रहणं गुणबाधिका वृद्धिरिति ज्ञापनार्थमित्युक्तम् (पृ० ५)।

२. अथ सोपपदविधिना निरुपपदविधयो बाध्यन्ते इति ज्ञापनार्थम् (पृ० ४२)।

३-८. पृ० ४१, २१३, ३७३, ३८१, ४१५, ६२०.

५०. **टबाधनार्थम्–१**

१. अण्ग्रहणं हेत्वादिष्वपि टबाधनार्थम् (पृ० २६९)।

५१. **तकारागमार्थः–१**

१. पकारोऽपि (क्वरपि) तकारागमार्थः (पृ० ३९४)।

५२. **तृजादिनिवृत्त्यर्थम्–१**

१. वुण्ग्रहणं तृजादिनिवृत्त्यर्थम् (पृ० ४१४)।

५३. **नत्वार्थः–१**

१. (पृ० ६२७)।

५४. **नदाद्यर्थम्–५**

१. षकारो नदाद्यर्थः (पृ० २२०)।

२-५. पृ० २४०, २७९, ३८२, ४०३.

५५. **निःसन्देहार्थम्–२**

१-२. पृ० १७३, ५४२.

५६. **नित्यार्थम्–१**

१. पृ० ६२३.

५७. नियमार्थम्–८

१-८. पृ० ७४, १००, १५४, १७०, ४६०, ४९२, ५५६, ६२५.

५८. निर्गलितार्थः(र्थम्)–५

१-५. पृ० २७, १६१, २४२, ३०७, ४१३.

५९. परोक्षार्थम्–१

१. परोक्षार्थं च कृद्ग्रहणम् (पृ० ६११)।

६०. प्रयोगानुसारार्थम्–३

१-३. पृ० २९५, ३२८, ३३६.

६१. प्रतिपत्तिगौरवनिरासार्थम्–४

१-४. पृ० ७७, १४३, २५१, ६००.

६२. प्रपञ्चार्थम्–१८

१-१८. पृ० १५०, १५१, २२३, २२४, २४०, २४४, २७७, २८०, २९९, ३०१, ३२६, ३२८, ३३६, ३४६, ३४७, ४०४, ४२३, ४२४.

६३. बहुलार्थम्–२

१-२. पृ० १८, ४००.

६४. बाधकबाधनार्थम्–१

१. पचादिग्रहणं बाधकबाधनार्थम् (पृ० २०५)।

६५. बालावबोधार्थम्–१

१. एष बालावबोधार्थो निर्देशः (५३८)।

६६. मङ्गलार्थम्–३

१. सिद्धग्रहणं भिन्नकर्तृकत्वान्मङ्गलार्थम् (पृ० ३)।

२. औरिति सिद्धे वृद्धिग्रहणं मङ्गलार्थम् (पृ० ६५६)।

३. गमकत्वात् सम्बन्ध इत्येते वृत्तौ मङ्गलार्थमिति सापेक्षत्वेऽपि समास इति बोध्यम् (पृ० ६५७)।

६७. मध्यनिवृत्त्यर्थम्–१

१. अन्त्यग्रहणं मध्यनिवृत्त्यर्थम् (पृ० ९८)।

६८. मन्दमतिबोधनार्थम्–११

१-११. पृ० १०, २५, १०४, १४९, १५१, १५९, २३९, ३३३, ४१०, ४५८, ५४२.

६९. यण्वद्भावार्थः–१

१. ककारो यण्वद्भावार्थः (पृ० २७९)।

७०. **योगविभागार्थः–१**
१. तत्र चकारो योगविभागार्थः (पृ० ४६४)।
७१. **लक्ष्यानुरोधार्थम्–१**
१. अधिकरणग्रहणं नामाधिकारस्य लक्ष्यानुरोधार्थम् (पृ० २४७)।
७२. **वानिवृत्त्यर्थम्–३**
१-३. पृ० ४५३, ६०६, ६२३.
७३. **विवरणलाघवार्थम्–१**
१. विवरणलाघवार्थमाह-भाव इत्यादि (पृ० ४३५)।
७४. **विशेषणार्थः–४**
१-४. पृ० २०४, ३३६, ३४३, ३६१.
७५. **विशेषप्रतिपत्त्यर्थम्–१**
१. यदा विक्लेदनार्थस्तदा कर्मणीति विशेषप्रतिपत्त्यर्थमेकस्यैव धातोर्दर्शनम् (पृ० ५५५)।
७६. **वैचित्र्यार्थम्–४**
१-४. पृ० २५१, ४२१, ४५४, ४५८.
७७. **व्यक्त्यर्थः–१**
१. एकपदे भिन्नविभक्तिनिर्देशो व्यक्त्यर्थः (पृ० ४६)।
७८. **शङ्कानिरासार्थम्–२**
१-२. पृ० ३९६, ४२८.
७९. **शिष्यबोधार्थः–१**
१. पृ० ६४२.
८०. **षष्ठीनिषेधार्थम्–१**
१. कृद्ग्रहणं कृदन्तात् प्रत्ययान्तरे -षष्ठीनिषेधार्थमिति श्रीपतिनोक्तम् (पृ०२०८)।
८१. **समासविकल्पार्थम्–१**
१. समासविकल्पार्थं क्त्वाग्रहणम् (पृ० ५६७)।
८२. **समुच्चयार्थः–४**
१-४. पृ० ११७, १८६, ६२५, ६४६.
८३. **सर्वसादृश्यार्थम्–१**
१. वद्ग्रहणं सर्वसादृश्यार्थम् (पृ० ४)।
८४. **सामान्याभिघातार्थः–१**
१. घकारः सामान्याभिघातार्थः (पृ० १९२)।
८५. **सामान्यार्थम्–१**
१. प्रत्ययग्रहणं सामान्यार्थम् (पृ० ५१८)।

८६. सार्वधातुकार्थः–२

१-२. पृ० ३४३, ३५४.

८७. सुखप्रतिपत्त्यर्थम्–१०

१. रुदिसहचरितो विदिर्ज्ञानार्थ इति सुखप्रतिपत्त्यर्थमुच्यते (पृ० २५)।

२-१०. पृ० ३७, ९५, १४९, १६५, १७८, १८३, २१३, २३२, ४५८.

८८. सुखार्थम्–७०

१. इज्वद्भावे यानि कार्याणि तानि सुखार्थं श्लोकेन समुच्चिनोति (पृ० ३)।

२-७०. पृ० ४, ८, १८, २९, ४०, ४१, ४२, ४७, ४८, ५०, ५४, ६०, ६१, ७३, ७६, ९६, ९८, ११०, १११, १२७, १३१, १४५, १४९, १५२, १६६, १७८, १७९, १८१, १८३, १९२, २०४, २१२, २३३, २७१, २७६, २८५, २९४, ३०८, ३१७, ३२४, ३३१, ३३७, ३३८, ३४८, ३५४, ३६०, ३८०, ३९३, ४०३, ४०५, ४१०, ४१८, ४२१, ४३०, ४३४, ४४१, ४५८, ४९७, ५१८, ५१९, ५२७, ५३०, ५३८, ५५६, ५६५, ६१२, ६२०, ६२३, ६२७.

८९. स्पष्टार्थम्–१२

१-१२. पृ० १०, ३३, ३४, ३५, ८२, १६८, ३३२, ३३३, ३८४, ३९०, ३९२, ६२०.

९०. स्वरूपपरिग्रहार्थम्–१

१. मीनातिग्रहणं स्वरूपपरिग्रहार्थम् (पृ० ७९)।

९१. स्वाश्रयार्थम्–३

१. वत्करणं स्वाश्रयार्थम् (पृ० २१)।

२-३. पृ० ८९, ३३९

एवं व्याख्यासु अभिधान-ऋषिप्रमाण-गुरुलाघवचिन्ता-विवक्षा-लोक-शिष्टप्रयोग-प्रभृतीनि द्वाविंशतिविधानि वैशिष्ट्यानि संगृहीतानि एकत्रिंशदधिकशतस्थलेषु। 'अयमभिप्रायः- अयमर्थः-अयमाशयः-अस्यार्थः-वस्तुतः' इत्येतैः पञ्चभिः प्रतीकवचनैर्व्याख्याकाराः स्वकीयं विशिष्टं तात्पर्यं प्रकाशितवन्तः एकसप्ततिस्थलेषु। अगुण-अनित्य-असन्देह-उच्चारण-ज्ञापन-गुणप्रतिषेध-निःसन्देह-प्रतिपत्तिगौरवनिरास-मङ्गल-मन्दमतिबोधन-योगविभाग-लक्ष्यानुरोध-शिष्यबोध-समुच्चय-सुखप्रतिपत्ति-स्वरूपपरिग्रहादिचतुःषष्टिप्रयोजनसिद्धिर्द्विपञ्चाशदधिकशतद्वयस्थानेषु दर्शिता।

बोधसौकर्याय विषयोऽयं सारण्यामुपस्थाप्यते—

| क्र०सं० | वैशिष्ट्यबोधकाः शब्दाः | संख्या | क्र०सं० | वैशिष्ट्यबोधकाः शब्दाः | संख्या |
|---|---|---|---|---|---|
| १ | अतन्त्रम् | १ | ५ | अन्त्यस्वरादिलोपार्थः | १ |
| २ | अनभिधानात् | ५ | ६ | अपूर्वकालार्थम् | १ |
| ३ | अनेकार्थत्वाद् धातूनाम् | ३ | ७ | अभिन्नबुद्ध्यर्थम् | १ |
| ४ | अन्वर्थबलात् | १ | ८ | अवधारणार्थम् | १ |
| ५ | अभिधानात् | २७ | ९ | अवादेशार्थम् | १ |
| ६ | अव्युत्पन्ना उणादयः | १ | १० | अविसंवादार्थम् | १ |
| ७ | असाम्प्रदायिकत्वात् | १ | ११ | असन्देहार्थः | १ |
| ८ | उक्तार्थानामप्रयोगः | २ | १२ | इज्वद्भावार्थः | २ |
| ९ | ऋषिप्रमाणात् | १ | १३ | इष्णुज्बाधनार्थः | १ |
| १० | गुरुलाघवचिन्ता | १ | १४ | उच्चारणार्थः | १४ |
| ११ | छान्दसानामनादरात् | १ | १५ | उत्तरार्थम् | १० |
| १२ | प्रतिपत्तिर्गरीयसी | ८ | १६ | एकबुद्ध्यर्थम् | १ |
| १३ | भाषायाम् | १३ | १७ | कत्वगत्वार्थः | २ |
| १४ | रूढिवशात् | २६ | १८ | कर्तृप्रतिपत्त्यर्थम् | १ |
| १५ | लोके | १० | १९ | क्रियासिद्ध्यर्थम् | १ |
| १६ | लोकोपचारात् | ७ | २० | गुणप्रतिषेधार्थः | १ |
| १७ | लौकिकसञ्ज्ञा | १ | २१ | चेक्रीयितलुङ्निवृत्त्यर्थः | १ |
| १८ | विचित्रा सूत्रस्य कृतिः | २ | २२ | ज्ञापनार्थम् | ८ |
| १९ | विवक्षावशात् | १५ | २३ | टबाधनार्थम् | १ |
| २० | विशेषणविशेष्यभावस्य० | १ | २४ | तकारागमार्थः | १ |
| २१ | शिष्टप्रयुक्तत्वात् | ३ | २५ | तृजादिनिवृत्त्यर्थम् | १ |
| २२ | सूत्रकारभाषितप्रलापात् | १ | २६ | नत्वार्थः | १ |
| २२ | | १३१ | २७ | नदाद्यर्थम् | ५ |
| | | | २८ | निःसन्देहार्थम् | २ |
| १ | अयमभिप्रायः | ११ | २९ | नित्यार्थम् | १ |
| २ | अयमर्थः | २५ | ३० | नियमार्थम् | ८ |
| ३ | अयमाशयः | ४ | ३१ | निर्गलितार्थः | ५ |
| ४ | अस्यार्थः | ९ | ३२ | परोक्षार्थम् | १ |
| ५ | वस्तुतः | २२ | ३३ | प्रयोगानुसारार्थम् | ३ |
| ५ | | ७१ | ३४ | प्रतिपत्तिगौरवनिरासार्थम् | ४ |
| १ | अगुणार्थः | ३ | ३५ | प्रपञ्चार्थम् | १८ |
| २ | अण्बाधनार्थम् | १ | ३६ | बहुलार्थम् | २ |
| ३ | अधिकाराविच्छेदार्थम् | १ | ३७ | बाधकबाधनार्थम् | १ |
| ४ | अनित्यार्थम् | १ | ३८ | बालावबोधार्थम् | १ |
| ४ | | ६ | ३४ | | १०४ |

| | | | | | |
|---|---|---|---|---|---|
| ३९ | मङ्गलार्थम् | ३ | ५२ | शिष्यबोधार्थः | १ |
| ४० | मध्यनिवृत्त्यर्थम् | १ | ५३ | षष्ठीनिषेधार्थम् | १ |
| ४१ | मन्दमतिबोधनार्थम् | ११ | ५४ | समासविकल्पार्थम् | १ |
| ४२ | यण्वद्भावार्थः | १ | ५५ | समुच्चयार्थः | ४ |
| ४३ | योगविभागार्थः | १ | ५६ | सर्वसादृश्यार्थम् | १ |
| ४४ | लक्ष्यानुरोधार्थम् | १ | ५७ | सामान्याभिघातार्थम् | १ |
| ४५ | वानिवृत्त्यर्थम् | ३ | ५८ | सामान्यार्थम् | १ |
| ४६ | विवरणलाघवार्थम् | १ | ५९ | सार्वधातुकार्थः | २ |
| ४७ | विशेषणार्थः | ४ | ६० | सुखप्रतिपत्त्यर्थम् | १० |
| ४८ | विशेषप्रतिपत्त्यर्थम् | १ | ६१ | सुखार्थम् | ७० |
| ४९ | वैचित्र्यार्थम् | ४ | ६२ | स्पष्टार्थम् | १२ |
| ५० | व्यक्त्यर्थः | १ | ६३ | स्वरूपपरिग्रहार्थम् | १ |
| ५१ | शङ्कानिरासार्थम् | २ | ६४ | स्वाश्रयार्थम् | ३ |
| १३ | - | ३४ | १३ | | १०८ |

६+१०४+३४+१०८=२५२

प्रकृतभागेऽस्मिन् कृत्प्रकरणे दश परिशिष्टानि संयोजितानि। प्रथमे परिशि वर्तते ग्रन्थक्रमेण सूत्रपाठः। कृत्प्रकरणे षट्चत्वारिंशदधिकपञ्चशतसङ्ख्याकानि सूत्रा वर्तन्ते। ३९९ उणादिसूत्राणि वर्तन्ते कृत्सम्बद्धानि, तस्मात् तानि द्वितीयपरिशि पठितानि ग्रन्थक्रमेण वर्णक्रमेण च। येषां षट्चत्वारिंशदधिकपञ्चशत कातन्त्रीयसूत्राणां पाणिनीयव्याकरणसूत्रैः सह समीक्षा यथास्थानं कृता, तेषामे तुलनात्मकसूची तृतीये परिशिष्टे निबद्धा। चतसृषु व्याख्यासु समागतानां ५४ ग्रन्था ९७ ग्रन्थकाराणां च नामावली क्रमेण वर्तते चतुर्थे पञ्चमे च परिशिष्टे। व्याख्या येषां शब्दानां व्युत्पत्तिः परिभाषा वा प्रदत्ता तेषां ५३४ शब्दानां सूची षष्ठे परिशि १०५ श्लोकानां सूची सप्तमे परिशिष्टे, येषां शब्दानां रूपसिद्धिः प्रतिसू समीक्षाप्रसङ्गे कृता तेषां २०८८ शब्दानां सूची अष्टमे परिशिष्टे, ५ विशिष्टशब्दानां सूची नवमे परिशिष्टे, साङ्केतिकशब्दसूची च दशमे परि क्रमसंख्या-पृष्ठसङ्ख्यापुरस्सरं प्रस्तुता जिज्ञासुजनानामनुसन्धानपरायणानां विदुषां सौविध्याय मनोमोदाय च।

**कृतज्ञताप्रकाशनम्**

ये हि **आचार्यबलदेवोपाध्याय-रामशङ्करभट्टाचार्य**प्रभृतयो विद्वांसोऽस्मि व्याकरणे वाचस्पति (डी० लिट्०)- उपाधये शोधकार्यप्रवर्तनाय प्रेरणासूत्राण्यभू मुनिजिनविजय-भिक्षुजगदीशकश्यपादयो ये विद्वांसः शारदादिलिपिपठनेनेतिवृ परिचयप्रदानादिना च किञ्चिदपूर्वं साहाय्यमारचितवन्तः, ये चा

पाणिनीयादिव्याकरणान्तरापेक्षया सरलं संक्षिप्तं छान्दस-ईश्वर-अलस-बालादीनां कृते क्षिप्रं प्रबोधपरं च कातन्त्रं सूत्रैरुपनिबध्य व्याकरणवाङ्मये लोकव्यवहारप्रधानां माहेन्द्रीं परम्परामुज्जीवयन्तो जयन्ति। तान् सर्वान् प्रति सविनयं कृतज्ञतामावेदये।

नवदिल्लीस्थश्रीकुन्दकुन्दभारतीन्यासाधीश्वरा मुनिवर्याः **श्रीविद्यानन्द**महाराजा अवसरेऽस्मिन्नैव कथमपि विस्मर्तुं शक्यन्ते, ये कातन्त्रव्याकरणमभिलक्ष्य आचार्य-उमास्वामिपुरस्कारं कातन्त्रसिन्धु-सम्मानितपदवीं च मह्यं प्रदाय व्याकरणमिदं जैन-समाजस्य गौरवग्रन्थमुद्घोषयन्तो द्विदिवसीयामखिलभारतीयसंगोष्ठीं पञ्चदशदिवसीयां कार्यशालां च समायोजितवन्तः। उक्तन्यासपरिसरे नवनिर्मिते **खारवेलभवने** कातन्त्र-पुस्तकालयस्थापनायाः प्रचारप्रसारव्यवस्थायाश्च तेषां महान् संकल्पो वर्तते। शीघ्रमेवायं संकल्पः सफलतां प्राप्स्यतीत्यहमाशासे। मुनिवर्येभ्यस्तेभ्यः श्रीविद्यानन्दमुनिमहाराजेभ्यस्तदीयप्रधानशिष्येभ्यश्च महाराजश्रीश्रुतसागरप्रभृतिभ्यो भूयांसं प्रणामाञ्जलिं निवेदयामि, तेषां सकाशादाशीराशिं च कामये।

ये हि प्राच्यभारतीयग्रन्थनिधिसंरक्षणसंकल्पपरा मान्याः सम्पूर्णानन्दसंस्कृतविश्व-विद्यालयीयप्रकाशनसमितिसदस्या महतीमिमां कातन्त्रव्याकरणप्रकाशनयोजना-मङ्गीकृतवन्तस्ते वस्तुतः सन्ति प्रसङ्गेऽस्मिन्नभिनन्दनीयाः। विदितमेव विदुषां यत् तृतीयभागस्य द्वितीयखण्डे (पञ्चमे खण्डे) 'नान्दी वाक्' रूपप्रस्तावनाया माध्यमेन छन्दोबद्धया वाचा ये कातन्त्रकारमाचार्यशर्ववर्माणमाराध्यम्, कातन्त्रानुशीलन-सम्पादनसमीक्षादिपरायणं संपादकं मामाराधकम्, ऐन्द्रं विभुत्वमापन्नं राजेन्द्राभिधान-मात्मानं व्याकरणस्य माहेन्द्र-परम्पराप्रवर्तकमिन्द्रम्, प्रकाशननिदेशकं डॉ० हरिश्चन्द्रमणित्रिपाठिनं ग्रन्थप्रसूनसुषमासौरभप्रकाशनेन विभ्राजमानं सुरद्रुममुद्-घोषयन्, तान् विविधविद्यानुशीलनावदातान्तःकरणान् अभिनन्दनीयान् मनीषिवर्यान् कविगोष्ठीषु प्रथितप्रभावान् राष्ट्रपतिपुरस्कारेण सभाजितान् पूर्वकुलपतिप्रवरान् प्रो० **श्रीराजेन्द्रमिश्रमहोदयान्** प्रति परःशतप्रणामपुष्पाञ्जलिना कृतज्ञतां विज्ञापयन्नहमात्मानं कृतिनं मन्ये। विशिष्टाद्वैत-आगमादिविविधविद्याविशारदा लखनऊविश्वविद्यालयीय-संस्कृतविभागाध्यक्षचराः संमाननीयाः कुलपतिप्रवराः श्रीमन्तः **अशोककुमारकालिया**-महोदयाः प्रसङ्गेऽस्मिन् भूयो भूयः कृतज्ञताप्रकाशनेनाभिनन्द्यन्ते। अर्थव्यवस्था-समाधानादिकार्यजातस्य निर्वाहाय कुलसचिवः, निदेशकः, तदीयसहयोगिनश्चापि धन्यवादमर्हन्ति। सुहृद्वर्याः प्रकाशननिदेशका डॉ० **श्रीहरिश्चन्द्रमणित्रिपाठि**महाभागा व्याकरणस्यास्य प्रकाशनविधावादित एवाभिरुचिपूर्वकमविस्मरणीयं साहाय्यं कृतवन्तस्तेन तेभ्यः सद्भावसंवलितान् धन्यवादान् वितरामि कृतज्ञतां च विज्ञापयामि।

धर्मपत्नी श्रीमती **कृष्णा द्विवेदी** समये समये पाण्डुलिपिपठनादिकार्येण सुगमतां स्वारस्यं च सम्पादितवतीति धन्यवादार्हा सा शुभाशीर्भिः संयोज्यते। काव्यादर्शकाव्यप्रकाशयोस्तुलनात्मकमध्ययनमधिकृत्य लब्धविद्यावारिधिशोधोपाधिर्मम ज्येष्ठपुत्रो डॉ० **शरच्चन्द्रद्विवेदः** ईक्ष्यपत्रसंशोधन-लिप्यन्तरादिकार्यसम्पादनेन वाञ्छितं साहाय्यं यथासमयमाचरितवानिति भूयसेऽभ्युदयाय तस्मै शुभाशिषो वितीर्यन्ते। ईक्ष्यपत्रसंशोधनादिव्यवस्थाकार्येषु नितान्तं जागरूकाः डॉ० **हरिवंशपाण्डेय-कन्हईसिंहकुशवाहाप्रभृतयः** प्रकाशनविभागीयसदस्यास्त्वरित-मुद्रणयोजनादक्षाः सञ्चालक-**आनन्दकुमारपाण्डेय**प्रभृतयः आनन्दप्रिण्टिङ्गप्रेससदस्याश्च सन्ति नूनं धन्यवादार्हाः।

त्रिकं कातन्त्राख्यं विदितमिह संक्षिप्तसुगमं
पृथिव्यां माहेन्द्रीमनुसरति धारामभिमताम्।
समृद्धं व्याख्याभिर्बहुविधमनोज्ञं सुकलितं
सदाराध्यं सद्भिः शिवशिवसुताभ्यामनुमतम्।।१।
दुर्गसिंहकृता वृत्तिष्टीका चापि मनोरमा।
पञ्जी कलापचन्द्रश्च तत्त्वार्णवकृतिः शुभा।।२।
तासां कातन्त्रव्याख्यानां सूत्राणां चानुशीलनात्।
कृतं सम्पादनं भूयाद् बुधानां प्रीतये सदा।।३।

विदुषामाश्रवः

**जानकीप्रसादद्विवेदः**

पूर्वसंस्कृतविभागाध्यक्षशब्दविद्यासंकायाध्यक्ष-
कुलसचिवपदवीकः
के०उ०ति०शि०सं०
सारनाथ-वाराणसी

**वाराणसी**
श्रावणकृष्ण-अमावास्या, गुरुवासरः
दि० ०४/०८/२००५



।। श्रीः ।।

# विषयानुक्रमणी

प्रयोग की प्रामाणिकता, सम्प्रसारण, सम्प्रसारण का निषेध, प्राप्तिपूर्वक ही निषेध की प्रवृत्ति, दीर्घादेश, चेक्रीयितलुगन्त की भाषा में भी मान्यता, श्-ऊट् आदेश', 'छ्-व्' का लोप, लोक में धूर्त शब्द की विशिष्ट अभिधेयता, सूत्र की विचित्र कृति, दण्डक पाठ, पञ्चम वर्ण का लोप, मलोप, नलोप, निपातनविधि, नैयासिकमत, सूत्रकार के मत की न्यायसिद्धता, आकारादेश, असाम्प्रदायिक हेयता, इकारादेश, पाठगौरव, 'हि' आदेश, तिप्निर्देश की सुखार्थता, उकारादेश, 'दत्' आदेश, तकारादेश, शाकटायन का मत, 'जग्धि' आदेश, 'घस्लृ' आदेश, निष्ठा संज्ञा, शब्दों की नित्यता, समीक्षा में निष्ठाविषयक विशेष वक्तव्य]।



[धातु का अधिकार, इति शब्द का द्वैविध्य, उपपदसञ्ज्ञा, क्रिया के उपकारी वाक्यार्थ-पदार्थ, नित्य और कार्य शब्द, समासविधि, नित्य समास, लोकव्यवहार से निपात आदि का परिज्ञान, प्रवाहनित्यता, आभ्यन्तर-बाह्य भेद से द्विविध भाव, समास-प्राग्भाव का निषेध, गरीयसी प्रतिपत्ति, सागर-हेम आदि के मत, कृत् संज्ञा तथा उसका अधिकार, स्वार्थ-परार्थ भेद से दो प्रकार का अधिकार, समीक्षा में कृत् की प्राचीनता आदि। तव्य-अनीय प्रत्यय, रूढिवश दीर्घादि- विधान, 'य' प्रत्यय, बुद्धि तथा वचन से शब्दों का संस्कार, वररुचिमत की असाधुता, इकारादेश, निपातनविधि, 'वर्या' शब्द की नित्य स्त्रीलिङ्गता, निपातन से तीन कार्य, निपातनविधि, प्रतिपत्तिगौरव, क्यप् प्रत्यय, प्रक्रियागौरव, सुखप्रतिपत्ति के लिये योगविभाग, भार्या शब्द की सिद्धि, अपौराणिक पक्ष, निपातनविधि, घ्यण् प्रत्यय, वररुचि-दुर्ग के मत, सौत्र धातु, अपौराणिक पाठ, उपचारबल से विशिष्ट अर्थ, स्वरवद्भाव, तीन अग्नियाँ, निपातन से स्त्रीलिङ्गता, निपातन से सिद्धि, कृत्यसञ्ज्ञा, वुण् तथा तृच् प्रत्यय, पचादिग्रहण की बाधकबाधनार्थता, पचादिनामगण, 'यु' प्रत्यय, 'णिन्' प्रत्यय, प्रतिपत्तिगौरव, श्रीपतिमत, 'क' प्रत्यय, 'ड' प्रत्यय, डकारानुबन्ध की योजना अन्त्यस्वरादि के लोपार्थ, 'श' प्रत्यय, वृत्तिकार का हृदय मन्दबुद्धि वालों के सुखावबोधार्थ, सौत्र धातु, 'ण' प्रत्यय, सागर-हेम आदि आचार्यों के मत, व्यवस्थितविभाषा, अधिकार की इष्टविषयता, 'अक्' प्रत्यय, वुष् प्रत्यय, 'थक' प्रत्यय, ण्युट् प्रत्यय, 'अक' प्रत्यय, पूर्व वैयाकरणों का अभिमत]।

तृतीयः कर्मादिपादः २२६-३३७

[अण् प्रत्यय, वेदों की नित्यता तथा उनका अध्ययन के द्वारा अभिव्यक्तिविकार, कर्म का द्वैविध्य, उनकी परिभाषाएँ, गुरु-लाघवचिन्ता, पूर्वपक्षार्थ, 'ण' प्रत्यय, सुखप्रतिपत्त्यर्थवचन, परप्रसिद्धि के कारण इनङ् का पाठ, 'क' प्रत्यय, रूढिवचन, शर्ववर्मा द्वारा की गई दा-सञ्ज्ञा, मन्दमतिबोधार्थ वचन, 'टक्' प्रत्यय, उत्तर सूत्र की प्रपञ्चार्थता, 'अच्' प्रत्यय, ताच्छील्य की व्याख्या, तार्किक मत, पचादि के प्रपञ्चार्थ प्रकरण, प्रतिपत्तिगौरव, लक्ष्यानुरोध से नामाधिकार, 'ट' प्रत्यय, 'गुरुकुलम्' आदि शब्दों की सिद्धि, ताच्छील्य-निर्देश वैचित्र्य के लिए, हेतु की व्याख्या, रूढि के कारण 'तस्कर' शब्द की सिद्धि, गरीयसी हेत्वादिविवक्षा, 'इ' प्रत्यय, कुलचन्द्र का अभिमत, 'देवापि-वातापि' शब्दों की सिद्धि रूढि के कारण, 'खि' प्रत्यय, 'खश्' प्रत्यय, प्रसज्यप्रतिषेध की व्याख्या, निपातनविधि, 'ख' प्रत्यय, प्रक्रियागौरव, 'अण्' प्रत्यय, हेत्वादि अर्थों में विवक्षा, 'नाम्नि' पद की सुखार्थता, 'उर-विह' आदेश, 'ड' प्रत्यय, निपातनविधि, सुखार्थ कर्मग्रहण, प्रपञ्चार्थ 'ड' प्रत्यय का विधान, धातुओं की अनेकार्थता, 'णिन्' प्रत्यय, 'टक्' प्रत्यय, नदाद्यर्थ-यण्वद्भावार्थ अनुबन्धयोजना, कृत् की अभिधानलक्षणता, निपातनविधि, 'ख्युट्' प्रत्यय, रूढिशब्द परिनिष्ठित अर्थ के अभिधायक, पदकार-भाष्यकार के अभिमत, कार्य की पूर्वावस्था प्रकृति, 'खिष्णु-खुकञ्' प्रत्यय, सुखार्थ इकारानुबन्ध, पाठ-गौरव, ताच्छील्य की विवक्षा, विशेषणविशेष्यभाव प्रयोक्ता के अधीन, 'विण्' प्रत्यय, 'तुरासाह' शब्द का लौकिक प्रयोग, विण्प्रत्यय, डकारादेश, 'क' प्रत्यय-घकारादेश, 'अग्रेगाः' इत्यादि शब्दों का लोक में भी प्रयोग, 'श्वेतवाः' इत्यादि शब्दों का लोक में भी प्रयोग, 'मन्-क्वनिप्-वनिप्-विच्' प्रत्यय, श्रीपति-हेम आदि के मत, 'क्विप्' प्रत्यय, प्रपञ्चार्थ चतुःसूत्री, निपातनविधि, 'टक्-सक्' प्रत्यय, क्षणभङ्गुरवाद, 'णिनि' प्रत्यय, जाति की व्याख्या, पूर्वाचार्य द्वारा परिभाषित गोत्र, ब्राह्मण के तीन कारण, शाकटायन का जातिविषयक मत, षट्कर्मशालित्व ब्राह्मणत्व, ताच्छील्य=स्वभाव=फल-निरपेक्ष प्रवृत्ति, व्यापारवान् कर्ता, प्रकृति-प्रत्यय मिलकर प्रत्ययार्थ का कथन करते हैं, आभीक्ष्ण्य का अर्थ, दो प्रकार का नियम, पुंवद्भाव, 'णिनि-खश्' प्रत्यय, वैयाकरण-वेदान्तवादी-नैयासिकों के मत, अपौरुषेय वेदवाक्य, करणत्व की व्याख्या, अग्निष्टोमेन स्वर्गकामो यजेत, चार प्रमाण, यागादिव्यापार, सुखार्थ कर्मग्रहण, क्विप् प्रत्यय, दो तथा चार प्रकार के

पञ्चमो घञ्प्रत्ययादिपादः ४२३-५२१

[घञ् प्रत्यय, उपलक्षण, पदधातु का प्रपञ्चार्थ पाठ, 'कृ-भू-अस्' सामान्य क्रिया अर्थ के अभिधायक, धात्वर्थ भाव, साध्य-सिद्ध भेद से दो प्रकार की क्रिया, भाव का अर्थ सत्ता, द्रव्यादि भेद से कारक पाँच प्रकार का, कारक के द्रव्य और शक्ति अर्थ, कारकों की व्यवस्था विवक्षाधीन, बाह्य-आभ्यन्तरभेद से भाव दो प्रकार का, कुलचन्द्र-वैद्य आदि के मत, गरीयसी प्रतिपत्ति, विवरणलाघव, छन्द शब्द से अनुष्टुप् आदि का ग्रहण, पाठान्तरचर्चा, कात्यायन की सम्मति, छान्दस प्रयोग, उपलक्षण, पदसंस्कार, वैचित्र्यार्थ आदिग्रहण, शिष्टप्रयोग, 'इनुण्' प्रत्यय, उच्चारणार्थ इकारानुबन्ध, णच् प्रत्यय, वैचित्र्यार्थ पाठ, क्रिया-व्यतीहार, भट्टिवचन, अल् प्रत्यय। योगविभागार्थ चकार, निपातनविधि, 'हु' आदेश, वध-घन् आदेश, घञ् प्रत्यय, निपातनविधि, 'ड' प्रत्यय, सभी गत्यर्थक धातुएँ ज्ञानार्थक, 'क' प्रत्यय, 'अत्' प्रत्यय, अथु-त्रिमक् प्रत्यय, कर्मविवक्षा, सोपसर्ग अकर्मक धातु का सकर्मक होना, 'नङ्-कि-क्ति' प्रत्यय, क्रियाभिधायी धातु, प्रकृति-प्रत्यय मिलकर प्रत्ययार्थ को कहते हैं, क्यप्-श-य प्रत्यय, सूत्रकार का मत, अ-अङ् प्रत्यय, पूर्वाचार्यों द्वारा घटादि धातुओं का षानुबन्ध पाठ, अर्वाचीन-सम्प्रदायवित्, त्रिलोचन-दुर्ग-सागर-श्रीपति के अभिमत, गरीयसी प्रतिपत्ति, यु-वुञ्-इञ्-अनि-कृत्य-युट्-क्त-घ-घञ् प्रत्यय, क्रीडा में नित्य समास, योगविभाग की अपेक्षा अक्षराधिक्य का औचित्य, आकृतिगण, चान्द्रसूत्र, निपातनविधि, भग के विविध अर्थ, खल् प्रत्यय, अभिधान से अभीष्ट अर्थ का ग्रहण, तुम्-तृच्-कृत्य-णिन्-तिक्-कृत्संज्ञक प्रत्यय, विशेष्य रूप धात्वर्थ के काल में कृत्संज्ञक प्रत्ययों का साधुत्व, ऋजु आचार्यों का अभिमत, वक्ता के अधीन उच्चारण, कुलचन्द्र-वृत्तिकार-पञ्जिकाकार आदि के मत, परमार्थतः अखण्ड वाक्य, संज्ञाशब्दों की यथाकथञ्चित् व्युत्पत्ति]।

षष्ठः क्त्वाप्रत्ययादिपादः ५२२-६५८

[क्त्वा प्रत्यय, कारण में कार्य का उपचार, सूत्र की विचित्र रचना, क्रियाप्रधान आख्यात, वक्तव्यपक्ष-संग्रहपक्ष, लोकप्रसिद्धि, पूर्वकाल विवक्षा, पाठान्तर, कारकपदार्थ शक्ति, लिङ्गादिपाठ अतन्त्र, त्रिलोचनहृदय, णम्-खमिञ् प्रत्यय, विषयसप्तमी, सूत्रकार-भाष्यकारमत, पाठान्तर, वाक्यसमाप्ति पर इति शब्द का प्रयोग, बालावबोधार्थ निर्देश, सिद्धान्तविशेष, लोकोपचार से प्रयोगों का परिज्ञान, बन्धविशेष की संज्ञा,

चान्द्र वैयाकरणों का मत, उक्तार्थ का अप्रयोग, अनुप्रयोग, शाकटायन-जिनेन्द्रबुद्धि-उपदेशवित् आचार्यों के अभिमत, व्यक्ति-जातिपक्ष, लौकिकी पूर्वकालविवक्षा, पाठान्तर, जीवोपघातरूप हिंसा, भूमि की हिंसा सम्भव नहीं, वीप्सा, लोकोपचार, जयादित्य आदि के मत, लौकिक शास्त्रीय सञ्ज्ञाएँ, उच्च स्वर से प्रिय का तथा नीच स्वर से अप्रिय का आख्यान, जिनेन्द्रबुद्धि आदि आचार्यों के अभिमत, पाठान्तर, कृत्सञ्ज्ञक प्रत्यय, कृत्य-क्त-खलर्थक प्रत्यय, गरीयसी प्रतिपत्ति, उक्तार्थ का अप्रयोग, क्रियार्थक कर्मशब्द, पाठान्तर, निपातन से कार्यसिद्धि, औणादिक शब्दों की यथाकथञ्चित् व्युत्पत्ति, रूढ शब्दों में भी क्रिया-कारकसम्बन्ध, प्रयोगानुसार प्रत्ययों की योजना, ध्रौव्यार्थ का अकर्मक होना, गरीयसी प्रतिपत्ति, कारण में कार्य का उपचार, अन-अक-अन्त-यप् आदेश, आर्याछन्दोबद्ध उदाहरण, प्रीति से आदरभाव की अभिव्यक्ति, अच्छ शब्द अव्यय, प्रयोगानुसार अर्थों की प्रसिद्धि, विशेष्य-विशेषणभाव प्रयोक्ता के अधीन, पर्युदास-प्रसज्यवृत्ति, पाठान्तर, क-ग-आदेश, विवक्षा, अभिधान से प्रत्ययव्यवस्था, सूत्रकार आदि के अभिमत, सञ्ज्ञाशब्द की यथाकथञ्चित् व्युत्पत्ति, निपातनविधि, प्रतिपत्तिगौरव के निरासार्थ निपातन, समान का 'स' आदेश, योगविभाग, इदम् को 'ई' आदेश, अदस् को 'अमू' आदेश, 'सध्रि-समि-तिरि-ध्' आदेश, व्यवस्थितविभाषा, नकारादेश, सूत्रकार-श्रुतपाल का अभिमत, इडागम का निषेध, वैकल्पिक इडागम, लुप्त प्रथमा-एकवचन की अतन्त्रता, निपातनविधि, 'म-क-व' आदेश, वृद्धि आदेश]।





# कातन्त्रव्याकरणम्

## अथ चतुर्थे कृत्प्रत्ययाध्याये प्रथमः सिद्धिपादः

[दु०वृ०]

[1]वृक्षादिवदमी रूढाः कृतिना न कृताः कृतः।
कात्यायनेन ते सृष्टा विबुद्धिप्रतिबुद्धये।।

[दु०टी०]

**नमो गणेशाय।** वृक्षादिवदित्यादि। यथा वृक्षादयः सञ्ज्ञाशब्दा विशिष्टत्वेन व्यवस्थितास्तथा पाचकादयोऽपीति कृतिना पण्डितेन **शर्ववर्मणा** कृतो न कृताः। कृल्लक्षणं न कृतमित्यर्थः। अन्यथा शब्दानामनन्तत्वाल्लक्षणस्याप्यनन्तत्वं प्रसज्येत। तथा चोद्घुष्यते-**अभिधानलक्षणा हि कृत्तद्धितसमासा** इति। **अभिधानं हि शब्दः**, स एव लक्षणमेषाम् , लक्षणं नियामकमित्यर्थः। **कात्यायनेन वररुचिना** ते कृतः कृताः सृष्टाः। विगता बुद्धिर्येषां ते **विबुद्धयः**, तेषां प्रतिबुद्धये प्रतिबोधायेत्यर्थः। प्रकृतिप्रत्ययसङ्गत्याभिधानव्यवस्था लघीयसी स्यादिति भावः।

[वि०प०]

वृक्षादिवदित्यादि। वृक्षादय इव **वृक्षादिवत्**। यथा वृक्षादयः शब्दा **लोके** विशिष्टविषयतया प्रसिद्धाः, तथा अमी कृतः कृदन्ता अपि शब्दा इति कृत्वा कृतिना न कृताः। प्रस्तावादिह कृती पण्डितः **शर्ववर्मैवोच्यते। शर्ववर्मणा** कृल्लक्षणं न

---

१. सम्पादकस्य श्रीमद्गुरुनाथविद्यानिधेष्टिप्पणी–
[आदौ सिद्धपदार्पणादथपदस्योच्चारणान्मध्यत–
श्चान्ते वृद्धिपदस्य मङ्गलतया शास्त्रं समाप्तिं गतम्।
इत्याचार्यतितिक्षणं विकसितं पश्चात् कृतः कैः कृता
एतज्ज्ञापयितुं स शिष्यनिवहं दुर्गोऽवदत् पद्यकम्।।

भगवान् शर्ववर्माचार्य - **"सिद्धो वर्णसमाम्नायः"** (१।१।१) हइते **"आरुत्तरे च वृद्धिः"** (३।८।३५) पर्यन्त सूत्रमय सन्धि, चतुष्टय ओ आख्यात अवधि कातन्त्र व्याकरण प्रणयन करियाइ निवृत्त हइयाछेन, तिनि कृत्प्रत्ययविधायक सूत्रमय व्याकरण प्रणयन करेन नाइ केन ? इहार प्रणेता के ? – एइ प्रश्ने शिष्यवर्गेर सिद्ध्यर्थ भगवान् दुर्गसिंह स्वीय कृद्वृत्तिर प्रारम्भे बलितेछेन – 'वृक्षादिवदित्यादि'। **अस्यार्थः–** एइ पाचक कारक प्रभृति कृदन्त शब्दगुलि वृक्षशब्देर न्याय रूढ बलिया स्वीकार्य, इहा मने करिया महात्मा शर्ववर्माचार्य, कृत्प्रत्ययान्त शब्दसमूहेर साधनार्थ सूत्रसमूह रचना करेन नाइ, एइ सकल सूत्र **कात्यायन** मुनि **(वररुचि)** कर्तृक अल्पमति विद्यार्थिगणेर सहजे ज्ञान हओयार जन्य प्रणीत हइयाछे। पूर्वार्द्धे सङ्कलित भूमिकाय विशेष ज्ञातव्य]

कृतमित्यर्थः। तथा चाहुः **अभिधानलक्षणा हि कृत्तद्धितसमासा** भवन्तीति। **अभिधानं शब्दः**, स एव लक्षणं नियामकमेषां न सूत्रमित्यर्थः। तर्हि केन नाम कृतः कृता इत्याह- कात्यायनेनेति। **कात्यायनेन वररुचिना।** विगता बुद्धिर्येषां ते विबुद्धयः, तेषां प्रतिबुद्धिः प्रतिबोधः, तदर्थाय। अन्यथा प्रकृतिप्रत्ययविभागेषु मन्दधियो मुह्यन्तीति भावः।

**[क०च०]**

नमः शिवाय। अग्रे मङ्गलार्थस्य सिद्धशब्दस्योपादानाद् **''आरुत्तरे च वृद्धिः''** (३।८।३५) इत्यन्ते वृद्धिग्रहणस्य तथैवोपादानाच्च भिन्नकर्तृकत्वमुपस्थितम्. तत्रापि **शर्ववर्मणा** कथमुपेक्षितम्, तमन्तरेण केन वा कृता इत्युपेक्षाकारणं ग्रन्थस्य कर्तृत्वं च प्रतिपादयन्नाह- वृक्षादिवदिति। ननु कथमत्रोपमानोपमेयभावः सादृश्याभावात्। तथाहि वृक्षशब्दः व्रश्चेः सक् इत्यनेन व्युत्पादितोऽपि प्रकृतिप्रत्ययार्थमुत्सृज्य समुदाये शक्तः। पाचकशब्दस्तु प्रकृतिप्रत्ययार्थसमुदायेनैव वचनानुकूलकृतिमति वर्तमानोऽवयवे शक्तः? सत्यम्, नात्र सर्वथा सदृशत्वमाश्रितम्, किन्तु प्रसिद्धत्वेनैव। यथा वृक्षशब्दः प्रसिद्धो विशिष्टविषयत्वेन, तथा पाचकशब्दोऽपि, तत् किं समुदायार्थेनावयवार्थेन वेति शेषः, नात्र विशेषः।

अथ कृतिशब्देन **पण्डित** एवोच्यते तेन न कृता इत्युक्ते तदितरेण मूर्खेण किं कृताः? **[अधर्मामृतवन्नञ् विपक्षे वर्तते यतः।]** सत्यम् , **कलापाख्यव्याकरण**शास्त्रप्रस्तावादिह कृतिशब्देन **शर्ववर्मो**च्यते। तथा चोक्तम्-

**अर्थात् (वाक्यात्) प्रकरणाल्लिङ्गादौचित्याद् देशकालतः।**
**शब्दार्थास्तु विभज्यन्ते न रूपादेव केवलात् ।।** (वा. प. २।३१४)।

तद् यथा- पीनोऽयं वटुर्दिवा न भुङ्क्ते, भोजनं विना पीनत्वानुपपत्तिरिति रात्राविति गम्यतेऽर्थात्। प्रकरणाद् यथा सैन्धवमानयेति भोजनकाले प्रयुक्ते लवणमेवानीयते नाश्वादिरिति। लिङ्गाद् यथा मित्रोऽयं भातीत्युक्ते पुंलिङ्गत्वात् सूर्य एव प्रतीयते न सखा, तत्र नपुंसकत्वान्मित्रशब्दस्य। औचित्याद् यथा— सुरालयं प्रविशति ब्राह्मणः। अत्र सुराणां देवानामालयः, तथा सुराया मदिराया आलय इति उभयार्थसम्भवे तत्र ब्राह्मणशब्दस्य सान्निध्याद् देवालय एवेति। देशाद् यथा- मुण्डयितारो वधूमूढामिति विधिवाक्ये देशविशेष एव प्रतीयते न सर्वत्र। कालाद् यथा- वर्षासु हरी रौति। यद्यपि हरिशब्दो जनार्दनवाचकस्तथापि भेक एव प्रतीयते वर्षाशब्दप्रयोगात्। ननु **कात्यायन**मुनेरयं ग्रन्थस्तत् कथं **वररुचिना** कृतमिति? सत्यम्, **कात्यायनो मुनिर्वररुचि**शरीरं परिगृह्य शास्त्रमिदं प्राणैषीदिति **किंवदन्तीति।** अर्थप्रतीतिं करोतीति **कृत्** कर्तरि क्विप्।

यद् वा धातोः परतः क्रियते इति सम्पदादित्वात् कर्मणि क्विप्। न च सम्पदादित्वाद् भावे एव क्रियतामिति वाच्यम्। तथा च तत्रैवोक्तम्- सम्पदादित्वात् क्विब् भावे कारके चेति। अत एव प्रतिपाद्यतेऽसाविति प्रतिपदिति कर्मण्युदाहृतम्। **पञ्जिकायाम्** अथ वृक्षशब्दस्य समुदाये **शक्तिः** पाचकशब्दस्यावयव इति कथं सादृश्यमित्याह— यथेति। एतेनैकदेशेनैव सादृश्यमिति

दर्शितम् , न कृता व्युत्पादिता इत्यर्थः। अथ प्रत्ययानां केवलानां प्रयोगाभावात् कथं तेषां व्युत्पादनम् ? सत्यम् , उपचारात् कृदन्ताः शब्दाः कृतः इहोच्यन्त इत्याह– कृदन्ता इति। अथ **शर्ववर्मणा** न व्युत्पादिता इति कथं ज्ञातम्, **''कर्तृकर्मणोः कृति नित्यम्, न निष्ठादिषु''** (२।४।४१, ४२) इति कथमन्यथा षष्ठीविधिनिषेधार्थं सूत्रद्वयमुक्तम्? सत्यम्। सूत्रद्वारा न व्युत्पादिताः। यद्येवं स्यात् तदा कृल्लक्षणं न कृतं स्यादित्याह– कृल्लक्षणमिति]

## ८५६. सिद्धिरिज्वद् ञ्णानुबन्धे [४।१।१]

**[सूत्रार्थ]**

'ञ् - ण्' अनुबन्ध वाले कृत्संज्ञक प्रत्ययों के परे रहते धातु को इज्वद्भाव होता है। अर्थात् इच् प्रत्यय होने पर उपधासंज्ञक अकार को दीर्घ, 'जन्-वध्' धातुओं को ह्रस्व, कुटादि धातुओं को गुण तथा आकारान्त धातुओं में आकार को आय् आदेश आदि कार्य प्रवृत्त होते हैं। ये सभी कार्य इज्वद्भाव होने पर भी सम्पन्न होंगे।। ८५६।

**[दु०वृ०]**

ञानुबन्धे णानुबन्धे च कृत्प्रत्यये परे धातोरिचीव कार्यस्य सिद्धिरतिदिश्यते—

**इज्वद्भावेऽस्योपधाया दीर्घो वृद्धिश्च नामिनाम्।**
**हन्तेर्घो जनवधोर्ह्रस्वः कुटादीनां गुणो भवेत्।।**
**स्यादादन्तानामायिश्च इनीचीति निबन्धनात्।**
**न ह्रस्वो मानुबन्धानामिचि वा वचनेन च।।**

पाठः, पाठकः। कारः, कारकः। घातः, घातकः। जनः, जनकः। वधः, वधकः। उत्कोटः, उत्कोटकः। पायः, णयकः। सिद्धिग्रहणं भिन्नकर्तृकत्वान्मङ्गलार्थम्।।८५६।

**[दु०टी०]**

सिद्धिः। ञ् च ण् च **ञ्णौ,** तावनुबन्धौ यस्येति विग्रहः। **द्वन्द्वाद् यत् परं तल्लभते प्रत्येकमभिसम्बन्धम्** (हैमपरि० १३७) इत्याह-ञानुबन्ध इत्यादि। आख्याते तु णानुबन्धे गुणप्रतिषेधान्न भवति। अथ उपधां प्रति चरितार्थे गुणप्रतिषेधे नाम्यन्तानां वृद्धिः स्यात्, यणि दीर्घविधानादिति। तर्हि 'हन्यते' इति घत्वं तत्वमुपधादीर्घत्वं च प्रसज्येत? सत्यम्, ञानुबन्धसहचरित इह णानुबन्धो गृह्यते। साहचर्यं तु प्रकरणकृतमेवाह –कृत्प्रत्यय इति। इचि धातोरेव कार्यम् अतिदेशोऽपि धातोर्भवतीत्याह– धातोरित्यादि। उपमेयस्य सप्तम्यन्तत्वादुपमानादपि सप्तम्यन्ताद् वतिरित्याह– इचि वेति। **निमित्तादयोऽतिदेशाः** शास्त्रान्तरे निरूपिताः। कार्यातिदेशस्य प्राधान्यादाह– कार्यस्येति। सम्बन्धे षष्ठी कर्तरि वा। सिधेरकर्मकत्वात् कार्येण सिध्यते निष्पद्यते इत्यर्थः। विवक्ष्यमाणे **शास्त्रातिदेशे** वा न कश्चिद् दोष इति। इज्वद्भावे यानि कार्याणि तानि **सुखार्थं** श्लोकेन समुच्चिनोति – अस्योपधाया इत्यादि। इनीचीति निबन्धनादिति। इनि कारिते इचि परे इति विशेषणविशेष्याभावात् केवलम् इजुक्तं कार्यं कथं मानुबन्धानामिचि

वेत्यनेन णञानुबन्धे ह्रस्वो विभाषया भवतीत्यर्थः।

श्लोकार्थक्रमेणोदाहरणं दर्शयति – पा० इत्यादि। ननु परार्थे प्रयुज्यमानः शब्दो वतिमन्तरेण वत्यर्थं गमयति, यथा सिंहो माणवक इत्यादि। एवमिचीव ञानुबन्धे। ञणानुबन्ध इव इचीति न सम्भाव्यते कार्यस्याभावादिति वद्ग्रहणं सर्वसादृश्यार्थम्। यस्याः प्रकृतेर्येन विशेषेण तस्यास्तेनैव यथा स्याद् इत्याविर्भावायेति। यदि पुनः श्रुतत्वाद् यस्य यदुक्तं तस्य तदेव भविष्यतीत्युच्यते, तदा वद्ग्रहणं **सुखार्थं** भवति तथानुबन्धग्रहणं च। न हि कृति ञकारणकारयोः स्थितिरस्तीत्यर्थादनुबन्धोऽवसीयते घञादीनां वुणादीनां च ञकारणकारकरणस्य वैफल्यादिति॥८५६।

**[वि०प०]**

सिद्धि०। कृत्प्रत्यय इति। कथमेतत्– इह कृद्ग्रहणाभावादाख्यातिकेऽपि णानुबन्धे स्यात्? नैवम्, न णकारानुबन्ध इत्यादिना गुणप्रतिषेधात्। अथ दुष्यते इत्यादावुपधायामिच्कार्यविषय–भूतायां गुणप्रतिषेधस्य चरितार्थत्वात्। 'नीयते, चीयते' इत्यादिषु नाम्यन्तस्य वृद्धिः स्यादिति चेत्, तदयुक्तम्। अत्रापि "**नाम्यन्तानां यणायि०**" (३।४।७०) इत्यादिना यणि दीर्घ एवास्ति बाधकः। तर्हि 'हन्यते' इत्यत्र घत्वं तत्वमुपधाया दीर्घत्वं च प्रसज्येतेति। किन्तु 'अशिश्रियत्, अदुद्रुवत्' इत्यादौ चणि वृद्धिरपि स्यादिति? सत्यम्। ञानुबन्धेन कृता सहचरितो णानुबन्धोऽपि कृत्प्रत्ययो गृह्यते इति न दोषः। ञानुबन्धश्च कृत्प्रत्ययो धातोरेव विधातव्य इत्याह — धातोरिति। सर्वातिदेशानां मध्ये कार्यातिदेशस्यैव प्राधान्यम् इत्याह–कार्यस्येति। अत्र इज्वद्भावे सति यावन्ति कार्याणि संभाव्यन्ते तावन्ति **सुखार्थं** श्लोकद्वयेन दर्शयन्नाह–इज्वद्भाव इत्यादि। "**हन्तेर्घः**" इति "**हस्य हन्तेर्घिरिनिचोः**" (३।६।२८) इत्यनेन जनवधोर्ह्रस्वः इति "**अस्योपधायाः**" (३।६।५) इत्यादिना कृतस्य दीर्घस्य "**जनिवध्योश्च**" (३।४।६७) इति ह्रस्व इत्यर्थः। इनीचीति निबन्धनादिति। केवलस्येचः कार्यमतिदिश्यमानं कथमिन्सहितस्यातिदिश्यते इति भावः। पाठ इत्यादि। यथायोग्यं पठनं पठति इत्यादि विग्रहे सर्वत्र भावे कर्तरि च घञ् वुण् च कर्तव्यः ॥८५६।

**[क० च०]**

सिद्धिः। परार्थे प्रयुज्यमानः शब्दो वतिमन्तरेण वत्यर्थं गमयतीति वद्ग्रहणं **सुखार्थम्**। अथ वद्ग्रहणाभावाद् ञ्णानुबन्धस्य कथं नोपमानता ञ्णानुबन्धे यत् कार्यं दृष्टं तदिचि भवतीति स्यात्? सत्यम्, असम्भवात्। अथ घञीन्धेर्वुष् घिणिनोश्चेति ञ्णानुबन्धे कृतं सम्भवति, नैवम्, तदा वुणादीनामनुबन्धकरणमनर्थकमेव स्यात्, तस्मान्न ञ्णानुबन्धस्योपमानता ञणकारवान् प्रत्ययः स्थितिमात्रास्तीत्यनुबन्धो गम्यते, यदनुबन्धग्रहणं तत् **सुखार्थम्**। अथ 'यज्ञः, हरणम्' इत्यादौ स्थितिमानस्तीति चेत्, न। अन्तरङ्गे इज्वत्कार्ये कर्तव्ये बहिरङ्गो णकारोऽसिद्धः '**असिद्धं बहिरङ्गमन्तरङ्गे**' (का० परि० ३३) इति न्यायात्।

**पञ्जिका** – उपधायामिच्कार्यविषयभूतायामिति। अथ किमिह इच्-कार्यम् इचि

दृष्टम्, इज्-लिखितं वा ? **तत्राद्ये** अबोधीत्यत्र इचि दृष्टस्य कार्यस्यातिदेशे गुणश्च स्यात्, कथमिच्कार्याविषयभूतत्वम् । **द्वितीये** तु 'उत्कोटः' इत्यादौ गुणो न स्यात् , न हि कुटादीनां गुण इज्लिखित इति, इनिचट्प्रत्ययेभ्योऽन्येषु प्रत्ययेषु कुटादीनां गुणो न स्यात्। **अर्थाद्** इनिचट्सु गुण इत्यर्थादिवेचि गुणत्वमिति न इज्लिखितो गुणः । तथा 'भेदकः' इत्यत्र वुणो णकारस्य **"न णकारानुबन्ध०"** (३।५।७) इत्यादिना अगुणत्वे गुणो न स्यात् , इज्लिखितकार्यस्याभावात् ? सत्यम् । इज्लिखितमेवातिदिश्यते, तर्हि कुटादीनां कथं **गुणश्चेद्** उच्यते । अयमपि इज्लिखितः । तथाहि कुटादेरनीत्यादौ **प्रसज्यप्रतिषेधः**, तस्य च क्रियासम्बन्धः, अतो वाक्यार्थद्वयं सामान्येन कुटादिरगुणो भवतीत्येकं **वाक्यम्** । इनिचट्सु अगुणो न भवतीति द्वितीयम् । अथ इज्लिखितमिदं तर्हि भेदक इत्यादौ कथं गुणश्चेदुच्यते – चेक्रीयितं तावदाख्यातिकमेव, तत्साहचर्याण्णकारानुबन्धोऽप्याख्यातिक एव गृह्यते, अतः कृति णानुबन्धे तस्याप्रसङ्गः ।

यद् वा तस्मादिचि दृष्टमेव कार्यमतिदिश्यते, तथापि न दोषो (दृश्यते) दुष्यते इत्यत्र **"सणनिदः"** (३।२।२५) इत्यादौ णकारानुबन्धबलान्नाम्युपधस्य शिडन्तस्याख्याते णकारानुबन्धमाश्रित्यागुणकार्यमेव प्रवर्तते न इज्वत् कार्यमिति ज्ञापकं भविष्यति, अन्यथा णकारो व्यर्थः स्यात् , तेन विनापि गुणस्य **सिद्धिः** । **अन्ये तु** 'गृह्यते' इत्यत्र इच्कार्यविषयभूतत्वं चरितार्थं 'दुष्यते' इत्यत्रापि विषयीकरोतीत्याहुः । अथ **"सिजाशिषोश्चात्मने"** (३।५।१०) इत्यत्रात्मनेग्रहणं गुणबाधिका वृद्धिरिति **ज्ञापनार्थमित्युक्तं** तत् कथमिह यणि अगुणबाधिका वृद्धिरिति ? सत्यम् । या हि नामिश्रुत्या वृद्धिः सैव गुणबाधिकेति तत्रैवोक्तम् । इह तु **कार्यातिदेशपक्षेऽ**नेनैव विधीयते । न चात्र नामिश्रुतिरस्ति केवलमर्थादायात इत्यदोषः ।तर्हि 'आदीध्यकः, आवेव्यकः' इत्यत्र न कथं वृद्धिः, स्थितौ गुणबाधिका वृद्धिरिति न भवति? सत्यम् , कार्यातिदेशपक्षेऽपि यस्य यदुक्तं तस्य तदेव श्रुतत्वाद् भवति, न हि इचि परे दीधीवेव्योर्गुणवृद्धिरुक्ता येनातिदिश्यते इति, तर्हि दीधीवेव्योरित्यत्र 'आदीध्यकः' इति पदे गुणबाधिका वृद्धिरिति वृद्धेरभावाद् यत्वमिति कथमुक्तं **टीकायाम्** ? सत्यम् । **शास्त्रातिदेशपक्षे** नामिश्रुतिरस्ति, यतो ञानुबन्धे कृतीति ञानुबन्धः कृदेव कथं निश्चितं धातुरपि ञानुबन्धः सम्भवति, यथा अहन् कर्ता । अत्र ञानुबन्धे कृधातौ अहन्निति हन्धातोरुपधाया दीर्घः कथं न स्यात्, नैवम् । इच्प्रत्ययेन साहचर्याद् ञानुबन्धोऽपि प्रत्यय एव न धातुरिति । केवलस्य इच इति यद्यपि घटतेरिनन्तस्य वुणि सति इचि वेत्यस्य विषयः, तथापि न भवतीत्यर्थः, किन्तु **"मानुबन्धानाम्"**

(३।४।६५) इत्यनेन ह्रस्व एवेति घटक इत्येव भवति सामान्यातिदेशे विशेषस्यानतिदेश इति भाव: ।

येनान्वयसम्बन्ध इति हैम:। अथ **उच्चारणार्थ** इति कथमुक्तं वुण: स्थाने वुञिति कृते कर्तर्यनञ् वुञीति निषेध:। 'पाचको देवदत्त:' इत्यत्रोक्तार्थत्वान्न भवति। यदा इनन्ताद् वुण् तदा **दूषणम्।** यथा पाचक: ओदनस्य भृत्येनेत्यत्र षष्ठी स्यात्? सत्यम्। **स्वमते** न तत् सूत्रम् । यद् वा अङ् तावत् कर्तृभिन्नस्थाने सम्भवति, तत्साहचर्याद् वुञपि अकर्तरि विहित एव गृह्यते न कर्तरि।।८५६।

**[समीक्षा]**

वृत्तिकार दुर्गसिंह ने इज्वद्भाव से हाने वाले कार्यों का दो श्लोकों में इस प्रकार संग्रह किया है — १. उपधादीर्घ, २. नामिसंज्ञक वर्णों की वृद्धि, ३. हन् धातु में घकारादेश, ४. जन-वध धातुओं का ह्रस्व, ५. कुटादि धातुओं में गुणादेश, ६. आकारान्त धातुओं को 'आयि' आदेश तथा ७. मानुबन्ध धातुओं में वैकल्पिक ह्रस्वादेश।

इन कार्यों के विधायक सूत्र हैं — १. अस्योपधाया दीर्घ० (३।६।५) । २. अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु (३।६।५) । ३. हस्य हन्तेर्घिरिनिचो: (३।६।२८)। ४. जनिवध्योश्च (३।४।६७) । ५. कुटादेरनिनिचट्सु (३।५।२७) । ६. आयिरिच्यादन्तानाम् (३।६।२०) । ७. मानुबन्धानां ह्रस्व:, इचि वा (३।४।६५, ६६)।

पाणिनीय सूत्र — १. अत उपधाया: (७।२।११६) । २. अचो ञ्णिति (७।२।११५)। ३. हो हन्तेर्ञ्णिन्नेषु (७।३।५४) । ४. जनिवध्योश्च (७।३।३५) ५. गाङ्कुटादिभ्योऽञ्णिन् ङित्, विङति च (अ० १।२।१:१।५)। ६. आतो युक् चिण्कृतो: (७।३।३३) । ७. मितां ह्रस्व:, चिण्णमुलोर्दीर्घोऽन्यतरस्याम् (६।४।९२, ९३) ।

इस प्रकार 'ञ् - ण्' अनुबन्धों वाले प्रत्ययों के परवर्ती होने पर दोनों ही व्याकरणों में दीर्घ-वृद्धि आदि कार्यों का विधान किया गया है । कातन्त्रकार ने कार्यसौविध्य की दृष्टि से अतिदेश का विधान किया है ।

**[विशेष वचन]**

१. सिद्धिग्रहणं भिन्नकर्तृकत्वान्मङ्गलार्थम् (दु० वृ०) ।

२. साहचर्यं तु प्रकरणकृतमेव (दु० टी०) ।

३. निमित्तादयोऽतिदेशा: शास्त्रान्तरे निरूपिता: । कार्यातिदेशस्य प्राधान्यात् (दु० टी०) ।

४. वद्ग्रहणं सर्वसादृश्यार्थम् । .... वद्ग्रहणं सुखार्थम् (दु० टी०) ।

५. सर्वातिदेशानां मध्ये कार्यातिदेशस्यैव प्राधान्यम् (वि० प०) ।

**[रूपसिद्धि]**

१. **पाठः**। पठ् + घञ् + सि । पठनम् । 'पठ व्यक्तायां वाचि' (१।१११) धातु से "भावे" (४।५।३) द्वारा घञ् प्रत्यय, 'घ् – ञ्' अनुबन्धों का प्रयोगाभाव, प्रकृत सूत्र से इज्वद्भाव, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधादीर्घ, लिङ्गसञ्ज्ञा, सि–प्रत्यय तथा "रेफसोर्विसर्जनीयः" (२।३।६३) से सकार को विसर्गादेश।

२. **पाठकः**। पठ् + वुण् – अक + सि । 'पठ' धातु से "वुण्तृचौ" (४।२।४७) सूत्र द्वारा 'वुण्' प्रत्यय, 'ण्' अनुबन्ध का प्रयोगाभाव, उपधादीर्घ, "युवुझामनाकान्ताः" (४।६।५४) से 'वु' को 'अक' आदेश, लिङ्गसंज्ञा, सि–प्रत्यय तथा विसर्गादेश ।

३. **कारः**। कृ + घञ् + सि । 'डु कृञ् करणे' (७।७) धातु से घञ् प्रत्यय, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से ऋकार को वृद्धि आर्, लिङ्गसंज्ञा, सिप्रत्यय तथा विसर्गादेश ।

४. **कारकः**। कृ + वुण् – अक + सि । 'कृ' धातु से 'वुण्' प्रत्यय, इज्वद्भाव, 'वु' को 'अक' आदेश, ऋकार को वृद्धि, लिङ्गसंज्ञा, सि–प्रत्यय तथा विसर्गादेश ।

५. **घातः**। हन् + घञ् + सि । 'हन हिंसागत्योः' (२।४) धातु से घञ् प्रत्यय, इज्वद्भाव, उपधादीर्घ, "हस्य हन्तेर्घिरिनिचोः" (३।६।२८) से हकार को घकार, "हन्तेस्तः" (३।६।२७) से नकार को तकार, लिङ्गसञ्ज्ञा, सि–प्रत्यय तथा विसर्गादेश ।

६. **घातकः**। हन् + वुण् – अक + सि । 'हन्' धातु से 'वुण्' प्रत्यय, इज्वद्भाव, उपधावृद्धि, ह् को घ् , न् को त् , 'वु' को 'अक' आदेश, लिङ्गसंज्ञा, सि–प्रत्यय तथा विसर्गादेश ।

७. **जनः**। जन् + घञ् + सि । 'जनी प्रादुर्भावे' (३।९४) धातु से 'घञ्' प्रत्यय, इज्वद्भाव, उपधादीर्घ, "जनिवध्योश्च" (३।४।६७) से ह्रस्व तथा विभक्तिकार्य ।

८. **जनकः**। जन् + वुण् + सि । 'जनी' धातु से 'वुण्' प्रत्यय, इज्वद्भाव, उपधादीर्घ, ह्रस्व, 'वु' को 'अक' तथा विभक्तिकार्य ।

९. **वधः**। वध् + घञ् + सि । 'वध संयमने' (९।१५) से घञ् प्रत्यय, इज्वद्भाव, उपधादीर्घ, ह्रस्व तथा विभक्तिकार्य ।

१०. **वधकः**। वध् + वुण् + सि । 'वध' धातु से 'वुण्' प्रत्यय, इज्वद्भाव, उपधादीर्घ, ह्रस्व, 'वु' को 'अक' आदेश तथा विभक्तिकार्य ।

११. **उत्कोटः**। उद् + कुट + घञ् + सि । 'उद्' उपसर्गपूर्वक 'कुट कौटिल्ये' (५।८३) धातु से 'घञ्' प्रत्यय, इज्वद्भाव, "कुटादेरनिनिचट्सु" (३।५।२७) से उपधासंज्ञक उकार को गुण ओकार तथा विभक्तिकार्य ।

१२. **उत्कोटकः**। उद् + कुट + वुण् + सि । 'उद्' उपसर्गपूर्वक 'कुट्' धातु से 'वुण्' प्रत्यय, इज्वद्भाव, गुण, 'वु' को 'अक' आदेश तथा विभक्तिकार्य ।

१३. **पायः**। पा + घञ् + सि । 'पा पाने' (१।२६४) धातु से 'घञ्' प्रत्यय,

इज्वद्भाव, "आयिरिच्यादन्तानाम्" (३।६।२०) से आकार को 'आयि' आदेश तथा विभक्तिकार्य ।

१४. **पायकः**। पा + वुण् + सि । 'पा पाने' (१।२६४) से 'वुण्' प्रत्यय, इज्वद्भाव, 'आयि' आदेश, 'वु' को 'अक' आदेश तथा विभक्तिकार्य ।।८५६।

## ८५७. हन्तेस्तः [४।१।२]

**[सूत्रार्थ]**

'ञ् - ण्' अनुबन्ध वाले कृत्प्रत्ययों के परवर्ती होने पर 'हन्' धातुघटित नकार को तकारादेश होता है ।।८५७।

**[दु० वृ०]**

हन्तेर्नकारस्य तकारो भवति ञानुबन्धे णानुबन्धे च कृत्-प्रत्यये परे । घातः, घातकः । कथं भ्रौणहत्यमिति ? **रूढितः सिद्धिः** ।।८५७।

**[दु० टी०]**

हन्ते० । तिप् **सुखार्थ** एव। कथमिति "**क्विब् ब्रह्मभ्रूणवृत्रेषु**" (४।३।८३) इति क्विप् , तस्य भाव इति, "**यण् च प्रकीर्तितः**" (२।६।१४) इति यण्। कृति णकारानुबन्धे यत् कार्यमुक्तं तद्धिते तत् कथमित्याह-**रूढितः** सिद्धिरिति। **सञ्ज्ञाशब्दा हि तद्धिता लोकतोऽवसीयन्ते**।।८५७।

**[वि० प०]**

हन्तेः । तकारोऽयमेकवर्णोऽर्थादन्ते प्रवर्तते इत्याह – हन्तेर्नकारस्येति । कथमित्यादि। भ्रूणं हतवान् इति "**क्विब् ब्रह्मभ्रूणवृत्रेषु**" (४।३।८३) इति क्विप् । भ्रूणघ्नो भाव इति **यण् तद्धितः** ।।८५७।

**[क० च०]**

हन्तेः। श्तिप्निर्देशः **स्वरूपग्राहकः**, तेन 'जङ्घानकः' इत्येव भवतीति **वररुचिः**। स्वमते **सुखार्थः**, भाषायां लुगन्तचेक्रीयितानादरात् 'जङ्घानकः' इति "**प्रत्ययलुकाञ्चानाम्**" (४।१।४) इति न दीर्घप्रतिषेधः। नञा निर्दिष्टमिति **वररुचिः**। तन्न, निर्निमित्ते चेक्रीयितस्य लोपात् कुतः प्रत्यये लुग् येषामेकदेशस्येति घटते। **पञ्जिका**–तकारोऽयमिति। अर्थाद् युक्तित इत्यर्थः। युक्तिः पुनरियं हन्तिरित्यकरणाद् हन्धातोस्तिर्भवतीत्यर्थः। यद् वा **'तड आघाते'** (९।३०) इति निर्देशादित्यर्थः।।८५७।

**[समीक्षा]**

'घातः, घातकः' इत्यादि शब्दरूपों के सिद्ध्यर्थ हन्-धातुघटित नकार के स्थान में तकारादेश की आवश्यकता होती है, इसकी पूर्ति दोनों ही शाब्दिकाचार्यों ने की है। पाणिनि का सूत्र है — "हनस्तोऽचिण्णलोः" (अ० ७।३।३२) । कातन्त्रव्याकरण में

यह विधान कृत्प्रकरण में किया गया है, अतः पाणिनीय व्याकरण की तरह यहाँ 'चिण् – णमुल्' प्रत्ययों के निषेध की आवश्यकता नहीं होती है । 'भ्रौणहत्यम्' में रूढि या लोकाभिधान के बल पर तकारादेश का विधान स्वीकार किया जाता है ।

[विशेष वचन]

१. कथं भ्रौणहत्यमिति ? रूढितः सिद्धिः (दु० वृ०) ।

२. तिप् सुखार्थ एव (दु० टी०) ।

३. सञ्ज्ञाशब्दा हि तद्धिता लोकतोऽवसीयन्ते (दु० टी०) ।

४. श्तिप्निर्देशः स्वरूपग्राहकस्तेन 'जङ्घानकः' इत्येव भवतीति वररुचिः (क० च०) ।

५. स्वमते सुखार्थः, भाषायां लुगन्तचेक्रीयितानादरात् (क० च०) ।

६. युक्तिः पुनरियं हन्तिरित्यकरणाद् हन्धातोस्तिर्भवतीत्यर्थः (क० च०) ।

[रूपसिद्धि]

१. **घातः**। हन् + घञ् + सि । 'हन हिंसागत्योः' (२।४) धातु से "भावे" (४।५।३) सूत्र द्वारा 'घञ्' प्रत्यय, 'घ् – ञ्' अनुबन्धों का प्रयोगाभाव, इज्वद्भाव, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधादीर्घ, "हस्य हन्तेर्घिरिनिचोः" (३।६।२८) से हकार को घकार, "हन्तेस्तः" (३।६।२७) से नकार को तकार, 'घात' शब्द की लिङ्गसञ्ज्ञा, सि-प्रत्यय तथा "रेफसोर्विसर्जनीयः" (२।३।६३) से सकार को विसर्गादेश ।

२. **घातकः**। हन् + वुण् – अक + सि। 'हन्' धातु से "वुण्तृचौ" (४।२।४७) सूत्र द्वारा 'वुण्' प्रत्यय, 'ण्' अनुबन्ध का प्रयोगाभाव, इज्वद्भाव, उपधावृद्धि, हकार को घकार, नकार को तकार, "युवुझामनाकान्ताः" (४।६।५४) से 'वु' को 'अक' आदेश, लिङ्गसंज्ञा, सि-प्रत्यय तथा विसर्गादेश ॥८५७।

## ८५८. न सेटोऽमन्तस्यावमिकमिचमाम् [४।१।३]

[सूत्रार्थ]

धातुसम्बन्धी इच् प्रत्यय के प[रे] होने पर किए जाने वाले कार्य सेट् अम्-भागान्त को नहीं होते हैं 'वम् - क[म्] - चम्' धातुओं को छोड़कर ॥८५८।

[दु० वृ०]

इज्मात्रमिह स्मर्यते । [से]टोऽमन्तस्य वमिकमिचमिवर्जितस्य इचि कृतं कार्यन्न भवति। अशमि, अतमि [...]ानुबन्धे कृतीज्वद्भावाच्च – शमः, शमकः, शमी । तमः, तमकः, तमी । [से]ट् इति किम् ? अयामि, यामः, यामकः । अवमिकमिचमामिति किम् ? अवामि, अ[का]मि, **अभिधानादाङ्पूर्वश्चमिः** – आचामि । वामः, कामः,

आचामः । कथम् आमः ? **'अम रोगे'** (१।१४०) इति चौरादिके इनि दीर्घः । वौ श्रमेर्नञा निर्दिष्टस्यानित्यत्वाद् विश्रामः । कथम् उद्यमः ? **'यम च'** (९।५५) इति चुरादौ मानुबन्धः । उपरम इति च दृश्यते ॥८५८।

[दु० टी०]

न सेटः । सहेटा वर्तते इति **सेट्** । यद्यपि सहशब्दो विद्यमानार्थस्तथापीटोपलक्षिताः सेटोऽभिधीयन्ते, येषां **''यमिरमिनमिगमेर्मात्''** (३।७।२६) इति इट्प्रतिषेधोऽस्ति तेऽनिटः, घ्यणादिषु चेटोऽसम्भवात् । मकारोऽन्तो यस्येति विग्रहेऽकारोपधानामेव प्रतिषेधो यस्मादिकारोपधानामेव इच्कार्यं नास्तीति **मन्दमतिबोधनार्थ**मेवामन्तस्येति **कैश्चित्** पठ्यते । कमेर्यदा इनङ् क्रियते तदास्य प्रतिषेध इत्याह **वक्तव्यवादी**– कामिनङ् धात्वन्तरमिति न्याय्यः **पक्षः** । **अभिधानादाङ्पूर्वश्च**मिरिति 'चमको विचमकः' इत्यादिषु प्रतिषेध एव । **केचिद्** आचम इति पठन्ति **वाक्यकारस्य** सम्मतम् , **सूत्रकारस्य** सम्मतमविशेषेण लक्ष्यते। **अन्ये** तु इज्वद् इत्यनुवर्तयन्ति तेषामिचि दीर्घ एव 'अशामि, अतामि' इत्यादि । ञानुबन्धप्रतिषेधे इञ्मात्रस्मरणमुक्तमिति तु न **सूत्रकारसम्मतम्** , नैतल्लक्षणं **व्याकरणान्तरे** दृश्यते । कथमित्यादि । आमनम् **आमः**, स्वरान्तत्वादल् इत्याह–अम रोगे इत्यादि । **हेतुविवक्षया** वा अमेर्भौवादिकादपि । वौ श्रमेरित्यादि । 'अविश्रमं यावदिदं शरीरम्' इति । तस्माद् **वाक्यकार** आह — वौ श्रमेर्विभाषेति । कथम् उद्यम इति । मानुबन्धत्वाद् ह्रस्व इति शेषः। भौवादिकस्य वा **'अड उद्यमे'** (१।१२७) इति दर्शनान्न दीर्घः । उपरम इति। **'यम उपरमे'** (१।१५८) इति निर्देशाच्चेति । अन्तग्रहणं **स्पष्टार्थम्** ॥८५८।

[वि०प०]

न सेटः । इटा सह वर्तते इति **सेट्** । इह ञ्णानुबन्धेषु घञादिषु साक्षादिटोऽसम्भवाद् यस्य **''यमिरमिनमिगमेर्मात्''** (३।७।२६) इत्यनेन इट्प्रतिषेधो नास्ति, स इह इटोपलक्षितं सेडुच्यते । अशमि, अतमीति । **''भावकर्मणोश्च''** (३।२।३०) इतीचि कृते **''अस्योपधायाः''** (३।६।५) इत्यादिना दीर्घः प्राप्तो न भवति । यद्यपि इज्वदिति समुदायोऽनुवर्तते, तथाप्यधिकारस्येष्टत्वादेकदेशे इजेव स्मर्यते इत्युक्तम् । अतः इचि कृतस्य कार्यस्य प्रतिषिद्धत्वात् तद्वद्भूते कृति ञ्णानुबन्धेऽपि चैवं प्रतिषेध इत्याह – ञ्णानुबन्धे कृतीज्वद्भावाच्चेति। शमी, तमीति – **''शमामष्टानां घिणिन्''** (४।४।२१) अकामीति। **''आयादयोऽसार्वधातुके वा''** इति वचनाद् यदा कमेरिनङ् न क्रियते तदैवमुदाहरणं **वक्तव्यपक्षे** संग्रहपक्षे तु कामिङ्धात्वन्तरादन्य एव कमिर्धातुरिति । **अभिधानादाङ्पूर्वश्च**मिरिति। 'चमकः, विचमकः' इत्यादौ दीर्घप्रतिषेध एव । एतद् **वृत्तिकारस्य** मतमिति । **सूत्रकारस्य** तु मतं वर्णयन्ति– अविशेषेणैव प्रतिषेध इति। अन्यथा हि सूत्रे आचमामिति पठेदिति मन्यन्ते। कथमित्यादि। आमनम् **आमः**, स्वरान्तत्वादल्। वौ श्रमेरिति। प्रतिषेधोऽपि दृश्यते-

**अविश्रमं यावदिदं शरीरं पतत्यवश्यं परिणामदुर्वहम् ।**

**किमौषधं पृच्छसि मूढ! दुर्मते ! निरामयं कृष्णरसायनं पिब ।।**

कथम् उद्यम इति । चुरादित्वादिन् । मानुबन्धानां ह्रस्वः, पूर्ववद् अल् प्रत्ययश्चेत्यर्थः। उपरम इति चेति । **यम उपरमे** (१।१५८) इति निर्देशादित्यर्थः ।।८५८।

**[क० च०]**

न सेटो० । अथ **सहशब्दो** विद्यमानवचनस्तुल्यप्रतियोगिवचनश्च। यथा **सहभर्तृका गर्भिणी,** भर्तरि विद्यमाने गर्भिणीत्यर्थः। **सपुत्रकः** पिता भुङ्क्ते। पिता भुङ्क्ते पुत्रश्च । अत्र तु इचि परे उभयार्थोऽपि सम्भवति, तत् कथं सेट्त्वमिति? सत्यम् , असम्भवादन्यस्मिन् प्रत्यये सेट्त्वात् सेट्त्वमुच्यते? अथ तथापि यत् किञ्चित् पदे सेट्त्वात् सेट्त्वमुच्यते अथवा यावत्पदे सेट्त्वात् सेट्त्वमुच्यते? आद्यश्चेत् सेड्ग्रहणस्य व्यावृत्तिरेव नास्ति। स्त्रादिनियमेन परोक्षायां सर्वेषामिटः सम्भवात्। द्वितीयश्चेद् अशमीति दुष्टम्, शान्त इत्यत्रासेट्त्वात् सर्वथा सेट्त्वं नास्ति तद् यमधातुरपि सेडिति? सत्यम्। अनेन मकारान्तद्वारा विधानात् श्रुतत्वाद् यत्र मान्तद्वारा इट्प्रतिषेधस्तत्रैव सेड्ग्रहणस्य व्यावृत्तिरिति, तच्च यमिरमीत्यादिनैव न्यायात्। मकारोऽन्तो यस्यासौ **मान्तः,** न तु अमन्तो यस्येति प्रयोजनाभावात्। तर्हि अतेमीदित्यादौ मान्तत्वादनेनैव गुणनिषेधः कथन्न स्यात्, अमन्तपक्षे न भवति तिमेरिमन्तत्वात्? सत्यम्, अत्र इज्लिखितकार्यस्यैव निषेधात्। न च इज्लिखितो गुणः, यद् वा वमादीनामस्योपधाया दीर्घत्वे प्राप्ते निषेधः। विधानपि तस्यैवेति यादृग्जातीयस्येति न्यायात् साहचर्याद् वा।

ननु **'पदार्थः पदार्थेनान्वेति न तु पदैकदेशेन'** इति इज्वदिति समुदायस्यानुवृत्तौ 'शमः, शमकः' इत्येवोदाहरणं युक्तम्, कथम् अशमीत्याह – इञ्मात्रमिहेति। कारणमत्र सेडमन्तस्येति सिद्धे यद् भिन्नपदं तदधिकृतस्य इज्वदित्यस्यापि पदभेदोपलक्षणार्थम्। **पञ्जिकायां** तु इष्टत्वाद् इच्छाविषयीकृतत्वादिति बोध्यम् , इच्छाविषये कारणमिदमेवेति। इचि प्राप्तस्य कार्यस्य निषेधाद् ञ्णानुबन्धे कथं प्रतिषेध इत्याह–ञ्णानुबन्धेत्यादि। **चकार एवार्थे** इज्वद्भावादेवेत्यर्थः। **अयमर्थः** – ञ्णानुबन्धस्य इचि कृतं कार्यमतिदिश्यते। तत्र यदि इच्येव निषिद्धम् , तदा मूल एव निहितः कुठारः इति कुतस्तद्भूते तद्वति प्राप्तिरिति। **पञ्जिका** अविश्रमम् इति-

**अविश्रमं यावदिदं शरीरं पततत्यवश्यं परिणामदुर्वहम् ।**
**किमौषधं पृच्छसि मूढ ! दुर्मते ! निरामयं कृष्णरसायनं पिब ।।**

इति पूर्णोऽयं श्लोकः ।।८५८।

**[समीक्षा]**

'अशमि, अतमि, शमकः, तमकः, शमः, दमः' आदि के सिद्ध्यर्थ उपधावृद्धि

के निषेध की आवश्यकता होती है, जिसे दोनों व्याकरणों में निर्दिष्ट किया गया है। पाणिनि का सूत्र है – "नोदात्तोपदेशस्य मान्तस्यानाचमेः" (अ० ७।३।३४)। अभिधानबल से आङ्-उपसर्गपूर्वक ही चम धातु से उपधावृद्धि होती है – आचामि, आचामः। नञ्निर्दिष्ट विधि के अनित्य होने से 'विश्रामः' में उपधावृद्धि का निषेध नहीं होता तथा 'उपरमः' में निषेध उपपन्न होता है।

[विशेष वचन]

१. अभिधानाद् आङ्पूर्वश्चमिः। आचामि, वामः, कामः, आचामः (दु० वृ०)।

२. वौ श्रमेर्नञा निर्दिष्टस्यानित्यत्वाद् विश्रामः (दु० वृ०)।

३. सहशब्दो विद्यमानार्थः (दु० टी०)।

४. इच्कार्यं नास्तीति मन्दमतिबोधनार्थमेवामन्तस्येति कैश्चित् पठ्यते (दु०टी०)।

५. वक्तव्यवादी कामिनङ् धात्वन्तरमिति न्याय्यः पक्षः (दु० टी०)।

६. न सूत्रकारसम्मतम्, नैतल्लक्षणं व्याकरणान्तरे दृश्यते (दु० टी०)।

७. अन्तग्रहणं स्पष्टार्थम् (दु० टी०)।

८. सहशब्दो विद्यमानवचनस्तुल्यप्रतियोगिवचनश्च (क० च०)।

[रूपसिद्धि]

१. **अशमि**। अट् + शम् + अद्यतनी – इच् + त। 'शमु' (३।४२) धातु से अद्यतनीविभक्तिसंज्ञक प्रथम पुरुष-एकवचन 'त' प्रत्यय, "अड् धात्वादिर्ह्यस्तन्यद्यतनीक्रियातिपत्तिषु" (३।८।१६) से धातुपूर्व अडागम, इच् प्रत्यय, "अस्योपधाया दीर्घो०" (३।६।५) सूत्र से प्राप्त दीर्घ का प्रकृत सूत्र से निषेध तथा "इचस्तलोपः" (३।४।३२) से 'त' प्रत्यय का लोप।

२. **अतमि**। अट् + तम् + अद्यतनी – इच्। 'तनु विस्तारे' (७।१) धातु से अद्यतनीविभक्तिसंज्ञक प्रथमपुरुष–एकवचन 'त' प्रत्यय, धातुपूर्व अडागम, इच् प्रत्यय, प्राप्त दीर्घ का प्रकृत सूत्र से निषेध तथा 'त' प्रत्यय का लोप ॥८५८।

## ८५९. प्रत्ययलुकाञ्चानाम् [४।१।४]

[सूत्रार्थ]

जिस प्रत्यय को निमित्त मानकर धातुघटित नकाररूप एकदेश से यदि किसी अन्य एकदेश का लुक् हुआ हो तो उसी प्रत्यय के परवर्ती रहने पर प्राप्त होने वाला धातुसम्बन्धी कार्य नहीं होता है ॥८५९।

[दु० वृ०]

प्रत्यये लुग् येषां धातूनामेकदेशस्य ते **प्रत्ययलुकः**, अर्थाद् अनाम् इत्यनकारकाणां प्रत्ययलुकां धातूनां नलोपवर्जितानां यत् प्राप्तं तन्न भवति, अर्थात् तस्मिन्नेव प्रत्यये परे। समिधिता, समिधकः। अदृशदि, दृशदकः (यिन्)। नोनुवः, मरीमृजः। तस्य लुगचि, अस्योपधाया दीर्घो गुणश्च न स्यात्। प्रत्ययस्य लुग् येभ्य इत्युक्ते–भेद्यात्। वेत्तीति इन्ननोर्लुकि प्रतिषेधः स्यात्। अनामिति किम्? घञीन्धेः–एधः। उन्देर्मनि–ओद्म। रञ्जेः–रागः। कथं कुञ्चेर्निकुचितम् इति? सन्निपातलक्षणत्वादगुणस्य ॥८५९।

[दु० टी०]

प्रत्यय०। प्रत्यय इत्यादि। **परसप्तमीयम्** , लुगित्यदर्शनमिहोच्यते, न तु तस्य लुगचीत्यस्य लुक्शब्दचोदितस्य ग्रहणम्। अनाम् इति प्रतिषेधसामर्थ्याद् बहुवचनाच्चेति। येषामित्यवयवावयविसम्बन्धे षष्ठी, प्रतिषेधसामर्थ्यादसम्भवाच्च। धातूनामिति प्रकरणादधिकाराश्रयणाच्च। एकदेशस्येत्यपेक्षायामपि भिन्नाधिकरणो बहुव्रीहिर**भिधानात्।** अनामिति व्यक्तिभेदे बहुवचनम्। येषां धातूनामेकदेशा नकारभिन्नाः लुप्यन्ते तेषां यत् प्राप्तं तन्न भवतीत्यर्थः। नोनुवः इति। तमेवाच्प्रत्ययमाश्रित्य यथा गुणो न भवति तथोवादेशोऽपि न भवति। तथा चिनोतेश्चेक्रीयितलुगन्तादचि 'चेच्यः' इति यत्वं न भवतीति न चोद्यम्। प्रतिषेधवशेन हि तयोः प्राप्तिरिति।

पञ्चम्यन्यपदार्थे दूषणमाह – भेद्यादित्यादि । इनो लोपे **'निमित्ताभावे नैमित्तिकस्याप्यभावः'** (का० परि० २७) इति निवृत्तो गुणः पुनर्न स्यात् । स्वरादेशः परनिमित्तकः पूर्वविधिं प्रति स्थानिवद्भावेऽपीन इति नित्यत्वाभ्युपगमे तु भेद्यादिति पदं नित्यं स्थितम् , तत्र कारितलोपो भाव्यते । ततो गुण इति कुतः- इयं चिन्ता कारितोत्पत्तावेव इति । एवमनो लुक्यपि वेत्तीति । कथमित्यादि । **सन्निपातलक्षणो नलोपविधिरनिमित्तं तद्विघातस्येत्यर्थः**। ननु नोनुवादयः किमित्युदाह्रियन्ते ? अस्य च लोपे कृते सति स्वरादेशस्य स्थानिवद्भावाद् गुणावयवोऽप्यगुण इति सिध्यतीष्टम् । तदसत् , परत्वात् तस्य लुगचीति समस्तस्य **चेक्रीयितस्य** लुका भाव्यम् । कथं देद्य इति दीङो यत्वापवादो दीङोऽन्तो यकारः स्वरादावगुण इति न भवति ? सत्यम् । तत्र हि ङानुबन्धः स्वरूपग्राहको भविष्यति **चेक्रीयितार्थ**संवलितत्वादर्थान्तरं वा । न विद्यते गुणो यस्मिन्नसाव**गुणः** इति व्युत्पत्तिमाश्रित्य 'यायाः' इत्यत्र 'जङ्गमः' इत्यत्र च तस्य लुगचीति कृते **''आलोपोऽसार्वधातुके''** (३।४।२७) इति आलोपो **''गमहन०''** (३।६।४३) इत्यादिनोपधालोपश्च न भवत्यस्य प्रतिषेधस्य विषयत्वात् ॥८५९।

[वि० प०]

प्रत्यय० । प्रत्यय इति निमित्तसप्तमीयम् । लुगित्यदर्शनमात्रमुच्यते, न पुनर्लुक्शब्दोच्चारितस्य **''तस्य लुगचि''** इत्यस्यैव ग्रहणम् , अनामिति प्रतिषेधात्। अन्यथा

''**घञीन्धेः**'' (४।१।६४) इत्यादिना नकारस्य लोप एवेति। अस्याविषयत्वादनर्थकः प्रतिषेधः स्यादिति। येषामिति अवयवावयविसम्बन्धे षष्ठीयं प्रतिषेधसामर्थ्यात्। अन्यथा समुदायस्य लोपे कस्य किं प्राप्नोति येनार्थवानयं प्रतिषेधः स्यात्। न च समुदायलोपार्थं सूत्रमस्तीत्याह—अर्थादिति। अवयवार्थं विभज्य समुदायार्थमाह–प्रत्यय इत्यादि। **धातवः** पुनरिह प्रकरणादवगन्तव्याः। अर्थात् तस्मिन्नेवेति। यस्मिन् प्रत्यये धात्वेकदेशो लुप्तस्तस्मिन्नित्यर्थः। यिन्निति समिधमिच्छति, दृशदमिच्छतीति। ''**नाम्न आत्मेच्छायां यिन्, यस्याननि**'' (३।२।५; ६।४८) इति यलोपः। 'नोनुवः' इति। अत्र यथा अच्-प्रत्यये लुप्तचेक्रीयिते गुणः प्राप्तो न भवति, तथा ''**स्वरादाविवर्णोवर्णान्तस्य**'' (३।४।५५) इत्यादिना उवादेशोऽपि मा भूदिति न देश्यम्। प्रतिषेधवशेन तस्य प्राप्तिरिति।

प्रत्ययस्येति । भिदेर्हेताविन् । नाम्युपधलक्षणो गुणः, आशिषि कारितलोपः। इह '**निमित्ताभावे नैमित्तिकस्याप्यभावः**' (का० परि० २७) इति निवृत्तो गुणः पुनर्न स्याद् इनः स्थानिवद्भावेऽपि पञ्चम्यन्तान्यपदार्थेऽस्य प्रतिषेधस्य विषयत्वात्। **सिद्धान्ते** तु इनो धात्वेकदेशस्य लुप्तत्वात् कथमिह गुण इति चेत् , नैवम्। नहि यस्मिन् धात्वेकदेशो लुप्तस्तस्मिन्नाशिषि प्रत्यये गुणश्चिकीर्ष्यते। किन्तर्हि लुप्तस्येनः स्थानिवद्भावादिति न दोषः । तथा 'वेत्ति' इत्यत्रापि तिप्रत्यये गुणो न स्यात्। अत एकदेशस्येत्यपेक्षायामपि भिन्नाधिकरणो बहुव्रीहिः षष्ठ्यन्तान्यपदार्थ एव दर्शितः। **रागः** इति। रञ्जेः ''**भावकरणयोः**'' (४।३।४३) इति घञि नलोपः। कथमित्यादि। इह ''**भावादिकर्मणोर्वोदुपधात्**'' (४।१।१७) इति पक्षे गुणः प्राप्तः कथं भवतीति **पूर्वपक्षार्धः**। सन्निपातेत्यादि। परिहारस्यायमर्थः। नकारलोपो हि ''**अनिदनुबन्धानाम्** '' (३।६।१) इत्यादिना प्रत्ययस्यागुणत्वमाश्रित्य सञ्जातः। स कथं तद् विहन्तुमुत्सहते इति ॥८५९।

**[क० च०]**

प्रत्ययः। प्रत्ययलुकामिति बहुव्रीहिरेव न तत्पुरुषः, बहुवचनादथासम्भवाच्च। लुप्तो नकारोऽन इत्युच्यते **उपचाराद्** एकदेशस्याश्रुतस्य ग्रहणाभावात् । **तेनायमर्थः**–न विद्यते न [illegible] ध्वस्तो येषां तेऽनो धातवो नलोपवर्जिता इत्यर्थः। अथ मुख्यार्थबाधेन हि लक्ष [illegible] ति [illegible] ते । न विद्यते नकारो येषां ते **नकाररहिता** इत्यर्थश्चेत् , '**नु स्तुतौ**' (२।७) इत्यादीनां नकारयुक्तानां वर्जनं स्यात्। 'नोनुवः' इत्यत्र गुणः प्रसज्येत ? सत्यम् , प्रत्ययलुगनामिति सिद्धे पदभेदो विशेषलाभाय, तेन प्रध्वस्तनकाराणां ग्रहणम्, **उपचारात्**। अथ मुख्यार्थसम्भवेऽपि यद्यप्युपचारस्तदा ईदृगुपचारः कथं न स्यात् , अकारान्नकारो यत्र त एवानकारास्ततश्चाकारनकारवतां धातूनां प्राप्तं कार्यं न भवति इत्यर्थः कथन्न स्यात्? सत्यम्। **इष्टत्वान्नञ्निश्चय** एव ।

अथात्र धातुग्रहणाभावात् सामान्यं कथं नावगम्यते। ततश्च 'साधुमग्भ्याम्' इत्यत्र संयोगादेर्धुटो लोपे सति गत्वे कर्तव्येऽनेन प्रतिषेधः स्यात्? सत्यम्।

आद्यन्तधातुप्रस्तावाद् धातुरेवावसीयते। तर्हि पूर्वसूत्रात् सेडमन्तवमिकमिचमाम् इत्यादीनां कथमनुवृत्तिर्नास्ति, नैवम्। अमन्तानुवृत्तिर्नास्ति असम्भवात्। नहि अमन्तानामनामिति निषेध उपपद्यते तन्निवृत्त्या विशेषणस्यापि निवृत्तिरिति। तेन 'वंवमकः' इति सिद्धम्। अन्यथा वुणि परतश्चेक्रीयितलोपे अवमीत्यादिनिषेधाद् दीर्घः स्यात्। इदं न चारु, विशेष्यनिवृत्तौ विशेषणस्यानुवृत्तिर्बहुशो दृश्यते यतः।

यद् वा "**न सेटोऽमन्तस्य**" (४।१।३) इत्यत्र धातुरेव विशेष्यः सेडमन्तवमिकमिचमस्तु तस्यैव विशेषणानि, कुतो विशेष्यनिवृत्तौ विशेषणनिवृत्तिरिति **सिद्धान्तः**। तस्मादिष्टतोऽधिकाराणां प्रवृत्तिनिवृत्ती स्यातामित्येव युक्तम् , इचीत्यपि न वर्तते अनामिति प्रतिषेधात्। अथ यल्लुकामिति क्रियताम्। एवं च सति समिधिता इत्यादयः सिद्धाः? विधुरिवाचरतीत्यायिलोपे विधवतीत्यत्र गुणो न स्यात्। 'पथीयति, मथीयति' इति क्विपि यलोपे पथ्यौ मथ्यावित्यत्र निवृत्तो दीर्घः। प्रत्ययलोपलक्षणन्यायेन पुनर्न स्यात्। स्थितौ तु श्रुतव्याख्यया न दोषः। किञ्च सस्वरोऽस्वरो वा इति निश्चयाभावे सस्वरपक्षे चेक्रीयितलोपनिषेधः स्यात् , अस्वरपक्षे तु यिन्नाय्योरिति।

ननु **वररुचिरत्र** अनामिति विहाय अनातामिति पठति, तेन 'पापायकः' इत्यायिः स्यात्। **भवन्मते** का गतिरिति। एधः इत्यत्र तु प्रत्ययस्य लुग् येभ्य इति समासादेव न निषेधः इति वदति? सत्यम् , अस्य च लोपे इत्यत्र **विषयसप्तमी**। कटचिकीरित्यादिप्रयोगसिद्ध्यर्थमुक्तं तस्य प्रयोगदृष्टाश्रयणात्। अत्र प्रागेव निरपेक्षत्वाद् यलोप इति न प्रत्ययकृतो लुगत्र इत्यदोषः, तर्हि 'द्रष्टा, भङ्क्ता' इत्यादौ अन्तलोपे कार्यान्तरनिषेधः कथन्न स्यात्? नैवम् , प्रत्ययनिमित्तको यत्र लोपस्तत्रैवास्य विषय इति। अयं धुट्निमित्तको लोपः, तत्र धुडादौ प्रत्यय इति सम्बन्धाभावात्। अत एव 'मूर्तः' इत्यत्र "**नामिनो र्वोः**" (३।८।१४) इत्यादिना क्ते दीर्घः सिद्धः। सादृश्यात् प्रत्ययाश्रितस्यैव कार्यस्य निषेधाद् इदं तु व्यञ्जनाश्रितमिति।

**एतेनायमर्थः**– प्रत्ययाश्रिते एकदेशलोपे सति प्रत्ययाश्रितस्यैव प्राप्तस्य कार्यस्य निषेध इति। एतेन 'क्नुतः, क्नुतिः' इत्यत्र धातोर्यलोपे प्राप्तस्यागुणस्य निषेधे गुणो न भवति, यलोपस्य व्यञ्जनमात्रनिमित्तत्वात्। तर्हि अनयैव युक्त्या 'नोनुवः' इत्यत्र उवादेशं प्रति पूर्वपक्ष एव नास्ति, तत् कथं **टीकापञ्जिकयोः पूर्वपक्षसिद्धान्तौ** कृतौ? सत्यम् , नहि उपायस्योपायान्तरं बाधितमिति । ननु जक्षतुरित्यादौ उपधालोपे कृते "**अघोषेष्वशिटां प्रथमः**" (३।८।९) इति प्रथमे कर्तव्येऽनेन निषेधः कथन्न स्यादित्याह–अर्थादित्यादि। श्रुतत्वादित्यर्थः। 'नोनुवः' इति 'नु स्तुतौ' (२।७) इत्यस्य रूपं स्यात् तात्पर्यकं न विद्यते नकारो येषामित्यस्य व्यावर्तनार्थत्वादित्युक्तमेव। **वररुचिमतमाशङ्क्याह**–प्रत्ययस्येति। तथा 'दृशदकः' इत्यत्र धातुभ्यः प्रत्ययस्य लुकोऽसम्भवाद् दीर्घः स्यादित्यपि दूषणान्तरम्।

ननु भेद्यादित्यत्रापि "**आशिषि च परस्मै**" (३।५।२२) इत्यगुणे प्राप्तेऽनेन निषेधाद् गुण एव भविष्यति । तथा वेत्तीत्यत्रापि '**लुग्लोपे न प्रत्ययकृतम्**' इति सूत्रेण कृतस्य गुणनिषेधस्यानेन निषेधो गुणः सिद्ध एव कुतो दोषः ? सत्यम् । भेद्यादित्यत्र स्थानिवद्भावादिनः आशिषो व्यवहितत्वाद् गुणनिषेधस्याप्राप्तिः । वेत्तीत्यत्रापि लुग्लोपस्य न निषेधः, प्रत्ययाश्रितकार्यस्याभावात् । अत एव निमित्ताभावपरिभाषायास्तत्र निषेधात् कुत उभयत्र गुणनिषेधबाधा (प्राधान्यात्) इत्यपि ।

यद् वा विद्यमानतिप्रत्ययाश्रितगुणस्यैव प्राधान्यात् (यद् वा विद्यमानेति प्रत्ययाश्रितकार्यस्य निषेधः प्राधान्यात् ), न तु लुप्तानमवलम्ब्य प्राप्तस्य गुणस्य निषेधाद् गुणो गौणत्वात्। ननु **वररुचि**रत्र पञ्चम्यन्यपदार्थबहुव्रीहिमाश्रित्य 'प्रणत्य, संयत्य' इत्यादि व्यावर्तयति प्रत्ययलोपाभावात्। **भवन्मते** एकदेशस्य लोपात् कथं तकारागमः? सत्यम्। अनामिति वर्जनाद् आदेशस्य तु तत्साहचर्याद् आदेशे प्राप्त प्रतिषेधो नागम इत्यदोषः। सन्निपात इत्यादि। ननु अगुणः कथं सन्निपातलक्षणः, किन्तर्हि अनुषङ्गलोप एव। तथाहि यमगुणं दृष्ट्वा यस्य लोपस्य सम्भवः सोऽगुणः सन्निपातस्तेनागुणेन लक्ष्यते यो विधिलोपः सः **सन्निपातलक्षण इति**। अत्र कश्चिल्लक्षणशब्दः स्वरूपार्थः सन्निपातलक्षणः सन्निपातस्वरूप इत्यर्थः। नलोपस्य सन्निपातलक्षणत्वादगुणस्य न विघात- इति साध्याहारान्वये साधुरित्य**न्यः**। अगुणाश्रितत्वाल्लोपोऽप्यगुण इति **कश्चित्**।

**सागर**स्तु अगुणस्य यः सन्निपातः सन्निकर्षस्तल्लक्षणत्वात् तन्निमित्तत्वान्नलोपस्येति। यद् वा अगुणस्य सन्निकर्षाश्रितत्वादित्यर्थः । **पञ्जिका**प्रतिषेधवशेनेति । अथ तर्हि 'नोऽत्र' इत्यादावपि अकारलोपनिषेधाद् "**ओ अव्**" (१।२।१४) कथन्न स्यात् । अत्राप्यस्य लोपप्रतिषेधेनैव "ओ अव्" (१।२।१४) इत्यस्य प्राप्तिः ? सत्यम् । तत्र **व्यक्तिपक्षा**श्रयणाद् यावती विकृतिः प्राप्नोति तावत्येव निषेधः । अत्र तु **जातिपक्षा**श्रयणमिति जातेः सकृल्लक्षणस्य चरितार्थत्वान्नो अवादेशस्य निषेधः । तथा व्यक्तीति समुदायापेक्षया तथाशब्दो नकारस्येति **हेमकरः**। नकारस्य लोपो येषाम् इत्युपचारार्थो दर्शितः । अस्य तु मते लुप्तनकारा धातवोऽप्युपचारात् तथोच्यन्ते, ततो न लुप्तनकारा अलुप्तनकारा इति स्थितम् ॥८५९।

मि॰ ।, दृशदकः, मरीमृजः' इत्यादि शब्दरूपों के सिद्ध्यर्थ गुण–वृद्धि के निषेध की आवश्यकता होती है । इसकी व्यवस्था दोनों व्याकरणों में की गई है । पाणिनि का सूत्र है – "न धातुलोप आर्धधातुके" (अ० १।१।४)। यह ज्ञातव्य है कि कहीं कहीं पाणिनीय वृद्धि के लिए कातन्त्रकार ने दीर्घ आदेश किया है । सामान्यतया उभयत्र साम्य ही है ।

**[विशेष वचन]**

१. कथं कुन्चेर्निकुचितमिति? सन्निपातलक्षणत्वादगुणस्य (दु० वृ०) ।

२. भिन्नाधिकरणो बहुव्रीहिरभिधानात् (दु० टी०) ।

३. तत्र हि ङानुबन्धः स्वरूपग्राहको भविष्यति (दु० टी०) ।
४. लुगित्यदर्शनमात्रमुच्यते (वि० प०) ।
५. येषामिति अवयवावयविसम्बन्धे षष्ठी (वि० प०) ।
६. प्रत्ययलुकामिति बहुव्रीहिरेव न तत्पुरुषः, बहुवचनात् (क० च०) ।
७. प्रत्ययलुगनामिति सिद्धे पदभेदो विशेषलाभाय (क० च०) ।
८. आद्यन्तधातुप्रस्तावाद् धातुरेवावसीयते (क० च०) ।
९. इष्टतोऽधिकाराणां प्रवृत्तिनिवृत्ती स्याताम् (क० च०) ।
१०. नकारस्य लोपो येषाम् इत्युपचारार्थो दर्शितः (क० च०) ।

[रूपसिद्धि]

१. **समिधिता** । सम् + इन्ध् + यिन् + इट् + ता । समिधमेषिता । 'सम्' उपसर्गपूर्वक 'ञि इन्धी दीप्तौ' (६।२२) धातु से "नाम्न आत्मेच्छायां यिन्" (३।२।५) सूत्र द्वारा 'यिन्' प्रत्यय, "ते धातवः" (३।२।१६) से 'समिध्य्' की धातुसञ्ज्ञा, श्वस्तनीसंज्ञक प्रथमपुरुष-एकवचन 'ता' प्रत्यय, इडागम, "यस्यानन्नि" (३।६।४८) से यकारलोप तथा "नामिनश्चोपधाया लघोः" (३।५।२) से प्राप्त गुण का प्रकृत सूत्र द्वारा निषेध ।

२. **समिधकः**। सम् + इन्ध् + यिन् + वुग् + सि । यहाँ पर गुण का निषेध प्रकृत सूत्र से होता है ।

३. **अदृशदि**। अट् + दृशद् + यिन् + इच् + त । यहाँ ऋ के स्थान में प्राप्त 'अर्' गुण का प्रकृत सूत्र से निषेध ।

४. **दृशदकः**। दृशद् + यिन् + वुण् + सि । प्रकृत सूत्र से गुणनिषेध ।

५. **नोनुवः**। नु + चेक्रीयित-य + अच् + सि । 'णु स्तुतौ' (२।७) धातु से "धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे" (३।२।१४) सूत्र द्वारा चेक्रीयितसंज्ञक 'य' प्रत्यय, द्वित्वादि से 'नोनूय' धातु, उससे "अच् पचादिभ्यश्च" (४।२।४८) द्वारा अच् प्रत्यय, "तस्य लुगचि" (४।४।४५) से य का लोप, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से प्राप्त गुण का प्रकृत सूत्र द्वारा निषेध तथा ऊकार को उवादेश ।

६. **मरीमृजः**। मृज् + य + अच् + सि । 'मृजू शुद्धौ' (२।२९) धातु से चेक्रीयितसंज्ञक 'य' प्रत्यय, द्वित्वादि, अच् प्रत्यय । यहाँ "मर्जो मार्जिः" (३।८।२३) से प्राप्त मार्ज् आदेश का प्रकृत सूत्र द्वारा निषेध ।।८५९।

## ८६०. सार्वधातुकवच्छे [४।१।५]

[सूत्रार्थ]

शकारानुबन्ध वाले कृत्संज्ञक प्रत्ययों के परे रहते सार्वधातुक की तरह कार्य होता है ।।८६०।

[दु० वृ०]

शानुबन्धे कृति परे सार्वधातुक इव कार्यं भवति । जुह्वत् , पचमानः । "**कृञः श च**" (४।५।७७) क्रिया । यस्य यदुक्तं तस्य तदेव, श्रुतत्वात् ।।८६०।

[दु० टी०]

सार्व० । नहि शकारः स्थितिमानस्तीति कृतमन्तरेण शानुबन्धो नास्तीत्याह – शानुबन्धे कृतीति । जुह्वदिति । जुहोत्यादित्वाद् द्विर्वचनम् । पचमान इति । "**अन् विकरणः कर्तरि**" (३।२।३२) इति । क्रियेति । "**सार्वधातुके यण्**" (३।२।३१) ।।८६०।

[वि० प०]

सार्व० । शकारः स्थितिमान् नास्तीत्यनुबन्धो गम्यते । स च कृतमन्तरेण न सम्भवतीत्याह – शानुबन्धे कृतीति । जुह्वदिति । '**हु दाने**' (२।६७), श्नतृङ् जुहोत्यादित्वाद् द्विर्वचनम् । "**जुहोतेः सार्वधातुके**" (३।४।६१) इति वत्वम् । पचमान इति । आनशि प्रत्यये अन्विकरणे "**आन्मोऽन्त आने**" (४।४।७) इति मकारः। क्रियेति । सार्वधातुके यण् , "**यणाशिषोर्ये**" (३।६।१३) इतीकारागमः ।।८६०।

[क० च०]

सार्व० । अत्रापि वद्ग्रहणं **सुखार्थम्।** परार्थे प्रयुज्यमानः शब्दो वतिमन्तरेण वत्यर्थं गमयति, यतः शकारः स्थितिमान्नास्तीति। अथ सदृशम् इत्यत्र शकारः स्थितिमानस्तीति नैवम्, औणादिकशब्दस्य **बहुलार्थत्वात्।** 'प्रशान्' इत्यादौ कथम् आकारलोपो न स्यात्, वत्करणस्य स्वाश्रयार्थत्वाद् असार्वधातुकमस्ति। यतोऽसार्वधातुकेऽप्याकारलोपनिषेधोऽप्यतिदिश्यते इति चेत्, न। **पर्युदासेन** सार्वधातुकादन्यस्मिन् प्रत्यये एवाकारलोपः साध्यो न तु सार्वधातुके निषेधः साध्यः, कुतस्तस्यातिदेशः? सत्यम्, पर्युदासार्थमिति तस्यापि निषेधस्यातिदेश आश्रीयते। ननु पूर्वसूत्रान्नञ् कथं नानुवर्तते, तदायमर्थः स्यात् – शानुबन्धे परतः सार्वधातुके दृष्टं कार्यं गुणो वादेशादिकं न भवतीति? सत्यम्। "**ङे न गुणः**" (४।१।६) इत्यत्र नञ्ग्रहणात्। अन्यथा नञोऽधिकारोऽस्त्येव, किमत्र नञ्ग्रहणेन, तस्मान्नञो निवृत्तिः ।।८६०।

[समीक्षा]

'जुह्वत् , पचमानः' आदि प्रयोगों के सिद्ध्यर्थ द्वित्व-मकारागम आदि कार्य करने पड़ते हैं । इनका निर्वाह दोनों व्याकरणों में किया गया है, परन्तु प्रक्रियाभेद उभयत्र द्रष्टव्य है । पाणिनि ने शित् प्रत्ययों की सार्वधातुकसंज्ञा करके द्वित्वादि कार्य किए हैं, जबकि कातन्त्रकार ने प्रकृत अतिदेश से अपेक्षित कार्यों का निर्देश किया है। पाणिनि का सार्वधातुकसंज्ञाविधायक सूत्र है – "तिङ्शित् सार्वधातुकम्" (अ० ३।४।११३) ।

[विशेष वचन]

१. यस्य यदुक्तं तस्य तदेव, श्रुतत्वात् (दु० वृ०) ।

२. शकारः स्थितिमान् नास्तीत्यनुबन्धो गम्यते (वि० प०) ।

३. अत्रापि वद्ग्रहणं सुखार्थम् (क०च०) ।

४. परार्थे प्रयुज्यमानः शब्दो वतिमन्तरेण वत्यर्थं गमयति (क० च०) ।

५. औणादिकशब्दस्य बहुलार्थत्वात् (क० च०) ।

६. पर्युदासार्थमिति तस्यापि निषेधस्यातिदेश आश्रीयते (क० च०) ।

[रूपसिद्धि]

१. **जुह्वत्** । हु + शन्तृङ् + सि । 'हु दाने' (२।६७) धातु से "वर्तमाने शन्तृङानशावप्रथमैकाधिकरणामन्त्रितयोः" (४।४।२) सूत्र द्वारा 'शन्तृङ्' प्रत्यय, शकार-ऋकार-ङकार के अनुबन्ध होने से 'अन्त्' भाग शेष, प्रकृत सूत्र से अतिदेश (सार्वधातुकवद्भाव), "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, "अदादेर्लुग् विकरणस्य" (३।४।९२) से उसका लुक्, "जुहोत्यादीनां सार्वधातुके" (३।३।८) से 'हु' को द्वित्व, "ङे न गुणः" (४।१।६) से अगुण, "जुहोतेः सार्वधातुके" (३।४।६१) से उकार को वकार, नलोप, लिङ्गसंज्ञा, सि-प्रत्यय तथा "व्यञ्जनाद् दिस्योः" (३।६।४७) से उसका लोप।

२. **पचमानः**। पच् + आनश् + सि । 'डु पचष् पाके' (१।६०३) धातु से "वर्तमाने शन्तृङानशौ०" (४।४।२) सूत्र द्वारा 'आनश्' प्रत्यय, "अन् विकरणः कर्तरि" (३।२।३२) से अन् विकरण, "आन् मोऽन्त आने" (४।४।७) से मकारागम तथा विभक्तिकार्य ॥८६०।

## ८६१. ङे न गुणः [४।१।६]

[सूत्रार्थ]

ङकारानुबन्ध वाले कृत्संज्ञक प्रत्यय के परे रहते धातुसम्बन्धी गुण का निषेध होता है ॥८६१।

[दु० वृ०]

ङानुबन्धे कृति परे गुणो न भवति । बिभ्यत् , विदन् , सुन्वन् , चिन्वन् । कतीह मधु लिहानाश्चिन्वानाः ॥८६१।

[वि० प०]

ङे० । बिभ्यदिति । **'ञि भी भये'** (२।६८), शन्तृङ्, पूर्ववद् द्विर्वचनम् **"य इवर्णे०"** (३।४।५८) नलोपः । सुन्वन् इति । **"सुञो यज्ञसंयोगे"** (४।४।१२) इति शन्तृङ् । **"नुः ष्वादेः"** (३।२।३४), **"नोर्वकारो विकरणस्य"** (३।४।६०) इति वत्वम्। मधु लिहानाश्चिन्वाना इति **"शक्तिवयस्ताच्छील्ये"** (४।४।९) इति शानङ् ॥८६१।

[क० च०]

ङे० । अथ **"सार्वधातुकवच्छे"** (४।१।५) इत्यस्मात् पूर्वं **"ङे न गुणः"** (४।१।६) इति क्रियताम् , किं नञ्ग्रहणेन ? सत्यम् , तदा "सार्वधातुकवच्छे" (४।१।५) इत्यत्र नञोऽनुवृत्तिः स्याद् इत्युक्तमेव । **कश्चिद्** आह – नञ्ग्रहणादधिकारस्यापि प्रतिषेधो विज्ञायते, तेन **"द्यतिस्यतिमास्थां त्यगुणे"** (४।१।७६) इति प्रकरणस्य त्यादौ प्रतिषेधः सिद्धः । यथा 'मातः' इत्यत्र नेकारः । एवम् अत्तः, अत्तवान् इत्यत्र न जग्ध्यादेशः । तदसत् , **"द्यतिस्यतिमास्थाम्०"** (४।१।७६) इत्यादौ स्थासाहचर्याद् असार्वधातुकस्यैव ग्रहणमित्यदोषः॥८६१।

[समीक्षा]

ङ्-अनुबन्ध वाले प्रत्ययों के परे रहते शर्ववर्मा तथा पाणिनि दोनों ही गुणादेश का निषेध करते हैं । पाणिनि का सूत्र है – "क्ङिति च" (अ० १।१।५) । अन्तर यह है कि कातन्त्रकार 'शन्तृङ् - शानङ्' प्रत्ययों में साक्षात् ङ्-अनुबन्ध पढ़ते हैं, जबकि पाणिनि के अनुसार "सार्वधातुकमपित्" (अ० १।२।४) से ङिद्वद्भाव होने के बाद "क्ङिति च" (अ० १।१।५) से 'बिभ्यत्, विदन् , चिन्वन्' आदि में गुणनिषेध प्रवृत्त होता है, परन्तु कातन्त्रकार ने साक्षात् प्रत्ययों में ही ङ्-अनुबन्ध की योजना से लाघव किया है ।

[विशेष वचन]

१. कश्चिदाह – नञ्ग्रहणादधिकारस्यापि प्रतिषेधो विज्ञायते (क० च०)।

[रूपसिद्धि]

१. **बिभ्यत्।** भी + शन्तृङ् + सि । 'ञि भी भये' (२।६८) धातु से 'वर्तमाने शन्तृङानशावप्रथमैकाधिकरणामन्त्रितयोः" (४।४।२) सूत्र द्वारा 'शन्तृङ्' प्रत्यय, श् - ऋ अनुबन्धों का प्रयोगाभाव, "जुहोत्यादीनां सार्वधातुके" से धातु को द्वित्व, अभ्याससंज्ञा, य इवर्णस्यासंयोगपूर्वस्यानेकाक्षरस्य" (३।४।५८) से धातुघटित ईकार को यकार, "अभ्यस्तादन्तिरनकारः" (२।२।२९) से प्रत्ययगत नकार का लोप, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से प्राप्त गुण का प्रकृत सूत्र से निषेध, लिङ्गसंज्ञा तथा विभक्तिकार्य ।

२. **विदन्।** विद् + शन्तृङ् + सि । 'विद ज्ञाने' (२।२७) धातु से शन्तृङ् प्रत्यय, प्रकृत सूत्र से गुणनिषेध, संयोगान्तलोप तथा विभक्तिकार्य ।

३. **सुन्वन्।** सु + नु –विकरण + शन्तृङ् + सि । 'षुञ् अभिषवे' (४।१) धातु से शन्तृङ् प्रत्यय, "नुः ष्वादेः" (३।२।३४) से नु-विकरण, "नोर्वकारो विकरणस्य" (३।४।६०) से वकारादेश, संयोगान्तलोप तथा विभक्तिकार्य ।

४. **चिन्वन्।** चि + नु + शन्तृङ् + सि । 'चिञ् चयने' (४।५) धातु से शन्तृङ् प्रत्यय, नु-विकरण, वकारादेश, तकारलोप तथा विभक्तिकार्य ।

५. **लिहानाः**। लिह् + शानङ् + जस् । 'लिह आस्वादने' (२।६३) धातु से शानङ् प्रत्यय, प्रकृत सूत्र से गुणनिषेध तथा विभक्तिकार्य ।

६. **चिन्वानाः**। चि + नु + शानङ् + जस् । 'चिञ् चयने' (४।५) धातु से शानङ् प्रत्यय, नु-विकरण, वकारादेश तथा विभक्तिकार्य ॥८६१।

## ८६२. के यणवच्च योक्तवर्जम् [४।१।७]

**[सूत्रार्थ]**

ककारानुबन्ध वाले कृत्प्रत्यय के परे रहते यण्वत् कार्य होता है, य-प्रत्यय के विषय में जो कहा गया है उसे छोड़कर ॥८६२।

**[दु० वृ०]**

कानुबन्धे कृति परे यणीव कार्यं भवति, ये उक्तं वर्जयित्वा। कृतः, कृतवान्, गृहीत्वा, इष्टिः। यण्वद्भावेऽगुणत्वं सम्प्रसारणं च स्यात् । योक्तवर्जमिति किम् ? कृतः, जितः, स्मृतः। इकारागमदीर्घगुणा न स्युः॥८६२।

**[दु० टी०]**

के० । यण्वद्भाव इत्यादि । णकारानुबन्धत्वाद् यणि गुणप्रतिषेधो दृष्टः, स्वपिवचियजादीनां यणि सम्प्रसारणं दृष्टम् । ये उक्तं योक्तं यकारेण यदा यण् विशेषितो भवति एकयोगनिर्दिष्टत्वात् तदा यण्वद्भावो न भवतीत्यर्थः । तद् यथा **"यणाशिषोर्ये, नाम्यन्तानां यणायियिन्नाशीश्च्विचेक्रीयितेषु ये दीर्घः, गुणोऽर्त्तिसंयोगाद्योः"** (३।४।७४, ७०, ७५) इति । चकार उक्तसमुच्चयमात्रे ॥८६२।

**[वि०प०]**

के यण्वत् । इष्टिरिति । यजेः सम्प्रसारणम् , भृजादित्वात् षत्वम् । योक्तेत्यादि । ये उक्तं **योक्तम्** , यकारेण विशेषिते यणि यदुक्तं तद् वर्जयित्वेत्यर्थः। तेन **"यणाशिषोर्ये, नाम्यन्तानां यणायियिन्नाशीश्च्विचेक्रीयितेषु ये दीर्घः, गुणोऽर्तिसंयोगाद्योः"** (३।४।७४, ७०, ७५) इत्येतैर्योगैर्यथाक्रमेण कृतः इत्यादिषूदाहरणेषु इकारागमदीर्घगुणाः प्राप्ताः । योक्तत्वान्न भविष्यन्तीत्यर्थः ॥८६२।

**[क० च०]**

के यण्० । यण्शब्दाश्रितस्य कार्यस्य सम्प्रसारणस्यैवात्रातिदेशश्चकारादगुणश्च । तेन 'जजागर्वान्' इत्यत्र गुणाभाव इति **वररुचिः**। तदसत् **"जागुः कृत्य०"** (४।१।८) इत्यादिना गुण एव भवति जजागर्वान् इति । तस्मादत्र यणि दृष्टमात्रकार्यस्यातिदेशः, तर्हि 'बुद्धः' इत्यत्र धुटां तृतीयो न भवति ? सत्यम् , वत्करणं स्वाश्रयार्थमिति । तेन धुट्कार्यं स्यादेव ॥८६२।

**[समीक्षा]**

'कृतवान् , गृहीत्वा' आदि शब्दरूपों के सिद्ध्यर्थ गुणनिषेध तथा सम्प्रसारण की आवश्यकता होती है, इनका विधान दोनों ही व्याकरणों में किया गया है । पाणिनि के सूत्र

हैं–"क्ङिति च, वचिस्वपियजादीनां किति च, ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" (अ० १।१।५; ६।१।१५, १६) । अतः प्रायः उभयत्र समानता ही है ।

[विशेष वचन]

१. चकार उक्तसमुच्चयमात्रे (दु० टी०) ।

[रूपसिद्धि]

१. **कृतः**। कृ + क्त + सि । 'डु कृञ् करणे' (७।७) धातु से "निष्ठा" (४।३।९३) सूत्र द्वारा 'क्त' प्रत्यय, क्–अनुबन्ध का प्रयोगाभाव, प्रकृत सूत्र से गुणनिषेध तथा विभक्तिकार्य ।

२. **कृतवान्**। कृ + क्तवन्तु + सि । 'डु कृञ् करणे' (७।७) धातु से "निष्ठा" (४।३।९३) सूत्र द्वारा 'क्तवन्तु' प्रत्यय, उकारानुबन्ध का प्रयोगाभाव, लिङ्गसंज्ञा, सि-प्रत्यय, "नान्तस्य चोपधायाः" (२।२।१६) से नकार की उपधा को दीर्घ, "व्यञ्जनाच्च" (२।१।४९) से सिलोप तथा "संयोगान्तस्य लोपः" (२।३।५४) से तकारलोप ।

३. **गृहीत्वा**। ग्रह् + क्त्वा + सि । 'ग्रह उपादाने' (८।१४) धातु से "एककर्तृकयोः पूर्वकाले" (४।६।३) सूत्र द्वारा 'क्त्वा' प्रत्यय, इडागम, दीर्घ, "ग्रहिज्यावयिव्यधि०" (३।४।२) इत्यादि से सम्प्रसारण, लिङ्गसंज्ञा, सिप्रत्यय, अव्ययसंज्ञा तथा 'सि' का लोप।

४. **इष्टिः**। यज् + क्ति + सि । 'यज देवपूजासङ्गतिकरणदानेषु' (१।६०८) धातु से स्त्रीलिङ्ग में "स्त्रियां क्तिः" (४।५।७२) सूत्र द्वारा 'क्ति' प्रत्यय, ककारानुबन्ध का प्रयोगाभाव, "स्वपिवचियजादीनां यण्परोक्षाशीःषु" (३।४।३) से यकार को सम्प्रसारण "भृजादीनां षः" (३।६।५९) से जकार को षकार, "तवर्गस्य षटवर्गाट्टवर्गः" (३।८।५) से तकार को टकार तथा विभक्तिकार्य ।।८६२।

## ८६३. जागुः कृत्यशन्तृङ्व्योः [४।१।८]

[सूत्रार्थ]

शन्तृङ् तथा क्वि प्रत्यय से भिन्न कृत्संज्ञक प्रत्यय के परे रहते जागृ धातु में यण्वत् कार्य होता है ।।८६३।

**[दु० वृ०]**

जागर्तेः कृति परे यणीव कार्यं भवति न तु शन्तृङ्व्योः । "यणाशिषोर्ये" (३।४।७४)। जागरूकः, जागरितः, जागर्त्तिः । कृतीति किम् ? जागृयात् । अशन्तृङ्व्योरिति किम् ? जाग्रत् , जागृविः। "**कृगृजागृभ्यः क्विः**" ।।८६३।

**[दु० टी०]**

जागुः । वचनादिह योक्तवर्जमिति न सम्बध्यते ।।८६३।

[वि० प०]

जागुः । किन्तत् कार्यमित्याह – "**यणाशिषोर्ये**" (३।४।७४) इति । एतेन योक्तवर्जमितीह न सम्बध्यते, वचनात् । न हि योक्तादन्यद् जागर्तेर्यणि कृतं कार्यं सम्भवतीति दर्शितम् ॥८६३।

[क० च०]

जागुः । अत्र यण्शब्दाश्रितस्य कार्यस्यातिदेश एव, तेन जागरितेत्यादौ न सामान्यस्यातिदेशः । अत्र किं कारणमिति चेद् उच्यते – यण्वत्सूत्रात् पूर्वपाठात् जागर्तेः कृति यत् प्राप्तं तन्न भवतीति सिद्धमभिप्रेतम् । यतस्तच्च योक्तवर्जमेव सम्भवति । अतो योक्तवर्जग्रहणस्यानुवृत्तिरिह न स्यात् । अथवा यदि योक्तवर्जग्रहणस्यानुवृत्तिः स्यात् तदा जागर्तेरगुणत्वमेवातिदिष्टम् ।तथा च सति 'अशन्तृङ्व्योः' इति वर्जनमनर्थकमेव पूर्वेण प्राप्तस्यागुणस्य निषेधार्थमिति वाच्यम् । पूर्वसूत्रबाधाज्ञापनापेक्षया लाघवाद् योक्तवर्जनानुवृत्तिबाधाज्ञापनस्यैवौचित्याच्च । **सागरस्तु** पूर्वसूत्रे नञा सिद्धे यद् वर्जग्रहणं तदिह तन्निवृत्त्यर्थमेव ॥८६३।

[समीक्षा]

'जागरूकः, जागरितः, जागर्त्तिः' इत्यादि शब्दरूपों के सिद्ध्यर्थ गुणादेश करने की आवश्यकता होती है, तदर्थ उभयत्र व्यवस्था की गई है । पाणिनि का सूत्र है – "जाग्रोऽविचिण्णल्ङित्सु" (७।३।८५) । अतः उभयत्र समानता है ।

[विशेष वचन]

१. सागरस्तु पूर्वसूत्रे नञा सिद्धे यद् वर्जग्रहणं तदिह तन्निवृत्त्यर्थमेव (क० च०)।

[रूपसिद्धि]

१. **जागरूकः** । जागृ + ऊक + सि । 'जागृ निद्राक्षये' (२।३६) धातु से "जागरूकः" (४।४।४३) सूत्र द्वारा 'ऊक' प्रत्यय, गुणादेश, लिङ्गसंज्ञा, सि-प्रत्यय तथा विसर्गादेश ।

२. **जागरितः**। जागृ + इकारागम + क्त + सि । 'जागृ निद्राक्षये' (२।३६) धातु से "निष्ठा" (४।३।९३ ) सूत्र द्वारा 'क्त' प्रत्यय, ककारानुबन्ध का प्रयोगाभाव, इकारागम, गुणादेश तथा विभक्तिकार्य ।

३. **जागर्त्तिः**। जागृ + क्ति + सि । 'जागृ' धातु से "स्त्रियां क्तिः" (४।५।७२) द्वारा 'क्ति' प्रत्यय, गुणादेश तथा विभक्तिकार्य ॥८६३।

# ८६४. गुणी क्त्वा सेडरुदादि-क्षुध-कुश-क्लिश-गुध-मृड-मृद-वद-वस-ग्रहाम् [४।१।९]

[सूत्रार्थ]

इडागमसहित क्त्वा प्रत्यय होने पर गुणादेश होता है, रुदादि-क्षुध' आदि धातुओं को छोड़कर ।।८६४।

[दु० वृ०]

अरुदादिक्षुधादीनां क्त्वा सेड् गुणी भवति । यस्मिन् यो भवति स तस्येति विवक्षायामिन् । शयित्वा, देवित्वा, स्रंसित्वा । क्त्वेति किम् ? निकुचितिः । शीङादीनां सेड् निष्ठैवेति नियमश्च स्यात् । सेडिति किम् ? कृत्वा । अरुदादिक्षुधादीनामिति किम् ? रुदविदमुषां सनीत्यत्र रुदिसहचरितो विदिर्ज्ञानार्थः । रुदित्वा, विदित्वा, मुषित्वा, क्षुधित्वा, कुशित्वा । क्लिश, क्लिशू – क्लिशित्वा, गुधित्वा व्युपधत्वाद् वा न स्यात् । मृडित्वा, मृदित्वा । वद–उदित्वा । वस निवास एव यजादित्वात् । उषित्वा। क्षुधिवसोश्चेतीट् । गृहीत्वा ।।८६४।

[दु० टी०]

यण्वद्भावादगुणत्वे प्राप्ते वचनम्। अरुदादीत्यादि। रुदादिभ्योऽन्येषां धातूनां सम्बन्धी समीपो वा क्तप्रत्यय इत्यर्थः। **कश्चिद्** महाधात्वधिकारमाश्रित्य प्रसज्यप्रतिषेधोऽयमिति मन्यते। ननु गुणो विद्यते यस्मिन्निति विग्रहे कथमिन्प्रत्ययस्तदस्यास्तीति षष्ठीमात्रनिर्देशात्? सत्यम् , षष्ठ्यर्थ एवेन्प्रत्यय इति मनसिकृत्याह–यस्मिन्नित्यादि । गुणीत्यपनीय न क्त्वि सेटीति नञ् कुर्यात् क्त्वाप्रत्यये यण्वदिति **प्रतिपत्तिगौरवं** स्यात् । निष्ठायां सेटि भावादिकर्मणोर्वोदुपधस्येति निर्देशे नास्ति **लाघवम्,** क्त्वाग्रहणं किमर्थं गुणी सेड् इत्युच्यताम् – निगुदित इति निष्ठाप्रत्ययोऽपि गुणी स्यात् चेत् , न । शीङादीनामेव सेड् निष्ठा गुणी नान्येषां गुदादीनामिति नियमात्। तर्हि परोक्षापि गुणिनी स्यात् ततो जग्मिव, जघ्निवेति न सिध्यति **''गमहन०''** (३।६।४३) इत्यादिनोपधालोपस्याभावात्? सत्यम् । **''नाम्यन्तानामनिटाम्''** (३।५।१७) इति वचनादाख्यातिको न गुणीति विज्ञापयति, अन्यथा सेट्कत्वादेव सनो गुणित्वं सिद्धम् ,किं नाम्यन्तानामनिटाम् इत्यनेनेति भावः ।

क्वन्सुस्तर्हि गुणी स्यात् , 'जग्मिवान्' इति दुष्यति, मैवम् । कानुबन्धत्वाद् यणि दृष्टं कार्यमगुणत्वम् **''गमहनविदविशदृशां वा''** (४।६।७७) इतीटि कृते स्वरादावगुणे स्याद् उपधालोपः, तर्हि क्तिरपि गुणिनि स्यादित्याह – क्त्वाग्रहणमित्यादि। कुन्चेरनुषङ्गलोपः सिद्ध एव, **उपस्निहितिरिति** गुणः स्यात **''घोषवत्योश्च कृति''**(४।६।८०) इति क्तौ प्रतिषेधो नेष्यत इति ग्रहादीनामिद् । विपरीतनियमोऽपि स्यादित्याह – शीङादीनामिति। **'नानिष्टार्था शास्त्रे प्रक्लृप्तिः'** (भोजपरि० १०७) इति **बालैर्नावगम्यते** ।

**सेड् गुणीति कृते योगे निष्ठायामवधारणात्।**
**आख्यातेन परोक्षायामगुणादनिटां सनि।।**
**कानुबन्धबलादेव क्वन्सौ च प्रत्यये किल।**
**गुणिनां च गुणो नास्ति निकुचितिः प्रयोजनम् ।।**

क्त्वेति कानुबन्धो **मन्दमतिबोधार्थः**। अरुदादीत्यादि । रुदादिरिह सूत्रगणो गृह्यते न धातुगणः, आदिशब्दस्य वैफल्यादित्याह – रुदीत्यादि । रुदिसहचरितो विदिर्ज्ञानार्थ इति **सुखप्रतिपत्त्यर्थम्** उच्यते, यस्माद् विद ज्ञाने इत्यस्मादन्ये विदोऽनिट इति **''सनि चानिटि''** (३।५।९) इति गुणप्रतिषेधः सिद्ध एव । **साहचर्यं** पुनरत्र सूत्रपाठकृतमेव प्रतिपत्तव्यम् । अथवा मतान्तरमाश्रित्योक्तं लाभार्थादपि **विदेरिटमिच्छन्त्यन्ये** इति रुदिनादादिकेन सहचरितस्य 'विद ज्ञाने' इत्यस्य ग्रहणमित्यर्थः ।व्युपधत्वाद् वा न स्यादिति, अन्यथैषामिह प्रतिषेधो व्यर्थः स्याद् इति भावः । सिद्धे गुणत्वे विभाषा तत्र विधेयेति अत्र रुदादिप्रतिषेधः। ननु **''क्त्वि रुदादिक्षुधकुशक्लिशगुधमृडमृदवदवसग्रहाम्''** इति सूत्रमास्ताम्। सिद्धे सति नियम एषामेव यण्वद् भवति नान्येषामिति । नैवम् , **विपरीतनियमोऽपि** संभाव्येत रुदादीनां क्त्वाप्रत्यय एव यण्वदिति ॥८६४।

**[वि० प०]**

गुणी० । ननु गुणोऽस्यास्तीति **गुणी** धातोरभिधानं प्राप्नोति न प्रत्ययस्य, गुणोऽस्मिन्नस्तीति सप्तम्यर्थे इन्प्रत्यये गुणी क्त्वेति युज्यते वक्तुम् । न चेह सप्तम्यर्थे मत्वर्थीयोऽस्ति, तदस्यास्तीति षष्ठीमात्रनिर्देशादित्याह – यस्मिन्नित्यादि । एतेन षष्ठीसप्तम्योरर्थं प्रति भेदो नास्तीति दर्शितम् । यथा वृक्षस्य शाखा, वृक्षे शाखा । घटस्य रूपम् , घटे रूपमिति । ननु भेदोऽपि दृश्यते, यथा गङ्गायां गावो न च तास्तस्या इति । तथा देशान्तरगतोऽपि पुत्रो देवदत्तस्य भवति, न चासौ पुत्रस्तस्मिन्निति। तदयुक्तम् , लोके हि तदाश्रयत्वात् तद्व्यदेशोऽपि दृश्यते, यथा रथ्यायाः पुरुषान् आह्वय, शालायाः पुरुषान् पश्येति । अथ यदि गङ्गायां गावः, देवदत्ते पुत्र इत्यपि स्यात् , न तदा काचिद् **वस्तुक्षतिरिति** ।

अथ क्त्वाग्रहणं किमर्थम् **''गुणी सेडरुदादि०''** (४।१।९) इत्यादि सूत्रमास्ताम्? सत्यम् । अविशेषान्निष्ठाप्रत्ययोऽपि गुणी स्यात् , यथा **'गुद क्रीडायाम्'** (१।३०९), निगुदितः, निगुदितवानिति चेत् , नैवम् । अनेन सामान्येनैव सिद्धे शीङ्पूङ्धृषिक्षिदिस्विदिमिदां निष्ठा सेडिति वचनमवधारणार्थं भविष्यति । शीङादीनामेव सेड् निष्ठा गुणिनी नान्येषामिति, तर्हि परोक्षापि गुणिनी स्यात् , ततो 'जग्मिव, जघ्निव' इति न सिध्यति । गुणित्वेन **''गमहन०''** (३।६।४३) इत्यादिनोपधालोपस्याभावात्, तदप्ययुक्तम् । **''नाम्यन्तानामनिटाम्''** (३।५।१७) इत्यनिड्ग्रहणात्। तद्धि शिश्रयिषतीत्यत्र सेट्सनो गुणित्वार्थमनिड्ग्रहणम् । तदनेनैव सिद्धम् , किन्तेनानिड्ग्रहणेनेति । तस्मान्नाम्यन्तानामनिटां सन्यगुणविधानादाख्यातप्रकरणेऽपि परोक्षायां न गुणप्रसङ्ग इति । तर्हि क्वन्सुप्रत्ययोऽपि गुणी

स्यात् , ततो 'जग्मिवान् , जघ्निवान्' इति न सिध्यतीति चेत् , नैवम् । कानुबन्धबलाद् यणि दृष्टं कार्यमगुणत्वम् , ततो "**गमहनविदविशदृशां वा**" (४।६।७७) इतीटि कृते स्वरादावगुणे स्यादेवोपधालोपः । न च गुणिनां तृजादीनां गुणित्वविधानं स्यात् , निष्फलत्वात्। तर्हि क्तिप्रत्ययोऽपि गुणी स्याद् इत्याह – क्तेति किं निकुचितिरिति ।

एवं निगृहीतिः, उपस्निहितिरिति अनुषङ्गलोप-सम्प्रसारण-गुणप्रतिषेधाः सिद्धाः। इह घोषवत्योश्च कृतीट्प्रतिषेधो नेष्यते इति सेट्त्वात् । एतदेवोक्तम्

**सेड् गुणीति कृते योगे निष्ठायामवधारणात्।**
**आख्याते न परोक्षायामगुणादनिटां सनि।।**
**कानुबन्धबलादेव क्वन्सौ च प्रत्यये किल।**
**गुणिनां च गुणो नास्ति निकुचितिः प्रयोजनम्।।**इति ।

ननु क्तेरपि कानुबन्धत्वमस्ति तदस्य क्वन्सोश्च को विशेष इति । सत्यम् , **अपरः** कश्चिदिह विशेषमाचक्षाणः क्तावेव प्रयोजनं प्रत्यपीपददिति । एषोऽपि तदेवाह, **परमार्थतः** पुनरिदमु**पलक्षणम्** । इह 'जग्मिवान्, जघ्निवान्' इत्यत्रापि प्रयोजनम् । अत एव किलशब्देनात्मनोऽरुचिं दर्शयति । किं च निष्ठायां विपरीतनियमोऽपि स्यादित्याह – शीङादीनामित्यादि । विपरीतनियमेन शयितेत्यादौ तृचोऽगुणित्वम्, निगुदित इत्यादौ चानेन निष्ठायां गुणित्वमेव स्यादित्यर्थः । रुदविदमुषां सनीति । अनेनैव त एव रुदादयो गृह्यन्ते, न पुनरदादिगणपरिपठिताः इति दर्शितम् , आदिशब्दस्य वैफल्यप्रसङ्गात्। ते हि पञ्चैव रुदादयो रुदि-स्वपि-श्वसि-प्राणि-जक्षतयः। तत्र स्वपेरिडेव नास्ति, इतरेषां त्रयाणामस्ति केवलमगुणित्वे गुणित्वेऽपि विशेषाभावाद् रुदिरेव परिशिष्यते इति किमादिग्रहणेनेति भावः। ननु तत्रापि पारिशेष्याद् विदिर्ज्ञानार्थ इत्युक्तम्, न तु साहचर्यम्, यतो ज्ञानार्थादन्ये विद्यति-विन्दति-विन्तयस्त्रयोऽनिट इति "**सनि चानिटि**" (३।५।९) इत्यनेनैवागुणित्वं सिद्धम् ? सत्यम् । साहचर्यव्याख्यानेऽपि न दोष इति मन्यते। अन्यथा लाभार्थादपि विदेरिटमिच्छन्ति **केचिद्** इति । तन्मतमाश्रित्य व्याख्यानान्तरमुक्तम्। रुदिना आदादिकेन सहचरितो विदिरादादिक एव गृह्यते, न तु '**विद्लृ लाभे**' (५।९) इति तौदादिक इत्यर्थः । व्युपधत्वाद् वा न स्यादिति । परत्वाद् "**व्यञ्जनादेर्व्युपधस्यावो वा**" (४।१।११) इत्यनेन च विकल्पो न स्यात् । अस्य प्रतिषेधस्यानर्थक्यप्रसङ्गादिति भावः । '**वस निवासे**' (१।६१४) एवेति, न तु '**वस आच्छादने**' (२।४७) । तस्यायजादित्वेन गुणित्वे ह्यगुणित्वे च विशेषाभावात् सम्प्रसारणकृतो हि विशेष इति । "**शासिवसिघसीनां च**" (३।८।२७) इति षत्वम् ॥८६४।

**[क० च०]**

गुणी० । **पञ्जिका** नाम्यन्तानामिति । एवं सनि चानिटि इत्यत्राप्यनिड्ग्रहणं बोद्धव्यम्, यतोऽनेन यावन्तः सेट्प्रत्ययास्तावन्त एव गुणिनः, अनिटस्तु अगुण इति सिद्धं तर्हि

वचनमेवानर्थकम् , कथमनिड्ग्रहणस्यानर्थक्यमुद्भावितम्? सत्यम् , नियमार्थं भविष्यति– अनिट् सन् गुणी भवन् नाम्यन्तानां नाम्युपधानामेव, नान्येषाम् , तेन 'रिरंक्षति, सिस्वंक्षति' इति सिद्धम् । अन्यथा अगुणत्वान्नकारलोपः स्यात् । अथ तथापि नाम्यन्तानामनिटामिति वचनमनर्थकम् , "**सनि चानिटि**" (३।५।९) इत्यत्रानिड्ग्रहणमपनीय सनि चेति क्रियताम् , नाम्युपधानां नामिनां सनि गुणो भवतीति व्यावृत्त्या रिरङ्क्षतीत्यत्र कुतो गुणप्रसङ्गः, अयुक्तमेतत् । "**सनि च**" (३।५।९) इति सूत्रं नियमार्थं स्यात् । सनि नाम्युपधानामेवागुणो नान्येषामिति व्यावृत्त्या नाम्यन्तानामनिटामप्यगुणत्वं बाध्यते, तस्मान्नाम्यन्तानामिति कर्तव्यमेव ।

न चेति । अथ तृजादीनां गुणित्वे सत्यपि नियमो भविष्यति, तृजादीनां सेटामेव गुणित्वम्, तेन 'कर्ता' इत्यादौ गुणो न स्यात् , नैवम् । '**विधिनियमसम्भवे विधिरेव ज्यायान्**' (का० परि० ८४) इति कर्तरि रुचादीत्यादिज्ञापकाच्च । अथ भिन्नकर्तृकत्वात् कथं "**सनि चानिटि**" (३।५।९) इति । **ज्ञापकं** चेत् सापेक्षपक्षमाश्रित्य बोद्धव्यम् । निरपेक्षपक्षे तु इदमपि दूषणान्तरं भविष्यति । कश्चिद् इह विशेषमिति एकं **हेमोक्त**मिति न लिखितम् अन्यच्चकारपाठसामर्थ्यं पुनरिदमुपलक्षणमिति निकुचितिरिति **निर्गलितार्थः।**

अथ स्वमते तथापि क्त्वाग्रहणं न क्रियताम् , भिन्नवाक्यतापक्षे तु 'जघ्निव, जग्मिव' इत्यत्र यद् दूषणान्तरमुक्तम् , तद् "**जागुः कृत्यशन्तृङ्व्योः**" (४।१।८) इत्यतः कृदधिकारादर्थवशाद् विभक्तिविपरिणामे सति कृत् सेडेव गुणी भवतीति सूत्रार्थे कुत आख्यातेऽस्य विषयः । यच्च स्वमते जघ्निवान् इत्यादौ दूषणान्तरमुक्तं तत्रापीयं **युक्तिः**— "**आनोऽत्रात्मने**" (४।४।५) इति वचनादेव "**सर्वत्रात्मने**" (३।५।१ १) इति कानस्यागुणत्वं सिद्धम्, किं कानुबन्धेन। तस्मात् स्वमते प्रयोजनाभावात् क्वन्सौ सार्थकः कानुबन्धः क्तिप्रत्यये न प्रयोजनम् , यादृग्जातीयस्य विप्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायात्। अथ **पञ्च्यां** निगृहीतिरिति कथं प्रत्युदाहृतं सूत्रे ग्रहवर्जनादेव न भविष्यति ? सत्यम् रुदादीनां तावत् क्तौ इट् न संभवति, तत्साहचर्यादन्येषामपि क्तिप्रत्ययभिन्न एव बोद्ध० सेड् गुणीति ? सत्यम् , **उत्तरार्थं** क्त्वाग्रहणमवश्यं कर्तव्यम् । तथा च पुनः क्त्वाग्रहणं यद् गुणी मा भूदिति, एतच्चात्र स्थित एव क्त्वाग्रहणे शक्यते वक्तुम् । न च शीङादीन् सेड् निष्ठैवेति विपरीतनियमनिरासार्थमिति वाच्यम्, प्रत्ययस्य विशेष्यत्वेन प्राधान्यात् तस्यैव नियमो युक्तस्तथा सेड्ग्रहणमनर्थकं "**स्कन्दस्यन्द्वोः क्त्वा**" (४।१।१०) इत्यनिड्वचनादिष्ट सेडेवावधारयिष्यते? सत्यम् । "स्कन्दस्यन्द्वोः क्त्वा" (४।१।१०) इति **विपरीतनियमोऽपि** स्यात् । अथ प्राधान्यात् प्रत्ययनियम एव भविष्यति ? सत्यम्, स्कन्दस्यन्द्वोः कानुबन्धाश्रितमगुणत्वं नास्तीत्यपि ज्ञापयितुं शक्यत्वात् । अ यदव्यभिचारिणा व्यभिचारी नियम्यते, तत्साहचर्यम्। इह तु–सेड्विधिरन्य एव नास्तीति कुतोऽर

व्यभिचारित्वमित्याह–अथवेति । एतेन व्यभिचारित्वमपि सूचितम् । परत्वादिति । अथ कथमिह परत्वम् उभयोः सावकाशत्वाभावात् ? सत्यम् , **परशब्दोऽयं** विरोधिवचनो विरोधित्वं च परत्वादिति स्थितम् ।।८६४।

**[समीक्षा]**

'शयित्वा, देवित्वा' आदि शब्दरूपों के सिद्ध्यर्थ गुणादेश की आवश्यकता होती है, इसका विधान दोनों व्याकरणों में किया गया है । पाणिनि के अनेक सूत्र हैं—"न क्त्वा सेट्, पूङः क्त्वा च, नोपधात् थफान्ताद् वा, वञ्चिलुञ्च्यृतश्च, तृषिमृषिकृषेः काश्यपस्य, रलो व्युपधाद्धलादेः संश्च" (१।२।१८, २२-२६) । अन्तर यह है कि पाणिनि क्त्वा प्रत्यय में किद्भाव का निषेध करके गुणविधान करते हैं , जबकि कातन्त्रकार ने साक्षात् गुणविधान का निर्देश किया है । इस प्रकार पाणिनीय व्याकरण में गौरव तथा कातन्त्रव्याकरण में लाघव सन्निहित है ।

**[विशेष वचन]**

१. कश्चिन्महाधात्वधिकारमाश्रित्य प्रसज्यप्रतिषेधोऽयमिति मन्यते (दु० टी०)।

२. साहचर्यं पुनरत्र सूत्रपाठकृतमेव प्रतिपत्तव्यम् (दु० टी०) ।

३. लोके हि तदाश्रयत्वात् तद्व्यपदेशोऽपि दृश्यते (वि० प०) ।

४. निष्ठायां विपरीतनियमोऽपि स्यात् (वि० प०) ।

५. सम्प्रसारणकृतो हि विशेषः (क० च०) ।

६. यदव्यभिचारिणा व्यभिचारी नियम्यते तत् साहचर्यम् (क० च०) ।

७. परशब्दोऽयं विरोधिवचन; विरोधित्वं च परत्वादिति स्थितम् (क० च०)।

**[रूपसिद्धि]**

१. **शयित्वा** । शीङ् + इट् + क्त्वा + सि । 'शीङ् शये' (२।५५) धातु से "एककर्तृकयोः पूर्वकाले" (४।६।३) सूत्र द्वारा 'क्त्वा' प्रत्यय, इडागम, प्रकृत सूत्र द्वारा गुणादेश, एकार को अयादेश, लिङ्गसंज्ञा, सि-प्रत्यय, अव्ययसंज्ञा तथा सिलोप।

२. **देवित्वा**। दिव् + इट् + क्त्वा + सि । 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिषु' (३।१) धातु से क्त्वाप्रत्यय, इडागम, गुण तथा विभक्तिकार्य ।

३. **स्रंसित्वा**। स्रन्स् + इट् + क्त्वा + सि । 'स्रन्सु अवस्रंसने' (१।४८१) धातु से क्त्वा प्रत्यय, इडागम, नलोपाभाव, नकार को अनुस्वार तथा विभक्तिकार्य ।।८६४।

## ८६५. स्कन्दस्यन्द्योः क्त्वा [४।१।१०]

**[सूत्रार्थ]**

'स्कन्द्-स्यन्द्' धातुओं से क्त्वा प्रत्यय गुणी होता है ।।८६५।

[दु० वृ०]

अनयोः क्त्वा गुणी भवति । स्कन्दिर्-स्कन्त्वा । स्यन्दू -स्यन्त्वा । असेडर्थमिदम्। पुनः क्त्वाग्रहणं यब् गुणी मा भूत्—प्रस्कद्य, प्रस्यद्य ॥८६५।

[दु० टी०]

स्कन्द० । उदनुबन्धत्वात् स्यन्दूर्विकल्पेट् । पुनरित्यादि । क्त्वाग्रहणमिह व्यक्तिप्रतिपत्त्यर्थम्, तेन क्त्वाप्रत्ययस्य स्थाने यबादेशो न भवतीत्यर्थः ॥८६५।

[क० च०]

स्कन्द० । असेडर्थमिदमिति । स्कन्दस्यन्द्वोः पूर्वस्यैव विषयः पुनः क्त्वेति। अथ समासे भाविन्यनञः क्त्वो यबिति कानुबन्धः क्रियताम् । कानुबन्धबलादगुणत्वमेव यपि भविष्यति किं वाग्रहणेन ? नैवम् ।'मन्या' इत्यत्र समज्यासनीत्यादिना क्यपि परेऽपि यपि चेति पञ्चमलोपः स्यात् , स्थितौ तु न भवति **'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य'** (व्या०परि० ४६) इति न्यायात् । तथा चोक्तम् – क्यपो द्व्यनुबन्धकत्वाद् इति । अथ **"हनस्त च"** (४।२।२२) इति तकारविधानादादिष्टकारग्रहणं **"यपि चं"** (४।१।६०) इत्यत्र भविष्यति तदा **सुखार्थम्** । तर्हि **'रथादवस्कन्द्य पुरीं बभाषे'** इति वनपर्वणि 'अवस्कन्द्य' इति प्रयोगः कथं संगच्छते ? सत्यम् । **भाष्यकार**मते यब् गुणी मा भूदिति व्याख्यानं नास्ति तन्मते सिद्धम् । अत्र तु **वररुचि**प्रमाणादेवोक्तम् – यब् गुणी मा भूदिति व्याख्यानमत्र सूत्र एव बोद्धव्यम् । तेन-'आनंश्य, आसज्य' इति **"जान्तनशामनिटाम्"** (४।१।१४) इत्यत्रोदाहरणं बोद्धव्यम् , **पाणिनिसूत्रसम्मतत्वात्** ॥८६५।

[समीक्षा]

'स्कन्त्वा-स्यन्त्वा' प्रयोगों के सिद्ध्यर्थ नलोपाभाव अपेक्षित होता है, जो 'क्त्वा' के कित् मानने पर नहीं हो सकता । अपेक्षित इस कार्य का पाणिनि ने साक्षात् विधान किया है । उनका सूत्र है – "क्त्वि स्कन्दिस्यन्द्वोः" (अ० ६।४।३१) । कातन्त्रकार के अनुसार क्त्वा को गुणी मान लेने पर यह नलोपाभावरूप कार्य सम्पन्न होता है । इस प्रकार अर्थावबोध की दृष्टि से पाणिनीय व्याकरण में लाघव तथा कातन्त्र में गौरव कहा जा सकता है । इस सूत्र में पुनः क्त्वा-ग्रहण का प्रयोजन माना जाता है-यबादेश में क्त्वा को गुणी न होना-प्रस्कद्य, प्रस्यद्य ।

[विशेष वचन]

१. पुनः क्त्वाग्रहणं यब् गुणी मा भूत् – प्रस्कद्य, प्रस्यद्य (दु० वृ०) ।

२. आदिष्टकारग्रहणं यपि चेत्यत्र भविष्यति तदा सुखार्थम् (क० च०) ।

३. क्त्वाग्रहणमिह व्यक्तिप्रतिपत्त्यर्थम् (दु० टी०) ।

४. भाष्यकारमते यब् गुणी मा भूदिति व्याख्यानं नास्ति तन्मते सिद्धम् (क० च०)।

५. अत्र तु वररुचिप्रमाणादेवोक्तं यब् गुणी मा भूदिति (क० च०)।

६. 'आनंश्य–आसञ्य' इति ..... उदाहरणं बोद्धव्यम् , पाणिनिसूत्रसम्मतत्वात् (क्र० च०)।

[रूपसिद्धि]

१. **स्कन्त्वा।** स्कन्द् + क्त्वा + सि । 'स्कन्दिर् गतिशोषणयोः' (१।२८१) धातु से "एककर्तृकयोः पूर्वकाले" (४।६।३) सूत्र द्वारा क्त्वा-प्रत्यय, प्रकृतसूत्र से क्त्वा के गुणी होने से नलोप का अभाव, दकार को तकार तथा विभक्तिकार्य।

२. **स्यन्त्वा।** स्यन्द् + क्त्वा + सि । 'स्यन्दू स्रवणे' (१।४८७) धातु से क्त्वा प्रत्यय, प्रकृत सूत्र से नलोपाभाव, दकार को तकारादेश तथा विभक्तिकार्य ॥८६५।

## ८६६. व्यञ्जनादेर्व्युपधस्यावो वा [४।१।११]

[सूत्रार्थ]

व्यञ्जनादि तथा उकारेकारोपध धातु से होने वाला सेट् क्त्वा विकल्प से गुणी होता है, वकारान्त धातु को छोड़कर ॥८६६।

[दु० वृ०]

उश्च इश्च वी, ते उपधे यस्य स व्युपधः । व्यञ्जनादेर्धातोरुकारेकारोपधस्यावकारान्तस्य क्त्वा सेड् गुणी भवति वा । द्युतित्वा, द्योतित्वा । लिखित्वा, लेखित्वा । व्यञ्जनादेरिति किम् ? एषित्वा, ओषित्वा । अव इति किम् ? देवित्वा । संश्चेति वा वक्तव्यम् । रुरुचिषते, रुरोचिषते । लिलिखिषति, लिलेखिषति ॥८६६।

[दु० टी०]

व्यञ्ज० । प्राप्ते विभाषेयम् । संश्चेति वा वक्तव्यमिति । अत्रापि व्यञ्जनादेर्व्युपधस्यावो वेति सम्बन्धः । वक्तव्यं व्याख्येयम् । **केचिदिच्छन्ति केचिन्नेच्छन्ति गुणलक्षणमिह (तदुभयमिह) प्रमाणमित्यर्थः** ॥८६६।

[क० च०]

... वश्च यश्च व्यौ, ते उपधे यस्येत्यर्थः कथन्न स्यात् , नैवम् । अव इति वर्जनान्नां ... ान्तस्य यवावुपधे सम्भवतः । व्यञ्जनादिव्युपधस्येति सिद्धे पदभेदो व्यवहितस्यापि सेटोऽनुवृत्त्यर्थः । **वस्तुतस्तु पूर्वसूत्रेऽसम्भवात् सेटो नानुवृत्तिः**, अत्र तु सम्भवात् कथं नानुवृत्तिः ॥८६६।

[समीक्षा]

'लिखित्वा, लेखित्वा' इत्यादि दो-दो रूपों के सिद्ध्यर्थ गुणादेश तथा गुणनिषेध की आवश्यकता होती है, जिसका साक्षात् विधान कातन्त्रकार ने किया है, जबकि पाणिनि सेट् क्त्वा को विकल्प से कित् मानकर उक्त दोनों विधान करते हैं । उनके सूत्र हैं – "रलो

व्युपधाद्धलादेः संश्च, क्ङिति च" (अ० १।२।२६; १।५)। इस प्रकार पाणिनीय निर्देश में गौरव तथा कातन्त्रीय निर्देश में लाघव स्पष्ट प्रतीत होता है ।

**[विशेष वचन]**

१. केचिदिच्छन्ति केचिन्नेच्छन्ति गुणलक्षणमिह (तदुभयमिह) प्रमाणमित्यर्थ (दु० टी०) ।

२. पदभेदो व्यवहितस्यापि सेटोऽनुवृत्त्यर्थः (क० च०) ।

३. वस्तुतस्तु पूर्वसूत्रेऽसम्भवात् सेटो नानुवृत्ति, अत्र तु सम्भवात् कथं नानुवृत्तिः (क० च०) ।

**[रूपसिद्धि]**

१. **द्युतित्वा–द्योतित्वा** । द्युत् + इट् + क्त्वा + सि । 'द्युत दीप्तौ' (१।४७६) धातु से क्त्वाप्रत्यय, इडागम, प्रकृत सूत्र द्वारा विकल्प से गुण तथा विभक्तिकार्य ।

२. **लिखित्वा–लेखित्वा** । लिख् + इट् + क्त्वा + सि । 'लिख लिखने' (५।८२) धातु से क्त्वा-प्रत्यय, इडागम, प्रकृत सूत्र से वैकल्पिक गुणादेश तथा विभक्तिकार्य ॥८६६।

## ८६७. तृषिमृषिकृशिवञ्चिलुञ्च्यृतश्च [४।१।१२]

**[सूत्रार्थ]**

'तृष् - मृष् - कृश् - वञ्च् - लुञ्च् - ऋत' धातुओं से होने वाला सेट् क्त्वा प्रत्यय विकल्प से गुणी होता है ॥८६७।

**[दु० वृ०]**

एषां सेट् क्त्वा गुणी भवति वा । तर्षित्वा-तृषित्वा, मर्षित्वा-मृषित्वा । **'कृश तनूकरणे'** (३।६५) । कर्शित्वा-कृशित्वा, वञ्चित्वा-वचित्वा । लुञ्चित्वा-लुचित्वा । ऋत इति **सौत्रो धातुः**। अर्तित्वा-ऋतित्वा ॥८६७।

**[दु० टी०]**

तृषि० । 'वन्चु-चन्चु' (१।४९) इति **दण्डको** धातुः । **"उदनुबन्धपूक्लिशां क्त्व"** (४।६।८४) इति विकल्पेट् । ऋत इत्यादि। अस्मादेव सूत्रनिर्देशाद् धातुरवसीयते। **अन्ये** तु **"ऋतेर्णीयङ्"** इत्यसार्वधातुके विकल्पित इत्याहुः । इह तु ऋतीयङ् इति धात्वन्तरमेव निश्चितम् । चकार **उक्तसमुच्चयमात्रे** ॥८६७।

**[समीक्षा]**

'तर्षित्वा-तृषित्वा' इत्यादि शब्दरूपों के सिद्ध्यर्थ गुणादेश तथा गुणनिषेध दोनों की आवश्यकता होती है । इनका साक्षात् निर्देश कातन्त्रकार ने प्रकृत सूत्र द्वारा किया है, जबकि पाणिनि वैकल्पिक किद्विधान करके निषेध तथा पक्ष में

गुण करते हैं । उनके सूत्र हैं – "वञ्चिलुञ्च्यृतश्च, तृषिमृषिकृशेः काश्यपस्य, क्ङिति च" (अ० १।२।२४, २५; १।५) । इस प्रकार पाणिनि के निर्देश में गौरव तथा कातन्त्रीय निर्देश में लाघव स्पष्ट प्रतीत होता है ।

[विशेष वचन]

१. ऋत इति सौत्रो धातुः (दु० वृ०) ।

३. ऋत इत्याद्यस्मादेव सूत्रनिर्देशाद् धातुरवसीयते (दु० टी०) ।

३. अन्ये तु ऋतेर्णीयङ् इत्यसार्वधातुके विकल्पित इत्याहुः (दु० टी०)।

४. चकार उक्तसमुच्चयमात्रे (दु० टी०) ।

[रूपसिद्धि]

१. **तर्षित्वा-तृषित्वा** । तृष् + इट् + क्त्वा + सि । 'ञि तृष पिपासायाम्' (३।६६) धातु से क्त्वा प्रत्यय, इडागम, प्रकृत सूत्र से वैकल्पिक गुण तथा विभक्तिकार्य ।

२. **मर्षित्वा-मृषित्वा** । मृष् + इट् + क्त्वा + सि । 'मृष क्षमायाम्' (३।११८) धातु से क्त्वा प्रत्यय, इडागम, प्रकृत सूत्र से वैकल्पिक गुणादेश तथा विभक्तिकार्य ।

३. **कर्शित्वा–कृशित्वा** । कृश + इट् + क्त्वा + सि । 'कृश तनूकरणे' (३।६५) धातु से क्त्वा प्रत्यय आदि पूर्ववत् ।

४. **वञ्चित्वा–वचित्वा** । वन्च् + इट् + क्त्वा + सि । 'वन्चु प्रलम्भने' (९।१२३) धातु से क्त्वा प्रत्यय, इडागम, गुणीपक्ष में नलोप तथा विभक्तिकार्य ।

५. **लुञ्चित्वा–लुचित्वा** । लुन्च् + इट् + क्त्वा + सि । 'लुन्च् अपनयने' (१।४७) धातु से क्त्वा प्रत्यय-आदि पूर्ववत् ।

६. **अर्तित्वा–ऋतित्वा** । ऋत् + इट् + क्त्वा + सि । 'ऋत' इस सौत्र धातु से क्त्वा प्रत्यय आदि पूर्ववत् ॥८६७।

## ८६८. थफान्तानां चानुषङ्गिणाम् [४।१।१३]

[सूत्रार्थ]

थकारान्त तथा फकारान्त नकारयुक्त धातुओं से होने वाला सेट् क्त्वा विकल्प से गुणी [illegible]ता [illegible] ॥८६८।

[दु० वृ०]

थान्तानां फान्तानाञ्चानुषङ्गिणां सेट् क्त्वा गुणी भवति वा । श्रन्थित्वा – श्रथित्वा । ग्रन्थित्वा – ग्रथित्वा । गुम्फित्वा–गुफित्वा । अनुषङ्गिणामिति किम् ? कोथित्वा, रेफित्वा। व्युपधत्वेऽपि विकल्पो न स्यात् ॥८६८।

[दु० टी०]

थफा० । श्रन्थित्वा, ग्रन्थित्वेति । **'श्रन्थ ग्रन्थ सन्दर्भे'** (८।३३, ३५) । गुम्फित्वेति। **'गुफ गुन्फ ग्रन्थे'** (५।३४) । अनुषङ्गिणामित्यादि । **'कुथ पूतीभावे'** (३।९) रिफ

**कथनयुक्तनिन्दाहिंसादानेषु**। अनुषङ्गिग्रहणबलाद् योगान्तरगतो विकल्पो बाध्यते इत्यर्थः। न च ऋकारोपधस्यानुषङ्गिग्रहणस्य प्रत्युदाहरणविषये ऋफ ऋन्फ हिंसायामिति, यस्मात् सत्यप्यनुषङ्गिग्रहणे ऋफेर्गुणी क्त्वा सेडिति अर्फित्वा ऋन्फेरनुषङ्गिणोऽप्यस्मिन् विकल्पे ऋफित्वा-ऋम्फित्वेति रूपत्रयमसत्यपि तदेवेति भावः । अन्तग्रहणमिह **स्पष्टार्थ**मिति भावः ॥८६८।

[वि० प०]

थफा० । कोथित्वा, रेफित्वेति । 'कुथ पूतीभावे, रिफ कथनयुद्धनिन्दाहिंसादानेषु' (३।९; ५।३०), यदि पुनरिह "व्यञ्जनादेर्व्युपधस्यावो वा" (४।१।११) इत्यनेन विकल्पः स्यात् तदानुषङ्गिग्रहणमनर्थकं स्याद् व्यावृत्तेरभावात्। अथ नानर्थकम् ऋफेर्व्यावृत्तिविषयत्वात् । यथा "ऋफ ऋन्फ हिंसायाम्" (५।३२) इति, तदयुक्तम् , अनुषङ्गिग्रहणे ऋफेर्गुणी क्त्वा सेडिति वचनाद् अर्फित्वा, ऋन्फेरनुषङ्गिणोऽपि अनेन विकल्पे सति ऋम्फित्वा, ऋफित्वेति रूपत्रयम् । एतच्चासत्यप्यनुषङ्गिग्रहणे स्यादेवेति नास्ति व्यावृत्तिरन्यत्रेत्याह – व्युपधत्वेऽपीति ॥८६८।

[समीक्षा]

'ग्रथित्वा-ग्रन्थित्वा, गुफित्वा-गुम्फित्वा' आदि शब्दरूपों के सिद्ध्यर्थ वैकल्पिक नलोप की अपेक्षा होती है । इसका विधान उभयत्र किया गया है । पाणिनि का सूत्र है – "नोपधात् थफान्ताद् वा" (अ० १।२।२३) । तदनुसार क्त्वा को विकल्प से किद्भाव होता है, किद्भावपक्ष में नलोप प्रवृत्त होता है अन्यथा नहीं । कातन्त्रकार ने क्त्वा को गुणी मानकर यह कार्य किया है । अतः उभयत्र समानता है ।

[विशेष वचन]

१. अन्तग्रहणमिह स्पष्टार्थमेव (दु० टी०) ।

[रूपसिद्धि]

१. **श्रन्थित्वा – श्रथित्वा**। श्रन्थ् + इट् + क्त्वा + सि । 'श्रन्थ मोचनप्रतिहर्षणयोः' (८।३३) धातु से क्त्वा प्रत्यय, इडागम, प्रकृत सूत्र से वैकल्पिक गुणीभाव, नलोप तथा विभक्तिकार्य ।

२. **ग्रन्थित्वा–ग्रथित्वा**। ग्रन्थ् + इट् + क्त्वा + सि । 'ग्रन्थ सन्दर्भे' (८।३५) धातु से क्त्वा प्रत्यय, इडागम, वैकल्पिक गुणीभाव, नलोप तथा विभक्तिकार्य ।

३. **गुम्फित्वा–गुफित्वा**। गुन्फ् + इट् + क्त्वा + सि । 'गुन्फ ग्रन्थे' (५।३४) धातु से क्त्वा प्रत्यय, इडागम, वैकल्पिक गुणीभाव, नकारलोप तथा विभक्तिकार्य ॥८६८।

## ८६९. जान्तनशामनिटाम् [४।१।१४]

[सूत्रार्थ]

अनिट्-नकारघटित जकारान्त धातुओं से तथा नश् धातु से होने वाले क्त्वा प्रत्यय को गुणीभाव विकल्प से होता है ।।८६९।

[दु० वृ०]

जान्तनशामनिटामनुषङ्गिणां क्त्वा गुणी भवति वा । भङ्क्त्वा, भक्त्वा। रङ्क्त्वा, रक्त्वा । नंष्ट्वा, नष्ट्वा । "**मस्जिनशोर्धुटि**" (३।५।३१) इति नकारागमः। अनिटामिति किम्? अञ्जित्वा ।।८६९।

[दु० टी०]

जान्त० । अन्तग्रहणमिहापि **स्पष्टार्थमेव** । रधादित्वान्नशिर्विभाषेट् । अञ्जित्वेति। ऊदनुबन्धत्वाद् विकल्पेट् ।।८६९।

[समीक्षा]

द्रष्टव्य सूत्रसंख्या- ८६८ ।

[विशेष वचन]

१. अन्तग्रहणमिहापि स्पष्टार्थमेव (दु० टी०) ।

[रूपसिद्धि]

१. **भङ्क्त्वा-भक्त्वा** । भन्ज् + क्त्वा + सि । 'भन्जो आमर्दने' (६।१३) धातु से क्त्वाप्रत्यय, अनिट् , वैकल्पिक गुणीभाव, गुणीभावपक्ष में नलोप तथा विभक्तिकार्य ।

२. **रङ्क्त्वा – रक्त्वा** । रन्ज् + क्त्वा + सि । 'रन्ज रागे' (१।६०५) धातु से क्त्वाप्रत्यय, अनिट् , गुणीभाव, वैकल्पिक नकारलोप तथा विभक्तिकार्य ।

३. **नंष्ट्वा-नष्ट्वा**। नश् + क्त्वा + सि । 'नश अदर्शने' (३।४१) धातु से क्त्वाप्रत्यय तथा अन्य प्रक्रिया पूर्ववत् ।।८६९।

## ८७०. शीङ्पूङ्धृषिक्षिदिस्विदिमिदां निष्ठा सेट् [४।१।१५]

[सूत्रार्थ]

शीङ् इत्यादि छह धातुओं से होने वाले सेट् 'क्त-क्तवन्तु' प्रत्ययों को गुणीभाव होता है ।।८७०।

[दु० वृ०]

शीङादीनां सेड् निष्ठा गुणी भवति । शयितः, शयितवान् । पवितः, पवितवान्। "**पूक्लिशोर्वा**" (४।६।८९) इतीट् । धर्षितः, धर्षितवान् । क्षेदितम् , स्वेदितम् , मेदितम्। प्रक्षेदितः, प्रस्वेदितः, प्रमेदितः । आदनुबन्धत्वाद् "**भावादिकर्मणोर्वा**" (४।६।९२) इतीट् । सेडिति किम् ? पूतः, धृष्टः । उत्तरत्र वावचनान्नित्यमिहेति ।।८७०।

[दु० टी०]

शीङ्० । धर्षित इति । आदनुबन्धाच्चेतीट्प्रतिषेधो नास्ति, तत्र हि प्रागल्भ्य एवेति वक्ष्यति । स्वेदितमित्यादौ भावे दर्शिता निष्ठा। आदिकर्मणि तु प्रश्वेदितः, प्रस्वेदित इत्यादि। प्रशब्द आदिकर्मणो द्योतकः । शीङ्पूङोर्ङकारानुबन्धः **स्पष्टार्थ** एव। **कश्चिद्** आह – 'शेश्यितः, शेश्यितवान्' इति प्रकृतिग्रहणे चेक्रीयितलुगन्तस्यापि ग्रहणं मा भूदिति तत्र, **छान्दसत्वात्** । एवं पोपुवितः, पोपुवितवान् इति । पूङस्तु "**न श्र्युवर्णवृतां कानुबन्धे**" (४।६।७९) इतीडभाव एवेति । उत्तरत्रेत्यादि । उभयोर्विभाषयोर्मध्ये ये विधयस्ते नित्या भवन्तीत्यर्थः ॥८७०।

[वि० प०]

शीङ्० । निष्ठायाः स्त्रीलिङ्गत्वाद् गुणिनी भवतीति वक्तुं युज्यते । कथमुक्तम्– गुणी भवतीति ? सत्यम् , सेङ् गुणीति सामान्येन प्रयुज्य पश्चान्निष्ठेति सम्बन्धनीयम्। धर्षित इति । आदनुबन्धाच्चेतीट्प्रतिषेधो नास्तीति तत्र **प्रागल्भ्य** एवार्थे प्रतिषेधस्य वक्ष्यमाणत्वात् ॥८७०।

[समीक्षा]

'शयितः–शयितवान्' आदि शब्दरूपों के सिद्ध्यर्थ धातुगत ईकारादि के गुण की आवश्यकता होती है, जिसका निर्वाह दोनों व्याकरणों में किया गया है । पाणिनि का सूत्र है – "निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः" (अ० १।२।१९) । तदनुसार सेट् निष्ठा को कित् नहीं माना गया, जिसके फलस्वरूप "क्ङिति च" (अ० १।१।५) से गुणनिषेध प्रवृत्त नहीं होता । कातन्त्रकार ने साक्षात् गुणविधान से लाघव दिखाया है ।

[विशेष वचन]

१. उत्तरत्र वावचनान्नित्यमिहेति (दु० वृ०) ।

२. उभयोर्विभाषयोर्मध्ये ये विधयस्ते नित्या भवन्तीत्यर्थः (दु० टी०)।

[रूपसिद्धि]

१-२. **शयितः, शयितवान्** । शीङ् + इट् + क्त, क्तवन्तु + सि । 'शीङ् स्वप्ने' (२।५५) धातु से "निष्ठा" (४।३।९३) सूत्र द्वारा 'क्त-क्तवन्तु' प्रत्यय, इडागम, प्रकृत सूत्र से गुणीभाव, लिङ्गसंज्ञा, सि-प्रत्यय, नकार की उपधा को दीर्घ, सकार को विसर्ग अथवा लोप ।

३-४. **पवितः, पवितवान्** । पूङ् + इट् + क्त, क्तवन्तु + सि । 'पूङ् पवने' (१।४६५) धातु से 'क्त-क्तवन्तु' प्रत्यय तथा अन्य प्रक्रिया पूर्ववत् ।

५-६. **धर्षितः, धर्षितवान्** । धृष् + इट् + क्त, क्तवन्तु + सि । 'धृष प्रहसने' (९।२८९) धातु से क्तप्रत्ययादि प्रक्रिया पूर्ववत् ।

७-८. **क्षेदितम् , प्रक्षेदितः**। क्षिद् + इट् + क्त + सि । 'ञि क्षिदा मोचने च' (३।७८) धातु से क्तप्रत्ययादि पूर्ववत् ।

९-१०. **स्वेदितम्, प्रस्वेदितः**। स्विद् + इट् + क्त + सि । 'ञि ष्विदा मोचने च' (१।४७६) धातु से क्तप्रत्ययादि पूर्ववत् ।

११-१२. **मेदितम् , प्रमेदितः**। मिद् + इट् + क्त + सि । 'ञि मिदा स्नेहने' (१।४७५) धातु से क्तप्रत्ययादि पूर्ववत् ॥८७०।

## ८७१. मृषः क्षमायाम् [४।१।१६]

**[सूत्रार्थ]**

क्षान्ति अर्थ में वर्तमान 'मृष' धातु से सेट् निष्ठा को गुणीभाव होता है ॥८७१।

**[दु० वृ०]**

क्षान्तौ वर्तमानान्मृषो धातोर्निष्ठा सेड् गुणी भवति । मर्षितः, मर्षितवान् । क्षमायामिति किम् ? उपमृषितं वाक्यमाह ॥८७१।

**[दु० टी०]**

मृष० । अपमृषितमिति । अपम्लिष्टमित्यर्थः, अनेकार्थत्वाद् धातूनामिति । अनेकार्थत्वं पुनः क्षमाग्रहणाद् विज्ञायते, अन्यथा 'मृष' इति क्षमायामेव पठ्यते, किमत्र क्षमाग्रहणेनेति भावः ॥८७१।

**[समीक्षा]**

द्रष्टव्य – सूत्रसंख्या - ८७० । पाणिनीय सूत्र – "मृषस्तितिक्षायाम्" (अ० १।२।२२) ।

**[विशेष वचन]**

१. अनेकार्थत्वं पुनः क्षमाग्रहणाद् विज्ञायते, अन्यथा मृष इति क्षमायामेव पठ्यते, किमत्र क्षमाग्रहणेनेति भावः (दु० टी०) ।

**[रूपसिद्धि]**

१-२. **मर्षितः, मर्षितवान्**। मृष् + इट् + क्त, क्तवन्तु + सि । 'मृष तितिक्षायाम्' (९।२९०) धातु से क्त-क्तवन्तु प्रत्यय, इडागम, प्रकृत सूत्र से गुणीभाव, लिङ्गसंज्ञा तथा विभक्तिकार्य ॥८७१।

## ८७२. भावादिकर्मणोर्वोदुपधात् [४।१।१७]

**[सूत्रार्थ]**

उकारोपध धातु से भाव तथा आदि कर्म अर्थ में विहित सेट् निष्ठा प्रत्यय को वैकल्पिक गुणीभाव होता है ॥८७२।

**[दु० वृ०]**

उदुपधाद् धातोर्भावे आदिक्रियायां च निष्ठा सेड् गुणी भवति वा । द्युतितमनेन,

द्योतितमनेन । प्रद्युतितः, प्रद्योतितः । **"आदिकर्मणि क्तः कर्तरि च"** (४।६।४८)। **व्यवस्थितवाधिकाराद्** गुण्यनः स्यात् । निगुधितम् ॥८७२।

**[दु० टी०]**

भावादि० । आदिभूते क्रियालक्षणे भूतत्वेन विवक्षिते यः क्तो भवति, स आदिकर्मणि वर्तते इत्यर्थः । **"आदिकर्मणि क्तः कर्तरि च"** (४।६।४८) इति कर्तर्येव क्तप्रत्ययो द्युतेरकर्मकत्वात् नापि भावे विशेषप्रसङ्गाभावात् कर्तरि ये उत्पन्नः स आदिकर्मणीत्युच्यते। आदिकर्मयोगश्चार्थद्वारक इति । व्यवस्थितेत्यादि । गुणी अन् विकरणो यस्माद् धातोरसौ **गुण्यन्,** तत एव भवतीत्यर्थः। **'गुध परिवेष्टने'** (३।११) इति यन् विकरणो वर्तते, विभाषाऽत्र न भवतीत्यर्थः । **वृत्तौ** गुणिग्रहणात् तौदादिकादपि न विभाषा । **'तुफ तुन्फ'** (५।३२) । तुफितमनेन । आदादिकाद् भवत्येव विभाषा । **'तुर त्वरणे'** (२।७७) । तुरितम्, तोरितमनेनेति । उदिति तकारः **सुखप्रतिपत्त्यर्थः** ॥८७२।

**[वि० प०]**

भावादि० । व्यवस्थितेत्यादि । गुणी अन् विकरणो यस्माद् धातोरसौ गुण्यन्, तस्मादेवेत्यर्थः । **'गुध परिवेष्टने'** (३।११) इति दैवादिकत्वाद् यन् विकरणो वर्तते । गुणीति विशेषणात् तौदादिकादपि न विभाषा । तेन **'तुफ तुन्फ'** (५।३२) तुफितमनेन । आदादिकत्वाद् विभाषैव । **'तुर त्वरणे'** (२।७७) । तुरितमनेन, तोरितमनेनेति ॥८७२।

**[समीक्षा]**

'द्युतितम् , द्योतितम् ' आदि शब्दरूपों के सिद्ध्यर्थ वैकल्पिक गुणविधान की व्यवस्था दोनों व्याकरणों में की गई है । पाणिनि का सूत्र है – "उदुपधाद् भावादिकर्मणोरन्यतरस्याम्" (अ० १।२।२१) । इससे निष्ठा प्रत्यय को विकल्प से किद्भाव होता है, कित्पक्ष में "क्ङिति च" (अ० १।२।५) से गुण नहीं हो पाता है, जबकि पक्ष में गुण प्रवृत्त होता है । कातन्त्रकार ने साक्षात् गुणीभाव करके लाघव दिखाया है ।

**[विशेष वचन]**

१. उदित तकारः सुखप्रतिपत्त्यर्थः (दु० टी०) ।

**[रूपसिद्धि]**

१. **द्युतितम् , द्योतितम्।** द्युत् + इट् + क्त + सि । 'द्युत दीप्तौ' (१।४७३) धातु से 'क्त' प्रत्यय, इडागम, प्रकृत सूत्र से वैकल्पिक गुणीभाव, लिङ्गसंज्ञा, सि-प्रत्यय तथा "अकारादसम्बुद्धौ मुश्च" (२।२।७) से 'मु' आगम-सिलोप ।

२. **प्रद्युतितः, प्रद्योतितः।** प्र + द्युत् + इट् + क्त + सि । प्र-उपसर्गपूर्वक 'द्युत दीप्तौ' (१।४७३) धातु से क्तप्रत्ययादि पूर्ववत् ॥८७२।

## ८७३. ह्लादो ह्रस्वः [४।१।१८]

[सूत्रार्थ]

निष्ठासंज्ञक 'क्त-क्तवन्तु' प्रत्ययों के परे रहते 'ह्लाद्' धातुगत आकार को ह्रस्वादेश होता है ॥८७३।

**[दु० वृ०]** ह्लादो दीर्घो ह्रस्वो भवति निष्ठामात्रे । प्रह्लन्नः, प्रह्लन्नवान् । प्रह्लत्तिरिति क्तौ चेष्यते ॥८७३।

**[दु० टी०]**

ह्लादः । निष्ठामात्र इति भावादिकर्मणोर्विहितायां निष्ठायामिति सम्बन्धो नात्र, **अधिकारस्येष्टत्वात्**, तेन कर्तर्यपि भवति । अर्थवशात् प्रथमान्तोऽपि सप्तम्यन्तत्वेन परिणतः प्रह्लत्तिरिति कैश्चिदिष्यते इत्यर्थः । इह तु दीर्घवानेव प्रह्लात्तिरिति **प्रमाणम्** ॥८७३।

[वि० प०]

ह्लादः । विशेषातिदिष्टत्वाद् भावादिकर्मणोरिति न वर्तते, तेन सामान्येन निष्ठा गम्यते । अर्थवशाद् **विभक्तिविपरिणामश्चे**त्याह–निष्ठामात्र इति । प्रह्लत्तिरिति क्तौ चेष्यते इति **कैश्चिदि**ति शेषः । इह तु प्रह्लात्तिरिति प्रमाणम् ॥८७३।

[समीक्षा]

**'प्रह्लन्नः, प्रह्लन्नवान्'** इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों व्याकरणों में ह्लादधातुगत आकार को ह्रस्वविधान किया गया है । पाणिनि का सूत्र है – "ह्लादो निष्ठायाम्" (अ० ६।४।९५) । अतः उभयत्र समानता है ।

**[विशेष वचन]**

१. प्रह्लत्तिरिति कैश्चिदिष्यते इत्यर्थः (दु० टी०; वि० प०) ।

२. अर्थवशाद् विभक्तिविपरिणामः (वि० प०) ।

**[रूपसिद्धि]**

१-२. **प्रह्लन्नः, प्रह्लन्नवान्** । प्र + ह्लाद् + क्त, क्तवन्तु + सि । प्र-उपसर्गपूर्वक **'ह्लादी सुखे च'** (१।३१२) धातु से 'क्त-क्तवन्तु' प्रत्यय, "न डीश्वीदनुबन्धवेटामपतिनिष्कुषोः" (४।६।९०) से अनिट्, प्रकृत सूत्र से आकार को ह्रस्व, **"दाद् दस्य च"** (४।६।१०२) से तकार-दकार को नकार तथा विभक्तिकार्य ॥८७३।

## ८७४. छादेर्घेस्मन्त्रन्क्विप्सु च [४।१।१९]

[सूत्रार्थ]

'घ-इस् - मन् - त्रन् - क्विप्' प्रत्ययों के परे रहते इन् - प्रत्ययान्त 'छादि' धातु के आकार को ह्रस्वादेश होता है ॥ ८७४।

[दु० वृ०]

छादेर्धातोर्घ-इस् - मन् - त्रन् - क्विप् - एषु परतो दीर्घो ह्रस्वो भवति । **'छद खट्व संवरणे'** (९।२३)। उरश्छदः, प्रच्छदः । एकोपसर्गस्यैव घे व्यवस्थितवास्मरणात्। तेन समुपच्छादः । अर्चि - शुचि - रुचि - हु - सृपि - छादि - छर्दिभ्य इस् । छादयतीति **छदिः**, छदिषी, छदींषि। मन्-**छद्म**। त्रन् - छाद्यतेऽनेनेति **छत्रम्** । क्विप्- तनुच्छत् ।।८७४।

[दु० टी०]

छादेः । छादेरित्यादि । चौरादिकत्वात् स्वार्थे इन् । प्रच्छाद्यतेऽनेनेति **प्रच्छदः**। **"पुंसि संज्ञायां घः"** (४।५।९६) । एक इत्यादि । ह्लादो ह्रस्व इत्यत्र न स्मर्यते विभाषेत्यर्थः। एकोपसर्गस्यैव घे प्रत्ययेऽनेकोपसर्गस्य न भवतीति व्यावृत्त्या केवलस्य छादेर्ह्रस्वः स्यादेव। किञ्च समुपच्छादः, समुपाधिच्छादः इति संज्ञायां घो नाभिधीयते इति मतम् । **चकार उक्तसमुच्चयमात्रे**। घ इति किम् ? प्रच्छादनं **प्रच्छादः**। **'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य'** (व्या० परि० ४६) इति घञो न ग्रहणम्। अथ किमर्थं छादेरित्यर्थाद् इन्व्यवधाने भविष्यति ? सत्यम् , **प्रतिपत्तिरियं गरीयसीति**। ननु कारितलोपे कृते निमित्ताभावे नैमित्तिकस्याप्यभावो भविष्यति किमनेन । न च दीर्घविधिं प्रति स्थानिवद्भावो न पदान्तेत्यादिना निषेधात् ? सत्यम्। प्रत्ययलोपे प्रत्ययलक्षणं स्यादिति, कथमन्यथा प्रच्छादनमिति दीर्घः ।।८७४।

[समीक्षा]

'उरश्छदः, प्रच्छदः, दन्तच्छदः' आदि शब्दरूपों के सिद्ध्यर्थ दोनों व्याकरणों में ह्रस्वविधान किया गया है । पाणिनि के दो सूत्र हैं - "छादेर्घेऽद्व्युपसर्गस्य, इस्मन्त्रन्क्विषु च" (अ० ६।४।९६, ९७) । पाणिनीय व्याकरण में दो सूत्रों से उत्पन्न गौरव को छोड़कर अन्य तो उभयत्र समानता ही है ।

[विशेष वचन]

१. चकार उक्तसमुच्चयमात्रे (दु० टी०)।

२. प्रतिपत्तिरियं गरीयसीति (दु० टी०) ।

[रूपसिद्धि]

१. **उरश्छदः**। उरस् + छादि + घ + सि । छाद्यतेऽनेन । 'छद संवरणे' (९।२३) धातु से इन् प्रत्यय, उपधादीर्घ, घप्रत्यय, प्रकृतसूत्र से ह्रस्व । उरसश्छदः। उरस् - शब्द के साथ समास, लिङ्गसंज्ञा तथा विभक्तिकार्य ।

२. **प्रच्छदः**। प्र + छादि + घ + सि । प्र-उपसर्गपूर्वक 'छादि' धातु से घ-प्रत्यय, प्रकृत सूत्र से ह्रस्व, इन् का लोप तथा विभक्तिकार्य ।

३. **छदिः**। छद् + इन् + इस् + सि । छादयति । इन्प्रत्ययान्त 'छादि' धातु से इस् प्रत्यय, ह्रस्व, इन्लोप तथा विभक्तिकार्य ।

४. **छद्म**। छद् + इन् + मन् + सि । 'छादि' धातु से मन् प्रत्यय, ह्रस्व, इन्लोप तथा विभक्तिकार्य ।

५. **छत्त्रम्**। छादि + त्रन् + सि । छाद्यतेऽनेन । 'छादि' धातु से त्रन् प्रत्यय, ह्रस्व, इन्लोप तथा विभक्तिकार्य ।

६. **तनुच्छत्**। तनु + छादि + क्विप् + सि । तनु - उपपदपूर्वक 'छादि' धातु से क्विप् प्रत्यय, सर्वापहारी लोप, ह्रस्व, इन्लोप तथा विभक्तिकार्य ॥८७४।

## ८७५. दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे [४।१।२०]

**[सूत्रार्थ]**

ख् – अनुबन्ध वाला कृत्प्रत्यय जिसके अन्त में हो वैसी धातु के परे रहते अव्ययभिन्न दीर्घान्त पूर्ववर्ती पद को ह्रस्वादेश होता है ॥८७५।

**[दु० वृ०]**

दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे प्रत्ययान्ते धातौ परे ह्रस्वो भवति । वधुम्मन्या दासी, ग्रामणिम्मन्यो दासः । वृद्धम्मन्या, कालिम्मन्या । हरिणिम्मन्येति विवक्षितकर्तृकर्मैकवस्तुप्राप्तं पुंवद्भावं बाधते परत्वात् । दीर्घग्रहणं **तदन्तसुखार्थमित्येके**। वाङ्मन्या । उपपदस्येति किम् ? पट्वी प्रियंवदा । अनव्ययस्येति किम् ? दिवामन्या रात्रिः ॥८७५।

**[दु० टी०]**

दीर्घस्य० । "**खश् चात्मने**" (४।३।८०) इति खश् । एकं च तद् वस्तु चेति **एकवस्तु**। कर्ता च कर्म च **कर्तृकर्मणी**। विवक्षिते कर्तृकर्मणी यस्मिन्नेकवस्तुनीति विग्रहः। तुल्याधिकरणत्वात् प्राप्तं पुंवद्भावं बाधते, परत्वादित्यर्थः । ननु किमर्थं दीर्घग्रहणम् , ह्रस्वेन सामर्थ्यादानीतं स्वरग्रहणम् , तेन तदन्तं विशेषयिष्यामः । कुतो यत्र तत्र स्थितस्य स्वरस्य ह्रस्व इति ? सत्यम् , **प्रतिपत्तिरियं गरीयसीत्याह** – दीर्घेत्यादि । केचिदित्यनेन न वयमित्यर्थः । दीर्घग्रहणमदीर्घव्यावर्तनार्थम् , पूर्वो ह्रस्वः परो दीर्घ इति । **परमतेन** 'रैमन्यः, उत्तमनौमन्यः' इति भवितव्यम् , अन्यथा स्वरस्येति विदध्यात् । यथा "**स्वरो ह्रस्वो नपुंसके**" (२।४।५२) इति । **आद्या वृत्तिकाराश्चैवमेवोदाहृतवन्तः**, **परदर्शने** तु 'परमरिम्मन्यः, उत्तमनुम्मन्यः' इति । पट्वी प्रियंवदेति । "**वदेः खः प्रियवशयोः**" (४।३।३९), प्रियशब्दस्योपपदत्वम् , न पट्वीशब्दस्येति ॥८७५।

**[वि० प०]**

दीर्घस्य० । वधूमात्मानं मन्यते इति विगृह्य "**खश् चात्मने**" (४।३।८०) इति खश्, दिवादेर्यन् , ह्रस्वत्वे कृते "**ह्रस्वारुषोर्मोऽन्तः**" (४।१।२२) इति मकारो भवति ।

विवक्षितेत्यादि । विवक्षिते कर्तृकर्मणी यस्मिंस्तद् **विवक्षितकर्तृकर्म** तच्च तदेकवस्तु चेति **विवक्षितकर्तृकर्मैकवस्तु,** तस्मिन् प्राप्तमित्यर्थः । वृद्धामात्मानं मन्यते, कालीमात्मानं मन्यते, हरिणीमात्मानं मन्यते इति **विवक्षावशादेक** एवार्थः, कर्ता कर्म च वर्तते । ततो यथा विदुषीमात्मानं मन्यते विद्वन्मानिनीत्यादौ पुंवद्भाषितेत्यादिना णिनि पुंवद्भावः। यद् वक्ष्यति -'तुल्याधिकरणत्वाण्णिनि पुंवद्भावः' इति । तथा खश्प्रत्ययेऽपि प्राप्नोतीति। अतः परत्वादयं ह्रस्वो बाधते इति । ह्रस्वे सति स्त्रीकारो न निवर्तते । अथ किमर्थमिदं दीर्घग्रहणम्, स्वरस्यैव स्थाने ह्रस्वस्तद्धर्मो भविष्यतीति? सत्यम्, तदन्तार्थम्। अन्यथा वाचमात्मानं मन्यते वाङ्मन्येति । मध्यस्यापि स्वरस्य ह्रस्वः स्यादिति। तदयुक्तम्, सामर्थ्यप्राप्तेन स्वरेण तदन्तविशेषणं भविष्यतीति? सत्यम्, एवं सति **प्रतिपत्तिरियं गरीयसीत्याह**–दीर्घेति । **एके अन्ये। वयं** तु पश्यामः–दीर्घग्रहणमदीर्घस्य व्यावृत्त्यर्थमेव। तेन 'परमनौमन्यः, उत्तमरैमन्यः' इति सिद्धम् । इह सन्ध्यक्षराणामदीर्घत्वान्न ह्रस्वः। **सुखार्थवादिनस्तु** नित्यं सन्ध्यक्षराणि दीर्घाणीत्याचक्षाणाः 'परमनुम्मन्यः, उत्तमरिम्मन्यः' इति ह्रस्वमेव प्रतिपन्नाः। स हि यद्येवम्मन्यमानः स्वरस्येत्याचक्षीत, यथा **"स्वरो ह्रस्वो नपुंसके"** (२।४।५२) इति, किं दीर्घग्रहणं स्वरविशेषार्थमभिदध्यादिति । **आद्या वृत्तिकारास्तु** एवमेव **वररुचे**रभिप्रायं वर्णयाम्बभूवुरिति । पट्वी प्रियंवदेति । **"वदेः खः प्रियवशयोः"** (४।३।३९) इति । इह प्रियशब्दस्योपपदत्वं न पट्वीशब्दस्येति ।।८७५।

**[क० च०]**

दीर्घस्य० । ऋकारः स्थितिमात्रास्तीति यदनुबन्धग्रहणं तद् **'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य'** (व्या० परि० ४६) इति **परिभाषाज्ञापनार्थम्** । एतच्च यदि **"ञ्णानुबन्धे०"** (४।१।१) इत्यस्यानुबन्धग्रहणादुच्यते, तदा **सुखार्थम्।** खानुबन्धप्रत्ययान्ते परे उपपदमव्यवहितं न सम्भवतीत्यर्थाद् **'येन नाव्यवधानं तेन व्यवहितेऽपि'** (व्या० परि० ३८) स्यादिति पर्यवसितार्थमाह – खानुबन्धे प्रत्ययान्ते धातौ पर इति। वृद्धम्मन्येत्यादि । प्राप्तमिति आदिकर्मणि क्तः, प्राप्तुमारभमाण इत्यर्थः। न च सामान्यातीते, प्रवृत्तस्य निषेद्धुमशक्यत्वात्। ननु यथा 'दीर्घजङ्घः' इत्यत्र तुल्याधिकरणत्वम्, तथा नात्र कालीशब्दस्य कर्मत्वं मन्याशब्दरूपस्य कर्तृत्वम् , अतो भेदेनान्वयबोधात् कथं तुल्यार्थता? सत्यम्। एकाधिकरणे एकार्थत्वप्रयुक्ते इत्येव तत्रार्थः। न च तत्र विभक्तिगतभेदाभेदविचारोऽस्ति, न वा **स्वमते** कर्मादिकं लिङ्गार्थम् , द्विकवादित्वात्, येनार्थभेदोऽपि वाच्यः। तेन विभक्तिभेदेऽपि सामान्यतः कर्त्री सैव कालीशब्दवाच्या इत्येकव्यक्तौ शब्दद्वयस्य प्रवृत्तत्वात् तुल्याधिकरणता।

ननु पुंवद्भावह्रस्वयोरेककालप्राप्तेरभावात् कथं परत्वेन बाधकत्वमुच्यते। **परत्वं** तु विप्रतिषेधे भवति । विप्रतिषेधश्च यत्रान्यार्थौ द्वौ प्रसङ्गावेकस्मिन् विषये युगपत् प्राप्नुतः स तुल्यबलविरोधो **विप्रतिषेधः** । विप्रतिषेधे परं कार्यमिति । अत्र तु खशब्दात् स्त्रीप्रत्यये सति पुंवद्भावो ह्रस्वस्तु प्रागेव? सत्यम्, सामान्यकर्तरि खश्प्रत्ययो विशेषापेक्षत्वाद् इदानीं

कालशब्द एव, पश्चाद् विशेषविवक्षायाः स्त्रीप्रवृत्तत्वे सति यदा खशन्तात् स्त्रियामादा, तदैव कालादपि स्त्रियाम् ईप्रत्यय इति तुल्यकालप्राप्तिविषयोऽनयोरिति **वैद्यः**। तथा चोक्तम् –

**यदा खशन्तादभवत् स्त्रियामा कालादितः प्रत्यय ईस्तदैव ।**
**ह्रस्वत्वपुंवत्त्वकयोस्तु तुल्यकाल्यादिके विप्रतिषेध इत्थम् ।।**

तदसत् , कालीमात्मानं मन्यते इति स्त्रीलिङ्गविग्रहात् । यद् वा विशेषवृत्तेः प्राक् "**ह्रस्वारुषोर्मोऽन्तः**" (४।१।२२) इति मकारागमः, पश्चात् स्त्रीवृत्तावप्यकारान्तत्वाभावात् कथं स्त्रियाम् ईप्रत्यय इति, **पञ्जिकाकृता** सह विरोधाच्च। तथाहि "**नान्यत् सार्वनामिकम्**" (२।१।३३) इत्यत्र दक्षिणोत्तरपूर्वाणां स्त्रीणामित्यत्र सामान्येन द्वन्द्वे कृते पश्चात् प्रकरणबलात् **स्त्रीत्वविवक्षा** समुदायस्य, तद् यद्यवयवस्यापि भविष्यति, तदा दक्षिणोत्तरपूर्वाणामित्येव स्यात् तस्मात् समासे सति पश्चात् प्रकरणबलात् **स्त्रीत्वविवक्षा** समुदायस्यैव न त्ववयवस्य। तस्मादयमेव **सिद्धान्तः "तस्य तेन समासः"** (४।२।४) इत्यनेन कृत्प्रत्ययोत्पत्त्यनन्तरमेव समासः क्रियते, न च तत् स्त्रीप्रत्ययस्य विभक्तेर्वा अपेक्षा, तस्मिंश्च सति पुंवद्भावो ह्रस्वत्वं च प्राप्नोतीति तयोः समासकालीनत्वम्।

अथ पुंवत्सूत्रे स्त्रियां वर्तमाने पदे परतः स्त्रियां वर्तमानस्य पदस्य पुंवद् इत्युभयत्रापि स्त्रियामिति सम्बन्धात् कथं स्त्रियामातः प्राक् पुंवदिति । नैवम् , स्त्रियामादां विनापि शब्दस्य स्त्रियां वर्तमानत्वे को विरोधः । न च वक्तव्यं विशेषविवक्षायां सापेक्षत्वात् कथं प्रत्ययः इति कर्तरि विधीयमानस्य खश्प्रत्ययस्य पदान्तरसमभिहारेण प्रागेव स्त्रीप्रवृत्तौ बाधकाभावात् । न च तुल्याधिकरणे पदे इति **वृत्तौ** विवरणादेवात्र 'मन्यः' इत्युपपदस्य पदत्वाभावात् कथं तस्मिन् पुंवदिति कथं सूत्रे तुल्याधिकरणस्य शब्दपरत्वात् तुल्याधिकरणे **शब्द** इत्यर्थः। **वृत्तौ** तु पद इत्युपलक्षणमात्रम् , **पदस्यापि** शब्दत्वादित्यर्थः । अथ कृदन्तस्य स्याद्युत्पत्तेः प्रागुपपदसमासे किं प्रमाणमिति चेदुच्यते "**तस्य तेन समासः**" (४।२।४) इत्यत्र विशेषाभावात्। गतिकारकोपपदानां कृद्भिः समासवचनं स्याद्युत्पत्तेः प्रागिति न्यायाश्रयणाच्च वृद्धम्मन्या इत्युदाहरणमात्रं नाशङ्कापरमिति **दुर्गादित्यः**।

ननु **पञ्जिकाकृता** सह विरोधाद् अनुबन्धग्रहणस्यायमर्थ इत्यादिना त्रीण्युदाहरणान्युद्दिश्य आशङ्कां कृतवानिति **हेमोक्तमेव** साधु । परत्वादिति **वृत्तौ** पाठो नास्तीति लक्ष्यते, **टीकायां** हेतुत्वेनोपन्यस्तत्वात् । पट्वी प्रियंवदेति । **अथ 'येन नाव्यवधानं तेन व्यवहितेऽपि स्यात्'** (व्या० परि० ३९) इति न्यायाद् धातुव्यवधान एव भविष्यति, कथं प्रियशब्दस्य व्यवधाने प्रसङ्गः । अथ सोपपदविधिना निरुपपदविधयो बाध्यन्ते इति **ज्ञापनार्थं** भविष्यति; तेन नित्यं रात्रिम्मन्येति। अन्यथा "**वा कृति रात्रेः**" (४।१।२८) इति विकल्पः स्यात् । नैवम्, अन्तरङ्गत्वाद् युक्तिव्याख्यानाद् वा नित्यमेव भविष्यति ह्रस्वारुषोरित्यनेन ? सत्यम् , तदा **सुखार्थमु**पपदग्रहणम् । दिवेति । एवं दोषामन्यं दिनम्।

दोषाशब्दोऽव्ययोऽपि । तथा च **माघः**– 'दोषापि नूनमह्निमांशुरसौ किलेति'। यस्त्वनव्ययदोषाशब्दस्तस्य तु 'दोषम्मन्यं दिनम्' इति भवति । तथा च **भट्टौ – 'तथा कथाभिः समतीत्य दोषाम्'** इति ।

ननु अव्ययेभ्यः सर्ववचनस्योत्पत्तौ प्रयोजनाभावाद् अव्यवहितं प्रथमैकवचनमिति **टीकाकृतोक्तम्** , तत् कथम् अव्ययस्य कर्मत्वम् , येन तस्मिन्नुपपदे खश् प्राप्नोति? सत्यम् , प्रयोजनाभावादेव प्रथमैकवचनम् । यत्र तु प्रयोजनं विद्यते तत्रान्यवचनमपीति न दोषः। अत एव शुचिनक्तम् इत्याद्यपि सिद्धम्। वयं त्विति **पञ्जिका**। अथ **दुर्गसिंहोक्तिरियं** कथमनेनोक्तमित्युच्यते ? सत्यम् । वयम् अस्मदादय इत्यर्थः । सर्वनाम्नः सामान्यवचनत्वात् स हीति। स **वररुचिर्यद्येवं** पूर्वोक्तं मन्यमानः स्यात् तदा दीर्घग्रहणमपनीय स्वर इत्याचक्षीत इति । आद्यास्त्विति । **वररुचिप्रभृतय** इत्यर्थः । **तेनायमर्थः – वररुचिप्रभृतयो वररुचेर**भिप्रायं वर्णयन्ति, स्वयमेव **सूत्रकृतो** येनाभिप्रायेण सूत्रं कृतवन्तस्तेनाभिप्रायेण **वृत्तावप्युक्तवन्त इत्येतेन पाणिनिमते** परमरिम्मन्यः, **अस्मन्मते** परमरैमन्यः इति विरोधाद् इत्युक्तम् इत्यस्माकं पर्यनुयोगः **सूत्रकार**भाषितप्रलापात्।।८७५।

[समीक्षा]

'कालिम्मन्या, वधुम्मन्या, ग्रामणिम्मन्यः' इत्यादि शब्दों में 'काली-वधू-ग्रामणी' शब्दों का ह्रस्वविधान दोनों ही व्याकरणों में किया गया है । पाणिनि का सूत्र है–'खित्यनव्ययस्य'' (अ० ६।३।६६)। अतः उभयत्र समानता ही है ।

[विशेष वचन]

१. दीर्घग्रहणं तदन्तसुखार्थमित्येके (दु० वृ०) ।

२. प्रतिपत्तिरियं गरीयसी (दु० टी०, वि० प०) ।

३. केचिदित्यनेन न वयमित्यर्थः (दु० टी०) ।

४. आद्या वृत्तिकाराश्चैवमेवोदाहृतवन्तः (दु० टी०) ।

५. सुखार्थवादिनस्तु नित्यं सन्ध्यक्षराणि दीर्घाणीत्याचक्षाणाः (वि० प०) ।

६. एवमेव वररुचेरभिप्रायं वर्णयाम्बभूवुरिति (वि० प०) ।

७. परत्वं तु विप्रतिषेधे भवति, तुल्यबलविरोधो विप्रतिषेधः, विप्रतिषेधे परं कार्यम् इति (क० च०) ।

८. सुखार्थमुपपदंग्रहणम् (क० च०) ।

९. आद्यास्त्विति । वररुचिप्रभृतय इत्यर्थः । वररुचिप्रभृतयो वररुचेरभिप्रायं वर्णयन्ति। स्वयमेव सूत्रकृतो येनाभिप्रायेण सूत्रं कृतवन्तस्तेनाभिप्रायेण वृत्तावप्युक्तवन्तः (क० च०)।

[रूपसिद्धि]

१. **वधुम्मन्या दासी।** वधू + मन् + खश् + आ + सि । वधूमात्मानं मन्यते या सा। 'वधू' उपपदपूर्वक 'मन ज्ञाने' (३।११३) धातु से "खश् चात्मने" (४।३।८०) सूत्र द्वारा 'खश्' प्रत्यय, सार्वधातुकवद्भाव, 'दिवादेर्यन्" (३।२।३३) से यन् विकरण, प्रकृत सूत्र से ऊकार को ह्रस्व, "ह्रस्वारुषोर्मोऽन्तः" (४।१।२२) से मकारागम, स्त्रीलिङ्ग में आ-प्रत्यय, लिङ्गसंज्ञा तथा विभक्तिकार्य ।

२. **ग्रामणिम्मन्यो दासः।** ग्रामणी + मन् + खश् + सि । ग्रामणीमात्मानं मन्यते यः सः । 'ग्रामणी' उपपदपूर्वक 'मन ज्ञाने' (३।११३) धातु से खश् प्रत्यय तथा अन्य प्रक्रिया प्रायः पूर्ववत् ।

३. **वृद्धम्मन्या।** वृद्धा + मन् + खश् + आ + सि । वृद्धामात्मानं मन्यते या सा। वृद्धा–उपपदपूर्वक 'मन्' धातु से खश् प्रत्यय तथा अन्य प्रक्रिया पूर्ववत् ।

४. **कालिम्मन्या।** काली + मन् + खश् + आ + सि । कालीमात्मानं मन्यते या सा । 'काली' उपपदपूर्वक 'मन्' धातु से खश् प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्।

५. **हरिणिम्मन्या।** हरिणी + मन् + खश् + आ + सि । हरिणीमात्मानं मन्यते या सा । हरिणी–उपपदपूर्वक 'मन्' धातु से खश् प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्॥८७५।

## ८७६. नामिनोऽम् प्रत्ययवच्चैकस्वरस्य [४।१।२१]

[सूत्रार्थ]

अव्ययभिन्न, उपपद के रूप में विद्यमान, एकस्वरविशिष्ट नाम्यन्त शब्द के बाद 'अम्' आगम होता है, खानुबन्ध वाला प्रत्यय जिसके अन्त में हो ऐसी धातु के परे रहते। इस अमागम का प्रत्ययवद्भाव भी होगा ॥८७६।

[दु० वृ०]

उपपदस्यानव्ययस्यैकस्वरस्य नामिनः परोऽम् भवति, खानुबन्धप्रत्ययान्ते धातौ परे। स च प्रत्यय इव सान्निध्याद् द्वितीयैकवचनवत् । यथा – "**रविकरस्तरुषु किसलयमिव रक्तः**' इति गम्यते । नावम्मन्यः, नरम्मन्यः, श्रियम्मन्यः, गाम्मन्यः। नामिन इति किम् ? ज्ञम्मन्या । एकस्वरस्येति किम् ? सेनानिम्मन्यः ॥८७६।

[दु० टी०]

नामि०। ननु 'सामान्यातिदेशे विशेषस्यानतिदेशः' इति। यथा ब्राह्मणवद् इत्यनया श्रुत्या युक्तः पिण्डः उपमानत्वेनोपादीयते न माथुरादयो हि विशेषाः । यदा तु कौण्डिन्यवत् क्षत्रिये प्रवर्तितव्यं ब्राह्मणत्वं कौण्डिन्यत्वमस्तीति सामान्यकार्यं विशेष्यकार्यं च सर्वं लभते क्षत्रियः। तस्मात् प्रत्ययवदित्यतिदेशे द्वितीयैकवचनवच्चेति वक्तव्यं नेत्याह–सान्निध्यादिति। यथा लोके धनुश्चक्रं चानयेति धनुःसान्निध्यात् प्रहरणे चक्रे

प्रत्ययः। युगं चक्रं चानयेति रथाङ्गे। **अन्यस्तु** विलपति–अमिति द्विरावर्तनीयम् प्रत्ययवदित्यस्मिन् शब्देऽनन्तरस्यानुवर्तनार्थम्। **अपर** आह–न च प्रत्ययसामान्यकार्यमस्ति प्रत्ययः पर इति चेद् , न। वद्ग्रहणं किमर्थं प्रत्ययग्रहणादेव नादेश इति तस्माद् विशेषावगम इति खानुबन्धे लिङ्गस्योपपदस्यासम्भवाद् ह्यस्तन्यद्यतन्योरमोऽतिदेशो न युज्यते, धातुष्वडादिविधानात्। यद्येवम् – अम्वच्चेत्यास्तां सामर्थ्याद् द्वितीयैकवचनवदिति? सत्यम्, अम्शब्दोच्चारितमेव कार्यं प्रतिपद्येत "अम्शसोरा" (२।२।३४) इत्यादिकं न त्वरादेशेऽयुवादिकं पाठक्लिष्टिश्च स्यात् । अथेह कथं भवितव्यम् 'श्रियम्मन्यते ब्राह्मणस्य कुलम्' इति श्रियम्मन्यमिति उपात्तलिङ्गत्वात् । श्रीशब्दः कुलसमानाधिकरणोऽपि स्वलिङ्ग एव प्रवर्तते । यथा भूतशब्दो नपुंसकलिङ्गे एव प्रवर्तते, भूतमियं ब्राह्मणीति भेदेनेयं विचारणा, प्रयोगोऽपि स्वलिङ्गपरित्यागे दृश्यते–**'श्रियो मे शिरसो मुखम्'** इति? सत्यम्, नाप्राप्तलोपोऽयमारभ्यते। यथा "**तत्स्था लोप्या विभक्तयः**" (२।५।२) इति लोपं बाधते, तथा नपुंसकलक्षणमपि लोपम्। नैवम् , स्त्रीलिङ्गत्वं स्त्रीलिङ्गे पुंलिङ्गे च चरितार्थत्वात् कथं नपुंसकलिङ्गं बाधते। अथ **'असिद्धं बहिरङ्गमन्तरङ्गे'** (का० परि० ३३) इति खानुबन्धमाश्रित्य यस्मादस्मन्मते बहिरङ्गमित्यर्थः। एवम् 'अरुन्तुदः, अस्तुङ्कारः' इति दुष्यति "**संयोगादेर्धुटो लोपोऽनुस्वारश्च**" (२।३।५५, ५६) न स्यात् । तस्मादिह प्रकरणेऽसिद्धं बहिरङ्गमित्यस्यानित्यत्वात् श्रियम्मन्यं ब्राह्मणकुलमिति भवितव्यम् ।।८७६।

[वि० प०]

नामिनः । सान्निध्यादिति । **सान्निध्यं** पुनरिह सादृश्यमेव, तच्च रूपकृतम् । अत्र यद्यपि ह्यस्तन्यद्यतन्योरप्यमस्तदुपयोग्यता विद्यते तथापि न तत्कार्यस्यातिदेशः । तस्याडागमादिलक्षणस्य धातुष्वेव विधानात् । यस्य यत् कार्यमुक्तं तस्य तदेव, श्रुतत्वादिति भावः । प्रकृत्यनुरूपमेव निदर्शनमाह – यथेति । उदयाचलमस्तकस्थस्य रवेः करो रश्मिर्यथा तरुषु वर्तमानः किसलयमिव नवपल्लववद् गम्यते रक्त इति । कथं रक्त इति करणम् इति हेतौ यस्मादसौ रविकरो रक्त इत्यर्थः । **अन्यस्तु** रक्तमिति पाठं मन्यते तदा "**नपुंसके भावे क्तः**" (४।५।९३) द्रष्टव्यः । रञ्जनं **रक्तम्**, यस्माद् रक्तत्वं रविकरस्येति शेषः । अथ किमर्थं प्रत्ययग्रहणम् । अन्वच्चेत्यास्ताम्, तथा च सति **प्रतिपत्तिलाघवं शब्दलाघवं** च भवति । न चान्यस्यामः कार्यमिह युज्यते इत्यर्थाद् द्वितीयैकवचनवद् भविष्यति, तदयुक्तम्। एवं सति अम्शब्दोच्चारितमेव कार्यं प्रतिपद्येत। "**अम्शसोरा**" (३।३।३४) इत्यादिकम्, न घुटि च "**ईदूतोरियुवौ स्वरे**" (२।२।५६) इत्यादिकम् । नामिन इत्यादि । ज्ञामात्मानं मन्यते इति खश् । ननु चात्र पूर्वेण ह्रस्वत्वे सत्यमि कृतेऽकारलोपे च 'ज्ञम्मन्यः' इति सिद्धम् , किं नामिग्रहणेन ? तदयुक्तम् , इह परत्वान्नित्यत्वाच्च कृतस्यामः प्रत्ययवद्भूतस्य वाक्यावस्थायामेव दीर्घात् परलोप एवं स्यात्र तु ह्रस्वत्वम् , कथमन्यथा 'श्रियम्मन्यः' इत्यादयोऽपीति। किञ्चान्तरेण नामिग्रहणं व्यञ्जनान्तादपि स्यादिति त्वचमात्मानं मन्यते त्वङ्मन्येति ।।८७६।

[क० च०]

नामिनः । अथ पूर्वतो दीर्घग्रहणं नानुवर्तते कथम्, न च नामिग्रहणादिति

वाच्यम् । तस्य विशेषत्वेऽप्यन्वयस्य घटनाद् दीर्घस्य नामिन इति ? सत्यम् , तदा नामिग्रहणमपनीय अनात इति क्रियताम् , कार्यिनिमित्तादीनां व्यतिक्रमनिर्देशाच्च । अत एव **वृत्तौ** 'गाम्मन्यः' इति दर्शितम् । अत्र[१] **वाररुचाः**– नामिन इति षष्ठीनिर्देशात् प्रत्ययवद्भावेन च आदेशाभावादागम एवानुपघातात् । तेनाय**मर्थः**—नामिनोऽमागमो भवति, स च प्रत्ययवदिति। तेन 'श्रियम्मन्यः' इत्यादौ न ह्रस्वः पूर्वेण दीर्घान्तत्वाभावादागमे हि मान्त एवायं श्रीशब्दः इत्याहुः । तन्न, ह्रस्वत्वं बाधित्वा अमि कृते सकृद्गतन्यायेन पुनस्तस्य प्राप्तेरभावात्, प्रत्ययकार्येण परत्वाद् ह्रस्वबाधनाच्च । अत एव नामिनः पर इति पञ्चम्येव दर्शितम् ।

[२]ननु श्रियम्मन्य इत्यादावन्तरङ्गत्वात् पूर्वेण ह्रस्व एव प्राक् प्राप्नोतीति । न चास्यापि बाधकत्वादपवादत्वमिति वाच्यम् , पूर्वस्य दीर्घमात्रविषयत्वात् ? सत्यम् । अमि कृते खानुबन्धस्य व्यवहितत्वान्निमित्ताभावेन कृतस्यापि ह्रस्वस्य निवृत्तिः । यद् वा एकस्वरनामिन इति सिद्धे एकपदे भिन्नविभक्तिनिर्देशो **व्यक्त्यर्थः**। तेन व्यक्तिः सर्वस्य बाधिकेति न्यायादादौ प्रवर्ततेऽमिति । अथ वचनमिदं किमर्थम् 'श्रियम्मन्यः' इत्यादौ अलुक्समास एव क्रियताम् । अथ श्रियमात्मानं मन्यते इति बहुवचनेऽपि 'श्रियम्मन्यः' इत्येव भवति [३]भवन्मते कथम् ? सत्यम् , समासावयवविभक्तेः संख्याप्रतिपादकत्वाभावाद् एकवचनमेव भविष्यति चेद् 'गाम्मन्यः' इति न सिध्यति, जलवाचिनो गोशब्दस्य बहुवचनत्वात् । अथ एकवचनान्तो जलवाची गोशब्दोऽपि दृश्यते। तथा चोक्तं **वृन्दावनयमके** –

**स्वमिव भुजङ्गविशेषं व्युपधाय यः स्वपिति भुजङ्गविशेषम्।**
**नवपल्लवसमकरया श्रियोर्मिपङ्क्त्या च सेवितः समकरया।।**

**अस्यार्थः**– गवि जले यः स्वपिति शेते तस्मै नमः, किं कृत्वा स्वपिति? शेषं शेषाख्यं भुजङ्गविशेषं व्युपधाय उपधानं कृत्वा गेण्डुकं कृत्वा इत्यर्थः। कमिव स्वभुजमिव। किम्भूतः सन् शेते इत्याह – नवपल्लवेति । श्रिया सेवितः, किम्भूतया श्रिया? नवपल्लवसमौ करौ यस्यास्तया, ऊर्मिपङ्क्त्या च सेवितः, किम्भूतया? मकरैर्जन्तुविशेषैः सह वर्तते तयेत्यर्थः । तथा च **क्षीरस्वामी** गोत्रशब्दस्य व्युत्पादनेऽप्याह–गोर्जलात् त्रायते इति **गोत्रम्**, तेनैव सिद्धं गाम्मन्यः इति ? सत्यम् , द्वितीयास्थितिरेव नास्ति **"कर्तृकर्मणोः कृति नित्यम्"** (२।४।४१) इति षष्ठीविषयत्वात् । पञ्जिकानिदर्शनं दृष्टान्तोऽत्र किमिव किसलयमिवेति दन्त्यसकारवानयमिति 'किसलयैः सलयैः' इति **रघुयमकात्** । करणमिति । क्रियते उच्चार्यते यत् तत् **करणं** शब्द इत्यर्थः । करोतिरिहोच्चारणे वर्तते चौरङ्कारमाक्रोशतीत्यादिवत् ।

---

१. ननु श्रियम्मन्यः इत्यादौ पूर्वेण ह्रस्वः कथं न स्यादित्याह-अत्रेति।

२. नन्वस्य परत्वाद् अन्तरङ्गत्वात् प्राग् ह्रस्वः स्यादिति मनसिकृत्याह-नन्वित्यादि ।

३. अलुक्समासवादिनो मते ।

यद् वा इति इत्यस्य करणम् उपादानं हेतौ निमित्तसप्तमी । परत्वादिति व्यस्तेनान्वयः। तथा च **'न तु ह्रस्वत्वमिति शब्दान्तरस्य विधिः नित्यो भवितुमर्हति' (व्या० परि० ७७) इत्याह-परत्वादिति।** ननु कथमेतद् यावताऽन्तरङ्गत्वाद् तथाप्यमि सति निमित्ताभावान्निवर्तते, एतच्चावश्यं कर्तव्यं कथमन्यथा 'श्रियम्मन्यः' इत्यत्र इयादेशः प्राग् ह्रस्वत्वे सति भविष्यति इत्याह–कथमन्यथेति । निमित्ताभावेनेत्यर्थः । तर्हि 'अनात्' इत्यास्ताम् , किं व्यापकवचनेनेत्याह – किञ्चेति । अथ स्थितौ दीर्घस्येति नानुवर्तते, अनात इत्यकरणादिति वाच्यम् । इदानीं वत्करणे तस्यानुवृत्तौ कुतः 'श्रियम्मन्यः' इत्यत्र प्रसङ्गः ? सत्यम् । इदानीं कार्यि निमित्तं कार्यम् इत्यस्य व्यतिक्रमबलादिति सिद्धान्तो दास्यते, अतोऽदोषः । **कश्चिद् आह** – तदा प्रत्ययग्रहणमनर्थकम् अन्वच्चेति क्रियताम्। न च वाच्यम् अन्वच्चेति कृते अम्शब्दोच्चारितकार्यस्य प्राप्तिर्दीर्घानुवर्तनात् 'गाम्मन्यः' इत्यस्य सूत्रस्योदाहरणमेव न सिध्यति । यस्मात् प्रत्ययग्रहणादेव दीर्घानुवृत्तिर्न भविष्यति । ननु 'नदिम्मन्यः' इत्यादौ दीर्घानुवृत्तिरपि **अम्शसौ** इत्यम्शब्दोच्चारितस्य सम्भवाद् एकश्चासौ स्वरश्चेति कर्मधारयो विधीयते । तदन्तविशेषणं करिष्यति एकः स्वरोऽन्तभूतो यस्य व्यञ्जनान्तस्य प्रसङ्गः ? सत्यं **सुखार्थम्** ।।८७६।

**[समीक्षा]**

'गाम्मन्यः, नावम्मन्यः, नरम्मन्यः' इत्यादि शब्दरूपों के सिद्ध्यर्थ शब्द के अन्त में अपेक्षित अमागम का विधान दोनों ही व्याकरणों में किया गया है । पाणिनि का सूत्र है – "इच एकाचोऽम्प्रत्ययवच्च" (अ० ६।३।६८) । पाणिनीय 'इच्' प्रत्याहार में आने वाले वर्णों की कातन्त्रकार ने 'नामी' संज्ञा की है । अतः प्रायः उभयत्र समानता है ।

**[विशेष वचन]**

१. यथा लोके धनुश्चक्रं चानयेति धनुःसान्निध्यात् प्रहरणे चक्रे प्रत्ययः (दु० टी०)।
२. सान्निध्यं पुनरिह सादृश्यमेव, तच्च रूपम् (वि० प०) ।
३. वाररुचाः–नामिन इति षष्ठीनिर्देशात् प्रत्ययवद्भावेन चादेशाभावाद् आगम एवानुपघातात् (वि० प०) ।
४. जलवाचिनो गोशब्दस्य बहुवचनत्वात् । अथैकवचनान्तो जलवाची गोशब्दोऽपि दृश्यते (क० च०) ।
५. तथा च क्षीरस्वामी गोत्रशब्दस्य व्युत्पादनेऽप्याह – गोर्जलात् त्रायते इति गोत्रम् (क० च०) ।
६. सत्यं सुखार्थम् (क० च०) ।

**[रूपसिद्धि]**

१. **नावम्मन्यः।** नौ + मन् + खश् + सि । 'नौ' शब्द के उपपद में रहने पर 'मन ज्ञाने' (३।११३) धातु से खश् प्रत्यय, यन् - विकरण, प्रकृत सूत्र से 'नौ' के बाद अमागम-प्रत्ययवद्भाव, आव् - आदेश, लिङ्गसंज्ञा तथा विभक्तिकार्य ।

२. **नरम्मन्यः**। नृ + मन् + खश् + सि । 'नृ' शब्द के उपपद में रहने पर 'मन्' धातु से खश् प्रत्यय, यन् – विकरण, अमागम, ऋकार को अर्, लिङ्गसंज्ञा तथा विभक्तिकार्य ।

३. **श्रियम्मन्यः**। श्री + मन् + खश् + सि । 'श्री' शब्द के उपपद में रहने पर मन् धातु से खश् प्रत्यय आदि प्रक्रिया पूर्ववत् ।

– ४. **गाम्मन्यः**। गो + मन् + खश् + सि । 'गो' शब्द के उपपद में रहने पर मन् धातु से खश् प्रत्यय आदि प्रक्रिया पूर्ववत् ॥८७६।

## ८७७. ह्रस्वारुषोर्मोऽन्तः [४।१।२२]

[सूत्रार्थ]

खानुबन्ध प्रत्ययान्त धातु के परे रहते अव्ययभिन्न ह्रस्वान्त उपपद तथा 'अरुष्' शब्द के अन्त में मकारागम होता है ॥८७७।

[दु० वृ०]

उपपदस्यानव्ययस्य ह्रस्वान्तस्यारुषश्च मकारोऽन्तो भवति खानुबन्धप्रत्ययान्ते धातौ परे । नाडिन्धमः, अङ्गमेजयः, जनमेजयः, अरुन्तुदः। "**संयोगादेर्धुटः**" (२।३।५५) इति सलोपः। अनव्ययस्येति किम् ? सुकरः कटः ॥८७७।

[दु० टी०]

ह्रस्वा० । म इत्यकार **उच्चारणार्थः**। नाडिन्धमः इति । "**नाडीकरमुष्टि-पाणिनासिकासु ध्मश्च**" (४।३।३२) इति खश् । 'अङ्गमेजयः' इति "एजेः खश्" (४।३।३०)। अरुन्तुदः इति । "**विध्वरुस्तिलेषु तुदः**" (४।३।३३) इति खश् ॥८७७।

[वि० प०]

ह्रस्वा० । नाडिन्धमः इत्यादि । "**नाडीकरमुष्टिपाणिनासिकासु ध्मश्च, एजेः खश् , विध्वरुस्तिलेषु तुदः**" (४।३।३२, ३०, ३३) इत्येतैर्यथायोगं सर्वत्र खश् । सुकर इति खल् ॥८७७।

[क० च०]

ह्र ० नाम्येकस्वरयोर्नानुवृत्तिर्ह्रस्वस्य समाननिविष्टत्वेन विशेष्याभावाद् "**वदेः खः प्रियवशयोः**" (४।३।३९) इति वचनाच्चाधिकृतेऽन्तग्रहणं **सुखार्थं** तदा 'अरुन्तुदः' इति कथं सकारलोपः, '**असिद्धं बहिरङ्गम्०**' (का० परि० ३३) इति न्यायात् ? सत्यम् , अत्र नाश्रीयते असिद्धवद्भावः ॥८७७।

[समीक्षा]

'अरुन्तुदः, जनमेजयः' आदि शब्दरूपों के सिद्ध्यर्थ उपपद के अन्त में अपेक्षित मकार का विधान दोनों व्याकरणों में आगम के रूप में किया गया है । पाणिनि का सूत्र है – "अरुर्द्विषदजन्तस्य मुम्" (अ० ६।३।६७) । अतः प्रायः उभयत्र समानता ही है।

[विशेष वचन]

१. 'म' इत्यकार उच्चारणार्थः (दु० टी०) ।

२. अन्तग्रहणं सुखार्थम् (क० च०) ।

३. अत्र नाश्रीयते असिद्धवद्भावः (क० च०) ।

[रूपसिद्धि]

१. **नाडिन्धमः**। नाडी + ध्मा + खश् + सि । नाडीं धमति । 'नाडी' शब्द के उपपद में रहने पर 'ध्मा शब्दाग्निसंयोगयोः' (१।२६६) धातु से "नाडीकरमुष्टिपाणिनासिकासु ध्मश्च" (४।३।३२) सूत्र द्वारा खश्, अन् विकरण "ध्मो धमः" (३।६।७२) से ध्मा को 'धम' आदेश, ह्रस्व, मकारागम, अनुस्वार, पञ्चमवर्णादेश तथा विभक्तिकार्य ।

२. **अङ्गमेजयः**। अङ्ग + एजि + खश् + सि । अङ्गमेजयते । 'अङ्ग' शब्द के उपपद में रहने पर इन्प्रत्ययान्त 'एजृ कम्पने' (१।७०) धातु से खश् प्रत्यय आदि कार्य पूर्ववत् ।

३. **जनमेजयः**। जन + एजि + खश् + सि । जनमेजयते । 'जन' शब्द के उपपद में रहने पर 'एजि' धातु से खश् प्रत्यय आदि कार्य पूर्ववत् ।

४. **अरुन्तुदः**। अरुस् + तुद् + खश् + सि । अरुस्तुदति । 'अरुस्' शब्द के उपपद में रहने पर 'तुद व्यथने' (५।१) धातु से खश् प्रत्यय आदि कार्य पूर्ववत् ।।८७७।

## ८७८. सत्यागदास्तूनां कारे [४।१।२३]

[सूत्रार्थ]

'कार' शब्द के परे रहते उपपद में वर्तमान 'सत्य-अगद-अस्तु' शब्दों के अन्त में मकारागम होता है ।।८७८।

[दु०वृ०]

सत्यादीनां कारशब्दे परे मोऽन्तो भवति । सत्यं करोतीति **सत्यङ्कारः**, एवम् अगदङ्कारः, अस्तुङ्कारः । उपोच्चारिपदानामपि कारे घञन्तेऽपीच्छन्ति । सत्यस्य कारः **सत्यङ्कारः**। एवमन्यत्रापि मकारवर्णागमो दृश्यते – लोकम्प्रीणः, भ्राष्ट्रमिन्धः, अग्निमिन्धः, भद्रङ्करणम्, उष्णङ्करणम् , मध्यन्दिनम् , श्यैनम्पाता, तैलम्पाता क्रीडा ।।८७८।

[दु० टी०]

सत्या०। उपोच्चारीत्यादि । नात्र सप्तम्युक्तानामेवोपपदत्वम् उपोच्चारिपदानामपीति असप्तम्युक्तानामपीति व्याख्यानात् । **परैस्तु** घञन्ते एवाद्रियते । सत्यङ्कारः समयकरणम्। अगदङ्कारो निर्विषीकरणम्। अस्तुङ्कारः प्रतिज्ञाकरणम्। अन्यत्र तु 'सत्यकारः, अगदकारः, अस्तुकारः' इति भवितव्यम्। **रूढिवशात्** सूत्रकारादय इव वस्तुविशेषा अभिधीयन्ते किमनया विचारणयेति । अन्यत्रापीत्यादि ।प्रीणनं **प्रीणः** लोकस्य प्रीणः **लोकम्प्रीणः**

इत्यर्थः। एवम् इन्धनमिन्धः। भ्राष्ट्रस्येन्धः। अग्नेरिन्धः। दिनैकदेशे दिनशब्दः, मध्यं च तद् दिनं चेति। श्येनस्येव तिलस्येव पातो यस्यां **क्रीडायाम्।** श्येनतिलयोः पाते स्वार्थिकाणन्ते कर्तरि कृत्याः। या भविष्यति धेनुः सा धेनुम्भव्योच्यते। भक्षं कारयति **भक्षङ्कारः**, संस्कृतभक्षणयोग्यः पशुरुच्यते॥८७८।

[वि० प०]

सत्या० । उपोच्चारीत्यादि । न केवलं सप्तम्युक्तानामेवोपादानम् , किन्तर्हि उपोच्चारिणामपि कारशब्दस्य समीपोच्चारिणामपि। अतोऽसप्तम्युक्तानामपीत्याह – कारे घञन्तेऽपीति । केवलमणन्त इत्यर्थः । अन्यत्रापीति । प्रीणनं **प्रीणः**, इन्धन**मिन्धः** इति इनन्तादल् । लोकस्य प्रीणः, भ्राष्ट्रस्येन्ध इत्यादि विग्रहः । मध्यं च तद् दिनं चेति **मध्यन्दिनम्** । दिनैकदेशे दिनशब्द इति कर्मधारयः । श्येनस्येव तिलस्येव पातो यस्यां क्रीडायामिति विगृह्य एवमादे**राकृतिगणत्वात्** स्वार्थिकाण्प्रत्ययान्ते पातशब्दे श्येनतिलयोर्मकारागमः, नदादेराकृतिगणत्वाद् अणन्तादपि स्त्रियामीप्रत्ययो न भवति । ननु वर्णागमो वर्णविपर्ययश्चेत्यादिन्यायेन यथैते सिद्धास्तथा सत्यङ्कारादयो भविष्यन्ति, किमनेनेति न देश्यम् **उपलक्षणस्य सुखार्थत्वादिति** ॥८७८।

[क० च०]

सत्या० । एषामुपपदानामिति सम्बन्धात् कारशब्दोऽणन्त एवोपस्थितः, कथं घञन्तः स्यादित्याह – उपोच्चारीति । पृणप्रीणयोर्लोकस्येति **परसूत्रमित्याह** – अन्यत्रेति। तथा इन्धेऽग्निभ्राष्ट्रयोः। करणे भद्रोष्णयोः। 'धेनुम्भव्या, मध्यन्दिनम्, अनभ्यासमित्यः' पाताण्णे श्येनतिलयोः ॥८७८।

[समीक्षा]

'सत्यङ्कारः, अगदङ्कारः, अस्तुङ्कारः' शब्दरूपों के सिद्ध्यर्थ सत्यादि उपपदों के बाद अपेक्षित मकार का विधान आगम के रूप में दोनों व्याकरणों में किया गया है। पाणिनि का मुमागमविधायक सूत्र है – "कारे सत्यागदस्य" (अ० ६।३।७०)। 'अस्तु' शब्द का पाठ वार्त्तिक में किया गया है – "अस्तुसत्यागदस्य कार इति वक्तव्यम्" । अतः प्रायः उभयत्र समानता ही है ।

[विशेष वचन]

१. सत्यङ्कारः समयकरणम् , अगदङ्कारो निर्विषीकरणम् , अस्तुङ्कारः प्रतिज्ञाकरणम् (दु० टी०) ।

२. रूढिवशात् सूत्रकारादय इव वस्तुविशेषा अभिधीयन्ते (दु० टी०) ।

३. संस्कृतभक्षणयोग्यः पशुरुच्यते (दु० टी०) ।

[रूपसिद्धि]

१. **सत्यङ्कारः**। सत्य + कृ + अण् + सि। सत्यं करोति सत्यस्य कारो वा। 'सत्य' शब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से ''कर्मण्यण्'' (४।३।१) सूत्र द्वारा 'अण्' प्रत्यय, वृद्धि आर्, प्रकृत सूत्र से मकारागम, अनुस्वार, पञ्चम वर्णादेश, लिङ्गसंज्ञा तथा विभक्तिकार्य।

२. **अगदङ्कारः**। अगद + कृ + अण् + सि। अगदं करोति अगदस्य कारो वा। 'अगद' शब्द के उपपद में रहने पर 'कृ' धातु से अण् प्रत्यय आदि कार्य पूर्ववत्।

३. **अस्तुङ्कारः**। अस्तु + कृ + अण् + सि। अस्तु करोति। 'अस्तु' शब्द के उपपद में रहने पर 'कृ' धातु से अण् प्रत्यय आदि कार्य पूर्ववत्॥८७८।

## ८७९. गिलेऽगिलस्य [४।१।२४]

[सूत्रार्थ]

'गिल' शब्द के परे रहते पूर्ववर्ती 'गिल' शब्द से भिन्न शब्द के अन्त में मकारागम होता है ॥८७९।

[दु० वृ०]

गिलादन्यस्य गिलशब्दे परे मोऽन्तो भवति । गिरतेः कः प्रत्ययः । तिमेर्गिलः तिमिङ्गिलः । एवं रिपुङ्गिलः । अगिलस्येति किम् ? गिलगिलः । **'तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः'** ॥८७९।

[दु० टी०]

गिले० । एकारादकारलोपे सति तुल्येऽपि निर्देशेऽगिलस्येति नञ् सम्भाव्यते। बहूदाहरणसम्भवादगिलस्येति तदन्तविधिः। केवलस्य व्यपदेशिवद्भावात् प्रतिषेधः॥८७९।

[वि० प०]

गिले० । गिरतेः कप्रत्यय इति । नाम्युपधेत्यादिनेत्यर्थः । **'वा स्वरे''** (३।६।९९) इति लत्वम् । अत्रापि तदन्तविधिना गिलान्तस्येति वेदितव्यम् । केवलस्यापि व्यपदेशिवद्भावादित्याह – तिमिङ्गिलेत्यादि । तिमिङ्गिलस्य गिलः **तिमिङ्गिलगिलः**। **'अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृतः'** इति पूर्वार्द्धम् ॥८७९।

[क० च०]

गिले० । शतयोजनविस्तृत इत्येव पाठः, न विस्तर इति । **'विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः'** इति शासनादर्थासम्भवात् । 'राघवः' इति सविसर्गपाठे मत्स्यान्तरं मत्स्यस्य विशेषणं तद्गिलो राघव इत्यर्थः । निर्विसर्गपाठे तु सम्बोधनम् ॥८७९।

[समीक्षा]

'तिमिङ्गिलः' आदि प्रयोगों के सिद्ध्यर्थ 'तिमि' उपपद के अन्त में मकारागम का विधान दोनों ही व्याकरणों में किया गया है । पाणिनीय व्याकरण में मुमागमविधायक वार्त्तिक सूत्र हैं – "गिलेऽगिलस्य मुम् वक्तव्यः, गिलगिले चेति वक्तव्यम्" (अ० ६।३।७०–वा०) । इस प्रकार प्रायः उभयत्र समानता है ।

[विशेष वचन]

१. केवलस्य व्यपदेशिवद्भावात् प्रतिषेधः (दु० टी०) ।

२. अत्रापि तदन्तविधिना गिलान्तस्येति वेदितव्यम् , केवलस्यापि व्यपदेशिवद्भावात् (वि० प०) ।

[रूपसिद्धि]

१. **तिमिङ्गिलः** । तिमि + मकारागम + गिल + सि । तिमेर्गिलः । 'तिमि' के उपपद में रहने पर 'गॄ निगरणे' (५।२२) धातु से "नाम्युपधप्रीकृगॄज्ञां कः" (४।२।५१) सूत्र द्वारा 'क' प्रत्यय, क्-अनुबन्ध का प्रयोगाभाव, अगुण, "ॠदन्तस्येरगुणे" (३।५।४२) से ॠ को इर् आदेश, "वा स्वरे" (३।६।९९) से रकार को लकार, प्रकृत सूत्र से मकारागम, अनुस्वार, पञ्चम वर्णादेश तथा विभक्तिकार्य ।

२. **रिपुङ्गिलः**। रिपु + मकारागम + गिल + सि । रिपोर्गिलः । 'रिपु' शब्द के उपपद में रहने पर 'गॄ' धातु से क-प्रत्यय आदि कार्य पूर्ववत् ॥८७९।

## ८८०. उपसर्गादसुदुर्भ्यां लभेः प्राग् भात् खल्घञोः [४।१।२५]

[सूत्रार्थ]

'खल् – घञ्' प्रत्ययों के परे रहते 'सु-दुर्' उपसर्गों से भिन्न उपसर्ग से परवर्ती 'लभ्' धातु में भकार से पूर्व मकारागम होता है ॥८८०।

[दु० वृ०]

उपसर्गात् परस्य लभेर्भात् प्राङ् मकारागमो भवति खल्-घञोः परतः, न तु सुदुर्भ्याम्। ईषत्प्रलम्भः, सुप्रलम्भः, दुष्प्रलम्भः । घञि च – प्रलम्भः, विप्रलम्भः । उपसर्गादेवेति नियमात् – ईषल्लभः, लाभो वर्तते । असुदुर्भ्यामिति किम् ? सुलभः, दुर्लभः । केवलाभ्यामेवेष्यते । तेन अतिसुलम्भः, अतिदुर्लम्भः । कथम् अतिसुलभः, अतिदुर्लभः ? पश्चादतिना समासः ॥८८०।

[दु० टी०]

उप० । नकारागमे मकारागमे च रूपाभेदात् "रभिलभोः" (३।५।३४) इत्यादिना **'सिद्धे विधिरारभ्यमाणो नियमाय भवति'** (का० परि० ५९)। उपसर्गादेव खल्घञोर्नान्यपूर्वस्य

केवलस्य चेत्याह-उपसर्गादेवेत्यादि । खल्घञोरेवेति लभेरेव । न च विपरीतनियमः **"प्रलम्भने गृधिवञ्च्योः"** (३।२।४२-६६) इति "प्रोपाभ्यामारम्भे" (३।२।४२-३७) इति रुचादौ पाठात् **'बिद्लृ लाभे'** (५।९) इति निर्देशाच्च । असुदुर्भ्यामित्यादि घञि प्रत्युदाहर्तव्यम् । 'सुलाभः' इति सुशब्दोऽत्राधिकार्थो न त्वकृच्छ्रार्थः । यथा सुषिक्तं भवता किन्तवात्रेति । दुर्लभः । दुरत्र निन्दार्थो न कृच्छ्रार्थः । यथा दुष्पुरुषो दुर्ब्राह्मण इति । केवलाभ्यामेवेष्यते इति सुदुर्भ्यां सह सन्निपातेनोपसर्गः सुदुर्भ्यां पूर्वं प्रयुज्यते परो वा । तत्र प्रसुलम्भः इति नैव प्रयोगोऽभिधीयते प्रारम्भविशिष्टायाः क्रियायाः सौकर्यं दौष्कर्यं वा वक्तव्यम् ।

अत्रार्थप्रतिपत्त्यनुसारेण पूर्वं प्रेण सम्बन्धः, पश्चात् सुदुर्भ्याम् , एवं क्रमः । इदन्तर्हि सुप्रलम्भ इति 'असुदुर्भ्याम् ' इति पञ्चमी । प्रेण व्यवहितत्वान्न प्रतिषेध इत्याह – अतिसुलम्भ इति । अथ स्वभावात् तत्र सौकर्यविशिष्टस्य पूजाभिसम्बन्धः । पूजायां चान्य एवार्थः प्रक्रान्तः । ननु भोः परवादिन् ! तव कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाबाधया प्राप्त्यभावादतिसुलभ इति भवितव्यम् । यदा तर्हि नातिक्रमणं न पूजा सुदुरोरप्युपसर्गत्वे प्राप्तिरिति । केवलाभ्यामेवेति वक्तव्यम्, **भाष्यकार**मतमेतत् । **वाक्यकार**स्तु नैनं प्रयोगमाद्रियते। अर्थविशेषाभावाद् यदाप्यतिरुपसर्गः सुशब्दः कर्मप्रवचनीयस्तदा निमित्ताभावादसत्यां प्राप्तौ अतिसुलभः इति भवितव्यम् । यदाऽप्यतिशब्दः कर्मप्रवचनीयसंज्ञकसुशब्दः उपसर्गसंज्ञकस्तदा नानुपसर्गे उपसर्गस्य केवलत्वं **जाति**भेदाद् विहन्तीति केवल एवायं प्रतिषेधे सति अतिसुलभ इति भवितव्यम् ।

**वाक्यकारः** पठति – सुदुरोः प्रतिषेधोऽल्विधिषत्वणत्वेषु तस्याविशेषेण सुदुरोरुपसर्गसंज्ञाप्रतिषेधात् पूजायां च नुमा भवितव्यम् । **भाष्यकार**स्तु पूजाया अन्यत्र नुमं प्रतिजानीते । **वाक्यकार**मतमेव **सूत्रकारस्य** मतं लक्ष्यते । असुदुर्भ्यामिति नेयं तृतीया । केवलाभ्यामेवेति वक्तव्यम्, इदं तु न देशनीयम् , कथं सुदुर्लभः । न चात्र केवलः सुशब्दो नापि दुःशब्दः । अथासमुदितयोः कैवल्यमाश्रीयते प्रत्येकं प्रयोगे प्रतिषेधो न स्यात् – सुलभो दुर्लभ इति । एवन्तर्हि अन्यस्य निवृत्त्यर्थे केवलग्रहणे समुदितयोः प्रत्येकं च प्रतिषेधनिवृत्त्यर्थम् । यथा देवदत्तयज्ञदत्ताभ्यामिह केवलाभ्यां न प्रवेष्टव्यमिति । अन्यं विष्णुमित्रादिमन्तरेण प्रत्येकं समुदितौ च न प्रतिषेध्याविति ।।८८०।

**[वि० प०]**

उप० । अथ किमर्थमिदं **"रभिलभोरविकरणपरोक्षयोः"** (३।५।३४) इत्यनेन नकारागमेऽपि विशेषाभावात् सिद्धमेवेत्याह – उपसर्गादेवेति । तेनान्यपूर्वस्य केवलस्य लभेर्न भवतीति । खल्घञोरेवेति न विपरीतनियमः । **"प्रलम्भने गृधिवञ्च्योः"** (३।२।४२-६३) इति **रुचादिगणे** युट्प्रत्ययेऽपि दर्शनात् । नापि लभेरेवेति नियमः **"प्रोपाभ्यामारम्भे"** (३।२।४२-३७) इति रभेरपि दर्शनात् **'विद्लृ लाभे'** (५।९) इति नागमस्यादर्शनाच्चेति ।।८८०।

[क० च०]

उपसर्गात्० । अथ प्राग्ग्रहणं किमर्थम् , भादिति पूर्वदिग्योगलक्षणा पञ्चमी, न परदिग्योगलक्षणा भाद्ग्रहणबलात् । अन्यथा भाद्ग्रहणमनर्थकम् ? सत्यं **सुखार्थम्।** प्रागिति स्थिते भाद्ग्रहणमपि तथैव । अथ भाद्ग्रहणाभावे धातोः प्राक् कथं न स्यात्। नैवम् , खल्घञोर्निमित्तयोर्व्यवधानाद् वचनादेकवर्णव्यवधानमाश्रीयते, न त्वनेकेनेति। लभेर्भादिति कृते उभयमपि **सुखार्थम्।** अथास्य वचनस्याभावे 'सुलभः, दुर्लभः' इत्यत्र रभिलभोरविकरणपरोक्षयोरिति नकारागमः कथं न स्यात् ? सत्यम् , यद्येतदर्थमेव वचनं तदा 'पुरन्दरः' इत्यनन्तरं न सुदुर्भ्यां लभेः प्राग् भात् खल्घञोरिति कुर्यात् । अर्थाद् रभिलभोरित्यनेन प्राप्तस्य नस्य निषेधः । केवलाभ्यामिति तर्हि कथं सुदुर्लभ इति सुशब्देन सह सम्बन्धाद् दुःशब्देन केवलः, अथ समुदितयोः केवलत्वमाश्रीयते, न तु प्रत्येकेन समुदायेन च । यथा- देवदत्तयज्ञदत्ताभ्यां केवलाभ्यामिह न प्रवेष्टव्यम् इत्युक्ते विष्णुमित्रादिमन्तरेण प्रत्येकेन समुदायेन च प्रविश्यते इति, तद्वदत्रापि । पश्चादतिनेति। अथार्थभेदोऽतिशब्दस्य प्राक्सम्बन्धे धातोरर्थस्यातिशयत्वं प्रतीयते । पश्चात् संबन्धे तु द्रव्यस्यातिशयत्वमिति भेदः ? सत्यम् , यदा 'अतिसुलभः' इति भावे खल् । तदैवमुक्तं यदा कर्मणि खल् तदोपसर्गस्य प्रतिरूपकोऽयमिति **सिद्धान्त** ऊह्यः। यद् वा ह्रस्वारुषोर्मुट् इति कृतेऽत्रागमे उदनुबन्ध इत्यनेन पूर्वमेव भविष्यति । **'विद्लृ लाभे'** (५।९) इति **पञ्जिका** उपसर्गाल्लभेरेवेति नियमाद् व्यावृत्तिरपि उपसर्गादेव, केवलस्य तु रभिलभोरित्यनेन नकारः केन निवार्यते इति भावः ॥८८०।

**[समीक्षा]**

'ईषत्प्रलम्भः, सुप्रलम्भः, दुष्प्रलम्भः' इत्यादि शब्दरूपों के सिद्ध्यर्थ 'लभ्' धातु में भकार से पूर्व अपेक्षित मकार का विधान दोनों व्याकरणों में किया गया है। पाणिनि नुमागम, अनुस्वार तथा परसवर्ण करते हैं, परन्तु कातन्त्रकार ने मकारागम किया है । पाणिनि के सूत्र हैं – "उपसर्गात् खल्घञोः, न सुदुर्भ्यां केवलाभ्याम्" (अ० ७।१।६७, ६८) । कातन्त्रकार ने मकारागम–एकसूत्रविधान से अर्थावबोध में सरलता दिखाई है, जबकि नुमागम-द्विसूत्रविधान से पाणिनि की प्रक्रिया में दुरूहता प्रतीत होती है ।

**[विशेष वचन]**

१. नकारागमे मकारागमे च रूपाभेदात् (दु० टी०) ।

२. केवलाभ्यामेवेति वक्तव्यम्, भाष्यकारमतमेतत् (दु० टी०) ।

३. वाक्यकारस्तु नैनं प्रयोगमाद्रियते (दु० टी०) ।

४. भाष्यकारस्तु पूजाया अन्यत्र नुमं प्रतिजानीते । वाक्यकारमतमेव सूत्रकारस्य मतं लक्ष्यते (दु० टी०) ।

[रूपसिद्धि]

१. **ईषत्प्रलम्भः**। ईषत् + प्र + लभ् + खल् + सि । 'ईषत् – प्र' के उपपद में रहने पर 'डु लभष् प्राप्तौ' (१।४७२) धातु से "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" (४।५।१०२) सूत्र द्वारा खल् प्रत्यय, 'ख् - ल्' अनुबन्धों का प्रयोगाभाव, प्रकृत सूत्र से मकारागम, लिङ्गसंज्ञा तथा विभक्तिकार्य ।

२. **सुप्रलम्भः**। सु + प्र + लभ् + खल् + सि । 'सु - प्र' उपपदों के रहने पर 'लभ्' धातु से खल् प्रत्यय, मकारागम तथा विभक्तिकार्य ।

३. **दुष्प्रलम्भः**। दुस् + प्र + लभ् + खल् + सि । 'दुस् – प्र' उपपदों के रहने पर 'लभ्' धातु से खल् प्रत्यय आदि प्रक्रिया पूर्ववत् ।

४. **प्रलम्भः**। प्र + लभ् + घञ् + सि । 'प्र' उपसर्गपूर्वक 'लभ्' धातु से "अकर्तरि च कारके संज्ञायाम्" (४।५।४) से घञ् प्रत्यय, मकारागम तथा अन्य प्रक्रिया पूर्ववत् ।

५. **विप्रलम्भः**। वि + प्र + लभ् + घञ् + सि । 'वि-प्र' उपसर्गपूर्वक 'लभ्' धातु से घञ् प्रत्यय आदि कार्य पूर्ववत् ॥८८०॥

## ८८१. आङो यि [४।१।२६]

[सूत्रार्थ]

यकारादि प्रत्यय के परे रहते 'आङ्' उपसर्ग से परवर्ती लभ्-धातुघटित भकार से पूर्व मकारागम होता है ॥८८१॥

[दु० वृ०]

आङः परस्य लभेर्भात् प्राङ् मकारागमो भवति यकारादौ प्रत्यये परे । आलम्भ्या गौः ॥८८१॥

[दु० टी०]

आङः । आङ्पूर्वस्य लभेर्यकारादावप्राप्ते आरभ्यते ॥८८१॥

[समीक्षा]

'आलम्भ्या गौः, आलम्भ्या बडवा' इत्यादि शब्दरूपों के सिद्ध्यर्थ लभ्-धातु में भकार से पूर्व अपेक्षित मकारविधान दोनों व्याकरणों में किया गया है । पाणिनि का नुमागमविधायक सूत्र है – "आङो यि" (अ० ७।१।६५) । 'नुमागम–अनुस्वार-परसवर्ण' विधान के कारण पाणिनीय प्रक्रिया में दुरूहता परिलक्षित होती है, जबकि मकारागम से कातन्त्रीय प्रक्रिया में सरलता।

[रूपसिद्धि]

१. **आलम्भ्या गौः** । आ + लभ् + य + आ + सि । आङ्-उपसर्गपूर्वक 'डु लभष् प्राप्तौ' (१।४७२) धातु से "शकिसहिपवर्गान्ताच्च" (४।२।११) से 'य' प्रत्यय,

प्रकृत सूत्र से मकारागम, स्त्रीलिङ्ग में "स्त्रियामादा" (२।४।४९) से आ-प्रत्यय, समानदीर्घ-आकारलोप तथा विभक्तिकार्य ॥८८१।

## ८८२. उपात् प्रशंसायाम् [४।१।२७]

**[सूत्रार्थ]**

प्रशंसा अर्थ गम्यमान होने पर यकारादि प्रत्यय के परे रहते उप-उपसर्ग से परवर्ती 'लभ्' धातुघटित भकार से पूर्व मकारागम होता है ॥८८२।

**[दु० वृ०]**

उपात् परस्य लभेर्भात् प्राङ् मकारागमो भवति ये परे प्रशंसायां गम्यमानायाम्। उपलम्भ्यानि धनानि। प्रशंसनीयानीत्यर्थः। प्रशंसायामिति किम्? उपलब्धुं शक्यम् **उपलभ्यं** धनम्। कथमालभ्य, उपलभ्यते? लभेर्यकार इति विशेषणात्॥८८२।

**[दु० टी०]**

धातोः प्रत्ययमात्रस्य च प्रशंसायां वृत्त्यभावात् समुदायविशेषणं ज्ञेयम् , प्रशंसायां गम्यमानायामित्यर्थः । कर्मणः कर्तुर्वा प्रशंसा, अन्येभ्योऽलभ्यानि तस्मादवश्यमुपलभ्यानि भवतो-धनानीति कर्म प्रशस्यते । भवतो धनान्युपलभ्यानि, कर्तारः प्रशस्यन्ते । यादृक्शब्दतो लक्षणमर्हतीति "**शकि च कृत्याः**" (४।५।१०९) इत्यादि। उपलब्धुम् इत्यादि । अथवा उपलभ्यमिति, प्राप्यमित्यर्थः । कथमित्यादि । लभिमाश्रित्योत्पन्नो यकारः "**शकिसहिपवर्गान्ताच्च**" (४।२।११) इति विहित इत्यर्थः। श्रुतत्वाल्लभेरेवेति । भादिति सम्बन्धात् तेन यणि न भवतीत्यर्थः; । यबादेशे च न भवति 'आलभ्य चाम्बुतृषितम्' इति समासाश्रयत्वात् । **अन्यः** 'आङो न यि' इति पठति । लभेर्भात् प्राङ् नकारागम इत्यर्थः । यकारेऽविशेषे प्राप्नोति, अस्तु । अनिदनुबन्धानामगुणेऽनुषङ्गलोपो भवति, यदि शास्त्रं शस्त्रमित्यकरणं मन्यते । **लोपशास्त्रमस्तीति** लोपेन भवितव्यम् । तस्मादकरणमेव न्याय्यम् , विधानस्य कृतार्थत्वात्। अनुषङ्गलोपोऽपि नाशङ्क्यते "**वा कृति रात्रेः**" (४।१।२८) इत्यत्र मकारः स्मर्यते । **अन्य आह – मण्डूकगतिव्यवस्थितवाधिकाराद्** गुणिन्येव ये । स्तुताविति न कृतम् , पर्यायशब्दत्वात् ॥८८२।

**[वि० प०]**

उपात्० । "**समासे भाविन्यनञः क्त्वो यप्, सार्वधातुके यण्**" (४।६।५५; ३।२।३१) चानेन प्राप्नोतीत्याह – कथमिति । कः पुनर्लभेर्यकारः ? यः पवर्गान्तद्वारेण "**शकिसहिपवर्गान्ताच्च**" (४।२।११) इत्यनेन विहित इत्यर्थः ॥८८२।

**[क० च०]**

उपात्० । अत्र द्वयोः कर्तृकर्मणोः प्रशंसायां भवति, कर्तुर्यथा देवदत्तेनैवोपलभ्यं धनं नान्येन । तेनोपलभ्यमुपादेयम् ॥८८२।

[समीक्षा]

'उपलम्भ्यानि धनानि, उपलम्भ्या भवता विद्या' इत्यादि शब्दरूपों के सिद्ध्यर्थ लभ्‌धातुवर्ती भकार से पूर्व अपेक्षित मकारविधान दोनों व्याकरणों में किया गया है । पाणिनि का नुमागमविधायक सूत्र है – "उपात् प्रशंसायाम्" (अ० ७।१।६६) । सामान्यतया पाणिनीय प्रक्रिया में दुरूहता तथा कातन्त्रीय प्रक्रिया में सरलता प्रतीत होती है ।

[रूपसिद्धि]

१. **उपलम्भ्यानि** धनानि। उप + लभ् + य + जस् । 'उप' उपसर्गपूर्वक 'डु लभष् प्राप्तौ' (१।४७२) धातु से "शकिसहिपवर्गान्ताच्च" (४।२।११) सूत्र द्वारा 'य' प्रत्यय, प्रकृत सूत्र से मकारागम तथा विभक्तिकार्य ॥८८२॥

## ८८३. वा कृति रात्रेः [४।१।२८]

[सूत्रार्थ]

कृत्प्रत्ययान्त धातु के परे रहते 'रात्रि' शब्द के अन्त में मकारागम होता है विकल्प से ॥८८३।

[दु० वृ०]

कृदन्ते धातौ परे रात्रेर्मोऽन्तो भवति वा । रात्रिञ्चरः, रात्रिचरः । रात्रिमटः, रात्र्यटः। पचादित्वादच् । रात्रिम्मन्य इति नित्यम्, उपपदाश्रयत्वात् ॥८८३।

[दु०टी०]

वा कृति०। कृतीति सामान्यवचनात् समासमात्रे। रात्रौ चरतीति **रात्रिचरः**। "**चरेष्टः**" (४।३।१९)। अटतीत्यटः, रात्रावटः **रात्र्यटः**। रात्रिम्मन्यः इत्यादि अप्राप्ते तावदियं **विभाषा**, प्राप्तेऽपि कथन्न भवतीति ? सत्यम्। सोपपदविधिना निरुपपदविधिर्बाध्यते इत्यर्थः। **अन्य** आह – '**पूर्वपरयोः परविधिर्बलवान्**' (पुरु० परि० पा० ३९) इति परशब्दस्येष्टवाचित्वात् पूर्व एव भवतीति।।८८३।

[वि० प०]

वा कृति० । रात्रौ चरतीति "**चरेष्टः**" (४।३।१९) । अटतीत्य**टः**, रात्रावट इति वाक्यम् । रात्रिम्मन्य इति । सोपपदविधिना निरुपपदविधयो बाध्यन्ते इति न्यायात् परोऽप्ययं विकल्पे "**ह्रस्वारुषोर्मोऽन्तः**" (४।१।२२) इत्यनेन बाध्यते इत्यर्थः ॥८८३।

[समीक्षा]

'रात्रिञ्चरः, रात्रिमटः' इत्यादि शब्दों के सिद्ध्यर्थ 'रात्रि' शब्द के अन्त में मकारविधान दोनों ही शाब्दिक आचार्यों ने किया है । पाणिनि का मुमागमविधायक सूत्र है — "रात्रेः कृति विभाषा" (अ० ६।३।७२) । पाणिनीय मुमागम तथा तदर्थ परिभाषासूत्र "मिदचोऽन्त्यात् परः" (अ० १।१।४७) की अपेक्षा कातन्त्रीय एक ही सूत्र द्वारा मकार का रात्रि-शब्द के अन्त में विधान करना सरलता का परिचायक है।

[विशेष वचन]

१. रात्रिम्मन्य इति नित्यम् उपपदाश्रयत्वात् (दु० वृ०) ।

२. सोपपदविधिना निरुपपदविधिर्बाध्यते (दु० टी०, वि० प०) ।

३. परशब्दस्येष्टवाचित्वात् पूर्व एव भवतीति (दु० टी०) ।

[रूपसिद्धि]

१. **रात्रिञ्चरः, रात्रिचरः**। रात्रि + चर् + ट + सि । रात्रौ चरति । 'रात्रि' शब्द के उपपद में रहने पर "चरेष्टः" (४।३।१९) सूत्र द्वारा 'ट' प्रत्यय, 'ट्' अनुबन्ध का प्रयोगाभाव, प्रकृत सूत्र से वैकल्पिक मकारागम, अनुस्वार, पञ्चम वर्णादेश तथा विभक्तिकार्य ।

२. **रात्रिमटः, रात्र्यटः**। रात्रि + अट् + अच् + सि । अटतीत्यटः । 'अट गतौ' (१।१०२) धातु से "अच् पचादिभ्यश्च" (४।२।४८) सूत्र द्वारा अच् प्रत्यय। रात्रौ अटः । प्रकृत सूत्र से वैकल्पिक मकारागम तथा विभक्तिकार्य । मकारागम के अभाव में "इवर्णो यमसवर्णे न च परो लोप्यः" (१।२।८) से इकार को यकारादेश ॥८८३।

## ८८४. पुरन्दरवाचंयमसर्वंसहद्विषन्तपाश्च [४।१।२९]

[सूत्रार्थ]

'पुरन्दर – वाचंयम – सर्वंसह – द्विषन्तप' इन चार शब्दों की अण्प्रत्ययान्त निपातन से सिद्धि होती है ॥८८४।

[दु० वृ०]

एतेऽण्प्रत्ययान्ता निपात्यन्ते । पुरं दारयतीति **पुरन्दरः** शक्रः । वाचं यच्छतीति **वाचंयमो** व्रत एव । सर्वं सहते **सर्वंसहः**। द्विषं तापयतीति **द्विषन्तपः**। यल्लक्षणेनानुत्पन्नं तत् सर्वं निपातनात् सिद्धम् । भगं दारयतीति **भगन्दरो** रोगो **रूढित** एव ॥८८४।

[दु० टी०]

पुर० । यदित्यादि । दारेर्ह्रस्वत्वं न्वागमः, वाचस्त्वमागमः, यमेरप्युपधादीर्घाभावः। व्रत एव, व्रतविषय एव धात्वर्थः । सर्वस्य न्वागमः सहेरुपधादीर्घाभावश्च । द्विषः शन्तृङो नागमो नलोपश्च। तकारस्य तु "**संयोगादेर्धुटः**" (२।३।५५) लोपोऽस्त्येव, तापेश्च ह्रस्वोऽणि ॥८८४।

[वि० प०]

पुरन्दर० । एषां स्त्रीत्वसम्भवे स्त्रियामादैव कर्मण्यणन्तादपीत्यर्थः ॥८८४।

[क० च०]

पुर० । ननु 'पुरन्दरः' इत्यादौ मकारागमः क्रियते इत्यादिकं कार्यं कथं लभ्यत इत्याह – यल्लक्षणेनेत्यादि । एषां स्त्रीत्व इति **पञ्जिका**, तर्हि कथं पुरन्दरस्य स्त्री

पुरन्दरीति ? सत्यम् । अणन्तद्वारा प्राप्तस्यैव निषेधः । यथा सर्वंसहा वसुमतीति । पुंयोगात्तु स्यादेव ईप्रत्ययः ॥८८४।

[समीक्षा]

'पुरन्दर-वाचंयम' इत्यादि शब्दों के सिद्ध्यर्थ मकारागम की व्यवस्था दोनों ही व्याकरणों में निपातन से की गई है । पाणिनि के सूत्र हैं – "अरुर्द्विषदजन्तस्य मुम् , वाचंयमपुरन्दरौ च" (अ० ६।३।६७, ६९) । कातन्त्रकार ने एक ही सूत्र में चारों शब्दों का पाठ करके लाघव उपस्थित किया है , जबकि पाणिनि के अनुसार उक्त चार शब्दों की सिद्धि दो सूत्रों द्वारा करके गौरव का आश्रय लिया गया है ।

[विशेष वचन]

१. यल्लक्षणेनानुत्पन्नं तत् सर्वं निपातनात् सिद्धम् (दु० वृ०) ।

[रूपसिद्धि]

१. **पुरन्दरः**। पुर + दॄ + इन् + अण् + सि । पुरं दारयति । 'पुर' शब्द के उपपद में रहने पर 'दॄ विदारणे' (८।१९) धातु से "कर्मण्यण्" (४।३।१) सूत्र द्वारा 'अण्' प्रत्यय, नकारागम, दारि को ह्रस्व, इन् का लोप तथा विभक्तिकार्य ।

२. **वाचंयमः**। वाच् + यम् + अण् + सि । वाचं यच्छति । 'वाच्' के उपपद में रहने पर 'यम उपरमे' (१।१५८) धातु से अण् प्रत्यय, अमागम, यम् की उपधा को दीर्घाभाव तथा विभक्तिकार्य ।

३. **सर्वंसहः**। सर्व + सह् + अण् + सि । सर्वं सहते । 'सर्व' शब्द के उपपद में रहने पर 'षह मर्षणे' (१।५६०) धातु से अण् प्रत्यय, मकारागम, सह की उपधा को दीर्घाभाव, अनुस्वार तथा विभक्तिकार्य ।

४. **द्विषन्तपः**। द्विष् + तापि + अण् + सि । द्विषं द्विषन्तं वा तापयति । 'द्विष्' शब्द के उपपद में रहने पर इन्-प्रत्ययान्त 'तापि' धातु से अण् प्रत्यय, नकारागम, नलोप, "संयोगादेर्धुटः" (२।३।५५) से तकारलोप, तापि को ह्रस्व, इन्लोप तथा विभक्तिकार्य ॥८८४।

## ८८५. धातोस्तोऽन्तः पानुबन्धे [४।१।३०]

[सूत्रार्थ]

पकारानुबन्ध वाले कृत्संज्ञक प्रत्यय के परे रहते ह्रस्वान्त धातु के अन्त में तकारागम होता है ॥८८५।

[दु० वृ०]

"ह्रस्वारुषोर्मोऽन्तः" (४।१।२२) इत्यतो ह्रस्वोऽनुवर्तते। ह्रस्वान्तस्य धातोः पानुबन्धे कृति परे तोऽन्तो भवति। अग्निचित् , सोमसुत् , प्रकृत्य, इत्वरः। धातोरिति

किम्? उपपदस्य मा भूत् – ग्रामणीः, सेनानि कुलम्। वृत्रहभ्यामिति। **'असिद्धं बहिरङ्गमन्तरङ्गे'** (का० परि० ३३) इति । ह्रस्वान्तस्येति किम् ? आनीय, आपूय। कथम् उपेत्य? **साधनायत्तत्वात् क्रियायाः** प्रत्ययकार्यमेव। अन्तग्रहणं **सुखार्थम्** ॥८८५।

**[दु० टी०]**

धातोः । एकविभक्तियुक्तानां क्वचिदेकदेशोऽप्यनुवर्तते इत्याह-ह्रस्वेत्यादि । इत्वर इति **"सृजीण्नशां क्वरप्"** (४।४।४८) । धातोरित्यादि । पानुबन्धान्ते धातौ प्रस्तुतस्योपपदस्य ह्रस्वान्तस्य मा भूदित्यर्थः, सेनानीत्यादि । पदान्तरापेक्षो नपुंसके ह्रस्वो बहिरङ्गस्तथा लिङ्गान्तनकारस्य व्यञ्जनादौ लोप इति **"धातोस्तोऽन्तः पानुबन्धे"** (४।१।३०) अन्तरङ्गः । तथा ग्रामणीपुत्र इत्यत्रास्त्रीकृतस्यापि ह्रस्व उत्तरपदापेक्षः । कथमित्यादि । **'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण'** (सीर० परि० १२८) इति **न्यायः पक्ष** इत्युक्त एव । तस्माद् भाविनि समासे यबादेशे सति तोऽन्तः पश्चादुपसर्गस्य **"अवर्ण इवर्णे ए"** (१।२।२) भवतीत्यर्थः। उपसर्गस्तु दूरीकृत्य धातोः पश्चात् साधनेन योगः इति कार्यसिद्ध्यर्थमभ्युपगम्यते। अथवा अस्मिन्नपि पक्षे **'वार्णात् प्राकृतं बलीयः'** (का० परि० ८१) इत्यभ्युपगम्यते । ननु यथा **"वा कृति रात्रेः"** (४।१।२८) इत्यत्रान्तग्रहणं स्मृतम् , तथेहापि स्मर्यते, नैवम् । उपपदव्यवच्छेदतो धातोरादेशोऽपि सम्भाव्यते इत्याह — इहान्तेत्यादि । तत्र रात्रिशब्दस्योपोच्चारिपदत्वादुपपदत्वमस्ति। **अन्य** आह – भूतपूर्वह्रस्वार्थमपि प्रयोजयतीति ॥८८५।

**[वि० प०]**

धातोः । **"चेरग्नौ, सोमे सुञः"** (४।३।८६, ८५) इति क्विप् । प्रकृत्येति। क्त्वो यप् । इत्वर इति । **"सृजीण्नशां क्वरप्"** (४।४।४८) । सेनानीत्यादि । तकारागमः प्रकृतिभक्तत्वादन्तरङ्गः । स्वरो ह्रस्वश्च पदान्तरापेक्षया नपुंसके भवन् बहिरङ्गः । तथा लिङ्गान्तनकारस्य लोपोऽपि । अतस्तकारागमे कर्तव्ये ह्रस्वो नलोपश्चासिद्ध एवेति भावः । कथमिति । उपपूर्व इण् क्त्वेति स्थिते वार्णो विधिरन्तरङ्ग इति **"अवर्ण इवर्णे ए"** (१।२।२) । एत्वमन्तरङ्गं यबादेशश्च बहिरङ्गः, समासाश्रयत्वात् । अतः **'अन्तरङ्गबहिरङ्गयोरन्तरङ्गविधिर्बलवान्'** इति पूर्वमेत्वे ह्रस्वाभावात् कथन्तकारागम इति **पूर्वपक्षार्थः** ।

साधनेत्यादि। परिहारस्या**यमर्थः** स्यादेव प्रागेत्वं यदि धातोः पूर्वम् उपसर्गेण सम्बन्धः स्यात् । केवलं स एव न विद्यते कथम् ? उच्यते – क्रियाभावो हि धातुः, क्रिया च साध्यरूपा । यच्च साध्यं तच्च साधनायत्तं भवतीति । अतः क्रियाभिधायी धातुः पूर्वं साधनेनैव सम्बध्यते पश्चादुपसर्गेण । यस्माद् उपसर्गा हि विशेषका भवन्तीति । ते च साधनतो लब्धात्मभावां क्रियां विशेष्टुमर्हन्ति, नान्यथा । न हि स्वयमनिष्पन्नस्य विशेषाकाङ्क्षा भवतीति । पश्चादुपसर्गेण सम्बन्धः । साधनेन सम्बध्यमानो धातुस्तदभिधायिना प्रत्ययेन

संबध्यते इति । तदीयमेव कार्यं यबादिलक्षणं भाविनि समासे स्यात् । तत्र च यपि कृते तकारागमोऽपि तत्कार्यत्वात् पूर्वमेव प्रवर्तते । तत एत्वमिति न दोषः । "**ह्रस्वारुषोर्मोऽन्तः**" (४।१।२२) इत्यत एवान्तग्रहणं स्मरिष्यति । यथा "**वा कृति रात्रेः**" (४।१।२८) इत्याह-अन्तेति ॥८८५।

**[क० च०]**

धातोः । तकार एवात्र विधेयो न स्वरसहितः सर्वत्रागमस्यैकवर्णत्वदर्शनात् । "**ह्रस्वारुषोर्मोऽन्तः**" (४।१।२२) इत्यनेन 'उपेत्य' इत्यादयः सिद्धा इति **वररुचिः**। स्वमतेऽत्र युक्तिर्वक्ष्यते । अत्रान्तग्रहणं **सुखार्थम्**। अथ पकारः स्थितिमान् नास्तीति। अर्थात् पानुबन्धो गम्यते किमनुबन्धग्रहणेन ? सत्यम् , **'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य'** (व्या० परि० ४६) इति व्यभिचारार्थम्, तेन क्विबादिषु द्व्यनुबन्धकेष्वपि अग्निचिदित्यादयः सिद्धाः । अथ तथापि न क्रियताम् , पीति सामान्यनिर्देशात् सामान्येनैव पानुबन्धग्रहणं भविष्यति, क्विबादीनां पकारवैयर्थ्यात् ? सत्यम् , तदा **सुखार्थ**मनुबन्धग्रहणम्। अथ धातुग्रहणं किमर्थम्, पानुबन्धप्रत्ययो धातुरेव सम्भवति, अर्थाद् धातुरेवानुमीयते? सत्यम्, उपपदप्रस्तावात् पानुबन्धप्रत्ययान्ते धातौ परे उपपदस्य तकारोऽन्त इति सूत्रार्थे ग्रामणीत्यत्र क्विबन्ते धातौ ग्रामशब्दस्योपपदस्य तोऽन्तः स्यात्। न च वक्तव्यम् अर्थायातेन धातुना इष्टनिर्वाहः, उपपदस्य प्रस्तुतत्वेनान्यार्थबाधस्य सम्भवाद् इत्याह – धातोरिति किमिति । सेनानीत्यादि। नपुंसकलक्षणह्रस्वत्वे लिङ्गान्तलक्षणलोपे च कृते ह्रस्वान्तधातुरिति तकारागमः स्याद् इत्याशङ्कार्थः ।

ननु कथमत्र धातुत्वं स्याद् एरुत्पन्नत्वात् , न च धातोः स्याद्युत्पत्तिः ? सत्यम्, "**आद्धातोरघुट्स्वरे**" (२।२।५५) इति ज्ञापकात् क्विबन्तो धातुत्वं न जहाति, जहाति वा भूतपूर्वस्तदुपचारः पर्यवसितार्थ इति **कुलचन्द्रः**। तथा च धातुसूत्रे लिङ्गाख्या धातुभिन्ना धातव इति **टीकाकृतो** वचनम् । क्विबन्ता इत्यत्रान्तपदं धातुत्वं प्रति समीपार्थम् अवयवार्थं च । **तदयमर्थः** क्विप्समीपभूतानां प्रकृतयो धातुत्वं न जहति, क्विबवयवास्तु धातुत्वं जहति । तेषां कर्तृवाचकत्वेन धातुत्वासम्भवात्। इत्थं धातुत्वे सति लुप्तस्य क्विपः प्रत्ययलोपपलक्षणमिति परत्वावस्थितौ **पूर्वपक्षः** संगच्छते ।

**पञ्जिका**–पदान्तरेति । **अयमाशयः**-सेनानीयवलूशब्दौ शब्दान्तरनिरपेक्षौ पुंस्येव वर्तेते, स्त्रीनपुंसकयोस्तु शब्दान्तरसंनिधानादेव । अतः शब्दान्तरापेक्षया स्यादेवेति।

**[1]पूर्वं निपातोपपदोपसर्गैः सम्बन्धमासादयतीह धातुः ।**
**पश्चात्तु कर्त्रादिभिरेव कारकैर्वदन्ति केचित्त्वपरे विपश्चितः ।।**

इति **मतं** दूषयन्नाह – यदीति । क्वचिद् धातोरुपसर्गेण प्राक् सम्बन्धपक्ष एव सिद्धान्तो भवति । अन्यथा आत्मनेपदविषये परस्मैपदमेव स्यात् ? सत्यम्। वचनबलादेव

---

१. धातुः सम्बन्धमायाति पूर्वं कर्त्रादिकारकैः।
उपसर्गादिभिः पश्चादिति कैश्चिन्निगद्यते।। (वं भा०)।

धातोः प्रागुपसर्गसम्बन्धोऽत्र । यद् वा उपसर्गसम्बन्धो भविष्यतीति कृत्वा प्रसक्तावात्मनेपदमेव प्रवर्तते ॥८८५।

**[समीक्षा]**

'अग्निचित् , सोमसुत् , उपस्तुत्य' इत्यादि शब्दरूपों के सिद्ध्यर्थ ह्रस्वान्त धातु के बाद तकारविधान दोनों ही व्याकरणों में किया गया है । पाणिनि का तुगागमविधायक सूत्र है – "ह्रस्वस्य पिति कृति तुक्" (अ० ६।१।७१) । कित् आगम – तदर्थ योजनानिर्धारक सूत्र बनाकर पाणिनि ने गौरव दिखाया है, जबकि कातन्त्र में तकारागम को धातु के अन्त में एक ही सूत्र द्वारा निर्धारित कर लाघव सूचित किया गया है । इत् – अनुबन्धसंज्ञाओं का प्रयोग अपने अपने व्याकरण की व्यवस्था के अनुसार किया गया है।

**[विशेष वचन]**

१. साधनायत्तत्वात् क्रियायाः (दु० वृ०) ।

२. अन्तग्रहणं सुखार्थम् (दु० वृ०; क० च०) ।

३. एकविभक्तियुक्तानां क्वचिद् एकदेशोऽप्यनुवर्तते (दु० टी०) ।

४. उपसर्गा हि विशेषका भवन्ति। ते च साधनतो लब्धात्मभावां क्रियां विशेष्टुमर्हन्ति (वि० प०) ।

५. अन्तग्रहणं भूतपूर्वह्रस्वप्रतिपत्त्यर्थम् (क० च०) ।

६. सुखार्थमनुबन्धग्रहणम् (क० च०) ।

७. क्विबन्तो धातुत्वं न जहाति, जहाति वा भूतपूर्वस्तदुपचारः पर्यवसितार्थ इति कुलचन्द्रः (क० च०) ।

८. क्विप्समीपभूतानां प्रकृतयो धातुत्वं न जहति, क्विबवयवास्तु धातुत्वं जहति (क० च०) ।

**[रूपसिद्धि]**

१. **अग्निचित्।** अग्नि + चि + तकारागम + क्विप् + सि । अग्निं चितवान्। 'अग्नि' के उपपद में रहने पर 'चिञ् चयने' (४।५) धातु से "क्विप् च" (४।३।६८) सूत्र द्वारा 'क्विप्' प्रत्यय, प्रकृत सूत्र से तकारागम, "वेर्लोपोऽपृक्तस्य" (४।१।३४) से 'वि' का लोप तथा विभक्तिकार्य ।

२. **सोमसुत्।** सोम + सु + तकारागम + क्विप् + सि । 'सोम' उपपदपूर्वक 'षुञ् अभिषवे' (४।१) धातु से क्विप् प्रत्यय, तकारागम, 'वि' का लोप तथा विभक्तिकार्य ।

३. **प्रकृत्य।** प्र + कृ + क्त्वा–यप् + सि । 'प्र' उपसर्गपूर्वक 'डु कृञ् करणे' (७।७) धातु से "एककर्तृकयोः पूर्वकाले" (४।६।३) सूत्र द्वारा 'क्त्वा' प्रत्यय, "समासे भाविन्यनञः क्त्वो यप्" (४।६।५५) से क्त्वा को यप् आदेश, पकारानुबन्ध का प्रयोगाभाव, प्रकृत सूत्र से तकारागम तथा विभक्तिकार्य ।

४. **इत्वरः**। इण् + तकारागम + क्वरप् + सि । 'इण् गतौ' (२।१३) धातु से "सृजीण्नशां क्वरप्" (४।४।४८) सूत्र द्वारा 'क्वरप्' प्रत्यय, 'क्-प्' अनुबन्धों का प्रयोगाभाव, प्रकृत सूत्र से तकारागम तथा विभक्तिकार्य ॥८८५।

## ८८६. ओदौद्भ्यां कृद् यः स्वरवत् [४।१।३१]

**[सूत्रार्थ]**

'ओ-औ' से परवर्ती यकारादि कृत् प्रत्यय को स्वरवद्भाव होता है ॥८८६।

**[दु० वृ०]**

ओदौद्भ्यां परः कृद् यः स्वरवद् भवति । लव्यम् , अवश्यलाव्यम् । ओदौद्भ्यामिति किम् ? चेयम् । कृद् य इति किम् ? उपोयते, प्रौयत । इह कृद्ग्रहणादन्यत्र सामान्यमवगम्यते ॥८८६।

**[दु० टी०]**

ओदौ० । अवादेशार्थमिदं वचनमिति । लव्यमिति । "**स्वराद् यः**" (४।२।१०)। अवश्यलाव्यम् इति। "**उवर्णादावश्यके**" (४।२।३७) इति घ्यण् । कृद्ग्रहणं किमर्थमित्याह– उपोयते, प्रौयत इति । यजादित्वाद् वेञः सम्प्रसारणे उवर्णे ओत्वे सत्यपि धात्वधिकारे '**परनिमित्तादेशः पूर्वस्मिन् स एव**' (का० परि० ४४) इति धातोरोकारो भवति व्यपदेशिवद्भावात्। तथा "**स्वरादीनां वृद्धिरादेः**" (३।८।१७) इति "**ओकारे औ औकारे च**" (१।२।७) इति कृते। इहेत्यादि। न प्रकरणं गम्यते इत्यर्थः॥८८६।

**[वि० प०]**

ओदौ० । लव्यमिति । "**स्वराद् यः**" (४।२।१०) । अवश्यलाव्यमिति। "**उवर्णादावश्यके**" (४।२।३७) इति घ्यण् । समासेऽवश्यमः कृत्ये लुग् इति अवश्यमो मलोपः । इह स्वरवद्भावाद् "**ओ अव् , औ आव्**' (१।२।१४, १५) भवति । उपोयते, प्रौयत इति । यजादित्वाद् यणि वेञः सम्प्रसारणे एकत्र "**उवर्णे ओ**" (१।२।३) । अन्यत्र ह्यस्तनीविभक्तौ "**स्वरादीनां वृद्धिरादेः**" (३।८।१७) इति कृते "**ओकारे औ औकारे च**" (१।२।७) इति प्रवर्तते । न चात्र वक्तव्यम्– धात्वधिकारः प्रवर्तते, परलोपे चेह धातोर्विलुप्तत्वात् कथं प्राप्तिरिति । यस्मात् '**परनिमित्तादेशः पूर्वस्मिन् स एव**' (का० परि० ४४) इति धातुरेव । ननु तथापि प्रकरणादेव कृद् यकारो लभ्यते, किं कृद्ग्रहणेनेत्याह – **इहेत्यादि** । तेन 'दुद्यूषति' इत्यादौ "**च्छ्वोः शूटौ पञ्चमे च**" (४।१।५६) इत्यादिवचनेन सामान्येनैव सिद्धमिति भावः ॥८८६।

**[समीक्षा]**

'लव्यम् , अवश्यलाव्यम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ 'ओ-औ' को 'अव्-आव् ' आदेश आवश्यक होते हैं, जो परवर्ती स्वर वर्ण–के विना सम्भव नहीं हैं। पाणिनि

ने साक्षात् वान्तादेश का विधान करके तथा कातन्त्रकार ने यकारादि प्रत्यय को स्वरवद्भाव करके इस आवश्यकता की पूर्ति की है । पाणिनि का सूत्र है – "धातोस्तन्निमित्तस्यैव" (अ० ६।१।८०) । अतः प्रायः समानता ही है ।

[रूपसिद्धि]

१. **लव्यम्।** लू + य + सि । 'लूञ् छेदने' (८।९) धातु से "स्वराद् यः" (४।२।१०) सूत्र द्वारा 'य' प्रत्यय, प्रकृत सूत्र से उसका स्वरवद्भाव, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से ऊकार को गुण, "ओ अव्" (१।२।१४) से अवादेश तथा विभक्तिकार्य ।

२. **अवश्यलाव्यम्।** अवश्य + लू + घ्यण् + सि । 'अवश्य' शब्द के उपपद में रहने पर 'लूञ् छेदने' (८।९) धातु से "उवर्णादावश्यके" (४।२।३७) सूत्र द्वारा 'घ्यण्' प्रत्यय, 'घ् -ण्' अनुबन्धों का प्रयोगाभाव, 'य' का स्वरवद्भाव, 'आव्' आदेश तथा विभक्तिकार्य ॥८८६।

## ८८७. जिक्ष्योः शक्ये [४।१।३२]

[सूत्रार्थ]

'जि-क्षि' धातुओं से विहित यकारादि कृत्संज्ञक प्रत्यय का स्वरवद्भाव होता है ॥८८७।

[दु० वृ०]

जिक्ष्योः शक्येऽर्थे विहितः कृद् यः स्वरवद् भवति । जेतुं शक्यं **जय्यम्**, क्षेतुं शक्यं **क्षय्यम्** । शक्य इति किम् ? जेयम् , क्षेयम् । जिक्ष्योरिति किम् ? चेतुं शक्यः **चेयः** ॥८८७।

[दु० टी०]

जिक्ष्योः । **'क्षिष् हिंसायाम्'** (८।३०) इत्यपि शकनं शक्यं शक्तौ गम्यमानायामित्येके। तेन भावेऽपि जय्यं वटुना ॥८८७।

[वि० प०]

जि० । **"शकि च कृत्याः"** (४।५।१०९) इत्यनेन यो विहितः स इत्यर्थः ॥८८७।

[क० च०]

जि० । 'शक्ये' इति नाभिधेये सप्तमी । शक्ये गम्यमाने इत्यर्थः । तेन कर्मण्यपि भवति । शक्तावभिधेयायामित्युक्ते भाव एव स्यात् ॥८८७।

[समीक्षा]

'क्षय्यम् , जय्यम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ अयादेश का विधान दोनों ही व्याकरणों में किया गया है । पाणिनीय व्याकरण में साक्षात् निपातनविधि से

अयादेश का विधान है, जबकि कातन्त्रव्याकरण में स्वरवद्भाव करके इस अपेक्षा की पूर्ति की गई है । अतः प्रायः उभयत्र समानता ही है । पाणिनि का सूत्र है – "क्षय्यजय्यौ शक्यार्थे" (अ० ६।१।८१) ।

[रूपसिद्धि]

१. **जय्यम्** । जि + य + सि । जेतुं शक्यम् । 'जि जये' (१।१९१) धातु से शक्यार्थविवक्षा में "शकि च कृत्याः" (४।५।१०९) से 'य' प्रत्यय, गुण, स्वरवद्भाव, प्रकृत सूत्र से एकार को अयादेश तथा विभक्तिकार्य ।

२. **क्षय्यम्** । क्षि + य + सि । क्षेतुं शक्यम् । 'क्षिष् हिंसायाम्' (८।३०) धातु से 'य' प्रत्यय, गुण, स्वरवद्भाव, अयादेश, लिङ्गसंज्ञा, सि-प्रत्यय तथा विभक्तिकार्य ॥८८७।

## ८८८. क्रीञस्तदर्थे [४।१।३३]

[सूत्रार्थ]

'क्रीञ्' धातु से परवर्ती द्रव्यविनिमय अर्थ में वर्तमान कृत्सञ्ज्ञक यकारादि प्रत्यय को स्वरवद्भाव होता है ॥८८८।

[दु० वृ०]

तस्यार्थो द्रव्यविनिमयः, क्रीञः परस्तदर्थे वर्तमानः कृद् यः स्वरवद् भवति । क्रय्या गौः । कश्चित् क्रेष्यतीति कृत्वा हट्टेऽवतारिता गौरित्यर्थः । तदर्थ इति किम् ? क्रेयं मे धान्यम् । नास्ति क्रय्यम् , न प्रसारितमित्यर्थः ॥८८८।

[दु० टी०]

क्रीञः । क्रय्या इत्यत्र प्रत्ययार्थः प्रधानं प्रकृत्यर्थोऽपि विशेषणम् , तदित्यनेन कस्य निर्देशो न्याय्यः ? प्रधानस्य चेत् , प्रत्ययार्थस्य प्रकृत्यर्थविशिष्टस्य यदि प्रधानत्वं निर्दिश्यते, न किञ्चिदुक्तं भवतीति । क्रय्योऽर्थो यस्य शब्दस्य स **तदर्थः** शब्दस्तस्मिंस्तदर्थे, न च क्रय्यानुवृत्तौ शब्दे क्रय्यशब्दस्य वृत्तिः सम्भवति, न हिं शब्दे शब्दो वर्तते । न च स एवार्थ**स्तदर्थ** इति तदर्थग्रहणमनर्थकमवश्यमेव हि क्रय्यशब्दः स्वस्मिन्नर्थे वर्तते, तस्मात् प्रधानार्थनिर्देशे तच्छब्दस्यानर्थक्याद् गुणभूतस्य प्रकृत्यर्थस्य सम्बन्धोऽर्थादिति मत्वा चतुर्थीमाहुरन्ये । तस्मै इदं **तदर्थं** तस्मै क्रयाय यदुपन्यस्तं द्रव्यं तत् तदर्थं तस्मिन् वर्तमानः कृद् यः स्वरवदिति च गरीयः । प्रकृतिप्रत्यययो-र्वाक्यभेदनिर्देशात् तच्छब्दः पूर्ववस्तुपरामर्शीति प्रकृतिमाह, तस्य क्रीञोऽर्थो **द्रव्यविनिमयः**, तदर्थे वर्तमानः क्रयविशिष्टे कर्मणि वर्तमानः कृद् य इत्यर्थः ।

क्रयायोपन्यस्तो विनिमयार्थं विक्रीयते यः स **क्रय्यः** । तदर्थ इत्यादि । क्रेयं मे धान्यं क्रेतव्यं ग्रहीतव्यम् = स्वीकर्तव्यम् । नास्तीत्यादि। न च तदस्ति यत् तत् क्रयार्थमुपन्यस्तं

धान्यमप्रसारितत्वाद् हट्टे, ततः किं स्वीकरिष्यति किं क्रेतव्यमित्यर्थः । **अन्ये** पुनराहुः– क्रीणातिरयमनुपसर्गपूर्वः शुद्धश्च तस्यार्थ इति **क्रय्या गौः,** विक्रेया इत्यर्थः । क्रेयं मे धान्यं नास्ति विक्रेयं तद् यद् विक्रीयते इत्यर्थः । **अपरे** पुनराहुः – क्रीञस्तदर्थे इति भावमात्रनिर्देशाद् भावि क्रय्यमिति ।।८८८।

[वि० प०]

क्रीञः । इह कर्मणि यप्रत्ययस्य विधानात् प्रत्ययार्थः कर्मणि विद्यते, प्रकृत्यर्थश्च द्रव्यविनिमयः, क्रीणातेस्तत्र पठितत्वात् । तत्र विशिष्टो हि प्रत्ययार्थः शब्देनोच्यते । यदाह – **'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः'** (का० वृ० १।२।५६) इति। यदि च प्रधानत्वात् तच्छब्देन प्रत्ययार्थो निर्दिश्यते, तदायमर्थो भविष्यति – स क्रेयोऽर्थो यस्य यस्य शब्दस्य स तदर्थः शब्दः, तस्मिन्नभिधेये कृद् यः स्वरवद् भवति। अयं तु न युज्यते **पक्षः,** न हि क्रय्यार्थशब्देऽभिधेये यप्रत्ययस्य विधिरस्तीति कर्मणि तस्य विधानात्। न च तदन्तात् क्रय्यशब्दात् क्रय्यार्थस्य प्रतीतिरस्ति, शब्दस्य शब्दान्तरार्थानुपपत्तेः। अथ स चासावर्थश्चेति **तदर्थ** इति कर्मधारयः? एवमपि तदर्थग्रहणमनर्थकं स्यात्, व्यवच्छेद्याभावात्। अवश्यमेव हि क्रीणातेरुत्पन्नो यप्रत्ययस्तस्मिन्नर्थे कर्मणि वर्तते तत्र तस्य विधानात्। तर्हि प्रकृत्यर्थः कथ्यताम्? यदाहु**र्नैयासिकाः** - तस्मै इदं **तदर्थम्,** तस्मै विनिमयाय यदुपन्यस्तं द्रव्यं तत् तदर्थम्। तस्मिन् कर्मणि वर्तमाने यः कृद् यः स्वरवद् भवति? सत्यम् , अयमपि गरीयान् पक्ष इति। तच्छब्दस्य पूर्ववस्तुपरामर्शित्वात् प्रकृतिमेव वक्तुमर्हतीति। अतः षष्ठीसमासोऽयमित्याह – तस्येति। तस्य क्रीञोऽर्थो **द्रव्यविनिमयः** परिवर्तो व्यतिहारः क्रय इत्यर्थान्तरम्। एतदुक्तं भवति – क्रियाविशिष्टेऽर्थे कर्मणि वर्तमानः कृद् यः स्वरवद् भवति। क्रेयं मे धान्यमिति। मम धान्यं क्रेतव्यं गृहीतव्यम् = स्वीकर्तव्यम् । नास्ति क्रय्यमिति न तदस्ति क्रय्यम्। यत् क्रयार्थमुपन्यस्तं धान्यम् अप्रसारितत्वाद् हट्टे। ततः किं क्रीयते इत्यर्थः।।८८८।

[क० च०]

क्रीञः । तच्छब्देनात्र किमुच्यते प्रकृत्यर्थः प्रत्ययार्थो वा ? तत्र न तावत् प्रत्ययोऽसम्भवात्। प्रत्ययार्थः **पञ्जीकृतैव** विचार्यते, तथा प्रकृतिः प्रत्ययश्च वृत्ताविष्ट इति पदं **विनिमयस्थानोपलक्षणार्थम्,** तदर्थ इति । क्रेयं क्रेतव्यमित्यर्थः क्रय्यं नास्ति कुत इति हेतुगर्भविशेषणमाह – न प्रसारितमिति। अतः क्रय्यं नास्तीत्यर्थः । तथा च **अमरेण** सहैकवाक्यता अस्य – **'क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके' इत्यमरः ।**

ननु ईदृशो विशेषः कथं लभ्यते – क्रेयं मे धान्यमित्यत्रापि योग्यतामादाय विनिमयो धात्वर्थोऽस्त्येव । ततश्च प्रसारितमप्रसारितमिति कुतोऽयं विशेषग्रहः ? सत्यम् । तदर्थग्रहणादेव विशेषोऽवगम्यते । तेना**यमर्थः–** तदर्थग्रहणादेव यदा फलोपधायकविनिमयार्थो विशेषो

विवक्ष्यते, तदैव भवतु, तेन न योग्यतायाम् । अन्यथा यदि सामान्येन भविष्यति तदा निरर्थकमेव तदर्थग्रहणम् । धातोः स्वत एव विनिमये वर्तमानत्वाद् व्यवच्छेद्याभावादिति **पञ्जिका** । अथ किमर्थमिदमुक्तम् , तदर्थग्रहणाभावेऽपि कथन्न स्यात् । तस्मादेतद् – व्यावृत्त्यर्थमेव तदर्थग्रहणमिति । नैवमत्र पक्षे तदर्थग्रहणस्थितावपि सामान्येन कर्मणि भावे च भविष्यति । अन्यथा यदि कर्मण्येव तदा 'क्रीञः कर्मणि' इति कुर्यात् , किं व्यापकवचनेन? तस्माद् भावस्यापि प्रत्ययार्थत्वात् तत्रापि स्यात् ।

अथ तथापि तदर्थग्रहणस्य व्यावृत्तिरस्ति, फलोपधायककर्मादायैव स्यादिति । अन्यथा 'क्रेयं मे धान्यम्' इत्यत्रापि योग्यतायां कथन्न स्यात् ? सत्यम् , इदानीं तदर्थग्रहणाभावे गौणमुख्यन्यायोऽत्र **शरणम्** । **विनिमयो** हि फलोपधायकत्वे मुख्यत्वेन सम्भवति । योग्यतायां तु गौणत्वेनेति हृदयम् । कर्मणीति । ननु कथमिदं निश्चितम् , भावेऽपि कथन्न स्यात् ? सत्यम् । तदर्थग्रहणोपरि अयमपि भारो देय इति **हेमः** । तच्छब्देनेति । स क्रय्योऽर्थो यस्य स चासावर्थश्चेति **पक्षद्वय** इति शेषः । अथ **कर्मधारयपक्षे** तदर्थस्य व्यावृत्तिर्नास्तीति कथमुक्तं **पञ्जिकायां** भावेऽसम्भवात् । अन्यथा भावेऽपि कथन्न स्यादित्याह – यदि चेति । तदर्थ इति भावार्थेऽभिधेय एव वर्तमानेऽपि यः प्रत्ययः कर्मण्येव स्वरवद् भवति, इष्टत्वादित्यर्थः ।।८८८।

**[समीक्षा]**

'क्रय्यो गौः, क्रय्यः कम्बलः, क्रय्या गौः' इत्यादि शब्दरूपों के सिद्ध्यर्थ अपेक्षित अयादेश का विधान दोनों ही व्याकरणों में किया गया है । पाणिनि का निपातन से अयादेशविधायक सूत्र है – "क्रय्यस्तदर्थे" (अ० ६।१।८२) । तदनुसार पाणिनीय व्याकरण में साक्षात् अयादेश का विधान करके तथा कातन्त्र में मकारादि प्रत्यय का स्वरवद्भाव करके आवश्यकता की पूर्ति की गई है । अतः प्रायः उभयत्र समानता है ।

**[विशेष वचन]**

१. क्रय्या गौः। कश्चित् क्रेष्यतीति कृत्वा हट्टेऽवतारिता गौरित्यर्थः (दु० वृ०)।

२. क्रेयं मे धान्यम् । क्रेतव्यं ग्रहीतव्यं स्वीकर्तव्यम् (दु० टी०) ।

३. विनिमयो हिं फलोपधायकत्वे मुख्यत्वेन सम्भवति, योग्यतायां तु गौणत्वेनेति हृदयम् (क० च०) ।

**[रूपसिद्धि]**

**१. क्रय्या गौः** । क्री + य + आ + सि । 'डु क्रीञ् द्रव्यविनिमये' (८।१) धातु से द्रव्यविनिमय अर्थ की विवक्षा में "स्वराद् यः" (४।२।१०) सूत्र द्वारा 'य' प्रत्यय, धातुघटित ईकार को गुण, प्रकृत सूत्र से स्वरवद्भाव, एकार को अयादेश, स्त्रीलिङ्ग में 'आ' प्रत्यय, समानदीर्घ तथा विभक्तिकार्य ।।८८८।

# ८८९. वेर्लोपोऽपृक्तस्य [४।१।३४]

[सूत्रार्थ]

कृत्सञ्ज्ञक तथा अपृक्तसंज्ञक 'वि' (व्) का लोप होता है ।।८८९।

[दु० वृ०]

वे: कृत्संज्ञकस्यापृक्तस्य वर्णान्तरेणासंयुक्तस्य लोपो भवति । क्विप् – घृतं स्पृशतीति **घृतस्पृक्** । विण् – अर्धभाक् । विच्-कीलालपाः । कृत इति किम् ? उपेयिवांसमाचष्टे उपेयिवयतीति क्विप् – **उपेयिव्** , उपेयिवौ । अपृक्तस्येति किम् ? क्विबादीनां विशेषकराननुबन्धानुत्सृज्य इकारोपलक्षितस्य वमात्रस्य लोपार्थम्। तेनेह न स्यात् – जागृविः । "कृगृजागृभ्यः क्विः" ।।८८९।

[दु० टी०]

वे: । **'पृची सम्पर्के'** (२।५३) । पृच्यते स्मेति **पृक्तः**। क्विबादीनां यथानुवर्तते तथा लिङ्गसञ्ज्ञायामुक्तमेव । अथवा यद्यपि अन्वयव्यतिरेकाभ्यां प्रत्ययार्थो विधीयते, तौ तु क्विबादीनां न सम्भवतो रूपस्यादृष्टत्वात्, तथापि प्रत्ययत्वप्रत्यभिज्ञानादर्थवत्ता। शास्त्रव्यवहाराद्धि प्रकृतिप्रत्ययादिकल्पना तदर्थव्यवहारादेव विकल्पयिष्यत इति । अन्येषां प्रत्ययानां कर्तृवाच्य इति दर्शनात् क्विबादीनामेव कर्तृवाचित्वम् ।।८८९।

[वि० प०]

वे: । कृत्संज्ञकस्येत्यत्र प्रकरणमाश्रयणीयमित्यर्थः । घृतस्पृगिति । **"स्पृशोऽनुदके"** (४।३।७०) इति क्विप् । कृत इत्यादि । उपपूर्व इण् , क्वन्सु, द्विर्वचनम् । **"अर्तीण्-घसैक०"** (४।६।७६) इत्यादिना इट् , **"दीर्घ इणः"** (३।३।१७) इत्यादिनाऽभ्यासे दीर्घः । "इणश्च" (३।४।५९) इति यत्वम् । धात्वर्थे इनि कृते **"इनि लिङ्गस्या०"** (३।२।१२) इत्यादिनाऽन्त्यस्वरादिलोपः इति । **"ते धातवः"** (३।२।१६) इति धातुत्वमिति प्रत्युदाह्रियते ।।८८९।

[क० च०]

वे: । वेरिति इकार **उच्चारणार्थः**, वकारमात्रस्य लोपः । अथ कथमिति चेत् , वेरेव लोपः कथन्न स्यात् , तदा 'जागृविः' इत्यत्रापि लोपः स्यात् । नैवम् , अपृक्तग्रहणबलाद् अयं च वकारोऽपृक्तो न भवति, इकारेण सस्वरत्वात् । अथ विशब्द एवान्यवर्णेन संपृक्तोऽवगम्यते, तदसम्भवादनुचितमिदम् । अतः "कृगृजागृभ्यः क्विः" इत्यनेन विहितस्य वेरिकारस्तदुपलक्षणं न भविष्यति, क्विबादीनामेव भविष्यतीत्यर्थे किं प्रमाणम् ? सत्यम् । **"अशन्तृङ्व्योः"** (४।१।८) इति निर्देशात् । तथापि यदि वेरिकारोऽप्यनुबन्धः स्यात् तदा यथा शन्तृङः शकारानुबन्धः पठ्यते, तथा वेरपि पठ्यतामिति । तस्माद् उकारपाठाद् इकारपाठाद् वा नायमनुबन्धः क्विबादीनान्तु कारणाभावात् तदर्थमेव इकारकरणम् । अथ क्विबादीनां वकार एव क्रियताम् , तथा इदं वचनं च ? सत्यम् । वकारकरणं 'कण्डूः,

लोलूः' इत्यत्र क्विपो लोपे वर्णाश्रयेऽपि **प्रत्ययलोपलक्षणं** क्वचिदिति **"य्वोर्व्यञ्जनेऽये"** (४।१।३५) इति लोपार्थम् । अन्यथा इकारादीनामनुबन्धानामप्रयोगित्वाद् व्यञ्जनाभावात् कथं प्रत्ययलोपलक्षणेऽपि लोपः । यद् वा यदि वकारो न दातव्यस्तदा प्रत्ययाभावोऽनर्थकः स्यादिति ।।८८९।

[समीक्षा]

'घृतस्पृक्, अर्धभाक्, कीलालपाः' इत्यादि शब्दों में 'क्विप् - विण् - विच्' प्रत्ययघटित 'वि' के लोप का विधान दोनों ही व्याकरणों में किया गया है । पाणिनि का सूत्र है — "वेरपृक्तस्य" (अ० ६।१।६७) । अतः उभयत्र समानता है ।

[विशेष वचन]

१. प्रत्ययत्वप्रत्यभिज्ञानादर्थवत्ता, शास्त्रव्यवहाराद्धि प्रकृतिप्रत्ययादिकल्पना (दु० टी०) ।

२. कृत्संज्ञकस्येत्यत्र प्रकरणमाश्रयणीयमित्यर्थः (वि० प०) ।

३. वेरिति इकार उच्चारणार्थः, वकारमात्रस्य लोपः (क० च०) ।

[रूपसिद्धि]

१. **घृतस्पृक्** । घृत + स्पृश् + क्विप् + सि । घृतं स्पृशति । 'घृत' शब्द के उपपद में रहने पर 'स्पृश् संस्पर्शे' (५।५४) धातु से "क्विप् च" (४।३।६८) सूत्र द्वारा 'क्विप्' प्रत्यय, 'क्-इ-प्' अनुबन्धों का प्रयोगाभाव, प्रकृत सूत्र से 'व्' का लोप, लिङ्गसंज्ञा, सि-प्रत्यय, "छशोश्च" (३।६।६०) से श् को ष् , "षढोः कः से" (३।८।४) से ष् को क् तथा "व्यञ्जनाद् दिस्योः" (३।६।४७) से 'सि' प्रत्यय का लोप ।

२. **अर्द्धभाक्** । अर्द्ध + भज् + विण् + सि । अर्द्धं भजते । 'अर्द्ध' शब्द के उपपद में रहने पर 'भज सेवायाम्' (१।६०४) धातु से "भजो विण्" (४।३।५९) सूत्र द्वारा 'विण्' प्रत्यय, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधादीर्घ, प्रकृतसूत्र से 'वि' का लोप, लिङ्गसंज्ञा, सि-प्रत्यय, "चवर्गस्य किरसवर्णे" (३।६।५५) से ज् को ग् , "पदान्ते धुटां प्रथमः" (३।८।१) से ग् को क् तथा सि-प्रत्यय का लोप।

३. **कीलालपाः** । कीलाल + पा + विच् + सि । कीलालं पिबति । 'कीलाल' शब्द के उपपद में रहने पर 'पा पाने' (१।२६४) धातु से "आतो मन् - क्वनिप् - वनिप् - विचः" (४।३।६६) से 'विच्' प्रत्यय, च् - अनुबन्ध का प्रयोगाभाव, प्रकृत सूत्र से 'वि' का लोप, लिङ्गसंज्ञा, सि-प्रत्यय तथा "रसकारयोर्विसृष्टः" (३।८।२) से सकार को विसर्गादेश ।।८८९।

## ८९०. य्वोर्व्यञ्जनेऽये [४।१।३५]

[सूत्रार्थ]

कृत्संज्ञक यकारवर्जित व्यञ्जनादि प्रत्यय के परे रहते धातुगत यकार-वकार का लोप होता है ॥८९०।

[दु० वृ०]

यकारवकारयोः कृति व्यञ्जने परे यकारवर्जिते लोपो भवति । **'क्नूयी'** (१।४११) – क्नूतः, क्नूतवान् । दिदिवान् , सिषिवान् । व्यञ्जन इति किम् ? क्ष्मायिता, देविता । अय इति किम् ? प्रक्नूय्य, प्रदीव्य । कथं कण्डूः, लोलूः ? वर्णाश्रयेऽपि प्रत्ययलोपलक्षणं क्वचित् । लब्धा, लब्धुम् इति ओष्ठ्योऽयं बकारः ॥८९०।

–[दु० टी०]

य्वोः । दिदिवान् , सिषिवान् । **भाषायामपि** क्वन्सुः । **परस्त्वाह–छान्दसोऽयं** लोप इति । कण्डूयञ् धात्वन्तरमेव । लोलूयः, चेक्रीयितान्तः । अस्य च लोपे कृते स्वरादेशस्य स्थानिवद्भावो नास्ति । लुग्विधित्वान्नित्यत्वात् क्विबादीनां लोपे सति **'न वर्णाश्रये प्रत्ययलोपलक्षणम्'** (व्या०परि० पा० ९६) इति प्रत्ययलोपलक्षणं नास्ति, व्यञ्जनं च वर्ण इत्याह – वर्ण इत्यादि । अस्याः परिभाषाया लक्ष्यानुरोधादनित्यत्वाभ्युपगम इत्यर्थः ॥८९०।

[वि० प०]

य्वोः । कथमिति । कण्डूयञ् धात्वन्तरम् , 'लोलूयः' इति चेक्रीयितान्तात् क्विप्। अस्य च लोपे स्वरादेशस्य स्थानिवद्भावो नास्ति । लुग्विधौ **"न पदान्त०"** (का० परि० १०) इत्यादिना स्थानिवद्भावप्रतिषेधात् । ननु तथापि नित्यत्वात् क्विपो लोपे व्यञ्जनस्याभावात् कथं यकारलोपः? न चेह प्रत्ययलोपलक्षणमुपपद्यते। व्यञ्जने हि वर्णलोपोऽयमिति **'न वर्णाश्रये प्रत्ययलोपलक्षणम्'** (व्या० परि० पा० ९६) इति प्रतिषेधाद् इत्याह – वर्णेत्यादि। क्वचिदिति। लक्ष्यानुरोधादस्याः परिभाषाया अनित्यत्वमिति भावः। ओष्ठ्योऽयं बकार इति सूत्रे दन्त्योष्ठ्यो निर्दिष्ट इति भावः॥८९०।

[क० च०]

य्वोः । कथमित्यादि । ननु अन्तरङ्गत्वात् प्रागेव लोपो भविष्यति, नैवम् । अन्तरङ्गेण लोपो न बाध्यते इति **"विरामव्यञ्जनादिषु"** (२।३।४४) इत्यत्र विरामग्रहणेन **ज्ञापितमिति कश्चित्** । तदसत् । विरामग्रहणस्य फलं तत्रैव दर्शितम्। **वस्तुतस्तु** अन्तरङ्गत्वाद् यलोपो भवतु तथापि क्विपो लोपे निमित्ताभावान्निवर्तते। पुनः प्रत्ययलोपलक्षणप्राप्तिपक्षो वृत्तौ वर्णित इति **पञ्जिकायामपि** । लब्धेति भकारस्थाने जातो बकारः स्थानिवदोष्ठ्य इत्यर्थः ॥८९०।

[समीक्षा]

'क्रूतः, दिदिवान् , सिषिवान्' आदि शब्दरूपों के सिद्ध्यर्थ धातुगत 'यकार-वकार' के लोप का विधान दोनों ही व्याकरणों में किया गया है । पाणिनि का सूत्र है-"लोपो व्योर्वलि" (अ० ६।१।६६) । अतः उभयत्र समानता ही है ।

[विशेष वचन]

१. वर्णाश्रयेऽपि प्रत्ययलोपलक्षणं क्वचित् (दु० वृ०) ।

२. दिदिवान् , सिषिवान् । भाषायामपि क्वन्सुः । परस्त्वाह – छान्दसोऽयं लोपः (दु० टी०) ।

३. अस्याः परिभाषाया लक्ष्यानुरोधादनित्यत्वाभ्युपगम इत्यर्थः (दु० टी०) ।

४. न्यायो हिं स्थविरदण्डवत् क्वचिदाद्रियते क्वचिन्नाद्रियते (वं० भा०) ।

[रूपसिद्धि]

१. **क्रूतः** । क्रूयी + क्त + सि । 'क्रूयी शब्दे' (१।४११) धातु से "निष्ठा" (४।३।९३) सूत्र द्वारा 'क्त' प्रत्यय, क् - अनुबन्ध का प्रयोगाभाव, "न डीश्वीदनुबन्धवेटामपतिनिष्कुषोः" (४।६।९०) से अनिट् , प्रकृत सूत्र से व्लोप तथा विभक्तिकार्य ।

२. **क्रूतवान्**। क्रूयी + क्तवन्तु + सि। 'क्रूयी शब्दे' (१।४११) धातु से "निष्ठा" (४।३।९३) सूत्र द्वारा क्तवन्तु प्रत्यय, वकारलोप, लिङ्गसंज्ञा, सि-प्रत्यय, नकार की उपधा को दीर्घ, तलोप तथा सि-लोप।

३. **दिदिवान्**। दिव् + क्वन्सु + सि। 'दिवु क्रीडाविजिगीषाव्यवहार-द्युतिस्तुतिकान्तिगतिषु" (३।१) धातु से "क्वन्सुकानौ परोक्षावच्च" (४।४।१) सूत्र द्वारा 'क्वन्सु' प्रत्यय 'क्-उ' अनुबन्धों का प्रयोगाभाव, द्वित्व, अभ्यासकार्य, प्रकृत सूत्र से वकारलोप तथा विभक्तिकार्य।

४. **सिषिवान्**। सिव् + क्वन्सु + सि। 'षिवु तन्तुसन्ताने' (३।२) धातु से क्वन्सु प्रत्यय आदि कार्य पूर्ववत् ॥८९०।

## ८९१. निष्ठेटीनः [४।१।३६]

[सूत्रार्थ]

निष्ठासंज्ञक प्रत्यय तथा इडागम के परे रहते इन् प्रत्यय का लोप होता है॥८९१।

[दु० वृ०]

निष्ठायामिटि परे इनो लोपो भवति। हारितः, हारितवान्। लक्षितः, लक्षितवान्। इटीति किम् ? संज्ञपितः पशुः। "**इवन्तर्द्ध०**" (३।७।३३) इत्यादिना सनि वेट् -

**वेटामेकस्वरस्मृत्या संज्ञपित इडस्ति ते।**
**पाचिते प्रागिनो लोप एकस्वरान्न चेद् पचेः।।८९१।**

[दु० टी०]

निष्ठे०। निष्ठायामिट् **निष्ठेट्। विषयसप्तमीयम्** । सम्बन्धे षष्ठी वा समस्यते इति इन इति शब्दसाम्याद्धेतुविहितस्य स्वार्थिकस्य च लोप इत्याह-हारित इत्यादि। इनन्तं सर्वमनेकस्वरम् इत्यनिड् निष्ठायां नास्तीत्याह-इटीत्यादि। येषामिड् विभाषया तेषां निष्ठायां नित्यम् इट्प्रतिषेध इति । अनिड् निष्ठायामपि कारितलोपः स्याद् इत्तीड्ग्रहणम्, नैवम्, "**न डीश्वीदनुबन्धवेटाम्**" (४।६।९०) इति प्रतिषेधे. "**अर्तीण्घसैकस्वराताम् इड्वन्सौ**" इत्यतः एकविभक्तियुक्तमप्येकस्वरग्रहणं स्मर्यते, ज्ञपिरनेकस्वर इतीनो लोपे कृते इडेवात्र श्रूयते इति तर्हि 'पाचितः' इति न सिध्यति । कारितलोपश्चेट् प्राप्नोति। ततः परत्वान्नित्यत्वाच्च कारितलोपे एकदेशविकृतस्यानन्यवद्भावात् पचिरेवात्र गृह्यते। ततः "**पचिवचि०**" (३।७।१८) इत्यादिना इट्प्रतिषेधोऽनिट् निष्ठायां कारितलोपश्च स्याद् इति श्लोकेनाह-वेटामित्यादि। किञ्च **दान्तशान्तपूर्णदन्तस्पष्टच्छन्नज्ञप्ताश्चेनन्ता** वा निपात्यन्ते। तत्रेट्पक्षे कारितलोपे कृते इट् श्रूयते ज्ञप्तो ज्ञपित इति। यद्येवं "**कारितस्यानामिड् विकरणे**" (३।६।४४) इत्यत्रेड्ग्रहणं न कर्तव्यम्, निष्ठायामेवेट् नान्यस्मिन् प्रत्यये इटीति नियमात्। **विपरीतनियमो** नास्ति इट्येव निष्ठायां नानिटीति। इनन्तस्य सेटो निष्ठायाः सम्भवात्? सत्यम्, भिन्नकर्तृत्वात् तत्रेड्ग्रहणं कृतमिति॥८९१॥

[वि० प०]

निष्ठे०। इनन्तस्यानेकस्वरत्वान्नानिट् निष्ठा काचिदस्ति। ततः किमिड्ग्रहणेनेत्याह-इटीत्यादि। इहानिटि निष्ठायां मा भूदिति। अनिट्त्वमेवाह-"**इवन्तर्ध०**" (३।७।३३) इत्यादिना सनि वेट्त्वात् "**न डीश्वीदनुबन्धवेटामपतिनिष्कुषोः**" (४।६।९०) इति वचनान्निष्ठायामित्यनिट्प्रतिषेध इति। तदयुक्तम्, "**अर्तीण्घसैकस्वराताम्**" (४।६।७६) इत्यतः एकस्वराधिकारस्मरणान्न डीश्वीत्यादावेकस्वराणामेव वेटामिट्प्रतिषेधात् 'संज्ञपितः' इत्यत्र इडस्त्येव । इनन्तो हि ज्ञपिरनेकस्वर इत्येषापि सेडेव निष्ठा। यदपि ज्ञप्त इति "**दान्तशान्त०**" (४।६।१०) इत्यादिनिपातनादनिट्यपि निष्ठायामिनो लोपेन भवितव्यमेवेत्यनर्थकमिड्ग्रहणम्। नानर्थकम् इटि कृते लोपे यथा स्याद् अकृते मा भूदित्येतदर्थम्।अन्यथा 'पाचितः' इत्यत्र नित्यत्वात् प्रागिनो लोपे सति एकदेशविकृतस्यानन्यवद्भावात् स एवायं पचिरेकस्वर इति "**पचिवचि०**" (३।७।१८) इत्यादिना इट्प्रतिषेधः स्यात्। एतदेव **श्लोकेनाह**-वेटामित्यादि। ते इति। तव **सिद्धान्तवादिन** इत्यर्थः। चकारोऽवधारणे नैवेत्यर्थः। ननु वचनबलादेव इति कृते लोपो भविष्यति, अन्यथा "**कारितस्यानामिड्विकरणे**" (३।६।४४) इत्यनेनैव सिद्धत्वात्। तदयुक्तम्, तेन हि लोपोक्ताविडागम एव नित्यो न तु लोप इति। सति अनामिड्विकरणे इति प्रतिषेधात्। ततो यथा कारयितेत्यादौ नित्यत्वादिट् पूर्वं स्यात्, तथा हारित इत्यादावपीति। कथम्

अकृते इटि तेन सिध्येत्, अनेन तु लोपवचनेन लोपस्य कृताकृतप्रसङ्गित्वमिति नित्यत्वादकृत एवेटि लोपोऽयं स्यादितीड्ग्रहणमिति स्थितम्।।८९१।

[क० च०]

निष्ठे०। निष्ठायामिट् **निष्ठेट्** निष्ठाविषय इत्यर्थः। न तु निष्ठायां परत इति **परसप्तमी,** असार्वधातुकस्यावयवत्वेन विधानात्। न तु तस्मिन् परत इड् विधीयते। निष्ठाया इट् **निष्ठेट्** इति षष्ठीसमासपक्षे देश्यमेव नास्ति। **वररुचिमते** इन इति सामान्यनिर्देशादस्त्यर्थे विहितस्येनोऽपि लोपः स्यात्। यथा दण्डीवाचरति इत्यायिलोपे दण्डितवान्। **स्वमते** तु आयिलोपदर्शनं नाद्रियते इति नेदमुदाहरणम्, किन्तु हेतुविहितस्वार्थविहितानामविहितानां त्रयाणामुदाहरणमुचितमिति। तत्राद्ययोर्**वृत्तावु**दाहरणम्, अन्त्यस्य तु बोद्धव्यम्। यथा दण्डमकरोद् दण्डितवान् इति। इटीति किमिति। तथाऽनिटि निष्ठायामनेन तावन्न भवति इनो लोपः कारितस्येत्यादिना कथन्न स्यात्? नैवम्। अस्य व्यावृत्तिबलात् पूर्वेण प्राप्तोऽपि लोपो बाध्यते।

वेटामित्यादि। तथा **'आगमादेशयोरागमो विधिर्बलवान्'** (का० परि० ४०) इति न्यायाद् इड् वा प्राग् भवति ततो लोप इति चेत् कारितलोपे एव नित्यत्वादग्रतो भविष्यति। अथ आगमेन नित्यं कारितलोपो बाधिष्यते? नैवम्। नित्यानित्ययोरिति बलाबलम्। आगमादेशयोरिति तु परिभाषा, ततश्च बलाबलेन परिभाषा बाध्यते, न तु परिभाषया बलाबलमिति न दोषः। अथ 'संज्ञपितः' इत्यत्रापि प्राग् इनो लोपे दूषणम्, तथा 'पाचितः' इत्यत्र तत् कथं तद् विहाय पाचितः इति दर्शितम्? सत्यम्। यद्यत्र प्राक् कारितलोपे ज्ञप्त इति स्यात् तदा **"दान्तशान्त०"** (४।६।१०) इत्यादिना विकल्पेन ज्ञप्तनिपातनमनर्थकमनेनैव नित्यं सिद्धत्वात्। तस्मात् तेन विकल्पेन निपातनबलात्। नात्र कारितलोपे इटः प्रागिति। यद् वा इड्ग्रहणस्य बहु **प्रत्युदाहरणं** दर्शितम्, अन्यथा संज्ञपित इत्यत्रैव वेड्ग्रहणस्य प्रयोजनमेतत् **शिष्यभ्रान्तिः** स्यात्। अथ तथापि 'पाचितः' इत्यत्रापि न दूषणम्। इटोऽपि विद्यमानत्वात् कृताकृतप्रसङ्गित्वेन न वाच्यम्। इनो लोपे एकस्वरत्वात् **"पचिवचि०"** (३।७।१८) इत्यादिना प्रतिषेधात् कथमिटो नित्यता, तत्र विहितविशेषणबलान्नात्र **"पचिवचि०"** (३।७।१८) इत्यादिना इटः प्रतिषेधः। इदं तु इनन्तात् पचेर्विहितमसार्वधातुकमिति? सत्यम्। **"वसतिघसेः सात्"** (३।७।२९) इत्यत्र घसेरुपादानाद् व्यञ्जनान्तधातोर्विहितविशेषणं नास्तीति। अन्यथा अदेः स्थाने घसेर्विधानाद् अदद्वारेणैव विहितविशेषणमाश्रित्य निषेधो भविष्यति किं घस्पाठेन? अत एव 'जग्धः, जग्धवान्' इत्यत्र सन्निपातेत्यादिना **सिद्धान्तान्तरं** दत्तमिति, यदि सादृश्यात् सर्वादेशे विहितविशेषणं नास्तीत्यनया प्रणाल्या घस्ग्रहणं ज्ञापकमित्युच्यते तदा संज्ञपित इत्यत्र फलमिड्ग्रहणस्य बोध्यम्। अत्रापि **"दान्तशान्त०"** (४।६।१०) इत्यादिना निपातनसामर्थ्यमित्युच्यते तदा **सुखार्थम्। पञ्जिका** इटि कृते इति। तेन अत एवेड्ग्रहणान्नित्यमपि लोपं बाधित्वा इट्

प्राक् प्रवर्तते। एकदेशस्येति। अथ एकदेशस्येति। एकदेशविकृतस्यानन्यवद्भावात्। स एवायं पचिरनेकस्वर इत्यर्थे सति इट् स्यादिति कथं नोच्यते? सत्यम्। असिद्धवद्भावेऽनन्यद्भावः प्रयुज्यते। अत्र तु मतान्तरेणापि पाचिरूपानिट् सिद्धः सूत्रे पाचिरूपस्य पठितत्वात्। किञ्च अनन्यवद्भावेनानेकस्वरत्वं नानीयते, किन्तर्हि इनन्तधातुत्वम्। यद् वा नास्वशब्दोक्तत्वादिति निषेधात् पचिवचीत्यादि स्वशब्दोक्तं भवति।

**सिद्धान्तवादिन** इति। ननु पूर्वपक्षवादिन इत्येव वक्तुमुचितम्, सिद्धान्तस्य वक्ष्यमाणत्वात्? सत्यम्। वेटामित्यादिना ग्रन्थेन संज्ञपित इत्यत्र दूषणं नास्तीत्येतादृश इत्यर्थः। तेन हीत्यादि। ननु कथम् इडागमस्य नित्यत्वम्, कृताकृतप्रसङ्गित्वाभावात्। नहि कारितलोपे इटः सम्भवोऽस्ति, "**पचिवचि०**" (३।७।१८) इत्यादिना विहितविशेषणाभावेनेट्प्रतिषेधादित्युक्तमेव, नैवम्। नित्य इति आवश्यक इत्यर्थः, अबाधित इति यावत्। कुतश्चेद् उच्यते - '**आगमादेशयोरागमविधिर्बलवान्**' (का० परि० ४०) इति न्यायात्। अथ लोपस्य कृताकृतप्रसङ्गित्वेन नित्यत्वबलादावश्यकत्वमिति वाच्यमित्याह-नन्विति। ननु लोपोऽबाधित इत्यर्थः। कुतोऽबाधित इति चेत् कृताकृतप्रसङ्गित्वाभावात् तदेव नास्तीति कुत इत्याह- इटि सतीति। अथ "**कारितस्यानामिड्विकरणे**" (३।६।४४) इत्यत्र इड्ग्रहणं न क्रियताम्, निष्ठायामिटीन इति पृथक् पदं कुर्यात् तथा च तेन सिद्धे इदं सूत्रं **नियमार्थं** भविष्यति। निष्ठायामेव इटि लोपो नान्यस्मिन्निटीति? सत्यम्। निष्ठायामिट्येवेति विपरीतनियमः कथन्न स्यात्।**हेमेनापि** व्याख्यातं वैयर्थ्यम्। अथ भिन्नपदनिर्देशबलान्न विपरीतनियमावसरः। अन्यथा "**निष्ठेटीनः**" (४।१।३६) इति कुर्यात्। यद् वा निष्ठायामिट्येवेति नियमे व्यावृत्तिरपि नास्ति। तथाहि-निष्ठायां भवन्निट्येव, न तु केवलायामिति। न हि केवलनिष्ठायाः सम्भवोऽस्ति, तत् किमुक्तं **हेमेनेति**। अथ निष्ठायामिटीन एव नान्यस्य। दरिद्रित इत्यत्राकारलोपो न स्याद् इति विपरीतनियमो **हेमस्याभिमत** इत्यर्थः। नैवं निष्ठायामेव इटीति नियमे उपस्थितमादाय विधिव्यावृत्तिसम्भवेऽनुपस्थितकल्पने गौरवापत्तेः। तस्माद् भिन्नकर्तृकत्वादिड्ग्रहणमिति **टीकाकारवचनमेव** साधीयः? सत्यम्। प्रथमकक्षायामुक्तम्।।८९१।

**[समीक्षा]**

'कारितः, हारितवान्, लक्षितवान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ सेट् निष्ठासंज्ञक प्रत्ययों के परे रहते णिच्-इन् प्रत्ययों का लोप दोनों व्याकरणों में किया गया है। पाणिनि का सूत्र है- "निष्ठायां सेटि" (अ० ६।४।५२)। यह ज्ञातव्य है कि पाणिनीय णिच् प्रत्यय के लिए कातन्त्रकार ने इन् प्रत्यय किया है, तदनुसार सूत्रों में उनका पाठ मिलता है। अतः उभयत्र समानता है।

**[विशेष वचन]**

१. भिन्नकर्तृकर्तृकत्वात् तत्रेड्ग्रहणं कृतम् (दु० टी०)।

२. तव सिद्धान्तवादिन इत्यर्थः। चकारोऽवधारणे नैवेत्यर्थः(वि० प०)।
३. वररुचिमते इन इति सामान्यनिर्देशात् (क० च०)।
४. निपातनसामर्थ्यमित्युच्यते तदा सुखार्थम् (क० च०)।
५. असिद्धवद्भावेऽनन्यवद्भावः प्रयुज्यते (क० च०)।
६. भिन्नपदनिर्देशबलान्न विपरीतनियमावसरः (क० च०)।
७. विपरीतनियमो हेमस्याभिमत इत्यर्थः (क० च०)।
८. तस्माद् भिन्नकर्तृकत्वादिड्ग्रहणमिति टीकाकारवचनमेव साधीयः (क० च०)।

**[रूपसिद्धि]**

१. **हारितः**। हृ + इन् + क्त + सि। 'हृञ् हरणे'' (१।५९६) धातु से इन् प्रत्यय, ऋकार को वृद्धिः, 'हारि' की धातुसंज्ञा, क्त-प्रत्यय, इडागम, प्रकृत सूत्र से इन् का लोप तथा विभक्तिकार्य।

२. **हारितवान्**। हृ + इन् + क्तवन्तु + सि। 'हृ' धातु से इन्, वृद्धि, धातुसंज्ञा, क्तवन्तु प्रत्यय तथा अन्य प्रक्रिया प्रायः पूर्ववत् ।

३. **लक्षितः**। लक्ष् + इन् + क्त + सि। 'लक्ष दर्शनाङ्कयोः' (९।६) धातु से इन् प्रत्यय आदि पूर्ववत् ।

४. **लक्षितवान्**। लक्ष् + इन् + क्तवन्तु + सि। 'लक्ष्' धातु से इन् प्रत्यय, इडागम, क्तवन्तु-प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्।।८९१।

## ८९२. नाल्विष्णवाय्यान्तेत्नुषु [४।१।३७]

**[सूत्रार्थ]**

'आलु-इष्णु-आय्य-अन्त-इत्नु' इन प्रत्ययों के परे रहते इन्-प्रत्यय का लोप नहीं होता है।।८९२।

**[दु० वृ०]**

'आलु-इष्णु-आय्य-अन्त-इत्नु' एषु परतः इनो लोपो न भवति। स्पृहयालुः, पारयिष्णुः, स्पृहयाय्यः। "[1]श्रिदृक्षिस्पृहिग्रहिभ्य आय्यः"। [2]गण्डिमण्डिजिनन्दिभ्यो झच्। स्तनयित्नुः। स्तनिकृषिघुषिगदिमदिभ्य इन इत्नुः (उ०सू० १।२९)।।८९२।

**[दु० टी०]**

नाल्वि०। **"कारितस्यानामिड् विकरणे"** (३।६।४४) इत्यनेन प्राप्तस्य लोपस्यायं प्रतिषेधः। **एके** तु इत्नुप्रत्ययं कृत्वेनन्तादिडस्तीत्नुं न पठन्ति, ततः **प्रक्रियागौरवमिति** इत्नुः प्रत्ययान्तरम् । स्पृहयालुरिति, "दयिपति०" इत्यादिनालुः। पारयिष्णुरिति। इनन्ताद् "भ्राज्यलम्०" (४।४।१६) इत्यादिना इष्णुच्।।८९२।

---

१. स्पृहेराय्यः (उ०सू० २।६९)।
२. गण्डिमण्डिभ्यां झः। जीविशिवसिभासिवहिनन्दिहिसाधिभ्यश्च (उ० सू, ३।१५-१६)।

[वि० प०]

नाल्वि०। दयिपतीत्यादिना आलुः। "भ्राज्यलंकृञ्०" (४।४।१६) इत्यादिना इष्णुच्॥८९२।

[क० च०]

नाल्वि०। ननु वक्ष्यमाणमय्ग्रहणमिहैव क्रियताम्, एषु परतः इन् भवति इत्युक्ते सिद्धं सत् साध्यम्, किं नञ्पाठेन? यद् वा **कारितस्यानामिड्विकरणाल्विष्ण्वाय्यान्तेत्निष्विति** तत्रैव क्रियताम्, उभयथापि नञ् न युक्त इति? सत्यम्, **सुखार्थो नञ्पाठः।** अथ इत्नुग्रहणं किमर्थम् उणादिसूत्रेण त्नुप्रत्यय इति क्रियताम्। ततो व्यञ्जनादित्वादिटि सति अनामिड्विकरण इति प्रतिषेधात् कारितलोपाभावे सिद्धं स्तनयित्नुरित्यादिकं बहुपदं बहुप्रक्रियाज्ञाने दुःखं स्यादिति॥८९२।

[समीक्षा]

'स्पृहयालुः, मण्डयन्तः, स्तनयित्नुः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में णिच् - इन् के लोप का निषेध किया गया है। पाणिनि ने लोप का निषेध न करके 'णि' के स्थान में अयादेश किया है, जबकि कातन्त्र के अनुसार साक्षात् इन्लोप का निषेध होने से इकार को गुण-अयादेश होकर उक्त शब्दरूप सिद्ध होते हैं। पाणिनि का सूत्र है- "अयामन्ताल्वाय्येत्न्विष्णुषु" (अ०६।४।५५)। अतः प्रायः उभयत्र समानता है।

[विशेष वचन]

१. प्रक्रियागौरवमिति इत्नुः प्रत्ययान्तरम् (दु० टी०)।

२. सुखार्थो नञ्पाठः (क०च०)।

३. स्तनयित्नुरित्यादिकं बहुपदं बहुप्रक्रियाज्ञाने दुःखं स्यात् (क० च०)।

[रूपसिद्धि]

१. **स्पृहयालुः।** स्पृह् + इन् + आलु + सि। 'स्पृह ईप्सायाम्' (९।१८९) धातु से इन् प्रत्यय, आलु, प्रकृत सूत्र से इन् - लोप का निषेध, गुण, अयादेश तथा विभक्तिकार्य।

२. **पारयिष्णुः।** पॄ + इन् + इष्णु + सि। 'पॄ पालनपूरणयोः' (८।१८) धातु से इन् प्रत्यय, इष्णु, इन्लोप का निषेध, गुण, अयादेश तथा विभक्तिकार्य।

३. **स्पृहयाय्यः।** स्पृह् + इन् + आय्य + सि। 'स्पृह्' धातु से इन्, आय्य प्रत्यय, इन्-लोप का निषेध, गुण, अयादेश तथा विभक्तिकार्य।

४. **गण्डयन्तः।** गण्ड् + इन् + झ - अन्त + सि। 'गडि वदनैकदेशे' (१।१३१) धातु से इन्, झ, झ् को अन्त्, इन्लोप का अभाव, गुण, अयादेश तथा विभक्तिकार्य।

५. **मण्डयन्तः**। मण्ड् + इन् + झ + अन्त + सि। 'मडि भूषायाम्' (१।१०३) धातु से इन्, झ-अन्त आदेश, इन् - लोपाभाव, गुण, अयादेश तथा विभक्तिकार्य।

६. **स्तनयित्नुः**। स्तन् + इन् + इत्नु + सि। 'स्तन देवशब्दे' (९।१८०) धातु से इन्, इत्नुप्रत्यय, इन्लोप का निषेध, गुण, अयादेश तथा विभक्तिकार्य॥८९२।

## ८९३. लघुपूर्वोऽय् यपि [४।१।३८]

**[सूत्रार्थ]**

जिसके पूर्व में लघुसंज्ञक वर्ण हो, ऐसे इन् के स्थान में 'अय्' आदेश होता है 'यप्' आदेश के परे रहते॥८९३।

**[दु० वृ०]**

लघुपूर्व इन् अय् भवति यपि परे, वचनादेकवर्णव्यवधानेऽपि। प्रशमय्य, विगणय्य। लघुपूर्व इति किम् ? सम्प्रधार्य गतः। आपः परस्य वा वक्तव्यम् । प्रापय्य गतः, प्राप्य गतः। इङादेशस्य लाक्षणिकत्वाद् अध्याप्य गतः॥८९३।

**[दु० टी०]**

लघु०। लघुः पूर्वो यस्मादिति विग्रहः। पूर्वग्रहणं भूतपूर्वगतिनिरासार्थम् । अन्यथा लघोरित्युच्यमाने किमेकेन वर्णेन व्यवधानमाश्रीयते, ततो लघोः पर इन् इति भूतपूर्वगतिरिति संदिह्येत। तत्र भूतपूर्वगतौ अस्य च लोपे सत्येव स्यात्। विगणय्य, प्रबेभिद्य गत इत्यादौ यद्येवम् अत इत्युच्येत। न ह्यकारमन्तरेण भूतपूर्वगतिः सम्भवति। तथैवं तर्हि सन्देहः लघुपूर्वाद् अय् यपीति पठन्ति **एके**। धातुर्यो लघुः स एव पूर्वो यस्माद् वर्णादिति वर्णश्चार्थाद् व्यञ्जनम् । लघुपूर्वाद् व्यञ्जनात् परस्येनोऽयादेश इत्यर्थः। आप इत्यादि। वक्तव्यं व्याख्येयम् । "**वा कृति रान्तेः**" (४।१।२८) इत्यतो वाग्रहणमिह मण्डूकप्लुत्या वर्तते, तच्च बहुलार्थमित्यर्थः।

इङादेशस्येत्यादि। "**स्मिजिक्रीङामिनि**" (३।४।२४) इत्यात्त्वे "**अर्तिह्री०**" (३।६।२२) इत्यादिना वकारागमः। अर्थतः '**आगमा यद्गुणीभूतास्ते तद्ग्रहणेन गृह्यन्ते**' (का०परि०१४) इति रूपसादृश्याद् विभाषा प्राप्नोति। तस्माद् "**आप्नोतेः**" (३।३।४०) इति वक्तव्यं नेत्याह-इङेत्यादि। '**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव**' (का० परि० ७५) प्रत्यक्षविशिष्टस्य ग्रहणं नानुमेयरूपस्य। प्रत्यक्षानुमेययोः प्रत्यक्षं बलीयः स्यात् । सकृत्प्रतिपत्तौ लब्धविषयं शास्त्रं त्रिषु कालेषु दृष्टिवशान्न प्रवर्तते। अथवा **एके** इच्छन्ति, **अपरे** नेच्छन्ति, तन्मतमिह प्रमाणमिति। ननु पूर्वसूत्रेऽय्ग्रहणमेवास्तां तच्च कारितलोपापवादो भविष्यति ? सत्यम्, नञ्ग्रहणं **प्रतिपत्तिगौरवनिरासार्थमिति**॥८९३।

**[वि०प०]**

लघु०। वचनादिति। न ह्यनन्तरो लघुः पूर्वः सम्भवतीति, अर्थाद् एकेन वर्णेन व्यवधानादित्यर्थः। ननु वचनप्रामाण्यात् किमेकेन वर्णेन व्यवहितो लघुराश्रीयते उत

भूतपूर्वगत्यनन्तर इति? भूतपूर्वगत्याश्रयणे विगणय्य इत्यादिष्वेव स्यात्, धातोरदन्तत्वाद् इह नान्तरो लघुः पूर्वमासीदिति न प्रशमय्येत्यादौ, सत्यम् । नेह **भूतपूर्वगतिराश्रीयते**, पूर्वग्रहणात् । अन्यथा लघोरित्युक्ते **'पञ्चम्या निर्दिष्टे परस्य'** (का० परि० २२) इति भविष्यति। तत्र च लघोः साक्षात् परत्वं न सम्भवतीति भूतपूर्वगतिराश्रीयते, किं पूर्वग्रहणेनेति भावः। आप इत्यादि। वक्तव्यं व्याख्येयम् । **"वा कृति रात्रेः"** (४।१।२८) इत्यतो वाग्रहणादियमिष्टसिद्धिरिति भावः। तर्हि **"स्मिजिक्रीङामिनि०"** (३।४।२४) इत्यात्त्वे **"अर्तिह्री०"** (३।६।२२) इत्यादिना पान्तत्वे सति इङोऽपि प्राप्नोति। तस्माद् आप्नोतेः परस्य वेति वक्तुमुचितम्? तदयुक्तम् इत्याह-इङादेशस्येत्यादि।।८९३।

**[क० च०]**

लघु०। सस्वरोऽप्यय एव पाठः, न तु यकारमात्रम्, सूत्रस्य वैयर्थ्यापत्तेः। अथ यकारद्वये सति भेदाद् वचनं चरितार्थम् । नैवम्, संयुक्तसजातीयानां भेदो नास्तीति **पञ्जिका।** पूर्वग्रहणादिति। अथ पूर्वग्रहणं तथापि न क्रियतां लघुग्रहणादेव भूतपूर्वगतिनिरासो भविष्यति। अन्यथा यदि भूतपूर्वगतिः स्यात् तदा अत इति कुर्यात्। नच विगणय्य इत्यादौ अकारमन्तरेणान्यो लघुरस्ति भूतपूर्व इति सत्यम् । अत इति कृते कुतः **सम्मोहः** किं भूतपूर्वादतः। ततश्च वचनादेकेन वर्णेन व्यवधानता सम्भवति। ततश्च पूर्वादिति सिध्येत् तथा नात्र। यतोऽत्र पक्षे वचनादेकवर्णव्यवधानेऽकारमात्रात् प्राप्तिर्लघुग्रहणे तु 'अ-इ-उ-ऋ-ऌ' वर्णादिति महति भेदे कथमुक्तार्थता लघुग्रहणस्य, येन सन्देहोच्छेदो भविष्यति।।८९३।

**[समीक्षा]**

'प्रशमय्य, विगणय्य, प्रबेभिदय्य' इत्यादि शब्दरूपों के सिद्ध्यर्थ णिच् - इन् को अयादेश का विधान दोनों ही व्याकरणों में किया गया है । पाणिनि का सूत्र है - "ल्यपि लघुपूर्वात्" (अ० ६।४।५६)। पाणिनीय णिच् प्रत्यय के लिए कातन्त्रकार ने इन् प्रत्यय किया है, तदनुसार यहाँ इसे अयादेश का स्थानी समझना चाहिए। इस प्रकार उभयत्र समानता ही है ।

**[विशेष वचन]**

१. इङादेशस्य लाक्षणिकत्वाद् अध्याप्य गतः (दु० वृ०)।

२. पूर्वग्रहणं भूतपूर्वगतिनिरासार्थम् (दु० टी०)।

३. प्रत्यक्षानुमेययोः प्रत्यक्षं बलीयः स्यात् (दु० टी०)।

४. एके इच्छन्ति अपरे नेच्छन्ति, तन्मतमिह प्रमाणम् (दु० टी०)।

५. नञ्ग्रहणं प्रतिपत्तिगौरवनिरासार्थम् (दु० टी०)।

६. नेह भूतपूर्वगतिराश्रीयते पूर्वग्रहणात् (वि० प०)।

७. वाग्रहणादियमिष्टसिद्धिरिति भावः (वि० प०)।

[रूपसिद्धि]

१. **प्रशमय्य।** प्र + शम् + इन् + क्त्वा - यप् + सि। 'प्र' उपसर्गपूर्वक 'शमु उपशमे' (३।४२) धातु से "एककर्तृकयोः पूर्वकाले" (४।६।३) सूत्रद्वारा क्त्वा प्रत्यय, उपधावृद्धि, समास, क्त्वा को यप् आदेश, ह्रस्व, इन् को अय् तथा विभक्तिकार्य।

२. **विगणय्य।** वि+गण् + इन् + क्त्वा-यप् + सि। 'वि' उपसर्गपूर्वक 'गण संख्याने' (९।१७६) धातु से क्त्वा प्रत्यय, "अस्य च लोपः" (३।६।४६) से अकारलोप, समास में क्त्वा को यप् आदेश, प्रकृत सूत्र से इकार को अय् तथा विभक्तिकार्य।।८९३।

## ८९४. मीनात्यादिदादीनामा [४।१।३९]

[सूत्रार्थ]

'मीञ्-मिञ्-दीङ्-दा-मा-गा-पा-स्था-सा-हा' 'धातुओं के अन्तिम वर्ण को यप् परे रहते आकारादेश होता है।।८९४।

[दु० वृ०]

मीनाति-मिनोति-दीङां दा-मा-गायति-पिबति-स्थास्यति-जहातीनां च यपि परे आकारो भवति। मीञ्-प्रमाय, डु मिञ्-निमाय, दीङ्-उपदाय। दामादीनामीत्व-बाधनार्थमेव प्रदाय, प्रधाय। मेङ् माङ् वा-प्रमाय। प्रगाय, प्रपाय, प्रस्थाय। सो-अवसाय। ओ हाक्-अवहाय।।८९४।

[दु० टी०]

मीना०। मीनात्यादयश्च दादयश्चेति द्वन्द्वे गमकत्वादल्पस्वरस्यापि परनिपातः। अथ प्रत्येकमादिग्रहणं किमर्थम् - मीनातिश्च दाश्च **मीनातिदौ,** तौ आदी येषामिति द्वन्द्वात् परस्य प्रत्येकमभिसम्बन्धो भविष्यति? सत्यम्, मीनातिश्च दादयश्चेति सम्भाव्येति। मिञादिदादीनामिति सिद्धे मीनातिग्रहणं **स्वरूपपरिग्रहार्थम्।** मीनातिशब्द आदिर्येषामित्यर्थः। तेन धातुगणो न गृह्यते, तत्साहचर्याद् दादयो धातुगणा न गृह्यन्ते किन्तर्हि **सौत्रा** इत्याह-मीनातिमिनोतीत्यादि।।८९४।

[वि० प०]

मीनात्यादि। मीङादिदादीनामिति सिद्धे यन्मीनातिग्रहणं तत् **स्वरूपपरिग्रहार्थम्।** मीनातिशब्द आदिर्येषामिति विग्रहः। तेन धातुगणो न गृह्यते किन्तर्हि **सौत्रः।** अत्र हि मीनातिशब्दस्यादौ विद्यमानत्वात् तत्सहचरिता दादयोऽपि सूत्रपठिता एव गृह्यन्ते इत्याह-मीनातीत्यादि।।८९४।

[क० च०]

मीनाति०। अथ प्रत्येकम् आदिग्रहणं किमर्थम्' **'द्वन्द्वात् परं श्रूयमाणशब्दः प्रत्येकमभिसम्बध्यते'** (है० परि० १३७) इति न्यायाद् उभयत्राभिसम्बन्धे साध्यसिद्धि-

रिति? सत्यम्, इदमेवादिद्वयं ज्ञापयति-कुत्रापि द्वन्द्वात् परस्य प्रत्येकमभिसम्बन्धस्य व्यभिचारोऽप्यस्ति, तेन "**वनतितनोति०**" (४।१।५९) इत्यादिसूत्रे आदिशब्दस्तनोतिना सम्बध्यते न वनतिनेति। तेन "**दामागायति०**" (३।४।२९) इत्यत्र व्यञ्जनादावपि इति कृतेऽत्र दादिग्रहणं न कृतं स्यादिति॥८९४।

**[समीक्षा]**

'प्रमाता, प्रमाय, निमाय, उपदाय, प्रस्थाय, अवहाय' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'मी' आदि धातुओं के अन्तिम वर्ण को आकारादेश किया गया है। पाणिनि का सूत्र है-"मीनातिमिनोतिदीङां ल्यपि च" (अ० ६।१।५०)। अत: प्राय: उभयत्र समानता है।

**[विशेष वचन]**

१. मीनातिग्रहणं स्वरूपपरिग्रहार्थम् (दु० टी०,द्र०-वि०प०)।

२. इदमेवादिद्वयं ज्ञापयति-कुत्रापि द्वन्द्वात् परस्य प्रत्येकमभिसम्बन्धस्य व्यभिचारोऽप्यस्ति (क० च०)।

**[रूपसिद्धि]**

१. **प्रमाय**। प्र + मी + क्त्वा - यप् + सि। 'प्र' उपसर्गपूर्वक 'मीञ् हिंसायाम्' (८।७) धातु से "एककर्तृकयो: पूर्वकाले" (४।६।३) सूत्र द्वारा क्त्वा प्रत्यय, "समासे भाविन्यनञ: क्त्वो यप्" (४।६।५५) से क्त्वा को यप् आदेश, प्रकृत सूत्र से ईकार को आकार तथा विभक्तिकार्य।

२-११. **निमाय**। नि + मिञ् + क्त्वा-यप् + सि। **उपदाय**। उप + दी + क्त्वा-यप्+सि। **प्रदाय**। प्र+दा+क्त्वा-यप्-सि। **प्रधाय**। प्र + धा + क्त्वा-यप् + सि। **प्रमाय**। प्र + मेङ्, माङ् +क्त्वा-यप् + सि। **प्रगाय**। प्र + गै + क्त्वा-यप् + सि। **प्रपाय**। प्र + पा + क्त्वा यप् + सि। **प्रस्थाय**। प्र + स्था + क्त्वा-यप् + सि। **अवसाय**। अव + सो + क्त्वा-यप् + सि। **अवहाय**। अव + हा + क्त्वा-यप् + सि॥८९४।

## ८९५. क्षेर्दीर्घ: [४।१।४०]

**[सूत्रार्थ]**

यप् प्रत्यय के परे रहते 'क्षि' धातु को दीर्घादेश होता है॥८९५।

**[दु० वृ०]**

क्षेर्दीर्घो भवति यपि परे। प्रक्षीय, उपक्षीय। कथं प्रक्षित्य गत:। **'क्षिष हिंसायाम्'** (८।३०) इति लाक्षणिकत्वात्॥८९५।

**[दु० टी०]**

क्षे:। कथमित्यादि। **श्रुतपाणेस्तु** षानुबन्धस्यापि क्षेर्ग्रहणम् । एवम् उत्तरत्र सूत्रेऽपि व्याख्येयम् । क्षेरीरिति सिद्धे दीर्घग्रहणस्य फलं वक्ष्यति॥८९५।

[वि० प०]

क्षेः। लाक्षणिकत्वादिति। "**षानुबन्धभिदादिभ्यस्त्वङ्**" (४।५।८२) इति वचनात्। "**योऽनुबन्धोऽप्रयोगी**" (३।८।३९) इति लक्षणतः षकारस्य व्यपाये क्षिरूपस्य विद्यमानत्वाल्लाक्षणिकत्वमित्यर्थः॥८९५।

[क० च०]

क्षेः। लाक्षणिकत्वादिति। ननु कथमुक्तम् अनुबन्धकलाक्षणिकत्वस्य ग्रहणात्। तथा च ज्ञापकम्-"**ऋतोऽवृङ्वृञः**" (३।७।१६) इति वृङ्-वृञ्वर्जनम्। अत एव '**निरनुबन्धग्रहणे न सानुबन्धकस्य**' (का० परि० ४८) इति नादृतम् ? सत्यम्। अभ्युपगमवादोऽयम्॥८९५।

[समीक्षा]

'प्रक्षीय, उपक्षीय' इत्यादि शब्दरूपों के सिद्ध्यर्थ 'क्षि' धातुघटित इकार को ईकारादेश दोनों ही व्याकरणों में किया गया है। पाणिनि का सूत्र है - "क्षियः" (अ० ६।४।५९)। अतः उभयत्र समानता है।

[विशेष वचन]

१. क्षेरीरिति सिद्धे दीर्घग्रहणस्य फलं वक्ष्यति (दु० टी०)।

२. अभ्युपगमवादोऽयम् (क० च०)।

[रूपसिद्धि]

**१. प्रक्षीय।** प्र + क्षि + क्त्वा-यप् + सि। 'प्र' उपसर्गपूर्वक 'क्षि निवासगत्योः' (५।१७) धातु से क्त्वा प्रत्यय, समास में क्त्वा को यप् आदेश, प्रकृत सूत्र से इकार को दीर्घ तथा विभक्तिकार्य।

२. **उपक्षीय।** उप + क्षि + क्त्वा-यप् + सि। प्रक्रिया पूर्ववत् ॥८९५।

## ८९६. निष्ठायां च [४।१।४१]

[सूत्रार्थ]

निष्ठासंज्ञक 'क्त-क्तवन्तु' प्रत्ययों के परे रहते 'क्षि' धातुघटित इकार को दीर्घादेश होता है॥८९६।

[दु० वृ०]

क्षेर्दीर्घो भवति निष्ठायां च। प्रक्षीणः, प्रक्षीणवान्। प्रक्षीयतेऽस्मिन्निति **प्रक्षीणमिदं** छात्रस्य। दीर्घ इति **सञ्ज्ञापूर्वकत्वादनित्यार्थम्।** तेन भावकर्मणोर्न स्यात्। प्रक्षितमनेन, प्रक्षितश्छात्रो भवता। तथा आक्रोशदैन्ययोश्च वा। क्षितायुः, क्षीणायुः। दैन्ये च-क्षितकः, क्षीणकः। क्षितोऽयम्, क्षीणोऽयं तपस्वी। कर्त्रधिकरणयोरेवात्रापि॥८९६।

[दु० टी०]

निष्ठा०। आक्रोशदैन्ययोश्च वेति आक्रोशदैन्ययोर्गम्यमानयोरित्यर्थः। कर्त्रधिकरणयोरेवात्रापीति। भावे-क्षितं तपस्विनः। क्षितं जाल्मस्य। क्षितस्तपस्वी, क्षितो जाल्म इति कर्मणि। क्षेर्भावकर्मणोः क्तो नास्ति **भाषायामिति श्रुतपालः** (णिः)। क्त्वोरिति कृते द्विवचनात् क्तवन्त्वोः क्तस्यानर्थकस्यापि ग्रहणं स्यादेव, किन्तु **प्रतिपत्तिरियं गरीयसीति**।।८९६।

[वि० प०]

निष्ठा०। दीर्घ इत्यादि। क्षेरीरिति सिद्धे यत् पूर्वसूत्रे दीर्घग्रहणं तदिहार्थमित्यर्थः। 'क्षितकः, क्षीणकः' इति अनुकम्पायां कप्रत्ययः। कर्त्रधिकरणयोरेवात्रापीति भावकर्मणोर्न स्यादिति सम्बन्धः। यथा -क्षितं जाल्मस्य, क्षितं तपस्विनः' इति भावे, प्रक्षितस्तपसा तापस इति कर्मणि।।८९६।

[क० च०]

निष्ठा०। अथ क्षेर्दीर्घो निष्ठायां चेत्येकयोगे सिध्यति किं भिन्नयोगेन, चानुकृष्टत्वाद् उत्तरत्र यपोऽनुवृत्तिर्न भविष्यति? सत्यम्, **स्पष्टार्थम्।** अन्यथा निष्ठया सह चकारस्य सम्बन्धे तत्सम्बन्धत्वाद् गौणत्वान्निष्ठानुवृत्तिर्न स्यादिति शङ्क्येत।।८९६।

[समीक्षा]

'प्रक्षीणः, प्रक्षीणम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ भाव-कर्म से भिन्न अर्थों में क्त-क्तवन्तु प्रत्ययों के विहित होने पर 'क्षि' धातु का दीर्घविधान दोनों ही व्याकरणों में किया गया है। पाणिनि का सूत्र है-"निष्ठायामण्यदर्थे" (अ० ६।४।६०)। अतः उभयत्र प्रायः समानता है।

[विशेष वचन]

१. दीर्घ इति सञ्ज्ञापूर्वकत्वादनित्यार्थम् (दु० वृ०)।

२. क्षेर्भावकर्मणोः क्तो नास्ति भाषायामिति श्रुतपालः (णिः-दु०टी०)।

३. सत्यम्, स्पष्टार्थम् (क० च०)।

[रूपसिद्धि]

१. **प्रक्षीणः**। प्र + क्षि + क्त-न+सि। 'प्र' उपसर्गपूर्वक 'क्षि निवासगत्योः' (५।१७) धातु से 'क्त' प्रत्यय, प्रकृत सूत्र से दीर्घ, "क्षेर्दीर्घात्" (४।६।१०६) से तकार को नकार, "रषृवर्णेभ्यो नो णमनन्त्यः" (२।४।४८) से नकार को णकार तथा विभक्तिकार्य।

२. **प्रक्षीणवान्**। प्र+क्षि+क्तवन्तु+सि। 'प्र' उपसर्गपूर्वक 'क्षि' धातु से क्तवन्तु प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्।

३. **प्रक्षीणमिदं छात्रस्य।** प्र+क्षि+क्त-न+सि। 'प्र' उपसर्गपूर्वक 'क्षि' धातु से क्त-प्रत्यय आदि प्रक्रिया पूर्ववत्।।८९६।

# ८९७. स्फायः स्फी [४।१।४२]

[सूत्रार्थ]

निष्ठासंज्ञक 'क्त-क्तवन्तु' प्रत्ययों के परे रहते 'स्फायी वृद्धौ' (१।४१३) धातु को 'स्फी' आदेश होता है॥८९७।

[दु० वृ०]

स्फायः स्फीरादेशो निष्ठामात्रे। स्फीतः, स्फीतवान्। 'स्फायी' इतीदनुबन्धबलादादेशोऽयमनित्य इति। स्फातः, स्फातवान्। इहेट् प्रतिषिध्यते॥८९७।

[दु० टी०]

स्फा०। स्फायीत्यादि। **'स्फायी ओ प्यायी वृद्धौ'** (३।४१३)। यदि पुनरयमादेशो नित्यः स्यादीदनुबन्धो व्यर्थः स्यात्। आदेशे कृते **"इवर्णादश्विश्रिडीङ्शीङः"** (३।७।१४) इत्यादिना प्रतिषेधो भविष्यति। स्फात इति। **"न डीश्वीदनुबन्ध०"** (४।६।९०) इतीट्प्रतिषेधः **"य्वोर्व्यञ्जनेऽये"** (४।१।३५) इति यलोपः॥८९७।

[वि० प०]

स्फायः। स्फायीत्यादि। ईदनुबन्धो हि **"न डीश्वीदनुबन्ध०"** (४।६।९०) इत्यादि निष्ठायामिट्प्रतिषेधार्थः क्रियते, यदि चादेशोऽयं नित्यः स्यात् तदा **"इवर्णादश्विश्रिडीङ्शीङः"** (३।७।१४) इत्यनेन प्रतिषेधः सिद्ध इत्यनर्थकमीदनुबन्धकरणं स्यात्। ननु कथमिदमनर्थकम्? तत्र हि इवर्णादिति विहितविशेषणा पञ्चम्युक्ता, इह न तु यकारान्ताद् विहितेति। नैवम्, इहापि निष्ठायामिति विषयसप्तम्याश्रयणादादेशे सति इवर्णाद् विधिरस्तीति मन्यते इति न दोषः। **"य्वोर्व्यञ्जनेऽये"** (४।१।३५) इति यलोपः॥८९७।

[क० च०]

स्फायः। विषयसप्तम्येति। अत्र विषयसप्तम्याः किं प्रमाणं चेद् उच्यते-स्फीति दीर्घकरणम्, अन्यथा ह्रस्वे सति इडागमे कृते सिद्धं दीर्घत्वम्, किमत्र दीर्घपाठेनेति॥८९७।

[समीक्षा]

'स्फीतः, स्फीतवान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में निष्ठासंज्ञक प्रत्ययों के परे रहते 'स्फायी' धातु को 'स्फी' आदेश किया गया है। पाणिनि का सूत्र है-"स्फायः स्फी निष्ठायाम्" (अ० ६।१।२२)। अतः उभयत्र समानता है।

[विशेष वचन]

१. स्फायीतीदनुबन्धबलादादेशोऽयमनित्यः (दु० वृ०)।

२. यदि पुनरयमादेशो नित्यः स्याद् ईदनुबन्धो व्यर्थः स्यात् (दु० टी०)।

[रूपसिद्धि]

१. **स्फीतः।** स्फायी+क्त+सि। 'स्फायी वृद्धौ' (१।४१३) धातु से 'क्त' प्रत्यय, स्फायी को 'स्फी' आदेश तथा विभक्तिकार्य।

२. **स्फीतवान्।** स्फायी + क्तवन्तु + सि। 'स्फायी' धातु से 'क्तवन्तु' प्रत्यय, 'स्फी' आदेश तथा विभक्तिकार्य।।८९७।

## ८९८. प्यायः पीः स्वाङ्गे [४।१।४३]

**[सूत्रार्थ]**

निष्ठासञ्ज्ञक प्रत्यय के परे रहते स्वाङ्ग अर्थ में वर्तमान प्यायी धातु को 'पी' आदेश होता है।।८९८।

**[दु० वृ०]**

— स्वमङ्गं **स्वाङ्गम्।** स्वाङ्गे वर्तमानस्य प्यायतेर्निष्ठायां पीर्भवति। पीनं मुखम्, पीनवन्मुखम्। स्वाङ्ग इति किम्? प्यानः स्वेदः, प्याना बुद्धिः, प्यानं मुखं शालायाः, प्यानः शोथः। कथं पीनो बाहू रथ्यायां पतितः, पीनं मुखं प्रतिमायाः? स्यादेव-

**अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्।**
**अतत्स्थं तत्र दृष्टं च तेन चेत् तत् तथायुतम्।।**

पीनाङ्गयोगात् पीनो वटुरिति। कथं पीनः श्लेष्मा, पीनो वायुरिति? उपमानात्। आपीनोऽन्धुः, आपीनमूधः। आङोऽन्धूधसोरेव।।८९८।

**[दु० टी०]**

प्यायः। **भाष्ये** तु स्वाङ्गमचिन्तितम्, प्यायिरनुपसर्ग आङ्पूर्व आङन्तोपसर्गसमुदायपूर्वो वा प्रसज्यते इति। आङोऽन्धूधसोरेवार्थयोरित्यर्थस्तेनाप्यानावंसौ, आप्याना अङ्गुल्यः। अन्धुर्व्रण ऊधस एव पर्यायः। पीनोऽन्धुः, पीनमूध इति भवत्येव। उभयतो **नियमश्चेष्यते।** समाङ्पूर्वमाश्रित्य आङ्पूर्वस्यैवान्धूधसोर्नान्योपसर्गपूर्वस्य प्राप्यानमूधः। **नैयासिकानां** च मतम्-शुद्धस्येव प्यायः प्रयोग इति। इहाङोऽन्धूधसोरिति नाद्रियते इतीयमेवाभिधानव्यवस्था न्याय्येति।।८९८।

**[वि० प०]**

प्यायः। "**ल्वाद्योदनुबन्धाच्च**" (४।६।१०४) इति निष्ठातकारस्य नकारः। किन्तत् स्वाङ्गमित्याह-अद्रवमित्यादि। दर्शितानि प्रत्युदाहरणानि। तत्र अद्रवमिति किम्? प्यानः स्वेदः। मूर्तिमदिति किम्? प्याना बुद्धिः। मूर्तिः काठिन्यं तद् बुद्धेर्नास्तीत्यर्थः। प्राणिस्थमिति किम्? प्यानं मुखं शालायाः। अविकारजमिति किम्? प्यानः शोथः। कथन्तर्हि पीनो बाहू रथ्यायां पतितः, पीनं मुखं प्रतिमायाः? न हीदं प्राणिस्थमित्याह-स्यादेवेति। अस्यापि स्वाङ्गत्वादित्य**भिप्रायः।** तदेवाह-अतत्स्थमित्यादि। तत्र प्राणिनि पुरा दृष्टं न चेदानीं तत्स्थं यत् तदपि स्वाङ्गम्। यथा पीनो बाहू रथ्यायां पतितः

इति। तेन चेत् तत् तथायुतम् इति। तेन प्राणिस्थेन स्वाङ्गेन यदि तथा युतं तथा सम्मितं तत्सदृशं स्यात् तदपि स्वाङ्गम्। यथा पीनं मुखं प्रतिमाया इति। कथन्तर्हि पीनो वटुरिति? समुदायेन प्राणी कथ्यते इत्याह-पीनाङ्गयोगादिति। यथा दण्डयोगाद् दण्ड्यः पुरुष इति भावः। श्लेष्मणो द्रवरूपत्वाद् वायोश्चामूर्तिमत्त्वात् कथमित्याह-कथं पीनम् इत्यादि। यथा 'सिंहो माणवकः' इत्युपमानाद् व्यवहारस्तद्वदयमपीत्यर्थः। आपीनोऽन्धुरित्यादि। अन्धूधसोरेवेति किम्? आप्यानावंसौ, आप्याना अङ्गुल्यः। एतस्मिन्नियमे 'पीनोऽन्धुः, पीनमूधः' इति भवत्येव। आङ एवान्धूधसोरित्यपि नियम इष्यते। तत्र च प्यायिरयमनुपसर्ग आङुपसर्गपूर्वश्च आङन्तोपसर्गसमुदायपूर्वस्य वाऽत्र प्रयोग इति। आङ एवेति नियमेन आङन्तोपसर्गसमुदायपूर्वस्य निवृत्तिः, तद् यथा आङ एवेति किम्? प्राप्यानोऽन्धुः, प्राप्यानमूध इति। तदिदमभिधानादधिकृतस्य वाशब्दस्य बहुलार्थत्वात् सिद्धमिति॥८९८।

[क० च०]

प्यायः। स्वशब्द आत्मीयपर्यायः। स्वमात्मीयमित्यर्थः। अत आह-स्वमङ्गमित्यादि। यद् वा आत्मपर्यायः स्वशब्दः, स्वस्यात्मनोऽङ्गमिति। अयं तु योगार्थो दर्शितः। **वस्तुतस्तु** स्वाङ्गशब्दस्य रूढत्वादुत्तरकालेऽन्य एवार्थः प्रतीयते। **रूढो** योगापहारित्वात्। यथा मण्डं पिबतीति **मण्डपः** इत्यर्थे मण्डपशब्दो व्युत्पादितः, पश्चाद् गृहे वर्तते रूढशब्दत्वात्। तदेवायं वक्ष्यति-स्वाङ्गमिति किम्? अद्रवं मूर्त्तिमदिति। पारिभाषिकस्वाङ्गस्य विधिव्यावृत्ती क्रमेणोक्तवानिति। पीनो बाहुरित्यादि। अतत्स्थं तत्र दृष्टमित्यस्योदाहरणम्। पीनं मुखं प्रतिमाया इति, तेन चेत् तथायुतम् इत्यस्योदाहरणम्। अत एव कथमिति पाठोऽशुद्ध एव **वृत्तौ, पञ्जिकायां** कथमित्यनेनाशङ्कितत्वाच्च, अद्रवं द्रवद्रव्यं यत्र भवति तत् स्वाङ्गम् इत्युक्ते बुद्धेरपि तथोक्तत्वात् तस्यां प्रवर्तमानस्यापि स्यादित्याह-मूर्तिमदिति। पूर्वं मूर्तिमदिति पदमद्रवमित्यस्य विशेषणम्। अथ प्राणिस्थमित्युक्ते पीनो बाहुर्देवदत्तस्य रथ्यायां पतित इतीदानीं प्राणिस्थत्वाभावान्न स्यादित्याह-अतत्स्थं तत्र दृष्टमिति। तर्हि पीनं मुखं प्रतिमाया इति प्राणिस्थत्वाभावात् कथं स्वाङ्गं स्याद् इत्याह-तेनेति।

अप्राणिनामप्यङ्गं यदि प्राणिस्थेनाङ्गेन सदृशं भवति। पीनः श्लेष्मा इत्यत्र**ायमाशयः** पीनं मुखमित्यद्रवमूर्तिमत्त्वेन पदं निष्पाद्य पश्चाद् यथा मुखं पीनं तथा श्लेष्मापि पीनोऽद्रवत्वात्। यथा मूर्तिमन्मुखं पीनं वायुरपि तथा पीनः। आप्यानावंसौ आप्यानान्यङ्गानि इत्यत्र स्वाङ्गत्वात् कथमादेशो न स्यात्। तस्मात् तन्निवृत्त्यर्थमाङोऽन्धूधसोरेवेति **नियमो** वाच्य इत्याह-आपीन इति। अथोधसोऽविकारजत्वात् सिद्धे नियमो युक्तः, अन्धुपदार्थस्याविकारजत्वात् स्वाङ्गत्वाभावे कुतो नियम इति न वाच्यम्। ऊधस एव **नियमः**, अन्धोर्विधिरिति तस्मिन्नियमे पीनोऽन्धुरिति **पञ्जिका**कृतस्य नियमपक्षस्यैव घटनात्? सत्यम्। अन्धुशब्देन

व्रण ऊधश्चोच्यते। तत्र ऊधसि वाच्ये एवानेन नियमः कृतः। अन्यथा अन्धुर्व्रण ऊधस एव वा पर्याय इति यदुक्तं **टीकायाम्**, तदन्धुशब्देन किमुच्यते इति **पृच्छायां वस्तुतस्तु** ऊधोवाचकस्यान्धुशब्दस्यैव ग्रहणमिति **पञ्जिका**। तस्मिन्नित्याङः परस्य भवन् अन्धूधसोरभिधेययोरेव भवति, नान्यस्मिन्नभिधेये इति नियमात् केवलस्य पुनः प्रायो नास्ति **व्यावृत्तिरिति** भावः। तर्हि व्यावृत्तेरभावाद् यथा केवलस्य न स्यात्, तथा आङ एवेति नियमस्यान्योपसर्गव्यावृत्तौ चरितार्थत्वात् प्राप्यानोऽन्धुरित्यत्राङो विद्यमानत्वात् कथं न स्यादित्याह-तत्र चेति। एतेनाङं विहाय केवलान्योपसर्गपूर्वस्य प्यायः प्रयोगो नास्ति, येन व्यावृत्त्यर्थम् आङ एवेति नियम इति वाच्यम्, किन्तु आङ एवेति नियमेन केवलादाङ एव न त्वन्यसम्बन्धाद् इति गृह्यते। वक्तव्यस्यानादरकारणमाह-तदिदमिति॥८९८।

**[समीक्षा]**

'पीनं मुखम्, पीनौ बाहू, आपीनमूधः' इत्यादि शब्दरूपों के सिद्ध्यर्थ 'प्यायी' धातु को 'पी' आदेश दोनों शाब्दिक आचार्यों ने किया है। पाणिनि का सूत्र है- "प्यायः पीः" (अ० ६।१।२८)। अतः प्रायः उभयत्र समानता है।

**[विशेष वचन]**

१. भाष्ये तु स्वाङ्गमचिन्तितम् (दु० टी०)।

२. नैयासिकानां च मतं शुद्धस्यैव प्यायः प्रयोग इति (दु० टी०)।

३. तदिदमभिधानादधिकृतस्य वाशब्दस्य बहुलार्थत्वात् सिद्धमिति (वि० प०)।

४. अयं तु योगार्थो दर्शितः। वस्तुतस्तु स्वाङ्गशब्दस्य रूढत्वादुत्तरकाले अन्य एवार्थः प्रतीयते (क० च०)।

५. वस्तुतस्तु ऊधोवाचकस्यान्धुशब्दस्यैव ग्रहणम् (क० च०)।

**[रूपसिद्धि]**

१. **पीनं मुखम्**। प्यायी+क्त+सि। 'प्यायी वृद्धौ' (१।४१३) धातु से 'क्त' प्रत्यय, प्रकृत सूत्र से 'प्यायी' को 'पी' आदेश, "ल्वाद्योदनुबन्धाच्च" (४।६।१०४) से निष्ठा तकार को नकारादेश तथा विभक्तिकार्य॥८९८।

## ८९९. श्रृतं पाके [४।१।४४]

**[सूत्रार्थ]**

पाक अर्थ विवक्षित होने पर 'श्रा' तथा 'श्रपि' धातु से 'श्रृतम्' शब्द निपातन द्वारा सिद्ध होता है॥८९९।

**[दु० वृ०]**

श्रातेः श्रपयतेश्च श्रृतमिति निपात्यते पाकेऽर्थे। क्षीरहविषोरेव निपातनस्येष्टविषयत्वात्। श्रृतं क्षीरम्, श्रृतं हविः। अन्यहेतौ न स्यात्-क्षीरं श्रपितं देवदत्तेन यज्ञदत्तेनेति। क्षीरहविषोरेवेति किम्? श्राणा यवागूः, श्रपिता यवागूः॥८९९।

[दु० टी०]

श्रृतम्। श्रातिरदादिषु, श्रायतिर्भ्वादिषु, मानुबन्धप्रतिपत्त्यर्थं घटादौ 'श्रा पाके' श्रायतिरयं कर्मकर्तृविषयो दृश्यते। यथा पुरोडाशः श्रायतीति, पच्यते इत्यर्थः। स च पच्यमानकर्तृको न पक्तृकर्तृकः, कर्मकर्तृविषयेण पचिना यथा समानार्थस्तथा श्रातिरपीति। पक्तृविषयौ पच्यमानकर्तृकौ श्रातिश्रायती इति, तत्र यौ पच्यमानकर्तृकौ श्रातिश्रायती ताभ्यामिन्युत्पन्ने पक्तृकर्तृकत्वं प्रतीयते-श्रपयति वटुः पुरोडाशम्, श्राति वटुः पुरोडाशम्, पचतीति गम्यते। तावेतौ श्रातिश्रपयती समानार्थौ भवतः। तद् यथा कर्मकर्तृविषयात् पचेः पच्यमानकर्तृकाद् विक्लित्तिमात्राद् इन्युत्पन्ने पचेः, पाचयतेश्च समानार्थतेत्याह-श्रातेः श्रपयतेश्चेति। तत्र श्रातेः पच्यमानकर्तृकस्य पक्तृकर्तृकस्यापि ग्रहणम्,श्रपयतिस्तु पक्तृकर्तृक एव गृह्यते।

श्रृतं क्षीरम्, स्वयमेव श्रृतं क्षीरं देवदत्तेनेत्यर्थः। अन्यहेतावित्यादि। अन्यश्चासौ हेतुश्चेति **अन्यहेतुर्द्वितीयहेतुरित्यर्थः**। श्रातिरिह पक्तृकर्तृको न पच्यमानकर्तृक इत्यर्थः। तस्माद् बाह्ययोः प्रेषणाध्येषणयोरिन्, तस्मात् श्रापयतेर्हेतुकर्तृकान्निष्ठायां श्रृतम् इत्येतत् क्षीरहविषोरपि न भवतीत्यर्थः। **केचिच्चुरादिष्वपि 'श्रा पाके'** इति पठन्ति, तेषां श्रपेः श्रृतम् अन्यत्र हेतोरिति वचनम् । श्राणा यवागूरित्यभिधीयते।।८९९।

[वि० प०]

श्रृतम्। **'श्रा पाके'** (२।२९) इत्यदादौ, **'श्रै पाके'** (१।२६०) इति भ्वादौ। मानुबन्धसञ्ज्ञार्थं च श्रातेः श्रायतेश्च कृतात्वस्य **'श्रा पाके'** (१।५२४) इति पुनर्घटादौ पाठः। सूत्रे विशेषानुपादानादिनन्तस्य केवलस्य च निपात इत्याह-श्रातेः श्रृपयतेश्चेति श्रातेरित्यनिनन्तस्य श्राधातोरुपलक्षणं श्रायतेरपीत्यर्थः, न त्वादादिकस्यैवेति। ननु कथं श्रपयतेरित्युक्तम्? इह हि श्राधातोरादादिकत्वाद् भौवादिकत्वाद् वा हेत्वर्थे एवेन् संभवति न तु हेत्विनन्तस्यायं निपात इष्यते, यदाह **भाष्यकारः**- 'श्रपेः श्रृतमन्यत्र हेतोः' इति। न चायमन्यैरिव चुरादौ **भवद्भिः** पठ्यते, येन स्वार्थिकेनन्तादेतदुपपद्यते इति नैष दोषः। श्रातिश्रायती हि धातू देवदत्तादिपक्तृकर्तृकौ तथा कर्मकर्तृविषयौ पच्यमानतण्डुलादिकर्तृकौ च दृश्येते। यथा 'ओदनं श्राति श्रायति वा देवदत्तः'। पचतीत्यर्थः।

श्रात्योदनः स्वयमेव श्रायति वा। पच्यते ओदनः स्वयमेवेत्यर्थः। तत्र यौ पच्यमानतण्डुलादिकर्तृकौ ताभ्यामिन्युत्पन्ने पक्तृकर्तृकत्वं प्रतीयते। यथा श्रपयति वटुः पुरोडाशं श्राति श्रायति वा, पुरोडाशं पचतीत्यर्थो गम्यते। तथा च सतीनन्तस्यानिनन्तस्य च समानार्थत्वम्। यथा कर्मकर्तृविषयत्वात् पच्यमानतण्डुलकर्तृकाद् विक्लित्तिमात्रार्थात् पचेरिन्प्रत्यये सतीनन्तस्य केवलस्य च समानार्थत्वमिति नोक्तदोषप्रसङ्गः। कारितान्तस्यापि हेत्वर्थाप्रतीतेरिति। तत्रानिनन्तः पच्यमानकर्तृकः पक्तृकर्तृकश्च गृह्यते, इनन्तस्तु पक्तृकर्तृक इत्येव गृह्यते। यथा श्रृतं क्षीरं स्वयमेवेति पच्यमानकर्तृकस्य, श्रृतं क्षीरं देवदत्तेनेति। पक्तृकर्तृकस्य श्रपयतेरप्येवमिति।

अन्यहेतौ न स्यादिति। अन्यश्चासौ हेतुश्चेति **अन्यहेतुस्तस्मिन्**, पक्तुः सकाशाद् अन्यस्मिन् पाचयितरि हेतावित्यर्थः। कदा चासावन्यहेतुर्भवति? यदा पक्तृकर्तृकादिन् विधीयते। यथा श्राति स्म श्रायति स्म वा क्षीरं देवदत्तः सोऽन्येन प्रयुज्यते स्मेति। यदापि पच्यमानकर्तृकादिनि विहिते पक्तृकर्तृकस्य हेतुत्वे संजाते पुनर्हेताविन् विधीयते, तदाप्यन्य एव पाचयिता हेतुः। श्राति स्म श्रायति स्म वा क्षीरं स्वयमेव तद् देवदत्तेन प्रयुज्यते स्मेति हेताविन्, सोऽपि श्रपयन् प्रयुज्यते स्मेति पुनर्हेताविन्निति। एतदुक्तं भवति यदा पच्यमानकर्तृकाद् विक्लित्तिमात्रादिन् विधीयते तदा पक्तैव हेतुरिति-तस्मिन्नेव भवति नान्यस्मिन् बाह्यहेतौ पाचयितरि, **निपातनस्येष्टविषयत्वादिति** भावः। श्रपितं पाचितमित्यर्थः। एतेन श्रपेः शृतमन्यत्र हेतोरिति मतं समर्थितम्। श्राणा श्रपितेति पक्तेत्यर्थः। एकत्रातोऽन्तस्थासंयुक्तादिति। निष्ठातकारस्य नकारः। अन्यत्र निष्ठायां **"निष्ठेटीनः"** (४।१।३६) इति कारितलोपः॥८९९।

**[क० च०]**

शृतम्। अथ कस्य धातोरयं निपातः, सूत्रे प्रकृतिनिर्देशाभावात्। भूप्रभृतेरपि कथं न स्यात्, नैवम्, तेषां पचनार्थाभावात्। तर्हि पचप्रभृतेः स्यात्। नैवम्, शृतमिति शकारादिस्तत्साहचर्यात् शकारादेरेवायं प्रयोगनिपात इति। स च **'श्रा पाके** (२।२९) इत्यादादिकः, **'श्रै पाके'** (१।५२४) इति भौवादिकः, द्वयोरेव ग्रहणम्, न तु **'श्रीञ् पाके'** (८।३) इति क्रैयादिकस्य। कथमिति चेद् उच्यते- **'श्रै पाके, श्रा पाके'** (१।५२४;२।२९) इति निरनुबन्धस्य साहचर्यात्। यद् वा 'शृतम्' इति लघुयुक्तं तत्साहचर्याद् इनन्तस्यापि यस्य लघुमत्ता विद्यते, तस्यैव ग्रहणम्। सा च श्रीञो नास्त्येव। अथ यदि **'श्रै पाके, श्रा पाके'** (१।५२४;२।२९) इति द्वयोर्ग्रहणं तदा **वृत्तौ** कथं भौवादिको न दर्शितः? सत्यम्। श्रपयतेरिनन्तनिर्देशाद् भौवादिकोऽपि बोध्य इति न दोषः।

अथ पाक इत्युक्ते इनन्तस्य कुतः प्रसङ्गः, तस्य पाचनार्थत्वात्? सत्यम्। पाचनायामपि पाकोऽस्त्येव, इनन्तस्योभयार्थत्वात्। ननु **परो** हि **"शृतं पाके"** (अ०६।१।२७) इति हेत्विनन्तनिरासार्थं पाके शृतमन्यहेताविति वक्तव्यं विधाय 'श्रा पाके' इति चुरादिपठितत्वादिनन्तस्य तस्य निपातोऽयमित्याचष्टे। **भवन्मते** चुरादिपाठाद् हेत्विनन्तस्यैव स्यादित्याह-अन्यहेताविति।

**अयमर्थः-** पाक इति क्रियामात्रं तच्च ओदननिष्ठमेव, अत ओदनं श्रातीति प्रयोगो भवितुमर्हतीति। अत्रापि देवदत्तः ओदनं श्रातीति यथा भवति तस्यायं विचारः- यदा पाकार्थानां देवदत्तादीनामधिश्रयणादिक्रियाणां देवदत्तादिनिष्ठत्वात् तत्र देवदत्तादयः कर्तारः 'ओदनादिकं कर्म' अधिश्रयणादीनां व्याप्यत्वात् परसमवेतानामधिश्रयणादीनां धात्वर्थः पाकफलम्। तथा च **धात्वर्थः फलमिति** मत्वा **आचार्यस्तत्**फलमोदनो भजते यतोऽतस्तस्य कर्मत्वम् । तथा च **परसमवेतक्रियाजन्यफलभागित्वं कर्मत्वम्,** इदानीं विक्लेदना धात्वर्थः। तत्र विक्लित्तिपक्षे इनि सति तत्रैव प्रतीतिरिति प्रकारभेदमात्रं न वस्तुभेदः।

**पञ्जिका**-यदि आदादिकभौवादिकयोर्ग्रहणमुक्तं तत् कथं **वृत्तौ** श्रातेरित्यादादिकस्यैवोक्तमित्याह- श्रातेरिनन्तस्येति। तथा कर्मकर्तृविषयाविति। अथ कर्तृपक्षे कर्मवद्भावात् श्रायते ओदनः स्वयमेवेत्येव भवितुमर्हति तत् कथं श्रात्योदनः इत्युक्तम्? सत्यम्। वत्करणं **स्वाश्रयार्थम्,** तेन पक्षे कर्मवद्भावो न भवतीति **कश्चित्।** तन्न। **"शेषात् कर्तरि"** (३।२।४२) इत्यनेन शुद्धकर्तर्येव परस्मैपदं विधीयते। तथा च तत्रैवोक्तम्-पुनः कर्तरीति किम्? भिद्यते कुसूलः स्वयमेवेति। कथम् असिश्छिनत्ति करणकर्तरि? सत्यम्, करणकर्तुरनुक्तत्वात् शेषमस्तीति कर्तृग्रहणाद् अथ शेषेऽपि भवतीति तत्रैवोक्तम्। **कश्चिद्** आह-कर्मकर्तृविषययोरुदाहरणं न दत्तमस्ति, किन्तु श्रायते ओदनः स्वयमेवेति बोध्यम्। अत्र पक्षे कर्मकर्तृविषयादिति व्याख्याने **पञ्जी**सङ्गत्यर्थं चार्थो भावनीयः। कर्मकर्तृविषयाद् व्याप्यमानकर्तृकाच्चेत्यर्थः। विक्लित्तिमात्रार्थादिति द्वयोरेव विशेषणम्।

**वस्तुतस्तु** कर्मकर्तृविषयाविति **लुप्तोपमा** बोध्या। **अयमर्थः-** कर्मकर्तृविषयाविव भवन्तौ पच्यमानकर्तृकौ श्रातिश्रायती दृश्येते। यथा कर्मकर्तरि विक्लित्तिमात्रार्थता तथा पच्यमानकर्तृकत्वेऽपि विक्लित्तिमाश्रित्य सादृश्यम्, एतेन पक्तृकर्तृकपच्यमानकर्तृकाविति यदुक्तं तद् द्वयमेव साध्यम्। कर्मकर्तृविषयाविति। उपमानतो नाद्यपक्षस्योदाहरणमिति, एतेन श्रृतं पाके कृतं देश्यमित्यादि **बालप्रलपितं** कर्मकर्तृपक्षस्य पच्यमानकर्तृपक्षस्य च विक्लित्तिमात्रार्थत्वेन समानार्थतां प्रतिपादयन्नाह-तत्रेत्यादि। विक्लित्तिमात्रार्थेन स्याद् इनन्तस्य च धात्वन्तरेण समानार्थतां प्रतिपादयन्नाह-कर्मकर्तृविषयावित्यादि। अत्र **लुप्तोपमा।** **अयमर्थः-** कर्मकर्तृविषयाविव विक्लित्तिमात्रार्थात् पच्यमानकर्तृकादिति न केवलस्येति विक्लेदनार्थस्येति शेषः। हेत्वर्थाप्रतीतेरिति। ननु कथमिदमुक्तं हेताविनो विधानात् कुतो हेत्वर्थाप्रतीतिरिति? सत्यम्। हेत्वर्थाप्रतीतेरित्यस्य कोऽर्थः। बाह्यहेत्वर्थाप्रतीतेरित्यर्थः। बहूनां सम्भवे कुत्र कस्य ग्रहणमिति विशिष्यते।

तत्रानिनन्त इति। **अन्ये तु परमते** स्वार्थिके सति यस्य कर्तृत्वं तमपेक्ष्यान्यत्वमित्यर्थः। प्रत्ययोत्पत्तिकवाक्यमाह-श्रातिश्चेत्यादि। विवृणोति तदुक्तमिति। अथ बाह्यहेतौ न स्यादिति किमत्र प्रमाणमित्याह-निपातनस्येति। क्षीरहविषोरिति **वृत्तिः**। क्षीरं दुग्धं जलं च-**'नीरक्षीराम्बुशम्बरम्'** इति जलपर्यायेऽपि पठितत्वात्, एतेन **'पाके क्षीराज्यपयसां श्रृतम्'** इत्यमरेण सहैकवाक्यता। तथा **'श्रृतं धान्यपटोलयोः'** इति **वैद्यके**। धान्यपटोलयोः पाके श्रृतम्, जलं पेयमित्यर्थः। तर्हि **'चन्द्रसूर्यग्रहे चैव श्रृतमन्नं विवर्जयेत्'** इति कथं भविष्यति? सत्यम्, **ऋषिप्रमाणात्।** हविः श्रृतम्। निष्ठाधिकारादयं निपातो निष्ठायां परत इति बोध्यम्। तत्र क्तवन्तौ निपातः पच्यमानकर्तृपक्ष एव घटते। यथा श्रृतं क्षीरं स्वयमेव॥८९९।

[समीक्षा]

'शृतं क्षीरम्, शृतं हविः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'श्रा-श्रपि' के स्थान में 'शृ' आदेश निपातन से किया गया है। पाणिनि का सूत्र है- "शृतं पाके" (अ०६।१।२७)। इस प्रकार प्रायः उभयत्र समानता है।

[विशेष वचन]

१. क्षीरहविषोरेव, निपातनस्येष्टविषयत्वात् (दु० वृ०; वि० प०)।

२. केचिच्चुरादिष्वपि श्रा पाके इति पठन्ति (दु० टी०)।

३. इनन्तस्य केवलस्य च समानार्थत्वमिति नोक्तदोषप्रसङ्गः (वि० प०)।

४. पाचनायामपि पाकोऽस्त्येव, इनन्तस्योभयार्थत्वात् (क० च०)।

५. धात्वर्थः फलम्। परसमवेतक्रियाजन्यफलभागित्वं कर्मत्वम् (क० च०)।

६. वत्करणं स्वाश्रयार्थम् (क० च०)।

७. वस्तुतस्तु कर्मकर्तृविषयाविति लुप्तोपमा बोध्या (क० च०)।

८. ऋषिप्रमाणात् (क० च०)।

९. निष्ठाधिकारादयं निपातो निष्ठायां परत इति बोध्यम् (क० च०)

[रूपसिद्धि]

१. **शृतं क्षीरम्।** श्रा + क्त + सि। 'श्रा पाके' (१।५२४;२।२९) धातु से 'क्त' प्रत्यय, प्रकृत सूत्र से 'श्रा' को 'शृ' आदेश तथा विभक्तिकार्य।

२. **शृतं हविः।** श्रपि+क्त+सि। इन्-प्रत्ययान्त 'श्रपि' धातु से क्त-प्रत्यय, 'शृ' आदेश तथा विभक्तिकार्य।।८९९।

## ९००. प्रस्त्यः सम्प्रसारणम् [४।१।४५]

[सूत्रार्थ]

निष्ठासंज्ञक प्रत्यय के परे रहते 'प्र' उपसर्गपूर्वक 'ष्ट्यै शब्दसंघातयोः' (१।२५७) धातु का सम्प्रसारण होता है।।९००।

[दु० वृ०]

प्रपूर्वस्य स्त्यायतेर्निष्ठायां सम्प्रसारणं भवति। प्रस्तीतः, प्रस्तीतवान्। प्रेण स्त्या इति समासात् प्रसंस्तीमः, प्रसंस्तीमवान्। अन्तरङ्गत्वात् कृते सम्प्रसारणे मत्वन्तु स्यादेव पक्षे।।९००।

[दु०टी०]

प्रस्त्यः। प्रात् प्रस्त्या इति पञ्चमीलक्षणस्तत्पुरुषः इति **न्याय्यः पक्षः।** प्रेणेत्यादि। प्रेण युक्तः स्त्या इति तृतीयासमासे व्यवधानेऽपि भवतीत्यर्थः। मतमेत**न्नैयासिकानाम्। अन्य** आह-प्र एव पूर्वो यस्मात् तस्य तथा स्याद् इत्यधिकस्य मा भूदिति। 'सम्प्रस्त्यानः,

सम्प्रस्त्यानवान्' इदमतीव काल्पनिकम्। प्रपूर्वस्य स्त्यायतेरिति प्रपूर्वग्रहणे सति विप्रतिपद्यते इत्याह-प्रस्त्य इति। "**सपरस्वराया: सम्प्रसारणमन्तस्थाया:**" (३।४।१) इत्यधिकारस्यातिव्यवहितत्वात् सम्प्रसारणमिहोच्यते, अन्यथाऽनन्तरत्वात् श्रुतं निपातनमिति सम्भाव्येत॥९००।

**[वि० प०]**

प्रस्त्य:। "**तद् दीर्घमन्त्यम्**" (४।१।५२) इति दीर्घ:। प्रेण स्त्या इत्यादि। यदि पुन: प्रात् स्त्या इति पञ्चमीलक्षणस्तत्पुरुष: स्यात् तदा **पञ्चम्या निर्दिष्टे परस्य'** (का० परि० २२) इत्यनन्तरस्यैवं स्यात्, न सम्शब्दव्यवहितस्येत्यर्थ:। एतत्तु **मतान्तरम्**। इह तु पञ्चमीसमास एव न्याय्य इति। प्रसंस्त्यान इत्यस्य मतं वर्णयन्ति। इह परत्वाद् आतोऽन्तस्थासंयुक्तादिति निष्ठातकारस्य नकार: कथन्न स्यादिति न देश्यम्। अन्तरङ्गो हि सम्प्रसारणविधिरिति स एव स्यात्। तत्र कृते "**वा प्रस्त्यो म:**" (४।६।११२) इत्येतदेव भवतीत्याह- अन्तरङ्गत्वादिति॥९००।

**[क० च०]**

प्रस्त्य:। **वररुचिमते** तृतीयातत्पुरुष एव प्रमाणम्, प्रात् स्त्य इति अकरणात्। **स्वमते** व्यवधानकल्पने गौरवापत्तिरित्युपेक्षित:, बहुवादिसम्मतेरभावाच्च। अथ 'प्रस्तीत:' इत्यत्र परत्वात् सम्प्रसारणात् प्राक् कथम् आतोऽन्तस्थासंयुक्तादित्यादिना नत्वं न स्यादित्याह-अन्तरङ्गत्वादिति। नित्यत्वं तु अन्तरङ्गस्य बोध्यमिति तत्रोक्तम्। अस्यान्तरङ्गत्वं प्रकृत्याश्रितत्वाद् अन्तस्थासंयुक्तस्याकारस्य सम्प्रसारणे कृते अन्तस्थाभावान्न भवतीत्यर्थ:। तत् सम्प्रसारणे कृते स्त्याधातोरभावाद् "**वा प्रस्त्यो म:**" (४।६।११२) इत्यनेन मकारोऽपि न स्यादित्याह-मत्वन्त्विति। तुशब्द: पुनरर्थे। निमित्ताभावान्नकारस्तावन्न। भवतु, मत्वं तु पुन: स्यादेव **'एकदेशविकृतस्यानन्यवद्भावात्'** (का० परि० १) इति शेष:। अत एवानन्यवद्भावादन्तस्थासंयुक्तो नकार: कथं न स्यादिति न वाच्यम्।न ह्यनन्यवद्भावेऽन्तस्थासंयुक्त आकारो निमित्तमानीयते इति॥९००।

**[समीक्षा]**

'प्रस्तीत:, प्रस्तीतवान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'स्त्या' धातु को संप्रसारण का विधान किया गया है। पाणिनि का सूत्र है-"स्त्य: प्रपूर्वस्य" (अ०६।१।२३)। यहाँ 'ष्ट्यै-स्त्यै' ये दोनों ही धातुएँ ली जाती हैं, ऐकार को आकारादेश हो जाने पर दोनों का ही सम्प्रसारण होता है। अत: यहाँ उभयत्र प्राय: समानता ही है।

**[विशेष वचन]**

१. अन्तरङ्गत्वात् कृते सम्प्रसारणे मत्वं तु स्यादेव पक्षे (दु० वृ०)।

२. अन्तरङ्गो हि सम्प्रसारणविधिरिति स एव स्यात् (वि० प०)।

३. वररुचिमते तृतीयातत्पुरुष एव प्रमाणम् (क० च०)

४. स्वमते व्यवधानकल्पने गौरवापत्तिरित्युपेक्षित: (क० च०)।

[रूपसिद्धि]

१. **प्रस्तीत:**। प्र+स्त्या+क्त+सि। 'प्र' उपसर्गपूर्वक 'ष्ट्यै स्त्यै शब्दसंघातयो:' (१।२५७) धातु से 'क्त' प्रत्यय, "आत्त्वं व्यञ्जनादौ" (२।३।१९) से ऐकार को आकार, "धात्वादे: ष: स:" (३।८।२४) से षकार को सकार, प्रकृत सूत्र से 'या' को सम्प्रसारण इकार, "तद् दीर्घमन्त्यम्" (४।१।५२) से इकार को दीर्घ तथा विभक्तिकार्य।

२. **प्रस्तीतवान्**। प्र+स्त्या+क्तवन्तु+सि। 'प्र' उपसर्गपूर्वक 'स्त्या' धातु से क्तवन्तु प्रत्यय, सम्प्रसारणादि अन्य कार्य पूर्ववत्॥९००।

## ९०१. द्रवघनस्पर्शयो: श्य: [४।१।४६]

[सूत्रार्थ]

निष्ठासंज्ञक प्रत्यय के परे रहते काठिन्य तथा स्पर्श अर्थों की विवक्षा में 'श्या' धातु को सम्प्रसारण होता है॥९०१।

[दु० वृ०]

द्रवघने स्पर्शे चार्थे श्यायतेर्निष्ठायां सम्प्रसारणं भवति। शीनं घृतम्, शीनवद् घृतम्। शीतो वायु:। द्रवीभूय घनं कठिनम् इत्यर्थ:। त्वगिन्द्रियग्राह्यो गुणविशेष: स्पर्श इति। द्रवघनस्पर्शयोरिति किम्? संश्यानो वृश्चिक:। शीतेन संकुचित इत्यर्थ:॥९०१।

[दु० टी०]

द्रव०। द्रवघनश्च स्पर्शश्चेति द्वन्द्वे बहुस्वरस्यापि पूर्वनिपातो गमकत्वात्। एवं शीनवद् घृतम्। द्रवीभूय घनमिति। द्रवं च तद् घनं चेति कर्मधारय:। आदौ द्रवं पश्चाद् घनमित्यर्थ:। यदा तु घनशब्दो गुणमात्राभिधायी तदा द्रवस्य घन इति षष्ठीसमास:, द्रवावस्थायां काठिन्यं गतमित्यर्थ:॥९०१।

[वि० प०]

द्रव०। शीनं घृतमिति। "**श्योऽस्पर्शे**" (४।६।१०७) इति नत्वम्। द्रवीत्यादि। पूर्वं द्रवं पश्चाद् घनमित्यर्थ:। द्रवं च यद् घनं चेति। छिन्नप्ररूढादिवत् पूर्वकाले कर्मधारय:॥९०१।

[क० च०]

द्रव०। द्रवीभूयेति। एतेन द्रवस्य पूर्वकालजन्यत्वं प्रतिपादितम्। यथा कर्मभूय कर्ता कर्मकर्तेति "**पूर्वकालैकसर्वजरत्पुराण०**" इत्यादिना कर्मधारय:॥९०१।

[समीक्षा]

'शीनं घृतम्, शीतो वायुः' शब्दरूपों के साधनार्थ दोनों ही व्याकरणों में 'श्यैङ्' धातु को सम्प्रसारण किया गया है। पाणिनि का सूत्र है-"द्रवमूर्तिस्पर्शयोः श्यः" (अ० ६।१।२४)। अतः उभयत्र समानता है।

[विशेष वचन]

१. त्वगिन्द्रियग्राह्यो गुणविशेषः स्पर्शः इति (दु० वृ०)।

२. द्रवघनम्। आदौ द्रवं पश्चाद् घनमित्यर्थः, द्रवावस्थायां काठिन्यं गतमित्यर्थः (दु० टी०)।

[रूपसिद्धि]

१. **शीनं घृतम्।** श्यैङ् + क्त-न+सि। 'श्यैङ् गतौ' (१।४५९) धातु से 'क्त' प्रत्यय, ऐकार को आकार, प्रकृत सूत्र से सम्प्रसारण, "तद् दीर्घमन्त्यम्" (४।१।५२) से इकार को दीर्घ, "श्योऽस्पर्शे" (४।६।१०७) से तकार को नकार तथा विभक्तिकार्य।

२. **शीनवद् घृतम्।** श्यैङ् + क्तवन्तु-न+सि। 'श्यैङ्' धातु से 'क्तवन्तु' प्रत्यय, ऐकार को आकार, प्रकृत सूत्र से सम्प्रसारण, दीर्घ, तकार को नकार तथा विभक्तिकार्य।

३. **शीतो वायुः।** श्यैङ् + क्त + सि। 'श्यैङ्' धातु से 'क्त' प्रत्यय आदि कार्य प्रायः पूर्ववत्।।९०१।

## ९०२. प्रतेश्च [४।१।४७]

[सूत्रार्थ]

निष्ठासंज्ञक प्रत्यय के परे रहते 'प्रति' उपसर्गपूर्वक 'श्यैङ्' धातु को सम्प्रसारण होता है।।९०२।

[दु० वृ०]

प्रतिपूर्वस्य श्यायतेर्निष्ठायां सम्प्रसारणं भवति। प्रतिशीनः, प्रतिशीनवान्। प्रतिपूर्वोऽयं रोग एव वर्तते।।९०२।

[दु० टी०]

प्रतेः। प्रतेरिति पञ्चमीयं न षष्ठी, तेन प्रतिसंश्यानः, प्रतिसंश्यानवान् इति। संश्यानवानित्यत्र न भवति। प्रतिपूर्व इत्यादि। अद्रवघनस्पर्शार्थोऽयमारम्भ इति भावः।।९०२।

[वि० प०]

प्रतेः। इहापि प्रतेरिति पञ्चम्या समा व्यवहिते न भवति। प्रतिसंश्यान इति। प्रतीत्यादि। तेन पूर्वेण न सिध्यतीति।।९०२।

[क० च०]

प्रते:। अथ पूर्वत्रोपसर्गनिर्देशाभावात् प्रतेरपि भविष्यति, किमनेन सूत्रेणेत्याह- प्रतिपूर्व इत्यादि। द्रवघनस्पर्शार्थाभावात् पूर्वेण न सिध्यतीति भाव:॥९०२।

[समीक्षा]

'प्रतिशीन:, प्रतिशीनवान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'प्रति' उपसर्गपूर्वक 'श्यैङ्' धातु को सम्प्रसारण किया गया है। पाणिनि का सूत्र है- ''प्रतेश्च'' (अ०६।१।२५)। अत: प्राय: उभयत्र समानता है ।

[विशेष वचन]

१. प्रतिपूर्वोऽयं रोग एव वर्तते (दु० वृ०)।

२. अद्रवघनस्पर्शार्थोऽयमारम्भ: (दु०टी०, द्र०-क०च०)।

[रूपसिद्धि]

१. **प्रतिशीन:**। प्रति+श्यैङ् + क्त + सि। 'प्रति' उपसर्गपूर्वक 'श्यैङ् गतौ' (१।४५९) धातु से क्त-प्रत्यय आदि कार्य पूर्ववत्।

२. **प्रतिशीनवान्**। प्रति+श्यैङ्+क्तवन्तु+सि। 'प्रति' उपसर्गपूर्वक 'श्यैङ्' धातु से क्तवन्तु-प्रत्यय आदि कार्य पूर्ववत्॥९०२।

## ९०३. वाऽभ्यवाभ्याम् [४।१।४८]

[सूत्रार्थ]

निष्ठासंज्ञक प्रत्ययों के परे रहते 'अभि-अव' उपसर्गपूर्वक 'श्यैङ्' धातु को वैकल्पिक सम्प्रसारण होता है॥९०३।

[दु० वृ०]

अभ्यवाभ्यां परस्य श्यायतेर्निष्ठायां भवति वा। **अभिशीन:**, **अभिश्यान:**। **अवशीन:**, **अवश्यान:**। **अभिशीनवान्**, **अभिश्यानवान्**। **अवशीनवान्**, **अवश्यानवान्**। उभयत्र विभाषेयम्॥९०३।

[दु० टी०]

वाऽभ्य०। उभयत्र विभाषेयमिति। द्रवघनस्पर्शयो: प्राप्ते विभाषा, अन्यत्राप्राप्ते विभाषेत्यर्थ:। तृतीयामाहुरेके। अभ्यवाभ्यां युक्तस्य श्यायतेरिति। अभिसंशीन:, अभिसंशीनवान्। अवसंशीन:, अवसंशीनवान्। अन्ये वाऽभ्यवपूर्वस्येति पठित्वा अभ्यवावेव पूर्वौ यस्येति प्रत्युदाहरन्ति। 'समभिश्यान:, समवश्यान:' इति द्वयम् **अप्रमाणमिति**॥९०३।

[वि० प०]

वा०। उभयत्रेति। द्रवघनस्पर्शयोरपीयं परत्वात् प्राप्ते विभाषा, अन्यत्राप्राप्ते विभाषेत्यर्थ:। अत्रापि पञ्चम्या अभिसंश्यान इत्यादौ न भवति॥९०३।

[क० च०]

वाऽभ्य०। अप्राप्तावुदाहरणं वृत्तौ दत्तम्। प्राप्तौ तु अभिश्यानं घृतम्, अभिशीनं घृतमिति बोध्यम्॥९०३।

[समीक्षा]

'अभिशीनम्, अवशीनम्' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में विकल्प से सम्प्रसारण किया गया है। पाणिनि का सूत्र है-"विभाषाऽभ्यवपूर्वस्य" (अ०६।१।२६)। अतः उभयत्र समानता है।

[विशेष वचन]

१. उभयत्र विभाषेयम् (दु० वृ०)।

२. द्रवघनस्पर्शयोरपीयं परत्वात् प्राप्ते विभाषा, अन्यत्राप्राप्ते विभाषेत्यर्थः (वि०प०;द्र०-दु०टी०)।

[रूपसिद्धि]

१. **अभिशीनः, अभिश्यानः**। अभि+श्यैङ्+क्त-न+सि। 'अभि' उपसर्गपूर्वक 'श्यैङ् गतौ' (१।४५९) धातु से 'क्त' प्रत्यय, सम्प्रसारण, दीर्घ, तकार को नकार तथा विभक्तिकार्य। सम्प्रसारणाभावपक्ष में 'अभिश्यानः'।

२. **अवशीनः, अवश्यानः**। अव + श्यैङ् + क्त-न+सि। 'अव' उपसर्गपूर्वक 'श्यैङ्' धातु से 'क्त' प्रत्यय आदि कार्य पूर्ववत्।

३. **अभिशीनवान्, अभिश्यानवान्**। अभि+श्यैङ्+क्तवन्तु-न+सि। 'अभि' उपसर्गपूर्वक 'श्यैङ्' धातु से 'क्तवन्तु' प्रत्यय, सम्प्रसारण, दीर्घ, नकार, लिङ्गसंज्ञा, सिप्रत्यय, नकारोपधा को दीर्घ, सि-त् का लोप। सम्प्रसारणाभावपक्ष में 'अभिश्यानवान्'।

४. **अवशीनवान्, अवश्यानवान्**। अव+श्यैङ्+क्तवन्तु-न+सि। 'अव' उपसर्गपूर्वक 'श्यैङ्' धातु से 'क्तवन्तु' प्रत्यय आदि कार्य पूर्ववत्॥९०३।

## ९०४. न वेञ्ज्योर्यपि [४।१।४९]

[सूत्रार्थ]

यप् प्रत्यय के परे रहते 'वेञ्-ज्या' धातुओं को सम्प्रसारण नहीं होता है॥९०४।

[दु० वृ०]

'वेञ्-ज्या' इत्येतयोर्यपि परे संम्प्रसारणं न भवति। प्रवाय, प्रज्याय। एतौ यजादिग्रहादी॥९०४।

[दु० टी०]

न.वे०। एतावित्यादि। वेञो यण्वद्भावात् प्राप्तं तदादेशोऽपि तद्वदिति। ज्याधातोश्चागुणत्वादित्यर्थः। वेञोऽनात्वनिर्देशो **मन्दधियां सुखप्रतिपत्त्यर्थः**। न च '**वा गतिगन्धनयोः**' (२।१७) इत्यस्य प्राप्तिः॥९०४।

[क० च०]

न०। वाशब्द: कथमत्र नानुवर्तते इति न देश्यम्, नञ्ग्रहणबलात्। अन्यथा सम्प्रसारणविकल्पेनैव रूपद्वयं सिध्यति किं निषेधस्य विकल्पेनेति। वेञोऽनात्वनिर्देशः सुखार्थः। न च **'वा गतिगन्धनयोः'** (२।१७) इत्यस्य व्यावृत्त्यर्थमिति वाच्यम्, प्राप्तेरभावात्। **प्राप्तिपूर्वको हि निषेध** इति प्रतिपादयन्नाह-एताविति। यजादिग्रहादिगणे पाठादेतावपि यजादिग्रहादी उच्येते, **उपचारादिति** भावः, अन्यथा यजादिशब्देन गण एवोच्यते।।९०४।

[समीक्षा]

'प्रवाय, प्रज्याय' इत्यादि शब्दरूपों के सिद्ध्यर्थ अपेक्षित सम्प्रसारणनिषेध दोनों ही व्याकरणों में किया गया है। पाणिनि के सूत्र हैं-''ल्यपि च, ज्यश्च'' (अ० ६।१।४१,४२)। दो सूत्रसंख्या की दृष्टि से होने वाले पाणिनीय गौरव को छोड़कर अन्य समानता ही है।

[विशेष वचन]

१. वेञोऽनात्वनिर्देशो मन्दधियां सुखप्रतिपत्त्यर्थः (दु० टी०; क० च०)।

[रूपसिद्धि]

१. **प्रवाय**। प्र+वेञ्+क्त्वा-यप्+सि। 'प्र' उपसर्गपूर्वक 'वेञ् तन्तुसन्ताने' (१।६११) धातु से 'क्त्वा' प्रत्यय, समास में 'यप्' आदेश, ''स्वपिवचियजादीनां यण्परोक्षाशीःषु'' (३।४।३) से प्राप्त सम्प्रसारण का प्रकृत सूत्र से निषेध तथा विभक्तिकार्य।

२. **प्रज्याय**। प्र+ज्या+क्त्वा-यप्+सि। 'प्र' उपसर्गपूर्वक 'ज्या वयोहानौ' (८।२३) धातु से क्त्वा-यप् तथा प्रकृत सूत्र से सम्प्रसारणनिषेध आदि कार्य पूर्ववत्।।९०४।

## ९०५. व्येञश्च [४।१।५०]

[सूत्रार्थ]

यप् प्रत्यय के परे रहते 'व्येञ्' धातु में सम्प्रसारण नहीं होता है।।९०५।

[दु० वृ०]

व्येञश्च यपि परे सम्प्रसारणं न भवति। प्रव्याय, उपव्याय। यजादिरयम्।।९०५।

[दु० टी०]

व्ये०। **योगविभाग उत्तरार्थः**। चकार उक्तसमुच्चयमात्रे।।९०५।

[समीक्षा]

'प्रव्याय, उपव्याय' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में सम्प्रसारण का निषेध किया गया है। पाणिनि का सूत्र है-''व्यश्च'' (अ० ६।१।४३)। कातन्त्रीय सूत्र का भी पाठान्तर 'व्यश्च' मिलता है। अत: उभयत्र समानता है।

[विशेष वचन]

१. योगविभाग उत्तरार्थः। चकार उक्तसमुच्चयमात्रे (दु० टी०)।

[रूपसिद्धि]

१. **प्रव्याय**। प्र+व्येञ्+क्त्वा-यप्+सि। 'प्र' उपसर्गपूर्वक 'व्येञ् संवरणे' (१।६१२) धातु से 'क्त्वा' प्रत्यय, यप् आदेश, आकार, सम्प्रसारण का निषेध तथा विभक्तिकार्य।

२. **उपव्याय**। उप+व्येञ्+क्त्वा-यप्+सि। 'उप' उपसर्गपूर्वक 'व्येञ्' धातु से 'क्त्वा' प्रत्यय आदि कार्य पूर्ववत्।।९०५।

## ९०६. संपरिभ्यां वा [४।१।५१]

[सूत्रार्थ]

'यप्' प्रत्यय के परे रहते 'सम् - परि' उपसर्गों से परवर्ती व्येञ् धातु को विकल्प से सम्प्रसारण होता है।।९०६।

[दु० वृ०]

सम्परिभ्यां परस्य व्येञः संप्रसारणं भवति वा यपि परे। संव्याय, संवीय। परिव्याय, परिवीय। समो न विभाषेत्यन्ये।।९०६।

[दु० टी०]

सम्प०। सम इत्यादि। पूर्वेण प्रतिषेध एवेत्यर्थः। संव्याय। तदत्र**प्रमाण**मिति।।९०६।

[क० च०]

सम्प०। नञ् नानुवर्ततेऽत्र प्रयोजनाभावात्। यतः **सर्वे विधयो विकल्प्यन्ते न तु निषेध** इति, निषेधविकल्पने गौरवापत्तेः। पूर्वेण नित्ये प्राप्ते विकल्पार्थोऽयमारभ्यते। वाग्रहणमन्तरेण नञ् न वर्तते, पूर्वेण सिद्धत्वात् । न च नियमार्थो भविष्यति। उपसर्गान्निषेधो भवन् सम्परिभ्यामेवेति विधिनियमसम्भवे विधिरेव ज्यायानिति। अतः सम्प्रसारणविधौ सति 'संवीय, परिवीय' इत्येव स्यात्, न तु 'संव्याय, परिव्याय' इति। अतो वाशब्देन साध्यं यत् तदुदाहृतम् आदाविति **हेमाशयः**।।९०६।

[समीक्षा]

कातन्त्रकार ने 'सम्' तथा 'परि' इन दो उपसर्गों से परवर्ती 'व्येञ्' धातु में वैकल्पिक सम्प्रसारण किया है, जबकि पाणिनि केवल 'परि' उपसर्ग से ही परवर्ती व्येञ् धातु में वैकल्पिक सम्प्रसारण मानते हैं। पाणिनि का सूत्र है-''विभाषा परेः'' (अ०६।१।४४)। 'संवीय' शब्द का प्रयोग उपलब्ध रहने पर कातन्त्रकार का विधान अधिक प्रशस्त कहा जा सकता है। कलापचन्द्र के अनुसार पाणिनीय निषेध- विकल्पविधि को गौरवाधायक ही कहा जाएगा- 'निषेधविकल्पने गौरवापत्तेः' (क० च०)।

[विशेष वचन]

१.समो न विभाषेत्यन्ये (दु० वृ०)।

२. सर्वे विधयो विकल्प्यन्ते (क० च०)।

[रूपसिद्धि]

१. **संवीय, संव्याय।** सम् + व्येञ् + क्त्वा-यप् + सि। 'सम्' उपसर्गपूर्वक 'व्येञ् संवरणे' (१।६१२) धातु से क्त्वा प्रत्यय, यप् आदेश, आकार, प्रकृत सूत्र से वैकल्पिक सम्प्रसारण, दीर्घ तथा विभक्तिकार्य। सम्प्रसारण के अभावपक्ष में - 'संव्याय' शब्दरूप।

२. **परिवीय, परिव्याय।** परि+व्येञ्+क्त्वा-यप्+सि। 'परि' उपसर्गपूर्वक 'व्येञ्' धातु से क्त्वा प्रत्यय आदि कार्य पूर्ववत्।।९०६।

## ९०७. तद् दीर्घमन्त्यम् [४।१।५२]

[सूत्रार्थ]

धातु के अन्त्य में स्थित सम्प्रसारण को दीर्घादेश होता है।।९०७।

[दु० वृ०]

तत् सम्प्रसारणं दीर्घमापद्यते अन्त्यं चेत्। हूतः, संवीतः, प्रस्तीतः। 'मित्रहूः, संवीय' इत्यन्तरङ्गत्वात् तकारागमं बाधते। अन्त्यग्रहणमा**ख्यातार्थं** च। तद्ग्रहणम**भिन्नबुद्ध्यर्थम्**। तेन "**सपरस्वरायाः सम्प्रसारणम्**" (३।४।१) सिद्धम् ।।९०७।

[दु० टी०]

तद् दीर्घम् । हूतः, संवीत इति। ह्वेञ्व्येञोर्यजादित्वात् सम्प्रसारणम्। 'प्रस्तीतः' इति "**आतोऽन्तस्थासंयुक्तात्**" (४।६।१०३) इति नत्वान्नित्यम्, "**प्रस्त्यः सम्प्रसारणम्**" (४।१।४५) इति। मित्रं ह्वयतीति क्विप् **मित्रहूः।** संवीय इति। बहिरङ्गस्तकारागमः पानुबन्धप्रत्ययापेक्षत्वात्। एतत्प्रकरणस्थं सम्प्रसारणमन्त्यमेवेत्याह-अन्त्येत्यादि। **अन्त्यग्रहणं** मध्यनिवृत्त्यर्थम् , तच्चाख्यातिकमेव। यथा सुप्तः, सुप्यते, सुषुपतुः, उष्यते, उषित इति। तग्रहणमित्यादि। अभिन्ना चासौ बुद्धिश्चेति **अभिन्नबुद्धिः,** सैवार्थः प्रयोजनम् अस्येति। तेनेहान्तस्थायाः सम्प्रसारणमुच्यमानं सपरस्वरायाः भवतीत्यर्थः। ननु वचनबलाद् भविष्यति, अन्यथा यत्वे को विशेष इति ? सत्यम् , विग्रहीति सम्भाव्यते।।९०७।

[वि० प०]

तद् दीर्घम् । अन्त्यग्रहणं **मध्यनिवृत्त्यर्थम्** । न चैतत्प्रकरणस्थं सम्प्रसारणं मध्ये सम्भवतीत्याह-अन्तेत्यादि। चकारः **सुखार्थ**मिहापीत्याविर्भावयति। तेन हूतः, संवीतः, मित्रहूरिति। ह्वेञ्व्येञोर्यजादित्वात् सम्प्रसारणे दीर्घत्वमुपपद्यते। मित्रं ह्वयतीति क्विप् । मध्ये न भवति सुप्यते इति सुप्तः। तर्हि तद्ग्रहणं किमर्थम् , तदर्थस्य पूर्ववस्तुपरामर्शलक्षणस्यादिभावाद् इत्याह-तद्ग्रहणमिति। कृदाख्यातयोरेकबुद्ध्यर्थमित्यर्थः। तेनेति। अन्यथा

सम्प्रसारणस्यान्तस्थानिमित्तत्वादन्तस्थानिमित्तमात्रस्यैव स्यान्न तु परस्वरसम्बन्धः। ननु वचनबलादेव स्वरेण सह भविष्यति। अन्यथा पुनर्यत्वे वत्वे च को विशेष इति, नैवम्। **विसन्धिरपि** सम्भाव्यते॥९०७।

**[क० च०]**

तद्०। अन्ते भवम् **अन्त्यम्** , दिगादित्वाद् भवार्थे यः। आख्यातार्थमिति। अन्यथा एतत्प्रकरणप्रणीतस्यैव सम्प्रसारणस्य दीर्घः स्यात् , न त्वाख्यातिकस्य। तदा 'संवीतः' इत्यादौ आख्यातिकस्य संप्रसारणस्य दीर्घो न स्यात् ? एतस्मिंश्च सति **व्यावृत्तिरप्युपपद्यते।** यथा सुप्यते इति **पञ्जिका।** तर्हि अन्त्यग्रहणेनाख्यातिकसंप्रसारणस्यापि ग्रहणात् तच्छब्दस्य पूर्ववस्तुपरामर्शित्वाभावेऽयुक्तं तस्योपादानमिति न युक्तापेक्षा। अथ तद्ग्रहणाभावे दीर्घमन्त्यमिति सूत्रे एतत्प्रकरणप्रणीतस्य संप्रसारणस्य दीर्घो भवतु, न त्वाख्यातिकस्य, अन्त्यत्वाभावात् ।

तत्राह **कश्चिद्** - इह प्रकरणे दीर्घग्रहणबलाद् इह सम्प्रसारणस्य मध्यस्यापि स्यात्? तदयुक्तम्। सूत्रे साक्षाद् अन्त्यग्रहणपाठात् कथं मध्यस्य स्यात् , आख्यातान्त एवास्य विषय इत्याह-दीर्घमन्त्यमिति **हेमः।** 'ऊयते, जीयते' इत्यादावाख्यातिकप्रत्ययस्य दीर्घस्य प्रयोजनम् **"नाम्यन्तानाम्०"** (३।५।१७) इत्यादिना सिद्धत्वादित्याह-शर्ववर्मेति **हेमः।** 'मित्रहूः, संवीय' इति **वृत्तिः।** ननु 'ग्रहीता' इत्यादौ इटो दीर्घो ग्रहेरिति इकारनिर्देशादन्तरङ्गेणागमो बाध्यते इति ज्ञापितमस्ति। अन्यथा अन्तरङ्गत्वाद् **"हो ढः"** (३।६।५६) प्राप्नोति। तस्मिंश्च सति ग्रहस्वरूपं नास्ति इति, तत् कथमत्रोक्तमन्तरङ्गत्वात्तकारागमं बाधते इति? सत्यम्। **'ज्ञापकज्ञापिता विधयो ह्यनित्याः'** (का०परि०६०) इति **कश्चित्। वस्तुतस्तु** तत्राप्यन्तरङ्गत्वाद् हो ढ इति कृते पश्चादिटि सति निमित्ताभावाड् ढकारनिवृत्तौ कुतो धातुस्वरूपत्वं व्यभिचरतीति, येन ज्ञापकमिति वाच्यम् ॥९०७।

**[समीक्षा]**

'संवीतः, मित्रहूः, हूतः' इत्यादि शब्दरूपों के सिद्ध्यर्थ सम्प्रसारण को दीर्घविधान दोनों व्याकरणों में किया गया है । पाणिनि का सूत्र है- "हलः" (अ०६।४।२)। अतः उभयत्र समानता ही है ।

**[विशेष वचन]**

१. अन्त्यग्रहणमाख्यातार्थं च (दु० वृ०)।

२. तद्ग्रहणमभिन्नबुद्ध्यर्थम् (दु० वृ०)।

३. अन्त्यग्रहणं मध्यनिवृत्त्यर्थम्, तच्चाख्यातिकमेव (दु० टी०)।

४. चकारः सुखार्थम् (वि० प०)।

[रूपसिद्धि]

१. हूतः। ह्वेञ् + क्त + सि। 'ह्वेञ् स्पर्धायां शब्दे च' (१।६१३) धातु से "निष्ठा" (४।३।९३) सूत्र द्वारा 'क्त' प्रत्यय, 'क्' अनुबन्ध का प्रयोगाभाव, "स्वपिवचियजादीनां यण्परोक्षाशीःषु" (३।४।३) से एकारसहित वकार को सम्प्रसारण-उकार, प्रकृत सूत्र से उकार को दीर्घ तथा विभक्तिकार्य।

२. **संवीतः**। सम् + व्येञ् + क्त + सि। 'सम्' उपसर्गपूर्वक 'व्येञ् संवरणे' (१।६१२) धातु से 'क्त' प्रत्यय आदि कार्य पूर्ववत् ।

३. **प्रस्तीतः**। प्र + ष्टयै + क्त + सि। 'प्र' उपसर्गपूर्वक' 'ष्टयै स्त्यै शब्दसंघातयोः' (१।२५७) धातु से क्त-प्रत्यय आदि कार्य पूर्ववत्।

४. **मित्रहूः**। मित्र + ह्वेञ् + क्विप् + सि। मित्रं ह्वयति। 'मित्र' उपपदपूर्वक 'ह्वेञ् स्पर्धायां शब्दे च' (१।६१३) धातु से "क्विप् च" (४।३।६८) सूत्र द्वारा 'क्विप्' प्रत्यय, उसका सर्वापहारी लोप, "स्वपिवचि०" (३।४।३) इत्यादि से सम्प्रसारणादि कार्य पूर्ववत् ।

५. **संवीय**। सम् + व्येञ् + क्त्वा-यप् + सि। 'सम्' उपसर्गपूर्वक 'व्येञ् संवरणे' (१।६१२) धातु से क्त्वा-प्रत्यय, उसको समास में 'यप् ' आदेश तथा सम्प्रसारण आदि कार्य पूर्ववत् ।।९०७।

## ९०८. वः क्वौ [४।१।५३]

[सूत्रार्थ]

'वेञ् तन्तुसन्ताने' (१।६११) धातु से क्विप् प्रत्यय के ही परे रहते सम्प्रसारण को दीर्घादेश होता है।।९०८।

[दु० वृ०]

वेञः क्वावेव संप्रसारणं दीर्घमापद्यते। ऊः, उवौ, उवः। क्वाविति किम् ? उतः, उतवान् ।।९०८।

[दु० टी०]

वः। वेञ एव क्वाविति न विपरीतनियमो मित्रहूरिति लक्ष्यदर्शनात् । **वयं** तु वेञः क्वावुदाहरणं न पश्यामः। **'ऊयी तन्तुसन्ताने'** (१।४०१) ऊः ।।९०८।

[वि० प०]

वः। **'सिद्धे सत्यारम्भो नियमार्थः'** (का० परि० ५९), न च वेञ एव क्वाविति प्रत्ययनियमः। मित्रहूरिति लक्ष्यस्य लोकप्रसिद्धस्यासिद्धिप्रसङ्गादित्याह-वेञः क्वावेवेति।।९०८।

[समीक्षा]

'वेञ् ' धातु के क्विप्प्रत्ययान्त रूप 'ऊः' में दीर्घविधान कातन्त्रकार ने नियमार्थ किया है। अतः पृथक् सूत्र बनाना पड़ा । पाणिनि के अनुसार यहाँ दीर्घविधान "अन्येषामपि दृश्यते" (अ० ६।३।१३७) सूत्र से प्रवृत्त होगा। यद्यपि पृथक् सूत्र बनाने से कातन्त्र का गौरव कहा जा सकता है, परन्तु एक विशेष विधि (नियम) को दिखाने के कारण यह दोषाधायक नहीं है।

[विशेष वचन]

१. वेञ एव क्वाविति न विपरीतनियमः (दु०टी०; वि० प०)।

[रूपसिद्धि]

१. **ऊः**। वेञ् + क्विप् +सि। 'वेञ् तन्तुसन्ताने' (१।६११) धातु से 'क्विप्' प्रत्यय, सर्वापहारी लोप, "स्वपिवचि०" (३।४।३) से सम्प्रसारण, प्रकृत सूत्र से दीर्घ तथा विभक्तिकार्य।

२-३. **उवौ, उवः**। वेञ् + क्विप् + औ, जस् । 'वेञ् ' धातु से क्विप् , सर्वापहारी लोप, सम्प्रसारण, दीर्घ ऊकार को उव् आदेश तथा विभक्तिकार्य ।।९०८।

## ९०९. ध्याप्योः [४।१।५४]

[सूत्रार्थ]

क्विप् प्रत्यय के परे रहते 'ध्यै-प्यै' धातुओं में प्रवृत्त संप्रसारण को दीर्घ आदेश होता है।।९०९।

[दु० वृ०]

ध्याप्योः सम्प्रसारणं क्वौ परे दीर्घमापद्यते। धीः, आपीः। वचनात् सम्प्रसारणं सिद्धम् ।।९०९।

[दु० टी०]

ध्या०। वचनादित्यादि। ध्यायतेः प्यायतेर्न **केनचित्** सम्प्रसारणमुक्तम् , अत इदमेव वचनमनुमापकमित्यर्थः। **केचिद्** इदं न पठन्ति। **'लोपस्वरादेशयोः स्वरादेशविधिर्बलवान्'** (का० परि० ३५) इति दधाति-पिबत्योरपीत्वे पश्चात् क्विब्लोप इति। 'कीलालपाः' इति विच् दृश्यते। तथाहि "**पञ्चमोऽच्चातः**" इत्यद्भावो नास्ति।।९०९।

[वि० प०]

ध्या०। **'स्मृ ध्यै चिन्तायाम् , प्यैङ् वृद्धौ'** (१।२७२, ४६४)। कथमनयोः सम्प्रसारणमित्याह-वचनादिति। न हि अन्यथा दीर्घ उपपद्यते इति भावः।।९०९।

[समीक्षा]

'धीः, आपीः' शब्दरूपों में सम्प्रसारण-दीर्घ करने के लिए यह स्वतन्त्र सूत्र बनाया गया है। पाणिनीय व्याकरण में इस प्रकार का कोई सूत्र नहीं है। "ध्यायतेः

सम्प्रसारणं च'' (अ०३।२।१७८-वा०) इस वार्त्तिक सूत्र से 'धीः' शब्द सिद्ध किया गया है। 'आपीः' की सिद्धि के लिए पाणिनीय व्याकरण में कोई सूत्र-वार्त्तिक उपलब्ध नहीं होता। इस प्रकार यहाँ कातन्त्रीय विशेषता कही जाएगी।

[विशेष वचन]

१. वचनात् सम्प्रसारणं सिद्धम् (दु० वृ०)।

२. ध्यायतेः प्यायतेर्न केनचित् सम्प्रसारणमुक्तम् , अत इदमेव वचनमनुमापकम् (दु० टी०)।

[रूपसिद्धि]

१. **धीः**। ध्यै + क्विप् + सि। 'ध्यै चिन्तायाम् ' (१।२७२) धातु से ''क्विप् च'' (४।३।६८) सूत्र द्वारा 'क्विप् ' प्रत्यय, सर्वापहारी लोप, सम्प्रसारण , प्रकृत सूत्र से दीर्घ तथा विभक्तिकार्य।

२. **आपीः**। आ+प्यै+क्विप्+सि। 'आङ्' उपसर्गपूर्वक 'प्यैङ् वृद्धौ' (१।४६४) धातु से क्विप् प्रत्यय आदि कार्य पूर्ववत् ॥९०९।

## ९१०. पञ्चमोपधाया धुटि चागुणे [४।१।५५]

[सूत्रार्थ]

वर्गीय पञ्चम वर्णान्त धातु की उपधा को दीर्घादेश होता है, क्विप् तथा अगुण धुडादि प्रत्यय के परे रहते॥९१०।

[दु० वृ०]

पञ्चमान्तस्योपधाया दीर्घो भवति क्वौ धुट्यगुणे च। प्रशान्, प्रतान्, शान्तः, शान्तवान्, शान्त्वा। धुटीति किम्? अवमत्य। अगुण इति किम् ? गन्ता। दीर्घ इति सञ्ज्ञापूर्वकत्वात् क्रमेः क्त्वाप्रत्यये वा-क्रान्त्वा, क्रन्त्वा॥९१०।

[दु० टी०]

पञ्च०। धुटि चेति चकारः क्विबधिकारं न विहन्ति। अथोपधाग्रहणं किमर्थम् पञ्चमान्तस्य धातोर्दीर्घो भवन्नेकवर्णव्यवधाने एव भविष्यति? सत्यम्। पञ्चमान्तस्येति स्थानित्वमपि सम्भाव्येत। **केचिच्चेक्रीयितलुगन्तं भाषायामपि** मत्वा 'शंशान्तः, तंतान्तः, दंदान्तः' इति क्तादावुदाहरन्ति। दीर्घ इत्यादि। **केचित्** क्रमेर्दीर्घमिच्छन्ति, तन्मतमुच्यते॥९१०।

[वि० प०]

पञ्च०। प्रशान्, प्रतान् इति। **''मो नो धातोः''** (४।६।७३) इति मकारस्य सस्वरो नकार इति, ततः **''अस्य च लोपः''** (३।६।४९) इति। अवमत्येति। **''यपि च''** (४।१।६०) इति पञ्चमलोपः॥९१०।

[क० च०]

पञ्च०। प्रशान् इत्यत्र लुप्ताकारस्य स्थानिवद्भावात् "**लिङ्गान्तनकारस्य**" (२।३।५६) इति नलोपो भविष्यतीति न वाच्यम्। "**न पदान्त०**" (का० परि० १०) इत्यादिना लोपविधिं प्रति स्थानिवद्भावो नास्तीति सस्वरनकारकरणाद् एतदर्थमेव सस्वरो नकारः क्रियते। धुटीति किमिति। ननु कथमिदमुक्तम्, अत्र कृतेऽपि चेत्यनाद् भविष्यति। न च वाच्यम्, तत्राधिकारो नास्ति तदर्थ एवात्राधिकारः क्रियते। यतः 'अवमत्य' इति, अतः स्थितिपक्षेऽत्र धुड्ग्रहणाद् यपि दीर्घस्याभावाद् "**यपि च**" (४।१।६०) इत्यत्रातश्चानुवृत्तिर्नास्ति इदानीं यपि परतोऽदीर्घस्तदा "**यपि च**" (४।१।६०) इत्यत्रापि आतश्चादित्यनुवर्तिष्यते, ततश्च सिद्धम् अवमत्येति। सत्यम्, तदा 'प्रभण्य, प्रक्रम्य' प्रत्युदाहरणम्, इदं तु तदर्थं क्रियमाणम् एतदपि विषयीकरोतीति न्यायात्। ननु चकारेण क्विपोऽनुकर्षणाच्चानुकृष्टं नोत्तरत्रेति कथमुत्तरत्र प्रवर्तते? सत्यम्, चकारानुवृत्तिरिति **सागरः**। यद् वा समुच्चयधर्मान्वितोऽयं चकारस्ततश्च तस्यानुकर्षणात् समुच्चीयमानस्यापि अनुकर्षणं दण्डापूपन्यायादिति **कुलचन्द्र**रीत्या, न चानुकृष्टत्वं क्विप इति॥९१०।

[समीक्षा]

'प्रशान्, प्रतान्, शान्तः, शान्तिः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में दीर्घविधान किया गया है। पाणिनि का सूत्र है - "अनुनासिकस्य क्विझलोः क्ङिति" (अ०६।४।१५)। अतः प्रायः उभयत्र समानता है।

[विशेष वचन]

१. दीर्घ इति सञ्ज्ञापूर्वकत्वात् क्रमेः क्त्वाप्रत्यये वा (दु० वृ०)।

२. धुटि चेति चकारः क्विबधिकारं न विहन्ति (दु० टी०)।

३. केचिच्चेक्रीयितलुगन्तं भाषायामपि मत्वा (दु० टी०)।

४. केचित् क्रमेर्दीर्घमिच्छन्ति, तन्मतमुच्यते (दु० टी०)।

[रूपसिद्धि]

१. **प्रशान्**। प्र+शम्+क्विप्+सि। 'प्र' उपसर्गपूर्वक 'शमु उपशमे' (३।४२) धातु से क्विप् प्रत्यय, सर्वापहारी लोप, मकार की उपधा को प्रकृत सूत्र से दीर्घ, "मो नो धातोः" (४।६।७३) से मकार को नकार तथा विभक्तिकार्य।

२. **प्रतान्**। प्र+तनु+क्विप्+सि। 'प्र' उपसर्गपूर्वक 'तनु विस्तारे' (७।१) धातु से क्विप् प्रत्यय आदि कार्य पूर्ववत् ।

३-४. **शान्तः, शान्तवान्**। शमु+क्त,क्तवन्तु+सि। 'शमु उपशमे' (३।४२) धातु से 'क्त-क्तवन्तु' प्रत्यय, दीर्घ, म् को न् तथा विभक्तिकार्य।

५. **शान्तिः**। शमु+क्ति+सि। 'शमु' धातु से "स्त्रियां क्तिः" (४।५।७२) सूत्र द्वारा 'क्ति' प्रत्यय तथा अन्य कार्य पूर्ववत्।

६. **शान्त्वा**। शमु+क्त्वा+सि। 'शमु' धातु से "एककर्तृकयोः पूर्वकाले" (४।६।३) सूत्र द्वारा 'क्त्वा' प्रत्यय तथा अन्य कार्य पूर्ववत्॥९१०।

## ९११. च्छ्वोः शूटौ पञ्चमे च [४।१।५६]

**[सूत्रार्थ]**

क्विप्, अगुण धुडादि प्रत्यय तथा पञ्चम वर्ण के परे रहते छकार को शकार तथा वकार को ऊट् आदेश होता है॥९११।

**[दु० वृ०]**

छकारवकारयोः 'श्-ऊट्' इत्येतौ भवतो यथासङ्ख्यम्, क्वौ धुट्यगुणे पञ्चमे च। विच्छ्-गोविट्। प्रच्छ्-पथिप्राट्।दिव्-अक्षद्यूः। पृष्टः, पृष्ट्वा। द्यूतः, द्यूत्वा, दुद्यूषति। विश्नः,प्रश्नः। "**सर्वधातुभ्यो मन्**" (कात० उ० ४।२८) स्योमा। अन्तरङ्गत्वाद् यत्वमेव। छस्य द्विः पाठो नैमित्तिकस्याप्यभावो वा॥९११।

**[दु० टी०]** -

च्छ्वोः। द्विः पाठ इति। छकारस्य द्विर्भावेऽघोषे प्रथमे सति निर्दिश्यमानस्य सन्निपातस्यादेशत्वम्। अथ वर्णान्तस्य विधिरिति बाधकत्वं नानर्थक्ये वर्णान्तस्य विधिरिति नैतदङ्गीकृतम्, प्रयोजनाभावात्। द्विर्भावग्रहणात् सर्वस्य तर्हि भविष्यति, नैवम्। द्विर्भावस्य प्रयोजनमस्तीति वाञ्छतेर्मा भूत्। तर्हि वाण्ट्, वांशाविति न सिध्यति? सत्यम्, यथाभिधानं ज्ञेयम्। नैमित्तिकस्याप्यभावो वेति छकारमात्रमेव पठितव्यम्, यत्र द्विर्भावोऽस्ति तत्र निमित्ताभावे नैमित्तिकस्याप्यभावो भविष्यति। तथा वाञ्छतेर्वाण्ट्वांशाविति न्यायाद् उत्पुच्छयतेश्च-क्विपि उत्पुडिति भवितव्यमेव।

स्योमेति। "**अन्येभ्योऽपि दृश्यन्ते**" (४।३।६७) इति सर्वधातुभ्योऽभिधानान्मन् बहिरङ्गः उपधालक्षणगुणो वर्णाश्रयत्वाद् यत्वमन्तरङ्गमित्यूट् पञ्चमे स्यात्। कथं स्यूत्वा, क्वनिप्। स्योवा, वनिप्। न चायं धुट् तस्मात् परोऽनुनासिकग्रहणं विधत्ते क्वनिब्वनिपोर्वकारोऽनुनासिक इति, तदसत्। **छान्दसत्वादनुनासिके धुड्ग्रहणेऽप्यदोष** इति दिवेश्चेक्रीयितलुगन्तस्य 'देदेव्मि, देदेव्नि' च भवितव्यं गुणित्वात्। येषां गुणो वर्तते तेषां देद्योति, देद्यवीति। अस्मिन् पक्षे "छशोश्च" (३।६।६०) इत्यत्र छकारग्रहणमनर्थकम्, अनेन शत्वे कृते षत्वं भविष्यति? सत्यम्। भिन्नकर्तृकत्वान्नैतच्चोद्यमिति, तदसत् **चेक्रीयितलुगन्तस्य भाषायामप्रयोगादिति**। अत्र चागुणाधिकारो वनतितनोत्यादिप्रतिषिद्धेटामित्यत्र प्रतिपत्तव्यः, अन्यथा निवृत्तिः सम्भाव्येत। अथ **मण्डूकप्लुतिराश्रीयते**, तथापि **मन्दमतिबोधनार्थमगुणाधिकार** इति।

**अन्यस्त्वाह**-धुट्यगुण इति विशेषणाद् द्युभ्यां द्युभिरित्यत्र ऊडादेशो मा भूदिति प्राप्नोति। अक्षद्यूरित्यादावटो विषयो द्युत्वमित्यादौ "**दिव उद् व्यञ्जने**" (२।२।२५) इत्यस्यैव विषयः, एवमपि धात्वधिकारात् प्रकरणाच्च लिङ्गस्य न भविष्यतीति॥९११।

[वि० प०]

छ्वो०। **"सर्वधातुभ्यो मन्"** (कात० उ० ४।२८) इति। **"अन्येभ्योऽपि दृश्यते"** (४।३।६७) इत्यनेनाभिधानात् सर्वधातुभ्यो मन्नित्यर्थः। अथ सिवेर्लघूपधत्वाद् ऊटः पूर्वं गुणः कथन्न स्यात्? इति न देश्यम्। गुणो हि बाह्यप्रत्ययापेक्षत्वाद् बहिरङ्गः, यत्वं तु वार्णत्वादन्तरङ्गम् इत्यूडेवाग्रतः स्यात्, कथमन्यथाऽन्तरङ्गयत्वस्यार्थलाभ इत्याह-अन्तरङ्गत्वाद् यत्वमेवेति। अथवा परत्वान्नित्यत्वाद् वकारस्य वर्णस्य स्थाने ऊड् भवन् वार्णत्वादन्तरङ्गत्वाच्च प्रागूटि कृते गुणो वा स्याद् इत्याह-अन्तरङ्गत्वाद् यत्वमेवेति। न च वक्तव्यमन्तरङ्गं यत्वं प्रति ऊटोऽसिद्धत्वात् कथमेतदित्याह-स्वरानन्तर्येऽसिद्धं बहिरङ्गमन्तरङ्गम् इत्यस्यानित्यत्वाभ्युपगमात्। ऊटस्तु नाम्यन्तलक्षणो गुणः।

अथ विच्छप्रभृतीनां छकारस्य स्वरपरत्वाद् द्विर्भावोऽघोषे प्रथमे च वर्णद्वयसन्निपातो वर्तते, ततश्छकारस्य शत्वे सति छकारस्थितिरेव स्यात्? तदयुक्तम्। कृतद्विर्भाव एव सूत्रे निर्देश इत्याह-छस्य द्विः पाठ इति। ननु तथापि वर्णान्तस्य विधिरित्यन्तस्यैव स्यान्न समुदायस्य? नैवम्, **'नानर्थक्ये वर्णान्तस्य विधिः'** (व्या० प० पा० ६२) इत्यङ्गीकरिष्यति। यद्येवं कथं वाञ्छतेर्वाण्ट्-वांशाविति अस्वरपरत्वाद् द्विर्भात्र इतीह न स्यात्? सत्यम्, **अभिधानात्।** अथवा अकृतद्विर्भाव एव पठ्यते यत्र द्विर्भावोऽस्ति तत्र निमित्ताभावे नैमित्तिकस्याप्यभावो भविष्यति। तथा च सति वाण्ट्-वांशाविति न्यायादेव सिध्यतीत्याह-नैमितिकस्याप्यभावो वेति॥९११।

[क० च०]

छ्वोः। अत्रापि चानुकृष्टत्वं प्रति पूर्वयुक्तिरनुसरणीयेति। **पञ्जिकायां 'चाले भवति कूष्माण्डं वधूमातुर्गले व्यथा'** अथैकस्यान्तरङ्गत्वात् कथमन्यस्य प्रवृत्तिरित्याह-कथमन्यथेति। अथ तथापि स्वयमसिद्धः कथं परान् साधयतीति, न चात्मीयलाभे आत्मीया बलवत्ता दृश्यते येनैवमुच्यते इत्याह-अथवेति। एतेन ऊटो नित्यत्वमतिरिक्तबलं वकारोऽत्रान्तस्थैव गृह्यते उच्चारणवशादिति। नैमित्तिकस्यापीति। अथ यदा पूर्वं द्विर्वचनं तदैव युक्तं परस्मिन् कृते का गतिः? सत्यम्, प्रायेण पूर्वत्रैव क्रियते इत्यभ्युपगमादुक्तम्॥९११।

[समीक्षा]

'प्रश्नः, गोविट्, अक्षद्यूः' इत्यादि शब्दों के सिद्ध्यर्थ छकार को शकार तथा वकार को ऊट्-ऊठ् दोनों ही व्याकरणों में किया गया है। पाणिनि का सूत्र है- "च्छ्वोः शूडनुनासिके च" (अ०६।४।१९)। अतः उभयत्र समानता है।

[विशेष वचन]

१. छान्दसत्वादनुनासिके धुड्ग्रहणेऽप्यदोषः इति (दु० टी०)।

२. चेक्रीयितलुगन्तस्य भाषायामप्रयोगात् (दु० टी०)।

३. तथापि मन्दमतिबोधनार्थमगुणाधिकार इति (दु० टी०)।

४. अन्येभ्योऽपि दृश्यन्ते इत्यनेनाभिधानात् सर्वधातुभ्यो मन्नित्यर्थः (वि० प०)।

५. तथापि स्वयमसिद्धः कथं परान् साधयतीति (क० च०)।

[रूपसिद्धि]

१. **गोविट्।** गो+विच्छ्+क्विप्+सि। 'गो' शब्द के उपपद में रहने पर 'विच्छ गतौ' (५।५६) धातु से क्विप् प्रत्यय, सर्वापहारी लोप, छकार को शकार तथा विभक्तिकार्य।

२. **पथिप्राट्।** पथि+प्रच्छ्+क्विप्+सि। पन्थानं पृच्छति। 'पथि' शब्द के उपपद में रहने पर 'प्रच्छ् ज्ञीप्सायाम्' (५।४९) धातु से क्विप् प्रत्यय आदि कार्य पूर्ववत्। "वचिप्रछि०" इत्यादि से दीर्घादेश।

३. **अक्षद्यूः।** अक्ष+दिव्+क्विप्+सि। अक्षैर्दीव्यति। 'अक्ष' के उपपद में रहने पर 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिषु' (३।१) धातु से क्विप् प्रत्यय, वकार को ऊट् तथा अन्य कार्य पूर्ववत्।

४. **पृष्टः।** प्रच्छ्+क्त+सि। 'प्रच्छ ज्ञीप्सायाम्' (५।४९) धातु से 'क्त' प्रत्यय, सम्प्रसारण तथा छकार को शकार आदि कार्य पूर्ववत्।

५. **पृष्ट्वा।** प्रच्छ्+क्त्वा+सि। 'प्रच्छ' धातु से 'क्त्वा' प्रत्यय, सम्प्रसारण तथा छकार को शकार आदि कार्य पूर्ववत्।

६. **द्यूतः।** दिव्+क्त+सि। - 'दिवु' धातु से 'क्त' प्रत्यय, वकार को ऊट् तथा अन्य कार्य पूर्ववत्।

७. **द्यूत्वा।** दिव्+क्त्वा+सि। 'दिव्' धातु से 'क्त्वा' प्रत्यय, वकार को ऊट् तथा अन्य कार्य पूर्ववत्।

८. **दुद्यूषति।** दिव्+सन्+अन्+ति। 'दिव्' धातु से सन् प्रत्यय, द्विर्वचनादि, वकार को ऊट् तथा धातुकार्य।

९. **विश्नः।** विच्छ्+नङ्+सि। 'विच्छ गतौ' (५।५६) धातु से "याचिविछिप्रछियजिस्वपिरक्षियतां नङ्" (४।५।६९) सूत्र द्वारा नङ् प्रत्यय, छकार को शकार तथा अन्य कार्य पूर्ववत्।

१०. **प्रश्नः।** प्रच्छ्+नङ्+सि। 'प्रच्छ ज्ञीप्सायाम्' (५।४९) धातु से नङ् प्रत्यय, छकार को शकार तथा अन्य कार्य पूर्ववत्।

११. **स्योमा।** सिव्+मन्+सि। 'षिवु तन्तुसन्ताने' (३।२) धातु से मन् प्रत्यय, वकार को ऊट्, इकार को यकार, गुणादेश तथा विभक्तिकार्य॥९११।

# ९१२. श्रिव्यविमविज्वरित्वरामुपधया [४।१।५७]

[सूत्रार्थ]

क्विप् प्रत्यय, अगुण धुडादि प्रत्यय अथवा पञ्चम वर्ण के परे रहते श्रिवु-अव्-मव्-ज्वर् तथा त्वर् धातुओं में विद्यमान वकार को उपधा के सहित ऊट् आदेश होता है।।९१२।

[दु० वृ०]

एषामुपधया सह वकारस्योड् भवति क्वौ धुट्यगुणे पञ्चमे च। श्रिवु - श्रूः, श्रुवौ, श्रुवः। अव् - ऊः, उवौ, उवः। मव् - मूः, मुवौ, मुवः। ज्वर्-जूः, जूरौ, जूरः। त्वर्-तूः, तूरौ, तूरः। श्रूतः, श्रूतवान्, श्रूतिः। ऊतिः, मूतिः, जूर्तिः, तूर्तिः। मन् - श्रोमा। अवतेरन्त्यस्वरादिलोपश्च—ओम् ।।९१२।

[दु० टी०]

श्रि०। छकार इह स्थानी नास्ति, शकारादेशो नानुवर्तते। गमेः क्विपीति-अग्रे गच्छतीति **अग्रेगूः**, अग्रेगुवौ। तदिहौणादिकत्वात् । **केचित्** 'जाजूर्तिः, तातूर्तिः' इत्यादिचेक्रीयितलुगन्तमुदाहरन्ति। उपधायाश्चेति **पठन्त्येके। 'असिद्धं बहिरङ्गमन्तरङ्गे'** (का० परि० ३३) इत्यस्यानित्यत्वाभ्युपगमाद् दीर्घात् परलोपादयोऽपि स्युरेव। यथा - ---- मिति यत्वं भविष्यति पूर्वसूत्रे तथा च प्रक्रियागौरवं नापि लाघवमिति।।९१२।

[वि० प०]

श्रिव्यवि०। श्रोमेति। **''सर्वधातुभ्यो मन् ''** (कात० उ० ४।२८) इति मनि गुणे च रूपमिदम् । अवतेरन्त्यस्वरादिलोपश्चेति अवतेरुपधया सह वकारस्योट् गुणश्च। ततः परस्य मन्प्रत्ययस्य अन्भागो **रूढिवशाल्लुप्यते**।।९१२।

[समीक्षा]

'श्रूः, ऊः, श्रूतः, ऊतिः' इत्यादि शब्दरूपों के सिद्ध्यर्थ उपधा-वकार को ऊठ् (ऊट्) आदेश दोनों व्याकरणों में किया गया है। पाणिनि का सूत्र है — ''ज्वरत्वरश्रिव्यविमवामुपधायाश्च'' (अ० ६।४।२०)। अतः उभयत्र प्रायः समानता ही है।

[विशेष वचन]

१. केचित् जाजूर्तिः, तातूर्तिः इत्यादि चेक्रीयितलुगन्तमुदाहरन्ति (दु० टी०)।

२. तथा च प्रक्रियागौरवं नापि लाघवमिति (दु० टी०)।

[रूपसिद्धि]

१-३. **श्रूः, श्रुवौ, श्रुवः**। श्रिव् + क्विप् + सि, औ, जस् । 'श्रिव्'(?) धातु से क्विप् , सर्वापहारी लोप, इकार-वकार को ऊट् तथा विभक्तिकार्य।

४-६. **ऊः, उवौ, उवः**। अव् + क्विप् + सि, औ, जस् । 'अव पालने' (१।२०२) धातु से क्विप् प्रत्यय तथा अन्य कार्य पूर्ववत् ।

७-९. **मूः, मुवौ, मुवः।** मव् + क्विप् + सि, औ, जस् । 'मव बन्धने' (१।१६२) धातु से क्विप् प्रत्यय आदि कार्य पूर्ववत् ।

१०-१२. **जूः, जुवौ, जुवः।** ज्वर् + क्विप् + सि, औ, जस् । 'ज्वर रोगे' (१।५०१) धातु से क्विप् प्रत्यय आदि कार्य पूर्ववत् ।

१३-१५. **तूः, तूरौ, तूरः।** त्वर् + क्विप् + सि, औ, जस् । 'ञि त्वरा सम्भ्रमे' (१।५००) धातु से क्विप् प्रत्यय आदि कार्य पूर्ववत् ।

१६-१७. **श्रूतः, श्रूतवान् ।** श्रिव् + क्त, क्तवन्तु + सि। 'श्रिवु' धातु से क्त-क्तवन्तु प्रत्यय, प्रकृत सूत्र से इकार - वकार को ऊट् आदेश तथा विभक्तिकार्य ।

१८-२२. **श्रूतिः ऊतिः, मूतिः, जूर्तिः, तूर्तिः।** श्रिव् , अव्, मव्, ज्वर् , त्वर् + क्ति + सि। 'श्रिव् - अव् -मव् - ज्वर् - त्वर्' धातुओं से क्ति - प्रत्यय तथा अन्य कार्य पूर्ववत् ।

२३. **श्रोमा।** श्रिव् + मन् + सि। 'श्रिव् ' धातु से 'सर्वधातुभ्यो मन् '' (कात० उ० ४।२८) सूत्र द्वारा औणादिक 'मन्' प्रत्यय, प्रकृत सूत्र से इकार-वकार को ऊट्, ''नाम्यन्तयोर्धातुविकरणयोर्गुणः'' (३।५।१) से ऊकार को गुणादेश तथा विभक्तिकार्य।

२४. **ओम् ।** अव् + मन् + सि। 'अव पालने' (१।२०२) धातु से 'मन्' प्रत्यय, प्रकृत सूत्र द्वारा अकार-वकार को ऊट्, गुण तथा रूढिवश 'मन्' प्रत्यय में 'अन्' भाग का लोप॥९१२।

## ९१३. राल्लोप्यौ [४।१।५८]

**[सूत्रार्थ]**

क्विप् प्रत्यय, अगुण धुडादि प्रत्यय तथा पञ्चम वर्ण के परे रहते रेफपरवर्ती छकार तथा वकार का लोप होता है॥९१३।

**[दु० वृ०]**

रेफात् परौ छकार-वकारौ लोप्यौ भवतः क्वौ धुट्यगुणे पञ्चमे च। मुर्छा-मूः, मुरौ, मुरः। धुर्वी-धूः, धुरौ, धुरः। धूर्तः, धूर्तिः। मूर्तः, मूर्तिः। निष्ठानत्वं नेष्यते । इहागुणपञ्चमानुवृत्तिर्न प्रयोजयति॥९१३।

**[दु० टी०]**

रात्०। मूर्त्त इति। 'अपूमूर्च्छि०' इत्यादिनिषेधान्नत्वं न भवतीति। धूर्त्त इत्यत्र प्राप्नोतीत्याह निष्ठानत्वं नेष्यते इति **रूढिशब्दाः कृदन्ताः,** अतो न भवतीत्यर्थः।यदा तु विशिष्टार्थो न विवक्ष्यते तदा धूर्णः, धूर्णवानिति नत्वेन भवितव्यम् । इहेत्यादि। पूर्वोक्तया युक्त्याऽगुणाधिकारो न प्रयोजयतीत्यर्थः। ''**अन्येभ्योऽपि दृश्यन्ते**'' (४।३।६७) इति मन्प्रत्ययो नाभिधीयते इत्यर्थः॥९१३।

**[वि० प०]**

रात्०। अथ धूर्त इति। ''**रान्निष्ठातो नोऽपूमूर्च्छिमदिख्याध्याभ्यः**'' (४।६।१०१)

इति निष्ठातकारस्य नकारः कथं न स्यादित्याह-निष्ठानत्वं नेष्यते इति। **लोके** धूर्तशब्दस्य विशिष्टाभिधेयतया रुढित्वादिति भावः। यदा तु विशिष्टार्थविषयतया न विवक्ष्यते, तदा धूर्णः, धूर्णवानिति नत्वं स्यादेव। इहेत्यादि। अनन्तरो धुडादिर्गुणी न सम्भवतीत्यर्थादगुण एव गम्यते, तथा **"अन्येभ्योऽपि दृश्यन्ते"** (४।३।६७) इति दृशिग्रहणस्य प्रयोगानुसारार्थत्वान्मन्प्रत्ययो नाभिधीयते इति भावः। यत् पुनरुक्तम् अगुणे पञ्चमे चेति, तदधिकाराविच्छेदार्थमेव।।९१३।

**[क० च०]**

रात्०। इहेति **वृत्तिः**। ननु युजेर्हेताविनि कृते व्याप्यत्वादगुणपञ्चम्यनुवृत्तिः, द्वितीयैव युक्ता कथं प्रथमा? सत्यम् , **'युज पृच संयमने'** (९।२६०) इत्यस्य चौरादिकस्य रूपमिदम्, **तेनायमर्थः** अगुणपञ्चमानुवृत्तिर्न प्रयोजयति, न प्रयोजनवतीत्यर्थः।।९१३।

**[समीक्षा]**

'मूः, मुरौ, धूः, मूर्त्तः', इत्यादि शब्दों के सिद्ध्यर्थ रेफ से उत्तरवर्ती छकार-वकार का लोप दोनों ही व्याकरणों में किया गया है। पाणिनि का सूत्र है— "राल्लोपः" (अ०६।४।२१)। अतः उभयत्र समानता ही है।

**[विशेष वचन]**

१. इहागुणपञ्चमानुवृत्तिर्न प्रयोजयति (दु० वृ०)।

२. लोके धूर्तशब्दस्य विशिष्टाभिधेयतया रूढित्वादिति भावः (वि० प०)।

**[रूपसिद्धि]**

१. **मूः**। मुर्छा + क्विप् + सि।'मुर्छा मोहसमुच्छ्राययोः' (१।५८) धातु से क्विप् प्रत्यय, सर्वापहारी लोप, प्रकृत सूत्र से छकारलोप, लिङ्गसंज्ञा, सि प्रत्यय, उसका लोप, "इरुरोरीरूरौ" (२।३।५२) से 'ऊर्' आदेश तथा रेफ को विसर्गादेश।

२-३. **मुरौ, मुरः**। मुर्छा + क्विप् + औ, जस् । 'मुर्छा' धातु से क्विप् प्रत्यय, सर्वापहारी लोप, छकारलोप तथा विभक्तिकार्य।

४-६. **धूः धुरौ, धुरः**। धुर्वी + क्विप् + सि, औ, जस् । 'धुर्वी हिंसार्थः' (१।१९४) धातु से क्विप् प्रत्यय आदि कार्य पूर्ववत् ।

७-८. **धूर्त्तः, धूर्त्तिः**। धुर्वी + क्त, क्ति + सि। 'धुर्वी' धातु से 'क्त-क्ति' प्रत्यय, वकारलोप, ऊर्-आदेश तथा विभक्तिकार्य।

९-१०. **मूर्त्तः, मूर्त्तिः**। मुर्छा + क्त, क्ति + सि। 'मुर्छा' धातु से 'क्त-क्ति' प्रत्यय, छकारलोप, 'ऊर्' आदेश तथा विभक्तिकार्य।।९१३।

## ९१४. वनतितनोत्यादिप्रतिषिद्धेटां धुटि पञ्चमोऽच्चातः [४।१।५९]

**[सूत्रार्थ]**

अगुण धुडादि प्रत्यय के परे रहते वन् धातु, तनादिगणपठित धातु तथा जिनसे

इडागम का निषेध किया गया है- ऐसी धातुओं के पञ्चम वर्ण का लोप होता है एवं यथासम्भव आकार को अकारादेश भी होता है।।९१४।

[दु० वृ०]

वनतेस्तनोत्यादेः प्रतिषिद्धेटश्च पञ्चमो लोप्यो भवति धुट्यगुणे यथासम्भवम् आतश्चाद् भवति। वन् - वतिः। तनोत्यादि मनु बोधनेपर्यन्तः। तनु-ततः, ततवान् , ततिः, तत्वा। प्रतिषिद्धेटश्च हतः, हतवान् । यतः, यतवान् । 'ऋणु, घृणु, तृणु' एषां न दीर्घः, **संज्ञापूर्वकत्वात्**-ऋतम्, घृतम्, तृतमिति। पक्षे येषामिडस्ति, तेऽप्यनिट उच्यन्ते।।९१४।

[दु० टी०]

वन०। ऋणु इत्यादि। 'पञ्चमोऽच्चातः' **इत्यन्वाचयशिष्टो**ऽयं चकारः। **'प्रकृतेः पूर्वं पूर्वं स्यादन्तरङ्गम्'** (का० परि० ७१) इति पञ्चमोपधाया दीर्घत्वे बहिरङ्गः पञ्चमलोपः इत्यद्भाव उच्यते । तिब्निर्देशः **श्चेक्रीयितलुगन्तनिवृत्त्यर्थः, अभिधानाद् भाषायामपि** दृश्यते-वंवान्तः, तंतान्तः। अन्यत्र **न** भवति-यंयतः, मंमतः, रंरतः, जङ्घतः। अगुण इति किम् ? हन्ता, यन्ता।।९१४।

[वि० प०]

वनति०। **'प्रकृतेः पूर्वं पूर्वं स्यादन्तरङ्गम्'** (का० परि० ७१) इति पञ्चमलोपादन्तरङ्गत्वात् प्राक् **''पञ्चमोपधाया धुटि चागुणे''** (४।१।५५) इति दीर्घत्वे सत्याकारस्य स्थितिरेव प्राप्नोतीत्यद्भाव उच्यते। चकारो**ऽन्वाचयशिष्ट** इत्याह-यथासम्भवमातश्चाद् भवति इति। अनिड्ग्रहणादेव सिद्धे प्रतिषिद्धेड्ग्रहणं ज्ञापयति-विकल्पेटोऽप्यनिट इत्याह - पक्ष इत्यादि। तेन सण्-प्रत्ययविधौ **'गुहू संवरणे'** (१।५९५) इत्यूदनुबन्धत्वाद् विकल्पेटोऽप्यनिट्त्वे सति सिद्धम् अघुक्षदिति। **मतान्तरमेतत्** । अनेन पुनस्तत्र सणं प्रति **युक्तिरुक्तैव**। यथा गुहूरनिडेकपक्ष इति। प्रतिषिद्धेड्ग्रहणमिह **सुखार्थमेव**।।९१४।

[क० च०]

वनति०। ननु **'द्वन्द्वात् परं श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते'** (है० पा० १३७) इति न्यायात् 'वनत्यादितनोत्यादि' इति प्रत्येकमादिशब्दसम्बन्धः कथं न स्यात्? सत्यम् । मीनात्यादिसूत्रे आदिद्वयोपादानात् प्रत्येकमभिसम्बन्धोऽस्य व्यभिचरतीत्युक्तमेव। यद् वा वनत्यादिग्रहणे प्रतिषिद्धेड्ग्रहणं भविष्यति तदा प्रतिषिद्धेटामिति व्याप्तिवचनमनर्थकम् । हनमनामित्युक्तेऽप्यभिमतं सिध्यतीति यमादीनां प्रतिषिद्धेटां वनत्यादित्वादेव सिद्धे तस्मात् प्रतिषिद्धेड्ग्रहणात् तनोतीत्यनेनैवादिसम्बन्धः। वनतिप्रतिषिद्धेट्तनोत्यादीनामित्यपि न कृतम् - **'विचित्रा हि सूत्रस्य कृतिः'** इति। वतिरित्येव **वृत्तौ** पाठः। अणवणरणेत्यादि**दण्डक**पठितस्य वनेर्ग्रहणात् । 'वतः, वतवान्' इति **पाठस्तु अशुद्ध एव, दण्डक**पठितस्य वनेः क्तेरन्यस्मिन् परतः इटोऽभावात् ।

विद्यासागरोऽप्याह—वनतेः क्ताववेवानिडिति न्यासः। अथ दण्डकपठितस्य वनेर्ग्रहणे किं मानम् ? **'वनु च नोच्यते'** (१।५१८) इत्यस्य घटादिपठितस्य ग्रहणं कथं न स्यात्, अत एव 'वनु-वतः' इत्यादिपाठो दृश्यते **क्वचित् पुस्तकान्तरे**। अस्य तु निष्ठायां वाऽनिट्त्वमस्ति, नैवम्। **'वनु याचने'** (७।८)। 'वान्तः, वान्तवान्' इति **धातुप्रदीपे** उदाहृतत्वात्। **'निरनुबन्धग्रहणे न सानुबन्धकस्य'** (का० परि० ४८) इति न्यायेन वनेरग्रहणात्। तस्माद् **अस्मन्मतेऽपि 'क्षिष् हिंसायाम्'** (८।३०) इति लाक्षणिकत्वादिति यथोक्तं तद्वदत्रापि। **पञ्जिका**—आकारस्यापि स्थितिः स्याद् इति। ननु **'निमित्ताभावे नैमित्तिकस्याप्यभावः'** (का० परि० २७) इति न्यायादेव न भविष्यति। नैवम्, इदमेव ज्ञापयति-क्वचिन्निमित्ताभावे नैमित्तिकस्य स्थितिरिति। यथा पितुरभावे पुत्रस्य स्थितिरिति।

यद् वा **'लोपस्वरादेशयोः स्वरादेशो विधिर्बलवान्'** (का० परि० ३५) इति ज्ञापनान्न भविष्यति। तथा ध्याप्योरित्यत्र **टीकायामुक्तम्**-तथा चेत्यादि। प्रतिषिद्धेड्ग्रहणं ज्ञापयति—एतेन प्रतिषिद्धेड्ग्रहणाद् धुटि सर्वथाऽनिटामेवात्र ग्रहणम्। तेन 'शान्तः, शान्तवान्' इति क्विप्, विकल्पेटो ग्रहणमिति न भवति। अथ यदि **स्वमते** प्रतिषिद्धेड्ग्रहणं **सुखार्थम्**, तदा 'शान्तः, शान्तवान्' इत्यत्रानिट्त्वान्न भवति, कथं 'पञ्चमलोपोऽच्चातः' इति। तथा वनतिग्रहणमप्यनर्थकम्, अनिट्त्वादेव क्तौ सिद्धं वतिरिति। क्तौ पञ्चम्यन्तानां सर्वेषां पञ्चमलोपोऽच्चातः स्यात् **''घोषवत्योश्च कृति''** (४।६।८०) इत्यनेनानिट्त्वान्नैव दोषः। तनोत्यादिग्रहणं ज्ञापयति—उदनुबन्धत्वादनिटामत्र न ग्रहणम्, अन्यथा अनिट्त्वादेव सिद्धम्, किं तनोत्यादिग्रहणेन। तेन 'शान्तः, शान्तवान्' इत्यादौ न दोषः। यच्चोक्तं वनतिग्रहणमनर्थकमिति, तत्रापीयं सङ्गतिः-**''घोषवत्योश्च कृति''** (४।६।८०) इत्यनिटि सति नान्तानां मध्ये वनतेरेवेति नियमे न दोषः। युक्तिरुक्तैवेति। यस्मिन् पक्षे इड् नास्ति तस्मिन् बुद्धिमारोप्यानिट इत्येषा युक्तिः॥९१४।

**[समीक्षा]**

'रतः, रतिः, वतिः, ततिः, यतिः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों व्याकरणों में धात्वन्तवर्ती वर्गीय पञ्चम वर्ण का लोप किया गया है। पाणिनि का सूत्र है—''अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति'' (अ० ६।४।३७)। अतः उभयत्र समानता ही है।

**[विशेष वचन]**

१. पक्षे येषामिडस्ति, तेऽप्यनिट उच्यन्ते (दु० वृ०)।

२. पञ्चमोऽच्चातः इत्यन्वाचयशिष्टोऽयं चकारः (दु० टी०)।

३. प्रतिषिद्धेड्ग्रहणम् इह सुखार्थमेव (वि० प०;क० च०)।

[रूपसिद्धि]

१. **वतिः**। वन् + क्ति + सि। 'वनु च नोच्यते' (१।५१८) धातु से 'क्त' प्रत्यय, "पञ्चमोपधाया धुटि चागुणे" (४।१।५५) से दीर्घ, प्रकृत सूत्र द्वारा नकारलोप-आकार को अकार तथा विभक्तिकार्य।

२-३. **ततः, ततवान्**। तन् + क्त, क्तवन्तु + सि। 'तनु विस्तारे' (७।१) धातु से 'क्त-क्तवन्तु' प्रत्यय, दीर्घ, नलोप-अकार तथा विभक्तिकार्य।

४-५. **ततिः, तत्त्वा**। तन् + क्ति, क्त्वा + सि। 'तन्' धातु से 'क्ति-क्त्वा' प्रत्यय, दीर्घ, नलोप-अकारादेश तथा विभक्तिकार्य।

६-७. **हतः, हतवान्**। हन् + क्त, क्तवन्तु + सि। 'हन हिंसागत्योः' धातु से 'क्त-क्तवन्तु' प्रत्यय तथा अन्य कार्य पूर्ववत् ।

८-९. **यतः, यतवान्**। यम् + क्त, क्तवन्तु + सि। 'यम उपरमे' (१।१५८) धातु से 'क्त-क्तवन्तु' प्रत्यय तथा अन्य कार्य पूर्ववत्।

१०-१२. **ऋतम्, घृतम्, तृतम्**। 'ऋणु गतौ' (७।४), 'घृणु दीप्तौ' (७।६), 'तृणु अदने' (७।५) धातुओं से 'क्त' प्रत्यय, प्रकृत सूत्र द्वारा णकारलोप तथा विभक्तिकार्य।।९१४।

## ९१५. यपि च [४।१।६०]

[सूत्रार्थ]

'यप्' प्रत्यय के परे रहते वन् - तन् इत्यादि तथा प्रतिषिद्धेट् धातुगत पञ्चम वर्ण का लोप होता है।।९१५।

[दु० वृ०]

वनतेस्तनोत्यादेः प्रतिषिद्धेटश्च यपि परे पञ्चमो लोप्यो भवति। वन् - प्रवत्य। तनु-प्रतत्य। षणु-प्रसत्य। हन् - प्रहत्य। मन् - प्रमत्य। एषामिति किम् ? प्रभण्य।।९१५।

[क० च०]

यपि। पूर्वत्र धुड्यपोरिति कृते वा म इत्यत्र धुटोऽप्यनुवृत्तिः स्यात्, ततोऽपि 'यतः, यतवान्' इत्यत्रापि विभाषया धुटि मलोपः स्याद् इत्यत आह—पृथग्योग उत्तरार्थ इति **हेमकरः**।।९१५।

[समीक्षा]

'आहत्य, प्रमत्य, प्रवत्य' इत्यादि शब्दों के सिद्ध्यर्थ नलोप का विधान दोनों ही व्याकरणों में किया गया है। पाणिनि का सूत्र है— "वा ल्यपि" (अ० ६।४।३८)। यहाँ यह ज्ञातव्य है कि पाणिनि ने सामान्यतया नकारान्त-मकारान्त धातुओं में वैकल्पिक लोपनिर्देश किया है, परन्तु व्याख्याकारों के अनुसार यहाँ व्यवस्थित विभाषा माने जाने के कारण केवल मकारान्त धातुओं में ही वैकल्पिक विधान प्रवृत्त होता है तथा नकारान्त धातुओं में नित्य ही नलोप समझना चाहिए। कातन्त्रकार ने

स्पष्टावबोधहेतु दो सूत्र पृथक् पृथक् बनाए हैं। अतः पाणिनीय निर्देश में ज्ञानगौरव तथा कातन्त्र में लाघव स्पष्ट निहित है।

**[विशेष वचन]**

१. पृथग्योग उत्तरार्थ इति हेमकरः (क० च०)।

**[रूपसिद्धि]**

१. **प्रवत्य।** प्र + वन् + यप् + सि। 'प्र' उपसर्गपूर्वक 'वनु याचने'(७।८) धातु से क्त्वा प्रत्यय, समास में यप् आदेश, प्रकृत सूत्र से नलोप तथा विभक्तिकार्य।

२. **प्रतत्य।** प्र + तनु + यप् + सि। 'प्र' उपसर्गपूर्वक 'तनु विस्तारे' (७।१) धातु से 'क्त्वा' प्रत्यय आदि कार्य पूर्ववत् ।

३. **प्रसत्य।** प्र + षणु + यप् + सि। 'प्र' उपसर्गपूर्वक 'षणु दाने' (७।२) धातु से क्त्वा-प्रत्यय आदि कार्य पूर्ववत् ।

४. **प्रहत्य।** प्र + हन् + यप् + सि। 'प्र' उपसर्गपूर्वक 'हन् हिंसागत्योः' (२।४) धातु से 'क्त्वा' प्रत्यय आदि कार्य पूर्ववत् ।

५. **प्रमत्य।** प्र + मन् + यप् + सि। 'प्र' उपसर्गपूर्वक 'मनु बोधने' (७।९) धातु से क्त्वा प्रत्यय आदि कार्य पूर्ववत् ॥९१५।

## ९१६. वा मः [४।१।६१]

**[सूत्रार्थ]**

जिन धातुओं में इडागम का प्रतिषेध किया गया है, ऐसी धातुओं में मकार का लोप विकल्प से प्रवृत्त होता है॥९१६।

**[दु० वृ०]**

प्रतिषिद्धेटां वा मकारो लोप्यो भवति यपि परे। प्राप्ते विभाषा। प्रयत्य, प्रयम्य। प्रणत्य, प्रणम्य॥९१६।

**[दु० टी०]**

वा मः। वनतितनोत्यादेर्मकारो नास्तीत्याह-प्रतिषिद्धेटामिति। प्रतिषिद्धेटो मकारान्तस्य पञ्चमो वा लोप्य इति सूत्रार्थः॥९१६।

**[वि० प०]**

वा०। प्रतिषिद्धेटामिति। वनतितनोत्याद्योर्मकारस्यासम्भवादित्यर्थः॥९१६।

**[क० च०]**

वा०। अम्धातोः पञ्चमस्य लोपो भवतीत्यर्थः कथं न स्यात् , नैवम् । सन्धौ यत् क्रियते तदेव प्रमाणम् इति श्रुतस्य मकारस्य लोपो व्याप्तिन्यायाद् वा। ननु प्रणत्येत्यत्र पञ्चमलोपे धातोरेकदेशलुप्तत्वात् कथं तकारागमः "**प्रत्ययलुकां चानाम्**" (४।१।४) इति प्रतिषेधात्? सत्यम् । तत्रैकदेशे लुप्तस्यादेशसादृश्ये यत्र धात्वेकदेशे लुप्ते आदेशं प्राप्नोति तत्रैव निषेधः। अत्र तु तकारागम इति कुतस्तस्य विषयः॥९१६।

[समीक्षा]

पूर्ववर्ती सूत्र-संख्या ९१५ की समीक्षा द्रष्टव्य।

[रूपसिद्धि]

१. **प्रयत्य, प्रयम्य**। प्र + यम् + यप् + सि। 'प्र' उपसर्गपूर्वक 'यम उपरमे' (१।१५८) धातु से 'क्त्वा' प्रत्यय, यप् आदेश, प्रकृत सूत्र द्वारा वैकल्पिक मकारलोप, तकारागम तथा विभक्तिकार्य-प्रयत्य। मकारलोपाभावपक्ष में प्रयम्य।

२. **प्रणत्य, प्रणम्य**। प्र + नम् + यप् + सि। 'प्र'उपसर्गपूर्वक 'णम प्रह्वत्वे शब्दे च' (१।१५९) धातु से 'क्त्वा' प्रत्यय आदि कार्य पूर्ववत् ।।९१६।

## ९१७. न तिकि दीर्घश्च [४।१।६२]

[सूत्रार्थ]

'तिक्' प्रत्यय के परे रहते वन् धातु-तन् इत्यादि धातु तथा प्रतिषिद्धेट् धातुओं में दीर्घादेश-पञ्चम वर्णलोप आदेश नहीं होते हैं।।९१७।

[दु० वृ०]

वनतितनोत्यादेः प्रतिषिद्धेटां तिकि दीर्घो न भवति न च पञ्चमो लोप्यो भवति। वन्यात्-वन्तिः। तन्यात्-तन्तिः। यम्यात्-यन्तिः। वध्यात् - हन्तिः।।९१७।

[दु० टी०]

न ति०। पञ्चमलोपप्रतिषेधे **"पञ्चमोपधाया धुटि चागुणे"** (४।१।५५) इति दीर्घः प्राप्नोति, सोऽपि प्रतिषिध्यते।।९१७।

[समीक्षा]

'यन्तिः, तन्तिः, हन्तिः, वन्यात्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में पञ्चमवर्णलोप तथा दीर्घादेश का निषेध किया गया है। पाणिनि का सूत्र है-"न क्तिचि दीर्घश्च" (अ० ६।४।३९)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. **वन्तिः**। वन् + तिक् + सि। 'वन शब्दे' (१।१४६) धातु से आशीर्वाद अर्थ की विवक्षा में "तिक्कृतौ सञ्ज्ञायामाशिषि" सूत्र से 'तिक्' प्रत्यय, 'क्' अनुबन्ध का प्रयोगाभाव, प्रकृत सूत्र से नलोप का निषेध तथा विभक्तिकार्य ।

२-४. **तन्तिः, यन्तिः, हन्तिः**। तन् + तिक् + सि, यम् + तिक् + सि, हन् + तिक् + सि। 'तनु विस्तारे, यम उपरमे, हन् हिंसागत्योः' (७।१;१।१५८;२।४) धातुओं से तिक् प्रत्यय आदि कार्य पूर्ववत् ।।९१७।

## ९१८. उन्देर्मनि [४।१।६३]

[सूत्रार्थ]

'मन्' प्रत्यय के परे रहते 'उन्दी' धातुघटित पञ्चम वर्ण नकार का लोप होता है।।९१८।

[दु० वृ०]

उन्देर्मनि पञ्चमो लोप्यो भवति। ओद्म, ओद्मनी॥९१८।

[समीक्षा]

'ओद्म' शब्दरूप के सिद्ध्यर्थ 'उन्दी' धातुगत नकार के लोप का विधान दोनों व्याकरणों में देखा जाता है। पाणिनि ने नलोप तथा गुण का निर्देश निपातन से किया है, जबकि कातन्त्र में साक्षात् नकारलोप का विधान है। पाणिनि का सूत्र है— "अवोदैधौद्मप्रश्रथहिमश्रथाः" (अ०६।४।२९)। पाणिनीय निपातनविधि की अपेक्षा कातन्त्रीय नलोपविधान अधिक सौकर्याधायक कहा जा सकता है।

[रूपसिद्धि]

१. **ओद्म**। उन्दी + मन् + सि। 'उन्दी क्लेदने' (६।१६) धातु से "सर्वधातुभ्यो मन्" (कात० उ० ४।२८) सूत्र द्वारा 'मन्' प्रत्यय, प्रकृत सूत्र से नलोप, गुण तथा विभक्तिकार्य।

२. **ओद्मनी**। उन्दी + मन् + औ - नपुंसकलिङ्ग। 'उन्दी' धातु से मन् प्रत्यय, नलोप, लिङ्गसंज्ञा, नपुंसकलिङ्ग में प्रथमाविभक्ति-द्विवचन 'औ' प्रत्यय तथा "औरीम्" (२।२।९) से औकार को ईकार॥९१८।

## ९१९. घञीन्धेः [४।१।६४]

[सूत्रार्थ]

'घञ्' प्रत्यय के परे रहते 'ञि इन्धी दीप्तौ' (६।२२) धातु- घटित नकार का लोप होता है॥९१९।

[दु० वृ०]

इन्धेर्घञि पञ्चमो लोप्यो भवति। एधः ॥९१९।

[समीक्षा]

'एधः' शब्द के सिद्ध्यर्थ इन्धीधातुगत नकार का लोप दोनों ही व्याकरणों में किया गया है। अन्तर यह है कि पाणिनि निपातन से नलोप करके 'एध' शब्द सिद्ध करते हैं, जब कि कातन्त्र में इसके लिए स्वतन्त्र सूत्र द्वारा साक्षात् विधान किया गया है। पाणिनि का सूत्र है—"अवोदैधौद्मप्रश्रथहिमश्रथाः" (अ०६।४।२९)। अतः पाणिनीय निपातनविधि में गौरव एवं कातन्त्रीय साक्षात् विधान में लाघव स्पष्ट प्रतीत होता है।

[रूपसिद्धि]

१. **एधः**। इन्ध् + घञ् + सि। 'ञि इन्धी दीप्तौ' (६।२२) धातु से भाव अर्थ में "भावे" (४।५।३) सूत्र द्वारा 'घञ्' प्रत्यय, प्रकृत सूत्र से नलोप, गुणादेश तथा विभक्तिकार्य॥९१९।

## ९२०. स्यदो जवे [४।१।६५]

[सूत्रार्थ]

'घञ्' प्रत्यय के परे रहते वेग अर्थ के गम्यमान होने पर 'स्यन्दू' धातु से 'स्यद' रूप निपातनद्वारा दीर्घाभाव होकर सिद्ध होता है॥९२०।

[दु० वृ०]

स्यन्देर्घञि 'स्यदः' इति दीर्घाभावो निपात्यते वेगेऽर्थे। स्यदः। अवोदहिमश्रथप्रश्रथाश्च निपातयितव्याः। अवपूर्वस्य उन्देः-अवोदः। हिमपूर्वस्य च श्रन्थेः—हिमश्रथः, प्रश्रथः॥९२०।

[दु० टी०]

स्यद०। वेगेऽभिधेये इत्यर्थः। वेग इति किम् ? तैलस्यन्दः, घृतस्यन्दः। हिमश्रथादयो हि **छान्दसा** इति **नैयासिकानां** मतम् । तदिह प्रमाणम्, **मतान्तरं वृत्तौ** दर्शितमिति भावः॥९२०।

[वि० प०]

स्यदः। अवोद इत्यादि। **मतान्तरमिदम्** । एते हि **छान्दसा** इति **नैयासिकास्तदिह** प्रमाणमिति॥९२०।

[क० च०]

स्यद०। दीर्घाभाव इति। ननु 'स्यदः' इति द्वौ निपातनीयौ नलोपो दीर्घाभावश्च। नहि घञि नलोपार्थं सूत्रान्तरमस्ति? सत्यम् । दीर्घाभावो मुख्यत्वेन निपातनीयः। 'स्यन्देर्जवे' इत्युक्तेऽपि लोपस्य सिद्धत्वात्, अतो दीर्घाभाव इत्युक्तम्। यद् वा दीर्घाभावग्रहणेन नलोपमपि उक्तवान् इति। अन्यथा यदि नलोपो नास्ति, तदाऽनुपधत्वाद् दीर्घोऽपि नास्ति। कुतस्तस्याभाव इति वक्तुमुचितम् इत्यध्याहारेणान्वय इति **केचित्** ॥९२०।

[समीक्षा]

'स्यदः, गोस्यदः, अश्वस्यदः' आदि शब्दरूपों के सिद्ध्यर्थ नलोप दोनों ही व्याकरणों में निपातन से विहित है। पाणिनि का सूत्र है—"स्यदो जवे" (अ०६।४।२८)। अतः उभयत्र समानता ही है।

[विशेष वचन]

१. हिमश्रथादयो हि छान्दसा इति नैयासिकानां मतम् (दु०टी०;वि०प०)।

[रूपसिद्धि]

१. **स्यदः**। स्यन्द् + घञ् + सि। 'स्यन्दू स्रवणे' (१।४८७) धातु से घञ् प्रत्यय, 'घ् - ञ्' अनुबन्धों का प्रयोगाभाव, नलोप, दीर्घाभाव तथा विभक्तिकार्य॥९२०।

## ९२१. रञ्जेर्भावकरणयोः [४।१।६६]

[सूत्रार्थ]

भाव तथा करण अर्थ में विहित 'घञ्' प्रत्यय के परे रहते 'रन्ज रागे' (१।६०५) धातुघटित पञ्चम वर्ण नकार का लोप होता है॥९२१।

[दु० वृ०]

रञ्जेर्भावकरणयोर्विहिते घञि पञ्चमो लोप्यो भवति। रञ्जनं रागः। रज्यतेऽनेनेति **रागः**। भावकरणयोरिति किम् ? रजत्यस्मिन्निति **रङ्गः**॥९२१।

[समीक्षा]

भाव-करण अर्थ में 'रन्ज्' धातु से 'रागः' शब्द के सिद्ध्यर्थ नलोप का विधान दोनों ही व्याकरणों में किया गया है। पाणिनि का सूत्र है—"घञि च भावकरणयोः" (अ० ६।४।२७)। अतः प्रायः उभयत्र समानता ही है।

[रूपसिद्धि]

१. **रागः**। रन्ज् + घञ् + सि। रञ्जनम्, रज्यतेऽनेन। 'रन्ज रागे' (१।६०५) धातु से घञ् प्रत्यय, इज्वद्भाव, नलोप "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधादीर्घ, "चजोः कगौ०" (४।६।५६) से जकार को गकार, लिङ्गसंज्ञा, प्रथमा-एकवचन 'सि' प्रत्यय तथा "रसकारयोर्विसृष्टः" (३।८।२) से सकार को विसर्ग आदेश॥९२१।

# ९२२. वुष्-घिणिनोश्च [४।१।६७]

[सूत्रार्थ]

'वुष्' तथा 'घिणिन्' प्रत्यय के परे रहते 'रञ्ज्' धातुगत पञ्चम वर्ण नकार का लोप होता है॥९२२।

[दु० वृ०]

रन्जेर्वुषि घिणिनि च पञ्चमो लोप्यो भवति। "**शिल्पिनि वुष्**" (४।२।६१) रजकः, रजकी। "**युजभज०**" (४।४।२२) इत्यादिना घिणिन् — रागी। **चकारोऽनुक्त-समुच्चयार्थः**। तेन युटि च रजनम्, रजनी ॥९२२।

[दु० टी०]

वुष्०। रजनम्, रजनीति। यदा रजनमित्युणादयो व्युत्पन्ना एव गृह्यन्ते, तदा **त्वयमुक्तसमुच्चये चकारः**॥९२२।

[समीक्षा]

'रजकः, रागी' इत्यादि प्रयोगों के सिद्ध्यर्थ दोनों ही व्याकरणों में नलोप की व्यवस्था की गई है। अन्तर यह है कि पाणिनि ने एतदर्थ सूत्र नहीं बनाया है, परन्तु काशिकावृत्तिकार ने तदर्थ दो वार्त्तिक वचन पढ़े हैं—"घिनुणि च रञ्जेरुपसंख्यानं कर्तव्यम्, रजकरजनरजःसूपसंख्यानं कर्तव्यम्" (का० वृ० ६।४।२४-वा०)। जबकि कातन्त्र में इसका साक्षात् सूत्र द्वारा विधान है। अतः कातन्त्रीय प्रक्रिया में सरलता सन्निहित है।

[विशेष वचन]

१. चकारोऽनुक्तसमुच्चयार्थः (दु० वृ०)।

२. उणादयो व्युत्पन्ना एव गृह्यन्ते (दु० टी०)।

[रूपसिद्धि]

१. **रजकः, रजकी**। रन्ज् + वुष् - अक - सि। 'रन्ज रागे' (१।६०५) धातु से "शिल्पिनि वुष्" (४।२।६१) सूत्र द्वारा 'वुष्' प्रत्यय, 'ष्' अनुबन्ध का प्रयोगाभाव,

"युवुझाम्नाकान्ता:" (४।६।५४) से 'वु' को 'अक' आदेश, प्रकृत सूत्र से नकारलोप, 'ष्' अनुबन्ध नदाद्यर्थ, अत: स्त्रीलिङ्ग में 'ई' प्रत्यय तथा विभक्तिकार्य ।

२. रागी। रन्ज् + घिणिन् + सि। 'रन्ज्' धातु से "युजभजभुजद्विष०" (४।४।२२) इत्यादि सूत्र द्वारा 'घिणिन्' प्रत्यय, इज्वद्भाव, नलोप, "अस्योपधाया दीर्घो०" (३।६।५) से उपधादीर्घ, "चजो: कगौ" (४।६।५६) से जकार को गकार, लिङ्गसंज्ञा तथा विभक्तिकार्य।।९२२।

## ९२३. बृंहे: स्वरेऽनिटि वा [४।१।६८]

[सूत्रार्थ]

इडागमभिन्न स्वरादि प्रत्यय के परे रहते 'बृन्ह्' धातु में पञ्चम वर्ण नकार का लोप विकल्प से होता है।।९२३।

[दु० वृ०]

बृंहे: स्वरादावनिटि पञ्चमो लोप्यो भवति वा। बर्हक:, बृंहक:। बर्हणम्, बर्हति, बृंहति। अनिटीति किम्? बृंहितव्यम् । स्वर इति किम् ? बृंहेर्मन् दृश्यते। परिबृंह्या, परिबृण्ढ:। स्त्रियां क्ति:। कथं बृह्यते, बृंह्यते। बर्हिता, बृंहिता? येषां मते प्रकृत्यन्तरमस्ति, तेषां मते व्यञ्जनादाविट्यपि स्यात् ।।९२३।

[दु० टी०]

बृंहे:। बृंहतिरयमिदनुबन्धस्तस्य सर्वत्र नकारश्रवणे स्वरादावनिटि पञ्चमलोप आरभ्यते। कथमित्यादि। बृहिरनिदनुबन्ध: प्रकृत्यन्तरमित्यर्थ:। **अन्य** आह-सत्यपि प्रकृत्यन्तरे त्विनि बृंहयतीति भवितव्यम् । स्वरादौ तु नेष्यते इति भाव:। **अपरे** द्वौ धातू पठन्ति—**'बृह बृहि वृद्धौ"** (बृहि वृद्धौ, बृहिर् शब्दे च (१।२४७,२४८), तेषां **धातुपारायणेन** विरोध:। तस्मात् **सूत्रकारमत**मेव न्याय्यम् । तथा च **श्रुतपालो**ऽप्याह- 'बृहयतीत्येतत् क्वचिदपि मा भूदित्युपसंख्यायते'।।९२३।

[वि० प०]

बृंहे:। **बृहि वृद्धौ** (१।२४७) इतीदनुबन्ध:। कथमित्यादि। अनिदनुबन्ध: प्रकृत्यन्तरमस्तीति भाव:।।९२३।

[क० च०]

बृंहे:। **पञ्जिका**-अनिदनुबन्ध इत्यादि। नन्वस्य मते धातुद्वयेन रूपद्वयस्य सिद्धत्वाद् अनर्थकमिदं वचनम् । तत्राह **कश्चित्** - अस्य मते सूत्रं नास्ति कुतस्तस्याभाव: इति, तत् तुच्छम्। सूत्राभावे बर्हा इति प्रयोगो न स्यात् । न च वक्तव्यम् । बृंहेरनिदनुबन्धस्योदाहरणम्, गुरुमत्त्वाभावाद् अप्रत्ययस्यानुपपत्तेस्तस्माद् बृहेरिदनुबन्धस्य तत् सिध्यति, एतच्च वचनमन्तरेण न स्यात् । तथा च **वररुचि:**—

**बृंहबृह्योरमी साध्या बृंहबर्हादयो यदि।**
**तदा सूत्रेण वैयर्थ्यं न बर्हा भावके स्त्रियाम् ।।इति।**

किन्तु अस्य मतेऽनिटीत्यनर्थकं न सूत्रम् ।।९२३।

[समीक्षा]

'बृन्ह्' धातु के शब्दरूप 'बर्हकः, बर्हणम्' आदि के सिद्ध्यर्थ उपधासंज्ञक नकार का लोप करना आवश्यक होता है। इसका कातन्त्रकार ने तो साक्षात् सूत्रनिर्देश करके सुगमता प्रस्तुत की है, परन्तु पाणिनीय निर्देश साक्षात् रूप में ऐसा प्राप्त नहीं है। "अनिदितां हल उपधायाः क्ङिति" (अ०६।४।२४) से नलोप किया जा सकता है, परन्तु उससे नलोप वैकल्पिक नहीं होता हैं, इस विषय में वररुचि-श्रुतपाल आचार्य के मत भी प्रस्तुत किए गए हैं।

[विशेष वचन]

१. तस्मात् सूत्रकारमतमेव न्याय्यम् (दु० टी०)।

२. तत्राह कश्चित् - अस्य मते सूत्रं नास्ति (क० च०)।

[रूपसिद्धि]

१. **बर्हकः, बृंहकः**। बृन्ह् + वुण् - अक + सि। 'बृहि वृद्धौ' (१।२४७) धातु से वुण् प्रत्यय, 'वु' को 'अक' आदेश, नलोप, गुण तथा विभक्तिकार्य। नलोपाभावपक्ष में - 'बृंहकः' शब्दरूप।

२. **बर्हणम्, बृंहणम्**। बृन्ह् + युट् - अन + सि। 'बृहि' धातु से युट् प्रत्यय, 'अन' आदेश, नलोप, गुण, णत्त्व तथा विभक्तिकार्य। नलोप के अभाव में अनुस्वार-बृंहणम् ।

३. **बर्हति, बृंहति**। बृन्ह् + अन् +ति। 'बृहि' धातु से वर्तमाना-प्रथम पुरुष-एकवचन 'ति' प्रत्यय, अन् विकरण, नलोप तथा गुण। नलोपाभावपक्ष में नकार को अनुस्वार-बृंहति।।९२३।

## ९२४. यममनतनगमां क्वौ [४।१।६९]

[सूत्रार्थ]

'यम् - मन् - तन् - गम्' इन चार धातुओं में पञ्चम वर्ण नकार-मकार का लोप तथा आकार को अकार होता है 'क्विप्' प्रत्यय के परे रहते ।।९२४।

[दु० वृ०]

एषां धातूनां पञ्चमो लोप्यो भवति आतश्चाद् भवति क्वौ परे। यम् - संयत् । मन् सम्मत् । तनु-परीतत्। ह्रस्वस्य दीर्घता। गम्लृ-जगत् ।

**हनेः सिच्यात्मने दृष्टः सूचनार्थे यमेरपि।**
**विवाहे तु विभाषैव सिजाशिषोर्गमेस्तथा।।**

आहत, उदायत, उपायत, उपायंस्त कन्यां छात्र:। समगत, समगंस्त। सङ्गसीष्ट, सङ्गंसीष्ट॥९२४।

[दु० टी०]

यम०। अप्राप्ते आरभ्यते व्युत्पत्तिमात्रेऽभिधीयते इति। जनं गच्छतीति **जनजंगत्**। कलिङ्गं गच्छतीति **कलिङ्गजगत्** ॥९२४।

[वि० प०]

यम०। आतश्चाद् भवतीत्यधिकारवशात्। जगदिति। "**द्युतिगमोर्द्वे च**" (४।४।५८) इति क्विप्, द्विर्वचनं च। तथा कलिङ्गं गच्छतीति कलिङ्गजगदित्यादि व्युत्पत्तिमात्रेऽप्यभिधीयते। "**क्विप् च**" (४।३।६८) इति क्विप्। सर्वत्र पञ्चमलोपे "**धातोस्तोऽन्तः पानुबन्धे**" (४।१।३०) इति तोऽन्तो भवति। हनेरित्यादि। दृष्टः पञ्चमलोपोऽभिधानादित्यर्थ:। सिजाशिषोर्गमेस्तथेति। अत्राप्यात्मने इति सम्बन्ध:। आहत, उदायतेति। "**आङो यमहनौ स्वाङ्गकर्मकौ च**" (३।२।४२-२२) इति रुचादित्वादात्मनेपदम्। उपायत, उपायंस्त इति। "**उद्वाहे उपयम्**" (३।२।४२-५६) इत्यात्मनेपदम्। गमेस्तु "**समो गमृच्छिप्रच्छिस्वृश्रुवेत्त्यर्त्तिदृशः**" (३।२।४२-२०) इति। पञ्चमलोपे सति सर्वत्र "**ह्रस्वाच्चानिट:**" (३।६।५२) इति सिचो लोप:॥९२४।

[समीक्षा]

'संयत्, परीतत्, सम्मत्, जगत्' इत्यादि शब्दरूपों के सिद्ध्यर्थ अनुनासिकलोप की व्यवस्था दोनों व्याकरणों में की गई है। अन्तर यह है कि पाणिनि ने केवल 'गम्' धातु में ही अनुनासिकलोप हेतु सूत्र बनाया है—"गम: क्वौ" (अ०६।४।४०)। 'गमादीनामिति वक्तव्यम्' इस वार्त्तिक वचन से अन्य अभीष्ट धातुओं का संग्रह होता है, जबकि कातन्त्र में चारों धातुओं का पाठ साक्षात् सूत्र में ही किया गया है।अत: कातन्त्रीय प्रक्रिया में सरलता स्पष्टतया प्रतीत होती है।

[रूपसिद्धि]

१. **संयत्**। सम् + यम् + क्विप् + सि। 'सम्' उपसर्गपूर्वक 'यम उपरमे' (१।१५८) धातु से क्विप् प्रत्यय, सर्वापहारी लोप, नलोप, तकारागम तथा विभक्तिकार्य।

२. **संमत्**। सम् + मन् + क्विप् + सि। 'सम्' उपसर्गपूर्वक 'मन् ज्ञाने' (३।११३) धातु से क्विप् प्रत्यय आदि कार्य पूर्ववत् ।

३. **परीतत्**। परि + तन् +क्विप् + सि। 'परि' उपसर्गपूर्वक 'तनु विस्तारे' (७।१) धातु से क्विप् प्रत्यय, सर्वापहारी लोप, "पञ्चमोपधाया धुटि चागुणे" (४।१।५५) से अकार को दीर्घ तथा अन्य कार्य पूर्ववत् ।

४. **जगत्**। गम्लृ + क्विप् + सि। 'गम्लृ गतौ' (१२७९) धातु से "द्युतिगमोर्द्वे च" (४।४।५८) से क्विप् प्रत्यय-द्विर्वचन तथा अन्य प्रक्रिया पूर्ववत् ॥९२४।

# १२५. विड्वनोरा [४।१।७०]

[सूत्रार्थ]

'विट्' तथा 'वन्' प्रत्यय के परे रहते धातुघटित पञ्चम वर्ण के स्थान में आकारादेश होता है।।१२५।

**[दु० वृ०]**

विटि वनि च प्रत्यये परे पञ्चमस्याकारो भवति। विट्-अब्जाः। गोषाः, सनोतेः षत्वम्। वनिप्-विजावा, अग्रेगावा। ओणृ - अवावरी। "**वनो र च**" (कात० परि०-स्त्री- प्र०, सू० ५) घुण्-घ्वावा। क्वनिप्। सानुनासिकमप्याकारमिच्छन्ति।।१२५।

**[दु० टी०]**

विट्०। इविदिव्योरिदनुबन्धत्वाद् अनुषङ्गत्वे य्वोर्व्यञ्जने वलोपे सति नकारस्यात्वे यावा, द्यावेति। विडिति। विट् क्रमिगमिखनिसनिजनां क्वनिब्वनिपोर्विशेषकरानुबन्धानुत्सृज्य वन्मात्रमिह गृह्यते। सानुनासिकमित्यादि। अत्र "**स्थानेऽन्तरतमः**" (का० परि० १६) इति परिभाषया अनुनासिक एव प्राप्नोतीति व्यक्तिराश्रीयते। जातिरपि सानुनासिकार्थम्। पञ्चमेन धातुर्विशिष्यते पञ्चम एवाकारो भवतीत्यभेदनिर्देशेऽप्यदोषः।।१२५।

**[वि० प०]**

विट्०। '**अब्जाः, गोषाः**' इति। अप्सु जायते, गां सनोतीति विगृह्य "**विट्क्रमिगमिखनिसनिजनाम्**" (४।३।६४) इति विट्। षत्वमिति। तत्रापिग्रहणादित्यर्थः। वनिबिति। "**अन्येभ्योऽपि दृश्यन्ते**" (४।३।६७) इति विहितयोः क्वनिब्वनिपोरुत्सृष्टानुबन्धयोर्ग्रहणं विज्ञायते। अग्रे गच्छतीति वनिप्। अवावरीति। '**ओणृ अपनयने**' (१।१४७), वनिप्। णकारस्याकारे ओ अव् । "**वनो र च**" (कात०परि०-स्त्री०प्र० सू० ५) इति नदादिदर्शनाद् ईप्रत्ययः, तत्सन्नियोगे च वनो नकारस्य रेफः। सानुनासिकमिति ने केवलं निरनुनासिकमपीत्यपिशब्दार्थः। कथं "**स्थानेऽन्तरतमः**" (का० परि० १६) इति न्यायेन सानुनासिक एव भवितुमर्हतीति? सत्यम्, इह व्यक्तिराश्रिता यथाश्रुताकारपरिग्रहार्थं निरनुनासिको हि **सूत्रे श्रुत** इति। जातेरपि परिभाषाया अनुप्रवेशेन सानुनासिकार्थमाश्रीयते इति न दोषः।।१२५।

**[क० च०]**

विट्०। यावेति अन्तस्थादिपाठः। कस्यचिन्मतं **टीकायाम्** इविदिव्योरिदनुबन्धत्वादित्यनयोरेव यावा-द्यावेति साधितत्वाद् **वृत्तौ** जावेति वर्ग्यादिपाठोऽशुद्ध एवेति। **केचित्तु** जनधातोर्विजावेति रूपमुक्तम् अभिधानादन्तस्थादिरूपमपि **टीकायामुक्त**मित्याहुः। ननु "विड्वनोर" इति ह्रस्व एव क्रियताम्, किं दीर्घपाठेन। एवमपि 'अब्जाः' इत्यादेः सिद्धत्वात्? सत्यम्, अवावरीति न सिध्यति। "**वनो र च**" (कात०परि०-स्त्रीप्र०, सू० ५) इति नदादिसूत्रम्। **अस्यार्थः**-वनो नकारस्य रेफो भवति चकारादीश्च। ननु

'अब्जा:'-शब्दस्य **''आधातोरघुट्स्वरे''** (२।२।५५) इत्याकारलोपो न स्यात्, स्याद् वा? अत्राह **कश्चित्** - लाक्षणिकत्वान्न भवति। तदसत्, तत्र धातुग्रहणमश्रद्धोपलक्षणम्, श्रद्धाभिन्नाकारस्य लोपो भवतीत्यर्थ:।

अथ यदि लाक्षणिकस्य न स्यात् तदा किं श्रद्धाकारवर्जनेन? श्रद्धाकारो हि लाक्षणिक एव। तथा च **परसूत्रम्** — **''आतो लोपोऽनाप''** इति **वार्त्तिकश्रीपती**। तस्मादयमेव **सिद्धान्त:**— विटक्रमोत्यत्र डा क्रमीति क्रियताम्, अत्रापि विड्ग्रहणं न क्रियताम्। एतेनैव डानुबन्धत्वेऽन्त्यस्वरादिलोपे सिद्धम् अब्जेति। तस्मात् तत्र विड्ग्रहणं विधाय तस्मिन्ननात्वे आकारस्य प्रयोग: साध्यत्वेन स्थितिमान् प्रतिपादित:। अतो नलोप इति **कश्चित्** । एतत् सकलं समालोच्य लोप एव स्यादिति ब्रूते तन्नाजीगणत्, **असाम्प्रदायिकत्वात्** ॥९२५।

**[समीक्षा]**

'अब्जा:, गोषा:, विजावा, अग्रेगा:' इत्यादि शब्दरूपों के सिद्ध्यर्थ धात्वन्तवर्ती अनुनासिक को आकारादेश दोनों ही व्याकरणों में किया गया है। पाणिनि का सूत्र है— ''विड्वनोरनुनासिकस्यात्'' (अ० ६।४।४१)। अत: उभयत्र समानता ही है।

**[विशेष वचन]**

१. अनुनासिक एव प्राप्नोतीति व्यक्तिराश्रीयते, जातिरपि सानुनासिकार्थम् (दु० टी०)।

२. जातेरपि परिभाषाया अनुप्रवेशेन सानुनासिकार्थमाश्रीयते इति न दोष: (वि० प०)।

३. अभिधानादन्तस्थादिरूपमपि (क० च०)।

**[रूपसिद्धि]**

१. **अब्जा:**। अप् + जन् + विट् + सि। अप्सु जायते। 'अप्' शब्द के उपपद में रहने पर 'जनी प्रादुर्भावे' (३।९४) धातु से ''विट् क्रमिगमिखनिसनिजनाम्'' (४।३।६४) सूत्र द्वारा 'विट्' प्रत्यय, 'वि' का लोप, प्रकृत सूत्र से नकार को आकार तथा विभक्तिकार्य।

२. **गोषा:**। गो + सन् + विट् + सि। गां सनोति। 'गो' शब्द के उपपद में रहने पर 'षणु दाने' (७।२) धातु से 'विट्' प्रत्यय, 'वि' का लोप, नकार को आकार, षकार तथा विभक्तिकार्य।

३. **विजावा**। वि + जन् + वनिप् + सि। 'वि' उपसर्गपूर्वक 'जनी प्रादुर्भावे' (३।९४) धातु से ''अन्येभ्योऽपि दृश्यन्ते'' (४।३।६७) सूत्र द्वारा 'वनिप्' प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्।

४. **अग्रेगावा**। अग्रे + गम् + वनिप् + सि। अग्रे गच्छति। 'अग्रे' शब्द के उपपद में रहने पर 'वनिप्' प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्।

५. **अवावरी**। ओणृ + वनिप् + ई + सि। 'ओणृ अपनयने' (१।१४७) धातु से 'वनिप्' प्रत्यय, ओ को अव्, णकार को आकार, ''वनो र च'' (कात० परि०-स्त्रीप्र०, सू० ५) से नकार को रकार, स्त्रीलिङ्ग में 'ई' प्रत्यय तथा विभक्तिकार्य।

६. घ्वावा। घुण् + क्वनिप् + सि। 'घुण घूर्ण भ्रमणे' (१।३९९) धातु से "अन्येभ्योऽपि दृश्यन्ते" (४।३।६७) सूत्र द्वारा 'क्वनिप्' प्रत्यय, णकार को आकार, उकार को वकार तथा विभक्तिकार्य॥९२५।

## ९२६. धुटि खनिसनिजनाम् [४।१।७१]

**[सूत्रार्थ]**

धुडादि प्रत्यय के परे रहते 'खन् - सन् -जन्' धातुवर्ती पञ्चम वर्ण नकार के स्थान में आकारादेश होता है॥९२६।

**[दु० वृ०]**

एषां धुडादौ प्रत्यये परे पञ्चमस्याकारो भवति। खातः, खातिः। सातः, सातिः। जातः, जातिः। सनि च-सिषासति॥९२६।

**[दु० टी०]**

धुटि०। सनि चेति। तत्र षणु दान एव सम्भवति "**इवन्तर्द्ध०**" (३।७।३३) इत्यादिना सनि वेट्त्वात् । खनिजनोरिडस्ति। चिखनिषति, जिजनिषति। ये तत्रागुणं स्मरन्ति, तेषां चेक्रीयितलुकि-चंखन्ति, जंजन्ति। सनि चेति वक्तव्यं स्यात्। **वृत्तिकारस्या-भिप्रायेण भाषायामप्यविशेषेण प्रयोगोऽस्ति न भाष्यकारस्य**॥९२६।

**[वि० प०]**

धुटि०। सनि चेति। इह कृद्ग्रहणादन्यत्र सामान्यमवगम्यते इत्युक्तत्वादित्यर्थः। "**इवन्तर्द्ध०**" (३।७।३३) इत्यादिना पक्षे अनिट्। इह न भवति। सिषनिषतीति धुडादित्वाभावात्॥९२६।

**[समीक्षा]**

'जातः, जातिः, सातवान्, खातवान्, सिषासति' इत्यादि शब्दरूपों के सिद्ध्यर्थ धातुघटित नकार को आकारादेश दोनों ही व्याकरणों में किया गया है। पाणिनि का सूत्र है— "जनसनखनां सञ्झलोः" (अ०६।४।४२)। यह ज्ञातव्य है कि पाणिनीय झल् प्रत्याहार के लिए कातन्त्र में 'धुट्' संज्ञा का व्यवहार किया गया है। अतः सूत्रों में तदनुसार उन शब्दों का प्रयोग द्रष्टव्य है। इस प्रकार उभयत्र समानता ही है।

**[विशेष वचन]**

१. वृत्तिकारस्याभिप्रायेण भाषायामप्यविशेषेण प्रयोगोऽस्ति न भाष्यकारस्य (दु० टी०)।

**[रूपसिद्धि]**

१. **खातः**। खन् + क्त + सि। 'खनु अवदारणे' (१।५८४) धातु से 'क्त' प्रत्यय, तकार अनुबन्ध का प्रयोगाभाव, प्रकृत सूत्र से नकार को आकार, समान दीर्घ-आकारलोप तथा विभक्तिकार्य।

२-३. **सातः**। सन् + क्त + सि। **जातः**। जन् + क्त + सि। 'षणु दाने; जनी प्रादुर्भावे' (७।२;३।९४) धातुओं से 'क्त' प्रत्यय आदि कार्य पूर्ववत्।

४-६. **खातिः**। खन् + क्ति + सि। **सातिः**। षणु + क्ति + सि। **जातिः**। जन् + क्ति + सि। 'खन् - षणु - जन्' धातुओं से ''स्त्रियां क्तिः'' (४।५।७२) सूत्र द्वारा 'क्ति' प्रत्यय तथा अन्य कार्य पूर्ववत्।

७. **सिषासति**। सन् + सन् + अन् + ति। सनितुमिच्छति। 'षणु दाने' (७।२) धातु से ''धातोर्वा तुमन्तादिच्छतिनैककर्तृकात्'' (३।२।४) सूत्र द्वारा 'सन्' प्रत्यय, ''चण्परोक्षाचेक्रीयितसनन्तेषु'' (३।३।७) से द्वित्व, अभ्यासकार्यादि, प्रकृत सूत्र से णकार को आकार, धातुसंज्ञा, 'ति' प्रत्यय, अन् विकरण तथा ''अकारे लोपम्'' (२।१।१७) से सन्प्रत्ययस्थ अकार का लोप॥९२६।

# ९२७. ये वा [४।१।७२]

**[सूत्रार्थ]**

'य' प्रत्यय के परे रहते 'खन् -सन् - जन्' धातुओं के नकार को आकारादेश विकल्प से होता है॥९२७।

**[दु० वृ०]**

एषां पञ्चमस्याकारो भवति वा ये परे। प्रखाय, प्रखन्य। प्रसाय, प्रसत्य। प्रजाय, प्रजन्य। एवं खायते, खन्यते, चाखायते, चंखन्यते। ''**जा जनेर्विकरणे**'' (३।६।८१) नित्यम् - जायते। व्यवस्थितविभाषया घ्यणि ये न स्यात् — सान्यम्, जन्यम्। अगुणं स्मरन्ति **एके**। तनोतेर्यणि वा वक्तव्यम्—तायते, तन्यते॥९२७।

**[दु० टी०]**

ये०। **अप्राप्ते विभाषा**। व्यवस्थितेत्यादि। जन्यमिति। ''**जनिवध्योश्च**'' (३।४।६७) इति ह्रस्वः। अगुणाधिकारं स्मरन्ति **एके**। 'ये' इति प्रत्ययनिर्देशो न वर्णनिर्देशः। तेन 'खन्यात्', इत्यत्रात्वं न भवति। **केचिद्** अत्रापि भवतीति प्रतिपद्यन्ते-सायात्, खायात्। तनोतेर्वेत्यादि वक्तव्यम् = व्याख्येयम् । **एके** नेच्छन्ति, तन्मतमिह प्रमाणमित्यर्थः। येषां तनोतेरिति सूत्रमस्ति, तेषां निर्देशार्थ एव न **चेक्रीयितलुङ्निवृत्त्यर्थः**॥९२७।

**[वि० प०]**

ये। प्रसत्येति। ''**यपि च**'' (४।१।६०) इति पञ्चमलोपे ''**धातेस्तोऽन्तः**'' (४।१।३०) इति तोऽन्तः। चंखन्यते इति। ''**अतोऽन्तोऽनुस्वारोऽनुनासिकान्तस्य**'' (३।३।३१) इत्यनुस्वारागमः। जन्यमिति। ''**जनिवध्योश्च**'' (३।४।६७) इति ह्रस्वः। वक्तव्यं व्याख्येयम्। **केचिद्** इच्छन्ति केचिन्नेच्छन्ति, तदिह प्रमाणमित्यर्थः॥९२७।

**[समीक्षा]**

'प्रखाय-प्रखन्य, चाखायते-चंखन्यते' इत्यादि शब्दरूपों के सिद्ध्यर्थ नकार को वैकल्पिक आकारादेश दोनों ही शाब्दिक आचार्यों ने किया है। पाणिनि का सूत्र है — ''ये विभाषा'' (अ० ६।४।४३)। अतः उभयत्र समानता है।

[विशेष वचन]

१. केचिदिच्छन्ति केचिन्नेच्छन्ति, तदिह प्रमागमित्यर्थः (वि० प०)।

[रूपसिद्धि]

१. **प्रखाय-प्रखन्य।** प्र + खन् + यप् + सि। 'प्र' उपसर्गपूर्वक 'खनु अवदारणे' (१५८४) धातु से 'क्त्वा' प्रत्यय, यबादेश, प्रकृत सूत्र द्वारा वैकल्पिक नकार को आकार तथा विभक्तिकार्य।

२. **प्रसाय-प्रसत्य।** प्र + सन् + क्त्वा-यप् + सि। 'प्र' उपसर्गपूर्वक 'षणु दाने' (७१२) धातु से क्त्वा-यप्, प्रकृत सूत्र से वैकल्पिक नकार को आकार तथा विभक्तिकार्य।

३. **प्रजाय-प्रजन्य।** प्र + जन् + क्त्वा - यप् + सि। 'प्र' उपसर्गपूर्वक 'जनी प्रादुर्भावे' (३१९४) धातु से क्त्वा आदि कार्य पूर्ववत्।

४. **खायते-खन्यते।** खन् + यण् + ते। 'खनु अवदारणे' (१५८४) धातु से कर्म अर्थ में आत्मनेपदसंज्ञक 'ते' प्रत्यय, "सार्वधातुके यण्" (३।२।३१) से 'यण्' प्रत्यय तथा प्रकृत सूत्र से वैकल्पिक नकार को आकार।

५. **चाखायते-चंखन्यते।** खन् + चेक्रीयित-य+ते। पुनः पुनः खनति। 'खनु' धातु से क्रियासमभिहार अर्थ में "धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे" (३।२।१४) से 'य' प्रत्यय, द्विर्वचनादि, प्रकृत सूत्र से वैकल्पिक नकार को आकार तथा विभक्तिकार्य।।९२७।

## ९२८. सनस्तिकि वा [४।१।७३]

[सूत्रार्थ]

आशीः अर्थ में होने वाले 'तिक्' प्रत्यय के परे रहते सन्धातुघटित पञ्चम वर्ण नकार को आकारादेश विकल्प से होता है।।९२८।

**[दु० वृ०]**

'सनोतेस्तिकि परे पञ्चमस्याकारो भवति वा-सनुतात्, सातिः, सन्तिः। पुनर्वावचनाल्लोपश्च सतिः।।९२८।

**[दु० टी०]**

सन०। सन्तिरिति। **"न तिकि दीर्घश्च"** (४।१।६२) इति प्रतिषेधात् **"पञ्चमोपधाया धुटि चागुणे"** (४।१।५५) इति दीर्घो न भवतीति। पुनरित्यादि। **"ये वा"** (४।१।७२) इत्यतो वाग्रहणमनुवर्तते। यत् पुनर्वाग्रहणं तेन लोपमनुवर्त्य विकल्पयतीति पञ्चमलोपो विभाषया भवतीत्यर्थः। सान्तिरिति। **'षण सम्भक्तौ'** (१।१५५) इत्यस्य भवतीति। **अन्य** आह—**'निरनुबन्धग्रहणे न सानुबन्धकस्य'** (का०परि० ४८) इति भौवादिकस्यैव ग्रहणम्, रूढित्वाद् यादृशस्यैव व्यवस्था, यथा पूर्वस्मिन् योगे गां सनोति **गोषाः,** सणोरभिधानम् ।।९२८।

[वि० प०]

सनः। सनोतेरिति। 'षणु दाने' (७।२), न 'षण सम्भक्तौ' (१।१५५) इति, **अनभिधानात्** । तथा पूर्वस्मिन् सूत्रे तेन 'षण संभक्तौ' (१।१५५) इत्यस्य सान्तिरिति भवत्येव ।।९२८।

[समीक्षा]

'सातिः, सन्तिः, सतिः' शब्दरूपों के सिद्ध्यर्थ 'सन्' धातुवर्ती नकार को वैकल्पिक आकारादेश तथा नकारलोप का विधान दोनों ही व्याकरणों में किया गया है। पाणिनि का सूत्र है-"सनः क्तिचि लोपश्चास्यान्यतरस्याम्" (अ० ६।४।४५)। अतः उभयत्र समानता ही परिलक्षित होती है।

[विशेष वचन]

१. पुनर्वावचनाल्लोपश्च-सतिः (दु० वृ०)।

२. षणु दाने, न षण सम्भक्ताविति, अनभिधानात् (वि० प०)।

[रूपसिद्धि]

१. **सातिः, सन्तिः, सतिः।** सन् +तिक् + सि। 'षणु दाने' (७।२) धातु से "**तिक्कृतौ संज्ञायामाशिषि**" से 'तिक्' प्रत्यय, 'क्' अनुबन्ध का प्रयोगाभाव, प्रकृत सूत्र से नकार को वैकल्पिक आकार तथा विभक्तिकार्य। पक्ष में—'सन्तिः' शब्दरूप। पूर्ववर्ती सूत्र "ये वा" (४।१।७२) में 'वा' - पाठ के बाद वर्तमान सूत्र में पुनः 'वा' शब्द का पाठ करने से नकार का लोप भी अभीष्ट है। अतः 'सतिः' रूप भी साधु माना जाता है।।९२८।

## ९२९. स्फुरिस्फुल्योर्घञ्योतः [४।१।७४]

[सूत्रार्थ]

'घञ्' प्रत्यय के परे रहते 'स्फुर्-स्फुल्' धातुओं के ओकार को विकल्प से आकारादेश होता है।।९२९।

[दु० वृ०]

स्फुरि-स्फुल्योर्घञि परे ओत आकारो भवति वा। विस्फारः, विस्फोरः। विस्फालः, विस्फोलः।।९२९।

[दु० टी०]

स्फुर्०। **अन्ये** वाग्रहणमनुवर्तयन्ति। परसम्मतमेतत्। '**उभयोर्विभाषयोर्मध्ये ये विधयस्ते नित्याः**' (का० परि० ११) इति, **नैयासिकानां** तु मतमेतत् ।।९२९।

[समीक्षा]

'विस्फारः विस्फालः' प्रयोगों के सिद्ध्यर्थ दोनों व्याकरणों में ओकार को आकारादेश किया गया है। पाणिनि का सूत्र है-"स्फुरतिस्फुलत्योर्घञि" (अ०६।१।४७)।

यहाँ यह विशेष ध्यातव्य है कि पाणिनि के अनुसार आकारादेश नित्य होता है। अतः 'विस्फारः, विस्फालः' ही शब्दरूप साधु माने जाते हैं, जबकि कातन्त्रकार के अनुसार आकारादेश विकल्प से होने के कारण 'विस्फोरः, विस्फोलः' भी शब्दरूप सिद्ध होंगे। इस प्रकार नित्य-विकल्पविधि के कारण दोनों में भिन्नता है।

[विशेष वचन]

१. अन्ये वाग्रहणमनुवर्तयन्ति, परसम्मतमेतत् (दु० टी०)।

२. उभयोर्विभाषयोर्मध्ये ये वि + धयस्ते नित्या इति, नैयासिकानां तु मतमेतत् (दु० टी०)।

[रूपसिद्धि]

१. **विस्फारः, विस्फोरः**। वि + स्फुर् + घञ् + सि। 'वि' उपसर्गपूर्वक 'स्फुर स्फुरणे' (५।१०२) धातु से भाव अर्थ में "भावे" (४।५।३) सूत्र द्वारा घञ् प्रत्यय, 'घ् - ञ्' अनुबन्धों का प्रयोगाभाव, "नामिनश्चोपधाया लघोः" (३।५।२) से उकार को गुण-ओकार, प्रकृत सूत्र द्वारा विकल्प से ओकार को आकार तथा विभक्तिकार्य।

२. **विस्फालः, विस्फोलः**। वि + स्फुल् + घञ् + सि। 'वि' उपसर्गपूर्वक 'स्फुल संचये' (५।१०३) धातु से 'घञ्' प्रत्यय आदि कार्य पूर्ववत् ।।९२९।

## ९३०. इज्जहातेः क्त्व [४।१।७५]

[सूत्रार्थ]

'क्त्वा' प्रत्यय के परे रहते 'ओ हाक् त्यागे' (२।७१) धातुगत आकार को इकारादेश होता है।।९३०।

[दु० वृ०]

वा न वर्तते। क्त्वाप्रत्यये परे जहातेरिद् भवति। हित्वा गतः। जहातेरिति किम्? हाङ् — हात्वा।।९३०।

[दु० टी०]

इ०। इदिति। तकारः **सुखोच्चारणार्थः**। इज्जहातेः क्तिरित्युक्ते इदादेश इति सम्भाव्येत। अविभक्तिनिर्देश उच्यते चेत्, जहातेरन्यस्य धातोरिति शङ्क्यते। तिब्निर्देशः **पाठसुखार्थः**। अन्यथा इकारो हः क्त्वीति सिध्यति।।९३०।

[वि० प०]

इज्जहातेः। क्त्वीति सूत्रत्वादाकारलोपः।।९३०।

[क० च०]

इज्ज०। वा न वर्तते। **'उभयोर्विभाषयोर्मध्ये यो विधिः स नित्यः'** (का० परि० ११) इति न्यायात् । स्फुरिस्फुल्योरित्यत्रापि व्यवस्थितवानुवर्तते। क्त्वीति। सूत्रत्वादिति **पञ्जिका**। ननु कथमेतद् यावता **"आधातोरघुट्स्वरे"** (२।२।५५) इत्यत्र धातुग्रहणमश्रद्धोपलक्षणम् इत्युक्तमस्ति। अतस्तेनैव सिद्धम्? सत्यम्। धातु-

ग्रहणमश्रद्धोपलक्षणमिति यदुक्तं तस्येदं क्त्वीति रूपमेव कारणम् अतः सूत्रत्वा-दित्युच्यते।।९३०।

[समीक्षा]

'हित्वा राज्यं वनं गतः' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'हा' धातुघटित आकार को इकारादेश तथा पाणिनि ने 'हा' को 'हि' आदेश किया है। सूत्र है- "जहातेश्च क्त्वि" (अ० ७।४।४३)। अतः प्रायः उभयत्र समानता है।

[विशेष वचन]

१. इदिति तकारः सुखोच्चारणार्थः (दु० टी०)।

२. तिब्निर्देशः पाठसुखार्थः(दु० टी०)।

[रूपसिद्धि]

१. **हित्वा।** ओ हाक् त्यागे + क्त्वा + सि। 'ओ हाक् त्यागे' (२।७१) धातु से "एककर्तृकयोः पूर्वकाले" (४।६।३) सूत्र द्वारा 'क्त्वा' प्रत्यय, प्रकृत सूत्र से आकार को इकार, 'हित्वा' की लिङ्गसंज्ञा, प्रथमा-एकवचन 'सि' प्रत्यय, 'हित्वा' की अव्यय संज्ञा, अतः "अव्ययाच्च"८ (२।४।४) से 'सि' का लुक्।।९३०।

## ९३१. द्यतिस्यतिमास्थां त्यगुणे [४।१।७६]

[सूत्रार्थ]

अगुण तकारादि प्रत्यय के परे रहते 'दो-सो-मा-स्था' धातुओं के अन्तिम वर्ण को इकारादेश होता है।।९३१।

[दु० वृ०]

एषान्तकारादावगुणे इद् भवति। दो-दितः, दितवान् दितिः, दित्वा। सो-अवसितः, अवसितवान्, अवसितिः। मा - मितः, मितवान्, मितिः, मित्वा। स्था-स्थितः, स्थितवान्, स्थितिः, स्थित्वा। अगुण इति किम्? दाता, साता, माता, स्थाता। तिपा निर्देशः किम्? धेट् - धीतः, धीतवान्। षणु-सातः, सातवान् ।।९३१।

[दु० टी०]

द्यति०। तिब्निर्देशो **'दो अवखण्डने, षो अन्तकर्मणि'** (३।२२,२१) इति प्रतिपत्त्यर्थम्। अन्यथा **'दाप् लवने'** (२।२३) इत्यादि दारूपः, सन आत्वे सारूपः। अथ 'दो-षो' इत्यविभक्तिकनिर्देश एवास्ताम्, **पाठगौरवं** स्यात् । मा इति मा-माङ्-मेङां सामान्येन ग्रहणम् । द्यतेर्ददादेशस्यापवादः, शेषाणामीत्वस्य।।९३१।

[वि० प०]

द्यति०। मा इति। **'मा माने, माङ् माने, मेङ् प्रतिदाने'** (२।२६,;१।४६२) इति सामान्येन ग्रहणम्। तिपेत्यादि। अन्यथा 'दा-मा' इति निर्देशे दासंज्ञकमारूप इति मन्यते । ततो धेटः सनोतेश्च **"धुटि खनिसनि०"** (४।१।७१) इत्यादिना कृतात्वस्य

स्यादिति भावः। अथ 'दो-सो' इति निर्दिश्यताम्, तथापि **पाठगौरवं** स्यादिति तिपा निर्देशः।।९३१।

**[क० च०]**

द्यति०। तिपा निर्देश इति। अत्र धेट् इति पाठोऽशुद्ध एव। 'दा' इत्युक्ते **"स्वं रूपं शब्दस्याशब्दसंज्ञा'** (का० परि० २८) इति दासंज्ञकस्य ग्रहणेऽपि धेट एव ग्रहणं भविष्यति नान्यस्य, विशेषविधिभिराघ्राततत्वात्। तथाहि-अन्यस्य दासंज्ञकस्य **"दद् दोऽधः"** (४।१।८०) इत्यनेन परत्वाद् आदेश इति बाधकः, दधातेस्तु **"दधातेर्हिः"** (४।१।७८) इति ह्यादेशो बाधकः। ततः परिशिष्टो धेड् विद्यते इति **हेमाशयः**। अथ **पञ्जिकायां** किमुक्तं दासंज्ञकस्य ग्रहणम् । **टीकायां** तु अन्यथेत्यादिना ग्रन्थेन दारूपस्य ग्रहणम् प्रतिपादितम्, तस्मादनयोर्विवादः।

अथ **'स्वं रूपं शब्दस्याशब्दसंज्ञा'** (का० परि० २८) इति न्यायात् सञ्ज्ञासंभवे कथं दारूपस्य ग्रहणमिति **त्रिलोचनाशयः। टीकाकारेण** दारूपस्य ग्रहणं कथमुक्तं स्यादेव। यदि संज्ञासम्भवे धेटं विनाऽन्यस्य दासंज्ञकस्य ग्रहणं स्यात् । तथाहि किं "दद् दोऽधः" (४।१।८०) इत्यनेन परत्वादस्य दासंज्ञकस्य ददादेश एवास्ति बाधकः। तस्मात् टीकाकारवचनमेव साध्विति लक्ष्यते? सत्यम्। नासौ पर्यनुयोगः, त्रिलोचनेन वृत्तावपि तिब्निर्देशः किमित्यनेन संज्ञाग्रहणं प्रतिपादितम्। तस्यायमाशयः—दा इत्युक्ते द्वयमुपस्थितम् - सञ्ज्ञारूपं च तत्र **'स्वं रूपं शब्दस्याशब्दसंज्ञा'** (का० परि० २८) इति न्यायात् संज्ञायाः प्राधान्यमवलम्ब्य **वृत्तौ** व्यावृत्तिरुक्ता, तथापि यदि परिशिष्टो धेडेव विद्यते इति। तदा सञ्ज्ञाग्रहणमनर्थकमित्युच्यते, तदेवाशयवान् **टीकाया**माह- **'दाप् लवने'** (२।२३) इति। अत एव **त्रिलोचनो**ऽपि सम्मत इत्युक्त्वा सन्देहमात्रं प्रतिपादितवानिति।।९३१।

**[समीक्षा]**

'दितः, अवसितः, मितिः, स्थितवान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों व्याकरणों में धातुओं के अन्तिम वर्ण को इकारादेश किया गया है। पाणिनि का सूत्र है-"द्यतिस्यतिमास्थामित् ति किति" (अ०७।४।४०)। अतः उभयत्र समानता ही है।

**[विशेष वचन]**

१. तिब्निर्देशो------इति प्रतिपत्त्यर्थम् (दु० टी०)।

२. तथापि पाठगौरवं स्यादिति तिपा निर्देशः (वि० प०)।

**[रूपसिद्धि]**

१-४. **दितः, अवसितः, मितः, स्थितः।** दो + क्त + सि, अव + सो + क्त + सि, मा + क्त + सि, स्था + क्त + सि। 'दो अवखण्डने, षोऽन्तकर्मणि, मा माने, ष्ठा गतिनिवृत्तौ' (३।२२,२१;२।२६;१।२६७) धातुओं से 'क्त' प्रत्यय, 'ओ-आ' को 'इ' आदेश तथा विभक्तिकार्य।

५-८. **दितवान्, अवसितवान्, मितवान्, स्थितवान्।** दो-अवसो-मा-स्था + क्तवन्तु + सि। उक्त चार धातुओं से क्तवन्तु प्रत्यय, प्रकृत सूत्र से इकारादेश तथा विभक्तिकार्य।

९-१२. **दितिः, अवसितिः, मितिः, स्थितिः।** दो-अवसो-मा-स्था+क्ति+सि। उक्त चार धातुओं से क्ति प्रत्यय, इकारादेश तथा विभक्तिकार्य।

१३-१५. **दित्वा, मित्वा, स्थित्वा।** दो-मा-स्था+क्त्वा+सि। 'दो-मा-स्था' धातुओं से क्त्वा प्रत्यय विभक्तिकार्य॥९३१।

## ९३२. वा छाशोः [४।१।७७]

**[सूत्रार्थ]**

अगुण तकारादि प्रत्यय के परे रहते 'छो-शो' धातुओं के अन्तिम वर्ण को इकारादेश विकल्प से होता है॥९३२।

**[दु० वृ०]**

छाशोस्तकारादावगुणे इद् भवति वा। अवच्छितः, अवच्छितिः, अवच्छातः, अवच्छातिः। निशितः, निशितिः, निशातः, निशातिः। शातेर्व्रते नित्यं **व्यवस्थितविभाषया।** संशितो ब्राह्मणः। अन्यथा शिञा सिद्ध एव॥९३२।

**[दु० टी०]**

वा०। **'छो छेदने'** (३।२०)। शातेरित्यादि। **'शो तनूकरणे'** (३।१९) इत्यस्य व्रतविषय इति भावः। संशितो ब्राह्मणः इति व्रतीत्यर्थः। संशिते व्रतम्, व्रतादन्यत्र निपातः। अन्यथेत्यादि। यदि व्यवस्थितविभाषा नाद्रियते **'शिञ् निशाने'** इति धात्वन्तरेणापि सिद्धनेवेत्यर्थः। **परस्त्वाह-श्यतेर्वावचनं नञा क्तान्तेनैकप्रकृतिना क्तान्तमनञ् समस्यते। यथा कृताकृतं शातं च तदशितं चेति शाताशितम्, तदसत् । यथाभिधानं समास** इत्युक्तमेव॥९३२।

**[वि० प०]**

वा०। अन्यथेति। यदीह व्यवस्थितविभाषा नाद्रियते तदा सर्वत्रैवायं विकल्प इति। इकारपक्षे 'शिञ् निशाने' इत्यनेनैव सिध्यति किं 'शो तनूकरणे' (३।१९) इत्यस्य विकल्पविधानेनेति भावः॥९३२।

**[समीक्षा]**

निशितम्, निशातम्, अवच्छितम्, अवच्छितवान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'शो-छो' धातुओं के अन्तिम वर्ण को विकल्प से इकारादेश किया गया है। पाणिनि का सूत्र है—"शाछोरन्यतरस्याम्" (अ०७।४।४१)। अतः उभयत्र समानता ही है।

[विशेष वचन]

१. शातेर्व्रते नित्यं व्यवस्थितविभाषया (दु० वृ०)।

२.'शो तनूकरणे' इत्यस्य व्रतविषय इति भावः। संशितो ब्राह्मणः इति व्रतीत्यर्थः(दु० टी०)।

३. यदीह व्यवस्थितविभाषा नाद्रियते तदा सर्वत्रैवायं विकल्पः (वि० प०)।

[रूपसिद्धि]

१. **अवच्छितः, अवच्छातः**। अव + छो + क्त + सि। 'अव' उपसर्गपूर्वक 'छो छेदने' (३।२०) धातु से 'क्त' प्रत्यय, प्रकृत सूत्र द्वारा वैकल्पिक इकारादेश, तकारागम, चकारादेश तथा विभक्तिकार्य। पक्ष में 'अवच्छातः'।

२. **अवच्छितिः, अवच्छातिः**। अव + छो + क्ति + सि। 'अव' उपसर्गपूर्वक 'छो छेदने' (३।२०) धातु से 'क्ति' प्रत्यय तथा प्रकृत सूत्र से वैकल्पिक इकारादेश आदि कार्य पूर्ववत्।

३. **निशितः, निशातः**। नि + शो + क्त + सि। 'नि' उपसर्गपूर्वक 'शो तनूकरणे' (३।१९) धातु से 'क्त' प्रत्यय आदि कार्य पूर्ववत्।

४. **निशितिः, निशातिः**। नि + शो + क्ति + सि। 'नि' उपसर्गपूर्वक 'शो' धातु से 'क्ति' प्रत्यय आदि कार्य पूर्ववत् ।।९३२।

## ९३३. दधातेर्हिः [४।१।७८]

[सूत्रार्थ]

अगुण तकारादि प्रत्यय के परे रहते 'धा' धातु को 'हि' आदेश होता है।।९३३।

[दु० वृ०]

दधातेस्तकारादावगुणे हिर्भवति। हितः, हितवान्, हितिः, हित्वा। दधातेरिति किम्? धेट्-धीतः, धीतवान् । 'वा' न वर्तते, धात्वन्तरबलात् ।।९३३।

[दु० टी०]

दधा०। 'वा' न वर्तते इति। 'हि गतौ' (४।११), अनेकार्थत्वाद् धातूनां विभाषां साधयतीत्यर्थः। 'इष्टतो ह्यधिकारा ां प्रवृत्तिनिवृत्ती स्याताम्' इति सिद्धे **तिब्निर्देशः सुखार्थः**।।९३३।

[वि० प०]

दधा०। धात्वन्तरबलादिति। अन्यथा 'हि गतौ' (४।११) इत्यनेनानेकार्थत्वाद् धातूनां समानार्थत्वेन विकल्पस्य सिद्धत्वात् किमनेनेति भावः।।९३३।

[समीक्षा]

'हितः, हितवान्, हित्वा' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'धा' धातु को 'हि' आदेश किया गया है। पाणिनि का सूत्र है—"दधातेर्हिः" (अ०७।४।४२)। अतः उभयत्र समानता है।

[विशेष वचन]

१. 'वा' न वर्तते, धात्वन्तरबलात् (दु० वृ०)।

२. 'धाञः' इति सिद्धे तिब्निर्देशः सुखार्थः (दु० टी०)।

[रूपसिद्धि]

१-४. **हितः, हितवान्, हितिः, हित्वा।** धा + क्त, क्तवन्तु, क्ति, क्त्वा + सि। 'डु धाञ् धारणपोषणयोः' (२।८५) धातु से क्रमशः 'क्त-क्तवन्तु-क्ति-क्त्वा' प्रत्यय, अनुबन्धों का प्रयोगाभाव, प्रकृत सूत्र द्वारा 'धा' धातु को 'हि' आदेश तथा विभक्तिकार्य।।९३३।

## ९३४. चरफलोरुदस्य [४।१।७९]

[सूत्रार्थ]

अगुण तकारादि प्रत्यय के परे रहते 'चर्-फल्' धातुओं की उपधा में विद्यमान अकार को उकारादेश होता है।।९३४।

[दु० वृ०]

चरफलोरकारस्य तकारादावगुणे उद् भवति। चूर्तः, चूर्त्तिः। प्रफुल्तः, प्रफुल्तिः।।९३४।

[दु० टी०]

चर०। **'फल निष्पत्तौ, दल ञि फला विशरणे'** (१।१७६, १६५) इत्यस्यापि ग्रहणम् । नात्र **'निरनुबन्धग्रहणे न सानुबन्धकस्य'** (का० परि०४८) इत्याद्रियते। द्विवचनं च रूपसाम्यात्। चरणं चूर्तिः। **''घोषवत्योश्च कृति''** (४।६।८०) इतीट्प्रतिषेध इति। तथा **'फल निष्पत्तौ'** (१।१७६) प्रफुल्तिः, प्रफुल्तः इति। आदनुबन्धत्वाद् विशरणार्थस्येडभावः।।९३४।

[वि० प०]

चर०। चरणं चूर्तिरित्युत्त्वे **''नामिनो र्वोः''** (३।८।१४) इत्यादिना दीर्घः। प्रफुल्तः इति। **'दल ञि फला विशरणे'** (१।१६५) इत्यादनुबन्धाच्चेट्प्रतिषेधः। इह **'निरनुबन्धग्रहणे न सानुबन्धकस्य'** (का० परि० ४८) इति वचनस्यानादरात्। प्रफुल्तिरिति। **'फल निष्पत्तौ'** (१।१७६)। स एव वा **''घोषवत्योश्च कृति''** (४।६।८०) इट्प्रतिषेधः।।९३४।

[क० च०]

चर०। चर०। **'चर गतौ, चरि रिवि धवि गत्यर्थाः'** (चर असंशये ९।१५७; १।१८९) इति द्वयोर्ग्रहणमविशेषात् । चरधातोः क्ते उदाहरणं नास्तीति इटि सति तकारादित्वाभावाच्चोरितमित्येव भवति। यत्तु चूर्ण इति पदं दृश्यते, तत् **'चुरी दाहे'** (चूरी दाहे ३।१०१) इत्यस्य। ईदनुबन्धत्वान्निष्ठायामिट्प्रतिषेधः। 'प्रफुल्तः' इति **'दल ञि फला विशरणे'** (१।१६५) इत्यस्य, **'फल निष्पत्तौ'** (१।१७६) इत्यस्य तु फलितमिति तकारपरस्यादेशस्य स्वरूपग्राहकत्वात्। कथं चूर्त्तिरित्यस्य दीर्घ इति न देश्यम्, अकुर्छुरोरिति वर्जनमकारस्य स्वरूपग्राहकत्वानित्यत्वज्ञापनात्। तेनापि तदा वर्धन्ते तद्धीतिः।।९३४।

[समीक्षा]

'चूर्त्तिः, प्रफुल्तः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों नें 'चर् - फल' धातुओं की उपधा में विद्यमान अकार को उकारादेश किया गया है। पाणिनि का सूत्र है—"ति च" (अ० ७।४।८९)। अतः उभयत्र समानता हैं।

[रूपसिद्धि]

१-२. **चूर्तः, चूर्त्तिः।** चर् + क्त, क्ति + सि। 'चर गतौ' (९।१५७) धातु से 'क्त-क्ति' प्रत्यय, 'क्' अनुबन्ध का प्रयोगाभाव, प्रकृत सूत्र से अकार को उकार "नामिनो र्वोः" (३।८।१४) से उकार को दीर्घ तथा विभक्तिकार्य।

३-४. **प्रफुल्तः, प्रफुल्तिः।** प्र + फला + क्त, क्ति + सि। 'प्र' उपसर्गपूर्वक 'दल ञि फला विशरणे' (१।१६५) धातु से 'क्त-क्ति' प्रत्यय आदि कार्य पूर्ववत् ।।९३४।

## ९३५. दद् दोऽधः [४।१।८०]

[सूत्रार्थ]

अगुण तकारादि प्रत्यय के परे रहते दासंज्ञक धातुओं को 'दत्' आदेश होता है, धेट् धातु को छोड़कर।।९३५।

[दु० वृ०]

दासंज्ञकस्य धेड्वर्जितस्य तकारादावगुणे दद् भवति। दत्तः, दत्तवान्, दत्तिः, दत्त्वा। दासंज्ञकस्येति किम्? अवदातः। अध इति किम् ? धेट्—धीतः, धीतवान्। दान्ते तस्य नत्वम्, धान्ते धत्वं स्यात्, सन्निपातलक्षणस्य वर्णग्रहणे निमित्तत्वात् ।।९३५।

[दु० टी०]

द०। दधातेर्हिरस्तीत्याह- धेडित्यादि। तान्तोऽयमादेशः, आगमादित्याह-दान्त इत्यादि। अगुण इति किम्? दाता।।९३५।

[वि० प०]

दद् दो०। दधातेर्हिरादेशोऽस्तीति। अध इति धेटो वर्जनम् । 'दद् दः' इति निर्देशस्य त्रिधा समानत्वेऽपि तान्तत्वे **युक्तिमाह**-दान्त इत्यादि। न च वक्तव्यम् - तकारादावयमादेश इति **सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य** (का०परि० ३९)। वर्णकार्यत्वात् तस्यैतदेवाह—सन्निपातेत्यादि। तस्माद् दाद् दस्य चेति निष्ठातकारस्य तकारः, "**घढधभेभ्यस्तथोर्धोऽधः**" (३।८।३) इति धत्वं स्यात्। न चैवमभिधानमस्तीति। तस्मात् तान्तोऽयमादेश इति स्थितम् ।।९३५।

[क० च०]

दद् दो०। अवदात इति यदा पाठस्तदा **'दाप् लवने'** (२।२३) इत्यस्य रूपम्, अवच्छिन्नमित्यर्थः। यदा तु 'अवदानम्' इति पाठः, स **'दैप् शोधने'** (१।२६३) इत्यस्य दर्शितः। अथ ददिति आदेशः तान्तः, थान्तः, दान्तः, धान्तो वा। तत्र थान्ते "**अघोषेष्वशिटां प्रथमः**" (३।८।९) इति प्रथमे सति न दोषः इति। तत्राशङ्का-

दान्तधान्तपक्षे दूषणयुक्तमाह--दान्त इत्यादि **वृत्तिः। सिद्धान्तस्तु** प्रथमोपस्थितत्वात् तान्त एवोह्यः, **वररुचिनापि** तदेवोक्तम्। ननु **पाणिनिमते** थान्त एवायमाशयः। तान्ते **"दस्ति"** (अ० ६।३।१२४) इति सूत्रेण दीर्घः स्यादिति **भागवृत्तावुक्तम्। भवन्मते** कथम्? नैवम् । **पाणिनिमते** वीत्तपरीत्तमित्यादिसिद्ध्यर्थं दस्तीति वचनं दीर्घार्थं चेति। **स्वमते** तदभावात् क्वचिदित्यनेन लक्ष्यदृष्ट्या भवति। यद् वा दासंज्ञकस्य यस्तकारादिस्तस्मिन्नेव भवति, कुतो दादौ प्राप्तिः। अथ दान्तधान्तपक्षेऽपि न दोषः। धत्वं निष्ठानत्वं च सन्निपातलक्षणत्वादेव न भविष्यति, ततः **सर्वपक्षेऽपि न दोषः**, सत्यम् । वर्जग्रहणे निमित्तत्वादिति दोष एवास्ति।।९३५।

**[समीक्षा]**

'दत्तः, दत्तवान् , दत्त्वा' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'दा' को 'दत्' (दथ्) आदेश किया गया है। पाणिनि का सूत्र हैं — "दो दद् घोः" (अ०७।४।४६)। पाणिनि 'दथ्' आदेश थकारान्त मानते हैं और वररुचि तकारान्त (दत्)। यह केवल अपने अपने व्याकरण की प्रक्रिया के अनुसार ही है। अतः उभयत्र प्रायः समानता ही है। यह ज्ञातव्य है कि पाणिनि ने जिन धातुओं की 'घु' संज्ञा की है, उनकी कातन्त्रकार 'दा' संज्ञा करते हैं। अतः तदनुसार 'घोः-दः' शब्दों का प्रयोग सूत्रों में किया गया है।

**[विशेष वचन]**

१. तान्तोऽयमादेशः आगमादित्याह-दान्त इत्यादि (दु० टी०)।

२. तस्मात् तान्तोऽयमादेश इति स्थितम् (वि० प०)।

३. सिद्धान्तस्तु प्रथमोपस्थितत्वात् तान्त एवोह्यः, वररुचिनापि तदेवोक्तम् (क० च०)।

**[रूपसिद्धि]**

१. **दत्तः**। दा + क्त + सि। 'डु दाञ् दाने' (२।८४) धातु से "निष्ठा" (४।३।९३) सूत्र द्वारा 'क्त' प्रत्यय, 'क्' अनुबन्ध का प्रयोगाभाव, प्रकृत सूत्र से 'दा' को 'दत्' आदेश, लिङ्गसंज्ञा तथा विभक्तिकार्य।

२. **दत्तवान्**। दा + क्तवन्तु + सि। 'दा' धातु से 'क्तवन्तु' प्रत्यय, 'दत्' आदेश तथा विभक्तिकार्य।

३. **दत्तिः**। दा + क्ति + सि। 'दा' धातु से "स्त्रियां क्तिः" (४।५।७२) सूत्र द्वारा 'क्ति' प्रत्यय तथा विभक्तिकार्य।

४. **दत्त्वा**। दा + क्त्वा + सि। 'दा' धातु से "एककर्तृकयोः पूर्वकाले" (४।६।३) सूत्र द्वारा 'क्त्वा' प्रत्यय, 'दत्' आदेश, लिङ्गसंज्ञा, सि-प्रत्यय, अव्ययसंज्ञा तथा "अव्ययाच्च" (२।४।४) से 'सि' प्रत्यय का लुक् ।।९३५।

# ९३६. स्वरादुपसर्गात् तः [४।१।८१]

[सूत्रार्थ]

अगुण तकारादि प्रत्यय के परे रहते स्वरान्त उपसर्ग के बाद आने वाली धेट्वर्जित 'दा' संज्ञक धातु को 'त्' आदेश होता है।।९३६।

[दु० वृ०]

उपसर्गात् स्वरान्तात् परस्य धेड्वर्जितस्य दासंज्ञकस्य तकारो भवति तकारादावगुणे प्रत्यये परे। प्रत्तम्, नीत्तम्, परीत्तम् । दस्ति, क्वचिन्नामिनो ह्रस्वस्य दीर्घता। स्वरादिति किम्? निर्दत्तम्, दुर्दत्तम्। सस्वरोऽस्वरो वाऽयमादेशो न कश्चिद् दोष इति। कथं निदत्तम्, अवदत्तम्, प्रदत्तमिति? वादिकर्मणि प्रादिसमासो निपाता वा।।९३६।

[दु० टी०]

स्वरा०। सस्वर इत्यादि। अनेकवर्णः सर्वस्य भवति, अस्वर एकवर्णस्य भवति। एकवर्णत्वात् तकारत्रयेऽपि श्रुतिभेदो नास्तीति भावः। कथमित्यादि। एवम् अनुदत्तम्, विदत्तम् । **केचित्** प्रदत्तमित्येतदेवादिकर्मणीति, शेषास्त्वविशेषा एव। वादिकर्मणीति विभाषा आदिकर्मणि विहिते दाञ एव मण्डूकप्लुत्या व्यवस्थितवाग्रहणं स्मर्तव्यम् इत्यर्थः। प्रादिसमासो निपाता वेति वाशब्दः प्रत्येकं पदमभिसम्बध्यते। प्रादिसमासो नेति न चोद्यम्, क्रियान्तरोपादानेन सिध्यति तत् क्रियोपदेशेन शब्दविवक्षाभेदो वस्तु पुनरेकमिति। **रूढिशब्दाश्च कृतो भवन्तीति** निपाता वेति उपसर्गप्रतिरूपकाश्च निपाताः प्रयोगतोऽनुसर्तव्यास्तेषामुपसर्गसंज्ञा नास्तीति भावः। उपसर्गादिति किमर्थम् - दधि दत्तम्, लता दिता।।९३६।

[वि० प०]

स्वराः। दस्तीति। दासंज्ञकस्य स्थाने यस्तकारस्तस्मिन्निमित्ते नामिन एव दीर्घः। तत्र क्वचिद्ग्रहणेन लक्ष्यानुरोधस्य सूचितत्वादित्यर्थः। सस्वर इत्यादि। ननु सस्वरपक्षेऽनेकवर्णत्वात् समुदायस्य भवति। ततः अस्य च लोपे तकारद्वयमिति युक्तम् अस्वरपक्षे त्वेकवर्णत्वादन्त्यस्याकारस्य भवति दकारस्य चाघोषे प्रथमे सति तकारत्रयमेव स्यात्। अस्तु, को दोषः? न ह्यत्र श्रुतिभेदोऽस्तीति। कथमित्यादि। स्वरान्तत्वात् तकारादेशेन भवितव्यमिति भावः। एवं विदत्तम्, अनुदत्तमिति। आदिकर्मणीति। आदिकर्मणि विहिते क्तप्रत्यये दाञ एव विभाषा मण्डूकप्लुत्या वाधिकारादित्यर्थः। सर्वत्रादिकर्मणि क्तः कर्तरि चेति क्तप्रत्ययः। **शाकटायनस्तु** प्रदत्तमित्येतदेवादिकर्मणि, शेषास्त्वविशिष्टा इति व्याचष्टे। पक्षे 'वीत्तम्, अनूत्तम्' इत्यपि भवति।

**परिहारान्तरमाह**—प्रादीत्यादि। वाशब्दः प्रत्येकमभिसम्बध्यते-प्रादिसमासो निपाता वेति। प्रकृष्टं प्रगतं वा दत्तम्। अवगतम् अवहीनं वा दत्तमित्यादि प्रादिसमासः। ननु प्रादेर्गतादिक्रियान्तरोपादानेन तत् सिध्यति, न तु दानक्रियोपादानेन। तदेव प्रदत्तमित्यादौ विवक्षितमिति कथं नार्थो भिद्यत इति न देश्यम् - **रूढिशब्दा हि कृतो भवन्तीति** व्युत्पत्त्यन्तरेणापि नार्थान्तरभाज इति न दोषः। निपाता वेति। नैते उपसर्गाः, किन्तर्हि तत्प्रतिरूपका अन्य एव निपाता इति। नैतेषामुपसर्गव्यपदेशनिबन्धनो विधिरिति।।९३६।

[क० च०]

स्वरात्०। अत्र **'दो अवखण्डने'** (३।२२) इत्यस्यापि परत्वाद् विशेषत्वाच्च ग्रहणम्। अत एव टीकायाम् उपसर्गादिति किम्? लता दिता। **'दो अवखण्डने'** (३।२२) इत्यस्य व्यावृत्तिर्दर्शितेत्यर्थः। **पञ्जिका** - ननु प्रादेरिति। तर्हि प्रकृष्टं दत्तम् इत्यत्र दानस्य प्रकर्षे सिद्धम्। नैवम्, अत्रापि दानीयस्य प्रकर्षो न दानस्य, अतोऽर्थभेदः॥९३६।

**।। इत्याचार्यसुषेणविद्याभूषणकृते कलापचन्द्रे चतुर्थे कृदध्याये प्रथमः सिद्धिपादः समाप्तः।।**

[समीक्षा]

'प्रत्तम्, अवत्तम्, नीत्तम्, परीत्तम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'दा' को 'त्' आदेश किया गया है। पाणिनि का सूत्र है—"अच उपसर्गात् तः" (अ०७।४।४७)। अतः उभयत्र समानता ही है। पाणिनि जिन वर्णों का बोध 'अच्' प्रत्याहार से कराते हैं, उन वर्णों की कातन्त्रकार ने लोकप्रसिद्ध 'स्वर' संज्ञा की है। तदनुसार ही सूत्रों में शब्दों का व्यवहार हुआ है।

[विशेष वचन]

१. रूढिशब्दाश्च कृतो भवन्ति (दु० टी०, वि० प०)।

२. उपसर्गप्रतिरूपकाश्च निपाताः प्रयोगतोऽनुसर्तव्यास्तेषामुपसर्गसञ्ज्ञा नास्तीति भावः (दु० टी०)।

३. तत्र क्वचिद्ग्रहणेन लक्ष्यानुरोधस्य सूचितत्वात् (वि० प०)।

४. शाकटायनस्तु प्रदत्तमित्येतदेवादिकर्मणि, शेषास्त्वविशिष्टा इति व्याचष्टे (वि० प०)।

[रूपसिद्धि]

१. **प्रत्तम्।** प्र + दा + क्त + सि। 'प्र' उपसर्गपूर्वक 'डु दाञ् दाने' (२।८४) धातु से 'क्त' प्रत्यय, प्रकृत सूत्र से 'दा' को 'त्' आदेश तथा विभक्तिकार्य।

२. **नीत्तम्।** नि + दा + क्त + सि। 'नि' उपसर्गपूर्वक 'दा' धातु से 'क्त' प्रत्यय, 'दा' को 'त्' "ह्रस्वस्य दीर्घता" (२।५।२८) से दीर्घ तथा विभक्तिकार्य।

३. **परीत्तम्।** परि + दा + क्त + सि। 'परि' उपसर्गपूर्वक 'दा' धातु से 'क्त' प्रत्यय, तकार, दीर्घ तथा विभक्तिकार्य॥९३६।

# ९३७. यपि चादो जग्धिः [४।१।८२]

[सूत्रार्थ]

अगुण तकारादि प्रत्यय तथा यप् प्रत्यय के परे रहते 'अद्' धातु के स्थान में 'जग्धि' आदेश होता है।।९३७।

[दु० वृ०]

तकारादावगुणे यपि च परेऽदो जग्धिर्भवति। जग्धः, जग्धवान्, जग्धिः, जग्धा, प्रजग्ध्य गतः। कथमन्नम्? "अदोऽनन्ने" (४।३।७१) इति ज्ञापकात्। अगुण इति किम्? अत्तव्यम्,

**जग्धौ सिद्धेऽन्तरङ्गत्वाद् यपि चेति यदुच्यते।**

**ज्ञापयत्यन्तरङ्गाणां यपा भवति बाधनम् ।।इति अन्ये।**

तेन प्रणम्य, आपृच्छ्य, प्रदीव्य। पञ्चमोपधप्रभृतीनां दीर्घादयो न भवन्ति।।९३७।

[दु० टी०]

यपि०। इकार **उच्चारणार्थः।** जग्धावित्यादि। तकारादावगुणे जग्ध्यादेशे सिद्धे सतीत्यर्थः। यबादेशो हि समासमाश्रित्य भवन् बहिरङ्ग इत्यर्थः। अन्तरङ्गाणामिति। उभयप्राप्तौ कर्मणि षष्ठीयम्, यपेति कर्तरि तृतीया। बाधनमिति भावे, अन्तरङ्गविधयो यपा बाध्यन्ते इति भावः। तदिह न वक्तव्यम्, भाविनि भविष्यति समासे यपो विधानात्। अथ वाक्यं समासावलम्बनं वृद्धेरस्तीति तर्हि तत्र भाविग्रहणमनर्थकं स्यात् ।।९३७।

[वि० प०]

यपि०। अथ किमर्थमिदं यब्ग्रहणम् ? "**समासे भाविन्यनञः क्त्वो यप्**" (४।६।५५) इत्युभयपदाश्रितं समासमाश्रित्य भवतो बहिरङ्गत्वाद् यपः प्रागेव तकारावस्थायामन्तरङ्गे जग्ध्यादेशे सति प्रजग्ध्येति सिद्धमित्याह—जग्धावित्यादि। बहिरङ्गेणापि यपा अन्तरङ्गविधयो बाध्यन्ते इति भावः। अन्यथा जग्धिवत् पञ्चमोपधया धुटि चागुणे "**च्छ्वोः शूटौ पञ्चमे च**" (४।१।५६) इत्यादिकमपि अन्तरङ्गत्वात् तकारादौ धुटि स्यात्। ततः प्रणम्येत्यादिकं न सिध्यतीति भावः। **अन्ये केचिद्** इह तु न युक्तमेव, तत्र हि भाविग्रहणमुपदेशयबर्थमिति वक्ष्यति। ततो भाविनि समासे उपदेशावस्थायामेव क्त्वो यबिति कुतो दीर्घादिप्रसङ्गः।।९३७।

[समीक्षा]

'जग्धः, जग्धवान्, प्रजग्ध्य' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'अद्' धातु को 'जग्धि' आदेश किया गया है। पाणिनि का सूत्र है- "अदो जग्धिर्ल्यप्तिकिति" (अ० २।४।३६)। अतः उभयत्र समानता है।

[रूपसिद्धि]

१. **जग्धः**। अद् + क्त + सि। 'अद भक्षणे' (२।१) धातु से 'क्त' प्रत्यय, प्रकृत

सूत्र से 'अद्' धातु को 'जग्धि' आदेश, ''धुटां तृतीयश्चतुर्थेषु'' (३।८।८) से धकार को दकार तथा विभक्तिकार्य।

२. **जग्द्धवान्।** अद् + क्तवन्तु + सि। 'अद्' धातु से क्तवन्तु प्रत्यय, जग्धि आदेश, धकार को दकार तथा विभक्तिकार्य।

३. **जग्द्धिः।** अद् + क्ति + सि। 'अद्' धातु से 'क्ति' प्रत्यय, 'जग्धि' आदेश, ध् को द् तथा विभक्तिकार्य। ''धुटश्च धुटि'' (३।६।५१) से पूर्ववर्ती धकार का लोप हो जाने पर 'जग्धिः' रूप।

४. **जग्ध्वा।** अद् + क्त्वा + सि। 'अद्' धातु से 'क्त्वा' प्रत्यय, जग्धि-आदेश, ''घढधभेभ्यस्तथोर्धोऽधः'' (३।८।३) से तकार को धकार, ''धुटां तृतीयश्चतुर्थेषु'' (३।८।८) से पूर्ववर्ती धकार को दकार तथा विभक्तिकार्य।

५. **प्रजग्ध्य गतः।** प्र + अद् + क्त्वा - यप् + सि। 'प्र' उपसर्गपूर्वक 'अद्' धातु से 'क्त्वा' प्रत्यय, समास में क्त्वा को 'यप्' आदेश तथा विभक्तिकार्य॥९३७।

# ९३८. घञलोर्घस्लृ [४।१।८३]

**[सूत्रार्थ]**

'घञ्' तथा 'अल्' प्रत्यय के परे रहते 'अद्' धातु को 'घस्लृ' आदेश होता है॥९३८।

**[दु० वृ०]**

अदेर्घञि अलि च प्रत्यये घस्लृर्भवति। लृकार **उच्चारणार्थः।** घासः। ''**उपसर्गेऽदेरल्**'' (४।५।४२) विघसः। प्रात्तीति-प्रघसः, अचि वक्तव्यम्॥९३८।

**[दु० टी०]**

घञ०। प्रात्तीत्यादि वक्तव्यं व्याख्येयम् । घसिः प्रकृत्यन्तरमस्तीति अदेरचि प्रयोगो नास्त्यनभिधानात्। तदसत्, न हि प्रकृत्यन्तरमस्तीति ''वा परोक्षायाम्'' (३।४।८०,९०) इति प्रदर्शनात्। 'घस्मरः' इति ''**स्रदिघसां मरक्**'' (४।४।४०) इति वचनान्मरग्विषय इत्युक्तमेव। अचि तर्हि नाद्रियते इत्येवायमिह प्रयोगः। **यस्त्वाह-घसेः** प्रकृत्यन्तरस्यासर्वविषयतेति सूचनार्थं ''**वा परोक्षायाम्**'' (३।४।८०,९०) इति वचनम्। तन्मते नायं प्रयोगो दुष्यतीति भावः॥९३८।

**[वि० प०]**

घञ०। वक्तव्यमिति व्याख्येयम्। ''**स्रदिघसां मरक्**'' (४।४।४०) इति वचनाद् घसिः प्रकृत्यन्तरमस्ति। तेनेदं सिद्धम् इत्यर्थः। अदेस्त्वच्प्रत्ययो नाभिधीयते। नन्वसौ घसिः मरग्विषय एवेत्युक्तम्, तत् कथमचि तस्य प्रसङ्गः इति? तथा च ''**वा परोक्षायाम्**'' (३।४।८०,९०) इति वचनमुक्तम्, अन्यथा अदिनाऽनेन च घसिना रूपद्वयं सिद्धम्? सत्यम्, एवन्तर्हि नैष प्रयोगोऽभिधीयते इति। वक्तव्यं तु **मतान्तरेण** दर्शितम्॥९३८।

[समीक्षा]

'घासः, विघसः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'अद्' धातु को 'घस्लृ' आदेश किया गया है। पाणिनि का सूत्र है — "घञपोश्च" (अ० २।४।३८)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. **घासः**। अद् + घञ् + सि। 'अद भक्षणे' (२।१) धातु से "भावे" (४।५।३) सूत्र द्वारा 'घञ्' प्रत्यय, 'घ् - ञ्' अनुबन्धों का प्रयोगाभाव, प्रकृत सूत्र से 'अद्' को 'घस्लृ' आदेश, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधादीर्घ तथा विभिक्तिकार्य।

२. **विघसः**। विं + अद् - घस् + अल् + सि। 'वि' उपसर्गपूर्वक 'अद्' धातु से "उपसर्गेऽदेः" (४।५।४२) सूत्र द्वारा—'अल्' प्रत्यय, 'घस्लृ' आदेश तथा विभक्तिकार्य।।९३८।

## ९३९. क्त - क्तवन्तू निष्ठा [४।१।८४]

[सूत्रार्थ]

'क्त' तथा 'क्तवन्तु' प्रत्ययों की निष्ठा संज्ञा होती है।।९३९।

[दु० वृ०]

क्तक्तवन्तू प्रत्ययौ निष्ठासञ्ज्ञकौ भवतः। **शब्दस्य नित्यत्वाद्** अन्वाख्याने भाविनोर्नेतरेतराश्रयदोषः इति। शीर्णः, शीर्णवान्। भिन्नः, भिन्नवान्। निष्ठाप्रदेशाः — "**निष्ठा**" (४।३।९३) इत्येवमादयः। क्त्वा मकारान्तश्च कृत् स्वभावादसङ्ख्य इत्यव्ययमेव।।९३९।

**।। इत्याचार्यदुर्गसिंहप्रणीतायां दौर्गसिंह्यां वृत्तौ चतुर्थे कृदध्याये प्रथमः सिद्धिपादः समाप्तः।।**

[दु० टी०]

क्त०। निरन्वया स्त्रीलिङ्गा **पूर्वाचार्यसंज्ञेयं** क्तक्तवन्त्वोर्लिङ्गसंख्याभ्यां न युज्यते, स्वभावात्।।९३९।

**।।इत्याचार्यदुर्गसिंहप्रणीतायां दौर्गसिंह्यां कातन्त्रवृत्तिटीकायां चतुर्थे कृदध्याये प्रथमः सिद्धिपादः समाप्तः।।**

[वि० प०]

क्तक्त०। ननु च संज्ञाविधानमुत्पत्तिमन्तरेण न सिध्यतीति। न ह्यनुत्पन्नस्य सञ्ज्ञा नाम, नाप्युत्पत्तिविधानं सञ्ज्ञामन्तरेण शास्त्रे सिध्यतीति। न हि नामग्राहमुत्पत्तयो भवन्त्यो नामान्तरेण भवितुमर्हन्तीति। इतरेतराश्रयदोषान्नेदं संज्ञाविधानम्, नापि निष्ठेत्युत्पत्तिविधानं सिध्यतीत्याह—शब्दस्येत्यादि। सिद्धानां सञ्ज्ञासञ्ज्ञिनामन्वाख्यानमिदं नाधुनिकं करणमित्यर्थः। 'शीर्णः' इत्यादि। "रान्निष्ठातो न०" (४।६।१०१) इत्यादिना "दाद् दस्य च" (४।६।१०२) इति च निष्ठातकारस्य नत्वं फुल्लमिति।।९३९।

।। इत्याचार्यश्रीत्रिलोचनदासकृतायां कातन्त्रवृत्तिपञ्जिकायां चतुर्थे कृदध्याये प्रथमः सिद्धिपादः समाप्तः।।

[समीक्षा]

'क्त-क्तवन्तु' प्रत्यय भूतकाल में होते हैं, इसके अतिरिक्त 'क्त' प्रत्यय भाव-कर्म अर्थों में तथा 'क्तवन्तु' प्रत्यय भाव-कर्ता अर्थों में उपपन्न होता है। कातन्त्रटीकाकार आचार्य दुर्गसिंह के अनुसार यह संज्ञा पूर्वाचार्यों द्वारा विहित है—'निरन्वया स्त्रीलिङ्गा पूर्वाचार्यसंज्ञेयं क्त-क्तवन्त्वोर्लिङ्गसंख्याभ्यां न युज्यते, स्वभावात्'। काशकृत्स्नव्याकरण में इस संज्ञा के उपलब्ध होने से इसकी प्राचीनता तथा प्रामाणिकता सिद्ध होती है। काशकृत्स्नि तथा पाणिनि ने 'क्तवतु' प्रत्यय नकाररहित माना है, परन्तु कातन्त्रकार नकारघटित प्रत्यय करते हैं, जिससे 'कृतवन्तौ, कृतवन्तः' इत्यादि शब्दरूपों की सिद्धि में लाघव होता है। काशकृत्स्नि तथा पाणिनि का सूत्र है—"क्तक्तवतू निष्ठा" (का० धा० व्या०; सूत्र १११; अ० १।१।२६)। इसे अन्वर्थसंज्ञा स्वीकार किया जाता है- नितरां तिष्ठतीति निष्ठा। छान्दोग्योपनिषद् (७।२०।१) के अनुसार गुरुशुश्रूषा अर्थ में निष्ठा शब्द का प्रयोग हुआ है—"यदा वै निस्तिष्ठत्यथ श्रद्दधाति, नानिस्तिष्ठञ्श्रद्दधाति" (छा० उ० ७।२०।१)।

**'निष्ठा गुरुशुश्रूषादिः'** (शां० भा०)।

प्रक्रियासर्वस्वकार नारायणभट्ट ने 'निष्ठा' का अर्थ परिसमाप्ति या भूतकाल माना है, जिसके अनुसार 'क्त-क्तवन्तु' प्रत्यय भूतकाल में ही सम्पन्न होते हैं—

**निष्ठा परिसमाप्तिः स्यात् सा च भूतार्थयोर्द्वयोः।**
**अर्थः स्यादित्यभेदेन निष्ठाख्यौ प्रत्ययावपि।।**

(प्र० स० - समासखण्ड)।

भूतकाल में निष्ठा का विधान करने वाले पाणिनि तथा सभी प्राणियों का अनुरञ्जन करने वाले जयादित्य को राजतरङ्गिणीकार कल्हण ने समान ही माना है—

**कृतविप्रोपसर्गस्य भूतनिष्ठाविधायिनः।**
**श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम्।।**

(रा० त० ४।६३७)।

आचार्य देवनन्दी ने एतदर्थ संक्षिप्त 'त' सञ्ज्ञा की है — ''क्तक्तवतू तः'' (१।१।२८)।

[विशेष वचन]

१. शब्दस्य नित्यत्वात् (दु० वृ०)।

२. क्त्वा मकारान्तश्च कृत् स्वभावादसंख्य इत्यव्ययमेव (दु० वृ०)।

३. निरन्वया स्त्रीलिङ्गा पूर्वाचार्यसंज्ञेयं क्तक्तवन्त्वोर्लिङ्गसंख्याभ्यां न युज्यते, स्वभावात् (दु० टी०)।

४. सिद्धानां सञ्ज्ञासञ्ज्ञिनामन्वाख्यानमिदं नाधुनिकम् (वि० प०)।

[रूपसिद्धि]

१. **शीर्णः**। शॄ + क्त + सि। 'शॄ हिंसायाम्' (८।१५) धातु से 'क्त' प्रत्यय, ''ॠदन्तस्येरगुणे'' (३।५।४२) से ॠ को इर्, ''नामिनो र्वोरकुर्छुरोर्व्यञ्जने'' (३।८।१४) से दीर्घ, ''रान्निष्ठातो न०'' (४।६।१०१) से तकार को नकार, ''रषृवर्णेभ्यो नो णम०'' (२।४।४८) से नकार को णकार तथा विभक्तिकार्य।

२. **शीर्णवान्**। शॄ + क्तवन्तु + सि। 'शॄ' धातु से 'क्तवन्तु' प्रत्यय तथा अन्य कार्य पूर्ववत्।

३. **भिन्नः**। भिद् + क्त + सि। 'भिदिर् विदारणे' (६।२) धातु से 'क्त' प्रत्यय, ''दाद् दस्य च'' (४।६।१०२) से तकार-दकार को नकारादेश तथा अन्य प्रक्रिया पूर्ववत्।

४. **भिन्नवान्**। भिद् + क्तवन्तु + सि। 'भिद्' धातु से क्तवन्तु प्रत्यय तथा अन्य प्रक्रिया पूर्ववत्॥९३९।

**॥इति कृदध्याये चतुर्थे सम्पादकीयसमीक्षात्मकः प्रथमः सिद्धिपादः समाप्तः॥**



# अथ चतुर्थे कृत्प्रत्ययाध्याये द्वितीयो धातुपादः

## १४०. धातोः [४।२।१]

[सूत्रार्थ]

यहाँ से पञ्चम्यन्त धातु शब्द का अधिकार रहेगा ।।१४०।

[दु० वृ०]

धातोरिति पञ्चम्यन्तमनुकृतम् । अविशेषे धातोरित्ययमधिकारो वेदितव्यः । कर्तव्यम्, करणीयम् । धातोरिति किम् ? कुम्भता । कुम्भं करोतीति भावकर्मणोर्न तव्यादयः । "**युष्मदि मध्यमः**" (३।१।६) इति सप्तम्युक्तं नोपपदम् । उत्सर्गः सिच् सन्विषये न स्यात् । अथ "**धातोस्तोऽन्तः पानुबन्धे**" (४।१।३०) इत्यतो धातोरित्यनुवर्तते। तर्हि 'दूद्यूषति' इत्यूड् न सिध्यति ।।१४०।

[दु० टी०]

धातोः । पञ्चम्यन्तमनुक्रियते इति । पञ्चमी चात्र परदिग्योगलक्षणैव सम्भवति, न तु कारकलक्षणा । "**प्रत्ययः परः**" (३।२।१) इति वचनादनिर्दिष्टत्वात् "**क्तोऽधिकरणे च**" (४।६।५६३) इत्यवधिरस्य परिशेषोऽवशिष्यते, "**युवुझामनाकान्ताः**" (४।६।५४) इत्यादिषु प्रयोजनाभावात् । अविशेष इति । यत्र-विशिष्टा धातवः सन्ति तत्र न प्रयोजयति । यथा "**यमिमदिगदां त्वनुपसर्गे**" (४।२।१३) इति । धातोरित्यादि । ननु साधने हि तव्यादयोऽभिधीयन्ते, साधनं च क्रियाया भवति, कथं लिङ्गात् तव्यादयः? सत्यम् , स्यादयो हि साधनेऽभिधीयन्ते इति लिङ्गबहिर्भूतां क्रियामधिकृत्य तव्यादयोऽपि लिङ्गात् स्युरिति भावः । ननु लिङ्गाद् विशिष्टाद् विधीयमानाः स्यादयो भविष्यन्ति, नैतदस्ति । अविशेषेणोत्पद्यमानाः स्यादयः कथं बाधकाः ? तव्यादयस्तु भावे विधीयमाना बाधकाः स्युरिति । तर्हि कुम्भं करोतीति न प्रत्युदाहर्तव्यम्। तथा कुम्भतेत्यपि भावकर्मणोरित्यत्र भावशब्दः क्रियावचनः "**तत्वौ भावे**" (२।६।१३) इत्यत्र सामान्यवचनात् कुम्भेन भूयते इत्यर्थे कुम्भतव्यमिति प्रत्युदाहर्तव्यम्, नैवम् । धात्वधिकारेऽस्मिंस्तत्र भावशब्दः क्रियावचनः, अन्यथा यथासम्भवं युज्यते, तस्माद् "**वाऽसरूपोऽस्त्रियाम्**" (४।२।८) इति प्रत्युदाहरणं घटते ।

युष्मदीति । उपपदसञ्ज्ञायास्त्वर्थवशाद् विभक्तिविपरिणाम इति वक्ष्यति । धात्वधिकारेऽत्रेति सत्यर्थाद् विषयो धात्वधिकारमन्तरेण न स्याद् अतस्त्वं देवदत्तः पचसीति न प्राप्नोति । देवदत्तस्त्वं पचसीति सर्वदा स्यात् "**तत् प्राङ् नाम चेत्**" (४।२।३) इति वचनाद् "**वाऽसरूपोऽस्त्रियाम्**" (४।२।८) इत्यनेन च सनोऽपवादविषये सिच् न स्यादित्यर्थः।

अथेत्यादि । "**धातोस्तोऽन्तः पानुबन्धे**" (४।१।३०) इत्यतो यथासम्बन्धं युज्यते अर्थवशादिति भावः । एवं सत्यस्मिन् धात्वधिकारे यो धुडादिस्तस्मिन्नेव ऊडादेशः स्यात्र तु आख्यातिक इत्यर्थः । तथापि धात्वधिकारो न प्रयोजयति प्रकरणवशाद् धातोरेव तव्यादयः, यतस्तव्यादिविधौ धातुप्रकृतय एव विधीयन्ते । एवं मनसिकृत्य धातोरित्ययमपि वासरूपे कृतसम्बन्धादिति वक्ष्यति "**सप्तम्युक्तमुपपदम्**" (४।२।२) इत्यधिकारो भविष्यति ? सत्यम् – **प्रतिपत्तिगौरवनिरासार्थ** एव धात्वधिकार इति ॥९४०।

[वि० प०]

धातोः । पञ्चम्यन्तमनुकृतमिति । एतच्च 'काले' इति सप्तम्यन्तमनुकृतमित्यादिवद् व्याख्येयम् । अविशेष इति । सामान्ये तव्यानीयावित्यादौ । विशेषे तु "**यमिमदिगदान्त्वनुपसर्गे**" (४।२।१३) इत्यादौ धातुप्रकृतिनिर्देशेऽव्यभिचारान्नास्य प्रयोजनमस्तीति भावः। धातोरित्यादि। ननु तव्यादयः प्रत्ययाः साधने विधीयन्ते, न च क्रियामन्तरेण साधनं सम्भवतीति। साधनार्हक्रियाभिधायिन एव भविष्यति, किं धात्वधिकारेणेति? युक्तमिदम्, यद्येकपदोपात्तसाध्यसाधनसम्बन्धे निश्चयः स्यात्। न चान्तरेण धात्वधिकारमसौ भवतीति। कुम्भं करोतीत्यादौ पदान्तरोपात्तक्रियामधिकृत्य साधनाभिधायिनो लिङ्गात् तव्यादयः स्युः, यदा साधनविहिताः स्यादय इति । यद्येवम्, एते स्यादयो लिङ्गाद् विशेषविहिता बाधका भवन्तीति कथं तव्यादीनामवसरः? तदयुक्तम् । भावे स्यादीनामविषयत्वात् तव्यादय एव भवितुमर्हन्तीति । तर्हि कुम्भं करोतीति न प्रत्युदाहर्तव्यम् । इह कर्मणि विशेषविहिता द्वितीयैवास्ति बाधिका । किं च कुम्भस्य भावः कुम्भतेत्यपि न प्रत्युदाहरणं युज्यते । "**भावकर्मणोः कृत्यक्तखलर्थाः**" (४।६।४७) इत्यनेन विहितास्तव्यादयस्तत्र भावशब्दः क्रियावचन इति । अतः कुम्भेन भूयते इत्यर्थे कुम्भतव्यमिति प्रत्युदाहरणमुचितम्, तदयुक्तम् । धात्वधिकारेऽस्मिन् सति भावशब्दस्तत्र क्रियावचन इति शक्यते वक्तुम्। अन्यथा यथासम्भवमेव गम्यते । तस्माद् वासरूपन्यायेन "**तत्वौ भावे**" (२।६।१३) इत्यस्य लिङ्गविधित्वेनापवादस्य विषयत्वेऽपि पक्षे तव्यादिरुत्सर्गविधिः स्यात् । तथा कुम्भं करोतीति द्वितीयाविषये "**कर्मण्यण्**" (४।३।१) अपीति धात्वधिकारस्य प्रयोजनान्तरमाह – युष्मदीत्यादि । यदुपपदत्वं स्याद् युष्मदस्तदा "**तत् प्राङ् नाम चेत्**" (४।२।३) इति वचनात् 'त्वं पचसि' इत्येव स्यात् , 'पचसि त्वम्' इति न स्यात् । सिद्धान्ते पुनरर्थवशाद् विभक्तिविपरिणामेन वक्ष्यति धात्वधिकारेऽत्रेति । तेनाख्याते न प्रसङ्ग इति । किं च धात्वधिकारमन्तरेण "**वासरूपोऽस्त्रियाम्**" (४।२।८) इत्यपि वचनमसीमकत्वादाख्यातमपि गच्छेद् इत्याह – उत्सर्गः सिजिति । अथेति । "**धातोस्तोऽन्तः पानुबन्धे**" (४।१।३०) इत्यतो धात्वधिकारेणैते दोषा इति । यद्येवमस्मिन् धात्वधिकारे यो धुडादिर्विहितस्तस्मिन्नेव "**च्छ्वोः शूटौ पञ्चमे च**" (४।१।५६) इति स्यात् , न त्वाख्यातविहित इति । अतः कार्यो धात्वधिकारः इति ॥९४०।

[क० च०]

धातोः। धातोरिति पञ्चम्यन्तानुकरणं गम्यमानेतिशब्देनाभिधीयमाने प्रथमार्थे

शब्दरूपम्, न तु पदं विभक्तेरभावात्। तच्च प्रकृतिविभक्त्योः समुदाये भवति। ननु स्वस्मिन् फलशून्यत्वे सत्युत्तरत्र फलाभिसम्बन्धो **ह्यधिकारः।** ततोऽधिक्रियमाणत्वात् प्रथमैव युज्यते। यथा कृदित्याह — धातोरित्यादि। एतेन पञ्चम्यन्तशब्दरूपमेवानुकृतं न पञ्चम्यन्तो निर्देशः। **अयमर्थः** – इतिशब्दो **द्विविधः** – लिङ्गार्थाविर्भावकः पदार्थाविर्भावकश्च। तत्र लिङ्गार्थाविर्भावको यथा गवित्ययमाह। पदार्थाविर्भावको यथा गौरित्याह। 'दशरथ इत्युदाहृतः' इत्यत्र तु पदार्थाविर्भावक इति। धातोरिति पञ्चम्यन्तानुकरणशब्दरूपात्र प्रथमा, गम्यमानेनेतिशब्देन तदर्थस्याभिधानात् , यथा —'काले' इति।

ननु किमर्थं पञ्चम्यन्तानुकरणं प्रथमैवास्ताम् अधिकारत्वात्। नैवम् , तव्यानीयावित्यादावर्थस्याघटनात्। अथार्थवशाद् **विभक्तिविपरिणामो** भविष्यतीति चेद्, गौरवापत्तिः स्यात्। काले इत्यत्राप्येतदुक्तम्। अत एव **पञ्ज्याम्** उक्तम् – काल इत्यादिवदिति। अथ सप्तम्युक्तमित्यादौ विभक्तिविपरिणामस्तु अवश्यं कर्तव्यः, अर्थवशात् । तत् कथं गौरवापत्तिः, अतः प्रथमैवास्ताम् अधिकारत्वात्? सत्यम्, "**सप्तम्युक्तमुपपदम्**" (४।२।२) इत्येकसूत्र एव विभक्तिविपरिणामः कर्तव्यः। प्रथमायां तु प्रतिसूत्र इति महदेव गौरवम्। नन्वनुकरणं धातोरित्यस्यैतत्स्वरूपं शब्दरूपमर्थः। ततस्तव्यानीयावित्यत्र कथमन्वयः? नैवम्, अर्थानुकरणमिदं ततः पञ्चम्यन्तस्य धातोर्योऽयमर्थः सोऽनुकरणस्यापीति अविशेष इति **वृत्तिः।** ननु कथमेतद् गत्यर्थाकर्मकेत्यादौ विशेषविधानेऽपि अस्याधिकारस्य सम्बन्धात्? न च वाच्यम् , किन्त्वत्रानेनाधिकारेण 'शयितः' इत्यादौ इटोऽनुपपत्तेः । तत्र हि धातुसंज्ञामाश्रित्य यदसार्वधातुकं तस्मिन्नेवेड् भवतीत्युक्तम् । अत एव 'जुगुप्सते, तितिक्षते, मीमांसते' इत्यादौ न भवति । नैवम् , गत्यर्थाकर्मकेत्यादि न विधिसूत्रम् , किन्तर्हि अर्थनियामकम्, विधिसूत्रं तु "**निष्ठा**" (४।३।९३) इति, तत्र धात्वधिकारोऽस्त्येवेति।

**पञ्जिका** – ननु तव्यादय इति। साधने कर्मणीत्यर्थः। एतदुक्तं भवति – साधने एते विधीयन्ते, साधनं च क्रियामन्तरेण न सम्भवतीति साध्यसाधनसम्बन्धे (क्रियाकारकसम्बन्धे) सति धातोरुपस्थितत्वात् तस्मादेव भवन्तीति **पूर्वपक्षः।**

ननु भावेऽप्येते विधीयन्ते, तत् कथं न तत्र पूर्वपक्षः कृतः ? सत्यम् , साधन **इत्युपलक्षणं** भावेऽपि बोद्धव्यम् , तत्र भावेऽयं पक्षः । भावशब्दाः क्रियाभिधायिनो धातोरेव भविष्यन्तीति युक्तमिदमिति उपहासपरोऽयं ग्रन्थः । **अयमभिप्रायः**-साधनस्य साध्यापेक्षत्वात् साध्यसाधनसम्बन्धे तव्यादयो भविष्यन्तीति, साध्यसाधनसम्बन्धस्तु न केवलमेकपदे, किन्तर्हि पदद्वयेऽपि । यथा कुम्भं करोतीति । अथ एकपदोपात्त एव साध्यसाधनसम्बन्धे भविष्यन्ति पदद्वयोपात्ते न भविष्यन्तीति न निश्चयः, किन्तु धात्वधिकारं विना सामान्येन स्यात् । कुम्भतेति । एतदर्थं क्रियमाणं कुम्भं करोतीत्यपि विषयीकरोतीत्याह – किञ्चेति । तत्र चेति । **एतेनायमर्थः**—भावकर्मणोरित्यत्र भावशब्दः क्रियावचनः। "**तत्वौ भावे**" (२।६।१३) इत्यत्र तु प्रवृत्तिनिमित्तवचनः कथं तदुभयोर्भावविषये

तव्यादीनामवसरो भिन्नविषयत्वादिति, किन्तु तदेव प्रत्युदाहरणं दातुमुचितम् , यद् भावशब्दस्य क्रियावचने सम्भवति ।

अथ तदेव किमित्याह – कुम्भतव्यमिति। ननु भावशब्दस्य क्रियावाचित्वे धातोरेव भवितुमर्हति, कुतोऽयं निश्चयः किन्तु कुम्भशब्दात् कुम्भकर्तृके भावे क्रियायामभिधेयायां सम्भवति को विवादः। स्थितौ तु धात्वधिकाराद् भावकर्मणोरित्यनेन धातोः पर एव भवन्तीति। इदानीं नाम्नोऽपि स्युरिति। अथ कुम्भतव्यमिति कथमुक्तम्। अत्रापि तृतीयैवास्ति बाधिकेति। यथा कुम्भं करोतीति। अत्र द्वितीया बाधिका? सत्यम्, तस्माद् वासरूप-इत्यादिवक्ष्यमाणेन ग्रन्थेनास्य पक्षस्य सिद्धान्तः, अधुना तदनाश्रित्यान्यविचारः कृतः। अथ तदनाश्रित्य विचारो यद्यग्रतः कर्तव्यस्तदा कुम्भतेत्यत्र तप्रत्यय एवास्ति बाधक इति कुतो भावकर्मणोरित्यादिपङ्क्तेरुद्भावनासम्भवः। तदयुक्तमिति। कुम्भेन भूयते इत्येव युक्तमिति यदुक्तं तदयुक्तमित्यर्थः। किन्तु कुम्भतव्यम्, कुम्भतेति कुम्भं करोतीति च सर्वं युक्तमित्यर्थः। एतेन कुम्भतव्यमिति च प्रत्युदाहरणान्तरं बोध्यम्।

अन्यथेति । धात्वधिकारं विनेत्यर्थः । यथासम्भवं प्रवृत्तिनिमित्तवचनः क्रियावचनश्च भावशब्द इत्यर्थः । अथ कुम्भं करोतीत्यत्र द्वितीया बाधिकेति, तथात्रापि **"तत्वौ भावे"** इत्येवास्ति बाधक इत्याह – तस्मादिति । अथेत्यादि । **हेमस्तत्र "ओदौद्भ्यां कृद् यः स्वरवत्"** (४।१।३१) इत्यत्र स्वरवद्ग्रहणं **सुखार्थमित्यर्थः** । ननु चाशुद्धमेतद् इह कृद्ग्रहणादन्यत्र सामान्यमवगम्यते इत्युक्तम् , तेन **"प्रत्ययलुकां चानाम्"** (४।१।४) इत्यत्रापि सामान्यमवगम्यते इदानीं कृद्ग्रहणस्येदमेव फलम् भविष्यति तस्माद् दुष्टमेव **हेमोक्तम्** । अत्र **कश्चित्** तत्र **सुखार्थ**मिति तस्य तेन समासः इत्यत्र सुखार्थं धातोरिति सूत्रमिति व्याख्याय **हेमोक्तं** शुद्धमित्याद्रियते । तथा च तत्रोक्तम् – धातोरित्ययमपि वासरूपे कृत्सम्बन्धादिति ।।९४०।

[समीक्षा]

प्रत्यय ४ प्रकार के होते हैं — १. स्यादि, २. त्यादि, ३. कृत् तथा ४. तद्धित। इनमें से स्यादि (सुप्) तथा तद्धित प्रत्यय तो लिङ्ग = प्रातिपदिक से होते हैं, जबकि त्यादि (तिङ्) एवं कृत् प्रत्ययों का विधान धातु से किया गया है । एतदर्थ दोनों ही शाब्दिक आचार्यों ने धातु का अधिकार किया है । पाणिनि का सूत्र है – "धातोः" (अ० ३।१।९१) । पाणिनीय व्याकरण में इस धातु के अधिकार में दोनों प्रकार के प्रत्ययों का विधान किया गया है, परन्तु कातन्त्रव्याकरण में त्यादि प्रत्ययों का विधान शर्ववर्मा ने तथा कृत्प्रत्ययों का विधान वररुचि ने किया है । अतः यह अधिकार दो बार नहीं किया गया है । कृत्प्रत्ययों के लिए वररुचि ने धात्त्वधिकार किया है, परन्तु शर्ववर्मा ने त्यादि प्रत्ययों का निर्देश काल के अधिकार में रखा है — "काले" (३।१।१०)। अतः सामान्यतया उभयत्र समानता ही है ।

[विशेष वचन]

१. स्यादयो हि साधनेऽभिधीयन्ते इति लिङ्गबहिर्भूतक्रियामधिकृत्य तव्यादयोऽपि लिङ्गात् स्युरिति भाव: (दु० टी०) ।

२. भावशब्द: क्रियावचन: (दु० टी०) ।

३. प्रकरणवशाद् धातोरेव तव्यादय: (दु० टी०) ।

४. प्रतिपत्तिगौरवनिरासार्थ एव धात्वधिकार: (दु० टी०) ।

५. पदान्तरोपात्तक्रियामधिकृत्य साधनाभिधायिनो लिङ्गात् तव्यादय: स्यु: (वि० प०) ।

६. धातोरिति पञ्चम्यन्तानुकरणम् (क० च०) ।

७. स्वस्मिन् फलशून्यत्वे सति उत्तरफलाभिसम्बन्धोऽधिकार: (क० च०) ।

८. इतिशब्दो द्विविध: – लिङ्गार्थाविर्भावक: पदार्थाविर्भावकश्च (क० प०) ।

९. साधने तव्यादयो विधीयन्ते, साधनं च क्रियामन्तरेण न सम्भवति (क० च०)।

१०. भावकर्मणोरित्यत्र भावशब्द: क्रियावचन:, "तत्वौ भावे" इत्यत्र तु प्रवृत्तिनिमित्तवचन: (क० च०) ।

११. स्वरवद्ग्रहणं सुखार्थम् (क० च०) ।

[रूपसिद्धि]

१. **कर्तव्यम्** । कृ + तव्य + सि । 'डु कृञ् करणे' (७।७) धातु से धात्वधिकार में "तव्यानीयौ" (४।२।९) सूत्र द्वारा 'तव्य' प्रत्यय तथा विभक्तिकार्य।

२. **करणीयम्** । कृ + अनीय + सि । 'डु कृञ् करणे' (७।७) धातु से धात्वधिकार में 'अनीय' प्रत्यय तथा विभक्तिकार्य ।।९४०।

## ९४१. सप्तम्युक्तमुपपदम् [४।२।२]

[सूत्रार्थ]

धात्वधिकार में पठित सप्तम्यन्त पद की उपपद संज्ञा होती है ।।९४१।

[दु० वृ०]

धात्वधिकारेऽत्र सूत्रे सप्तम्या निर्दिष्टमुपपदसंज्ञं भवति । "कर्मण्यण् , नाम्नि स्थश्च" (४।३।१, ५) इत्येवमादय: । उक्तमिति किम् ? सप्तम्यन्तमात्रे मा भूत् – स्तम्बेरम:, कुरुचर: ।।९४१।

[दु० टी०]

सप्त० । इह धात्वधिकारे क्वचिदधिकरणसप्तम्य:– **"कर्तरि कृत:, भावे, करणाधिकरणयोश्च"** (४।६।४६; ५।३, ९५) इति । क्वचिद् भावसप्तम्य: – "**कर्मण्यण्, करणेऽतीते यज:, शीङोऽधिकरणे च**" (४।३।१, ८१, १८) । अत्र या अधिकरणसप्तम्यस्तासामन्यत्र प्रयोगात् कार्यं प्रति निमित्तत्वमसन्दिग्धम्। यास्तु

भावसप्तम्यस्तत्र सन्देहः – किमेताः कार्यविधानस्योपलक्षणं कर्मणि सति अण् भवति? आहोस्विदुपपदसंज्ञाया लिङ्गमात्रमिति? एकस्मिन्निर्देशे उभयथा व्यापारस्यासम्भवात्। उपपदसंज्ञायाः साक्षाद् उपादानान्निमित्तसप्तम्यो ज्ञेयाः। आवर्तन्ते वा. अविशेषविधानाद् यत्र कर्मणि सत्यण्प्रत्ययस्तदोपपदसंज्ञा भविष्यतीति धातोरित्यर्थवशात् सप्तम्यन्तत्वेन विषयः कथ्यते, प्रत्ययानां बाहुल्यात्।

धातोरिति पञ्चमी निर्दिष्टा । कर्मण्यण् इत्यादिभिर्योगैरेकवाक्यताऽस्य सूत्रस्येति दर्शितम् । तदा कर्मण्यण् इत्यस्य सप्तमीनिर्देशादुपपदसंज्ञा, कर्मणि सत्यण् भवति उभयं सिध्यति अधिकारादप्येतत्सम्भव इति । उपपदसञ्ज्ञाधिक्रियते इति । कार्यकालं संज्ञा-परिभाषेयं यथोद्देशं संज्ञा परिभाषेति व्याख्यातम् । उक्तमित्यादि । सप्तम्युपपदम् इत्युच्यमाने यदेव सप्तम्यन्तं श्रूयते प्रत्ययलोपलक्षणेन वा, तदेव स्यादिति । उक्तग्रहणे सति सप्तमीग्रहणेन सप्तम्यन्तमुपस्थाप्य प्रत्यासत्तेः शास्त्रदृष्टं न लोकप्रयोगनिपातीति । तत्र च शब्दान्तरस्य प्रवृत्त्यभावादर्थो गृह्यते, यथा "**कर्मण्यण्**" (४।३।१) इति कुम्भादिशब्दाः । इह तु 'कर्णेजपः, स्तम्बेरमः' इति "**स्तम्बकर्णयो रमिजपोः**" (४।३।१६) इत्यस्य सप्तम्यन्तस्य स्तम्बकर्णशब्दौ सप्तम्यन्तावमू इति सप्तम्यन्तग्रहणेन गृह्येते ।

उपोच्चारि पदम् **उपपदम्** इति उपोच्चारि इत्युपकारीति गृह्यते क्रियायाश्चोपकारि **द्वयमपि** सम्भवति वाक्यार्थः पदार्थश्चेति । तत्र वाक्यार्थनिरासार्थं पदेन व्यवच्छिद्यते पदावधौ यदुपकारि क्रियाया एव धात्वनुवृत्त्या धात्वर्थं परिगृह्यते क्रियायाः साध्यसाधनं प्रति नियमाद् योग्यसम्बन्धमेवोपपदसंज्ञं भवतीति । तेन 'पश्य कुम्भम् , करोति घटम्' इत्युपपदसञ्ज्ञा न भवति न्यायप्राप्तान्वर्थता प्रदर्श्यते । कार्यकालपक्षेऽपि सम्बन्ध एव कर्मणीति । तथा तत्रैवोदाहरिष्यामः । उपपदप्रदेशाः "**दीर्घस्योपपदस्य**" (४।१।२०) इत्येवमादयः ।।९४१।.

**[वि० प०]**

सप्त० । अथ सप्तम्युपपदम् इत्यास्ताम् । अर्थात् सप्तम्यन्तमुपपदम् भविष्यतीति किमुक्तग्रहणेन ? तदयुक्तम् , एवं सति प्रयोगे साक्षात् प्रत्ययलोपलक्षणेन च सप्तम्यन्तं तदेवोपपदं स्यात् । यथा – 'स्तम्बेरमः, कुरुचरः' इति । उक्तग्रहणप्रयत्नेन तु यदेव सूत्रे सप्तम्या उक्तं निर्दिष्टं तदेवोपपदं न प्रयोगनिपातीत्याह-उक्तमित्यादि । मात्रग्रहणप्रयत्नेन **कुम्भं करोति कुम्भकारः**, कच्छेन पिबतीति **कच्छपः** इत्यादौ प्रयोगे द्वितीयाद्यन्तस्य न स्यादिति सूच्यते । "**स्तम्बकर्णयो रमिजपोः**" (४।३।१६) "**चरेष्टः**" (४।३।१९) इति अच् – टौ प्रत्ययौ ।।९४१।

[क० च०]

सप्तम्युक्तम्० । अत्र क्वचिदधिकरणसप्तम्या, यथा "**कर्तरि कृतः, भावे करणाधिकरणयोश्च, भावकर्मणोः कृत्यक्तखलर्थाः**" (४।६।४६; ५।३, ९५; ६।४७)। क्वचिद् भावसप्तम्या "**कर्मण्यण्, करणेऽतीते यजः, शीङोऽधिकरणे च**" (४।३।१, ८१,१८) इत्यादि। तत्र कस्यात्र ग्रहणम्? अधिकरणसप्तम्युक्तग्रहणे "देवदत्तः पाचकः' इत्येव स्यात्, न तु 'पाचको देवदत्तः' इति "कर्तरि कृत्" इति कर्तृरूपसंज्ञायां प्राग् धातोरेव समासः स्यात् । भावसप्तम्युक्तग्रहणे तु इष्टसिद्धिरेव केवलं तत्र कारणाभावात्? सत्यम्। विशेष्यविशेषणभावस्य प्रयोक्तुरायत्तत्वाद् भावसप्तम्युक्तमेव गृह्यते इति सूत्रे सप्तम्या उक्तं निर्दिष्टं यत् तत् सप्तम्यन्तनिर्दिष्टं प्रयोगे भवतु न भवतु वेति नियमो नास्तीति नग्नङ्करणम् इत्यादावप्युपपदत्वं सिद्धम्। अन्यथा साध्यत्वात् प्रयोग एव सप्तम्यन्तता स्यात्।

उपोच्चारि पदमुपपदम् इति, किं वा उपकारि पदम् उपपदमिति। तत्राद्यस्य ग्रहणे '**कर्तुं वा कश्चिदन्तर्वसति वसुमतीदक्षिणः सप्ततन्तुः**' इत्यादौ **मुरारि**प्रयोगे कथं वसतीत्युपपदस्य समीपोच्चारित्वाभावात् तुम्? सत्यम्। व्याप्तिन्यायाद् उपकारि पदम् **उपपदम्** इत्येव उपकारित्वं तु सर्वत्रैव विद्यते इति व्यवधानेऽपि भवति । ननु धातोरित्युक्तं विभक्तिविपरिणामे गौरवं स्यादिति पञ्चम्यन्तानुकरणम् , तत् कथं सप्तम्यन्ततया विपरिणामः क्रियते। सत्यम्, प्रतिसूत्रे विपरिणामे गौरवं स्यात्, इदानीमत्रैवेति ।।९४१।

[समीक्षा]

कृत्संज्ञक प्रत्यय धातुओं से विहित हैं, परन्तु कुछ प्रत्यय पदान्तरपूर्वक धातुओं से हों, तदर्थ 'उपपद' संज्ञा दोनों ही व्याकरणों में की गई है । पाणिनि का सूत्र है – "तत्रोपपदं सप्तमीस्थम्" (अ० ३।१।९२) । तदनुसार 'कुम्भकारः' में 'कुम्भ' की उपपदसंज्ञा होती है और उपपद संज्ञा के कारण "उपपदमतिङ्" (अ० २।२।१९) से समास किया जाता है । महासञ्ज्ञा होने के कारण इसे अन्वर्थ माना जाता है – उप=समीपे उच्चारितम् उपकारि पदं वा उपपदम् । अर्थात् धातु के समीप में उच्चरित होने वाले या धातु का उपकार करने वाले पद को 'उपपद' कहते हैं। अन्वथ होने के कारण 'महान्तं कुम्भं करोति' में 'महान्तम्' की उपपद संज्ञा नहीं होती है । इस प्रकार उभयत्र समानता ही है।

[विशेष]

१. क्रियायाश्चोपकारि द्वयमपि सम्भवति वाक्यार्थः पदार्थश्चेति (दु० टी०) ।

२. उपोच्चारि पदमुपपदम् , किं वा उपकारि पदम् उपपदमिति (क० च०) ।

३. व्याप्तिन्यायाद् उपकारिपदम् उपपदम् इत्येव, उपकारित्वं तु सर्वत्रैव विद्यते इति व्यवधानेऽपि भवति (क० च०) ।

४. प्रतिसूत्रे विपरिणामे गौरवं स्यात् (क० च०) ॥९४१।

# ९४२. तत् प्राङ् नाम चेत् [४।२।३]

[सूत्रार्थ]

उपपदसंज्ञक शब्द यदि स्याद्यन्त (नाम) पद हो तो उसका प्रयोग धातु से पूर्व में होता है ॥९४२।

[दु० वृ०]

तदुपपदं नाम चेद् धातोः प्रॉग् भवति । कुम्भकारः, ग्रामस्थः । नामेति किम्? भोक्तुमिच्छति ॥९४२।

[दु० टी०]

तत्० । अनन्तरत्वादुपपदमेवावसीयते । तद्ग्रहणं मन्दधियां **सुखप्रतिपत्त्यर्थम्**। तदा चेद्ग्रहणमपि चेच्छब्दोऽत्राव्ययो यद्यर्थे । **शब्दो द्विविधः** – नित्यः कार्यश्च । तत्र कार्यपक्षे पूर्वनिपात उच्यते । अत्रापि प्रवाहनित्यतास्तीति मनसिकृत्य प्रत्याख्यास्यते। न हि कारकुम्भ इति प्रयोगो दृश्यते, तस्मा**न्मन्दमतिबोधनाय** पूर्वनिपात इति भावः ॥९४२।

[क० च०]

तत्० । अथ प्रागिति । प्रपूर्वादञ्चेः क्विपि सप्तमीपञ्चमीप्रथमान्ताद् दिग्देशकालवृत्तेरस्तातिः, तस्माद् अञ्चतेर्लुगित्यनेनास्तातेर्लुक्यव्ययात् सेर्लोपो लुकि व्यञ्जनवदित्यनेन व्यञ्जनवत्कार्येऽनुषङ्गलोपे गत्वे कत्वे च प्राक्शब्दोऽयमव्ययः । तद्ग्रहणं च **सुखार्थम्** ॥९४२।

[समीक्षा]

'कुम्भकारः' में 'कुम्भम्' पद के तथा 'ग्रामस्थः' में 'ग्रामे' पद के पूर्वनिपात का विधान आवश्यक न होने पर भी यहाँ जो किया गया है उसे मन्दमति वालों के बोधनार्थ माना जाता है । पाणिनि ने उपपदसंज्ञा का पूर्वनिपात किया है, यदि व्याख्यानबल से उपपद को उपसर्जन भी मान लिया जाए तो पाणिनि की तरह उसके पूर्वनिपात का औचित्य हो सकता है । उपसर्जनसंज्ञक का पूर्वनिपात करने के लिए पाणिनि का सूत्र है — "उपसर्जनं पूर्वम्" (अ० २।२।३०) । इस प्रकार साक्षात् उपपदसंज्ञक का पाणिनीय व्याकरण में पूर्वनिपात निर्दिष्ट न होने से प्रकृत विधान शर्ववर्मा का विशेष कार्य माना जाता है ।

[विशेष वचन]

१. तद्ग्रहणं मन्दधियां सुखप्रतिपत्त्यर्थम् (दु० टी०, क०च०) ।

२. शब्दो द्विविध:-नित्य: कार्यश्च । --- अत्रापि प्रवाहनित्यतास्तीति (दु०टी०)।

३. मन्दमतिबोधनाय पूर्वनिपात: (दु०टी०) ।

[रूपसिद्धि]

१. **कुम्भकार:** । कुम्भ + अम् + कार + सि । कुम्भं करोति । 'कुम्भम्' के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से "कर्मण्यण्" (४।३।१) सूत्र द्वारा 'अण्' प्रत्यय, "सप्तम्युक्तमुपपदम्" (४।२।२) से 'कुम्भम्' की उपपद संज्ञा, प्रकृत सूत्र से उसका प्राक् प्रयोग, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से ऋ को वृद्धि – आर्, "कर्तृकर्मणो: कृति नित्यम्" (२।४।४१) से कर्म में षष्ठी विभक्ति, षष्ठीतत्पुरुष समास, लिङ्गसंज्ञा तथा विभक्तिकार्य ।

२. **ग्रामस्थ:** । ग्राम + ङि + स्था + क + सि । 'ग्रामे' इस सप्तम्यन्त पद के उपपद में रहने पर 'ष्ठा गतिनिवृत्तौ' (१।२६७) धातु से "नाम्नि स्थश्च" (४।३।५) सूत्र द्वारा 'क' प्रत्यय तथा अन्य प्रक्रिया पूर्ववत् ।।९४२।

## ९४३. तस्य तेन समास: [४।२।४]

[सूत्रार्थ]

उपपदसंज्ञक नाम = स्याद्यन्त पद तथा कृत्प्रत्ययान्त धातु के साथ समास होता है ।।९४३।

[दु० वृ०]

तस्य नामोपपदस्य तेन कृदन्तेन धातुना सह समासो भवति । गोद:, जलजम्, क्रोधजम् । यथा हि प्रादय: क्रियाद्योतका उपसर्गा इति धातो: प्रागेव सिद्धास्तथा ऊर्यादयोऽपि क्रियायोगे कृभ्वस्तिभ्य एव प्राक् सिद्धा: । प्रकृत्य, ऊरीकृत्य, ऊररीकृत्य। तथा शुक्लीकृत्य, पटपटाकृत्य । नाम्नां युक्तार्थत्वात् समासोऽपि सिद्ध एव । **यथाभिधानम**ेते त्रयोऽपि योगा: वक्ष्यमाणाभ्यां सह **प्रपञ्चार्था** एव । धातोरित्ययमपि वासरूपे कृत्सम्बन्धादिति ।।९४३।

[दु० टी०]

तस्य० । नाम्नामित्यादि । कुम्भस्य कार: **कुम्भकार** इति षष्ठीसमासोऽपि भविष्यतीति भाव: । तुल्यमेव फलम् , तर्हि वाक्यमपि स्यात् । यथा 'राज्ञ: पुरुष:' इति ? सत्यम् । वर्णस्थित्या यत्र विग्रहवाक्यं नास्ति स **नित्यसमास:**। एवं षष्ठीसमासेऽपि नास्ति वाक्यमित्याह–यथाभिधानमिति। षष्ठीसमासस्तु स्याद्युत्पत्तिप्रतीक्षया बहिरङ्ग: प्रक्रियागौरवं जनयतीति वचनमिदमुच्यते । कथं कारको गत: **"वुणतुमौ क्रियायां क्रियार्थायाम्"** (४।४।६९) इति वुण् , ततो गत: इत्युपपदम्, किन्तु क्रियावाचक इत्युदाह्रियते, तदसत् । द्रव्यवाचकत्वाद् गतशब्दस्य तर्हि वुण् गुणीभूतगतक्रियावशाद् यद्येवमुपोच्चारि पदम् **उपपदम्** इत्यन्वर्थतया

गमेः प्रकृतित्वादुपपदत्वं नास्तीति "**वुण्तृचौ**" (४।२।४७) इत्यनेन कर्तरि वुण् प्रतिपत्तव्यः। "**कर्तृकर्मणोः कृति**" (२।४।४१) इत्यत्र कृद्गुणीभूतक्रियापेक्षमेव कर्मकर्तृत्वम्। एवं कारकस्य गतिः, कारकस्य व्रज्येति गत्यादिशब्दा हि सकृत्क्रमं निवृत्तसाधनव्यापारमर्थमाचक्षाणाः कथं क्रियावचनाः, यत्र "**स्त्रियां क्तिः**" (४।५।७२) भावे व्रजयजोः क्यप्। **द्विविधो भावः**– बाह्यः आभ्यन्तरश्च। आभ्यन्तरः साध्यताक्रम-धर्मरूपतायुक्तः, बाह्यस्तु सिध्यतामेव कृतः प्रकाशयति, तच्च द्रव्यकल्पनैवेत्याह — **कृदभिहितो भावो द्रव्यवदिति**। तस्य ग्रहणं किमर्थम् अनन्तरमुपपदं षष्ठ्यन्ततया सम्पत्स्यते। अथ तेनोपपदेनेत्यपि सम्भाव्येत, का क्षतिः। अर्थाद् धातोरेव भविष्यतीति यत् तद्ग्रहणं तन्मन्दमतिबोधनार्थम् ॥९४३।

[वि० प०]

तस्य०। गोद इति। गां ददातीति "**आतोऽनुपसर्गात् कः**" (४।३।४) इह भविष्यत्कृदपेक्षया "**कर्तृकर्मणोः कृति नित्यम्**" (२।४।४१) इति वचनाद् गोशब्दात् कर्मणि विहितायाः षष्ठ्याः समास इति। नित्यसमासश्चायमिति वाक्यं नास्ति। गां ददातीति वाक्यान्तरेणार्थः कथ्यते। तथा जले जातं क्रोधाज्जातमिति विगृह्य "**सप्तमीपञ्चम्यन्ते जनेर्डः**" (४।३।९१) इति डप्रत्ययः। यथा हीत्यादि। एतेन उपसर्गाः प्रादयः क्रियायोगे ते च प्राग् धातोरिति च। यथोपसर्गान् प्रति लक्षणं नोक्तम्। एवमित्युक्तम् —

**निपाताश्चादयो ज्ञेया उपसर्गाश्च प्रादयः।**
**द्योतकत्वात् क्रियायोगे लोकादवगता इमे ॥**

तथा ऊर्यादिच्विडाचोऽपि। प्राग्भावं प्रति सूत्रं न वक्तव्यमिति दर्शितम्। इहापि **लोकत एव सिद्धत्वादित्यभिप्रायः**। नाम्नामित्यादि। कुम्भस्य कारः **कुम्भकार** इति षष्ठीसमासेनापि सिद्धो भवतीति भावः। यद्येवं वाक्यमपि स्यात्। यथा राज्ञः पुरुष इत्याह–यथेति। अभिधानमिति। कृष्णसर्पादिवन्नित्यसमासः एव भविष्यतीति भावः। तथोपपदसञ्ज्ञापि न कर्तव्या। तन्निबन्धनः पूर्वनिपातोऽप्यनभिधेय इति। **द्विविधो हि शब्दः** – नित्यः कार्यश्चेति। तत्र कार्यपक्षे पूर्वनिपातोऽभिधीयते, न तु नित्यपक्षे स्वभावसिद्धत्वात्। कार्यपक्षेऽपि संसारस्येवानादित्वात् **प्रवाहनित्यता**। यदाह **भर्तृहरिः**–

**नित्यत्वे कृतकत्वे वा येषामादिर्न विद्यते।**
**प्राणिनामिव सा चैषा व्यवस्था नित्यतोच्यते॥**

(वा० प० १।२८) इति।

न च कारकुम्भ इति प्रवाही शब्दो लोके प्रयुज्यते इति। परावपि योगावनर्थकाविति, तथा यथाभिधानं समासस्याभिहितत्वाद् 'रामो जामदग्न्यः' इत्यादिवदव्ययकृदन्तेनामन्त्रवर्जितेन समासो न भविष्यति, तृतीयादीनां च पक्षे वाक्यमपि भविष्यतीत्याह-एते त्रयोऽपि योगा वक्ष्यमाणाभ्यां सह **प्रपञ्चार्था** इति। किञ्च धात्वधिकारोऽपीह न प्रयोजयति। नन्वस्य प्रयोजनत्रयमुक्तं तत् कथं स्यात्? उच्यते, न तावल्लिङ्गादयो वक्ष्यमाणेषु हि प्रायेण धातुप्रकृतय

एव श्रूयन्ते इति धातुप्रकरणत्वात् कुतो लिङ्गाद् विधिः । यच्च युष्मदीत्युक्तं तदुपपदसंज्ञाप्रत्याख्यानेनैव निरस्तावकाशं न दोषमावहतीति । अथ **"वाऽसरूपोऽस्त्रियाम्"** (४।२।८) इत्यस्य विद्यमानत्वादुपसर्गः सिच् सण्विषये न स्यादिति चेन्नैवम् , वाऽसरूपविधौ कृत्सम्बन्धः करिष्यते, तत्प्रकरणत्वाद् इत्येतदेवाह-धातोरित्ययमपीति ॥९४३।

**[क० च०]**

तस्य० । तेन समास इत्युक्तेऽर्थादुपपदस्य भविष्यति, किं तस्येत्यनेन चेत् ? **सुखार्थम्** । यद् वा उभयमपि **सुखार्थम्,** समास इत्युक्तेऽन्तरङ्गत्वादुपपदस्येति गम्यते, उपपदलाभे च कृदन्तधातुरुपस्थित एव । तथा हीति । साधने दृष्टान्तोऽयम् । यथा प्रादय उपसर्गा इति धातोः प्रागेव सिद्धाः । उप समीपे धातोः समीपे सृज्यते इत्य**न्वर्थबलाद्** धातोः प्रागेव सिद्धाः इत्यर्थः । अथ धातोः प्रागेव सिद्धत्वे कुतो निश्चयः कृतः, अन्यस्मात् प्राक् कथं न स्युरिति क्रियाद्योतका इति व्यस्तेनान्वयः । तथेति । यथा सूत्राभावात् प्रादीनामुपसर्गत्वाद् धातोः प्राङ् निपातः, तथा सूत्राभावाद् ऊर्यादीनामपीति भावः । **पञ्जिका** – कर्तृकर्मणोरिति । कृतीति विषयसप्तमीस्वीकारादित्यर्थः । ननु भविष्यत्कृदपेक्षया षष्ठीसमासेन किं द्वितीयासमास एवास्ताम् , विशेषाभावात् ? सत्यम् । असमासे दोषः। यथा कटस्य कारक इति । अन्यथा प्रथमं द्वितीयायां सत्यां प्रवृत्तस्य निवृत्तेरभावात् कटं कारक इत्येव स्यात् । तस्मात् कर्तृकर्मणोरित्यादिसूत्रस्य वैयर्थ्यात् कृतीति **विषयसप्तमी** परिकल्प्यते ॥९४३।

**[समीक्षा]**

'कुम्भकारः, गोदः, जलजम्' इत्यादि शब्दों के सिद्ध्यर्थ उपपदसंज्ञक 'कुम्भम्, गाम्, जले' इत्यादि शब्दों का 'कार-द-ज' इत्यादि कृत्प्रत्ययान्त धातुओं का समासविधान दोनों ही व्याकरणों में किया गया है । पाणिनि का सूत्र है – "उपपदमतिङ्" (अ० २।२।१९) । अतः उभयत्र समानता ही है ।

**[विशेष वचन]**

१. प्रादयः क्रियाद्योतकाः उपसर्गाः (दु० वृ०) ।
२. नाम्नां युक्तार्थत्वात् समासोऽपि सिद्ध एव (दु० वृ०) ।
३. वर्णस्थित्या यत्र विग्रहवाक्यं नास्ति स नित्यसमासः (दु० टी०) ।
४. द्विविधो भावः – बाह्य आभ्यन्तरश्च (दु० टी०) ।
५. अर्थाद् धातोरेव भविष्यतीति यत्तद्ग्रहणं तन्मन्दमतिबोधनार्थम् (दु० टी०) ।
६. अभिधानमिति । कृष्णसर्पादिवन्नित्यसमास एव भविष्यतीति भावः (वि० प०)।
७. द्विविधो हि शब्दः – नित्यः कार्यश्चेति (वि० प०) ।
८. किं तस्येत्यनेन चेत् सुखार्थम् । यद् वा उभयमपि सुखार्थम् (क० च०)।
९. उप समीपे धातोः समीपे सृज्यते इत्यन्वर्थबलाद् धातोः प्रागेव सिद्धा इत्यर्थः (क० च०)।

[रूपसिद्धिः]

१. **गोदः** । गो + दा + क + सि । गां ददाति । 'गाम्' के उपपद में रहने पर 'डु दाञ् दाने' (२।८४) धातु से "आतोऽनुपसर्गात् कः" (४।३।४) सूत्र द्वारा 'क' प्रत्यय, 'क्' अनुबन्ध का प्रयोगाभाव, "आलोपोऽसार्वधातुके" (३।४।२७) से धातुघटित आकार का लोप, प्रकृत सूत्र से समास, "तत्स्था लोप्या विभक्तयः" (२।५।२) से 'अम्' द्वितीया विभक्ति का लोप, लिङ्गसञ्ज्ञा तथा विभक्तिकार्य ।

२. **जलजम्** । जल + जन् + ड + सि । जले जातम् । 'जले' के उपपद में रहने पर 'जनी प्रादुर्भावे' (३।९४) धातु से "सप्तमीपञ्चम्यन्ते जनेर्डः" (४।३।९१) सूत्र द्वारा 'ड' प्रत्यय, 'ड्' अनुबन्ध का प्रयोगाभाव तथा अन्य कार्य प्रायः पूर्ववत् ।

३. **क्रोधजम्** । क्रोध + जन् + ड + सि । क्रोधाज्जातम् । 'क्रोधात्' के उपपद में रहने पर 'जन्' धातु से 'ड' प्रत्यय तथा अन्य प्रक्रिया पूर्ववत् ।।९४३।

## ९४४. नाव्ययेनानमा [४।२।५]

[सूत्रार्थ]

उपपदसंज्ञक नाम पद का अमन्तवर्जित अव्ययकृदन्त के साथ समास तथा प्राग्भाव नहीं होता है ।।९४४।

[दु० वृ०]

तस्य नामोपपदस्याव्ययकृदन्तेनामन्तवर्जितेन प्राग्भावसमासौ न भवतः । कृत्वा अलम् , अलं कृत्वा । भोक्तुं कालः, कालो भोक्तुम् । तस्येति किम् ? प्रकृत्य। अनमेति किम् ? निमूलकाषं कषति ।।९४४।

[दु० टी०]

नाव्य० । अव्ययश्चासौ कृच्चेति, स एवान्तो यस्य समुदायस्येति भावः । अव्ययकृदन्तेन युक्तस्योपपदस्य प्राग्भावो न भवति, अर्थाद् धातोरिति । अव्ययकृदन्तेन समासो न भवतीत्यर्थः । अमन्तेन तु प्राग्भावः समासश्च भवत्येव व्यवहितस्यापि प्राग्भावस्य प्रतिषेधो नञ्ग्रहणाद् अन्यथा 'अव्ययेनामा' इति विदध्यात् । "**तस्य तेन समासः**" (४।२।४) इत्यनेनैव सिद्धत्वान्नियमार्थं भविष्यति अव्ययेनामैव समास इति। न च **विपरीतनियमः** – अव्ययेनैवामेति व्यावृत्तेरभावाद् दुःखशयमिति "**शीङोऽधिकरणे च**" (४।३।१८) इत्यच्प्रत्ययः, सिः "**अकारादसम्बुद्धौ मुश्च**" (२।२।७) इति। अनव्ययेनामा समासो निवर्त्यते । तदसत् , यावदेव विभक्तिलोप उपपद्यते तावदेव "**तस्य तेन समासः**" (४।२।४) अन्तरङ्गत्वादर्थवद्ग्रहणेनानर्थक्यस्येति वचनाच्च। तथा '**कृत्वालं मां विजेतुं जगदपि च शिशौ**' इति । कथन्तर्हि "**विभाषाग्रेप्रथमपूर्वेषु**" (४।६।६) – अग्रेभोजनम् , प्रथमेभोजनमिति ? सत्यम् । '**अभिधानलक्षणा हि कृचद्धितसमासाः**' इति नास्ति समासः। यदि तु आभीक्ष्ण्ये एवार्थे णम् विधीयते, प्राप्ते विभाषैवेति पक्षे निवृत्तिश्च

क्रियते, तदा नाग्रे-इत्यादय: प्रत्ययोत्पत्तिनिमित्तमिति नास्त्युपपदसञ्ज्ञा, तत्र नोपपदसमासप्राप्तिरिति अप्राप्ते विभाषापक्षेऽभिधानाश्रयणमित्यर्थ: ।

यद्येवम् – "**अलंखल्वो: प्रतिषेधयो: क्त्वा वा**" (४।६।१) इत्यत्र षष्ठी व्याख्यायते। अलंखल्वो: सम्बन्धाद् धातोरिति "**कालसमयवेलाशक्त्यर्थेषु च**" (४।५।१०७) इत्यत्र षष्ठी निर्दिश्यते, किमनेन ? सत्यम् , **प्रतिपत्तिरियं गरीयसीति** । **अन्य** आह – अस्मादेव सूत्रान्नञा निर्दिष्टमिति विज्ञायते, तेनाग्रे-आदिषु णमादिसमासो न भवतीति ॥९४४।

[वि० प०]

नाव्यये० । इहानन्तर: समास एव निषिध्यते न प्राग्भाव इति न देश्यम् , नञ्ग्रहणात्। अन्यथा 'अव्ययेनामा' इति कुर्यात् । पूर्वेण समासे सिद्धे पुनर्वचनं **नियमार्थम्,** अमैवाव्ययेन समासो नान्येन । न चाव्ययेनैवामिति विपरीतनियम: सम्भाव्यते, कृत्स्वनव्ययस्यामोऽसम्भवेन व्यावृत्तेरभावादित्याह – प्राग्भावसमासौ न भवत इति । भोक्तुं काल इति । "**कालसमयवेलाशक्त्यर्थेषु च**" (४।५।१०७) इति तुम् । निमूलकाषमिति। "**निमूलसमूलयो: कष:**" (४।६।१६) इति णम् ॥९४४।

[समीक्षा]

'निमूलकाषं कषति, समूलकाषं कषति' इत्यादि प्रयोगों के सिद्ध्यर्थ समासविधान अपेक्षित है तथा 'भोक्तुं काल:, अलं कृत्वा' इत्यादि में समासनिषेध । इसकी व्यवस्था दोनों ही व्याकरणों में की गई है, परन्तु अन्तर यह है कि कातन्त्रकार ने उपपदसंज्ञक स्याद्यन्तपद का अमन्तवर्जित अव्ययकृदन्त के साथ समास-निषेध करके उक्त कार्य सम्पन्न किए हैं, जब कि पाणिनि ने उपपद का अमन्त अव्यय कृदन्त के साथ समासविधान करके ये कार्य स्वीकार किए हैं । पाणिनि का सूत्र है – "अमैवाव्ययेन" (अ० २।२।२०) । यह निषेध–विधान अपने अपने व्याकरण की प्रक्रिया के अनुसार है । अत: उभयत्र प्राय: समानता है ।

[विशेष वचन]

१. न च विपरीतनियम: अव्ययेनैवामेति, व्यावृत्तेरभावात् (दु० टी०) ।

२. अप्राप्ते विभाषापक्षेऽभिधानाश्रयणमित्यर्थ (दु० टी०) ।

३. प्रतिपत्तिरियं गरीयसीति (दु० टी०) ।

४. पूर्वेण समासे सिद्धे पुनर्वचनं नियमार्थम् (वि० प०) ।

[रूपसिद्धि]

१. **कृत्वा अलम् , अलं कृत्वा** । यहाँ प्रकृत सूत्र द्वारा अव्यय-कृदन्त पद 'कृत्वा' का

'अलम्' उपपद के साथ समास नहीं होता है, जिसके फलस्वरूप प्राग्भाव तथा यप् आदेश प्रवृत्त नहीं हुआ है ।

२. **भोक्तुं कालः, कालो भोक्तुम्** । समस्त प्रक्रिया पूर्ववत् समझनी चाहिए ॥९४४।

## ९४५. तृतीयादीनां वा [४।२।६]

**[सूत्रार्थ]**

तृतीयादि उपपदों का अमन्त अव्ययकृदन्त पद के साथ विकल्प से समास तथा प्राग्भाव प्रवृत्त होता है ॥९४५।

**[दु० वृ०]**

**"तृतीयायामुपदंशेः"** (४।६।३१) इत्यारभ्य यान्युपपदानि तानि तृतीयादीनि, तेषाममन्तेनापि प्राग्भावे समासो भवति वा । मूलकेनोपदंशं भुङ्क्ते, मूलकोपदंशं भुङ्क्ते। भ्राष्ट्रादपकर्षम् , भ्राष्ट्रापकर्षं धाना भक्षयति । तृतीयादीनामिति किम् ? समर्थो भोक्तुम् ॥९४५।

**[वि० प०]**

तृतीया० । अमन्तेनापीति । तत्र प्रकरणे णमो विधानाद् अनमेति प्रतिषेधो नानुवर्तते इति भावः । प्राग्भावे समास इति । वाशब्दोऽत्र भिन्नक्रमे समासो वेति । अनन्तरः समासो विकल्प्यते, व्यवहितस्तु प्राग्भावो नित्य इत्यर्थः । मूलकेनेत्यादि । **"तृतीयायामुपदंशेः"** (४।६।३१) इति णम्। भ्राष्ट्रादपकर्षमिति । **"अपादाने परीप्सायाम्"** (४।६।३५) इति णम् । समर्थो भोक्तुमिति । **"कालसमयवेलाशक्त्यर्थेषु च"** (४।५।१०७) इति तुम् ॥९४५।

**[क० च०]**

तृतीया० । तृतीयादीनामिति किमिति। वेति कृतेऽमन्तवर्जितेनाव्ययेनान्तरङ्गत्वात् समासविकल्पः स्यादिति **हेमः**। इदं न चारु, स्वोदाहरणासिद्धिपूर्वकं हि प्रत्युदाहरणम्, तस्मान्मा वेति क्रियताम् इत्येव व्यावृत्तेरर्थः इति **सागरः**। मा मकारवर्णेनाव्ययेनेत्यर्थः। तदा तुम्प्रयोगेऽपि पूर्वेण पूर्वभावनिषेधेऽनेन प्राक् समासविकल्पः स्यात् ॥९४५।

**[समीक्षा]**

'मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं भुङ्क्ते । भ्राष्ट्रापकर्षं धाना भक्षयति, भ्राष्ट्रादपकर्षम्' इत्यादि शब्दरूपों में वैकल्पिक समास दोनों ही व्याकरणों के अनुसार प्रवृत्त होता है । पाणिनि का सूत्र है – "तृतीयाप्रभृतीन्यन्यतरस्याम्" (अ० २।२।२१) । अतः उभयत्र समानता ही है ।

**[रूपसिद्धि]**

१. **मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशम्**। प्रकृत सूत्र द्वारा यहाँ 'मूलकेन' इस तृतीयान्त उपपद के साथ अमन्त 'उपदंशम्' पद का समास तथा उपपद का प्राग्भाव । समास की वैकल्पिक प्रवृत्ति के कारण दो रूप दिए गए हैं ।

२. **भ्राष्ट्रापकर्षं धाना भक्षयति, भ्राष्ट्रादपकर्षम्** । यहाँ भी प्रकृत सूत्र द्वारा 'भ्राष्ट्रात्' इस उपपद के साथ वैकल्पिक समास तथा प्राग्भाव । उपपदसंज्ञा होने के बाद पहले उसका प्राग्भाव प्रवृत्त होता है, इसके अनन्तर वैकल्पिक समास ॥९४५।

## ९४६. कृत् [४।२।७]

[सूत्रार्थ]

यहाँ से 'कृत्' का अधिकार प्रारम्भ होता है । इसके अनन्तर धातुविहित प्रत्ययों की 'कृत्' संज्ञा होती है । फलतः यह सूत्र सञ्ज्ञाधिकारसूत्र है = अधिकार होने के साथ सञ्ज्ञासूत्र भी है ॥९४६।

[दु० वृ०]

अधिकारोऽयं साध्यैरेव सम्बध्यते, प्रथमान्तत्वात्। तेन वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञका वेदितव्याः । कर्तरि कृतः – पाचकः, पक्ता । एवमन्येऽपि ॥९४६।

[क० च०]

कृत्० । **अधिकारो द्विविधः** – स्वार्थः परार्थश्च । अयं तु केवलं परार्थाधिकारो लिङ्गार्थस्य साध्यत्वात् साध्यशब्दो न प्रथमान्त एवोच्यते । अत एव साध्यविभक्तिः प्रथमा, सिद्धविभक्तिस्तु द्वितीयादिरिति ॥९४६।

[समीक्षा]

धातु से होने वाले त्यादिवर्जित प्रत्ययों की कृत् संज्ञा दोनों व्याकरणों में की गई है । कातन्त्रकार ने अधिकारपूर्वक यह संज्ञा की है, जब कि पाणिनीय व्याकरण में इसे अधिकार न मानकर केवल सञ्ज्ञा ही घोषित किया गया है । उनका सूत्र है – "कृदतिङ्" (अ० ३।१।९३) ।

'अर्थप्रतीतिं करोति' इस व्युत्पत्ति के आधार पर 'कृत्' संज्ञा को अन्वर्थ माना जाता है । कृत्यसंज्ञक 'तव्य-अनीय' आदि प्रत्ययों को भी छत्रिन्याय से 'कृत्' स्वीकार कर लिया जाता है । प्रक्रियासर्वस्वकार नारायणभट्ट ने इस विषय में कहा भी है -

**कर्तरि क्विपि कृच्छब्दो येषां मध्ये हि दृश्यते ।**
**छत्रिन्यायात् कृतस्ते स्युरेवं कृत्यसमाख्यया ।।**

(प्र० स० – स० खं०, पृ० ८९) ।

प्राचीन आचार्यों ने इस सञ्ज्ञा को स्वीकार किया है –

**गोभिलगृह्यसूत्र** – कृतं नाम दद्यात् (२।८।१४) ।

**निरुक्त** – अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते–दमूनाः क्षेत्रसाधा इति (२।२) ।

**गोपथब्राह्मण** – कृदन्तमर्थवत् प्रातिपदिकम् (१।१।२६) ।

**बृहद्देवता** – क्रियाभिनिर्वृत्तिवशोपजातः कृदन्तशब्दाभिहितो यदा स्यात् (१।४५)।

**काशकृत्स्नधातुव्याख्यान** – भूते भव्ये वर्तमाने भावे कर्तरि कर्मणि। प्रयोजके गुणे योग्ये धातुभ्यः स्युः क्विबादयः।। स्वरवद् यः कृत्। ऋ ईर् यनि कृति च (सू० ४५, ७१, ८५)।

**वाजसनेयिप्रातिशाख्य** – तिङ्कृत्तद्धितचतुष्टयसमासाः शब्दमयम् (१।२७)।

**अथर्ववेदप्रातिशाख्य** – कृदन्ते द्व्युपसर्गे। कृदन्तेऽन्यवर्णान्ताच्च। ङ्यन्ताद् वा सुर्न लुप्यते कृदन्ताद् वा (१।१।१०;२।३।८; ३।२।४)।

अर्वाचीन आचार्यों ने भी इस संज्ञा का प्रयोग किया है –

**शाकटायनव्याकरण** – घ्याद्यतिङ् कृत् (१।१।४३)।

**हैमशब्दानुशासन** – आतुमोऽत्यादिः कृत् (५।१।१)।

**मुग्धबोधव्याकरण** – कृद् धोः क भावे (सूत्र ९६५)।

**अग्निपुराण** – कृतस्त्रिष्वपि विज्ञेया भावे कर्मणि कर्तरि (३५८।१)।

**शब्दशक्तिप्रकाशिका** – प्रत्ययोऽसौ चतुर्विधः (कारिका ९)। 'एष च प्रत्ययः सुप्-तिङ् – कृत् – तद्धितभेदाच्चतुर्विधः' (रामभद्री टीका)।

गृह्यसूत्रों में कृत्प्रत्ययान्त नाम की विशेष प्रशंसा की गई है – ''दशम्युत्तरकालं जातस्य पुत्रस्य नाम विदध्याद् घोषवदाद्यन्तरन्तास्थम् अवृद्धं त्रिपुरुषानीकमनरिप्रतिष्ठितं तद्धि प्रतिष्ठिततमं भवति। द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम्'' (म० भा०–पस्पशाह्निक, पृ० २९)।

**[विशेष वचन]**

१. अधिकारो द्विविधः – स्वार्थः परार्थश्च (क० च०)।

२. अत एव साध्यविभक्तिः प्रथमा, सिद्धविभक्तिस्तु द्वितीयादिः (क० च०)।

**[रूपसिद्धि]**

१. **पाचकः**। पच् + वुण् + सि। पचति। 'डु पचष् पाके' (१।६०३) धातु से ''वुण्तृचौ'' (४।२।४७) सूत्र द्वारा 'वुण्' प्रत्यय, 'ण्' अनुबन्ध का प्रयोगाभाव, प्रकृत सूत्र से उसकी कृत् सञ्ज्ञा, ''युवुझामनाकान्ताः'' (४।६।५४) से 'वु' को 'अक' आदेश, ''अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु'' (३।६।५) से उपधादीर्घ, 'पाचक' की लिङ्गसञ्ज्ञा, सि-प्रत्यय, तथा ''रेफसोर्विसर्जनीयः'' (२।३।६३) से सकार को विसर्गादेश।

२. **पक्ता**। पच् + तृच् + सि। पचति। 'डु पचष् पाके' (१।६०३) धातु से ''वुण्तृचौ'' (४।२।४७) सूत्र द्वारा 'तृच्' प्रत्यय, उसकी प्रकृत सूत्र से कृत्संज्ञा, चकार

को ककार, लिङ्गसंज्ञा, सि-प्रत्यय तथा "आ सौ सिलोपश्च" (२।१।६४) से ऋकार को आकार-सिलोप ॥१४६।

## १४७. वाऽसरूपोऽस्त्रियाम् [४।२।८]

[सूत्रार्थ]

स्त्र्यधिकारविहित प्रत्ययों को छोड़कर असमानरूप कृत्प्रत्यय विकल्प से बाधक होते हैं ॥१४७।

[दु० वृ०]

न विद्यते समानं रूपं यस्येति विग्रहः । स्त्र्यधिकारविहितं प्रत्ययं वर्जयित्वा असरूपः कृत्प्रत्ययो वा बाधको भवति—

**विकल्पितेऽपवादेऽपि बाधनं तदवस्थितम् ।**
**उत्सर्गे न च लाभस्तद् बाधकत्वं विकल्प्यते ।।**

स्वराद् योऽपवादस्तद्विषये तव्यानीयौ – चेयम् , चेतव्यम् , चयनीयम् । एवं "**नन्द्यादेर्युः**" (४।२।४१) – नन्दनः, नन्दकः, नन्दयिता । एवमन्येऽपि । असरूप इति किम् ? घ्यणि यो न स्यात् – कार्यम् । कविषयेऽण् न स्यात् – गोदः। "**अनुबन्धोऽप्रयोगी**" (३।८।३१) इति सारूप्यमेव । अस्त्रियामिति किम् ? चिकीर्षा, क्तिर्न स्यात् । तथा ईशना, श्रन्थना । युरेव । वाशब्दो व्यवस्थावाचीति – क्त-युट्-तुम्-खलर्थेषु वासरूपविधिर्नास्तीति ॥१४७।

[दु० टी०]

वास० । अपवादबाधितस्योत्सर्गस्यापवादविषये समावेशार्थं वचनम् । नन्वत्र वचनेऽप्यस्मिन्निदं न सिध्यति किमस्योत्सर्गेण वा सम्बन्धः, अपवादेन वा द्वाभ्यां तत्र पूर्वपक्षे वाशब्देन विकल्पार्थेन भावाभावयोरुपस्थापितयोरस्यायमर्थः स्यात् । उपसर्गो वाऽसरूपोऽस्त्रियां पक्षे न भवतीति, अपवादस्य तस्मिन् विषये नित्यं प्रवृत्तिः स्यात् तेन सहास्य सम्बन्धात् । अस्य द्वितीयेऽप्यसरूपोऽपवादोऽस्त्रियां विकल्पेन भवतीति । एवमप्युत्सर्गस्यापवादविषया प्रवृत्तिरलभ्या, उत्सर्गो ह्यपवादविषयं परिहरतीत्यप्रत्ययिकायाः प्रकृतेः श्रवणं युज्यते । अथापवादस्याभावपक्षेऽन्तरेण प्राप्तमन्यद्वचनमुत्सर्गो भविष्यति, प्रतिबन्धकाभावादिति । तदुच्यते, कार्यबाधायामेव न तु शास्त्रबाधायां कार्यबाधाविधायकशास्त्रम् (तदपवादेन बाध्यमानं शास्त्रम्) तद्विषयकवर्जनेनैव प्रवर्तते। तस्मिन् प्रवृत्ते पश्चाद् अपवादेऽप्रवृत्तिमभिभवत्यपि तद्विषये उत्सर्गस्य प्रवृत्तिः सामान्य-शास्त्रस्य तद्विषयकत्वात् कार्यबाधापि न युक्ता । शास्त्रं हि निवर्तकं कार्याणां तत्राबाधिते शास्त्रे कार्यं बाध्यते इति नैतदनुरूपम् । **प्रदीपोच्छेदे हि तत्प्रभोच्छिद्यते** अस्मादपवादे विकल्प्यमाने पुनरुत्सर्गस्य प्रवृत्तिरयुक्ता।

तृतीयेऽप्युत्सर्गेऽपवादेऽप्यस्त्रियां वा भवतीति । एवमप्युत्सर्गस्यापवादविषये न प्रवृत्तिः, पूर्वोक्तादेव हेतोरिति । तृतीयस्तु पक्षः पूर्वपक्षयोरन्तर्भावान्मन्दमतिबोधनार्थ उच्यते । एवं चोद्यमुद्दिश्याह-असरूप इत्यादि । किमुक्तम् असरूपस्य बाधकेनैव सम्बन्धो न विकल्पेनेत्यर्थः । बाधकत्वस्य वावचनादिति वक्तव्यम् , इतरथा हि स एव सन्देहः, किं बाधकस्योत्पत्तिर्वावचनाद् आहोस्विद् बाधकत्वस्य वावचनादिति वक्तव्यम्। बाधकत्वयोगाद्धि बाधको भविष्यति, तत्रार्थाद् धर्मिविकल्पादेव धर्मविकल्पः सिध्यतीति वाऽसरूपोऽपवाद इत्युक्ते किं बाधते आहोस्विद् उत्पद्यते इत्याशङ्कायामुत्पत्तौ दोषदर्शनाद् बाधक इत्याकाङ्क्षाविच्छेदं करोति । बाधकत्वं च नानुत्पन्नस्य सम्भवतीति । यद्येवं 'भ्राशभ्लाश' इत्यादौ वावचनमस्ति इत्यन्विकरणः पक्षे न स्यात् ? सत्यम् , नैतद् वक्तव्यम् इह भौवादिका धातवः पक्षे सन्तीत्यङ्गीकृतम् । **वक्तव्यवादिनां** तु मतेऽन्स्थाने यनादेशः, पक्षेऽन्विकरणास्तिष्ठति । एवं दुहदिहलिहगुहामात्मने वतवर्गे सिचः पक्षे सण्णादिश्यते व्यवस्थितविभाषाबलादेव व्यक्तेराश्रयणाद् वा यावन्ति लक्ष्याणि तावन्ति लक्षणानीत्यदोषः ।

क्विपोऽसरूपत्वाद् ग्रामणीरिति नित्यं स्याद् ग्रामणाय इति न स्यात् । द्वयोश्च रूपवतोः सारूप्यमसारूप्यं वा उपदेश आश्रीयते, शास्त्रविधायकमपवादस्य शास्त्रमेव प्रत्यासन्नं न प्रयोग इति । **प्रत्यक्षं खल्वपि शास्त्रम् , अनुमेयः प्रयोगः । अन्तरङ्गं च शास्त्रं बहिरङ्गः प्रयोगः** इति कविषयेऽणपि स्यात् "**ह्वावामश्च**" (४।३।२) इत्यनित्यम् भविष्यति? सत्यम्, **प्रत्यय** इत्यन्वर्थसंज्ञा, न तेऽनुबन्धा अर्थप्रत्ययाः नान्तरङ्गम् , किन्तर्हि कार्यार्था एवेत्याह – कविषय इत्यादि। अथवा '**नानुबन्धकृतमसारूप्यम्**' (व्या० परि० १३) असरूपग्रहणस्य निर्वर्त्त्यं एवान्यथास्तीति।

अस्त्रियामित्युक्ते कथं स्त्र्यधिकारविहितप्रत्ययं वर्जयित्वाऽयमर्थो लभ्यते। [1]स्त्रियामभिधेयायामिति तु न युज्यते, तर्हि स्त्रियां यद् वर्तते लिङ्गमभिधानभावेनेति निश्चितमपि। **'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः'** (का० वृ० १।२।५६) इति प्रत्यय एव विवक्षावशात् सन्निहितस्त्रीत्वमभिधेयेनाश्रयतीति पक्षः, तदा 'लव्या, लवितव्या' इति यविषये तव्यो न स्यात् **'व्याख्यानतो विशेषार्थप्रतिपत्तेर्नहि सन्देहादलक्षणम्'** (का० परि० ६५)। विधिर्वाधिकारो वा। तत्र विधिपक्षमाश्रित्याह – व्यवस्थितेत्यादि। क्तयुड्विषये नपुंसके भावे घञ् न भवति, इच्छार्थेषु तुम् । इच्छार्थेषु च सप्तमीपञ्चम्याविति समानार्थत्वं प्रयोगतश्चेति वचनात्। ईषत्पानः इति । **"ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्"** (४।५।१०२) न भवति। अधिकारपक्षेऽपि परिमाणज्ञापनार्थं भवति। अस्त्रियामिति अधिकाराद् वासरूपो भवतीत्यधिकार एव। एवमपि 'आस्यते भोक्तुं वटुना' इत्यासेः पूर्वकालत्वं गम्यते इति भावे क्त्वापि प्राप्नोति । एवम्प्रकारेऽपि **व्यवस्थितविभाषैव** सिध्यति ।।९४७।

---

१. स्त्रियामित्यधिकृत्य विहितः प्रत्ययोऽपि स्त्रीत्युपचारात् स्त्रीप्रत्ययेषु न वासरूप इत्यर्थः । कथमेवं न विज्ञायते स्त्रियामिति स्त्रीशब्दाद् यः प्रत्ययो विहितः स इह स्त्रीशब्दवाच्यः। एवं विज्ञायमाने कर्मव्यतीहारे णच् स्त्रियां क्तिरिति णज्विषये क्तिर्न स्यात्-व्यवक्रोशी, व्यवकृष्टिरिति ।

[वि० प०]

वास० । स्त्रियामधिकृत्य विहितः प्रत्ययोऽपि स्त्रीत्युपचाराद् इत्याह – स्त्र्यधिकारविहितं प्रत्ययं वर्जयित्वेति । स्त्रीप्रत्ययेषु न वासरूपविधिरित्यर्थः। अथैवं कथमिह न ज्ञायते ।अस्त्रियामिति स्त्रीसंशब्दनाद् यः प्रत्ययो विहितः सः स्त्री तत्र न वासरूपविधिरिति ! नैवम् ,एवं सति "**कर्मव्यतीहारे णच स्त्रियाम्** " (४।५।४०) इत्यस्य णचोऽपवादस्य विषये स्त्रियां क्तिरुत्सर्गो न स्यादिति । ततश्च व्यवक्रोशीत्येवं स्यान्न व्यवक्रुष्टिरिति ।स्त्रियां वर्तमानाद् धातोर्न वासरूपविधिरित्यपि वाक्यार्थो न युज्यते ।यथा स्त्रियां वर्तमानाल्लिङ्गाद् आप्रत्यय इति,धातुर्हि क्रियाभिधायी स कथं वर्तितुमुत्सहते ।यत्तु स्त्रियामिति विशेषणं तद् विवक्षावशात् प्रत्यय एव सन्निहितः स्त्रीत्वमभिधेयत्वेनोपादत्ते इति, प्रत्ययद्वारकमेव प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति। त.र्हि स्त्रियामभिधेयायां यः प्रत्ययोऽसरूपस्तत्र न वासरूपविधिरित्यस्तु **वाक्यार्थः**? नैवम् ,तदा लव्या, लवितव्येति अभिधेया स्त्रीति यविषये तव्यो न स्यात् ।

**न चेष्टार्थमुपादीयमानं शास्त्रमनिष्टाय परिकल्पते** इति युक्तम् ,व्याख्यानतश्च विशेषार्थस्य प्रतिपत्तयो भवन्तीति न दोषः। अथापवादबाधितस्योत्सर्गस्यापवादविषये पक्षे समावेशार्थमिदं वचनम् । तत्तु कथमिति चिन्त्यते-किमपवादोऽनेन विकल्प्यते उत्सर्गो वा? अपवादस्य बाधकत्वं वा? **तत्राद्ये पक्षे**ऽसरूपोऽपवादो वा भवतीत्युक्तेऽपवादस्योत्पत्तिः पक्षे विहिता भवति ,बाधकत्वं पुनरस्य **पक्षान्तरे**ऽप्यक्षुण्णमेव। न तत्रोत्सर्गः प्रवर्तितुमर्हति । यदि नाम स्वविषयेऽपवादः पक्षे भवति। उत्सर्गस्तु तद्विषयपरिहारेण प्रवर्तमानः पक्षान्तरे कथं भवति उत्सर्गस्तु तद् विषयपरिहारेण प्रवर्तमानः पक्षान्तरे कथं स्याद् इत्यप्रत्ययिकायाः प्रकृतेः श्रवणं स्यात्। अथापवादस्याभावपक्षे-प्रतिबन्धकाभावादुत्सर्गो भविष्यतीति चेद् ,अयुक्तमेतत् । यदि कार्यबाधेयं स्यान्न त्वसौ कार्यस्य विधायकं शास्त्रम् ,तत्राबाधिते शास्त्रे कथं कार्यं बाधते इति । नेदमनुरूपम् ,न खलु प्रदीपोच्छेदनमन्तरेण तत्प्रभोच्छित्तिमुपलभामहे, तस्माच्छास्त्रबाधेयम्। ततश्चापवादशास्त्रेण स्वविषयं स्वीकुर्वता बाध्यमानमुत्सर्गशास्त्रं तद्विषयपरिहारेणैव व्यवतिष्ठते ।तथा च सति न कार्यसिद्धिः, तन्मूलस्यैव शास्त्रस्य तद्विषय-परिहारेणैव व्यवतिष्ठते । तथा च सति न कार्यसिद्धिः,तन्मूलस्यैव शास्त्रस्य निमूलकाषं कषितत्वादिति न विकल्पितेऽपवादे फलमस्ति,बाधनस्य तदवस्थितत्वादिति भावः।

द्वितीयेऽपि उत्सर्गोऽसरूपोऽस्त्रियां वा भवतीत्युक्ते न लाभोऽस्ति, अपवादेन हि प्रतिबन्धकाभावात् स्वविषयं नित्यम् अधितिष्ठता नोत्सर्गसमावेशोऽनुकूल्यते । तृतीयस्तु न्याय्य इति सूत्रार्थे दर्शितम् । असरूपः कृत्प्रत्ययो वा बाधको भवतीति अपवादस्यासरूपस्य बाधकत्वं वा भवतीति विकल्पेन बाध्यते इति यावत् । बाधकत्वं च धर्मो धर्मिणमन्तरेण नोपपद्यते इति तत्र पक्षेऽपवादस्योत्पत्तिर्भाव्यते । पक्षान्तरे चाविद्यमानबाधकत्वादुत्सर्गस्तद्-

विषयमनुप्रविशतीति । सकलमालोक्य श्लोकेनाह – विकल्पित इत्यादि । वाशब्द इति। **''नपुंसके भावे क्तः, युट् च''** (४।५।९३, ९४) 'हसितम् , हसनम्' एतयोर्विषये **''भावे''** (४।५।३) इति घञ् न भवति । इच्छार्थेष्वेककर्तृकेषु तुम् – इच्छति भोक्तुम् । अस्य विषये सप्तमीपञ्चम्याविच्छार्थकधातुप्रयोगे विध्यादिषु प्रार्थनद्वारेण विहिते। यथा – 'इच्छामि भुञ्जीत भवान्, इच्छामि भुङ्क्तां भवान्' एतौ न भवतः । तथा **''आद्भ्यो य्वदरिद्रातेः''** (४।५।१०४) – ईषत्पानः, सुपान इति खलर्थस्य योर्विषये **''ईषद्दुःसु०''** (४।५।१०२) इत्यादिना खल् न भवति ॥९४७।

**[क० च०]**

वाऽस० । ननु रूपमाकृतिस्तेन सह वर्तते इति **सरूपः**, न सरूपो**ऽसरूपः** इत्यनतिक्रमतः कथं प्रवर्तनमित्याह – न विद्यते इत्यादि । रूपादौ वेति समानस्य सभावः । यथा समान इति । ननु सरूप इति कथं नार्थः, नञ्लोपे किं प्रमाणम् ? सत्यम् । अस्त्रियामित्यकारादिस्तत्साहचर्यान्नञ् प्रतिपत्तव्यः इति **हेमः** । **कश्चिद्** आह— **''कृवृषिमृजां वा''** (४।२।२९) इति वाग्रहणान्नञ् प्रतिपत्तव्य इति, अन्यथा **''वाऽसरूपोऽस्त्रियाम्''** (४।२।८) इत्यनेन क्यप्सरूपस्य विषये पक्षे घ्यण् भविष्यति, तथा **''स्वनहसोर्वा''** (४।५।४६) इति वाग्रहणमपि व्यर्थम् । अल्घञोः समानरूपत्वादनेनैव विकल्पः सिद्धः, तथा **''वा ज्वलादिदुनीभुवो णः''** (४।२।५५) इति वाग्रहणं व्यर्थम्, अचा तुल्यत्वात् । तत्र, नियमार्थं वाग्रहणं भविष्यति कृत्यादीनां मध्ये एषां क्यबेव वा भविष्यति नान्यः, तेन समानरूपत्वात् प्राप्तो यः प्रत्ययोऽनेन व्यावृत्यते, तथा स्वनहसोरेव अल् भविष्यति नान्येषाम् , तेनान्येषां प्राप्तस्य घञो व्यावृत्तिः। तथा **''वा ज्वलादि०''** (४।२।५५) इत्यत्रापि नियमः कर्तृविहितानां मध्येऽस्यैव विकल्पः? सत्यम् , विधिनियमसम्भवे विधेरेव बलवत्त्वाद् असरूप एवेति स्त्रीशब्देनात्र स्त्र्यधिकारविहितः प्रत्यय उच्यते, **उपचारात्** ।

**उपचार**माह – उपचारे क्वचित् स्वलिङ्गसङ्ख्यावस्थितिरिति न्यायान्न लिङ्गत्यागः। ननु असरूपकृत्प्रत्ययः किंविशिष्टः अस्त्री स्त्र्यधिकारविहितप्रत्ययाद् भिन्न इति विशेषणत्वात् प्रथमैव युज्यते कथं सप्तमी ? सत्यम् , निर्धारणे सप्तमीयं स्त्र्यधिकारविहितप्रत्ययमध्ये योऽसरूपः सः बाधको भविष्यतीत्यर्थः । **वृत्तौ** स्त्र्यधिकारविहितं वर्जयित्वेति **निर्गलितार्थ** उक्तः। **पञ्जिकायामु**पचारादिति । ईदृश उपचारः कथन्न स्यादित्याह – अथेति । स्त्रीसंशब्दनात् सूत्रे स्त्रीशब्दोल्लेखान्न व्यवक्रुष्टिरिति । अथ न भवतु , का क्षतिः, नहि दूषणमेव हेतुः, स्त्रीसंशब्दनेऽस्य पक्षस्य स्त्रियामभिधेयायामिति पक्षस्य च **सिद्धान्तः** एकदैव न चेष्टार्थमुपादीयमानं शास्त्रम् इत्यनेन पश्चाद्ग्रन्थेन वक्ष्यते । धातुर्हीति **पञ्जी**। ननु यदि धातुः स्त्रियां न वर्तते, तत् कथं **''स्त्रियां क्तिः''** (४।५।७२) इत्यादौ स्त्रियामिति धातुविषये बलमित्याह – यत्त्विति ।

यत्तु स्त्रियामिति विशेषणं तत् प्रत्ययद्वारकमेवेति वक्ष्यमाणेनान्वयः । कथं प्रत्ययद्वारकमित्याह – प्रत्यय एव सन्निहित इति । अथ प्रत्यय एव स्त्रीत्वमभिधेयत्वेनोपात्तस्तत् कथमित्याह – विवक्षावशादिति। धातुविशेषणासम्भवे कर्त्रा प्रत्ययविशेषणमेव विवक्ष्यते इति भावः । ननु प्रकृतेः स्त्रियां वृत्त्यभावे प्रत्ययस्य कथन्तदभिधेयता । तथाहि स्त्रियां वर्तते लिङ्गम् , तस्माल्लिङ्गात् तदभिधायक आप्रत्यय इत्याह – प्रकृतीति । एतेन प्रकृतिविशेषणतया स्त्रीत्वमुपादत्ते । यद् वा स्त्रियामित्यस्य प्रत्ययद्वारकविशेषणं घटते । प्रकृतीति व्यावृत्त्यभावेऽपि प्रकृतेः स्त्रियामिति विशेषणम्। लव्या, लवितव्येति । ननु तव्यादयो हि कर्मणो वाऽभिधीयन्ते, न तु स्त्रियां न पदान्तरसम्बन्धात् स्त्रीरूपे कर्मण्येव प्रत्यय इति वाच्यम् । यतः कृत्तद्धितसमासाख्यातैः सामान्याभिधायिभिर्विशेषाणामनभिधानमिति सामान्ये कर्मण्येव प्रत्ययः इति ? सत्यम्, अत्रापि स्त्रीसामान्येनैव प्रत्ययः, न तु विशेषस्त्र्यव्यक्तावभिधेयायामिति । अथास्त्वेवम्, का क्षतिरिति स्त्रीसंशब्दनपक्षस्याभिधेयपक्षस्य चैकमेव **सिद्धान्तमाह** – न चेति । इष्टाश्रयणं कष्टमित्याह — व्याख्यान इति । **'व्याख्यानतो विशेषार्थप्रतिपत्तिर्भविष्यति न हि सन्देहादलक्षणम्'** (का० परि० ६५) इति परिभाषैव कारणमिति **कुलचन्द्रः**।

**पञ्जिकासम्प्रदायस्तु** व्याख्यानं चैतत् **''कर्मव्यतीहारे णच् स्त्रियाम्''** (४।५।४०) इत्यत्र स्त्रीपदमनर्थकम् , **''स्त्रियां क्तिः''** (४।५।७२) इत्यनन्तरपाठेनैव सिद्धेः । स्थितौ हि स्त्रियामिति वर्जनं न स्याद् इति **''स्त्रियां क्तिः''** (४।५।७२) इत्यस्मात् प्रकरणात् पृथक् पठ्यते । यद् वा **''भावे पचिगापास्थाभ्यः''** (४।५।७४) इति वचनमनर्थकं वाऽसरूपन्यायेनैव **''षानुबन्धभिदादिभ्यस्त्वङ्''** (४।५।८२) **''आतश्चोपसर्गे''** (४।५।८४) इत्यस्यापि विषये **''स्त्रियां क्तिः''** (४।५।७२) इत्यनेनैव सिद्धः । **कश्चिद्** आह — अनचीति कुर्यातन्न चान्यः स्त्रीसंशब्दनविहितोऽस्ति येन स्त्रियामिति पदम् । अथ क्तिरपि स्त्रीसंशब्दनाद् विहितेति चेद् अपवादविषये उत्सर्गस्यापि समावेशार्थमिदं वचनम् । अतः क्तौ न वासरूपविधिः,उत्सर्गत्वात् । ननु क्तिरपि अपवादो भवति भाव इति घञपेक्षया । ततश्च क्तिविषये **'पाकः'** इति घञ् कथन्न स्यात् ।अथाधिकारपक्षे कथमेवं न स्यात् क्तौ स्त्र्यधिकारविहितत्वाभावात् पूर्वदृष्टस्योत्तरत्र सम्बन्धो **ह्यधिकारः**,नैवम् ।स्त्रियामधिकृत्य इत्यधिकारः सम्बन्धः ।यथा ब्राह्मणानामत्राधिकारः,स च सम्बन्धः साक्षादनुमितत्वेन वा न दोषः। तर्हि कर्मव्यतीहारे इत्यत्रापि स्त्रीशब्दोऽस्ति,तत्रापि वर्जनं स्यात् । नैवम्, स्त्रियामिति पृथगुपादानान्न दोषः। अन्यथा **''स्त्रियां क्तिः''** (४।५।७२) इत्यनन्तरं कर्मव्यतीहारे णजिति कुर्यात् । बाधकत्वमिति ।विषय इत्यर्थः।

नामाभ्युपगमे अप्रत्ययिकाया इति यद्यपि नापवादं प्रयुञ्जीतेति,तथाप्यनिष्टकल्पना स्यात् **'अपवादविषयं परिहृत्योत्सर्गो हि प्रवर्तते'** इति न्यायादित्यर्थः । ननु युक्तिमूलिकेयं परिभाषा, युक्तिः पुनरेषा अपवादेनोत्सर्गबाधा द्विधा सम्भवति-कार्यस्य शास्त्रस्य च । तत्र शास्त्रबाधापक्षे **''स्वराद् यः''** (४।२।१०) इत्यपवादेन यप्रत्ययेन **''तव्यानीयौ ''** (४।२।९) इत्युत्सर्गशास्त्रं बाधितम् ,अतोऽनयोरियः एव नास्ति, अपवादप्रवृत्तिपक्षेऽपि

विषयो नास्तीति कथं प्रवर्तिष्यते। अपवादविषयोऽस्ति, उत्सर्गस्य विषयो नास्ति यत इति तत्रैवोच्यते '**अपवादविषयं परिहृत्योत्सर्गः प्रवर्तते**' (का०परि०५५) इति परिभाषा। यद्यपवादिनः कार्यस्य तदाऽपवादप्रवृत्तिपक्षे विषयोऽस्तीति कथं न वर्तिष्यते, प्रतिबन्धकबाधकाभावादिति पूर्वोक्तकार्यस्यापवादस्य बाधामाश्रित्य दूषयन्नाह-अथेति। अत्र पक्षे बाधकविकल्पः इति न दोषः। किन्तु यदि कार्यस्य बाधा अवलम्ब्यते इत्याह—युक्तमेतदिति ।

अथ कथं नावलम्ब्यते शास्त्रबाधैव भवति न कार्यस्येति । कः **शपथ** इत्याह—कार्यस्येति । एतेन हेतुच्छेदे पुरुषव्यापारो हेतुरेव साध्य इति भावः। असौ कार्यबाधेत्यर्थः। नेदमनुरूपम् । न योग्यमित्यर्थः। **यद्येवम्** ,असरूपकृत्प्रत्ययस्य बाधकत्वं वा भवत्येवेति विशेषणमुचितम् ? सत्यम् ,असरूपकृत्प्रत्ययबाधको भवतीति तात्पर्यार्थकथनम्। तथाहि बाधकत्वेऽपि विकल्पिते बाधकसूत्रमेव प्रवर्तते । पक्षे तत्प्रवर्तने कार्यमपि प्रवर्तते इति तात्पर्यं विवृणोति अपवादेति । नपुंसक इति । ननु क्तयुटोः सामान्येन निषेधाद् गत्यर्थेत्यादिना विहितस्य क्तप्रत्ययस्य विषये गमेः क्तिर्न स्यात्, तथा "**करणाधिकरणयोश्च**" (४।५।९५) इति युड्विषये 'स्नानीयं चूर्णम्' इति "**कृत्ययुटोऽन्यत्रापि**" इति वचनादनीयो न स्यात् ? नैवम् , कृत्ययुटोः संनिहितपाठात् सन्निहितपाठयोर्नपुंसके क्तो युट् चेत्यनयोर्भावविहितयोरेवं ग्रहणं स्यात् । अन्यथा 'क्तयुट्तुम्' इत्यादि पठितं स्यात्, तस्माद् भावविहितयोरेव ग्रहणम्, तर्हि करणाधिकरणयोर्हेयम् इति **हेमोक्तिः** कथं सङ्गच्छते ? सत्यम्। अत्र शिरश्चालनेन नञा न भवति, अपि तु भवत्येव । ननु 'चेतव्यम्, चयनीयम्' इति किमर्थमुदाहृतम्, वचनबलादेव तव्यानीयौ भविष्यतः, अन्यथा स्वराद् योऽस्ति बाधकः, "**व्यञ्जनाच्च**" (४।५।९९) इति घ्यणि कुत्र तव्यानीयाविति वचनस्यावकाशः ? सत्यम्, हन्तेर्भावे घ्यण् न दृश्यते इति वक्ष्यते, तत्रास्ति सूत्रस्य चरितार्थता ।

इच्छामि भुञ्जीतेति । ननु आख्यातिकः कर्तरि, तुम् भावे, भिन्नविषयत्वात् कथं बाध्यबाधकभावः ? नैवम् । '**आख्यातं क्रियाप्रधानम्**' इत्याख्यातमपि भावनाख्यम् भावमाह । कर्तरि परस्मैपदमिति । कर्तृशब्दो धर्मपरः, कर्तृत्वे परस्मैपदमित्यर्थः। कर्तृत्वं च भावनाश्रयत्वम्, तच्च भावनैवेति बाध्यबाधकभावो घटत एव । यद् वा इच्छामि भुज्यतां भवतेति भावे बोध्यम्। **पञ्जिकायां** तु भवितारमन्तरेण भावो न सम्भवतीति, भावेऽपि कर्ता प्रतीयते इति न्यायात् तदर्थं क्रियमाणं कर्तारमपि विषयीकरोतीति दर्शितम् । तर्हि सप्तमीपञ्चम्यौ किम्भूते इच्छार्थधातुप्रयोगे विध्यादिषु प्रार्थनद्वारेण विहिते न भवतः इत्यर्थः । कुत्र न भवतः इत्याह— यथेति ।।९४७।

**[समीक्षा]**

समग्र व्याकरण की रचना उत्सर्ग-अपवाद के रूप में हुई है । अर्थात् पहले किसी सामान्य विधि को प्रस्तुत किया जाता है, फिर उसमें अपवाद के रूप में विशेष विधियों

को दिखाया जाता है । सामान्य विधियाँ अपवाद या विशेष विधियों को छोड़कर ही प्रवृत्त होती हैं । अर्थात् अपवाद के प्रवृत्त होने पर उत्सर्ग प्रवृत्त नहीं होता । परन्तु धात्वधिकार में दोनों ही विधियों की प्रवृत्ति अभीष्ट होती है, अतः अपवाद को विकल्प से बाधक कहने की आवश्यकता है — इसका निर्वाह दोनों ही व्याकरणों में किया गया है । पाणिनि का सूत्र है — "वाऽसरूपोऽस्त्रियाम्" (अ० ३।१।९४)। अतः उभयत्र समानता है ।

[विशेष वचन]

१. वाशब्दो व्यवस्थावाचीति क्त-युट्-तुम्-खलर्थेषु वाऽसरूपविधिर्नास्तीति (दु०वृ०) ।

२. व्यवस्थितविभाषाबलादेव व्यक्तेराश्रयणाद् वा यावन्ति लक्ष्याणि भवन्ति तावन्ति लक्षणानि (दु०टी०) ।

३. प्रत्ययद्वारकमेव प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः (वि०प०;द्र०-दु०टी०)।

४. न चेष्टार्थमुपादीयमानं शास्त्रमनिष्टाय परिकल्पते इति युक्तम् (वि०प०) ।

५. इष्टाश्रयणं कष्टमित्याह — (क० च०) ।

६. आख्यातं क्रियाप्रधानमित्याख्यातमपि भावनाख्यं भावमाह (क०च०) ।

[रूपसिद्धि]

१. **चेयम्** । चि+ य + सि । **चेतव्यम्** । चि+ तव्य + सि । **चयनीयम्**। चि + अनीय + सि। "स्वराद् यः" (४।२।१०) सूत्र द्वारा 'य' प्रत्यय, गुण तथा विभक्तिकार्य। अपवाद के अभाव में "तव्यानीयौ" (४।२।९) से 'तव्य' तथा 'अनीय' प्रत्यय भी प्रवृत्त होते हैं । तदनुसार 'चेयम्, चेतव्यम्, चयनीयम्' ये तीनों रूप साधु माने जाते हैं ।

२. **नन्दनः** । नन्द् + यु + सि । **नन्दकः** । नन्द् + वुण् + सि । **नन्दयिता** । नन्द् + तृच् + सि । 'टु नदि समृद्धौ' (१।२५) धातु से अपवादरूप "नन्द्यादेर्युः" (४।२।४९) सूत्र द्वारा 'यु' प्रत्यय, नकारागम, 'यु' को 'अन' आदेश तथा विभक्तिकार्य । प्रकृत सूत्र की व्यवस्था के अनुसार उत्सर्गरूप 'वुण्' तथा 'तृच्' प्रत्यय भी होंगे, जिनके फलस्वरूप 'नन्दकः-नन्दयिता' प्रयोगों का भी साधुत्व उपपन्न होगा ।।९४७।

## ९४८. तव्यानीयौ [४।२।९]

[सूत्रार्थ]

धातु के अनन्तर कृत्संज्ञक 'तव्य' तथा 'अनीय' प्रत्यय होते हैं ।।९४८।

[दु० वृ०]

धातोः परौ तव्यानीयौ कृत्सञ्ज्ञकौ भवतः । कर्तव्यम्, करणीयम् । कृत्यत्वाद् भावे कर्मणि च स्यात् । **केलिमः कर्मकर्तरीष्यते**-भिदेलिमाः माषाः, पचेलिमास्तण्डुलाः। वास्तव्य इति। वसेः कर्तरि तव्यो दीर्घश्च **रूढित्वात्** ।।९४८।

[दु० टी०]

तव्या० । कृत्सञ्ज्ञकावित्यधिकारसम्बन्धाविर्भावार्थं **मन्दधियां सुखप्रतिपत्त्यर्थम्,** एवं सर्वत्र प्रतिपत्तव्यम् । कर्तव्यमित्यादि । सकर्मकस्यापि करोतेरविवक्षितकर्मत्वाद् भावे तव्यादिप्रत्ययान्तस्य नपुंसकत्वम्, कर्मणि वाच्यलिङ्गत्वम्। तव्यादेरविशिष्ट-सम्बन्धान्नपुंसकत्वमुदाहरणभेदेन, **वृत्तौ** भेदश्च दर्शित इति । केलिम इत्यादि । धातोरिति सम्बन्धः । भिद्यन्ते माषाः स्वयमेवेति कृत्यसंज्ञायां न प्रयोजनम्, अभिधानमेवेदृशमिति। **अन्य** आह- गुणाभिधानमेतत् तस्यान्वाख्यानं क्रियाकारकसम्बन्धोपायेन शक्यः पक्तुम् - पचेलिमा माषा भवता भवतो वेति कर्तृत्वविवक्षया तृतीया, सम्बन्धविवक्षया षष्ठी कृत्यत्वात् कर्मणि च स्याद् इत्यभिधानात् सिद्धिरिति भावः । वास्तव्य इत्यादि । वसतीति **वास्तव्यः**, वास्तुशब्दो वा नाम वास्तुनि भवो वा **वास्तव्य** इति दिगादिपाठाद् यः इति **तद्धितव्युत्पत्तिवादीत्याह** । वास्तव्यं वटुनेति, भावेऽकर्मकत्वात् ॥९४८।

[वि० प०]

तव्या० । केलिम इत्यादि । भिद्यन्ते स्वयमेव । एवं पच्यन्ते स्वयमेव, तदेतन्न वक्तव्यम्, **अभिधानमेवेदृशम्** । न च कृत्यसंज्ञायां प्रयोजनमस्तीति भावः ॥९४८।

[क० च०]

तव्या० । अनीय एव न त्वनीयः कर्मप्रवचनीय इति निर्देशादिति **हेमः।** **वृत्तौ** कृत्सञ्ज्ञकाविति यदुक्तं तत् कृदधिकारस्योत्तरत्राविर्भावार्थं न तु कृत्संज्ञायाः प्रयोजनमस्तीति "**ते कृत्याः**" (४।२।४६) इति विशेषसञ्ज्ञया भावकर्मणोर्विधानाद् अकर्मकस्यापि धातोरविवक्षितिकर्मत्वाद् भावे तव्यानीयावित्युदाहृतं कर्तव्यमिति । तव्यादिप्रत्ययान्ताद् भावे नपुंसकमेकवचनं च, कर्मणि वाच्यलिङ्गत्वाद् द्विवचनादिकं च । **तर्हि** कथं 'पाकौ, पाकाः' इति भावे पुंल्लिङ्गं द्विवचनादिकं च ? सत्यम् । '**कृदभिहितो भावो द्रव्यवत् प्रकाशते**' (व्या०प०पा० १११) इति न्यायाद् घञादौ द्विवचनादिकम् । तथा चोक्तम् —

**क्रियायाः साध्यतावस्था सिद्धता च प्रकीर्तिता ।**
**सिद्धता द्रव्यमिच्छन्ति तत्रैवेच्छन्ति घञ्विधिम् ।।** इत्यादि ।

घञादौ द्विवचनादिकं **पुंस्त्वं तु स्वभावात्** । यद् वा नपुंसकं युटैवाघ्रातं स्त्रीलिङ्गं च "**स्त्रियां क्तिः**" (४।५।७२) इति क्तिना, पुंस्त्वमस्य सकर्मकादकर्मक-त्वविवक्षायां भावे प्रत्यये आख्याते पश्चात् कर्मानुसन्धानं नास्ति 'भावाख्यातं ध्रौव्यात्' इति नियमात्, कृति तु धात्वर्थकृता व्याप्तिरस्ति पश्चात् कर्मानुसन्धानमस्ति । यथा — कां दिशं मया गन्तव्यमिति । ननु **परमते** केलिमस्य कृत्यसंज्ञया भावे विधानम्, तथा "अवश्यमः कृत्ये" मस्य लोप इति - अवश्यपचेलिमा भवति । **स्वमते** कथम्? सत्यम्, 'अवश्यपचेलिमाः' इत्यत्र वर्णनाशः, न च 'अवश्यमः कृत्ये' इत्यादि सूत्रमस्ति, **रूढ** इत्युक्ते वा कोऽत्र दोषः ॥९४८।

[समीक्षा]

भाव तथा कर्म अर्थ में 'कर्तव्यम्, करणीयम्, एधितव्यम्, एधनीयम्' आदि शब्दरूपों के सिद्ध्यर्थ 'तव्य-अनीय' प्रत्ययों की आवश्यकता होती है । इनका विधान दोनों व्याकरणों में किया गया है । पाणिनि का सूत्र है — "तव्यत्तव्यानीयर:" (अ० ३।१।९६) । यह ज्ञातव्य है कि तित् स्वर के विधानार्थ पाणिनि ने दो प्रत्यय किए हैं — 'तव्यत्' तथा 'तव्य' । पाणिनीय व्याकरण के अनुसार 'तव्यत्' प्रत्ययान्त शब्द में "तित् स्वरितम्" (अ०६।१।१८५) से स्वरित स्वर प्रवृत्त होता है, 'तव्य' प्रत्ययान्त में नहीं । फलत: पाणिनि को तीन प्रत्यय करने पड़ते हैं, जब कि स्वरितविधान की आवश्यकता न होने से कातन्त्र में दो ही प्रत्यय किए गए हैं । चन्द्रगोमी ने चान्द्रव्याकरण में स्वरितविधान आवश्यक होने पर भी केवल 'तव्य' ही प्रत्यय करके उसमें स्वरित स्वर का विधान विकल्प से निर्धारित किया है ।

[विशेष वचन]

१. वास्तव्य इति वसे: कर्तरि तव्यो दीर्घश्च रूढित्वात् (दु० वृ०) ।

२. कृत्संज्ञकावित्यधिकारसम्बन्धाविर्भावार्थं मन्दधियां सुखप्रतिपत्त्यर्थम् (दु० टी०) ।

३. वृत्तौ कृत्सञ्ज्ञकाविति यदुक्तं तत् कृदधिकारस्योत्तरत्राविर्भावार्थम् (क० च०)।

४. कृदभिहितो भावो द्रव्यवत् प्रकाशते (क० च०) ।

[रूपसिद्धि]

१. **कर्तव्यम्** । कृ + तव्य + सि । 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'तव्य' प्रत्यय, 'ऋ' को गुण तथा विभक्तिकार्य ।

२. **करणीयम्** । कृ + अनीय + सि । 'कृ' धातु से प्रकृत सूत्र द्वारा 'अनीय' प्रत्यय तथा अन्य प्रक्रिया पूर्ववत् ॥९४८।

## ९४९. स्वराद् य: [४।२।१०]

[सूत्रार्थ]

स्वर वर्णान्त धातु से 'य' प्रत्यय होता है ॥९४९।

[दु० वृ०]

स्वरान्ताद् धातोर्यो भवति । चेयम्, भव्यम् । स्वरादिति **सुखार्थमेव** ॥९४९।

[दु० टी०]

स्वरा०। ननु ऋवर्णव्यञ्जनान्ताद् घ्यणं वक्ष्यति, पारिशेष्यात् स्वरान्ताद् यप्रत्यय उत्सर्गो भविष्यतीत्याह—स्वरादिति। भूतपूर्वस्वरान्तप्रतिपत्त्यर्थं वा। लव्यमिति । **द्विविध: संस्कार: शब्दानां बुद्ध्या वचनेन च** । तत्र धातुमुच्चार्य सन्निहितं निमित्तं बुद्ध्या

यत्प्रत्ययं परत्वेनाश्रित्य गुणः स्वरवद्भावादेशश्च क्रियते, इदानीमुत्पत्त्यपेक्षायां घ्यणः संनिहितं निमित्तमिति घ्यणेव न स्यात् । यद्येवं वाच्यमिति भूतपूर्वस्वरान्ततया यः प्राप्नोति **"वचोऽशब्दे"** (४।६।६१) इति कत्वप्रतिषेधो **'वच भाषणे'** (२।३०) इत्यस्य स्यात् ? नैवम् । एकदेशविकृतस्यानन्यवद्भावाद् भूतपूर्वगतिरिह शास्त्रे परिज्ञायते, स्थानिवद्भावे च सर्वत्रात्मनोऽन्यत्वं वर्णविधौ च स्थानिवद्भावाभावश्चावश्यमेव प्रतिपत्तव्यः । अन्यथा तव्यादिष्वपि स्थानिनां व्यञ्जनान्तत्वाद् घ्यणेव स्यादिति भव्यम्, प्रचेयम्, आख्येयमिति ।।९४९।

**[वि० प०]**

स्वरात्० । स्वरादिति । ऋवर्णव्यञ्जनान्ताद् घ्यणाघ्रातत्वादिति भावः ।।९४९।

**[क० च०]**

स्वरात् ० । ननु स्वरग्रहणं किमर्थम्, ऋवर्णव्यञ्जनान्ताद् घ्यणेवास्ति बाधकः, स्वरादेव भविष्यति । न च तदन्तार्थं स्वरग्रहणम्, अर्थायातस्वरग्रहणेन तस्य सिद्धेः । अथ भूतपूर्वस्वरप्रतिपत्त्यर्थम्, तेन भव्यमिति सिद्धम्। अन्यथा शास्त्रे बुद्धिप्रवृत्त्या कार्याणि क्रियन्ते इति बुद्धिप्रवृत्तिपक्षे प्रत्ययात् प्राग् गुणे कृते व्यञ्जनान्तत्वात् कथं भव्यमिति यः प्रत्यय इति **वररुचिः**। अत्रापि तदेव वक्ष्यति। नैवम्, तदा वाच्यमिति न सिध्यति **"ब्रुवो वचिः"** (३।४।८८) इति वच्यादेशो मा भूत्, पूर्वस्वरान्तत्वादिति यप्रत्यय एव भविष्यति **"वचोऽशब्दे"** (४।६।६१) इति ज्ञापकान्नात्र यप्रत्यय इति। तेन हि घ्यण्परे कथं कत्वं निषिध्येत । अतो युक्तमेवैतत् **'वच भाषणे'** (२।३०) इत्यस्य चरितार्थत्वात् कथं ज्ञापक इति । तस्माद् **वररुचिमत**मसाधु इत्याह— स्वरादिति। ननु हन्तेर्भावे घ्यण् न दृश्यते इति वक्ष्यति, तदा तस्माद् यः कथन्न स्यात्? नैवम्, यथा घ्यण् न दृश्यते अभिधानात् तथा योऽपीति वक्ष्यते ।।९४९।

**[समीक्षा]**

'गेयम्, चेयम्, भव्यम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ अपेक्षित 'य' प्रत्यय का विधान दोनों ही व्याकरणों में किया गया है । पाणिनि ने तित् स्वर के विधानार्थ तकार अनुबन्ध की योजना 'य' के साथ की है तथा स्वर वर्णों के अवबोधार्थ 'अच्' प्रत्याहार का प्रयोग । उनका सूत्र है — "अचो यत्" (अ० ३।१।९७) । अतः उभयत्र समानता है ।

**[विशेष वचन]**

१. स्वरादिति सुखार्थमेव (दु० वृ०) ।

२. द्विविधः संस्कारः शब्दानां बुद्ध्या वचनेन च (दु०टी०) ।

३. अथ भूतपूर्वस्वरप्रतिपत्त्यर्थम्, तेन भव्यमिति सिद्धम् (क० च०) ।

४. तस्माद् वररुचिमतमसाधु (क० च०) ।

[रूपसिद्धि]

१. **चेयम्** । चि+ य + सि । 'चिञ् चयने' (४।५) धातु से प्रकृत सूत्र द्वारा 'य' प्रत्यय, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से धातुघटित इकार को गुण, लिङ्गसंज्ञा, सि-प्रत्यय, "अकारादसम्बुद्धौ मुश्च" (२।२।७) से 'मु' का आगम तथा सि-प्रत्यय का लोप ।

२. **भव्यम्**। भू + य + सि । 'भू सत्तायाम्' (१।१) धातु से 'य' प्रत्यय आदि कार्य पूर्ववत् ॥९४९ ।

## ९५०. शकिसहिपवर्गान्ताच्च [४।२।११]

[सूत्रार्थ]

'शक्लृ शक्तौ' (४।१५), 'षह मर्षणे' (१।५६०) तथा पवर्गान्त धातुओं से 'य' प्रत्यय होता है ॥९५०।

[दु० वृ०]

शकिसहिपवर्गान्ताच्च धातोर्यो भवति । शक्यम्, सह्यम्, जप्यम, लभ्यम् ॥९५०।

[दु० टी०]

शकि० । व्यञ्जनान्तत्वाद् घ्यणि प्राप्ते वचनम् । **अन्तग्रहणं स्पष्टार्थम्**, तथा योगविभागोऽपीति ॥९५०।

[क० च०]

शकि० । अकारोपधेति **हेमः** । **अयमाशयः**— इकाराद्युपधादीनां घ्यणि ये वा गुण एवास्ति विशेषः । कथमेतत्, तिपः धातोः कुटादित्वाद् ये सति तिप्यमिति गुणाभावो घ्यणि च गुणः इति फलमस्ति, तस्मात्र चारु **हेमोक्तमिति** । अत्राह **कश्चित्**— शकिसहिभ्यामकारोपधाभ्यां साहचर्यात् पवर्गान्तादपि अकारोपधादेव प्रत्ययः ॥९५०।

[समीक्षा]

'शक्यम्, सह्यम्, जप्यम्, लभ्यम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'य' प्रत्यय (यत् ) किया गया है । पाणिनि के दो सूत्र हैं — "पोरदुपधात्, शकिसहोश्च" (अ० ३।१।९८,९९) । दो सूत्रों के कारण पाणिनीय व्याकरण में गौरव कहा जा सकता है, परन्तु प्रकृति-प्रत्यय की दृष्टि से उभयत्र समानता है ।

[विशेष वचन]

१. अन्तग्रहणं स्पष्टार्थम्, तथा योगविभागोऽपीति (दु० टी०) ।

२. तस्मात्र चारु हेमोक्तम् (क० च०) ।

[रूपसिद्धि]

१. **शक्यम्** । शक् + य + सि । 'शक्लृ शक्तौ' (४।१५) धातु से प्रकृत सूत्र द्वारा 'य' प्रत्यय तथा विभक्तिकार्य ।

२. **सह्यम्** । सह् + य + सि । 'षह मर्षणे' (१।५६०) धातु से 'य' प्रत्यय आदि प्रक्रिया पूर्ववत् ।

३. **जप्यम्** । जप् + य + सि । 'जप मानसे च ' (१।१३५) धातु से 'य' प्रत्यय आदि कार्य पूर्ववत् ।

४. **लभ्यम्** । लभ् + य + सि । 'डु लभष् प्राप्तौ' (१।४७२) धातु से प्रकृत सूत्र द्वारा 'य' प्रत्यय तथा विभक्तिकार्य ॥९५०।

## ९५१. आत्खनोरिच्च [४।२।१२]

**[सूत्रार्थ]**

आकारान्त धातु तथा 'खनु अवदारणे' (१।५८४) धातु से 'य' प्रत्यय होता है एवं इन धातुओं के अन्तिम वर्ण के स्थान में इकारादेश भी होता है ॥९५१।

**[दु० वृ०]**

आकारान्ताद् धातोः खनेश्च यो भवति, अनयोरन्तस्य चेकारो भवति । देयम्, धेयम्, खेयम् । अत एत्वे **'असिद्धं बहिरङ्गमन्तरङ्गे'** (का० परि० ३३) इत्यनित्येयम् ॥९५१।

**[दु० टी०]**

आत्० । कथं खेयमिति । इकारस्य गुणे कृते अवर्णस्यैकारे ऐत्वेन भवितव्यम्, सत्यम्। **'स्वरादेशः परनिमित्तिकः पूर्वविधिं प्रति स्थानिवत्'** (का० परि० ९) इत्येत्वमेव । अथवा **'वार्णात् प्राकृतं बलीयः'** (का० परि० ८१) इति नाश्रीयते इति मनसिकृत्याह — अत एत्वे इत्यादि । अन्तरङ्गः **''अवर्ण इवर्णे ए''** (१।२।२), बहिरङ्ग इकारो यप्रत्ययसंनियुक्तत्वात् ॥९५१।

**[वि० प०]**

आत्०। अथ खनेर्नकारस्येत्वे सति ''अवर्ण इवर्णे ए'' (१।२।२) कथं प्रवर्तते? **'असिद्धं बहिरङ्गमन्तरङ्गे'** (का० परि० ३३) इति नकार एव दृश्यते इत्याह— अत एत्व इत्यादि । तर्हि **'वार्णात् प्राकृतं बलीयः'** (का० परि० ८१) इति प्रकृतिकार्ये गुणे सत्यैत्वेन भवितव्यम्। कथं खेयमिति ? सत्यम्, तथापि **'स्वरादेशः परनिमित्तकः पूर्वविधिं प्रति स्थानिवत्'** (का० परि० ९) इति इकार एव दृश्यते इत्येत्वं न विरुध्यते इति ॥९५१।

**[क० च०]**

आत्० । इच्चेति पाठोऽयुक्त इति **हेमः** । इदं तु यथाकथञ्चिदुक्तम्, **विवरणे** तु सर्वत्र शब्दान्तरेणैवार्थः कथ्यते । यथा **''इदुदग्निः''** (२।१।८) इत्यत्र इकारोकारश्चाग्निरिति, तस्मान्नायं नियमः । **वस्तुतस्तु** तपरस्य स्वरूपग्राहकत्वाद् 'देयम्' इत्यादौ गुणे न स्यात्।

यथा "अत् त्वरादीनां च" (३।३।३७) इत्युक्तम्, तर्हि इश्चेति कृते सान्तशङ्का कथन्न स्यात् ? नैवम्, सन्धेया इति ज्ञापकात् । तर्हि इश्चेति कृतेऽपि सन्धेया इति गुणस्य ज्ञापकम् ? सत्यम्, तदा नास्ति **क्षतिः**, उभयथा स्वरादेशः इत्यादि **पञ्जी**। यतः सिद्धवद्भावस्य नित्यता तदा स्थानिवद्भावस्य नित्यत्वमेव ? सत्यम्। न चासिद्धवद्भावस्याप्यन्तपक्षे सिद्धान्तोऽयं कल्प्यते, किन्तु **'वार्णात् प्राकृतं बलीयः'** (का० परि० ८१) इति **पूर्वपक्ष** एवेत्यदोषः । यत्रासिद्धवद्भावस्य नित्यता तत्र स्थानिवद्भावस्यापि। यथा "**सिद्धो वर्णसमाम्नायः**" (१।१।१) । द्युभ्यामिति ॥९५१।

**[समीक्षा]**

'देयम्, धेयम्, खेयम्' आदि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने एक ही सूत्र द्वारा 'य' प्रत्यय तथा 'आ-न्' को 'इ' आदेश करके लाघव प्रस्तुत किया है, जबकि पाणिनि ने 'देयम्- धेयम्' के सिद्ध्यर्थ "अचो यत्" (अ० ३।१।९७) से यत् प्रत्यय एवं "ईद् यति" (अ० ६।४।६५) से आकार को ईकारादेश करके गौरव को ही सूचित किया है । खेयम्' के सिद्ध्यर्थ 'ई च खनः" (अ० ३।१।१११) द्वारा क्यप् प्रत्यय तथा ईकारादेश का स्वतन्त्र विधान किया है, जिससे उनका अतिशय गौरव ही कहा जायेगा ।

**[रूपसिद्धि]**

१. **देयम्।** दा + य + सि । 'डु दाञ् दाने' (२।८४) धातु से 'य' प्रत्यय, आकार को इकार, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से इकार को गुण एकार, 'देय' की लिङ्गसंज्ञा, सि-प्रत्यय, "अकारादसम्बुद्धौ मुश्च" (२।२।७) से 'मु' आगम तथा 'सि' प्रत्यय का लोप ।

२. **धेयम्।** धा + य + सि । 'डु धाञ् धारणपोषणयोः' (२।८५) धातु से 'य' प्रत्यय आदि कार्य पूर्ववत् ।

३. **खेयम्।** खन् + य + सि । 'खनु अवदारणे' (१।५८४) धातु से प्रकृत सूत्र द्वारा 'य' प्रत्यय-नकार को इकारादेश, "अवर्ण इवर्णे ए" से खकारोत्तरवर्ती अकार को एकार-इकार का लोप तथा विभक्तिकार्य ॥९५१।

## ९५२. यमिमदिगदां त्वनुपसर्गे [४।२।१३]

**[सूत्रार्थ]**

उपसर्ग- रहित 'यम उपरमे' (१।१५८), 'मदी हर्षे' (३।४८) तथा 'गद व्यक्तायां वाचि' (१।१३) धातु से 'य' प्रत्यय होता है ॥९५२।

**[दु० वृ०]**

एषामुपसर्गाभावे तु यो भवति । यम्यम्, मद्यम्, गद्यम् । अनुपसर्ग इति किम्? प्रयाम्यम्, प्रमाद्यम्, प्रगाद्यम् । यमो **नियमार्थं** वचनम् ॥९५२।

[दु० टी०]

यमि० । घ्यणि प्राप्ते **समीपलक्षणेयं षष्ठी** । "**प्रत्ययः परः**" (३।२।१) इति वचनात् पर एव । तुशब्दः उक्तसमुच्चयमात्रे । उपसर्गस्याभावोऽ**नुपसर्ग** इत्यव्ययीभावो वा तृतीयासप्तम्योः सम्भवात् । न तु नोपसर्गोऽनुपसर्गः इति तत्पुरुषः, तदा उपसर्गादन्यस्मिन्निति भवति । नायुक्तस्यापि गमकत्वाद् नञ्समास इति कल्पनेयम्। न च नास्त्युपसर्गो येषाम् इति बहुव्रीहिस्तदा षष्ठीबहुवचनम्, सामानाधिकरण्यात् प्रयुज्यते सूत्रत्वाद् आम्स्थाने ङिरित्ययुक्तम्। यम इत्यादि। पवर्गान्तत्वेन सिद्धेऽनुपसर्ग एव यथा स्यादिति ।।९५२ ।

[वि०प०]

यमि० ।पवर्गान्तत्वात् सिद्धमित्याह-यमो नियमार्थमिति । अनुपसर्ग एव यथा स्यादित्यभिप्रायः ।।९५२ ।

[क०च०]

यमि० । उपसर्गस्याभावोऽनुपसर्गः ।अथ नोपसर्गोऽनुपसर्गस्तस्मिन्नित्यर्थः कथन्न स्याद् उपसर्गादन्यस्मिन्नुपपदे स्यात् ? नैवम् , निरुपपदप्रस्तावान्मुख्यत्वाच्च नञोऽत्र प्रसज्यार्थस्य ग्रहणम् ,नाम्नीत्यकरणादिति **दुर्गादित्यः**। अन उपसर्गादिति किमिति। नायं खण्डनपरो ग्रन्थः, किन्त्वनुपसर्गस्य क्व व्यावृत्तिरित्यर्थः। खण्डनपरे हि यमेः पाठो व्यर्थः स्यात् प्रकृतिनियमस्य प्राधान्यादिति **हेमः**। प्राधान्यं च पुनः श्रुतस्यैव धातोर्व्यावृत्तेरसम्भवात् ,अश्रुतकल्पनेऽनौचित्यात् ।।९५२।

**[समीक्षा]**

'यम्यम् ,मद्यम् ,गद्यम् ' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'य' (यत्) प्रत्यय किया गया है। पाणिनि का सूत्र है—"गदमदचरयमश्चानुपसर्गे (अ०३।१।१००) । अतः उभयत्र समानता ही है ।

**[विशेष वचन]**

१.यमो नियमार्थं वचनम् (दु०वृ०)।

२.तुशब्दः उक्तसमुच्चयमात्रे (दु०टी०)।

३.प्राधान्यं च पुनः श्रुतस्यैव धातोर्व्यावृत्तेरसम्भवात् ,अश्रुतकल्पनेऽनौचित्यात् (क०च०) ।

**[रूपसिद्धि]**

१.**यम्यम्**। यम् +य+सि । 'यम उपरमे' (१।१५८) धातु से प्रकृत सूत्र द्वारा 'य' प्रत्यय तथा विभक्तिकार्य ।

२-३. **मद्यम्**। मद् +य+सि । **गद्यम्**। गद् +य+सि । 'मदी हर्षे' (३।४८) तथा'गद व्यक्तायां वाचि'(१।१ ३) धातु से 'य' प्रत्यय तथा विभक्तिकार्य।।९५२।

## ९५३. चरेराङि चागुरौ [४।२।१४]

[सूत्रार्थ]

उपसर्गरहित 'चर गत्यर्थः' (१।१८९) धातु से 'य' प्रत्यय होता है। 'आङ्' उपसर्गपूर्वक भी 'चर' धातु से 'य' प्रत्यय होगा-गुरु अर्थ को छोड़कर।।९५३।

[दु०वृ०]

अनुपसर्गे चरेर्यो भवति आङि चागुरावर्थे । चर्यम् ,आचर्यो देशः। आङीति किम् ? अभिचार्यम् । अगुराविति किम् ? आचार्यो **गुरुः**।।९५३।

[दु०टी०]

चरे०। चकारेण वाक्यद्वयावगतिः । ननु सत्यपि चकारे कथमेकवाक्यं न स्यात् चरेरनुपसर्गे आङि अगुरावर्थेऽनुपसर्गे इति वचनादाङ्पूर्वस्य न प्राप्नोतीति? सत्यम् ,आङि च चरेरगुरावित्यकरणात् ,न च केवलस्य चरेर्गुरुत्वमभिधेयं स्यात् ।।९५३।

[वि०प०]

चरेः । इह वाक्यद्वयं चकाराद् विज्ञेयम् । अथानुपसर्ग इति वचनाद् आङ्पूर्वस्य न प्राप्नोतीति । अनुपसर्गे आङि चरेरगुरावर्थे इत्येकमेव वाक्यं कथन्न स्यात्? तदयुक्तम् , एवं सति "आङि च चरेरगुरौ" इति कुर्यात् । न चैवं कृतम् , अतश्चरेरित्येकं सूत्रम् ,आङि चागुराविति द्वितीयम् । न च केवलस्य चरेर्गुरुरभिधेयोऽस्तीति, येनागुरावित्येकवाक्ये विशेषणं स्यात् ।।९५३।

[समीक्षा]

'चर्यम् ' शब्दरूप सिद्ध करने के लिए दोनों व्याकरणों में 'य' (यत् ) प्रत्यय का विधान किया गया है । कातन्त्रकार ने एतदर्थ स्वतन्त्र सूत्र बनाया है, जबकि पाणिनि ने 'गद-मद-यम' धातुओं के साथ ही इसका पाठ किया है । उनका सूत्र है— "गदमदचरयमश्चानुपसर्गे" (अ०३।१।१००) । परन्तु 'आङ् ' उपसर्गपूर्वक 'चर्' धातु से यत् प्रत्यय के विधानार्थ वार्त्तिककार को वार्त्तिक सूत्र बनाना पड़ता है— "चरेराङि चागुरौ" (का०वृ० ३।१।१००-वा०)। इस प्रकार कातन्त्रीय विधान प्रशस्त कहा जाएगा ।

[रूपसिद्धि]

१.**चर्यम्**। चर्+य+सि । 'चर गत्यर्थः' (१।१८९) धातु से प्रकृत सूत्र द्वारा 'य' प्रत्यय तथा विभक्तिकार्य ।।९५३ ।

## ९५४. पण्यावद्यवर्या विक्रेयगर्ह्यानिरोधेषु [४।२।१५]

[सूत्रार्थ]

'विक्रेय' अर्थ में 'पण्य' शब्द,'गर्ह्य' अर्थ में 'अवद्य' शब्द तथा 'अनिरोध' अर्थ में 'वर्या' शब्द निपातन से सिद्ध होता है ।।९५४ ।

[दु०वृ०]

पण्यमिति निपात्यते विक्रेयेऽर्थे । पण्यं विक्रेयद्रव्यम् । पाण्यमन्यत्। नञ्पूर्वस्य वदेः—अवद्यम् इति निपात्यते गर्ह्येऽर्थे । अनुद्यमन्यत्। नाम्नि वदः क्यप् च (४।२।२०)। वृङो वर्या इत्यनिरोधे गम्यमाने । वर्या अन्या । स्त्रीलिङ्गनिर्देशादिति मतम्-वार्या ऋत्विजः।।९५४।

[दु०टी०]

पण्य०। **'पण व्यवहारे'** (१।४०१)- पणनीयम् ,पण्यम् ।पाण्यमन्यदिति विक्रेयात् स्तोतव्यमित्यर्थे घ्यण्। अवद्यमिति न वदनीयम्, कुत्सितत्वादित्यर्थः। अनुद्यमन्यदिति गर्हितत्वाद् वृङः संभक्तार्थतया मैत्रीकरणार्थ इत्यविरोधविषयो भवति। शतेन वर्या स्त्री,सम्भक्तव्या मैत्रीकर्तव्येत्यर्थः। वृञः पुनरावरणार्थवृत्तित्वात् प्रतिबन्धे वृत्तिरिति अनिरोधेऽप्रतिबन्धे प्रसराविघात इति यावत् । वृत्या अन्येति निरोधनीया **"वृञ्दृजुषी०"** (४।२।२३) इत्यादिना क्यप् । स्त्रीत्यादि मतं **मतान्तरमेतत्**। ऋत्विजां यजनद्रव्यविभागकरणेनानिरोधो गम्यते, पुमांसो ह्यमी नात्र निपातनम्। **सूत्रकारस्य** मतेन 'वर्या ऋत्विजः' इति भवितव्यम् । अन्यथा **निःसन्देहार्थं** वर्यापण्यावद्यानीति विदध्यात् । तथा च वर्यं प्रधानमुत्तमं विदुरित्यभिधाने **भाष्येऽपि** नास्ति विशेषः।।९५४।

[वि०प०]

पण्या० । वर्येति ।**'वृङ् सम्भक्तौ'** (८।५१) । **सम्भक्तिश्च मैत्रीकरणमि**त्यनिरोधो गम्यते । यथा 'शतेन वर्या, सहस्रेण वर्या'। सम्भक्तव्या **मैत्रीकर्तव्ये**त्यर्थः। वृत्या अन्येति। या निरोधनीया। वृञ् आवरणे। अत्रावरणार्थवृत्तितया निरोधो गम्यते **"वृञ्दृजुषीण्शासुस्तुगुहां क्यप्"** (४।२।२३) स्त्रीत्यादि । ऋत्विजां यजनकर्माधिगतद्रव्यसंविभागकरणेऽनिरोधोऽप्रतिबन्धः। स्वातन्त्र्यानभिघातोऽस्त्येव, केवलम् एते पुरुषा इति नात्र निपातनम् । मतमिति **मतान्तरमेतत्**। **सूत्रकारस्य तु** मते भवितव्यमेव निपातनम्। वर्या ऋत्विज इति । स्त्रीलिङ्गनिर्देशेन हि **"वर्यापण्यावद्यमनिरोधविक्रेयगर्ह्येषु"** इति कुर्यात् । एवं हि न सन्देहः किं दीर्घः, दीर्घात् परलोपमात्रं वा इति । असन्दिग्धं हि सूत्रं प्रशस्यते **पण्डितैः**। तथा च -वर्यं प्रधानमुत्तमम् इत्यभिधाने सामान्येन पठ्यते ।।९५४।

[क०च०]

पण्याः । अनुद्यमित्यत्र नञ् नाम्न उपपदम् इति **"नाम्नि वदः क्यप्"** (४।२।२०)। **कश्चिद्** आह-सूत्रे स्त्रीलिङ्गनिर्देशात् स्त्रियामेवास्य विषयः इति तदेव प्रकाशयति-स्त्रीत्यादि । तथा च **भट्टौ—'सुग्रीवो नाम वर्यासौ'** इति ।।९५४।

[समीक्षा]

'अवद्यम् ,पण्यम् ,वर्या' शब्दों के अर्थविशेष में सिद्ध्यर्थ दोनों ही व्याकरणों में निपातनविधि अपनाई गई है, क्योंकि असामान्य स्थिति में यही एक ऐसी विधि है,

जिससे अप्राप्त विधियों की प्राप्ति,प्राप्त का निवारण तथा अधिक=विशेष अभीष्ट अर्थ का निर्धारण संभव होता है—

**अप्राप्तेः प्रापणं चापि प्राप्तेर्वारणमेव च ।**
**अधिकार्थविवक्षा च त्रयमेतन्निपातनात् ।।**

यहाँ पर भी निपातन से 'अवद्य' शब्द की सिद्धि 'गर्ह्य' अर्थ में, 'पण्य' शब्द की विक्रेय अर्थ में तथा 'वर्या' शब्द की 'अनिरोध' अर्थ में अभीष्ट है । इसीलिए यहाँ इस विधि का औचित्य सिद्ध होता है ।

पाणिनि का एतदर्थ सूत्र है—"अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु" (अ.३।१।१०१) । अत: उभयत्र समानता है ।

[विशेष वचन]

१.वृङः सम्भक्तार्थतया मैत्रीकरणार्थ इत्यविरोधविषयो भवति । शतेन वर्या स्त्री सम्भक्तव्या मैत्रीकर्तव्या इत्यर्थ: (दु० टी०)। —

२. सहस्रेण वर्या सम्भक्तव्या मैत्रीकर्तव्या इत्यर्थ: (वि०प०) ।

३.मतमिति मतान्तरमेतत् । सूत्रकारस्य तु मते भवितव्यमेव निपातनम् - वर्या ऋत्विज इति (वि०प०) ।

४.असन्दिग्धं हि सूत्रं प्रशस्यते पण्डितै:(वि०प०)।

[रूपसिद्धि]

१.**पण्यं विक्रेयद्रव्यम्** । पण् +य+सि । 'पण व्यवहारे स्तुतौ च' (१।४०१) धातु से विक्रेय अर्थ विवक्षित होने पर प्रकृत सूत्र द्वारा निपातन से 'य' प्रत्यय तथा विभक्तिकार्य ।

२.**वर्या** स्त्री । वृ+य+सि । 'वृङ् सम्भक्तौ' (८।५१) धातु से अनिरोध अर्थ में प्रकृत सूत्र द्वारा 'य' प्रत्यय, गुण, स्त्रीलिङ्ग में 'आ' प्रत्यय,समानलक्षण दीर्घ तथा विभक्तिकार्य ।

३. **अवद्यम्**। नञ् +वद्+य+सि ।'वद व्यक्तायां वाचि' (१।६१५) धातु से गर्ह्य अर्थ के विवक्षित होने पर प्रकृत सूत्र द्वारा 'य' प्रत्यय, नञ् समास तथा विभक्तिकार्य ।।९५४।

# ९५५ वह्यं करणे [४।२।१६]

[सूत्रार्थ]

करण अर्थ की विवक्षा में 'वह्य' शब्द की सिद्धि निपातनविधि से होती है ।।९५५।

[दु०वृ०]

वह्यमिति निपात्यते करणेऽर्थे । वह्यं शकटम् । वाह्यमन्यत् ।।९५५।

[दु० टी०]

वह्यम्०। उह्यतेऽनेनेति **वह्यम्** ।।९५५।

[क०च०]

वह्यम्०। करणे उपपदे इति नाशङ्क्यते, निरुपपदप्रस्तावात्। एवमुत्तरत्रापि ।।९५५।

[समीक्षा]

'वहत्यनेन' या 'उह्यतेऽनेन' इस करण अर्थ की विवक्षा में 'वह्यम्' शब्दरूप के सिद्ध्यर्थ दोनों ही व्याकरणों में निपातनविधि से 'य' (यत्) प्रत्यय किया गया है। पाणिनि का सूत्र है— "वह्यं करणम्" (अ० ३।१।१०२)। अतः उभयत्र समानता ही है।

[विशेष वचन]

१.'करणे उपपदे' इति नाशङ्क्यते, निरुपपदप्रस्तावात् (क०च०)।

[रूपसिद्धि]

१.**वह्यं शकटम्**। 'वह प्रापणे' (१।६१०) धातु से करण अर्थ की विवक्षा में प्रकृत सूत्र द्वारा निपातन से 'य' प्रत्यय तथा विभक्तिकार्य ।।९५५।

## ९५६.अर्यः स्वामिवैश्ययोः [४।२।१७]

[सूत्रार्थ]

'स्वामी' तथा 'वैश्य' अर्थ के विवक्षित होने पर 'अर्यः' शब्दरूप निपातनविधि से सिद्ध होता है ।।९५६।

[दु०वृ०]

'अर्यः' इति निपात्यते स्वामिनि वैश्ये चार्थे। अर्यः स्वामी, अर्यो वैश्यः। आर्योऽन्यः।।९५६।

[दु०टी०]

अर्यः। 'ऋ गतौ' (२।७४)। घ्यणि प्राप्ते वैश्यो वर्णविशेषः।।९५६

[समीक्षा]

स्वामी तथा वैश्य अर्थ में 'अर्यः' शब्द के सिद्ध्यर्थ दोनों ही व्याकरणों में निपातनविधि अपनाई गई है। पाणिनि का सूत्र है— "अर्यः स्वामिवैश्ययोः" (अ० ३।१।१०३)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. **अर्यः**। ऋ+य+सि। 'ऋ गतौ' (२।७४) धातु से स्वामी-वैश्य अर्थों की विवक्षा में प्रकृत सूत्र द्वारा निपातन से 'य' प्रत्यय, गुणादेश तथा विभक्तिकार्य ।।९५६।

## ९५७. उपसर्या काल्या प्रजने [४।२।१८]

[सूत्रार्थ]

गर्भग्रहण के समय को प्राप्त कर लेने वाली धेनु-वडवा आदि के अर्थ में 'उपसर्या' शब्द निपातन से सिद्ध होता है ।।९५७।

[दु०वृ०]

प्राप्तः कालो यस्याः सा **'काल्या'** इति संज्ञिता । प्रजननं प्रजनो गर्भग्रहणम्। प्रजने प्राप्तकाला चेद् **उपसर्येति** निपात्यते । उपस्त्रियते **इत्युपसर्या** गौः। ऋतुमतीत्यर्थः। उपसार्या अन्या ॥९५७।

[दु०टी०]

उप०। **तद्धितव्युत्पतिवादी** त्वाह-कालं प्राप्ता चेदित्यर्थे कालाद् यप्रत्ययः। उपस्त्रियते गर्भेण सम्बन्धः, **ऋतुमतीति** नोच्यते, **प्रतिपत्तिगौरवात्** । ऋतुशब्दस्य नानार्थतया तादृगर्थप्रतीतौ **विलम्बः** स्यादिति भावः॥९५७।

[वि०प०]

उप०। उपस्त्रियते गर्भेण कर्त्रेति सम्बन्धः॥९५७।

[समीक्षा]

प्रथम गर्भ को **प्राप्त कर** लेने वाली गाय-वडवा आदि अर्थ के विवक्षित होने पर'उपसर्या' शब्द की सिद्धि निपातन से दोनों ही व्याकरणों में की गई है । पाणिनि का सूत्र है— "उपसर्या काल्या प्रजने" (अ०३।१।१०४) ।अतः उभयत्र समानता ही है ।

[विशेष वचन]

१.ऋतुमतीति नोच्यते, प्रतिपत्तिगौरवात् (दु०टी०) ।

[रूपसिद्धि]

१.**उपसर्या** । उप+सृ+य+आ+सि ।'उप' उपसर्गपूर्वक 'सृ गतौ' (२।७४) धातु से प्रकृत सूत्र द्वारा निपातन से 'य' प्रत्यय, गुणादेश, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य ॥९५७।

## ९५८. अजर्यं सङ्गते च [४।२।१९]

[सूत्रार्थ]

मैत्री या मित्रता के कर्ता होने पर 'अजर्य' शब्द निपातन से सिद्ध होता है ॥९५८।

[दु०वृ०]

अजर्यमिति निपात्यते सङ्गते कर्तरि । न जीर्यतीति **अजर्यम्,** सङ्गतमित्यर्थः। सङ्गत इति किम् ? अजरिता कम्बलः॥९५८।

[दु०टी०]

अज०। **साङ्गमनं सङ्गतम् मैत्री,** तस्मिन् कर्तरीत्यर्थः। कर्ता चेत् सङ्गतशब्दवाच्योऽर्थो भवतीति ॥९५८।

[क० च०]

अज०। सङ्गतं युक्तम् । न जीर्यतीति यथाकथंचिद् वाक्यम् । **वस्तुतः** सम्बन्धमित्यर्थः । अजरितेति वयोहानिः, नान्यदित्यर्थः ॥९५८।

[समीक्षा]

सङ्गत अर्थ में 'अजर्यम्' शब्द की सिद्धि निपातन से दोनों व्याकरणों में की गई है। पाणिनि का सूत्र है — "अजर्यं सङ्गतम्" (अ० ३।१।१०५)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. **अजर्यम्**। नञ् + जॄ + य + सि। न जीर्यति। 'जॄष् वयोहानौ' (३।१८) धातु से सङ्गत अर्थ में प्रकृत सूत्र द्वारा 'य' प्रत्यय, गुणादेश, नञ्समास तथा विभक्तिकार्य ॥९५८॥

## ९५९. नाम्नि वदः क्यप् च [४।२।२०]

[सूत्रार्थ]

नाम के उपपद में रहने पर 'वद व्यक्तायां वाचि' (१।६१५) धातु से 'क्यप्' तथा 'य' प्रत्यय होता है ॥९५९॥

[दु० वृ०]

नाम्न्युपपदे वदः क्यप् भवति, चकाराद् यश्च। ब्रह्मणो वदनम् ब्रह्मोद्यम्, ब्रह्मवद्यम्। ब्रह्मणा उद्यते कथा ब्रह्मोद्या, ब्रह्मवद्या, ब्रह्मवद्या। नाम्नीति किम्? वाद्यम्, अनुवाद्यम् ॥९५९॥

[दु० टी०]

नाम्नि०। क्यप् चेति। चकारेण यप्रत्ययोऽनुकृष्यते, न चानुकृष्टत्वादुत्तरत्र प्रवर्तते ॥९५९॥

[क० च०]

नाम्नि०। ननु अनुवाद्यमिति कथं प्रत्युदाहरणम्, अनुशब्दस्य नामत्वात्, नैवम्। कृत्प्रत्ययविधावुपसर्गाणां नामत्वं नास्ति। "आतोऽनुपसर्गात् कः" (४।३।४) **"उपसर्गे त्वातो डः"** (४।२।५२) इत्यत्रोपसर्गग्रहणेन ज्ञाप्यते इति **हेमः**। **श्रीपतेस्तु "सत्सूद्विष०"** (४।३।७४) इत्यत्र तथा चोक्तम् —

**कृद्विधावुपसर्गाणां नामत्वेनापरिग्रहः।**
**उपसर्गेऽपीति लिङ्गं सदादिभ्यः क्विपो विधौ॥**

इति मतम् ॥९५९॥

[समीक्षा]

'ब्रह्मोद्यम्, ब्रह्मवद्यम्' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में क्यप् - य (यत्) प्रत्ययों का विधान किया गया है। पाणिनि का सूत्र है — "वदः सुपि क्यप् च" (अ० ३।१।१०६)। अतः प्रायः उभयत्र समानता ही है।

[विशेष वचन]

१. कृत्प्रत्ययविधावुपसर्गाणां नामत्वं नास्ति (क० च०) ।

[रूपसिद्धि]

१. **ब्रह्मोद्यम् - ब्रह्मवद्यम्** । ब्रह्मन् + वद् + क्यप् + सि । ब्रह्मणो वदनम्। 'ब्रह्मणः' इस नाम = स्याद्यन्त पद के उपपद में रहने पर 'वद व्यक्तायां वाचि' (१।६१५) धातु से प्रकृत सूत्र द्वारा 'क्यप्' प्रत्यय, 'क्-प्' अनुबन्धों का प्रयोगाभाव, "स्वपिवचियजादीनां यण्परोक्षाशीःषु" (३।४।३) से सम्प्रसारण, नलोप, गुण तथा विभक्तिकार्य । 'य' प्रत्यय होने पर सम्प्रसारण के अभाव में 'ब्रह्मवद्यम्' रूप सिद्ध होता है ।

२. **ब्रह्मोद्या-ब्रह्मवद्या**। ब्रह्मन् + वद् + क्यप् + आ + सि । ब्रह्मणा उद्यते कथा। 'ब्रह्मणा' इस नाम के उपपद में रहने पर 'वद व्यक्तायां वाचि' (१।६१५) धातु से प्रकृत सूत्र द्वारा 'क्यप्' प्रत्यय, सम्प्रसारण, नलोप, गुण, स्त्रीलिङ्ग में 'आ' प्रत्यय, समानलक्षण दीर्घ-आलोप तथा विभक्तिकार्य । 'य' प्रत्यय होने पर 'ब्रह्मवद्या' रूप ॥९५९।

## ९६०. भावे भुवः [४।२।२१]

[सूत्रार्थ]

नाम पद (स्याद्यन्त) के उपपद में रहने पर भाव अर्थ में 'भू सत्तायाम्' (१।१) धातु से 'क्यप्' प्रत्यय होता है ॥९६०।

[दु० वृ०]

नाम्न्युपपदे भुवो भावे क्यब् भवति । ब्रह्मभूयं गतः, ब्रह्मत्वं गत इत्यर्थः । नाम्नीति किम् ? भव्यम्, प्रभव्यम् । भावग्रहण**मुत्तरार्थम्** इह **सुखार्थं** च ॥९६०।

[दु० टी०]

भावे० । भूरकर्मकस्तस्मात् कृत्यो भाव एव भविष्यति किं भावग्रहणेन । कर्मणि मा भूदिति कथं सकर्मकत्वम्, उपसर्गसम्बन्धात् । यथा सुखमनुभवतीति प्राप्तिवचनस्य वा भवतेः सकर्मकत्वम् । यथा सर्वं भवति उपास्यते समं राज्ञाम् । अन्ये च धातवोऽर्थान्तरे वर्तमानाः सकर्मकाः अकर्मकाश्च दृश्यन्ते । यथा— वहति नदी, वहति भारम् इति ? सत्यम् । यत् प्राप्तिवचनस्य भवतेः कर्म तत् कृत्यप्रत्ययान्तस्य सोपसर्गस्यैव भवति नानुपसर्गस्य । तत्र नामग्रहणेन तत्प्रतियोगिना व्यावृत्तिः सिद्धा । **अन्य** आह— न प्राप्त्यर्थो भवतिः, विशेषवाच्योऽर्थः प्रकरणबलादिना गम्यः । न चेह क्रियान्तरापेक्षया सकर्मकत्वमस्तेरपि प्रसङ्गात् सर्वं भवतीति क्रियाविशेषणं द्रष्टव्यम्। तदसदित्याह— भावेत्यादि। उत्तरत्र तु न क्रियते, इह **सुखप्रतिपत्त्यर्थ** एव फलम् ॥९६०।

[वि० प०]

भावे० । भव्यम्, प्रभव्यमिति । स्वरान्तत्वाद् यप्रत्यये गुणे च **"ओदौद्भ्यां**

**कृद् यः स्वरवत्'** (४।१।३१) इति स्वरवद्भावादवादेशः । अथ भावग्रहणं किमर्थम् ? भवतेरकर्मकत्वाद् भावे एव भविष्यति, न कर्मणि । अथ प्राप्तिवचनस्य भवतेः सकर्मकत्वम् । यथा सर्वं भवति, सर्वं प्राप्नोतीति ? सत्यम्, यत् प्राप्त्यर्थस्य भवतेः सकर्मकत्वम्, तत् कृत्यप्रत्ययान्तस्य सोपसर्गस्यैव भवति नानुपसर्गस्य, स्वभावात् । तत्र च नामग्रहणेनैव तत्प्रतियोगिना व्यावृत्तिः सिद्धा, एवं सति 'सुखमनुभूयते' इत्यत्रापि सकर्मकस्य कर्मणि न प्राप्तिः, उक्तादेव हेतोरिति ? सत्यम्, एवन्तर्हि **उत्तरार्थं क्रियमाणमिहापि सुखार्थं** भवतीत्याह— भावग्रहणमित्यादि ॥९६०।

**[क० च०]**

भावे० । सर्वं भवतीति । ननु **'भू प्राप्तावात्मनेपदी'** (९।२८०) इत्यात्मनेपदमेव प्राप्नोति, तत् कथं परस्मैपदनिर्देशः ? सत्यम् । तत्र इनन्त इति बोद्धव्यम्, चुरादिपाठसामर्थ्याद् इनन्ते सति प्राप्त्यर्थो भू प्राप्तावात्मनेपदीत्यर्थः इति **केचित्** । तन्न, **''चुरादेश्च''** (३।२।११) इत्यत्र **टीकायां** गणकृतमनित्यमिति 'भावयते, भवते' इत्यनिनन्तस्यापि आत्मनेपददर्शनात् । **कश्चिद्** आह —**'गणकृतमनित्यम्'** (का० परि० २९) इति नात्मनेपदम् । **वस्तुतस्तु** नायं चुरादिपठितो भूः, किन्तु धातूनामनेकार्थत्वाद् यदा **'भू सत्तायाम्'** (१।१) इति भूधातुः प्राप्तौ वर्तते, तदैवमुदाहरणम् ॥९६०।

**[समीक्षा]**

'ब्रह्मभूयं गतः, देवभूयं गतः' इत्यादि क्यप्प्रत्ययान्त शब्दरूप भाव अर्थ में सिद्ध करने के लिए दोनों ही व्याकरणों में 'क्यप्' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है — ''भुवो भावे'' (अ० ३।१।१०७) । सूत्र में 'भाव' शब्द का पाठ उत्तरार्थ माना गया है । अतः उभत्र समानता ही है ।

**[विशेष वचन]**

१. भावग्रहणमुत्तरार्थमिह सुखार्थं च (दु० वृ०; दु० टी०; वि० प०) ।
२. अन्ये च धातवोऽर्थान्तरे सकर्मका अकर्मकाश्च दृश्यन्ते (दु० टी०) ।
३. प्राप्तिवचनस्य भवतेः सकर्मकत्वम् (वि० प०) ।
४. वस्तुतस्तु नायं चुरादिपठितो भूः, किन्तु धातूनामनेकार्थत्वाद् यथा 'भू सत्तायाम्' इति भूधातुः प्राप्तौ वर्तते तदैवमुदाहरणम् (क० च०) ।

**[रूपसिद्धि]**

१. **ब्रह्मभूयं गतः** । ब्रह्मन् + भू + क्यप् + सि । ब्रह्मत्वं गतः। 'ब्रह्मन्' शब्द के उपपद में रहने पर 'भू सत्तायाम्' (१।१) धातु से प्रकृत सूत्र द्वारा 'क्यप्' प्रत्यय, नलोप तथा विभक्तिकार्य॥९६०।

## ९६१. हनस्त च [४।२।२२]

**[सूत्रार्थ]**

नाम = स्याद्यन्त पद के उपपद में रहने पर 'हन् हिंसागत्योः' (२।४) धातु से भाव अर्थ में 'क्यप्' प्रत्यय तथा 'हन्' धातु के अन्तिम वर्ण नकार को तकारादेश होता है ।।९६१।

**[दु० वृ०]**

नाम्न्युपपदे हन्तेर्भावे क्यब् भवति तकारश्चान्तादेशः । ब्रह्मणो हननं **ब्रह्महत्या**। भाव इति किम् ? श्वघात्यो मृगः । नाम्नीति किम् ? घातः, उपघातः । हन्तेर्भावे घ्यण् न दृश्यते । यपि सति तोऽन्तो नास्ति, क्यपो द्व्यनुबन्धकत्वात् ।।९६१।

**[दु० टी०]**

हन० । ब्रह्मणो हननमिति **'ब्रह्महत्या'** इति स्वभावात् स्त्रीलिङ्गः क्यबन्त इति प्रत्युदाहरणं पुंलिङ्गेन न विरुध्यते इति सूत्रे लिङ्गविशेषकथनाद् भिन्नलिङ्गप्रत्युदाहरणेऽपि न दोष इति भावः । **अन्यः** प्रत्युदाहरति स्त्रीलिङ्गमेव - घात्या वृषली । क्यप् इत्यादि। **'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य'** (व्या० परि० ४६) इत्यर्थः ।।९६१।

**[वि० प०]**

हनः । श्वघात्य इति । शुना हन्यते इति विगृह्य व्यञ्जनान्ताद् घ्यण्, घत्वादिकं च इज्वद्भावात् । ननु घ्यणो बाधकमिदं ततोऽनेन विनिर्मुक्तपक्षे घ्यणैव प्रत्युदाहरणमुचितम् । कथं 'घातः, उपघातः' इति घञा प्रत्युदाहृतम् इति ? सत्यम् । भावे प्रत्युदाहरणं तत्र च हन्तेर्घ्यण् नाभिधीयते इत्याह—हन्तेरित्यादि । ननु क्यपः ककारेऽपनीतेऽनुबन्धे **"यपि च"** (४।१।६०) इति पञ्चमलोपे **"धातोस्तोऽन्तः पानुबन्धे"** (४।१।३०) इति तान्तत्वे च सिद्धं किं नकारस्य तकारादेशेनेत्याह— यपीत्यादि । **"यपि च"** (४।१।६०) इत्यत्र हि यप 'एकानुबन्धस्य ग्रहणे न द्व्यनुबन्धस्य ग्रहणम् (व्या० परि० ४६) स्यादिति भावः ।।९६१।

**[क० च०]**

हन० ।'त' इति न प्रत्ययः, अविभक्तिनिर्देशात् । यथा "श्रुवः शृ च" (३।२।३५) इति। 'त' इत्यकार **उच्चारणार्थः** 'ब्रह्महत्या सुरापानम्' इत्यादिनिर्देशात् ।।९६१।

**[समीक्षा]**

'ब्रह्महत्या, अश्वहत्या' इत्यादि शब्दरूपों के सिद्ध्यर्थ क्यप् प्रत्यय तथा नकार को तकारादेश दोनों ही व्याकरणों में किया गया है । पाणिनि का सूत्र है — "हनस्त च" (अ० ३।१।१०८)। अतः उभयत्र समानता है ।।९६१।

[विशेष वचन]

१. ब्रह्महत्येति स्वभावात् स्त्रीलिङ्गः क्यबन्तः इति (दु० टी०)।

२. अन्यः प्रत्युदाहरति स्त्रीलिङ्गमेव — घात्या वृषली (दु० टी०)।

३. 'त' इति न प्रत्ययः, अविभक्तिनिर्देशात् (क० च०)।

४. 'त' इत्यकार उच्चारणार्थः (क० च०)।

[रूपसिद्धि]

१. **ब्रह्महत्या**। ब्रह्मन् + हन् + क्यप् + आ + सि। ब्रह्मणो हननम्। 'ब्रह्मणः' इस नाम के उपपद में रहने पर 'हन् हिंसागत्योः' (२।४) धातु से प्रकृत सूत्र द्वारा 'क्यप्' प्रत्यय, 'क्-प्' अनुबन्धों का प्रयोगाभाव, नकार को तकारादेश, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य ॥९६१।

## ९६२. वृञ्दृजुषीण्शासुस्तुगुहां क्यप् [४।२।२३]

[सूत्रार्थ]

'वृञ् वरणे' (४।८), 'दृङ् आदरे' (५।११२), 'जुषी प्रीतिसेवनयोः' (५।११४), 'इण् गतौ' (२।१३), 'शासु अनुशिष्टौ' (२।३९), 'ष्टुञ् स्तुतौ' (२।६५) तथा 'गुहू संवरणे' (१।५९५) धातु से क्यप् प्रत्यय होता है ॥९६२।

[दु० वृ०]

नाम्नि भावे चेति निवृत्तम्। एषां क्यप् भवति। वृञ् -वृत्यः। वृङस्तु वार्या ऋत्विजः। दृङ् - आदृत्यः। जुषी-जुष्यः। इण् - इत्यः। इङस्तु-उपेयम्। शासोरुदनुबन्धः **सुखार्थः**। शिष्यः। स्तुत्यः। गुह्यः। अवश्यस्तुत्यः इति पुनः कारग्रहणात्। कथम् 'अनिवार्यो गजैरन्यैः स्वभाव इव देहिनाम्' इति? सम्भक्तेरन्यत्रापि? वृञ इनन्तो वा॥९६२।

[दु० टी०]

वृञ्० । इण्वद् इकोऽपीति अधीत्यमित्युदाहरन्त्ये**के** । इङ इत्यादि । **'ईङ् गतौ'** (३।९२) इत्यस्मात् स्वराद् य इत्यर्थः । शासोरित्यादि । **'आङः शास इच्छायाम्'** (२।४६) इत्यस्य घ्यणि क्यपि विशेषाभावान्न ह्याङ्पूर्वस्य शासेरुपधाया इत्त्वमस्ति, तस्मात् **प्रक्रियागौरवमेव** केवलमिति परिशिष्टः शासुरेव गृह्यते इत्यर्थः। अवश्येत्यादि । क्यबिति। क्यबधिकारे पुनः क्यब्ग्रहणं क्यबेव यथा स्यादिति प्रतिपादनार्थम्। "**उवर्णादावश्यके**" (४।२।३७) इत्यनेन परत्वाद् घ्यण् मा भूदिति । अत एव पूर्वोक्ते क्यपि पकारानुबन्ध उच्यते ॥९६२।

[वि० प०]

वृञ्० । इण्वदिकोऽपि । अधीत्य इत्यपि भवति । उपेयमिति "**स्वराद् यः**"

(४।२।१०) । शासोरित्यादि । कथमेतद् यावता उदनुबन्धमन्तरेण **'आङः शास इच्छायाम्'** (२।४६) इत्यस्यापि ग्रहणं स्यात् ? सत्यम् , एवं मन्यते — आशास्तेर्ग्रहणे घ्यणैव सिद्धत्वान्न क्यपं विदधीत, विशेषाभावात् । **"शासेरिदुपधाया अण्व्यञ्जनयोः"** (३।४।४८) इत्यतः कृतो हि विशेषः । नञ्पूर्वस्य शासेरित्त्वमगुणेऽस्तीति तत्र शासुरेव ग्रहीष्यते । शिष्य इति । इत्त्वे सति **"शासिवसिघसीनां च"** (३।८।२७) इति षत्वम्। अवश्येत्यादि । **"समासेऽवश्यमः कृत्ये"** (कात० परि०-सं० सू० ६२)। मस्य लुगिति वचनादवश्यमो मलोपः । इह **"उवर्णादावश्यके"** (४।२।३७) इति परत्वाद् घ्यण् प्राप्तो न भवतीति । **'वृङ् सम्भक्तौ'** (८।५१) इत्यनेनावरणार्थेन सिद्धो न **'वृञ् आवरणे'** (९।२९६ वृञ् वरणे) इत्यस्य धातोरयमनिवार्य इति भावः । अथवा इनन्तादावरणार्थत्वादेव स्वराद् यप्रत्यये सिद्धमित्याह— इनन्तो वेति ॥९६२।

**[क० च०]**

वृञ् ० । शास्विति । **'शो तनूकरणे, षो प्रेरणे'** (३।१९,२१) इत्यनयोर्नाशङ्का 'शो' इत्यकरणात् । नाम्नि भावे चेति निवृत्तमिति । यदि भावानुवृत्तिः स्यात् तदा "भावे भूवृञ्दृजुषीण०" इत्येकयोगः कृतः स्यात् । यदि नाम्नोऽनुवृत्तिस्तदा **"नाम्नि वदः क्यप् च"** (४।२।२०) इत्यनन्तरं भावे वृञ् इत्यादि विदध्यात् । अथ सिद्धान्ते कथं नामानुवृत्तिस्तदनन्तरकरणात् ? सत्यम् । भावार्थं **'भावे भुवः"** (४।२।२१) इत्यस्यानन्तरमुचितमिति एतेन हनस्त चेत्यत्र विशिष्टस्यानुवर्तनमिति सूचितम् । अत्र वारणार्थे क्यप एव प्राप्तिः, तत् कथमनिवार्यमिति । अयं गजोऽन्यैर्गजैरनिवार्यः, क इव तत्राह— देहिनां प्राणिनां स्वभावो यथाऽनिवार्यस्तथेति। तत्रेति **पञ्जी,** तत्राणां सहचरितः शासिरिह गृह्यते इत्युक्तत्वात् ॥९६२।

**[समीक्षा]**

'वृत्यः, स्तुत्यः, शिष्यः' आदि शब्दरूपों की सिद्धि के लिए दोनों ही व्याकरणों में 'क्यप्' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "एतिस्तुशास्वृदृजुषः क्यप्" (अ० ३।१।१०९) । कातन्त्रकार ने सूत्र में 'गुह' धातु का भी पाठ किया है, जिसे पाणिनीय व्याकरण के अन्तर्गत वार्त्तिक सूत्र में दिखाया गया है । अतः प्रायः उभयत्र समानता ही है ।

**[विशेष वचन]**

१. शासोरुदनुबन्धः सुखार्थः (दु० वृ०) ।

२. तस्मात् प्रक्रियागौरवमेव केवलम् (दु० टी०) ।

**[रूपसिद्धि]**

१. **वृत्यः**। वृ + क्यप् + सि । 'वृञ् वरणे' (४।८) धातु से प्रकृत सूत्र द्वारा क्यप् प्रत्यय, "धातोस्तोऽन्तः पानुबन्धे" (४।१।३०) से तकारागम, गुणाभाव तथा विभक्तिकार्य ।

२. **आदृत्यः** । आ + दृ + क्यप् + सि । 'आङ्' उपसर्गपूर्वक 'दृङ् आदरे' (५।११२) धातु से क्यप् प्रत्यय आदि कार्य पूर्ववत् ।

३. **जुष्यः** । जुष् + क्यप् + सि । 'जुषी प्रीतिसेवनयोः' (५।११४) धातु से क्यप् प्रत्यय आदि कार्य पूर्ववत् ।

४. **इत्यः** । इण् + क्यप् + सि । 'इण् गतौ' (२।१३) धातु से क्यप् प्रत्यय आदि कार्य पूर्ववत् ।

५. **शिष्यः** । शास् + क्यप् + सि । 'शासु अनुशिष्टौ' (२।३९) धातु से प्रकृत सूत्र द्वारा क्यप् प्रत्यय, "शासेरिदुपधाया अण्व्यञ्जनयोः" (३।४।४८) से धातुघटित आकार को इकार तथा विभक्तिकार्य ।

६. **स्तुत्यः** । स्तु + क्यप् + सि । 'ष्टुञ् स्तुतौ' (२।६५) धातु से क्यप् प्रत्यय आदि कार्य पूर्ववत् ।

७. **गुह्यः** । गुह् + क्यप् + सि । 'गुहू संवरणे' (१।५९५) धातु से क्यप् प्रत्यय आदि कार्य पूर्ववत् ॥९६२।

## ९६३. ऋदुपधाच्चाक्लृपिचृतेः [४।२।२४]

[सूत्रार्थ]

'क्लृप्' तथा 'चृत्' धातुओं को छोड़कर ऋकारोपध धातुओं से क्यप् प्रत्यय होता है ॥९६३॥

**[दु० वृ०]**

ऋदुपधाद् धातोः क्लृपिचृतिवर्जितात् क्यप् भवति । वृत्यम्, वृध्यम् । अक्लृपिचृतेरिति किम् ? विकल्प्यम्, विचर्त्यम् । ऋदिति तपरः **सुखार्थः** ॥९६३।

**[दु० टी०]**

ऋदु० । ऋत इत्यास्तां किमुपधाग्रहणेन क्लृपिचृत्योर्वर्जनान्न तदन्तविधिः ? सत्यम्, ऋकारवतोऽपि क्लृपिचृत्योर्वर्जनादिति । **'कृपू सामर्थ्ये, चृती हिंसायाम्'** (१।४८८;५।३५) । **केचित् 'ऋच स्तुतौ'** (५।२६) इत्यस्यापि वर्जनमिच्छन्ति — अर्चः । योगविभागः **सुखप्रतिपत्त्यर्थः** ॥९६३।

**[क० च०]**

ऋदुप० । अथोपधाग्रहणं किमर्थम्, क्लृपिचृतिवर्जनाद् ऋदन्तानां न भविष्यति? सत्यम् । ऋकारवतो धातोरित्यपि सम्भवादिति **दुर्गः** । सम्भावनामात्रं न परमार्थः **'यादृग्जातीयस्य विप्रतिषेधः'** (का० परि० ९०) इति न्यायात् । अत एव ज्ञापकात् क्लृपेर्ऋकारस्य ऌकारः कार्यः इति **वररुचिः** । **अस्मन्मते** रश्रुतेर्लश्रुतिरिति वक्तव्यमेव ॥९६३।

[समीक्षा]

'वृत्यम्, वृध्यम्' आदि शब्दरूपों के सिद्ध्यर्थ दोनों व्याकरणों में ऋकारोपध धातुओं से 'क्यप्' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "ऋदुपधाच्चाक्लृपिचृतेः" (अ० ३।१।११०) । अतः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. ऋदिति तपरः सुखार्थः (दु० वृ०) ।

२. योगविभागः सुखप्रतिपत्त्यर्थः (दु० टी०) ।

३. सम्भावनामात्रं न परमार्थः (क० च०) ।

[रूपसिद्धि]

१. **वृत्यम्** । वृत् + क्यप् + सि । 'वृतु वर्तने' (१।४८४) धातु से प्रकृत सूत्र द्वारा 'क्यप्' प्रत्यय, लिङ्गसञ्ज्ञा, सि - प्रत्यय तथा "अकारादसम्बुद्धौ मुश्च" (२।२।७) से 'मु' आगम-सिलोप ।

२. **वृध्यम्** । वृध् + क्यप् + सि । 'वृधु वृद्धौ' (१।४८५) धातु से क्यप् प्रत्यय आदि कार्य पूर्ववत् ।।९६३।

## ९६४. भृञोऽसंज्ञायाम् [४।२।२५]

[सूत्रार्थ]

क्यप्प्रत्ययान्त शब्द सञ्ज्ञावाची न होने पर 'डु भृञ् धारणपोषणयोः' (२।८५) धातु से 'क्यप्' प्रत्यय होता है ।।९६४।

[दु० वृ०]

भृञोऽसंज्ञायां क्यप् भवति। भरणं **भृत्यम्**। भ्रियते इति वा **भृत्यः**। असंज्ञायामिति किम् ? भार्या नाम क्षत्रियः, भार्या वधूः । ननु च सञ्ज्ञायामपि स्त्रियां क्यबस्ति, न तस्य भावेऽभिधानात् ।।९६४।

[दु० टी०]

भृञो०। भृत्यः कर्मकारः। पोष्यत्वादेवमुच्यते, तस्येयं संज्ञा। भार्या वधूरिति। अभर्तर्यपि सम्बन्धमात्रत्वादेवमुच्यते। भार्या देवदत्तस्येति। तेन घ्यणेवात्र भवति। समजादिसूत्रे संज्ञायामपि स्त्रियां भृञः क्यपैव भवितव्यम्, न घ्यण्प्रत्ययेनेति चोदयति। ननु चेत्यादि। भावे स्त्रीलिङ्गसंज्ञायामसौ विधीयते, कर्मणि चेदं प्रत्युदाहरणमिति नास्ति क्यपः प्रसङ्ग इति परिहरन्नाह— तस्येत्यादि। अयमेवार्थः श्लोकेन निबध्यतेऽन्यैः—

**संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिद्ध्यति ।**
**स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिद्ध्यति ।।९६४।**

[वि० प०]

भृञः। भृत्य इति। पोष्यत्वादुच्यते न तु संज्ञेयम्, भार्या वधूरिति । अपुष्यमाणाया

अपि विवाहसम्बन्धतः सञ्ज्ञा उच्यते। न च पुनरयं क्रियाशब्दः। ननु चेति। समजासनीत्यादिना क्यबस्तीति कथं प्रत्युदाहरणे घ्यण्? न च व्यावृत्तिबलादेव तेनापि क्यप् न भवतीति वक्तव्यम्। पुंसि व्यावृत्तेर्दृष्टत्वात् स्त्रियां तु तेन क्यबेव स्यादिति **पूर्वपक्षः**। उत्तरमाह— न तस्येति। समजादिसूत्रेण भृञो भावे क्यप् विधीयते, कर्मणि चेदं प्रत्युदाहरणमिति न दोषः। तदुक्तम् —

**संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिद्ध्यति ।**
**स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिद्ध्यति ।।**

भावाधिकार इति । **शब्दशक्तिस्वभावाद्** भृञो भावे क्यप् अधिकृतो न तु शास्त्रीयस्तत्र भावाधिकारोऽस्ति ।।९६४।

**[क० च०]**

भृ० । तदुक्तमिति । संज्ञायां गम्यमानायां पुंसि दृष्टत्वाद् व्यावृत्तिरिति शेषः । ते तव **सिद्धान्तवादिनो** मते इत्यर्थः । एतेन व्यावृत्तिबलान्न क्यबिति देश्यमपास्तम् । **सिद्धान्तमाह**— स्त्रियामित्यधिकारः सम्बन्धः, न तु पूर्वं दृष्टस्योत्तरत्रापि सम्बन्ध इति भावः ।।९६४।

**[समीक्षा]**

'भृत्यम्, भृत्यः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क्यप्' प्रत्यय निर्दिष्ट है । पाणिनि का सूत्र है — "भृञोऽसञ्ज्ञायाम्" (अ० ३।१।११२)। अतः उभयत्र समानता ही है ।

**[रूपसिद्धि]**

१. **भृत्यम्** । भृ + क्यप् + सि । भरणम् । 'डु भृञ् धारणपोषणयोः' (२।८५) धातु से प्रकृत सूत्र द्वारा 'क्यप्' प्रत्यय, तकारागम तथा विभक्तिकार्य ।

२. **भृत्यः** । भृ + क्यप् + सि । भ्रियते यः सः । 'भृ' धातु से क्यप् प्रत्यय आदि कार्य पूर्ववत् ।।९६४।

## ९६५. ग्रहोऽपिप्रतिभ्यां वा [४।२।२६]

**[सूत्रार्थ]**

'अपि' तथा 'प्रति' उपसर्गों से परवर्ती 'ग्रह उपादाने' (८।१४) धातु से 'क्यप्' प्रत्यय विकल्प से होता है ।।९६५।

**[दु० वृ०]**

अपिप्रतिभ्यां पराद् ग्रहेः क्यप् भवति वा । अपिगृह्यम्, अपिग्राह्यम् । प्रतिगृह्यम्, प्रतिग्राह्यम् ।।९६५।

**[दु० टी०]**

ग्रह०। **छन्दसीत्यपौराणिकः पक्षः** इति सूत्रमुच्यते ।।९६५।

[समीक्षा]

'अपिगृह्यम्, प्रतिगृह्यम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क्यप्' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है—"प्रत्यपिभ्यां ग्रहेश्छन्दसि" (अ० ३।१।११८)। अन्तर यह है कि पाणिनि को छन्दस् = वेद में क्यप्प्रत्ययान्त शब्दरूप अभिमत हैं और लौकिक संस्कृत में 'प्रतिग्राह्यम्, अपिग्राह्यम्' शब्दरूप। परन्तु कातन्त्रकार इन्हें छान्दस प्रयोग नहीं मानते। उनके विचार से दोनों ही प्रकार के रूप लौकिक संस्कृत में साधु मान्य हैं। अतः वे क्यप्प्रत्यय का विकल्प से विधान करते हैं। फलतः कातन्त्रीय दृष्टिकोण को अधिक विशद कहा जा सकता है।

[विशेष वचन]

१. छन्दसीत्यपौराणिकः पक्षः इति सूत्रमुच्यते (दु० टी०)।

[रूपसिद्धि]

१. **अपिगृह्यम्, अपिग्राह्यम्।** अपि + ग्रह् + क्यप् + सि। 'अपि' उपसर्गपूर्वक 'ग्रह उपादाने' (८।१४) धातु से प्रकृत सूत्र द्वारा 'क्यप्' प्रत्यय, "ग्रहिज्यावयिव्यधि०" (३।४।२) इत्यादि से सम्प्रसारण तथा विभक्तिकार्य। पक्ष में "ऋवर्णव्यञ्जनान्ताद् घ्यण्" (४।२।३५) से 'घ्यण्' प्रत्यय होने पर 'अपिग्राह्यम्' रूप बनेगा।

२. **प्रतिगृह्यम, प्रतिग्राह्यम्।** प्रति + ग्रह + क्यप् + सि। 'प्रति' उपसर्गपूर्वक 'ग्रह' धातु से 'क्यप्' तथा पक्ष में 'घ्यण्' प्रत्यय पूर्ववत् ॥९६५।

## ९६६. पदपक्ष्ययोश्च [४।२।२७]

[सूत्रार्थ]

'पद' तथा 'पक्ष्य' अर्थ में 'ग्रह उपादाने' (८।१४) धातु से 'क्यप्' प्रत्यय होता है॥९६६॥

[दु० वृ०]

पक्षे भवः **पक्ष्यो** वर्गः। पदपक्ष्ययोरर्थयोर्ग्रहेः क्यब् भवति। प्रगृह्यं पदम् । यत् स्वरेण न सन्धीयते। अवगृह्यं पदम्। यस्यावग्रहः क्रियते । पक्षे—अर्जुनगृह्या सेना। चकारादस्वैरिणि बाह्यायाञ्चार्थे — गृह्यका इमे। अवरुद्धका इत्यर्थः। ग्रामगृह्या स्त्री। ग्रामबाह्या इत्यर्थः॥९६६॥

[दु० टी०]

पद०। पक्ष्यो वर्ग उच्यते। अवग्रहः पदविभागः। अर्जुनस्य पक्ष्या अर्जुनगृह्या। चकारादित्यादि। अस्वैरी अस्वतन्त्रः। दयायां कप्रत्ययः। बाह्यायामिति स्त्रीलिङ्गनिर्देशाल्लिङ्गान्तरे न भवति। मतान्तरेणेदमुच्यते। **सूत्रकारमतेन चकारः उक्तसमुच्चयमात्रे**॥९६६।

[वि० प०]

पद०। यस्यावग्रहः क्रियते इति।–यत्र हि समुदायपदेऽवान्तरपदानि नानारूपाणि अवगृह्य व्यवच्छिद्य व्याख्यायन्ते। ततोऽवयवभूतस्य पदस्यावग्रहो विच्छेदो व्याख्यानार्थं क्रियते तदवगृह्यमित्यर्थः। गृह्यका इति अनुकम्पायां कः। अस्वैरिणः परतन्त्रीकृताः इत्यर्थः। बाह्यायामिति स्त्रीलिङ्गनिर्देशो लिङ्गान्तरनिषेधार्थः॥९६६।

[समीक्षा]

'प्रगृह्यम् , अवगृह्यम् , अर्जुनगृह्या सेना' आदि शब्दरूप पद-पक्ष्य अर्थों में क्यप् प्रत्यय के विधान से दोनों व्याकरणों में सिद्ध किए गए हैं । पाणिनि का सूत्र है— "पदास्वैरिबाह्यापक्ष्येषु च" (अ०३।१।११९)। अन्तर यह है कि पाणिनीय सूत्र में 'अस्वैरी-बाह्या' अर्थ भी पठित हैं, परन्तु कातन्त्र में इन दो अर्थों का ग्रहण चकार के बल से होता है। अतः प्रायः उभयत्र समानता ही है।

[विशेष वचन]

१. चकारादस्वैरिणि बाह्यायां चार्थे (दु० वृ०)।

२. सूत्रकारमतेन चकार उक्तसमुच्चयमात्रे (दु० टी०)।

३. बाह्यायामिति स्त्रीलिङ्गनिर्देशो लिङ्गान्तरनिषेधार्थः (वि० प०)।

[रूपसिद्धि]

१. **प्रगृह्यं** पदम् । प्र + ग्रह् + क्यप् + सि। 'प्र' उपसर्गपूर्वक 'ग्रह् उपादाने' (८।१४) धातु से 'क्यप्'-प्रत्यय, सम्प्रसारण तथा विभक्तिकार्य।

२. **अवगृह्यं** पदम् । अव + ग्रह् + क्यप् + सि। 'अव'-उपसर्गपूर्वक 'ग्रह्' धातु से 'क्यप्' प्रत्यय आदि कार्य पूर्ववत् ।

३. **अर्जुनगृह्या** सेना। अर्जुन + ग्रह् + क्यप् + आ + सि। 'ग्रह' धातु से क्यप् प्रत्यय, 'अर्जुन' शब्द के साथ समास तथा विभक्तिकार्य॥९६६।

## ९६७. वौ नीपूङ्भ्यां कल्कमुञ्जयोः [४।२।२८]

[सूत्रार्थ]

'कल्क-मुञ्ज' अर्थों में 'वि' उपसर्गपूर्वक 'णीञ् प्रापणे' (१।६००) तथा 'पूङ् पवने' (१।४६५) धातुओं से 'क्यप्' प्रत्यय होता है॥९६७।

[दु० वृ०]

वावुपपदे नीपूङ्भ्यां कल्कमुञ्जयोरर्थयोर्यथासङ्ख्यं क्यब् भवति। विनीयः कल्कः, विनेयमन्यत् । विपूयो मुञ्जः, विपव्यमन्यत् ॥९६७।

[दु० टी०]

वौ०। कल्कस्त्रिफलादीनाम् , मुञ्जस्तृणविशेषः। अर्थयोरिति कर्मणोर्वाच्ययोरिति यथासङ्ख्यमुदाहरति। पूङ् बन्धेऽप्यस्य य एव—विपव्यमिति। केचिन्निरनुबन्धमेव

पठन्ति विपवनमवश्यं तदपवादतया प्रत्युदाहरन्ति - विपाव्यम् । "**उवर्णादावश्यके**"(४।२।३७) इति घ्यण् , **अन्यस्तु** यप्रत्ययम् एव प्रत्युदाहरति ।।९६७।

**[समीक्षा]**

'विनीयः, विपूयः' आदि शब्दरूपों को 'कल्क-मुञ्ज' अर्थों में सिद्ध करने के लिए दोनों ही व्याकरणों में क्यप् प्रत्यय की व्यवस्था की गई है। पाणिनि का सूत्र है— "विपूयविनीयजित्या मुञ्जकल्कहलिषु" (अ० ३।१।११७)। अन्तर यह है कि पाणिनि ने 'विपूय-विनीय' शब्द निपातन से सिद्ध किए हैं, जबकि कातन्त्रकार ने साक्षात् 'क्यप्' प्रत्यय का विधान किया है। फलतः कातन्त्रकार का दृष्टिकोण प्रशस्त है।

**[विशेष वचन]**

१. केचिन्निरनुबन्धमेव पठन्ति (दु० टी०)।

**[रूपसिद्धि]**

१. **विनीयः**। वि + नी + क्यप् + सि। 'वि' उपसर्गपूर्वक 'णीञ् प्रापणे' (१।६००) धातु से कल्क अर्थ में 'क्यप्' प्रत्यय, णकार को नकार तथा विभक्तिकार्य।

२. **विपूयः**। वि + पू + य + सि। 'वि' उपसर्गपूर्वक 'पूङ् पवने' (१।४६५) धातु से मुञ्ज अर्थ में 'क्यप्' प्रत्यय तथा विभक्तिकार्य।।९६७।

## ९६८. कृवृषिमृजां वा [४।२।२९]

**[सूत्रार्थ]**

'डु कृञ् करणे' (७१७), 'वृषु सेचने' (१।२२६) तथा 'मृजू शुद्धौ' (२।२९) धातुओं से वैकल्पिक 'क्यप्' प्रत्यय होता है।।९६८।

**[दु० वृ०]**

कृञादिभ्यो विभाषया क्यप् भवति। कृत्यम् , कार्यम् । वृष्यम् , वर्ष्यम्। मृज्यम्, मार्ग्यम् । दुह्यम् , दोह्यम् । शस्यम् , शंस्यम् । दुहिशंसिभ्यां क्यबपि "**कृत्ययुटोऽन्यत्रापि च**" (४।५।९२) इति वचनात् । तथा मृषोद्यमिति क्यबेव। तथा पाणिसमवाभ्यां सृजो घ्यणेव—पाणिसर्ग्या, समवसर्ग्या रज्जुः। तथा समो वा भृञः क्यप् —संभृत्यः, संभार्यः। तथा तकिचतिपतिशसियजिभ्यो य एव—तक्यम्, चत्यम्, पत्यम् , शस्यम् , यज्यम् । तथा गुहो घ्यणपि — गुह्यम् , गोह्यम् । तथा जयतेर्हलौ क्यबेव—जित्या हलिः। महद् हलं हलिरुच्यते।।९६८।

**[दु० टी०]**

कृवृ०। करोतेर्नित्यं घ्यणि प्राप्ते वृषिमृज्योर्ऋदुपधत्वात् क्यपि प्राप्ते विकल्पः,

वचनात् सोऽपि भवति। दुह्यम् इत्यादि। यजेर्गत्वप्रतिषेधाद् घ्यणि याज्यम् । जित्येति हलावभिधेये स्वभावात् स्त्रीलिङ्गम् ।।९६८।

[वि० प०]

कृवृषि०। मार्ग्यमिति। **"मर्जो मार्जिः; चजोः कगौ धुड्घानुबन्धयोः"** (३।८।२३) इति गत्वं च। क्यबेवेति। "नाम्नि वदः क्यप् च" (४।६।५६) न यप्रत्ययोऽपीत्यर्थः। घ्यणेवेति। न च ऋदुपधद्वारेण क्यबित्यर्थः। पूर्ववज्जकारस्य गत्वम् । य एवेति। व्यञ्जनान्ताद् घ्यण् । घ्यणपीति। न केवलं वृन्दृजुषीण० इत्यादिना क्यबित्यर्थः। गोह्यमिति। नाम्युपधत्वाद् घ्यणि गुणो भवति। क्यबेवेति। न तु **"स्वराद् यः"** (४।२।१०) इत्यर्थः। जित्येति। हलावभिधेये स्वभावात् स्त्रीलिङ्गम् ।।९६८।

[समीक्षा]

'कृत्यम् , वृष्यम् , मृज्यम् ' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क्यप् ' प्रत्यय का विधान किया गया है। पाणिनि के सूत्र हैं — "मृजेर्विभाषा, विभाषा कृवृषोः" (अ० ३।१।११३,१२०)। पाणिनीय सूत्रद्वयप्रयुक्त गौरव की अपेक्षा कातन्त्रीय लाघव स्पष्ट है।

[रूपसिद्धि]

१. **कृत्यम् , कार्यम्** । कृ + क्यप् + सि। 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'क्यप्' प्रत्यय, तकारागम तथा विभक्तिकार्य। पक्ष में 'घ्यण्' प्रत्यय होने पर 'कार्यम्' शब्दरूप सिद्ध होता है।

२. **वृष्यम् , वर्ष्यम्**। वृष + क्यप् + सि। 'वृषु सेचने' (१२२६) धातु से वैकल्पिक 'क्यप्' प्रत्यय आदि कार्य पूर्ववत् ।

३. **मृज्यम्, मार्ग्यम्**। मृज् + क्यप् + सि। 'मृजू शुद्धौ' (२।२९) धातु से वैकल्पिक 'क्यप् ' प्रत्यय आदि कार्य पूर्ववत् ।।९६८।

## ९६९. सूर्यरुच्याव्यथ्याः कर्तरि [४।२।३०]

[सूत्रार्थ]

'सूर्य, रुच्य' तथा 'अव्यथ्य' शब्द निपातन से कर्ता अर्थ में सिद्ध होते हैं।।९६९।

[दु० वृ०]

एते निपात्यन्ते कर्तरि। **'षू प्रेरणे'** (५।१८)-सुवति लोकान् सरति वा **सूर्यः**। रोचते इति **रुच्यः**। न व्यथते इति **अव्यथ्यः**।।९६९।

[दु० टी०]

सूर्य०। सुवति लोकानिति। कर्मणि प्रवर्तयतीत्यर्थः। सुवति कर्मणि वा। प्रेरयति, तस्मिन्नुदिते सर्वकर्मारम्भात् । सरतीति गमनपरत्वादिति।।९६९।

[समीक्षा]

'सूर्य, रुच्य, अव्यथ्य' शब्दरूपों की सिद्धि क्यप्प्रत्ययान्त निपातन से दोनों व्याकरणों में की गई है। पाणिनि का सूत्र है ''राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः'' (अ० ३।१।११४)। अतः उभयत्र प्रायः समानता ही है ।

[रूपसिद्धि]

१. **सूर्यः**। सू, सृ + क्यप् + सि। सुवति लोकान् । 'षू प्रेरणे' (५।१८) धातु से क्यप् प्रत्यय, रेफागम तथा विभक्तिकार्य। सरति सततम् । 'सृ गतौ' (१।२७४) धातु से क्यप् प्रत्यय, 'ऋ' को उर्-ऊर् तथा विभक्तिकार्य।

२. **रुच्यः**। रुचँ + क्यप् + सि। रोचते। 'रुच दीप्तौ' (१।४७३) धातु से क्यप् प्रत्यय तथा विभक्तिकार्य।

३. **अव्यथ्यः**। नञ् + व्यथ् + क्यप् + सि। न व्यथते। 'व्यथ दुःखभयचलनयोः' (१।४९०) धातु से क्यप् प्रत्यय, नञ्समास तथा विभक्तिकार्य।।९६९।

## ९७०. भिद्योद्ध्यौ नदे [४।२।३१]

[सूत्रार्थ]

'भिद्य' तथा 'उद्ध्य' शब्द 'नद' अर्थ में निपातन से सिद्ध होते हैं ।।९७०।

[दु० वृ०]

एतौ नदे कर्तरि निपात्येते। भिनत्ति कूलानीति—**भिद्यो** नदः। उज्झत्युदकमिति—**उद्ध्यो** नदः। कथं भेद्यो नदः, उज्झ्यो नदः इति कर्मविवक्षायाम् ।।९७०।

[समीक्षा]

'भिद्य-उद्ध्य' शब्दों को कर्ता अर्थ में सिद्ध करने के लिए दोनों ही व्याकरणों में निपातन से क्यप् प्रत्यय की व्यवस्था की गई है। पाणिनि का सूत्र है—''भिद्योद्ध्यौ नदे'' (अ० ३।१।११५)। अतः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **भिद्यः**। भिद् + क्यप् + सि। भिनत्ति कूलानि। 'भिदिर् विदारणे' (६।२) धातु से कर्ता अर्थ में निपातन द्वारा क्यप् प्रत्यय तथा विभक्तिकार्य।

२. **उद्ध्यः**। उज्झ् + क्यप् + सि। उज्झत्युदकम् । 'उज्झ उत्सर्गे' (५।२८) धातु से कर्ता अर्थ में निपातन से क्यप् प्रत्यय तथा विभक्तिकार्य।।९७०।

## ९७१. पुष्यसिध्यौ नक्षत्रे [४।२।३२]

[सूत्रार्थ]

'पुष्य-सिध्य' शब्द कर्ता या अधिकरण अर्थ में नक्षत्रवाची होने पर क्यप्प्रत्ययान्त निपातन से सिद्ध होते हैं।।९७१।

[दु० वृ०]

एतौ निपात्येते नक्षत्रे कर्तरि अधिकरणे वा। पुष्णाति कार्याणि पुष्यन्त्यस्मिन्निति वा—**पुष्यः**। साधयति कार्याणि सिध्यन्त्यस्मिन्निति वा — **सिध्यः** पुष्य एव॥९७१।

[समीक्षा]

'पुष्यः - सिद्ध्यः' शब्दों की क्यप्-प्रत्ययान्त निपातन से सिद्धि दोनों व्याकरणों में की गई है। पाणिनि का सूत्र है—"पुष्यसिद्ध्यौ नक्षत्रे" (अ० ३।१।११६)। अतः उभयत्र समानता है।

[रूपसिद्धि]

१. **पुष्यः**। पुष् + क्यप् + सि। पुष्णाति कार्याणि, पुष्यन्ति कार्याणि अस्मिन्निति वा। 'पुष पुष्टौ' (१।२२८) धातु से कर्ता या अधिकरण अर्थ में प्रकृत सूत्र द्वारा निपातन से क्यप् प्रत्यय तथा विभक्तिकार्य।

२. **सिध्यः**। साध् + क्यप् + सि। साधयति कार्याणि, सिध्यन्ति कार्याण्यस्मिन्निति वा। 'साध संसिद्धौ' (३।२३) धातु से क्यप् प्रत्यय, आकार को इकार तथा विभक्तिकार्य॥९७१।

## ९७२. युग्यं पत्रे [४।२।३३]

[सूत्रार्थ]

'वाहन' अर्थ में 'युग्यम्' शब्द निपातन से क्यप्प्रत्ययान्त सिद्ध होता है॥९७२।

[दु० वृ०]

युग्यमिति निपात्यते पत्रे वाहनेऽर्थे। युज्यतेऽनेनेति, युज्यते इति वा—**युग्यं** पत्रम् ॥९७२।

[समीक्षा]

'युग्यम्' शब्द पत्र=वाहन अर्थ में दोनों व्याकरणों में निपातन से सिद्ध किया गया है। पाणिनि का सूत्र है — "युग्यं च पत्रे" (अ०३।१।१२१)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. **युग्यम्** । युज् + क्यप् + सि। युज्यतेऽनेनेति, युज्यते इति वा। 'युजिर् योगे' (६।७) धातु से 'क्यप्' प्रत्यय, जकार को गकार तथा विभक्तिकार्य॥९७२।

## ९७३. कृष्टपच्यकुप्ये संज्ञायाम् [४।२।३४]

[सूत्रार्थ]

'कृष्टपच्याः, कुप्यम् ' ये दोनों शब्द सञ्ज्ञा अर्थ में निपातन से सिद्ध होते हैं॥९७३।

[दु० वृ०]

एते निपात्येते संज्ञायाम् । कृष्टे पच्यन्ते स्वयमेव **कृष्टपच्याः** व्रीहयः। कुप्यते इति **कुप्यम्** । सुवर्णरजताभ्यामन्यदुच्यते॥९७३।

[दु० टी०]

कृष्ट०। कृष्टे पच्यन्ते स्वयमेवेत्यादि। निपातनात् कर्मकर्तरीत्यर्थः। शुद्धे कर्मणि घ्यणेव—कृष्टपाक्य इति। यत्र संज्ञा नास्ति तत्र कोप्यमिति॥९७३।

[समीक्षा]

'कृष्टपच्य-कुप्य' शब्दों को सञ्ज्ञा अर्थ में दोनों ही व्याकरणों में निपातन से क्यप्प्रत्ययान्त सिद्ध किया गया है। पाणिनि का सूत्र है- "राजसूयसूर्यमृषोद्य-रुच्यकुप्यकृष्टपच्याव्यथ्याः" (अ० ३।१।११४)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. **कृष्टपच्याः**। कृष्ट + पच् + क्यप् + जस् । कृष्टे पच्यन्ते स्वयमेव। 'कृष्ट' शब्द के उपपद में रहने पर 'डु पचष् पाके' (१।६०३) धातु से प्रकृत सूत्र द्वारा निपातन से 'क्यप् ' प्रत्यय, समास तथा विभक्तिकार्य।

२. **कुप्यम्** । कुप् + क्यप् + सि। कुप्यते। 'कुप रोषे' (३।६८) धातु से क्यप् प्रत्यय तथा विभक्तिकार्य ॥९७३।

## ९७४. ऋवर्णव्यञ्जनान्ताद् घ्यण् [४।२।३५]

[सूत्रार्थ]

ऋवर्णान्त तथा व्यञ्जनान्त धातु से 'घ्यण्' प्रत्यय होता है॥९७४।

[दु० वृ०]

ऋवर्णान्ताद् व्यञ्जनान्ताच्च धातोर्घ्यण् भवति। कृ—कार्यम् । शृ-शार्यम् । वाक्यम् । णकार इज्वद्भावार्थः। घकारः सामान्याभिघातार्थः॥९७४।

[दु० टी०]

ऋवर्ण०। अन्तग्रहणमिह **सुखार्थम्** ॥९७४।

[वि० प०]

ऋवर्ण०। सामान्याभिघातार्थ इति। कत्वगत्वलक्षणस्य कार्यविशेषस्य सम्पादनार्थो घकार इत्यर्थः॥९७४।

[क० च०]

ऋवर्ण०। **'येन विधिस्तदन्तस्य'** (का० परि० ३) इति सिद्धे अन्तग्रहणं **सुखार्थमिति** दुर्गः। **वररुचिस्त्वाह**—अन्तग्रहणादधिकारार्थलाभादमावस्येति सिद्धम् । तन्मते नेदं सूत्रमस्ति। **अस्मन्मते 'अमावस्या वा'** (४।२।४५) इत्यत्र स्वीकारात् **सुखार्थमुक्तम्** ।

अथ षण्णिति निर्दिश्यताम् , किं घकारेण तर्हि आख्यातिकेन यणा सह समानत्वे कार्यमित्यत्र "**यणाशिषोर्ये**" (३।६।१३) इतीकारागमः स्यात् । तथा कृतमित्यादौ "**के यण्वच्च योक्तवर्जम्**" (४।१।७) इत्यनेन एतद् यण्युक्तं वृद्ध्यादिकमप्यतिदिष्टं स्यात्। नैवम् , न तावद् "**यणाशिषोर्ये**" (३।६।१३) इतीकारागमः आशिषि आख्यातिकस्य साहचर्याद् यण्णपि तदेव गृह्यते, नापि "**के यण्वच्च०**" (४।१।७) इत्यादिनातिदेशः।

योक्तन्तावदाख्यातिकमेव सम्भवति तत्साहचर्यादादेशोऽपि तस्यैव यणः। तर्हि 'वाक्यम्, योग्यम् ' इत्यादौ कथं कत्वगत्वे स्याताम्, घानुबन्धत्वाभावादस्य? सत्यम्, "**चजोः कगौ**" (४।६।५६) इत्यत्र यण्ग्रहणं "**घ्यण्यावश्यके**" (४।६।६४) इत्यत्र यण्यावश्यके इति क्रियताम् । **अन्ये** तु आवश्यके कत्वगत्वे। तत्र यदि यणि तेन कत्वादिस्तत्कथं तयोर्निषेधो निषेधाद् विधिरिति योगो भविष्यति। यथा "**ध्याप्योः**" (४।१।५४) इत्यत्र वचनात् सम्प्रसारणं सिद्धम् । नैवम् , तथापि आख्यातिकेन यणा सहास्य विशेषाभावादवश्यं 'पच्यते' इत्यादावपि कत्वगत्वे स्यातामिति। तेन सह तुल्यत्वव्याघाताय घकारः क्रियते इत्याह-घकारः इति।

समानस्य सदृशस्य भावः, सामान्यं तुल्यत्वम् , अर्थाद् आख्यातिकेन यणा सह। तर्हि कत्व-गत्वलक्षणस्य कार्यस्येत्यादि **पञ्जिकापङ्क्तिः** कथं सङ्गच्छते ? उच्यते - कत्वगत्वे लक्ष्येते येन तत् **कत्वगत्वलक्षणं** यण्यावश्यके इति सूत्रं तस्य कार्यस्य कत्वगत्वलक्षणस्य यो विशेषः कृद् यणि भवति, आख्यातिके न भवति। तत्सम्पादनार्थो घकार इत्यर्थः। अथ प्रकरणं हि प्रकरणस्य नियामकम् अतः कृद्यण्येव कत्वगत्वे भविष्यतः, नाख्यातिके ? सत्यम् , तदा **सुखार्थम्** ।।९७४।

**[समीक्षा]**

'कार्यम् , वाक्यम् , पाक्यम् ' इत्यादि शब्दरूप दोनों ही व्याकरणों में घ्यण्-ण्यत् प्रत्ययों से सिद्ध किए गए हैं। पाणिनि का सूत्र है-"ऋहलोर्ण्यत् " (अ० ३।१।१२४)। 'घ् - त्' अनुबन्धों की भिन्नता अपने-अपने व्याकरण की प्रक्रिया के अनुसार है । अतः उभयत्र प्रायः समानता ही है ।

**[विशेष वचन]**

१. णकार इज्वद्भावार्थः। घकारः सामान्याभिघातार्थः (दु० वृ०)।

२. अन्तग्रहणमिह सुखार्थम् (दु० टी०, क० च०)।

३. प्रकरणं हि प्रकरणस्य नियामकम्--------- तदा सुखार्थम् (क० च०)।

**[रूपसिद्धि]**

१. **कार्यम्** । कृ + घ्यण् + सि। 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'घ्यण्' प्रत्यय, 'घ्-ण्' अनुबन्धों का प्रयोगाभाव, णकारानुबन्ध से इज्वद्भाव, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से 'ऋ' को वृद्धि आर् तथा विभक्तिकार्य ।

२. **शार्यम्।** शृ + घ्यण् + सि। 'शृ हिंसायाम्' (८।१५) धातु से घ्यण् प्रत्यय आदि कार्य पूर्ववत्।

३. **वाक्यम्।** वच् + घ्यण् + सि। 'वच भाषणे' (२।३०) धातु से घ्यण् प्रत्यय, उपधादीर्घ, "चजोः कगौ धुड्घानुबन्धयोः" (४।६।५६) से चकार को ककार तथा विभक्तिकार्य।

४. **पाक्यम्।** पच् + घ्यण् + सि। 'डु पचष् पाके' (१।६०३) धातु से घ्यण् प्रत्यय आदि कार्य पूर्ववत् ॥९७४।

## ९७५. आसुयुवपिरपिलपित्रपिदभिचमां च [४।२।३६]

**[सूत्रार्थ]**

आङ् उपसर्गपूर्वक 'सु' धातु तथा 'यु-वप् - रप् - लप् -त्रप् - दभ् - चम्' धातुओं से 'घ्यण्' प्रत्यय होता है ॥९७५।

**[दु० वृ०]**

आङ्पूर्वात् सुनोतेर्यौत्यादिभ्यश्च घ्यण् भवति। आसाव्यम्, याव्यम्, वाप्यम्, राप्यम्, लाप्यम्, अपत्राप्यम्। दन्भुरिह कृतनलोपः-अवदाभ्यम्, आचाम्यम् ॥९७५।

**[दु० टी०]**

सुनोतियौत्योः स्वरान्तत्वात् पवर्गान्तत्वाच्छेषेभ्यो ये प्राप्ते विधिरयम्। दभिरित्यत एव निर्देशात् **सौत्रो** धातुरिति वा। वपिलपोर**पौराणिकः पाठः** इत्ये**के,** तदसत्। जपितिपीति **केचित्** पठन्ति। तेषां मते जाप्यम्, तेप्यम्। तिप्तेः कुटादित्वाद् घ्यणि गुणो भवति॥९७५।

**[क० च०]**

आसु०। आङ इतीत्यकरणात् सर्वत्राङो नाभिसम्बन्धः। **अभिधानादिति वररुचिः।** एतत्तु अभिधानाश्रयणस्यावश्यकत्वादुक्तम्, कथमन्यथा सूतिरेवेति निश्चितम् ॥९७५।

**[समीक्षा]**

'आसाव्यम्, याव्यम्, आचाम्यम्' आदि शब्दरूपों के सिद्ध्यर्थ दोनों आचार्यों ने 'घ्यण्-ण्यत्' प्रत्ययों का विधान किया है। पाणिनि का सूत्र है - "आसुयुवपिरपिलपित्रपिचमश्च" (अ० ३।१।२६)। अतः उभयत्र प्रायः समानता ही है।

**[विशेष वचन]**

१. दभिरित्यत एव निर्देशात्, सौत्रो धातुरिति वा (दु० टी०)।
२. वपिलपोरपौराणिकः पाठः इत्येके (दु० टी०)।
३. जपितिपीति केचित् पठन्ति (दु० टी०)।
४. सर्वत्राङो नाभिसम्बन्धः, अभिधानादिति वररुचिः (क० च०)।

**[रूपसिद्धि]**

१. **आसाव्यम्।** आ + सु + घ्यण् + सि। 'आङ्' उपसर्गपूर्वक 'षुञ् अभिषवे'

(४।१) धातु से प्रकृत सूत्र द्वारा 'घ्यण् ' प्रत्यय, उकार को वृद्धि-औ, "कार्यविवावावादेशावोकारौकारयोरपि" (२।६।४८) से औकार को आव् आदेश तथा विभक्तिकार्य।

२. **याव्यम्।** यु + घ्यण् + सि। 'यु मिश्रणे' (२।६) धातु से प्रकृत सूत्र द्वारा 'घ्यण्' प्रत्यय आदि कार्य पूर्ववत् ।

३. **वाप्यम्।** वप् + घ्यण् + सि। 'डु वप बीजतन्तुसन्ताने' (१।६०९) धातु से घ्यण् प्रत्यय आदि कार्य पूर्ववत् ।

४. **राप्यम्।** रप् + घ्यण् + सि। 'रप व्यक्तायां वाचि' (१।१३४) धातु से घ्यण् प्रत्यय आदि कार्य पूर्ववत् ।

५. **लाप्यम्।** लप् + घ्यण् + सि। 'लप व्यक्तायां वाचि' (१।१३४) धातु से घ्यण् प्रत्यय आदि कार्य पूर्ववत् ।

६. **अपत्राप्यम्।** अप + त्रप् + घ्यण् + सि। 'अप' उपसर्गपूर्वक 'त्रपूष् लज्जायाम्' (१।३८३) धातु से 'घ्यण् ' प्रत्यय आदि कार्य पूर्ववत् ।

७. **अवदाभ्यम्।** अव + दन्भु + घ्यण् + सि। 'अव' उपसर्गपूर्वक 'दन्भु दम्भे' (४।१९) धातु से 'घ्यण् ' प्रत्यय, नलोप तथा अन्य कार्य पूर्ववत् ।

८. **आचाम्यम् ।** आ + चम् + घ्यण् + सि। 'आङ् ' उपसर्गपूर्वक 'चमु अदने' (१।१५६) धातु से घ्यण्-प्रत्यय आदि कार्य पूर्ववत् ॥९७५।

## ९७६. उवर्णादावश्यके [४।२।३७]

**[सूत्रार्थ]**

अवश्यम्भाव अर्थ के गम्यमान होने पर उवर्णान्त धातु से घ्यण् प्रत्यय होता है॥९७६।

**[दु० वृ०]**

अवश्यम्भाव आवश्यकम् । उवर्णान्ताद् धातोरवश्यम्भावे गम्यमाने घ्यण् भवति। नाव्यम् , लाव्यम् । लाव्यमवश्यम् , अवश्यलाव्यम् । **"अवश्यमः कृत्ये"** मस्य लुक्। लव्यमन्यत् ॥९७६।

**[दु० टी०]**

उव०। अवश्यम्भावार्थे आवश्यके इत्यर्थः। **तद्धितव्युत्पत्तिवादी** त्वाह— मनोज्ञादित्वादिकण् इति। तत्र द्वैधम् आवश्यकोपाधिवृत्तेरुवर्णान्ताद् धातोरिति, प्रत्ययस्तु द्योतकः। आवश्यके उपपदे इति वा। तत्रोपपदत्वे **"तत् प्राङ् नाम चेत् "** (४।२।३) इति 'लाव्यमवश्यम् ' न सिध्यतीत्याह—अवश्यम्भाव इति। **अन्य** आह—प्रकृतिविशेषणं चैतद् अस्मिन् उक्तेऽपि प्रयोग इत्युपलभ्यते। यथा 'अन्यथाकारं भुङ्क्ते' इत्यव्ययं क्रियाविशेषणं चैतदिति **"विभक्तयो द्वितीयाद्याः"** (२।५।८) इत्यादिना तत्पुरुषः॥९७६।

[समीक्षा]

'नाव्यम्, लाव्यम्' इत्यादि शब्दरूप दोनों ही आचार्यों ने घ्यण् — ण्यत् प्रत्ययों से सिद्ध किए हैं। पाणिनि का सूत्र है- ''ओरावश्यके'' (अ० ३।१।१२५)। अत: उभयत्र समानता ही है।

[रूपसिद्धि]

१. **नाव्यम्**। नु + घ्यण् + सि। 'णु स्तुतौ' (२।७) धातु से प्रकृत सूत्र द्वारा 'घ्यण्' प्रत्यय, 'घ् - ण् ' अनुबन्धों का प्रयोगाभाव, उकार को वृद्धि औ, 'औ' को 'आव्' आदेश तथा विभक्तिकार्य ।

२. **लाव्यम्**। लू + घ्यण् + सि। 'लूञ् छेदने' (८।९) धातु से प्रकृत सूत्र द्वारा 'घ्यण्' प्रत्यय आदि कार्य पूर्ववत् ॥९७६।

## ९७७. पाधोर्मानसामिधेन्योः [४।२।३८]

[सूत्रार्थ]

'परिमाण-सामिधेनी' अर्थों में क्रमशः 'पा-धा' धातुओं से 'घ्यण्' प्रत्यय होता है।।९७७।

[दु० वृ०]

'पा-धा' इत्येतयोर्मानसामिधेन्योर्यथासङ्ख्यं घ्यण् भवति। पाय्यं मानम् । वचनात् स्वार्थं त्यजति, पेयमन्यत् । दधात्यग्निमिति **धाय्या** सामिधेनी। समिदाधानमन्त्र इति। **उपचाराद्** ऋत्विग्विशेषेऽपि वर्तते—धाय्याः शंसन्ति। धेयमन्यत् ॥९७७।

[दु० टी०]

पाधो०। मीयते येन **तन्मानम्**। यथार्थे पाय्यमित्याह—वचनादित्यादि। पिबतिः पानार्थम्, नातिर्वा रक्षणार्थं त्यजतीति। दधात्यग्निमित्यादि। समिदाधानस्य निमित्तम् ऋगित्यर्थः। उपचारादित्यादि। सामिधेन्यध्ययनयोगाद् ऋत्विजोऽपि भण्यन्ते इत्यर्थः॥९७७।

[वि० प०]

पाधोः। पाय्यमिति। इज्वद्भावादायिरादेशः। सामिधेनीशब्दः ऋग्विशेषस्य वाचकः, तत्रैव धाय्येति न सर्वा ऋक् सामिधेन्युच्यते, किन्तर्हि काचिदेव इत्याह-समिदाधानमन्त्र इति। अग्निमुखे समिध आधीयन्तो येन मन्त्रेण सा ऋक्। उपचारादिति। सामिधेन्यध्ययनयोगादुपचारः प्रवर्तते॥९७७॥

[समीक्षा]

'पाय्यम् - धाय्या' शब्दरूपों के सिद्ध्यर्थ दोनों व्याकरणों में 'य' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है - ''पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु'' (अ० ३।१।१२९)। अन्तर यह है कि कातन्त्रकार ने साक्षात् 'घ्यण्' प्रत्यय का विधान किया है, जबकि पाणिनि ने निपातन से ण्यत्प्रत्ययान्त इन

शब्दों की सिद्धि की है । अनुबन्धों की योजना अपने अपने व्याकरण की प्रक्रिया के अनुसार की गई है । सामान्यतया उभयत्र समानता है।

[विशेष वचन]

१. उपचाराद् ऋत्विग्विशेषेऽपि वर्तते (दु० वृ०)।

२. सामिधेन्यध्ययनयोगाद् ऋत्विजोऽपि भण्यन्ते इत्यर्थः (दु० टी०)।

३. सामिधेनीशब्दः ऋग्विशेषस्य वाचकः (वि० प०)।

[रूपसिद्धि]

१. **पाय्यं** मानम् । पा + घ्यण् + सि। 'पा पाने; पा रक्षणे' (१।२६४;२।२१) धातु से प्रकृत सूत्र द्वारा 'घ्यण्' प्रत्यय, "आयिरिच्यादन्तानाम्" (३।६।२०) से आकार को 'आय्' आदेश तथा विभक्तिकार्य । मान अर्थ से अन्यत्र 'पेयम्' शब्दरूप।

२. **धाय्या** सामिधेनी। धा + घ्यण् + आ + सि। 'डु धाञ् धारणपोषणयोः' (२।८५) धातु से 'घ्यण्' प्रत्यय आदि कार्य प्रायः पूर्ववत् ।।९७७।

## ९७८. प्राङोर्नियोऽसम्मतानित्ययोः स्वरवत् [४।२।३१]

[सूत्रार्थ]

असम्मत तथा अनित्य अर्थ की विवक्षा में 'प्र-आङ्' उपसर्गपूर्वक 'नी' (णीञ् प्रापणे १।६००) धातु से घ्यण् प्रत्यय होता है और उसका स्वरवद्भाव भी होता है।।९७८।

[दु० वृ०]

प्राङोरुपपदयोर्नियो धातोरसम्मतानित्ययोरर्थयोर्यथासंख्यं घ्यण् भवति, स च स्वरवत् । प्रणाय्यश्चौरः, असम्मत इत्यर्थः। आनाय्यो दक्षिणाग्निः। यो गार्हपत्यादानीय प्रणीयते स चानित्यो **रूढितः** सिद्धः। कथं ज्येष्ठाय पुत्राय पिता ब्रह्म ब्रूयात् प्रणाय्याय चान्तेवासिने इति ? अन्यत्रापीति वचनात् ।।९७८।

[दु० टी०]

प्राङोः। सम्मतोऽभिमतस्ततोऽन्योऽसम्मत इत्यर्थः। **त्रयोऽग्नयः**-गार्हपत्यो दक्षिणाग्निराहवनीय इति। तत्र गार्हपत्योऽरणिनिर्मन्थनान्नित्यो भवति, न तस्यानाय्य इति व्यपदेशः, इतरौ तु कादाचित्कौ गार्हपत्यादुद्धृतौ वैश्यकुलाद् भ्राष्ट्राद् वा क्रियाविशेषापेक्षयाऽनियतयोनी, तत्र **सूत्रकारेण** न कश्चिद् विशेष उपात्त इति। **पदकारः** कथयति-दक्षिणाग्निरिति वक्तव्यम्। गार्हपत्याद्युपलक्षणं गार्हपत्यादेरिति भावः। स चेत्यादि न वक्तव्यम्, **रूढितः रूढिवशाल्लभ्यते** इत्यर्थः।

**श्लोकवार्त्तिककारस्तु**-एकयोनाविति वक्तव्यम् इत्यपरं विषयं दर्शयति। एकयोनित्वं चाहवनीयेन सहान्यत्र दक्षिणाग्नेरानेय इति भवति। आनाय्यो गोधुगिति तु केषाञ्चिदुदाहरणं तेऽनित्यपर्यायमेव नान्यं मन्यन्ते। कथमित्यादि। ज्येष्ठेन प्रशस्येन पुत्रेण

सहासम्मतस्यान्तेवासिनो विकल्पोऽयुक्त इति सम्मतत्वमन्तेवासिन:। तथाहि विद्याप्रशंसापरम् एतद् वचनम् इत्याह-अन्यत्रेति। कृतोऽपि बहुलं भवन्तीति सम्मतेऽपि स्यात् । अथवा सम्मननं सम्मतमिच्छा संवापोऽभिलाष: स नास्त्यस्येति असम्मत: प्रणाय्योऽन्तेवासिविषये आत्मन: इच्छाभावात् प्रणाय्यश्चौर इति परेषां तत्र सम्मताभावात् ।।९७८।

[वि० प०]

प्राङो०। **त्रयोऽग्नय:-** गार्हपत्यो दक्षिणाग्निराहवनीयश्च । तत्र गार्हपत्योऽग्निर-रणिनिर्मन्थनादुत्पन्नोऽनिर्वाणतया नित्य एव। इतरौ तु गार्हपत्यादुद्धृतौ वैश्यकुलाद् भ्राष्ट्राद् वा। आभीक्ष्ण्यप्रणीयमानत्वादनित्यौ भवत:। **रूढितश्च** नाहवनीयो नाप्यनित्यो घटादिरानाय्य इत्याह—आनाय्यो दक्षिणाग्निरित्यादि। गार्हपत्यादित्युपलक्षणम्। गार्हपत्यादेरित्यर्थ:। कथमित्यादि। न खल्वन्यथा ब्रह्मप्रकाशनं सम्भवतीति अन्तेवासिन: सम्मतत्वं गम्यते, तत् कथमसौ प्रणाय्य इति देश्यार्थ:।।९७८।

[क० च०]

प्राङो०। ननु अनित्य इत्युक्ते दक्षिणाग्निरेव कथम् अवगम्यते आहवनीयो घटपटादयो वा कथं न प्रतीयन्ते इत्याह—स चानित्य इति। **पञ्जिका-** अरणि: काष्ठविशेषस्तस्य संघर्षणाज्जायते, अथ यदि जायते तत् कथं नित्य इत्याह-अनिर्वाणतयेति। उद्धृताविति। अग्न्युद्धरणशालिनो वैश्यकुलादित्यर्थ:। अथ यदि त्रिभ्य: सकाशादनयो-रुद्धरणमित्युच्यते, तत् कथं गार्हपत्यादित्युक्तमित्याह-गार्हपत्यादिति।।९७८।

[समीक्षा]

'आनाय्य:-प्रणाय्य:' शब्दरूप 'अनित्य-असंमत' अर्थों में दोनों ही आचार्यों ने सिद्ध किए हैं। पाणिनि के पृथक् पृथक् दो सूत्र हैं—"आनाय्योऽनित्ये, प्रणाय्योऽसंमतौ" (अ० ३।१।१२६,१२८)। अन्तर यह है कि पाणिनि इन्हें निपातन से सिद्ध करते हैं, जबकि कातन्त्रकार ने साक्षात् घ्यण् प्रत्यय का विधान किया है। पाणिनीय सूत्रगौरव को छोड़कर अन्य तो प्राय: उभयत्र समानता ही है ।

[विशेष वचन]

१. स चानित्यो रूढित: सिद्ध एव (दु० वृ०)।

२. ज्येष्ठाय पुत्राय पिता ब्रह्म ब्रूयात् प्रणाय्याय चान्तेवासिने (दु० वृ०)।

३. तत्र सूत्रकारेण न कश्चिद् विशेष उपात्त: (दु० टी०)।

४. पदकार: कथयति-दक्षिणाग्निरिति वक्तव्यम् (दु० टी०)।

[रूपसिद्धि]

१. **प्रणाय्यश्चौर:**। प्र + नी + घ्यण् + सि। 'प्र' उपसर्गपूर्वक 'णीञ् प्रापणे' (१।६००) धातु से प्रकृत सूत्र द्वारा 'असंमत' अर्थ में 'घ्यण्' प्रत्यय, 'घ् - ण्' अनुबन्धों का प्रयोगाभाव, इज्वद्भाव, वृद्धि, स्वरवद्भाव से ऐकार को आय् आदेश, णत्व तथा विभक्तिकार्य।

२. **आनाय्यः।** आ + नी + घ्यण् + सि। 'आङ्' उपसर्गपूर्वक 'णीञ् प्रापणे' (१।६००) धातु से 'घ्यण्' प्रत्यय आदि कार्य पूर्ववत् ॥९७८।

## ९७९. सञ्चिकुण्डपः क्रतौ [४।२।४०]

**[सूत्रार्थ]**

'यज्ञ' अर्थ की विवक्षा में 'सम्' उपसर्गपूर्वक 'चिञ् चयने' (४।५) तथा 'कुण्ड' पूर्वक 'पा पाने' (१।२६४) धातु से 'घ्यण्' प्रत्यय होता है॥९७९।

**[दु० वृ०]**

संपूर्वाच्चिनोतेः कुण्डपूर्वाच्च पिबतेः क्रतावभिधेये घ्यण् भवति, स च स्वरवत्। संचीयतेऽसौ **संचाय्यः** क्रतुः। कुण्डैः पीयतेऽसौ इति **कुण्डपाय्यः** क्रतुः। ससोमको हि यागः क्रतुः, अर्थात् सोमः पीयतेऽस्मिन्नित्यभिधानादधिकरणे वा ॥९७९।

**[दु० टी०]**

सञ्चि०। अभिधानादित्यादि। कुण्डैः पीयतेऽस्मिन् सोमः इति **कुण्डपाय्यः**॥९७९।

**[वि० पं०]**

सञ्चि०। कुण्डैः पीयते इति कथमेतद्, यावता यागस्य क्रियात्मकत्वात् पातुमयोग्य इत्याह-ससोमको हीति। अथवा "**भावकर्मणोः कृत्यक्तखलर्थाः**" (४।६।४७) इत्येतदिह न वर्तते इत्याह-अभिधानादधिकरणे वेति। कुण्डैः पीयतेऽस्मिन् सोमः इत्यर्थः॥९७९।

**[क० च०]**

सञ्चि०। ससोमक इति हि यदत्र सोमसहितो यागः क्रतुशब्दवाच्यः। अतो यागस्य क्रियायाः पातुमयोग्यत्वाद् अर्थात् सोमः पीयते इति गम्यते इत्यर्थः। पक्षान्तरमाह-अभिधानादिति ॥९७९।

**[समीक्षा]**

क्रतु अर्थ में 'सञ्चाय्यः, कुण्डपाय्यः' शब्दरूपों की सिद्धि दोनों व्याकरणों में की गई है। पाणिनि का सूत्र है— "क्रतौ कुण्डपाय्यसञ्चाय्यौ" (अ० ३।१।१३०)। अन्तर यह है कि पाणिनि इन शब्दों को निपातनविधि से सिद्ध करते हैं, परन्तु कातन्त्रकार ने इनकी सिद्धि के लिए साक्षात् 'घ्यण्' प्रत्यय का विधान किया है। सामान्यतया उभयत्र प्रायः समानता ही है।

**[रूपसिद्धि]**

१. **सञ्चाय्यः** क्रतुः। सम् + चिञ् + घ्यण् + सि। सञ्चीयतेऽसौ। 'सम्' उपसर्गपूर्वक 'चिञ् चयने' (४।५) धातु से प्रकृत सूत्र द्वारा घ्यण् प्रत्यय, स्वरवद्भाव, इकार को वृद्धि - ऐकार, आयादेश तथा विभक्तिकार्य।

२. **कुण्डपाय्यः** क्रतुः। कुण्ड + पा + घ्यण् + सि। कुण्डैः पीयतेऽसौ। 'कुण्ड' उपपदपूर्वक 'पा पाने' (१।२६४) धातु से घ्यण् प्रत्यय आदि कार्य पूर्ववत् ॥९७९।

## ९८०. राजसूयश्च [४।२।४१]

[सूत्रार्थ]

क्रतु = यज्ञ अर्थ में 'राजसूय' शब्द निपातन से सिद्ध होता है ॥९८०।

[दु०वृ०]

क्रतावभिधेये राजसूयश्च निपात्यते । **'षुञ् अभिषवे'** (४।१) । राज्ञा सोतव्यः, राजा वा सूयतेऽस्मिन्निति **राजसूयः क्रतुः** ॥९८०॥

[दु० टी०]

राज० । 'षुञ् अभिषवे' (४।१), कर्मणि घ्यण् , दीर्घश्च निपातनात्[1] ॥९८०।

[समीक्षा]

'राजसूय' शब्द के सिद्ध्यर्थ दोनों व्याकरणों में सूत्र बनाए गए हैं, परन्तु पाणिनि ने क्यप्प्रत्ययान्त एवं कातन्त्रकार ने 'घ्यण्'- प्रत्ययान्त इसे निपातन से सिद्ध किया है । पाणिनि का सूत्र है — "राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः" (अ० ३।१।११४) । इस प्रकार प्रत्ययभेद होने पर भी निपातनविधि की दृष्टि से उभयत्र प्रायः समानता ही कही जाएगी ।

[रूपसिद्धि]

१. **राजसूयः**। राजन् + सु + घ्यण् + सि । राज्ञा सोतव्यः, राजा सूयतेऽस्मिन्निति वा । 'राजन्' के उपपद में रहने पर 'षुञ् अभिषवे' (४।१) धातु से प्रकृत सूत्र द्वारा निपातन से 'घ्यण्' प्रत्यय, 'घ् - ण्' अनुबन्धों का प्रयोगाभाव, नलोप, निपातन से दीर्घ तथा विभक्तिकार्य ॥९८०।

## ९८१. सान्नाय्यनिकाय्यौ हविर्निवासयोः [४।२।४२]

[सूत्रार्थ]

घृत अर्थ में 'सान्नाय्य' तथा निवास अर्थ में 'निकाय्य' शब्द निपातन से सिद्ध होता है ॥९८१।

[दु० वृ०]

एतौ निपात्येते हविर्निवासयोरर्थयोर्यथासङ्ख्यम् । सान्नाय्यं हविः । विशिष्टमेव यत् । सन्नेयमन्यत् । निकाय्यो निवासः । निचेयमन्यत् ॥९८१।

[दु० टी०]

सान्ना० । 'सम्'- पूर्वान्नयतेर्हविषि घ्यण् , उपसर्गस्य दीर्घत्वं च । विपूर्वाच्चिनोतेर्निवासे घ्यण् , कत्वं च । उभयत्रायादेशो निपातनात् । निवसन्त्यस्मिन्निति **निवासः** ॥९८१ ।

---

१.यद्यपि सोमाख्यं राज्ञा सूयते तथापि द्रव्याभिधानं न भवति, अपि तु सोमाख्यं द्रव्यसम्बन्धात् क्रतुविशेषोऽपि सूयते एवेति क्रतावभिधानम्, रूढिवशाद् वा अधिकरणेऽपि नैवं योज्यम् । यद्यपि ज्योतिष्टोमेऽपि राज्ञा सूयते कर्मणीति शेषः, राजसूयोऽभिधानात् ।

[समीक्षा]

'सान्नाय्य – निकाय्य' शब्द दोनों ही व्याकरणों में निपातनविधि से सिद्ध किए गए हैं । पाणिनीय व्याकरण में 'ण्यत्' प्रत्यय तथा कातन्त्र में 'घ्यण्' प्रत्यय किया जाता है । पाणिनि का सूत्र है —"पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु" (अ० ३।१।१२९) । अतः उभयत्र साम्य ही है ।

[रूपसिद्धि]

१. **सान्नाय्यं** हविः । सम् + नी + घ्यण् + सि । 'सम्' उपसर्गपूर्वक 'णीञ् प्रापणे' (१।६००) धातु से 'घ्यण्' प्रत्यय, उपसर्गस्थ अकार को दीर्घ, 'आय्' आदेश, सि-प्रत्यय तथा "अकारादसम्बुद्धौ मुश्च" (२।२।७) से 'मु' आगम–'सि' प्रत्यय का लोप । 'हविष्' से भिन्न अर्थ में 'सन्नेयम्' शब्दरूप सिद्ध होता है ।

२. **निकाय्यो** निवासः । निं + चि + घ्यण् + सि । 'नि' उपसर्गपूर्वक 'चिञ् चयने' (४।५) धातु से 'घ्यण्' प्रत्यय आदि कार्य पूर्ववत् ।।९८१।

## ९८२. परिचाय्योपचाय्यावग्नौ [४।२।४३]

[सूत्रार्थ]

'परिचाय्य–उपचाय्य' शब्द निपातन से सिद्ध होते हैं 'अग्नि' अर्थ में ।।९८२।

[दु० वृ०]

एतावग्नावर्थे निपात्येते । परिचीयतेऽसौ **परिचाय्योऽग्निः** । उपचीयतेऽसाविति **उपचाय्योऽग्निः** ।।९८२।

[समीक्षा]

'परिचाय्य-उपचाय्य' शब्द दोनों व्याकरणों में निपातन से सिद्ध किए गए हैं । पाणिनि का सूत्र है — "अग्नौ परिचाय्योपचाय्यसमूह्याः" (अ० ३।१।१३१) । अतः उभयत्र साम्य ही है ।

[रूपसिद्धि]

१. **परिचाय्यः**। परि + चि + घ्यण् + सि । 'परि' उपसर्गपूर्वक 'चिञ् चयने' (४।५) धातु से 'घ्यण्' प्रत्यय, 'आय्' आदेश, 'सि' प्रत्यय तथा "रसकारयोर्विसृष्टः" (३।८।२) से विसर्गादेश ।

२. **उपचाय्यः**। उप + चि + घ्यण् + सि । 'उप' उपसर्गपूर्वक 'चिञ् चयने' (४।५) धातु से 'घ्यण्' प्रत्यय आदि कार्य पूर्ववत् ।।९८२।

## ९८३. चित्याग्निचित्ये च [४।२।४४]

[सूत्रार्थ]

'अग्नि' अर्थ मे 'चित्य-अग्निचित्य' शब्द निपातनविधि से सिद्ध होते हैं ।।९८३।

[दु० वृ०]

एतावग्नावर्थे निपात्येते । चीयते इति **चित्योऽग्निः** । अग्नेश्चयनम् **अग्निचित्या**

भावे । समूह्य इति ऊहिना सिद्धम् । अस्यापि क्वचिद् वहत्यर्थे प्रयोग: । संवाह्य इति चाग्नौ भवत्येव ॥९८३।

**[दु० टी०]**

चित्या०। अग्निचित्या भावे इति कर्म निरस्तम् । निपातनादेव स्त्रीलिङ्गता । अग्नावित्यधिकारश्चित्यशब्दं प्रयोजयति । पूर्वयोगेण कृतस्तकारागमोऽयमिहोभयत्राख्येय इति। समूह्य इत्यादि । सम्पूर्वस्य वहे: किं निपातनेन, अग्नावर्थे वहेरर्थमूहिना गृह्णन्ति, पण्डिता इत्यर्थ: । ब्राह्मणे शास्त्रे समूह्यमिति । क्वचिदिति समूहशब्दस्यार्थ ऊहिना दर्श्यते। समूह्य इति ऊहे: सम्पूर्वस्याग्नेरन्यत्र घ्यण् नाभिधीयते ॥९८३।

**[वि० प०]**

चित्या०। समूह्य इत्यादि। न तु वहेरयं निपातो वक्तव्य इति भाव:। यद्येवं वहेरग्नावपि प्रयोगान्यत्वं प्राप्नोतीत्यत आह- संवाह्य: इति चेति ॥९८३।

**[क० च०]**

चित्या० । ऊहिनेति । ऊहेर्वितर्कार्थत्वात् कथं वहेरर्थ: प्रतीयते इत्याह – अस्यापीति । **अस्मन्मते** ऊहेरित्यर्थ: ॥९८३।

**[समीक्षा]**

'चित्य: – अग्निचित्या' शब्दों को दोनों व्याकरणों में निपातनविधि से सिद्ध किया गया हैं । पाणिनि का सूत्र है — "चित्याग्निचित्ये च" (अ० ३।१।१३२) । अत: उभयत्र समानता ही है ।

**[विशेष वचन]**

१. समूह्य इति ऊहिना सिद्धम् , अस्यापि क्वचिद् वहत्यर्थे प्रयोग: (दु० वृ०) ।

२. अग्नावर्थे वहेरर्थमूहिना गृह्णन्ति पण्डिता: (दु०टी०) ।

**[रूपसिद्धि]**

१. **चित्योऽग्नि:** । चि + घ्यण् + सि । चीयतेऽसौ । 'चिञ् चयने' (४।५) धातु से 'घ्यण्' प्रत्यय, तकारागम तथा विभक्तिकार्य ।

२. **अग्निचित्या**। अग्नि + चि + घ्यण् + आ + सि । अग्नेश्चयनम् । 'अग्नि' शब्द के उपपद में रहने पर 'चि' धातु से 'घ्यण्' प्रत्यय, तकारागम, स्त्रीलिङ्ग में 'आ' प्रत्यय, समानदीर्घ तथा विभक्तिकार्य ॥९८३।

## ९८४. अमावस्या वा [४।२।४५]

**[सूत्रार्थ]**

सहार्थक 'अमा' शब्द के उपपद में रहने पर 'वस्' धातु से घ्यणप्रत्ययान्त 'अमावस्या' शब्द निपातन से सिद्ध होता है ॥९८४।

[दु० वृ०]

अमेह सहार्थे। अमापूर्वाद् वसतेर्घ्यणि कालाधिकरणे दीर्घाभावो निपात्यते वा। सह वसतोऽस्यां चन्द्रार्कावित्यमावस्या, **अमावास्या** तिथिः। यल्लक्षणेनानुत्पन्नं तत् सर्वं **निपातनात्** सिद्धम्॥९८४।

[दु० टी०]

अमा०। अमाशब्दोऽयमव्ययः। **केचिद्** ह्रस्वमेव पक्षे निपातयन्ति॥९८४।

[समीक्षा]

'अमावस्या–अमावास्या' इन दो रूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में अपनी-अपनी प्रक्रिया के अनुसार निपातनविधि अपनाई गई है । कातन्त्रकार निपातन से दीर्घ का अभाव विकल्प से मानते हैं, जबकि पाणिनि ने निपातन से वृद्ध्यभाव को स्वीकार किया है । उनका सूत्र है – "अमावस्यदन्यतरस्याम्" (अ० ३।१।१२२) । इस प्रकार दीर्घाभाव-वृद्ध्यभावरूप प्रक्रियाभेद होने पर भी फल की दृष्टि से उभयत्र समानता ही है ।

[विशेष वचन]

१. केचिद् ह्रस्वमेव पक्षे निपातयन्ति (दु० टी०) ।

[रूपसिद्धि]

१. **अमावस्या, अमावास्या।** अमा + वस् + घ्यण् + आ + सि । अमा = सह चन्द्रार्कौ वसतोऽस्याम् । 'अमा' इस अव्यय पद के उपपद में रहने पर 'वस निवासे' (१।६१४) धातु से "ऋवर्णव्यञ्जनान्ताद् घ्यण्" (४।२।३५) सूत्र द्वारा 'घ्यण्' प्रत्यय, 'घ्-ण्' अनुबन्धों का प्रयोगाभाव, "सिद्धिरिज्वद् ञ्णानुबन्धे" (४।१।१) से इज्वद्भाव, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से प्राप्त उपधादीर्घ का प्रकृत सूत्र से वैकल्पिक अभाव । अतः दीर्घाभावपक्ष में 'अमावस्या' तथा दीर्घपक्ष में 'अमावास्या' रूप सिद्ध होता है ॥९८४।

## ९८५. ते कृत्याः [४।२।४६]

[सूत्रार्थ]

इससे पूर्व में 'तव्य, अनीय, क्यप् , घ्यण्' तथा 'य' ये पाँच प्रत्यय भाव तथा कर्म अर्थ में विहित किए गए हैं, इन पाँच प्रत्ययों की 'कृत्य' संज्ञा होती है ॥९८५।

[दु० वृ०]

ते तव्यादयः कृत्यसञ्ज्ञका वेदितव्याः । कृत्यप्रदेशाः – "**भावकर्मणोः कृत्य-क्त-खलर्थाः**" (४।६।४७) इत्येवमादयः ॥९८५।

[क० च०]

ते० । अथ तद्ग्रहणं किमर्थम्, 'कृत्याः' इत्युक्तेऽपि बहुवचनात् तव्यादीनां भविष्यति, नैवम्। बहुवचनस्यानन्तरत्रिकमादाय चरितार्थत्वात् क्यबादीनामेव स्यादिति तद्ग्रहणम् ॥९८५।

[समीक्षा]

पाणिनि ने 'तव्यत् - तव्य - अनीयर् - यत् - क्यप् - ण्यत्' इन छह प्रत्ययों की कृत्यसंज्ञा की है । "तित् स्वरितम्" (अ० ६।१।१८५) से स्वरित स्वर के विधानार्थ उन्हें 'तव्यत्' प्रत्यय को मानना पड़ा है, परन्तु उन्होंने परवर्ती 'तव्यत्' आदि प्रत्ययों की कृत्यसंज्ञा की है, जबकि कातन्त्रकार ने कृत्यसंज्ञाविधायक सूत्र से पूर्व ही तव्यादि प्रत्ययों का पाठ किया है । पाणिनि का सूत्र है — "कृत्याः प्राङ् ण्वुलः" (अ० ३।१।९५) । इस प्रकार शैलीभेद होने पर भी संज्ञा-संज्ञी की दृष्टि से प्रायः उभयत्र समानता ही है ।।९८५।

## ९८६. वुण्तृचौ [४।२।४७]

[सूत्रार्थ]

सभी धातुओं से कर्ता अर्थ में 'वुण्' तथा 'तृच्' प्रत्यय होते हैं ।।९८६।

[दु० वृ०]

धातोः परौ वुण्तृचौ भवतः । कर्तरि कृतः । पाचकः, पक्ता । एवमन्येऽपि । कथं गले चुप्यते इति **गलेचोपकः**, पादाभ्यां ह्रियते इति **पादहारकः** इति ? अभिधानात् ।।९८६।

[दु० टी०]

वुण्० । वुणो णकार इज्वद्भावार्थः, तृचश्चकारो **'धातोस्तृशब्दस्याऽऽर्'** (२।१।६८) इत्यत्र **विशेषणार्थः। 'निरनुबन्धग्रहणे न सानुबन्धकस्य'** (का० परि० ४८) इति तृनो हि आरम् न प्राप्नोतीति । अथैषा परिभाषा नाद्रियते तथापि प्रतिपदोक्तस्येति सम्भाव्येत । चकारमन्तरेण सन्दिग्धनिर्देशोऽपि स्यात् , वुण्त्राविति। तदसत्, तृवुणाविति विदध्यात् ।।९८६।

[क० च०]

वुण् ० । तृचश्चकारो **"धातोस्तृशब्दस्याऽऽर्"** (२।१।६८) इत्यस्य **विशेषणार्थः**। अन्यथा 'तृ' इत्युक्ते **'निरनुबन्धग्रहणे न सानुबन्धकस्य'** (का०परि० ४८) इति न्यायादस्यैव तृशब्दस्य ग्रहणं स्यान्न तु तृनः, सानुबन्धकत्वात् । चकारे सति द्वावपि सानुबन्धाविति सामान्यादुभयोरपि ग्रहणम् । अथ **'निरनुबन्धग्रहणे न सानुबन्धकस्य'** (का० परि० ४८) इत्यादि परिभाषा नाद्रियते इति व्याख्यातमेव चेत्, तदा **सुखार्थमिति**। **श्रीपतिमते "तृचा च"** (कात० परि०- स० ९०) इति समासनिषेधः फलमस्य । अन्यथा 'तृ' इत्युक्ते द्वयोरपि ग्रहणं स्यात् । **स्वमते** नेदं फलम् , 'रामो जामदग्न्यः' इत्यादिवत् समासस्यानभिधानादित्यङ्गीकरणात् ।।९८६।

[समीक्षा]

'कारकः, कर्त्ता, पाचकः, पक्ता' इत्यादि शब्दरूपों के सिद्ध्यर्थ अनुबन्धभेद को छोड़कर दोनों ही व्याकरणों में समान प्रत्यय किए गए हैं । कातन्त्रकार के प्रत्यय हैं

–'वुण् – तृच्' तथा पाणिनि ने 'ण्वुल् – तृच्' प्रत्यय पढ़े हैं। उनका सूत्र है – "ण्वुल्तृचौ" (अ० ३।१।१३३)। यहाँ पाणिनीय 'ण्वुल्' प्रत्यय में लकारानुबन्ध लित्- स्वर के विधानार्थ पढ़ा गया है। शेष समानता ही है।

**[विशेष वचन]**

१. कथं ......गलेचोपकः, ...... पादहारकः इति ? अभिधानात् (दु० वृ०)।

२. वुणो णकार इज्वद्भावार्थः, तृचश्चकारो "धातोस्तृशब्दस्यार्" इत्यत्र विशेषणार्थः (दु० टी०; क०च०)।

३. इति व्याख्यातमेव चेत्, तदा सुखार्थमिति (क० च०)।

**[रूपसिद्धि]**

१. **पाचकः**। पच् + वुण् – अक + सि। पचति। 'डु पचष् पाके' (१।६०३) धातु से प्रकृत सूत्र द्वारा 'वुण्' प्रत्यय, 'ण्' अनुबन्ध का प्रयोगाभाव, "युवुझामनाकान्ताः" (४।६।५४) से 'वु' को 'अक' आदेश, 'वुण्' प्रत्यय को "सिद्धिरिज्वद् ञ्णानुबन्धे" (४।१।१) से इज्वद्भाव, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से 'पच्' धातु में उपधासंज्ञक अकार को दीर्घ तथा विभक्तिकार्य।

२. **पक्ता**। पच् + तृच् + सि। पचति। 'पच्' धातु से प्रकृत सूत्र द्वारा 'तृच्' प्रत्यय, "चजोः कगौ धुड्घानुबन्धयोः" (४।६।५६) से चकार को ककारादेश, सि-प्रत्यय, "आ सौ सिलोपश्च (२।१।६४) से 'ऋ' को 'आ' आदेश तथा सिप्रत्यय का लोप ॥९८६।

## ९८७. अच् पचादिभ्यश्च [४।२।४८]

**[सूत्रार्थ]**

पचादिगणपठित धातुओं से 'अच्' प्रत्यय होता है ॥९८७।

**[दु० वृ०]**

सर्वे धातवः पचादिषु नामगणेषु पठ्यन्ते, तेभ्यः पचादिभ्योऽच् भवति। पचः, पठः, भवः। पचादिग्रहणं **बाधकबाधनार्थम्।** तेन 'श्वपचः, जारभरः' इत्यण् न स्यात्। 'देवः, सर्पः, मेषः' इति को न स्यात्। **एवमन्येऽप्यनुसर्तव्याः**॥९८७।

**[वि० प०]**

अच्०। भवतीति भवः इत्यन्यतोऽप्यचो दर्शनाद् इह **'डु पचष् पाके'** (१।६०३) इत्यादयो धातुगणसन्निविष्टपचादयो न गृह्यन्ते, किन्तर्हि 'पच-पठ' इत्यादयो यथादर्शनम् अच्प्रत्ययान्ता एव नामगणनिविष्टास्तेभ्यश्चापोद्धृत्य धातुप्रकृतयो निर्दिश्यन्ते इत्याह – सर्वे धातव इति। तर्हि 'वुण् तृच् च' इत्यास्ताम्, अविशेषेण त्रयः प्रत्यया भविष्यन्तीत्याह — पचादिग्रहणमित्यादि। श्वानं पचति, जारं बिभर्त्तीति वाक्यम्। को न स्यादिति **"नाम्युपध०"** (४।२।५१) इत्यादिनेति भावः। एवमिति। 'कोपः, वर्तः, दर्शः, दर्भः' इति ॥९८७।

**[क० च०]**

अच्०। चकारः **"तस्य लुगचि"** (४।४।४५) इति विशेषणार्थः। **सर्वे**

धातव इत्यादि । सर्वशब्दश्चात्र सङ्कोचवृत्तिः "**नाम्युपध०**" (४।२।५१) इत्यादीनां कप्रत्ययादिविषयत्वात् । **कश्चिद्** आह — एतदुक्तं भवति सूत्रे 'पच' इत्यजन्तनिर्देशः पचादिशब्देन पचादिनामगण उच्यते, तत्र च धातोरित्यधिकारान्नाम्नः परोऽच् न प्राप्नोतीति तेभ्यो नामगणेभ्यः पचादिधातुमुपेत्य तस्मादच् क्रियते इति, तन्न । नन्द्यादेरित्यत्र तथासम्भवात् । **वस्तुतस्तु** पचादिनामगणे दृष्टा ये धातवस्त एवोद्धृत्यात्र निर्दिश्यन्ते इति **पञ्जिका**। एवमित्यादीति । 'देहः, श्लेषः' इति पाठोऽशुद्ध एव लक्ष्यते, "**दिहिलिहि०**" (४।२।५८) इत्यादिना णप्रत्ययस्य विषयत्वात् कप्रत्यय एवास्ति बाधकः, यतो नच णप्रत्ययेऽच्प्रत्यये वा विशेषोऽस्ति, तेन णप्रत्ययस्य विषयेऽप्यच् प्रत्यय इति वाच्यम्; विशेषाभावात् । **कश्चित्** प्रयोजनाभावेऽपि णप्रत्ययविषये पचादिग्रहणादस्य विषयो दर्शित इत्याह — नन्दिवासीत्यादि ॥९८७।

**[समीक्षा]**

पाणिनि ने पचादि धातुओं से अच् प्रत्यय, नन्द्यादि से ल्यु तथा ग्रह्यादि से णिनि प्रत्यय का विधान एक ही सूत्र द्वारा किया है-"नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (अ० ३।१।१३४), परन्तु कातन्त्रकार ने एतदर्थ तीन सूत्र बनाए हैं, उनमें से अच्प्रत्ययविधायक यह प्रथम सूत्र है। व्याख्याकारों ने कहा है कि एक सूत्र करने से प्रतिपत्ति=ज्ञानगौरव उपस्थित होगा, वह न हो इसलिए ३ सूत्र पृथक् पृथक् बनाए गए हैं— "पचनन्दग्रहादिभ्योऽज्युणिनः–इत्येकयोगे प्रतिपत्तिगौरवं स्यात्" (दु०टी० ४।२।५०) ।

**[विशेषवचन]**

१. पचादिग्रहणं बाधकबाधनार्थम् , तेन 'श्वपचः, जारभरः' इत्यण् न स्यात् (दु०वृ०) ।

२. इह ....... अच्प्रत्ययान्ता एव नामगणनिर्दिष्टा गृह्यन्ते, तेभ्यश्चापोद्धृत्य धातुप्रकृतयो निर्दिश्यन्ते (वि० प०) ।

३. सर्वशब्दश्चात्र सङ्कोचवृत्तिः (क० च०) ।

**[रूपसिद्धि]**

१. **पचः**। पच् + अच् + सि । पचति । 'डु पचष् पाके' (१।६०३) धातु से प्रकृत सूत्र द्वारा 'अच्' प्रत्यय, 'च्' अनुबन्ध का प्रयोगाभाव, 'पच' की लिङ्गसंज्ञा, 'सि' प्रत्यय तथा "रेफसोर्विसर्जनीयः" (२।३।६३) से सकार को विसर्गादेश ।

२. **पठः**। पठ् + अच् + सि । पठति । 'पठ व्यक्तायां वाचि' (१।१११) धातु से प्रकृत सूत्र द्वारा 'अच्' प्रत्यय आदि कार्य पूर्ववत् ।

३. **भवः**। भू + अच् + सि । भवति । 'भू सत्तायाम्' (१।१) धातु से प्रकृत सूत्र द्वारा 'अच्' प्रत्यय, गुण, ओकार को 'अव्' आदेश तथा विभक्तिकार्य ॥९८७।

# ९८८. नन्द्यादेर्युः [४।२।४९]

[सूत्रार्थ]

नन्द्यादि=नन्दनादि नामगण में 'यु' प्रत्ययान्त 'नन्दन' आदि शब्द पढ़े गए हैं, उनसे पृथक् की गईं 'नन्द्' आदि धातुओं से 'यु' प्रत्यय होता है ॥९८८।

[दु० वृ०]

नन्द्यादेर्नामगणनिर्दिष्टाद् युर्भवति। नन्दिवासिमदिदूषिसाधिशोभिवर्द्धिभ्यः इनन्तेभ्योऽसञ्ज्ञायाम्। नन्दयतीति नन्दनः। एवं वासनः, मदनः, दूषणः, साधनः, शोभनः, वर्द्धनः। सहितपिदमः संज्ञायामनिनन्तात्-सहनः, तपनः, दमनः। एवं जल्पनः, दर्पणः, रमणः, चन्दनः, संकर्षणः, संहर्षणः, जनार्दनः, मधुसूदनः, पवनः। लवण इति नामगणनिपातनाण्णत्वम्। विभीषणः। चित्तविनाशनः, कुलदमनः। कर्मपूर्वाणामण्-विषयेऽपि स्यात् ॥९८८।

[दु० टी०]

नन्द्या० । विभीषयतेर्विभीषणः । सर्वत्र हेताविन् ॥९८८।

[वि० प०]

नन्द्या०। नामगणनिर्दिष्टादिति। अत्रापि नन्दनवासनादिलक्षणे नामगणे यो धातुरपोद्धारणद्वारेण यथादर्शनं प्रतीतः सः नन्द्यादिस्तत इत्यर्थः। मदन इति। मानुबन्धत्वाद् ह्रस्वः। दूषण इति। "दुषेः कारिते" (३।४।६४) इत्यूकारः॥९८८॥

[क० च०]

नन्द्या० । नन्दिवासि-इत्यादि । एतच्च नन्द्यादेराकृतिगणत्वाल्लभ्यते ॥९८८।

[समीक्षा]

पूर्ववर्ती सूत्र सं० ९८७ की समीक्षा द्रष्टव्य ।

[रूपसिद्धि]

१. नन्दनः। नदि + इन् + यु – अन + सि । नन्दयति । 'टु नदि समृद्धौ (१।२५) धातु से "धातोश्च हेतौ" (३।२।१०) सूत्र द्वारा 'इन्' प्रत्यय, नकारागम, प्रकृत सूत्र से 'यु' प्रत्यय, "युवुझामनाकान्ताः" (४।६।५४) से 'यु' को 'अन' आदेश, 'नन्दन' की लिङ्गसंज्ञा, सि-प्रत्यय तथा सकार को विसर्गादेश ।

२. वासनः। वस् + इन् + यु– अन + सि। वासयति । 'वस निवासे' (१।६१४) धातु से 'इन्' प्रत्यय आदि कार्य प्रायः पूर्ववत् ।

३. मदनः। मद् + इन् + यु – अन + सि । मदयति । 'मदी हर्षे' (३।४८) धातु से इन् प्रत्यय आदि कार्य पूर्ववत् । मानुबन्ध होने के कारण "मानुबन्धानां ह्रस्वः" (३।४।६५) से ह्रस्वादेश ।

४. दूषणः। दुष् + इन् + यु – अन + सि । दूषयति । 'दुष वैकृत्ये' (२।२८) धातु से इन् प्रत्यय, "दुषेः कारिते" (३।४।६४) से उपधा को ऊकार तथा अन्य कार्य पूर्ववत् ।

५. **साधनः**। साध् + इन् + यु – अन + सि । साधयति । 'राध साध संसिद्धौ' (४।१६) धातु से 'इन्' प्रत्यय आदि कार्य पूर्ववत् ।

६. **शोभनः**। शुभ् + इन् + यु – अन + सि । 'शुभ दीप्तौ' (१।४७३) धातु से इन् प्रत्यय आदि कार्य पूर्ववत् ।

७. **वर्द्धनः**। वृध् + इम् + यु – अन + सि । वर्धयति । 'वृधु वृद्धौ' (१।४८५) धातु से इन् प्रत्यय आदि कार्य पूर्ववत् ॥९८८।

## ९८९. ग्रहादेर्णिन् [४।२।५०]

**[सूत्रार्थ]**

ग्रहादि (ग्राहिन् आदि) नामगणपठित ग्रहादि धातुओं से कर्ता अर्थ में 'णिन्' प्रत्यय होता है ॥९८९।

**[दु० वृ०]**

ग्रहादेर्नामगणनिर्दिष्टाद् णिन् भवति। गृह्णातीति **ग्राही**। तिष्ठतीति **स्थायी**। निरक्षी, विश्रावी। याचि – व्रज – वद – वसो नञ्पूर्वात् — अयाची, अव्राजी, अवादी, अवासी। स्वरान्तादचित्तकर्तृकात् — अकारी घर्मस्य बालातपः। विषयी देशे। विभावी, अभिभावी। भूतेऽर्थे – परिभावी, परिभवी। पक्षे ह्रस्वत्वं निपातनात्। कथम् उत्साही, संसर्गी, उद्वाही, सम्मर्दी, निवेशी? अस्त्यर्थे इना सिद्धम्। एवम् अध्याहारी, संव्याहारी, अपराधी, उपरोधीति॥९८९।

**[दु० टी०]**

ग्रहा० । स्वरान्तादित्यादि । अचित्तः कर्ता यस्येति विग्रहः । केचिन्नञ्पूर्वादिति न संबध्नन्ति, कारी – हारीत्युदाहरन्ति । विषयीति । **'षिञ् बन्धने'** (४।२) । देशेऽभिधेये – विषयी देशः । णकारानुबन्धः इज्वद्भावार्थः। 'पचनन्दग्रहादिभ्योऽज्युणिनः' इत्येकयोगे **प्रतिपत्तिगौरवं** स्यात् ॥९८९।

**[वि०प०]**

ग्रहादेः । स्वरान्तादित्यादि । अविद्यमानं चित्तं **यस्येत्यचित्तः**, स कर्ता यस्य स तथोक्तः । इह न भवति अकर्ता देवदत्तः । नञ्पूर्वादिवेह न स्यात् – कर्ता परशुः । विषयी देशे इति । देशेऽभिधेये । **'षिञ् बन्धने'** (४।२) इत्यस्य रूपम् ॥९८९।

**[क० च०]**

ग्रहादे०। कथमिति। न चेत्थं ग्राहीत्याद्यपि सिद्धम्, किं वचनेन। अलो विषयत्वाद् ग्रहीत्येव स्यात्, तर्हि निरक्षीत्याद्यनर्थकम्? नैवम् , तदर्थं क्रियमाणमेतदपि विषयीकरोति। यद् वा कर्तृकर्मणोरित्यत्र कृद्ग्रहणं कृदन्तात् प्रत्ययान्तरे **षष्ठीनिषेधार्थमिति श्रीपतिनोक्तम्**, अतोऽस्त्यर्थे इनि सति षष्ठीनिषेधः। णिनि सति षष्ठीति विशेषः ॥९८९।

[समीक्षा]

पूर्ववर्ती सूत्रसंख्या ९८७ की समीक्षा द्रष्टव्य ।

[विशेष वचन]

१. णकारानुबन्धः इज्वद्भावार्थः (दु० टी०) ।

२. पचनन्दग्रहादिभ्योऽज्युणिनः इत्येकयोगे प्रतिपत्तिगौरवं स्यात् (दु० टी०) ।

[रूपसिद्धि]

१. **ग्राही**। ग्रह् + णिन् + सि । गृह्णाति । 'ग्रह उपादाने' (८।१४) धातु से प्रकृत सूत्र द्वारा 'णिन्' प्रत्यय, 'ण्' अनुबन्ध का प्रयोगाभाव, "सिद्धिरिज्वद् ञ्णानुबन्धे" (४।१।१) से इज्वद्भाव, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधादीर्घ, "धातुविभक्तिवर्जमर्थवल्लिङ्गम्" (२।१।१) से 'ग्राहिन्' की लिङ्गसंज्ञा, सि-प्रत्यय, "नान्तस्य चोपधायाः" (२।२।१६) से 'न्' की उपधा इकार को दीर्घ, "व्यञ्जनाच्च" (२।१।४९) से 'सि' प्रत्यय का लोप तथा "लिङ्गान्तनकारस्य" (२।३।५६) से नकार का लोप ।

२. **स्थायी**। स्था + णिन् + सि । तिष्ठति । 'ष्ठा गतिनिवृत्तौ' (१।२६७) धातु से प्रकृत सूत्र द्वारा 'णिन्' प्रत्यय, इज्वद्भाव, "आयिरिच्यादन्तानाम्" (३।६।२०) से आकार को 'आय्' तथा अन्य कार्य पूर्ववत् ।

३. **निरक्षी**। निर् + अक्ष् + णिन् + सि । 'अक्ष संघाते च' (१।२०४) धातु से प्रकृत सूत्र द्वारा 'णिन्' प्रत्यय आदि कार्य पूर्ववत् ।

४. **विश्रावी**। वि + श्रु + णिन् + सि । 'वि' उपसर्गपूर्वक 'श्रु श्रवणे' (१।२७८) धातु से प्रकृत सूत्र द्वारा 'णिन्' प्रत्यय आदि कार्य पूर्ववत् ॥९८९।

## ९९०. नाम्युपधप्रीकृगृज्ञां कः [४।२।५१]

[सूत्रार्थ]

नाम्युपध (जिनकी उपधा में नामीसंज्ञक = इ, ई, उ, ऊ, ऋ, ॠ, ऌ, ॡ, ए, ऐ, ओ, औ वर्ण हों) धातुओं से, 'प्रीञ् तर्पणे कान्तौ च' (८।२), 'कृ विक्षेपे' (५।२१), 'गृ निगरणे' (५।२२) तथा 'ज्ञा अवबोधने' (८।३१) धातु से 'क' प्रत्यय होता है ॥९९०।

[दु० वृ०]

नाम्युपधात् , प्रीणातेः, किरतेर्गिरतेर्जानातेश्च को भवति । विक्षिपः, विलिखः, प्रियः, उत्किरः, गिरः, गिलः, ज्ञः ॥९९०।

[दु० टी०]

नाम्यु० । कृसहचरितो गृ तौदादिक इत्याह — गिरतेरिति । "गिलेऽगिलस्य" (४।१।२४) इति ज्ञापकात् सिध्यतीति सोपसर्गे न प्राप्नोति —निगिल इति ॥९९०।

[वि० प०]

नाम्यु०। गिरतेरिति। "**कृ विक्षेपे**" (५।२१) इति तौदादिकेन सहचरितो 'गृ निगरणे' (५।२२) इति तौदादिक एव गृह्यते, न तु क्रैयादिको '**गृ शब्दे**' (८।२२)

इति। 'गिल इति। "ॠदन्तस्येरगुणे" (३।५।४२) इति कृते "वा स्वरे" (३।६।९९) इति लत्वम्॥९९०।

**[क० च०]**

नाम्युप०। **'कॄ विक्षेपे'** (५।२१) इति। ननु **'कॄञ् हिंसायाम्'** (८।११) इति क्रैयादिकोऽप्यस्ति तत् कथमस्य साहचर्यम् , व्यभिचारित्वादित्याह–गॄ धातुरिति **हेमः**। कॄ धातुस्तावन्निरनुबन्धस्तत्साहचर्यान्निरनुबन्धस्यैव ग्रहणम्। **'कॄ विक्षेपे'** (५।२१) इति तौदादिकस्य साहचर्यात् तौदादिकस्य 'गॄ निगरणे' (५।२२) इत्यस्यैव ग्रहणम् , न तु **'गॄ शब्दे'** (८।२२) इति ॥९९०।

**[समीक्षा]**

'विलिखः, प्रियः, किरः' आदि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "इगुपधज्ञाप्रीकिरः कः" (अ० ३।१।१३५) । कातन्त्रकार ने 'गॄ' धातु का अधिक पाठ किया है, जो उनकी विशेषता कही जाएगी । अन्य तो उभयत्र समानता ही है ।

**[रूपसिद्धि]**

१. **विक्षिपः**। विं + क्षिप् + क + सि । 'वि' उपसर्गपूर्वक 'क्षिप प्रेरणे' (३।१२५।५) धातु से प्रकृत सूत्र द्वारा 'क' प्रत्यय, 'क्' अनुबन्ध का प्रयोगाभाव, लिङ्गसंज्ञा, सि-प्रत्यय तथा विसर्गादेश ।

२. **विलिखः**। वि + लिख् + क + सि । 'वि' उपसर्गपूर्वक 'लिख लिखने' (५।८२) धातु से 'क' प्रत्यय आदि कार्य पूर्ववत् ।

३. **प्रियः**। प्री + क + सि । 'प्रीञ् तर्पणे कान्तौ च' (८।२) धातु से प्रकृत सूत्र द्वारा 'क' प्रत्यय, "स्वरादाविवर्णोवर्णान्तस्य धातोरियुवौ' (३।४।५५) से ईकार को 'इय्' आदेश तथा विभक्तिकार्य ।

४. **उत्किरः** । उत् + कॄ + क + सि । 'उत्' उपसर्गपूर्वक 'कॄ विक्षेपे' (५।२१) धातु से प्रकृत सूत्र द्वारा 'क' प्रत्यय, "ॠदन्तस्येरगुणे' (३।५।४२) से ॠकार को 'इर्' तथा विभक्तिकार्य ।

५-६. **गिरः, गिलः**। गॄ + क + सि । 'गॄ निगरणे' (५।२२) धातु से प्रकृत सूत्र द्वारा 'क' प्रत्यय, "ॠदन्तस्येरगुणे" (३।५।४२) से ॠकार को 'इर्' आदेश तथा "वा स्वरे" (३।६।९९) से वैकल्पिक लत्व ।

७. **ज्ञः**। ज्ञा + क + सि । जानाति । 'ज्ञा अवबोधने' (८।३१) धातु से प्रकृत सूत्र द्वारा 'क' प्रत्यय, "आलोपोऽसार्वधातुके" (३।४।२७) से धातुगत आकार का लोप एवं विभक्तिकार्य ॥९९०।

## ९९१. उपसर्गे त्वातो डः [४।२।५२]

[सूत्रार्थ]

उपसर्ग के उपपद में रहने पर आकारान्त धातु से 'ड' प्रत्यय होता है ॥९९१।

[दु० वृ०]

उपसर्गे उपपदे आकारान्ताद् धातोर्डो भवति । सुग्लः, सुम्लः, प्रह्वः । डे सति सम्प्रसारणम् उर् च न स्यात् । गोसन्दायः इति । परत्वादण् । णस्यापवादोऽयम् ॥९९१।

[दु० टी०]

उप०। उपसर्ग इति किम्? दाता। यदि पुनरिह कोऽधिक्रियते, तदा यजादित्वाद् ह्वयतेः सम्प्रसारणम्। तथा प्रज्य इति ग्रहादित्वादित्याह—डे सतीत्यादि। उपदायः इति। दीङः प्रागात्वे सति आतो णो भवति, **अभिधानात्**। डकारो**ऽन्त्यस्वरादिलोपार्थः**॥९९१।

[वि० प०]

उप०। यदि पुनः क-प्रत्यय एवाधिक्रियते तदा ह्वयतेः सम्प्रसारणं स्यात्। न च तस्मिन् कृते पुनरसवर्णे वत्वप्राप्तिः। अगुणे परत्वादुवादेश एव स्यादित्याह–डे सतीति। उविति। अध्याहृत्य चकारपदं सम्प्रसारणम् उव् च न स्यादित्यर्थः। णस्येति। "**दिहिलिहि०**" (४।२।५८) इत्यादिना प्राप्तस्येत्यर्थः॥९९१।

[क० च०]

उप०। प्रह्वः इति। ननु क-प्रत्ययाधिकाराद् "**आलोपोऽसार्वधातुके**" (३।४।२७) इत्यालोपे सिद्धं सुग्ल इत्यादि पदमित्याह—डे सतीत्यादि। के प्रत्यये सति प्रह्वः, प्रज्यः इत्यादि न सिध्यति। ननु सन्ददातीति **सन्दः**, गवां सन्दो **गोसन्दः** इति भवति, तर्हि के प्रत्यये सति कथमिति येनेदमुच्यते? सत्यम्। "**अन्यतोऽपि च**" (४।३।४९) इति डप्रत्ययेन भवितव्यमि**त्यभिप्रायः**। यथा 'ब्रह्मज्यः, मित्रह्वः' इति। क-प्रत्ययेऽनिष्टं स्याद् इति डविधानम्॥९९१।

[समीक्षा]

'सुग्लः, सुम्लः, प्रस्थः' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'ड' प्रत्यय किया है, जबकि पाणिनि ने 'क' प्रत्यय। पाणिनि का सूत्र है— "आतश्चोपसर्गे" (अ० ३।१।१३६)। अतः अनुबन्धभेद को छोड़कर उभयत्र समानता ही है ।

[विशेष वचन]

१. डकारोऽन्त्यस्वरादिलोपार्थः (दु० टी०)।

२. कप्रत्ययेऽनिष्टं स्यादिति डविधानम् (क० च०) ।

[रूपसिद्धि]

१. **सुग्लः**। सु + ग्ला + ड + सि । 'सु' उपसर्गपूर्वक 'ग्लै हर्षक्षये' (१।२५१) धातु से "सन्ध्यक्षरान्तानामाकारोऽविकरणे" (३।४।२०) सूत्र द्वारा ऐकार को आकारादेश, प्रकृत सूत्र द्वारा 'ड' प्रत्यय, डकारानुबन्ध के बल पर आकार का लोप तथा विभक्तिकार्य ।

२. **सुम्लः**। सु + म्लै + ड + सि ।'सु' उपसर्गपूर्वक 'म्लै गात्रविनामे' (१।२५२) से 'ड' प्रत्यय आदि कार्य पूर्ववत् ।

३. **प्रह्वः** । प्र + ह्वेञ् + ड + सि । 'प्र' उपसर्गपूर्वक 'ह्वेञ् स्पर्धायां शब्दे च' (१।६१३) धातु से 'ड' प्रत्यय आदि कार्य पूर्ववत् ।।९९१।

## ९९२. धेट्दृशिपाघ्राध्मः शः [४।२।५३]

**[सूत्रार्थ]**

उपसर्ग के उपपद में रहने पर 'धेट् पा पाने' (१।२६४), 'दृशिर् प्रेक्षणे' (१।२८९), 'पा पाने' (१।२६४), 'घ्रा गन्धोपादाने' (१।२६५) तथा 'ध्मा शब्दाग्निसंयोगयोः' (१।२६६) धातुओं से 'श' प्रत्यय होता है ।।९९२।

**[दु० वृ०]**

उपसर्गे उपपदे एभ्यः शो भवति। उद्धयः, उत्पश्यः, उत्पिबः। साहचर्यात् पिबतेः। धेटष्टकारः **सुखार्थः**। उज्जिघ्रः, उद्धमः। कथं पश्यः? अन्यत्रापीति वचनात्। तथा व्याजिघ्रतीति **व्याघ्रः** ।।९९२।

**[दु० टी०]**

धेड्०। **केचित्** पश्य इति निरुपसर्गप्रयोगं नादरयन्ति। 'व्याघ्रः' इति सञ्ज्ञायामित्यर्थः।।९९२।

**[वि० प०]**

धेड्०। शानुबन्धत्वात् "सार्वधातुकवच्छे" (४।१।५) इति । अन्-विकरणे कृते दृश्येः पश्यः इत्यादिकं प्रवर्तते । व्याघ्रः इति । शप्रत्ययबाधितोऽपि पूर्वेण डप्रत्यय इत्यर्थः ।।९९२।

**[क० च०]**

धेड्० । साहचर्यादिति । 'पा' इत्युक्तेऽपि न सामान्यतो ग्रहणं किन्तु पिबतेर्भौवादिकस्यैव ग्रहणम्, दृश्यादीनां साहचर्यादित्यर्थः । अथ 'पै ओ वै शोषणे' (१।२६१) इत्यस्यापि भौवादिकस्य कथं न ग्रहणम् ? सत्यम् । दृश्यादीनामादेशवतां साहचर्यात् । पातिरप्यादेशवानेव स च पिबतिरेव नान्यः । ननु धेदृशीत्युच्यतां किं धेटष्टकारेणेत्याह – धेटष्टकार इति । ननु अवयवकृतं लिङ्गं समुदायस्य विशेषणं कथन्न भवति । यथा शुनीस्तनेत्यत्र शुनीन्धयी, स्तनन्धयीति । तथा च शुनिन्धयीत्यादिवत्। अत्रापि धेटष्टकारो नदाद्यर्थ इति उद्धयीति ? सत्यम् । आलोपे हि सति निमित्तं न तु निमित्ते आलोप इति कार्यदर्शनादेव कारणमनुमीयते । अत्र कार्यं नास्तीति किं कारणानुमानेन? यदि उद्धयीति प्रयोगो दृश्यते, तदा नदादेराकृतिगणत्वादेव साध्यांसद्धिरिति **वृत्तिकृतो हृदयम्** ।।९९२।

[समीक्षा]

'उत्पिबः, उत्पश्यः, उज्जिघ्रः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'श' प्रत्यय किया गया है । पाणिनि का सूत्र है -- "पाघ्राध्माधेट्दृशः शः" (अ० ३।१।१३७) । इस प्रकार उभयत्र समानता ही है ।

[विशेष वचन]

१. धेटष्टकारः सुखार्थः (दु० वृ०) ।

२. नदादेराकृतिगणत्वादेव साध्यसिद्धिरिति वृत्तिकृतो हृदयम् (क० च०) ।

[रूपसिद्धि]

१. **उद्धयः**। उत् + धेट् + श + सि । 'उत्' उपसर्गपूर्वक 'धेट् पाने' (१।२६४) धातु से प्रकृत सूत्र द्वारा 'श' प्रत्यय, एकार को अयादेश तथा विभक्तिकार्य ।

२. **उत्पश्यः**। उत् + दृश् – पश्य + श – सि । 'उत्' उपसर्गपूर्वक 'दृशिर् प्रेक्षणे' (१।२८९) धातु से 'श' प्रत्यय, 'पश्य' आदेश तथा अन्य कार्य पूर्ववत् ।

३. **उत्पिबः**। उत् + पा – पिब + श + सि । 'उत्' उपसर्गपूर्वक 'पा पाने' (१।२६४) धातु से 'श' प्रत्यय आदि कार्य पूर्ववत् ।

४. **उज्जिघ्रः**। उत् + घ्रा–जिघ्र + श + सि । 'उत्' उपसर्गपूर्वक 'घ्रा गन्धोपादाने' (१।२६६) धातु से 'श' प्रत्यय आदि कार्य पूर्ववत् ।।९९२।

## ९९३. साहिसातिवेद्युदेजिचेतिधारिपारिलिम्पविन्दां त्वनुपसर्गे [४।२।५४]

[सूत्रार्थ]

उपसर्ग के उपपद में न रहने पर 'साहि' इत्यादि धातुओं से 'श' प्रत्यय होता है ।।९९३।

[दु० वृ०]

एषामुपसर्गाभावे शो भवति। साहयतीति **साहयः**। एवं सातयः। विदिः सामान्यम्–वेदयः। उदेजृ–उदेजयः। चेति–चेतयः। धृङ् धृञ् वा धारयः। पृ–पारयः। लिम्पतीति **लिम्पः**। विन्दतीति **विन्दः**। साहचर्यान्न विदि अवयवे। बिन्दुरिति निपातनाद् वा। कथं निलिम्पा नाम देवाः? अन्यत्रापीति वचनात्। तथा गां विन्दतीति **गोविन्दः**। एवम् अरविन्दः इत्यण् न स्यात्। ददः, दधः इति। दद्दधोरचा सिद्धम्।।९९३।

[दु० टी०]

साहि०। साति इति सौत्रो धातुः। पारिपर्यन्तेभ्यो हेताविन्। साहचर्याद् इत्यादि। संज्ञाशब्दो हि ताच्छीलीति भावः। लिम्पविन्दोर्नकारनिर्देशो **मन्दधियां सुखप्रतिपत्त्यर्थः**। **केचित्** प्रत्ययिकाया एव प्रकृतेर्नकारागम इति **ज्ञापनार्थम्**, तेन कुण्डेत्यादि सिद्धम्। दाञ्धाञोरिति वक्तव्यं नेत्याह-दद इत्यादि। 'दद दाने, दध धारणे' (१।३०५, २९६)। 'दायः, धायः' इत्याकारान्तलक्षणो णः।।९९३।

[वि० प०]

साहि०। साति: सौत्रो धातु:। पारिपर्यन्तेभ्यो हेताविन्। साहचर्यादित्यादि। लिपिना मुचादिपठितेन सहचरितो **'विद्लृ लाभे'** (५।९) इति मुचादिरेव गृह्यते। किञ्चावयवार्थस्य विदेर्विशेषविधानमौणादिकमस्तीत्याह-बिन्दुरिति। मुचादेरागम इत्यादिनाऽनयोर्नकारागम:। दाञ्धाञोर्वेति न वक्तव्यमित्याह — दद इत्यादि। **'दद दाने, दध धारणे'** (१।३०५, २९६), दाञ्धाञोस्तु पक्षे दिहिलिहीत्यादिना आदन्तत्वाण्णे सति 'दायो धाय:' इति भवत्येव।।९९३।

[क० च०]

साहि० । उपसर्गस्याभावोऽनुपसर्ग:, तस्मिन्नित्यव्ययीभावे **'वा तृतीयासप्तम्यो:''** (२।४।२) इति पक्षेऽम्भाव:, न तु न उपसर्गोऽनुपसर्ग इति कर्मधारयस्तदा उपसर्गसहिते नाम्न्युपपदे भविष्यति, ततो नाम्नीति ब्रूयात् । लिम्पविन्दामिति । लिम्पतिविन्द-त्योरेकदेशानुकरणम् ।।९९३।

**[समीक्षा]**

'धारय:, पारय:, वेदय:, लिम्प:, बिन्द:' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'श' प्रत्यय किया गया है । पाणिनि का सूत्र है — "अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च" (अ० ३।१।१३८) । इस प्रकार प्रत्यय-धातु - सूत्र की समानता से उभयत्र समानता ही है ।

**[विशेष वचन]**

१. साति इति सौत्रो धातु: (दु० टी०; वि० प०) ।

**[रूपसिद्धि]**

१. **साहय:**। सह् + इन् + श + सि । 'षह मर्षणे' (१।५६०) धातु से 'इन्' प्रत्यय, उपधादीर्घ, धातुसंज्ञा, प्रकृत सूत्र से 'श' प्रत्यय, 'श्' अनुबन्ध का प्रयोगाभाव, इकार को गुण, अयादेश तथा विभक्तिकार्य ।

२. **सातय:**। साति + इन् + श + सि । 'साति' इस सौत्र धातु से इन् प्रत्यय आदि कार्य पूर्ववत् ।

३. **वेदय:**। विद् + इन् + श + सि । 'विद ज्ञाने' (२।२७) धातु से 'इन्' प्रत्यय आदि कार्य पूर्ववत् ।

४. **उदेजय:**। उद् + एजृ + इन् + सि । 'उद्' उपसर्गपूर्वक 'एजृ कम्पने' (१।७०) धातु से इन् प्रत्यय आदि कार्य पूर्ववत् ।

५. **चेतय:**। चित् + इन् + श + सि । 'चिती संज्ञाने' (१।२) धातु से इन् प्रत्यय आदि कार्य पूर्ववत् ।

६. **धारय:**। धृ + इन् + श + सि । 'धृञ् धारणे' (१।५९९) अथवा 'धृङ् अवस्थाने' (५।११२) धातु से 'इन्' प्रत्यय आदि कार्य पूर्ववत् ।

७. **पारयः**। पॄ + इन् + श + सि। 'पॄ पालनपूरणयोः' (८।१६) धातु से 'इन्' प्रत्यय आदि कार्य पूर्ववत्।

८. **लिम्पः**। लिप् + श + सि। लिम्पति। 'लिप उपदेहे' (५।१०) धातु से प्रकृत सूत्र द्वारा 'श' प्रत्यय, "मुचादेरागमो नकारः स्वरादनि विकरणे' (३।५।३०) से नकारागम तथा अन्य कार्य पूर्ववत्।

९. **विन्दः**। विद् + श + सि। विन्दति। 'विद्लृ लाभे' (५।९) धातु से 'श' प्रत्यय आदि कार्य पूर्ववत् ॥९९३।

## ९९४. वा ज्वलादिदुनीभुवो णः [४।२।५५]

**[सूत्रार्थ]**

किसी उपसर्ग के उपपद में न रहने पर ज्वलादिगणपठित धातुओं से तथा 'दु-नी-भू' धातुओं से भी वैकल्पिक 'ण'-प्रत्यय होता है ॥९९४।

**[दु० वृ०]**

ज्वलादिभ्यो दुनोतेर्नयतेर्भवतेश्चानुपसर्गे णो भवति वा। ज्वलः, ज्वालः। चलः, चालः। कसपर्यन्ता ज्वलादयो गणे वृत्करणात्। दवः, दावः। नयः, नायः (इति **केचिन्नेच्छन्ति**)। भवः, भावः। अनुपसर्गे इति किम्? प्रज्वलः, प्रदवः, प्रणयः, प्रभवः ॥९९४।

**[दु० टी०]**

वा ज्वला०। कसेत्यादि। **'कस गतौ'** (१।५६८)। घटादिपठितानां ज्वलादीनामग्रहणम्, अनन्यार्थत्वात् पाठस्य॥९९४।

**[समीक्षा]**

कातन्त्रकार ने ज्वलादिगणपठित तथा दु – नी – भू धातुओं से 'ण' प्रत्यय का विधान विकल्प से किया है। अतः 'ज्वालः–ज्वलः' इत्यादि की तरह 'दावः–दवः, नायः–नयः, भावः–भवः' भी दो–दो रूप सिद्ध होते हैं। परन्तु पाणिनि ने ज्वलादि धातुओं से तो विकल्प-विधान घोषित किया है, 'दु-नी' धातुओं से नहीं। अतः तदर्थ पृथक् सूत्र बनाया है। 'भू' धातु से वैकल्पिक 'ण' प्रत्यय का विधान वार्तिककार ने किया है। अतः पाणिनि के दो सूत्र हैं और एक वार्त्तिक है — "ज्वलितिकसन्तेभ्यो णः, दुन्योरनुपसर्गे, भवतेश्चेति वक्तव्यम्" (अ० ३।१।१४०, १४३–वा० सू०)।

**[विशेष वचन]**

१. कसपर्यन्ता ज्वलादयो गणे वृत्करणात् (दु० वृ०)।

**[रूपसिद्धि]**

१. **ज्वलः, ज्वालः**। ज्वल् + अच्, ण + सि। 'ज्वल दीप्तौ' (१।५१९, ५४१) धातु से प्रकृत सूत्र द्वारा वैकल्पिक 'ण' प्रत्यय, इज्वद्भाव, "अस्योपधाया

दीर्घो वृद्धि०'' (३।६।५) से उपधावृद्धि तथा विभक्तिकार्य । 'ण' प्रत्यय के अभावपक्ष में ''अच् पचदिभ्यश्च'' (४।२।४८) से अच् प्रत्यय ।

२. **चल:, चाल:**। चल् + अच् , ण + सि । 'चल कम्पने' (१।५४४) धातु से 'ण-अच्' प्रत्यय आदि कार्य पूर्ववत् ।

३. **दव:, दाव:**। दु + अच् , ण + सि । 'टु दु उपतापे' (४।१०) धातु से ण – अच् प्रत्यय आदि कार्य प्राय: पूर्ववत् ।

४. **नय:, नाय:**। नी + अच् , ण + सि । 'णीञ् प्रापणे' (१।६००) धातु से ण–अच् प्रत्यय आदि कार्य पूर्ववत् !

५. **भव:, भाव:**। भू + अच् + ण + सि । 'भू सत्तायाम्' (१।१) धातु से 'अच्-ण' प्रत्यय आदि कार्य पूर्ववत् ।।९९४।

## ९९५. समाङो: स्रुव: [४।२।५६]

**[सूत्रार्थ]**

'सम् – आङ्' उपसर्गों के उपपद में रहने पर 'स्रु' धातु से 'ण' प्रत्यय होता है ।।९९५।

**[दु० वृ०]**

समाङोरुपपदयो: स्रवतेर्णो भवति । वा न स्मर्यते । संस्राव:, आस्राव: । समाङोरिति किम् ? स्रव:, परिस्रव: ।।९९५।

**[क० च०]**

समा०। समाङोरिति किमिति । अत्र स्रव इत्येव पाठ:, परिस्रव: इत्यशुद्ध इति हेम:। सागरस्तु 'स्रव:, परिस्रव:' इत्युभय एव पाठ:। तथाहि समाङोरिति किमिति। समाङ्ग्रहणमपनीय दिहिलिहीत्यत्र स्रुधातु: पठ्यतामित्यर्थ:। अत: सामान्यम्।।९९५।

**[समीक्षा]**

'आस्राव:, संस्राव:' शब्दरूप सिद्ध करने के लिए दोनों ही व्याकरणों में 'ण' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है – ''श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च'' (अ० ३।१।१४१) । अत: सामान्यतया उभयत्र समानता ही है ।

**[विशेष वचन]**

१. परिस्रव इत्यशुद्ध इति हेम: । सागरस्तु 'स्रव:, परिस्रव:' इत्युभय एव पाठ: (क. च.)।

**[रूपसिद्धि]**

१. **संस्राव:**। सम् + स्रु + ण + सि । 'सम्' उपसर्ग के उपपद में रहने पर 'स्रु गतौ' (१।२७९) धातु से प्रकृत सूत्र द्वारा 'ण' प्रत्यय, 'ण्' अनुबन्ध का प्रयोगाभाव, धातुघटित उकार की वृद्धि–औ, औ को 'आव्' आदेश, मकार को अनुस्वार तथा विभक्तिकार्य ।

२. **आस्राव:**। आङ् + स्रु + ण + सि । 'आङ्' उपसर्ग के उपपद में रहने पर

'स्रु गतौ' (१।२७९) धातु से 'ण' प्रत्यय आदि कार्य पूर्ववत् ॥९९५।

## ९९६. अवे हृसोः [४।२।५७]

**[सूत्रार्थ]**

'अव' के उपपद में रहने पर 'हृ' तथा 'सो' धातु से 'ण' प्रत्यय होता है ॥९९६।

**[दु० वृ०]**

अव उपपदे हरतेः स्यतेश्च णो भवति। अवहारः, अवसायः। अव इति किम्? हरः, विहरः॥९९६।

**[क० च०]**

अवे० । अव इति किमिति। ननु 'अव' इति पाठोऽशुद्ध एव । तथाहि हृसोरित्युक्ते यदि समाङोरित्यनुवर्तिष्यते तदा भिन्नयोगो व्यर्थः स्यात् । यदि च सामान्येन स्यात् तदा दिहिलिहीत्याद्यनेन सहैकयोगं कुर्यात्, न च भिन्नयोगादनुपसर्गाधिकार इति वाच्यम्, तदा डग्रहणमनर्थकम् । एतच्च **"उपसर्गे त्वातो डः"** (४।२।५२) इति डबाधनार्थं पठ्यते । केवलस्य तु वक्ष्यमाणेनैव सिद्धमिति किमत्र पाठेन, तस्मात् 'परिहर' इत्यपि पाठः इति **कश्चित्** । ननु 'अव' इति किमिति, अस्य कोऽर्थः ? अवग्रहणमपनीय दिहिलिहीत्यत्र हृसोरपि पाठः क्रियतामिति भावः । अतः सामान्येन प्रत्युदाहरणमिति । 'विहर' इत्यपि प्रत्युदाहरणमिति बोद्धव्यम् । पुस्तकान्तरे त्वयं पाठो नास्तीति ॥९९६।

**[समीक्षा]**

'अवहारः, अवसायः' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ण' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "श्याद्व्यधास्रुसंस्रवतीणवसावहृलिहश्लिषश्वसश्च" (अ० ३।१।१४१) । अतः सामान्यतया उभयत्र समानता ही है ।

**[विशेष वचन]**

१. पुस्तकान्तरे त्वयं पाठो नास्तीति (क० च०)।

**[रूपसिद्धि]**

१. **अवहारः**। अव + हृ + ण + सि। 'अव' उपसर्गपूर्वक 'हृ हरणे' (१।५९६) धातु से प्रकृत सूत्र द्वारा 'ण' प्रत्यय, धातुघटित 'ऋ' को वृद्धि तथा विभक्तिकार्य ।

२. **अवसायः**। अव + सो + ण + सि । 'अव' उपसर्गपूर्वक 'षो' धातु से प्रकृत सूत्र द्वारा 'ण' प्रत्यय आदि कार्य प्रायः पूर्ववत् ॥९९६।

## ९९७. दिहिलिहिश्लिषिश्वसिव्यध्यतीणश्यातां च [४।२।५८]

**[सूत्रार्थ]**

'दिह्, लिह्, श्लिष्, श्वस्, व्यध्, अति-इण्, श्या' तथा आकारान्त धातुओं से 'ण' प्रत्यय होता है ॥९९७।

[दु० वृ०]

एषां णो भवति। देहः, लेहः, श्लेषः। के प्राप्ते–वचनम्। श्वासः, व्याधः, अत्यायः। उपसर्गे डबाधनार्थं श्याग्रहणम् – अवश्यायः। दायः, धायः । प्रत्याय इत्यपि दृश्यते। अवहार इति चकारात्॥९९७।

[दु० टी०]

दिहि० । अतिपूर्व इण् इह ग्रहणम् । प्रतिपूर्व इण इति मतान्तरेणोच्यते । तथा अवतार इति । एवं तनेः सन्तानः, उत्तान इति ॥९९७।

[वि० प०]

दिहि० । के प्राप्ते इति नाम्युपधत्वादित्यर्थः । उपसर्ग इति। अन्यथा आदन्तद्वारेण सिध्यतीति भावः ॥९९७।

[समीक्षा]

'श्वासः, व्याधः, अवश्यायः, दायः, धायः' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ण' प्रत्यय किया गया है । पाणिनि का सूत्र है — "श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च" (अ० ३।१।१४१) । इस प्रकार सामान्यतया उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **देहः**। दिह् + ण + सि । 'दिह उपचये' (२।६२) धातु से प्रकृत सूत्र द्वारा 'ण' प्रत्यय, लघूपधगुण तथा विभक्तिकार्य ।

२. **लेहः**। लिह् + ण + सि । 'लिह आस्वादने' (२।६३) धातु से 'ण' प्रत्यय आदि कार्य पूर्ववत् ।

३. **श्लेषः**। श्लिष् + ण + सि । 'श्लिष आलिङ्गने' (३।२९) धातु से 'ण' प्रत्यय आदि कार्य पूर्ववत् ।

४. **श्वासः**। श्वस् + ण + सि । 'श्वस् प्राणने' (२।३३) धातु से 'ण' प्रत्यय आदि कार्य पूर्ववत् ।

५. **व्याधः**। व्यध् + ण + सि । 'व्यध ताडने' (३।२५) धातु से 'ण' प्रत्यय आदि कार्य पूर्ववत् ।

६. **अत्यायः**। अति + इण् + ण + सि । 'अति' उपसर्गपूर्वक 'इण् गतौ' (२।१३) धातु से 'ण' प्रत्यय आदि कार्य पूर्ववत् ।

७. **अवश्यायः**। अव + श्या + ण + सि । 'अव' उपसर्गपूर्वक 'श्यैङ् गतौ' (१।४५९) धातु से 'ण' प्रत्यय आदि कार्य पूर्ववत् ।

८. **दायः** । दा + ण + सि । 'डु दाञ् दाने' (२।८४) धातु से 'ण' प्रत्यय आदि कार्य पूर्ववत् ।

९. **धायः** । धा + ण + सि । 'डु धाञ् धारणपोषणयोः' (२।८५) धातु से 'ण' प्रत्यय आदि कार्य पूर्ववत् ॥९९७।

## ९९८. ग्रहेर्वा [४।२।५९]

[सूत्रार्थ]

'ग्रह' धातु से वैकल्पिक 'ण' प्रत्यय होता है ।।९९८।

[दु० वृ०]

ग्रहेर्वा णो भवति । ग्राहो जलचरः, ग्रहः सूर्यादिः ।।९९८।

[दु० टी०]

ग्रहे० । ग्रहेर्वेत्यादि । व्यवस्थितवास्मरणादर्थान्तरे विकल्प इति भावः । अत एव "**वा ज्वलादिदुनीभुवो णः**" (४।२।५५) इत्यत्र नोच्यते ।।९९८।

[वि० प०]

ग्रहेः । वा ज्वलादीत्यादौ ग्रहिं पठित्वा इदं सूत्रं न कर्तव्यमिति न देश्यम्, इह **व्यवस्थितविभाषेयम्।** तेनार्थभेदेन विकल्प इत्याह — ग्राहो जलचर इति ।।९९८।

[क० च०]

ग्रहेः। **पञ्जिका** वा ज्वलादौ ग्रहिं पठित्वेति । ननु "**गेहे त्वक्**" (४।२।६०) इत्यत्र कथं ग्रहेरनुवृत्तिस्तदा भविष्यति ? सत्यम् , समाङोः स्रुवो ण इत्यनन्तरम् अवे हृसोस्तदनन्तरं दिहिलिहीत्यादि सूत्रम् , तदनन्तरं "वा ज्वलादिदुनीभुवो ग्रहेः" इति कृते भिन्नविभक्तिनिर्देशाद् ग्रहेरेवानुवृत्तिः । न च "**गेहे त्वक्**" (४।२।६०) इत्यत्र वानुवृत्तिः कथन्न स्याद् इति वाच्यम्, **अधिकारस्येष्टविषयत्वात्। स्थितिपक्षेऽ-**प्येतदवश्यमङ्गीकर्तव्यम् ।।९९८।

[समीक्षा]

'ग्रहः, ग्राहः' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में विकल्प से 'ण' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "विभाषा ग्रहः" (अ० ३।१।१४३) । इस प्रकार उभयत्र पूर्ण समानता ही है ।

[विशेष वचन]

१. अधिकारस्येष्टविषयत्वात् (क० च०) ।

[रूपसिद्धि]

१. **ग्राहः, ग्रहः**। ग्रह् + ण, अच् + सि । 'ग्रह उपादाने' (८।१४) धातु से प्रकृत सूत्र द्वारा वैकल्पिक 'ण' प्रत्यय, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधादीर्घ तथा विभक्तिकार्य । ण-प्रत्यय के अभावपक्ष में "अच् पचादिभ्यश्च" (४।२।४८) से अच् प्रत्यय – ग्रहः ।।९९८।

## ९९९. गेहे त्वक् [४।२।६०]

[सूत्रार्थ]

गृह अर्थ के विवक्षित होने पर 'ग्रह' धातु से 'अक्' प्रत्यय होता है ।।९९९।

[दु०वृ०]

ग्रहेर्गेहेऽभिधेये त्वग् भवति । गृह्णातीति **गृहम्,** गृहाः ।।९९९।

[दु० टी०]

गेहे० । गेहेऽभिधेये इति । गेहे कर्तरीत्यर्थः । गेहशब्दो वेश्मवचनस्तद्योगात् स्त्रीष्वपि वर्तमानो गृह्यते इत्युदाहरति । गृहम् इति पुरुषेणोपार्जितं धनं गृह्णातीत्यर्थः ।

ककारोऽगुणार्थस्तेन सम्प्रसारणम् – गृहाः स्त्रिय इतिं ॥९९९।

[वि० प०]

गेहे० । गृह्णातीति । पुरुषेणोपार्जितं धनमित्यर्थः । गृहं वेश्म । यदा तत्रस्था दाराश्च गृहशब्देनोच्यन्ते, तदाप्यक्प्रत्यय इत्याह — गृहा इति ॥९९९।

[समीक्षा]

'गृहम्, गृहाः' आदि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'अक्' तथा पाणिनि ने 'क' प्रत्यय किया है, जो वर्णसंख्या तथा वर्ण की दृष्टि से समान ही है । पाणिनि का सूत्र है — "गेहे कः" (अ० ३।१।१४४) । इस प्रकार उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **गृहम्**। ग्रह् + अक् + सि । गृह्णाति पुरुषेणोपार्जितं धनम् । 'ग्रह उपादाने' (८।१४) धातु से प्रकृत सूत्र द्वारा 'अक्' प्रत्यय, "ग्रहिज्यावयिव्यधिवष्टिव्यचिप्रच्छिव्रश्चिभ्रस्जीनामगुणे" (३।४।२) से सम्प्रसारण तथा विभक्तिकार्य ।

२. **गृहाः**। ग्रह् + अक् + जस् । 'ग्रह्' धातु से 'अक्' प्रत्यय, सम्प्रसारण तथा विभक्तिकार्य ॥९९९।

## १०००. शिल्पिनि वुष् [४।२।६१]

[सूत्रार्थ]

शिल्पी अर्थ के विवक्षित होने पर 'नृत् – खन् – रञ्ज्' धातुओं से 'वुष्' प्रत्यय होता है ॥१०००।

[दु० वृ०]

शिल्पिन्यभिधेये वुष् प्रत्ययो भवति । अभिधानान्नृतिखनिरञ्जिभ्य एव। नर्तकः, नर्तकी। खनकः, खनकी। रजकः, रजकी। **शिल्पं** विज्ञानकौशलम्। इनन्तश्च निकृष्टेऽभिधानात्॥१०००।

[क० च०]

शिल्पि०। इनन्तश्चेति। इनन्तः शिल्पिशब्दो निकृष्टे वर्तते इत्यर्थः। कुत इत्याह— **अभिधानादिति**। षकारो **नदाद्यर्थः**॥१०००।

**।।इत्याचार्यसुषेणविद्याभूषणकृते कलापचन्द्रे चतुर्थे कृदध्याये द्वितीयो धातुपादः समाप्तः।।**



[समीक्षा]

'नर्तकः, नर्तकी, रजकः, रजकी' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'वु' प्रत्यय किया गया है, जिसके स्थान में 'अक' आदेश होकर उक्त रूप सिद्ध होते हैं। पाणिनि ने 'वु' प्रत्यय के साथ षकार-नकार अनुबन्ध जोड़े हैं तथा कातन्त्रकार ने केवल षकार। पाणिनि का सूत्र है—"शिल्पिनि ष्वुन्" (अ० ३।१।१४५)। इस प्रकार उभयत्र प्रायः साम्य ही है।

[विशेष वचन]

१. शिल्पं विज्ञानकौशलम् (दु० वृ०) ।

२. षकारो नदाद्यर्थ: (क० च०) ।

[रूपसिद्धि]

१. **नर्तकः, नर्तकी।** नृत् + वुष् – अक + सि । 'नृती गात्रविक्षेपे' (३।७) धातु से प्रकृत सूत्र द्वारा 'वुष्' प्रत्यय, 'वु' को "युवुझामनाकान्ताः" (४।६।५४) से 'अक' आदेश, धातुघटित उपधासंज्ञक ऋकार को गुणादेश तथा विभक्तिकार्य । षकारानुबन्ध के कारण स्त्रीलिङ्ग में 'ई' प्रत्यय — 'नर्तकी' ।

२. **खनकः, खनकी।** खन् + वुष् + अक + सि । 'खनु अवदारणे' (१।५८४) धातु से 'वुष्' प्रत्यय आदि कार्य पूर्ववत् ।

३. **रजकः, रजकी।** रन्ज् + वुष् – अक + सि । 'रन्ज् रागे' (१।६०५) धातु से 'वुष्' प्रत्यय आदि कार्य पूर्ववत् ॥१०००।

## १००१. गस्थकः [४।२।६२]

[सूत्रार्थ]

शिल्पी अर्थ के विवक्षित होने पर 'गै' धातु से 'थक' प्रत्यय होता है ॥१००१।

[दु० वृ०]

गायतेः शिल्पिन्यभिधेये थकः प्रत्ययो भवति । गाथकः ॥१००१।

[दु० टी०]

गस्थकः । गाङो नाभिधानम् , **'निरनुबन्धग्रहणे न सानुबन्धकस्य'** (का० परि० ४८) इत्याह — गायतेरिति ।१००१।

[वि० प०]

गस्थकः । गायतेरिति । **'गाङ् श्यैङ् गतौ'** (१।४५९) इत्यस्या**नभिधानादित्यर्थः**॥१००१।

[समीक्षा]

'गाथकः' शब्द के सिद्ध्यर्थ दोनों ही व्याकरणों में 'थक' प्रत्यय किया गया है। कातन्त्रकार ने कोई अनुबन्ध नहीं जोड़ा है, जबकि पाणिनि ने नकारानुबन्ध किया है। उनका सूत्र है – "गस्थकन्" (अ० ३।१।१४६)। अतः अनुबन्ध के अतिरिक्त उभयत्र समानता ही है।

[रूपसिद्धि]

१. **गाथकः।** गै + थक + सि। 'गै शब्दे' (१।२५६) धातु से प्रकृत सूत्र द्वारा 'थक' प्रत्यय, ऐकार को आकारादेश तथा विभक्तिकार्य॥१००१।

## १००२. ण्युट् च [४।२।६३]

[सूत्रार्थ]

'शिल्पी' अर्थ के विवक्षित होने पर 'गै' धातु से 'ण्युट्' प्रत्यय होता है ॥१००२।

[दु० वृ०]

गायतेः शिल्पिन्यभिधेये ण्युट् प्रत्ययो भवति । गायनः, गायनी । एतौ प्रत्ययावशिल्पिन्यपि दृश्येते ॥१००२।

[दु० टी०]

ण्युट् । एतावित्यादि । गाथको धर्मस्य, गायनो राजा इति पदान्तरसम्बन्धादिह शिल्पित्वं हीयते इति विज्ञेयम् । षटकारानुबन्धो नदादिः ॥१००२।

[समीक्षा]

'गायनः, गायनी' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ण्युट्' प्रत्यय किया गया है । पाणिनि का सूत्र है — "ण्युट् च" (अ० ३।१।१४७) । अतः उभयत्र समानता ही हैं ।

[रूपसिद्धि]

१. **गायनः, गायनी।** गै + ण्युट् – अन + सि । 'गै शब्दे' (१।२५६) धातु से प्रकृत सूत्र द्वारा 'ण्युट्' प्रत्यय, 'ण् – ट्' अनुबन्धों का प्रयोगाभाव; 'यु' को 'अन' आदेश तथा विभक्तिकार्य । स्त्रीलिङ्ग में टकारानुबन्ध से 'ई' प्रत्यय ॥१००२।

## १००३. हः कालव्रीह्योः [४।२।६४]

[सूत्रार्थ]

'काल' और 'व्रीहि' अर्थों के विवक्षित होने पर 'ओ हाक् त्यागे' (२।७१) धातु से 'ण्युट्' प्रत्यय होता है ॥१००३।

[दु० वृ०]

जहातेः काले व्रीहौ चार्थे ण्युड् भवति । जहाति भावानिति **हायनः** संवत्सरः । जहति उदकमिति **हायना** व्रीहयः । कालव्रीह्योरिति किम् ? हाता ॥१००३।

[दु० टी०]

हः। व्रीहिकालयोर्गतौ कर्तृत्वं नास्तीति **'ओ हाक् त्यागे'** (२।७१) इत्यस्य ग्रहणमित्याह – जहातेरिति॥१००३।

[वि० प०]

हः। यथा कालव्रीह्योस्त्यागे कर्तृत्वं स्फुटमवगम्यते, न तथा गताविति। 'ओ हाङ् गतौ' (२।८७) इत्यस्य न ग्रहणम् इत्याह — जहातेरिति ॥१००३।

[समीक्षा]

'हायनः संवत्सरः, हायना व्रीहयः' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ण्युट्' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "हश्च व्रीहिकालयोः" (अ० ३।१।१४८) । अतः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **हायनः संवत्सरः**। हा + ण्युट् – अन + सि । जहाति भावान् । 'ओ हाक् त्यागे' (२।७१) धातु से प्रकृत सूत्र द्वारा 'ण्युट्' प्रत्यय, 'यु' को 'अन' आदेश, यकारागम तथा विभक्तिकार्य ।

२. **हायना व्रीहयः**। हा + ण्युट् – अन + जस् । जहति उदकम् । 'ओ हाक् त्यागे' (२।७१) धातु से 'ण्युट्' प्रत्यय आदि पूर्ववत् ॥१००३।

## १००४. आशिष्यकः [४।२।६५]

[सूत्रार्थ]

आशीर्वाद अर्थ के विवक्षित होने पर धातु से 'अक' प्रत्यय होता है ।।१००४।

[दु० वृ०]

आशंसायां गम्यमानायां धातोरकः प्रत्ययो भवति। जीवतात् - **जीवकः**। नन्दतात्-**नन्दकः**।।१००४।

[दु० टी०]

आशि० । **आशीः** इष्टार्थस्याप्राप्तस्य प्राप्तीच्छा, सा चेत् क्रियाविशेषकर्तृविषया, अस्याः क्रियायाः कर्ता भूयादित्यर्थः ।।१००४।

[समीक्षा]

आशीर्वाद अर्थ के गम्यमान होने पर 'जीवकः, नन्दकः' आदि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने साक्षात् 'अक' प्रत्यय तथा पाणिनि ने 'वुन्' प्रत्यय एवं 'वु' को 'अक' आदेश किया है। पाणिनि का सूत्र है—"आशिषि च" (अ० ३।१।१५०)। इस प्रकार प्रत्यय-आदेश के कारण पाणिनीय में गौरव तथा केवल प्रत्यय का विधान करने के कारण कातन्त्र में लाघव कहा जा सकता है ।

[विशेष वचन]

१. आशीरिष्टार्थस्याप्राप्तस्य प्राप्तीच्छा (दु० टी०) ।

[रूपसिद्धि]

१. **जीवकः**। जीव् + अक + सि। जीवतात्। 'जीव बल प्राणधारणे' (१।१९२) धातु से प्रकृत सूत्र द्वारा 'अक' प्रत्यय तथा विभक्तिकार्य ।

२. **नन्दकः** । नन्द् + अक + सि । नन्दतात् । 'टु नदि समृद्धौ' (१।२५) धातु से 'अक' प्रत्यय आदि कार्य पूर्ववत् ।।१००४।

## १००५. प्रुस्रुसृल्वां साधुकारिणि [४।२।६६]

[सूत्रार्थ]

'साधुकारी' अर्थ के विवक्षित होने पर 'प्रु–स्रु–सृ–लू' धातुओं से 'अक' प्रत्यय होता है ।।१००५।

[दु० वृ०]

एषां साधुकारिण्यभिधेयेऽकः प्रत्ययो भवति । साधु प्रवते **साधुप्रवकः**। एवं स्रवकः, सरकः, लवकः । साधुकरणं शिल्पमेव, एतत् स्त्रियामाप्रपञ्चार्थम्। साधुकारिणीति किम् ? प्रोता ।।१००५।

**।।इत्याचार्यदुर्गसिंहप्रणीतायां दौर्गसिंह्यां वृत्तौ चतुर्थे कृदध्याये द्वितीयो धातुपादः समाप्तः।।**

[दु० टी०]

प्रस्नु०। साधुकरणमित्यादि । अथवा नहि शिल्पी साधुकरणशील:, कार्यापेक्षत्वादिति भाव:। इह **पूर्वे हि वैयाकरणाः** वुण् सकर्मकेभ्यस्तृजादयो वर्तमाने इति पठन्ति । इह तूभयमध्ये तदनिवर्तकत्वात् तद्व्यभिचारीति निरस्यति । तथा ह्यासका:, सावका: इति वुण् कर्तरि दृश्यते । यथा 'वेदाध्याय:' इत्यण् वर्तमाने, तथा भूतेऽपि- चर्चां पवितंवान् **चर्चापाव:**, शयनीयपाव इति ॥१००५।

।।इत्याचार्यदुर्गसिंहप्रणीतायां दौर्गसिंह्यां कातन्त्रवृत्तिटीकायां चतुर्थे कृदध्याये द्वितीयो धातुपादः समाप्तः।।



[वि० प०]

प्र०। साधुकरणमित्यादि । साधु कुर्वाण एव **लोके शिल्पीत्युच्यते**। तत: **''शिल्पिनि वुष्''** (४।२।६१) इत्यनेनैव सिध्यति, किन्तु वुष: सानुबन्धत्वात् स्त्रियामीप्रत्यय: स्यात् । अथ **नदादेराकृतिगणत्वादे**षामीर्न भवति चेत् , तर्हि **प्रपञ्चार्थमेवेति** ॥१००५।

।।इति श्रीमत्त्रिलोचनदासकृतायां कातन्त्रवृत्तिपञ्जिकायां चतुर्थे कृदध्याये द्वितीयो धातुपादः समाप्तः ।।



[समीक्षा]

'साधुप्रवक:, लवक:' आदि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने साक्षात् 'अक' प्रत्यय किया है, परन्तु पाणिनि ने 'वुन्' प्रत्यय तथा 'वु' को अक आदेश किया है। पाणिनि का सूत्र है — ''प्रुसृल्व: समभिहारे वुन्'' (अ० ३।१।१४९)। इस प्रकार पाणिनीय प्रक्रिया में गौरव तथा कातन्त्रीय प्रक्रिया में लाघव कहा जा सकता है। कातन्त्र में 'स्नु' धातु का अधिक पाठ भी उसकी विशेषता कही जा सकती है।

[विशेष वचन]

१. साधुकरणं शिल्पमेव (दु० वृ०) ।

२. इह पूर्वे हि वैयाकरणा वुण् सकर्मकेभ्यस्तृजादयो वर्तमाने इति पठन्ति (दु० टी०) ।

३. ..... तर्हि प्रपञ्चार्थमेवेति (वि० प०) ।

[रूपसिद्धि]

१. **साधुप्रवकः**। साधु + प्रु + अक + सि। साधु प्रवते। 'साधु' शब्द के उपपद में रहने पर 'प्रुङ् गतौ' (१।४५१) धातु से प्रकृत सूत्र द्वारा 'अक' प्रत्यय, धातुघटित उकार को गुण, ओकार को अवादेश तथा विभक्तिकार्य।

२. **स्रवकः**। स्रु + अक + सि। स्रवति। 'स्रु गतौ' (१।२७९) धातु से 'अक' प्रत्यय आदि कार्य पूर्ववत् ।

३. **सरकः**। सृ + अक + सि। सरति। 'सृ गतौ' धातु से 'अक' प्रत्यय आदि कार्य पूर्ववत् ।

४. **लवकः**। लू + अक + सि। लुनाति। 'लूञ् छेदने (८।९) धातु से 'अक' प्रत्यय आदि कार्य पूर्ववत् ॥१००५।

**।। इति सम्पादकीयसमीक्षायां चतुर्थे कृदध्याये द्वितीयो धातुपादः समाप्तः।।**



# अथ चतुर्थे कृत्प्रत्ययाध्याये तृतीयः कर्मादिपादः

## १००६. कर्मण्यण् [४।३।१]

[सूत्रार्थ]

'कर्म' कारक के उपपद में रहने पर धातु से 'अण्' प्रत्यय होता है ॥१००६।

[दु० वृ०]

कर्मसंज्ञोपपदे धातोरण् भवति । कुम्भं करोतीति **कुम्भकारः** । एवं काण्डकारः, शरलावः, वेदाध्यायः । 'आदित्यं पश्यति, हिमवन्तं शृणोति, ग्रामं गच्छति' इत्यनभिधानाद् वाक्यमेव । महान्तं घटं करोतीति सापेक्षत्वात् । अघटं घटं करोतीति **'घटीकारः'** इति च्व्यन्ते प्रागवस्थार्थमात्रापेक्षे त्वण् अभिधीयते ॥१००६।

[दु० टी०]

कर्म० निरुपपदविधयस्तावदुक्ताः, सम्प्रति सोपपदविधानार्थमुपक्रमते । कर्मशब्दः स्वरूपवचनः क्रियावचनोऽप्यस्ति । तत्र **'स्वं रूपं शब्दस्याशब्दसंज्ञा'** (का० परि० २८) इति न्यायादुपकारि पदं यत् क्रियायास्तदुपपदम् । न च क्रियाया उपपदत्वम् अन्वर्थात्, पश्यति करोतीति कुतः प्राप्तिरित्याह — कर्मसंज्ञोपपदे इति । त्रिविधेऽपि कर्मण्युदाहरति। क्वचित् प्राप्ये कर्मणि दृश्यते इत्याह — आदित्यमित्यादि । **अन्यस्तु** प्राप्ये कर्मणि न भवतीति परिसञ्चष्टे । कथं वेदाध्यायः इति चेद् एवं मन्यते - वेदानामपि विकाराधानमध्ययनेन क्रियते एव । (कथं) यद्यपि **'वेदा नित्याः'** तथाप्यधीयानेन विप्रेण वेदाः अभिव्यज्यन्ते इति अभिव्यक्तिविकारो वेदानामध्ययनेन क्रियते इति ।

एवं काण्डादीनामन्यथा व्यवस्थानं धारणादिभिरिति सर्वत्रैव विकारः। अस्मिन् पक्षे निर्वर्त्यविकार्ययोरेवाणिति। आदित्यादीनां च विकाराभावान्न भवतीति। महान्तमित्यादि। सापेक्षस्योपपदत्वमेव नास्ति अपेक्षते हि घटो महत्त्वमिति भावः। न च सगुणक एव घटः करोतिक्रियायाः कर्मेति साध्यसाधनसम्बन्धोऽस्तीति धात्वनुवृत्त्या वा धात्वर्थो गृह्यते, क्रिया च साध्या साधनं प्रति नियमाद् योग्यसम्बन्धमेव कर्माक्षिपतीति नासम्बन्धे कर्मण्यणिति। अघटमित्यादि। च्व्यन्तमतोऽनपेक्षमिति प्राप्तिर्मन्यते। प्रकृतिविवक्षायान्तु अन्तर्भावयन्नपि तमुभयं सम्बन्धमनपेक्षायामेव प्रकृतिमन्तर्भावयति, तदा मृदं घटीकरोतीति भवितव्यम्। कथमिह 'काशकटीकारः' इति **भाष्यकार**वचनम्। काशानां कटीकार इति षष्ठीसमासः। **अन्यस्तु** मन्यते यदा प्रकृतिः कर्मतया समाधीयते तदा भवितव्यम्। यथा मृदं कुम्भीकरोतीति **'मृत्कुम्भीकारः'** इति, तथा काशान् कटीकारः। **अन्यस्तु** च्व्यन्तादनुत्पत्तिमेव वर्णयति, यथा पुत्रीयतीत्येवमादिष्वादेशसम्बन्धा अपि प्रकृत्यर्थे गुणीभवन्तः क्रियाभूयं गच्छन्ति, तथा च्व्यन्ता अपि अभूततद्भावरूपायां क्रियायां वर्तन्ते इत्याह-अभिधीयते इत्यादि। **एतदभिधानात्** प्रतिपत्तव्यमित्यर्थः॥१००६।

[वि० प०]

कर्म०। कर्मशब्दः स्वरूपार्थः क्रियार्थो वा । "**यत् क्रियते तत् कर्म**" (२।४।१३) इति वचनात् कर्मसंज्ञापि विद्यते । तत्राद्यस्य न ग्रहणम् '**स्वं रूपं शब्दस्याशब्दसंज्ञा**' (का० परि० २८) इति वचनात् । **अस्यार्थः** – शब्दस्य स्वं रूपमेव न बाह्यार्थो गृह्यते यदि तेन शब्देन संज्ञा न गम्यते । अत्र च कर्मसंज्ञाऽस्तीति न स्वरूपस्य ग्रहणम् । क्रियार्थोऽपि न गृह्यते, पूर्वं निरुपपदविधयो दर्शिताः, अतः सोपपदविधयः कथ्यन्ते इति कर्मेदमुपपदमिष्यते । उपपदं च तदेव यदुपकारि पदं क्रियायाः। न च 'पचति, करोति' इत्यादौ पचत्यादिपदस्योपकारित्वम् अनभिसम्बन्धात्। अथ पक्तुं करोतीत्यस्ति सम्बन्धः क्रियायामुपपदे तुमो विधानादिति। नैवम् , केवलं करोतिरत्रोपपदं न पक्तुमिति। कथं कृञः कर्तर्यण् स्याद् इत्याह — कर्मसंज्ञोपपद इति। तत्र 'कुम्भकारः' इति निर्वर्त्ये। 'काण्डकारः' इति विकार्ये । 'शरलावः, वेदाध्यायः' इति प्राप्ये। क्वचित्तु प्राप्ये कर्मणि न दृश्यते इत्याह — आदित्यं पश्यतीति ।

सापेक्षत्वादिति । घटो हि महत्त्वमपेक्षमाणो नोपकर्तुं समर्थः इत्यस्योपपदत्वमेव नास्तीत्यर्थः । अघटमित्यादि । प्राची चासाववस्था चेति **प्रागवस्था,** सैवार्थमात्रम्, तत्रापेक्षा यस्य च्व्यन्तस्य तस्मिन्नित्यर्थः । **अयमर्थः** – च्विप्रत्ययो हि विकाराद् भवति, विकारश्च प्रकृतिमन्तरेण न सम्भवतीति पूर्वावस्थामपेक्षते । न च तन्मात्रापेक्षत्वमस्य सामर्थ्यमुपहन्तीति युक्तं बहिरङ्गानपेक्षणादित्यभिधीयते एवाण्प्रत्यय इति न दोषः ॥१००६।

[क० च०]

कर्मणि० । कर्म तावत् त्रिविधम् – निर्वर्त्यं विकार्यं प्राप्यं च । तथा चोक्तम् —

**यदसज्जायते पूर्वं (सद् वा) जन्मना यत् प्रकाशते ।**
**तन्निर्वर्त्यं विकार्यं च कर्म द्वेधा व्यवस्थितम् ।।**

(वा० प० ३।७।४९)।

**अस्यायमर्थः** – यत् पूर्वमसत् पश्चाज्जायते तन्निर्वर्त्यम् । जन्मना यत् प्रकाशते यदाविर्भवति यल्लब्धसत्ताकमेव वस्तु अवस्थान्तरमापद्यते तद् विकार्यम् । विकार्यं च कर्म द्वेधा व्यवस्थितम् । तथा चोक्तम् —

**प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्टादिभस्मवत् ।**
**किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ।।**

(वा० प० ३।७।५०)।

प्राप्यं च –

**क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।**
**दर्शनादनुमानाद् वा तत् प्राप्यमिति कथ्यते ।।**

(वा० प० ३।७।५१) ।

ननु निर्वर्त्यविकार्ययो: को भेद:, पूर्वमजातत्वेनासीदेवासाविदानीं जायते इत्यत्रापि निर्वर्त्यत्वं घटते । अथ मृत्पिण्डं घटं करोतीति जन्मना प्रकाशते इति निर्वर्त्यत्वं घटताम् ? सत्यम् । यस्य द्रव्यस्य परिणामप्राप्तौ विद्यमाना अविद्यमाना वा प्रकृतिर्नाश्रीयते तन्निर्वर्त्यम् । यस्य तु आश्रीयते तद् विकार्यम् , तेन कुम्भं करोतीति मृत्पिण्डं नापेक्षते इति निर्वर्त्यम् । काण्डं करोतीति शरानपेक्षते इति विकार्यं कर्म । तथा चोक्तम् —

**सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी ।**
**यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ।।**

(वा० प० ३।७।४७) ।

अविद्यमाना यथा 'संयोगं करोति, रतिं करोति' । कर्मणीति भावसप्तमीयम् , कर्मण्युपपदे सति अण् भवतीत्यर्थ: । महान्तमिति । ननु महच्छब्दोऽपि कर्म, तस्याप्युपपदत्वे कुतो बाह्यापेक्षेत्युभयो: कर्मणोरुपपदयोरण् स्यात् । नैवम् , प्रथमाविभक्तिविशेषणविभक्त्यो: कारकत्वं नास्ति, अव्यतिरिक्तत्वात् । द्वितीयादयस्तुल्याधिकरणे पृथग् विभक्तयो न भवन्ति इति विशेष्यवद् एकाधिकरणस्य प्रायेणेति न्यायात् । च्व्यन्त इति । च्व्यन्त उपपदे क्किम्भूते प्रागवस्थार्थमात्रापेक्षे । **पञ्जिका** न बाह्यार्थ इति । प्रथमत: शब्द उच्चार्यते । ततश्चोच्चार्यमाणाच्छब्दादर्थ: प्रतिपद्यते इत्यर्थस्य बहिरङ्गता । यदि तेन सन्देहेनेति । ननु (भृतौ कर्मशब्द इति शब्दग्रहणात् ) शब्दस्वरूप एव सञ्ज्ञा । तत् कथं शब्देन सञ्ज्ञा शब्दसञ्ज्ञेति भेदेनान्वय: ? सत्यम् , यथा धान्येन धनं **धान्यधन**मिति। अत्र यदि धान्यं धनं तथापि सामान्यविशेषभावेन भेदान्वय: । धनमित्युक्ते सामान्यं धनं रत्नादिकं प्रतीयते । धान्यशब्देनेतरव्यवच्छेद: क्रियते इति तद्वदत्रापि सञ्ज्ञेत्युक्ते केनेत्याकाङ्क्षायां शब्देनेत्युच्यते । अत: सोपपद इति ।

नन्वत्र किं **प्रमाणम्** , कर्मण्यभिधेयेऽण् भवतीत्यर्थ: कथन्न स्यात् , नैवम् , तदा अण् कर्मणीति कुर्यात्। तस्मात् प्राङ्निर्देशादुपपदत्वं प्रतिपादितम्। पक्तुं करोतीति। ननु धातोस्तुमुत्पत्तिं प्रत्येवोपपदत्वम्, तेन किमायातम् अण उत्पत्तिं प्रति पक्तुमित्यस्योपपदत्वाभावादण् न स्यात्। अथ कृधातोरुपपदत्वमिति केन मूर्खेणोच्यते किन्तु करोतीति पदस्यैव । तथा च तस्य तेन समास इत्यत्र कारको गत: इति गतशब्दस्योपपदत्वमिति सति कथं प्राग्भावसमासौ न स्याताम् इति पूर्वपक्षे गतशब्दस्य द्रव्यवाचकत्वात् क्रियामात्रोपपदत्वमिति । न च गमेरुपपदत्वमिति वाच्यम् । उपकारि पद**मुपपद**मिति अन्वर्थतया गमे: प्रकृतित्वादिति **टीकायां सिद्धान्त**दर्शनात्। तस्मात् करोतीति सिद्धपक्षस्य तुमुत्पत्तिं प्रति समीपवर्तित्वम् । तस्मात् कथमस्मादण: सम्भव:, धातोरित्यधिकारवशात् तर्हि करोतेरत्रोपपदत्वमिति **पञ्जिकाग्रन्थ:** कथं सङ्गच्छते? सत्यम्, करोतेरिति कृधातुरिति नार्थ:, किन्तु करोतीति करोतिपदस्यानुकरणम्, यथा 'पचतिमाह' इत्यादि । तर्हि कृञ उपपदत्वं स्यादिति **हेमोक्तं** न संगच्छते चेत् कटी शृणोतु, पक्तुमिति सिद्धपदस्य समीपवर्तित्वाभावे तुमोऽसम्भवात्। अतो न पक्तुमिति कृञ: परस्याण उत्पत्तिं प्रति उपपदत्वमित्यर्थ:। अत एवाह-कृञ इति।

यदि पक्तुमिति नोपपदं तदा कथं कृञोऽण् स्यादित्यर्थः । ननु पक्तुं व्रजतीति पच्धातोरणस्तु तथा पाचको व्रजतीति व्रज्धातोरस्तु ? सत्यम् । यदि क्रियावचनस्य कर्मशब्दस्य ग्रहणं स्यात् तदाऽनेनैव सिद्धे कथं कर्मणि चाण् इत्यनेन क्रियोपपदेऽण् विधीयते। यथा काण्डकारो व्रजतीति, तस्मात् तद्वचनबलान्नायं क्रियावचनः कर्मशब्दः। अथ तेनैकदा कर्मोपपदे च विधीयते, अनेन च क्रियामात्रोपपदे इति, तत्कथं काण्डकारो व्रजतीति स्यात् ? सत्यम् । कारो व्रजतीति व्युत्पाद्य पश्चात् काण्डस्य कारः **काण्डकार** इति भविष्यति । यद् वा '**कृत्रिमाकृत्रिमयोः कृत्रिमविधिर्बलवान्**' (व्या० परि० ७) इति न्यायाच्छास्त्रसङ्केतितस्य कर्मशब्दस्य साधनवचनस्येह ग्रहणं न तु क्रियावचनस्य। यद् वा न च सन्देहे **गुरुलाघवचिन्ता** युक्तिमतीति क्रियायामिति कुर्यात् । ननु बहून्युदाहरणानि किमिति दर्शितानीत्याह — काण्डकार इतीति ।

ननु शरान् काण्डं करोतीति प्रकृत्यपेक्षणात् सापेक्षे कथं प्रत्ययः स्यात् ? सत्यम्। प्रकृतिमात्रापेक्षेऽण् भवतीति यथा घटीकार इत्यदोषः । किञ्च विद्यमानेऽपि प्रकृतिरेव बुद्ध्याश्रिता, न तु प्रयोगकाले शरानिति प्रयुज्यते, तत् कथं सापेक्षतेति **हेमः।** कृञ उपपदादिति न समानाधिकरणं पदम् , किन्तु कृञ्सम्बन्धिन उपपदात् पचतीति पदादाह –तत्र हीति । तत्र तुमधिकारे हि यस्माद् भावेऽर्थे उपपदे क्रियार्थक्रियोपपदे प्राप्तोऽण् कर्मणि चाण् इत्यनेनैव विधीयते । अन्यथा यद्यनेन स्यात् तदा तेन किमित्यर्थः। अथ 'पक्त्वा भुङ्क्ते' इत्यत्राप्ययमेव **सिद्धान्तो** देय इत्याह — 'पक्त्वा भुङ्क्ते' इति ॥१००६।

**[समीक्षा]**

'कुम्भकारः, काण्डलावः, वेदाध्यायः' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'अण्' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "**कर्मण्यण्**" (अ० ३।२।१) । काशिकावृत्तिकार जयादित्य तथा कातन्त्रवृत्तिकार दुर्गसिंह ने अभिधानाभाव के कारण 'आदित्यं पश्यति, ग्रामं गच्छति, हिमवन्तं शृणोति' इत्यादि में 'अण्' प्रत्यय का अभाव सिद्ध किया है । इस प्रकार सामान्यतया उभयत्र समानता ही है ।

**[विशेष वचन]**

१. आदित्यं पश्यति, हिमवन्तं शृणोति, ग्रामं गच्छतीत्यनभिधानाद् वाक्यमेव (दु० वृ०)।

२. यद्यपि 'वेदा नित्याः' तथाप्यधीयानेन विप्रेण वेदा अभिव्यज्यन्त इत्यभिव्यक्तिविकारो वेदानामध्ययनेन क्रियते इति (दु० टी०) ।

३. उपपदं च तदेव, यदुपकारि पदं क्रियायाः (वि० प०) ।

४. च्विप्रत्ययो हि विकाराद् भवति, विकारश्च प्रकृतिमन्तरेण न सम्भवति (वि० प०)।

**[रूपसिद्धि]**

१. **कुम्भकारः**। कुम्भ + अम् + कृ + अण् + सि । कुम्भं करोति । 'कुम्भम्'

इस कर्म कारक के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'अण्' प्रत्यय, ऋकार को वृद्धि, समास, लिङ्गसञ्ज्ञा, विभक्तिलुक् तथा विभक्तिकार्य।

२. **काण्डकारः**। काण्ड + अम् + कृ + अण् + सि। काण्डं करोति। 'काण्डम्' इस कर्मकारक के उपपद में रहने पर अण् प्रत्यय आदि पूर्ववत्।

३. **शरलावः**। शर + शस् + लू + अण् + सि। शरान् लुनाति। 'शरान्' इस कर्मकारक के उपपद में रहने पर 'लूञ् छेदने' (८।९) धातु से अण् प्रत्यय आदि कार्य प्रायः पूर्ववत्।

४. **वेदाध्यायः**। वेद + शस् + अधि – इङ् + अण् + सि। वेदान् अधीते। 'वेदान्' इस कर्मकारक के उपपद में रहने पर 'अधि' पूर्वक 'इङ् अध्ययने' (२।५६) धातु से 'अण्' प्रत्यय आदि कार्य प्रायः पूर्ववत् ॥१००६।

## १००७. ह्वावामश्च [४।३।२]

**[सूत्रार्थ]**

कर्म कारक के उपपद में रहने पर 'ह्वेञ् – वेञ् – मा' धातुओं से 'अण्' प्रत्यय होता है ॥१००७।

**[दु० वृ०]**

एभ्यः कर्मण्युपपदेऽण् भवति। कापवादः। स्वर्गह्वायः। तन्तुवायः।धान्यमायः। वातिरकर्मकः। मीनातिमिनोत्योः के बुद्धिस्थे मारूपाभावः ॥१००७।

**[दु० टी०]**

ह्वा०। तन्तुं वयतीति 'वेञ् तन्तुसन्ताने' (१।६११) इति। वातिरकर्मक इति **'वा गतिगन्धनयोः'** (२।१७) इत्यस्य न ग्रहणमित्यर्थः। धान्यं मिमीते माति वा **'माङ् माने, मा माने'** (२।८६, २६) अनयोरेव ग्रहणं कथमित्याह — मीनातीत्यादि ॥१००७।

**[वि० प०]**

ह्वा०। कापवाद इति। **''आतोऽनुपसर्गात् कः''** (४।३।४) इत्यनेन प्राप्तस्य कस्यापवादोऽयमित्यर्थः। वातिरकर्मक इति। **'वा गतिगन्धनयोः'** (२।१७) इत्ययमकर्मकः। तेनास्य कर्मोपपदत्वमसङ्गतमिति। तन्तुं वयते इति। **'वेञ् तन्तुसन्ताने'** (१।६११) एव गृह्यते इति भावः। तथा धान्यं माति, मिमीते, मयते वा **धान्यमाय** इति। **'मा माने, माङ् माने, मेङ् प्रतिदाने'** (२।२६, ८६; १।४६२) इत्येतेषां ग्रहणम्, मारूपस्य सम्भवात्। यद्येवं **''मीनातिमिनोतिदीङां गुणवृद्धिस्थाने''** (३।४।२२) इत्यपि वृद्धिविषयत्वादात्वे मारूपमस्ति तत् कथं न भवतीत्याह — मीनातीत्यादि। के हि प्राप्तेऽणुच्यते तस्मिंस्तु बुद्धिस्थे न मारूपमस्ति। कानुबन्धतया गुणवृद्धिविषयत्वाभावात् पूर्वेण त्वनयोरण् भवत्येवेति॥१००७।

[क० च०]

ह्वा० । ह्वाश्च वाश्च माश्च ह्वावामाः तस्मान्नपुंसकेऽपि सूत्रत्वान्न ह्रस्वः । मीनातीति। ननु मीनातिमिनोत्योः कथं कप्रत्ययस्य बुद्धिस्थता शशविषाणादिवद् अत्यन्तासम्भवात्। न ह्यनयोः केनापि विधीयमानोऽत्र कप्रत्ययोऽस्ति येन बुद्धिस्थता ? सत्यम् । अत्र सूत्रे के बुद्धिस्थे सत्यण् विधीयते, तस्य बाधकत्वात्। अतो मीनातिमिनोत्योर्मारूपाभावः, मीनातिमिनोत्योः क इति यथाश्रुतसम्बन्धः । यद् वा "**कर्मण्यण्**" (४।३।१) इत्यनेन भाविनापि बुद्धिविषयत्वादात्वे मारूपमस्तीति अनेन कथम् अण् न स्याद् इति **पूर्वपक्षार्थः**। मीनातीत्यादिसिद्धान्तस्यायमर्थः – अनेनाणि सति कप्रत्ययस्य बाधकत्वात् के बुद्धिस्थे सति मारूपाभावः मारूपं निवर्तते इत्यर्थः, निमित्ताभावादिति शेषः । पूर्वेण क्रियमाणे तु नास्ति क्षतिरित्यनेन वर्णविचारः कृतः, **वस्तुतः** साध्यक्षतिर्नास्तीति ॥१००७।

[समीक्षा]

'स्वर्गह्वायः, तन्तुवायः, धान्यमायः' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'अण्' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "ह्वावामश्च" (अ० ३।२।२) । अतः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **स्वर्गह्वायः**। स्वर्गम् + ह्वेञ् + अण् + सि । स्वर्गं ह्वयते । 'स्वर्गम्' के उपपद में रहने पर 'ह्वेञ् स्पर्धायां शब्दे च' (१।६१३) धातु से अण् प्रत्यय, "सन्ध्यक्षरान्तानामाकारोऽविकरणे" (३।४।२०) से एकार को आकार, "आयिरिच्यादन्तानाम्" (३।६।२०) से आकार को 'आयि' आदेश तथा विभक्तिकार्य ।

२. **तन्तुवायः**। तन्तुम् + वेञ् + अण् + सि । तन्तुं वयते । 'तन्तुम्' के उपपद में रहने पर 'वेञ् तन्तुसन्ताने' (१।६११) से अण् प्रत्यय आदि कार्य पूर्ववत् ।

३. **धान्यमायः**। धान्यम् + मा + अण् + सि । धान्यं माति, मिमीते, मयते वा। 'धान्यम्' के उपपद में रहने पर 'मा माने, माङ् माने, मेङ् प्रतिदाने' (२।२६, ८६; १।४६२) धातुओं से 'अण्' प्रत्यय आदि कार्य पूर्ववत् ॥१००७।

## १००८. शीलिकामिभक्ष्याचरिभ्यो णः [४।३।३]

[सूत्रार्थ]

कर्म कारक के उपपद में रहने पर 'शीलि-कामि-भक्षि-आचर' धातुओं से 'ण' प्रत्यय होता है ॥१००८।

[दु० वृ०]

एभ्यः कर्मण्युपपदे णो भवति । शीलिभक्षी चुरादाविनन्तौ । कमेरिनङ् । मांसशीला, मांसकामा, मांसभक्षा । कल्याणमाचरति **कल्याणाचारा** स्त्री । अणि हि

स्त्रियामी स्यात्। शील्यते इति शीलम्, मांसं शीलमस्याः **मांसशीला**। 'कल्याणप्रतीक्षा, दुःखक्षमा' इति यथाभिधानादण् नास्ति, तथेहापि। यद्येवम् अम्भोऽभिगममस्या अम्भोऽभिगमेति स्यात्? अम्भोऽभिगामी चेष्यत एव। समासेऽप्यभिधानं चेत् कष्टं स्यादिति वचनम् ॥१००८।

**[दु० टी०]**

शीलि०। शील्यते इत्यादि। शीलेरिनन्तात् स्वरान्तत्वादल् शीलम्। मांसे शीलमस्याः। एवं मांसे कामोऽस्याः, तथा मांसभक्षा। आचरण**माचारः**, भावे घञ्। कल्याणे आचारोऽस्याः **कल्याणाचारा** या मांसं शीलयति, मांसविषये तस्याः शीलमिति नार्थभेदः। एवं सति **"शेषाद् विभाषा"** इति कप्रत्ययोऽपि न स्यात्। कल्याणम् इत्यादि। प्रतीक्षणं **प्रतीक्षः**, क्षमणं **क्षमः**। भावे घञ्। **"न सेटोऽमन्तस्य०"** (४।१।३) इत्यादिना दीर्घप्रतिषेधः। कल्याणे प्रतीक्षोऽस्याः **कल्याणप्रतीक्षा,** दुःखे क्षमोऽस्याः **दुःखक्षमेति**। **"ईक्षिक्षमिभ्यां च"** इति वचनमन्तरेणापि सिद्धम्, तथैतेऽपि सिध्यन्तीति भावः। यद्येवमित्यादि। अभिगम्यते इत्यभिगमम्, गमेः कर्मण्यल्। अम्भोऽभिगच्छति, अम्भोऽभिगम्यमानमस्या सम्बन्धीति वा अम्भोऽभिगमा नदीति प्राप्नोति। अण्णेवेष्यतेऽत्रेति तस्मात् समानार्थकर्मोपपदस्य बहुव्रीहेश्च कर्मोपपद एव भवति न बहुव्रीहिरिति किं ज्ञापकेनेति मनसि कृत्वाह — समास इत्यादि। **सुखप्रतिपत्त्यर्थं** वचनमित्यर्थः। काण्डकार इत्यादि। घञेव नास्ति कुतो बहुव्रीहिचिन्ता ॥१००८।

**[वि० प०]**

शीलि०। 'कमेरिनङ्' इति **परप्रसिद्धिवशादुक्तम्।** इह तु कामिनङ् धात्वन्तरमेव। अणि हीति। हिशब्दो यस्मादर्थे। यस्माद् अण्प्रत्यये स्त्रियामीकारः स्यात् तस्मादिदं णप्रत्ययविधानम् आप्रत्ययार्थम्। तथाहि 'अण् - एयण् - इकण् - नण् - स्नण् - क्वरप्' षडनुबन्धो नदादिः। तथापि न कर्तव्यमित्याह—शील्यते इत्यादि। स्वरान्तरत्वादलि कृते बहुव्रीहिणा सिध्यतीति भावः। काम्यते इति **कामम्,** भक्ष्यते इति **भक्षम्,** मांसं काममस्याः, मांसं भक्षमस्याः इति विग्रहः। यदा तु शीलनं **शीलः,** कामनं **कामः,** भक्षणं **भक्षः** इति भावेऽल्, तदापि मांसे शीलोऽस्याः इति भिन्नाधिकरणो बहुव्रीहिः। एवम् आचरणम् **आचारः,** भावे घञ्, कल्याणे आचारोऽस्या इति। या हि मांसं शीलयति, तया मांसं शील्यते मांसे वा शीलमस्या इति नार्थो भिद्यते। न च बहुव्रीहौ "शेषाद् वा" इति कप्रत्ययप्रसङ्गो बहुलत्वात्। कथमिवेत्याह — कल्याणेत्यादि। प्रतीक्षणं **प्रतीक्षः,** क्षमणं **क्षमः,** **"न सेट०"** (४।१।३) इत्यादिना घञि दीर्घनिषेधः। कल्याणे प्रतीक्षोऽस्याः, दुःखे क्षमोऽस्याः इति। यथेदम् **"ईक्षिक्षमिभ्यां च"** इति वचनमन्तरेण सिद्धम्। यथा चेह 'कल्याणं प्रतीक्षते, दुःखं क्षमते' इत्यभिधानादण् नास्ति', तथा मांसं शीलयति इत्यादावपि न भवतीति भावः। ननु तर्हि अतिप्रसङ्ग

इत्याह—यद्येवमिति। अभिगम्यते इति **अभिगमम्**, कर्मण्यल्। अम्भोऽभिगामी चेति कर्मण्यण् दूष्यते। तस्मात् समानार्थस्य कर्मोपपदस्य बहुव्रीहेश्च कर्मोपपदमेव भवति, न तु बहुव्रीहिरिति ज्ञापनार्थमिदं कर्तव्यम्। अथाभिधानादेव शीलादेरन्यत्र बहुव्रीहिः। अतः कर्मोपपदमेव भविष्यतीति चेत् , आह — समासेऽपीति। **सुखार्थमिदं** वचनमित्यर्थः ॥१००८।

**[क० च०]**

शीलि० । शीलिभक्षीति । अथेनन्ते किं प्रमाणम् , **'शील समाधौ, यक्ष भक्ष हसनयोः'** (१।१६९; ९।११५) इत्यनिनन्तयोरिति कथन्न ग्रहणम् , तदा शीली भक्षीति इन्विधानमनर्थकं स्यात् । 'शीलभक्षः' इत्येवं कुर्यात् । यद् वा कामिस्तावदिकारान्तस्तत्साहचर्यात् शीलिभक्षी इत्यपि इकारान्तावेव । एतच्च इनं विना न घटते इतीनन्तावेव । अथ इनन्तावपि हेत्विनन्तौ कथन्न स्यातां चुरादीनन्तत्वे किं प्रमाणम्? सत्यम् , कामिचरिभ्यामहेतुकर्तृभ्यां साहचर्यादेतावपि अहेतुकर्तृकावेव ॥१००८।

**[समीक्षा]**

'मांसशीला, मांसकामा, मांसभक्षा, कल्याणाचारा स्त्री' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ण' प्रत्यय किया गया है । एतदर्थ पाणिनि का कोई सूत्र नहीं है, बल्कि वार्तिककार ने इसकी पूर्ति की है — "शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्" (अ० ३।२।१–वा०) । इस प्रकार उभयत्र समानता ही है ।

**[विशेष वचन]**

१. कल्याणप्रतीक्षा, दुःखक्षमेति यथाभिधानादण् नास्ति तथेहापि (दु० वृ०) ।

२. सुखार्थमिदं वचनमित्यर्थः (वि० प०) ।

**[रूपसिद्धि]**

१. **मांसशीला।** मांसम् + शील् + इन् + ण + आ + सि । मांसं शीलयति। 'मांसम्' के उपपद में रहने पर 'शील समाधौ' (१।१६९) धातु से इन् प्रत्यय, प्रकृत सूत्र से 'ण' प्रत्यय, स्त्रीलिङ्ग में 'आ' प्रत्यय, इकार का लोप तथा विभक्तिकार्य ।

२. **मांसकामा।** मांसम् + कम् + इनङ् + ण + आ + सि । मांसं कामयते। 'मांसम्' के उपपद में रहने पर 'कमु कान्तौ' (१।४०५) धातु से इनङ् प्रत्यय तथा 'ण' प्रत्यय आदि कार्य पूर्ववत् ।

३. **मांसभक्षा।** मांसम् + भक्ष् + इन् + ण + आ + सि । मांसं भक्षयति । 'मांसम्' के उपपद में रहने पर 'भक्ष भक्षणे' (१।५९२) धातु से इन् आदि प्रत्यय पूर्ववत् ।

४. **कल्याणाचारा।** कल्याणम् + आ + चर् + ण + आ + सि। कल्याणमाचरति। 'कल्याणम्' के उपपद में रहने पर 'आङ्' उपसर्गपूर्वक 'चर् गत्यर्थः' (१।१८९) धातु से 'ण' प्रत्यय आदि कार्य पूर्ववत् ॥१००८।

# १००९. आतोऽनुपसर्गात् कः [४।३।४]

**[सूत्रार्थ]**

कर्म कारक के उपपद में रहने पर उपसर्ग के अभाव में आकारान्त धातु से 'क' प्रत्यय होता है ॥१००९।

**[दु० वृ०]**

कर्मण्युपपदे आकारान्ताद् धातोरनुपसर्गात् को भवति । गोदः, अङ्गुलित्रः । अनुपसर्गादिति किम् ? गोसन्दायः । उपसर्गैरव्यवधानतैवेत्यण् । ब्रह्मज्यः, मित्रह्वः । **"अन्यतोऽपि च"** (४।३।४९) इति डः ॥१००९।

**[दु० टी०]**

आतो० । न विद्यते उपसर्गो यस्य धातोरिति । 'गोसन्दायः' इति उपसर्गैः क्रियाद्योतकत्वाद् धातोरनन्तरैः कर्मणः उपपदत्वं न विहन्यते प्राग्भावसमासं प्रति अनुपसर्गादिति प्रतिषेध एव लिङ्गमित्याह-उपसर्गैरित्यादि । ब्रह्मेत्यादि । ब्रह्म जिनाति, मित्रं ह्वयतीति । ननु के सति वर्णमात्राश्रयत्वेऽन्तरङ्गत्वात् परत्वाच्चालोपोऽसार्वधातुके इति न ग्रह्यादिलक्षणं यजादिलक्षणं च सम्प्रसारणं येनेयुवोर्विषयता । अथ **'वार्णात् प्राकृतं बलीयः'** (का० परि० ८१) इति चेद् धातोरादन्तस्यालोपोऽपि प्राकृत एवेति। एवम् अन्यसम्प्रसारिणामादन्तानां स्थितिरेवाकारस्य प्राप्ता व्यञ्जनादौ स्वरादावगुणे त्वाकारलोपस्यापवादः इति **"अन्यतोऽपि च"** (४।३।४९) इत्यपिशब्दस्तत्र बहुलार्थ इति । अन्यस्तु यजादयस्तत्र व्यक्तयस्तदर्थमित्यर्थः ॥१००९।

**[वि० प०]**

आतो० । गोसन्दाय इति । उपसर्गैः क्रियाद्योतकत्वाद् धातोरनन्तरैः कर्मणो व्यवहितत्वाद् उपपदत्वाभावे कथमण् इत्याह — उपसर्गैरित्यादि । अव्यवधानतायां तु अनुपसर्गादिति प्रतिषेध एव लिङ्गम्। अन्यथा कप्रत्ययोऽपि कथं स्यात् , येनायं निषेध इति भावः। **ब्रह्मज्य** इत्यादि। ब्रह्म जिनातीति वाक्यम्। यदि पुनरिह कप्रत्ययः स्यात् तदाऽगुणत्वाद् ग्रह्यादिसूत्रेण ज्याधातोर्यजादित्वाच्च ह्वयतेः सम्प्रसारणे सति इयुवौ स्याताम्। अथ **'वार्णो विधिरन्तरङ्गः'** (का० परि० ८०) इत्यालोपोऽसार्वधातुक इति भविष्यति। नैवम्, **'वार्णात् प्राकृतं बलीयः'** (का०परि०८१) इति सम्प्रसारणमेव स्यात्। अथालोपोऽपि प्राकृत एवेति मन्यते, तथापि येन नाप्राप्तिन्यायेन स्यात्, स्वरादावगुणे ह्याकारलोपे प्राप्ते सम्प्रसारणं विधीयते इति भावः ॥१००९।

**[क० च०]**

आतो०। उपसर्गैरिति। तर्हि कथं ब्रह्मप्रोद्यमिति **"नाम्नि वदः क्यप् च"** (४।२।२०) इति क्यप् स्यात्? सत्यम्, सादृश्यात् कर्तृविहितप्रत्ययमादाय ज्ञापकम्, तर्हि कथं पयांसि निधीयन्तेऽस्मिन्निति **पयोनिधिः। "कर्मण्यधिकरणे च"** (४।५।७१) इति किम्, उपसर्गेण व्यवधानात्? सत्यम्, अत्रापि कर्म उपपदमादाय सादृश्यमस्तीति।

पञ्जी–उपपदत्वाभाव इति। ननु उपकारि पदम् उपपदम् इति व्यवहितेऽपि तदस्त्येव, यथा '**कर्तुं वा कश्चिदन्तर्वसति वसुमतीदक्षिणः सप्ततन्तुः**' इति वसतिपदव्यवधानेऽपि तदस्ति तुमः? सत्यम् , उपोच्चारि पदमिति पक्षमाश्रित्योक्तमिति **कश्चित्**।

**वस्तुतस्तु** यदत्रोपपदं नाम तद् धातोः प्राक् निपततीति, अत्र तु तन्नास्तीत्युपपदत्वाभावः। ब्रह्म जिनातीति। ननु चापवादो ह्वावामश्चेत्यण् प्रत्ययो विहितस्ततो मित्रं ह्वयतीत्यणि सत्यायौ कृते 'मित्रह्वायः' इत्येव वक्तुमुचितम्? सत्यम्, **अयमभिप्रायः** स्याधातेः कप्रत्ययोऽस्त्येव ह्वाधातोरपि '**क्वचिदपवादविषये उपसर्गस्यापि समावेशः**' (पुरु० परि०११२) इति न्यायात् कप्रत्यये सति आकारलोपे सिध्यतीति किमर्थं डप्रत्ययाश्रितः इति शङ्कायामुत्तरमाह- यदि पुनरिहेति। तथापीति। नन्वाकारलोपो हि स्वरादावगुणे विधीयते, सम्प्रसारणं चागुणमात्रे कुत आलोपे प्राप्ते सम्प्रसारणमारभ्यते। तथा जिनातीत्यत्राकारलोपविषयेऽपि सम्प्रसारणमिह स्वरादावगुण इति । एतेन सर्वत्र येन नाप्राप्तिन्यायेनोच्यते किन्त्वत्र प्रकृतिस्थल इत्यर्थः ॥१००९।

**[समीक्षा]**

'गोदः, कम्बलदः, अङ्गुलित्रम्' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "आतोऽनुपसर्गे कः" (अ० ३।२।३) । अतः उभयत्र समानता ही है ।

**[विशेष वचन]**

१. अपिशब्दस्तत्र बहुलार्थ इति । अन्यस्तु यजादयस्तत्र व्यक्तयस्तदर्थमित्यर्थः (दु० टी०) ।

२. उपकारि पदम् उपपदम् (क० च०) ।

**[रूपसिद्धि]**

१. **गोदः**। गो + दा + क + सि । गां ददाति । 'गाम्' इस कर्म के उपपद में रहने पर 'डु दाञ् दाने' (२।८४) धातु से प्रकृत सूत्र द्वारा 'क' प्रत्यय, धातुघटित आकार का लोप तथा विभक्तिकार्य ।

२. **अङ्गुलित्रः**। अङ्गुलि + त्रा + क + सि । अङ्गुलीस्त्रायते । 'अङ्गुलीः' इस कर्म के उपपद में रहने पर 'त्रैङ् पालने' (१।४६३) धातु से 'क' प्रत्यय आदि कार्य पूर्ववत् ॥१००९।

## १०१०. नाम्नि स्थश्च [४।३।५]

**[सूत्रार्थ]**

नाम के उपपद में रहने पर 'स्था' धातु तथा अन्य आकारान्त धातु से 'क' प्रत्यय होता है ॥१०१०।

**[दु० वृ०]**

नाम्न्युपपदे तिष्ठतेराकारान्ताच्च धातोः को भवति। अनुपसर्गादिति न वर्तते। कच्छेन पिबतीति **कच्छपः**। द्वाभ्यां पिबतीति **द्विपः**। समे तिष्ठतीति **समस्थः**। ग्रामे संतिष्ठते इति **ग्रामसंस्थः**॥१०१०।

[दु० टी०]

नाम्नि०। नाममात्रे कर्मणि चाकर्मणि चेत्यर्थः। तेन ग्राममनुतिष्ठतीति **ग्रामानुष्ठः**। सोपसर्गादणेवेति। अनुपसर्गादिति। [1]चकारोऽनुपसर्गादित्यनेन सम्बध्यते। अनुपसर्गात् सोपसर्गाच्चेत्यर्थः ॥१०१०॥

[वि० प०]

नाम्नि०। नाममात्रे कर्मण्यकर्मणि चेत्यर्थः। अनुपसर्गादिति। एतत्तु तिष्ठतिग्रहणादेव लभ्यते। अन्यथा हि अधिकृताकारान्तद्वारेणैव सिद्धम्, अतः सोपसर्गादपि तिष्ठतेरेव नान्यस्माद् इत्याह — ग्राम इत्यादि। एवं ग्राममनुतिष्ठतीति **ग्रामानुष्ठः**॥१०१०।

[क० च०]

नाम्नि०। चकारादाद् इति वर्तते इत्याह — आकारान्तादिति। **पञ्जिका** नाममात्र इति। एतच्च नामग्रहणादेव लभ्यते। अन्यथा कर्मानुवृत्त्यैव सिद्धम्। एतच्चेत्ययम**भिप्रायः** – आतोऽनुपसर्गादित्यनुवृत्त्या नाम्न्युपपदेऽनुपसर्गादाकारान्तात् कप्रत्ययो भवन् स्थाधातोरपि भविष्यति किं स्थाग्रहणेन, नाम्नि चेति कुर्यात्। तस्मात् पृथक् पाठाद् आकारान्तादस्य वैपरीत्यं सूचितम्। तच्चानुपसर्गादिति विशेषणद्वारकमेव स्थाधातुं प्रति अनुपसर्गादिति। अत एवाह — तिष्ठतेरिति॥१०१०।

[समीक्षा]

'समस्थः, द्विपः, कच्छपः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है — "सुपि स्थः" (अ० ३।२।४)। यह ज्ञातव्य है कि पाणिनीय सुबन्त के लिए कातन्त्रकार 'नाम' संज्ञा का व्यवहार करते हैं। अतः सामान्यतया उभयत्र समानता ही है।

[रूपसिद्धि]

१. **कच्छपः**। कच्छ + पा + क + सि। कच्छेन पिबति। 'कच्छेन' इस नामपद के उपपद में रहने पर 'पा पाने' (१।२६४) धातु से प्रकृत सूत्र द्वारा 'क' प्रत्यय, धातुघटित आकार का लोप तथा विभक्तिकार्य।

२. **द्विपः**। द्वि + पा + क + सि। द्वाभ्यां पिबति। द्वि + पा + क + सि। नाम के उपपद में रहने पर 'क' प्रत्यय आदि कार्य पूर्ववत्।

३. **समस्थः**। सम + स्था + क + सि। समे तिष्ठति। नाम के उपपद में रहने पर 'ष्ठा गतिनिवृत्तौ' (१।२६७) धातु से 'क' प्रत्यय आदि कार्य पूर्ववत्।

४. **ग्रामसंस्थः**। ग्राम + सम् + स्था + क + सि। ग्रामे संतिष्ठते। 'ग्राम + सम्' के उपपद में रहने पर 'ष्ठा गतिनिवृत्तौ' (१।२६७) धातु से 'क' प्रत्यय आदि कार्य पूर्ववत्॥१०१०।

---

१. मतान्तरमेतत्। एतन्मते स्थाग्रहणाद् वाक्यार्थद्वयम् — नाम्न्युपपदेऽनुपसर्गादाकारान्तात् क इत्येकम्। अपरं तु नाम्न्युपपदेऽनुपसर्गाच्च स्थ इति, विशेषणविशेष्यभावस्य प्रयोक्तुरायत्तत्वात्। एवं चेत् स्वमते चकार इत्यादिपङ्क्तेरियं व्याख्याऽनुपसर्गात् सोपसर्गाच्च तिष्ठतेरित्यर्थः (टि०)।

## १०११. तुन्दशोकयोः परिमृजापनुदोः [४।३।६]

**[सूत्रार्थ]**

'तुन्दम् – शोकम्' इन कर्म–उपपदों के रहने पर क्रमशः 'परि' पूर्वक 'मृज' धातु से तथा 'अप' पूर्वक 'नुद' धातु से 'क' प्रत्यय होता है ॥१०११।

**[दु० वृ०]**

तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुद्भ्यां यथासङ्ख्यं को भवति । तुन्दं परिमार्ष्टि **तुन्दपरिमृजः**। अलस एवाभिधीयते । तुन्दपरिमार्जोऽन्यः । शोकमपनुदति **शोकापनुदः**। आनन्दकर एव । अन्यत्र शोकापनोदो धर्मकथक एव ॥१०११।

**[दु० टी०]**

तुन्द० । इह प्रकृतत्वात् कर्म वर्तते । अलसे सुखात् कर्तरि नाम्युपधलक्षणकप्रत्ययेनोदाहरणासिद्धिं प्रतिपादयन्नाह—कर्मणीति । कर्मण्यणि प्राप्ते कप्रत्ययो भवति। तुन्दपरिमार्जनं चोपलक्षणमलसस्येदं **रूढिवचनम्।** तथा दुःखमपहरन् यः शोकमपनयति स शोकापनुदः, न तु धर्मदेशनया शोकमात्रमपनयति यः ॥१०११।

**[वि० प०]**

तुन्द० । अलस एवेति । तुन्दपरिमार्जनं चोपलक्षणं सर्व एवालस उच्यते । आनन्दकर एवेति । यः शोकदुःखमपहरन् पुत्रजन्मादिभिरानन्दं करोति स एव, न तु धर्मोपदेशनया यः शोकमपनयतीत्यर्थः ॥१०११।

**[क० च०]**

तुन्द० । तुन्दमुदरम् । आनन्दकर एवेति। शोकापहारकः सन् यदानन्दकरस्तदेव, न तु केवलः शोकापहार इत्यर्थः ॥१०११।

**[समीक्षा]**

'तुन्दपरिमृजः, शोकापनुदः' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — ''तुन्दशोकयोः परिमृजापनुदोः'' (अ० ३।२।५) । अतः उभयत्र समानता ही है ।

**[विशेष वचन]**

१. तुन्दपरिमार्जनं चोपलक्षणम् अलसस्येदं रूढिवचनम् (दु० टी०) ।

**[रूपसिद्धि]**

१. **तुन्दपरिमृजः**। तुन्द + परि + मृज् + क + सि । तुन्दं परिमार्ष्टि । 'तुन्दम्' के उपपद में रहने पर 'परि' उपसर्गपूर्वक 'मृजू शुद्धौ' (२।२९) धातु से प्रकृत सूत्र द्वारा 'क' प्रत्यय, 'क्' अनुबन्ध का प्रयोगाभाव तथा विभक्तिकार्य ।

२. **शोकापनुदः**। शोक + अप + नुद् + क + सि । शोकमपनुदति । 'शोकम्' के उपपद में रहने पर 'णुद प्रेरणे' (५।२) धातु से 'क' प्रत्यय आदि पूर्ववत् ॥१०११।

## १०१२. प्रे दाज्ञः [४।३।७]

**[सूत्रार्थ]**

कर्मकारक तथा 'प्र' उपसर्ग के उपपद में रहने पर 'दा-ज्ञा' धातुओं से 'क' प्रत्यय होता है ।।१०१२।

**[दु० वृ०]**

कर्मणि प्रे चोपपदे दाज्ञाभ्यां को भवति । प्रपाप्रदः, पथिप्रज्ञः । दारूपमिह गृह्यते, न संज्ञा ज्ञासाहचर्यात् । तेन स्तनौ प्रधयतीति **स्तनप्रधायः** ।।१०१२।

**[वि० प०]**

प्रे० । साहचर्यादिति । ज्ञाधातुनेति शेषः ।।१०१२।

**[क० च०]**

रूपमिति । **'स्वं रूपं शब्दस्याशब्दसंज्ञा'** (का० परि० २८) इति न्यायाद् दासंज्ञेति साहचर्याद् यस्य दासंज्ञकस्य दारूपं तस्य ग्रहणमिति, न केवलं सञ्ज्ञामात्रम्, अपि तु सञ्ज्ञाद्वारकमित्यर्थः । न च **"दामागायति०"** (३।४।२९) इत्यादौ ईदृक् कथन्न स्यादिति वाच्यम् , आलोपे सति निमित्तम् , न तु नैमित्तिक आलोप इति । वस्तुतः **शर्ववर्मणा** कृता दासंज्ञा तत्सूत्रसाहचर्येऽणि सति सञ्ज्ञैव गृह्यते, नात्र **"मीनात्यादिदादीनामा"** (४।१।३९) इत्याख्यातिकानुसारेण, असाहचर्ये तु अत्रापि संज्ञा यथा **"उपसर्गे दः किः"** (४।५।७०) इति ।।१०१२।

**[समीक्षा]**

'प्रपाप्रदः, पथिप्रज्ञः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है — "प्रे दाज्ञः" (अ० ३।२।६)। अतः उभयत्र समानता ही है ।

**[विशेष वचन]**

१. दारूपमिह गृह्यते न संज्ञा, ज्ञासाहचर्यात् (दु० वृ०)।

**[रूपसिद्धि]**

१. **प्रपाप्रदः**। प्रपा + प्र + दा + क + सि । 'प्रपा' तथा 'प्र' के उपपद में रहने पर 'डु दाञ् दाने' (२।८४) धातु से प्रकृत सूत्र द्वारा 'क' प्रत्यय, 'क्' अनुबन्ध का प्रयोगाभाव, धातुघटित आकार का लोप तथा विभक्तिकार्य ।

२. **पथिप्रज्ञः**। पन्थि + प्र + ज्ञा + क + सि । 'पन्थि' तथा 'प्र' के उपपद में रहने पर 'ज्ञा अवबोधने' (८।३१) धातु से 'क' प्रत्यय आदि कार्य पूर्ववत् ।।१०१२।

## १०१३. समि ख्यः [४।३।८]

**[सूत्रार्थ]**

कर्म कारक तथा 'सम्' उपसर्ग के उपपद में रहने पर 'चक्षिङ्' धातु से 'क' प्रत्यय होता है ।।१०१३।

[दु० वृ०]

कर्मणि समि चोपपदे चक्षिङो धातोः को भवति। गां सञ्चष्टे **गोसङ्ख्यः**। सोपसर्गत्वाद् वचनम्। मूलानि विभुजतीति **मूलविभुजो** रथः। नखमुचानि धनूंषि। **अभिधानात्** प्राक्तन एव कः। तथा काकेभ्यो गुहितव्याः **काकगुहा**स्तिलाः। कर्मण्यपि दृश्यते॥१०१३।

[दु० टी०]

समि०। अभिधानानुसारेण मूलविभुजादिभ्यश्च को वक्तव्यः इत्याह — मूलानि विभुजतीति। वक्रीकरोतीति। नखानि मोचयन्तीतीनर्थे स्वभावाद् धातुः। प्राक्तन् एव क इति नाम्युपधलक्षण इत्यर्थः। विभुजतीति **विभुजः**, मूलानां विभुजः इति षष्ठीसमासः। एवं नखानां मुचानि। काकेभ्यो गुहा इति पञ्चमीसमासः। यद्येवं तुन्दशोकयोः परिमृजापनुदोरित्यनर्थकं (पूर्वापरभावेनोत्सर्गापवादेन, तथाहि 'चित्रलिखो यष्टिक्षिपः' इत्यण् न युक्तः। पक्षे 'चित्रस्य लिखो यष्टेः क्षिपः' इति षष्ठीसमासः केन वार्यते, तस्माद् यथाभिधानमेव प्रयोगः)? सत्यम्, **मन्दमतिबोधनार्थमेव** वचनं हि तत् ॥१०१३।

[वि० प०]

समि० । गोसङ्ख्य इति । चक्षिङः ख्याञ् । **'ख्या प्रकथने'** (२।२४) इत्यस्य तु सम्पूर्वस्य नाभिधीयते प्रयोगः । मूलानीत्यादि । नखान् मुञ्चन्तीति **नखमुचानि**। स्वभावादिह इनर्थे धातुः । नखान् मोचयन्तीत्यर्थः । संग्रहमाह — अभिधानादिति । **अभिधानानुसारेण** मूलविभुजादिभ्यः प्राक्तनो नाम्युपधलक्षण एव को वेदितव्यः। यथा विभुजतीति **विभुजः**, मूलानां विभुजो **मूलविभुजः**। मुञ्चन्तीति **मुचानि**, नखानां मुचानि **नखमुचानीति** षष्ठीसमासः। मूलानि विभुजतीति वाक्ये कर्मण्यण् नाभिधीयते। तथा काकेभ्यो गुहितव्याः **काकगुहाः** इति पञ्चमीसमासः। एवं सति **"तुन्दशोकयोः परिमृजापनुदोः"** (४।३।६) इति **मन्दमतिबोधनार्थमेव** भवति। नाम्युपधलक्षणेनैव कप्रत्ययेन सिद्धत्वादिति भावः॥१०१३।

[क० च०]

समि०। पञ्जिका तथेति। एतेनोपपदस्य समासं प्रति न यत्नः, किन्तु कर्मणि कप्रत्ययं प्रत्येवेति प्रतिपादितम् ॥१०१३।

[समीक्षा]

'गोसंख्यः' शब्दरूप के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है- "समि ख्यः" (अ० ३।२।७)। अतः समानता ही है।

[विशेष वचन]

१. मन्दमतिबोधनार्थमेव वचनं हि तत् (दु० टी०, वि० प०)।

[रूपसिद्धि]

१. **गोसंख्यः**। गो + सम् + चक्षिङ्-ख्या + क + सि। गां संचष्टे। 'गाम्' इस

कर्म तथा 'सम्' उपसर्ग के उपपद में रहने पर 'चक्षिङ् व्यक्तायां वाचि' (२।४१) धातु से प्रकृत सूत्र द्वारा 'क' प्रत्यय, "चक्षिङः ख्याञ्" (३।४।८९) से 'चक्षिङ्' को 'ख्या' आदेश, आकारलोप तथा विभक्तिकार्य॥१०१३।

## १०१४. गष्टक् [४।३।९]

**[सूत्रार्थ]**

कर्मकारक के उपपद में रहने पर उपसर्ग-रहित 'गै शब्दे' (१।२५६) धातु से 'टक्' प्रत्यय होता है ॥१०१४।

**[दु० वृ०]**

कर्मण्युपपदेऽनुपसर्गाद् गायतेष्टग् भवति। मधुरं गायतीति **मधुरगी**। एवं सामगी। अनुपसर्गादिति किम्? सामसंगायः। षडनुबन्धो नदादिप्रपञ्चार्थः॥१०१४।

**[दु० टी०]**

गः। मधुरं गायतीति मधुरगीति पुंसि नपुंसके च कप्रत्ययेन सिद्धमिति स्त्रीलिङ्गमुदाहरति। अन्यथा "स्त्रियामादा" (२।४।४९) स्यात् ॥१०१४।

**[वि० प०]**

गष्टक्० । कप्रत्ययेनैव सिद्धे टग्विधानं **नदाद्यर्थम्** , तदपि नदादेराकृतिगणत्वादेव सिध्यतीति किमनेनेत्याह — षडनुबन्ध इत्यादि । तथोत्तरमपि सूत्रं **प्रपञ्चार्थम्।** अत एवास्मिन् वक्ष्यमाणे च स्त्रीलिङ्गमुदाहृतम् । पुंनपुंसकयोर्विशेषाभावादिति भावः ॥१०१४।

**[क० च०]**

ग० । षडनुबन्ध इति **वृत्तिः**। ननु सूत्रे टकारानुबन्ध एव निर्दिष्टस्तत्कथं षडनुबन्ध इत्युच्यते षकारस्यादृष्टत्वात् ? सत्यम् । टनुबन्धेन सह वर्तते षडनुबन्धो दन्त्यसकारादिरिति **कश्चित्**। 'अण् – एयण् – इकण् – नण् – स्नण् –क्वरप्' षडनुबन्धा इत्यनुकरणमिति **कश्चित्** । **वस्तुतस्तु** येषां टोऽनुबन्धस्तेषां षानुबन्धत्वे कृतेऽप्यभिमतं सिध्यति । द्वयोरुपादानमन्योऽन्यव्यभिचारार्थम् । अतोऽनयोरेकत्वाध्यवसायात् प्रसङ्गेनोक्तमिति ।१०१४।

**[समीक्षा]**

'सामगः, मधुरगी' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'टक्' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "गापोष्टक्" (अ० ३।२।८)। अतः उभयत्र समानता ही है ।

**[रूपसिद्धि]**

१. **मधुरगी**। मधुर + गै + टक् + ई + सि । मधुरं गायति । 'मधुरम्' इस कर्म कारक के उपपद में रहने पर 'गै शब्दे' (१।२५६) धातु से प्रकृत सूत्र द्वारा 'टक्' प्रत्यय, 'ऐ' को 'आ' आदेश, आकारलोप, स्त्रीलिङ्ग में 'ई' प्रत्यय तथा विभक्तिकार्य।

२. **सामगी**। सामन् + गै + टक् + ई + सि । साम गायति । 'साम' इस कर्म के उपपद में रहने पर 'गा' धातु से 'टक्' प्रत्यय आदि पूर्ववत् ॥१०१४।

## १०१५. सुरासीध्वोः पिबतेः [४।३।१०]

**[सूत्रार्थ]**

'सुरा–सीधु' इन कर्म कारकों के उपपद में रहने पर उपसर्गरहित 'पा' धातु से 'टक्' प्रत्यय होता है ।।१०१५।

**[दु० वृ०]**

सुरासीध्वोः कर्मणोरुपपदयोरनुपसर्गात् पिबतेष्टग् भवति । सुरापी, सीधुपी । सुरासीध्वोरिति किम् ? क्षीरपा ब्राह्मणी । पिबतेरिति किम् ? सुरापा स्त्री । अनुपसर्गादिति किम् ? सुराप्रपायः ।।१०१५।

**[वि० प०]**

सुरा० । क्षीरपा, सुरापेति । "आतोऽनुपसर्गात् कः" (४।३।४) इत्येव भवति ।।१०१५।

**[समीक्षा]**

'सुरापी, सीधुपी' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'टक्' प्रत्यय का विधान किया गया है । अन्तर यह है कि पाणिनीय व्याकरण में वार्त्तिककार ने इस अंश की पूर्ति की है — "सुरासीध्वोः पिबतेरिति वक्तव्यम्" (अ० ३।२।८-वा०) । अतः प्रायः उभयत्र समानता ही कही ज सकती है ।

**[रूपसिद्धि]**

१. **सुरापी** । सुरा + पा + टक् + ई + सि । सुरां पिबति । 'सुराम्' इस कर्म के उपपद में रहने पर 'पा पाने' (१।२६४) धातु से प्रकृत सूत्र द्वारा 'टक्' प्रत्यय, आकारलोप, स्त्रीलिङ्ग में 'ई' प्रत्यय तथा विभक्तिकार्य ।

२. **सीधुपी**। सीधु + पा + टक् + ई + सि । सीधु पिबति । 'सीधु' कर्म के उपपद में रहने पर 'टक्' प्रत्यय आदि कार्य पूर्ववत् ।।१०१५।

## १०१६. हृञोऽज् वयोऽनुद्यमनयोः [४।३।११]

**[सूत्रार्थ]**

कर्म कारक के उपपद में रहने पर 'वयस्' तथा 'अनुद्यमन' अर्थ के गम्यमान होने पर 'हृ' धातु से 'अच्' प्रत्यय होता है ।।१०१६।

**[दु० वृ०]**

अनुपसर्गादिति न स्मर्यते। कर्मण्युपपदे हरतेर्वयसि गम्यमानेऽनुद्यमने चार्थे वर्तमानादज् भवति। ऊर्ध्वं यमनमुद्यमनम् , ततोऽन्यदनुद्यमनम्। वयोग्रहणमुद्यमनार्थम्, सम्भाव्यमानं चात्र वयो गम्यते। कवचहरः क्षत्रियकुमारः, अस्थिहरः श्वा, अंशहरो दायादः, वातहरं तैलम् । उद्यमने तु भारहारः। अणोऽपवादोऽयम् ।।१०१६।

**[दु० टी०]**

हृ० । सम्भाव्यमानमिति । इयं क्षत्रियकुमारस्य वयोऽवस्था, यथा कवचमुत्क्षिपति, समर्थो वा तदुत्क्षेपणे ।।१०१६।

[वि० प०]

हञो० । सम्भाव्यमानमिति । इयं क्षत्रियकुमारस्य वयोऽवस्था, येन कवचं हरति उत्क्षिपति । समर्थो वा तदुत्क्षेपणे इति **कश्चित्** सम्भावयति । एवम् अस्थिहरः श्वेति । अनुद्यमने दर्शयति — अंशहरो वातहरमिति । अंशं स्वीकरोति । वातमपनयति, न तूत्क्षिपतीत्यर्थः ॥१०१६।

[समीक्षा]

'कवचहरः, अस्थिहरः, अंशहरः, वातहरम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'अच्' प्रत्यय का विधान किया गया है । पाणिनि के सूत्र हैं — "हरतेरनुद्यमनेऽच् , वयसि च" (अ० ३।२।९, १०) । पाणिनीय दो सूत्रों के गौरव को छोड़कर प्रायः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **कवचहरः** क्षत्रियकुमारः । कवच + हृ + अच् + सि । कवचं हरति । 'कवचम्' इस कर्म कारक के उपपद में रहने पर 'हृञ् हरणे' (१।५९६) धातु से प्रकृत सूत्र द्वारा 'अच्' प्रत्यय, गुण तथा विभक्तिकार्य ।

२. **अस्थिहरः** श्वा । अस्थि + हृ + अच् + सि । अस्थीनि हरति । 'अस्थीनि' इस कर्म कारक के उपपद में रहने पर 'हृ' धातु से 'अच्' प्रत्यय आदि कार्य पूर्ववत् ।

३. **अंशहरो** दायादः । अंश + हृ + अच् + सि । अंशं हरति । "अशम्' के उपपद में हरने पर 'हृ' धातु से 'अच्' प्रत्यय आदि कार्य पूर्ववत् ।

४. **वातहरं** तैलम् । वात + हृ + अच् + सि । वातं हरति । 'वातम्' के पूर्वपद में रहने पर 'हृ' धातु से 'अच्' प्रत्यय आदि कार्य पूर्ववत् ॥१०१६।

## १०१७. आङि ताच्छील्ये [४।३।१२]

[सूत्रार्थ]

कर्म कारक के उपपद में रहने पर ताच्छील्य अर्थ के गम्यनान होने से 'आङ्' उपसर्गपूर्वक 'हृञ्' धातु से 'अच्' प्रत्यय होता है ॥१०१७।

[दु० वृ०]

कर्मण्युपपदे आङि ताच्छील्ये गम्यमाने हृञोऽज् भवति । फलनिरपेक्षा प्रवृत्तिस्**ताच्छील्यम्** । पुष्पाण्याहर्तुं शीलमस्य **पुष्पाहरो** विद्याधरः । ताच्छील्य इति किम्? भाराहारः ॥१०१७।

[क० च०]

आङि । ताच्छील्य इति । स एवार्थः शीलं यस्य कर्तुस्तस्य **भावस्ताच्छील्यमिति** पदार्थः । निर्गलितार्थमाह — फलनिरपेक्षेति । ननु **'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते'** तत्कथं फलनिरपेक्षा प्रवृत्तिः ? अवश्यं किञ्चिदपि फलमपेक्षते, सत्यमित्याह — ये इति **हेमकरः**। प्रयोजनाभावेऽपि प्रवृत्तिर्दृश्यते। यथा गच्छतां जनानां तृणादिस्पर्शः, तद्वदत्रापीति **तार्किकाः** ॥१०१७।

[समीक्षा]

'पुष्पाहरः, फलाहरः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'अच्' प्रत्यय का विधान किया गया है । पागिनि का सूत्र है — "आङि ताच्छील्ये" (अ० ३।२।११) । अतः उभयत्र समानता ही है ।

[विशेष वचन]

१. फलनिरपेक्षा प्रवृत्तिस्ताच्छील्यम् (दु० वृ०) ।

२. प्रयोजनाभावेऽपि प्रवृत्तिर्दृश्यते । यथा गच्छतां जनानां तृणादिस्पर्शः (क० च०) ।

[रूपसिद्धि]

१. **पुष्पाहरो** विद्याधरः । पुष्प + आङ् + हृ + अच् + सि । पुष्पाण्याहर्तुं शीलमस्य । 'पुष्पाणि' इस कर्म के उपपद में रहने पर 'आङ्' उपसर्गपूर्वक 'हृञ् हरणे' (१।५९६) धातु से प्रकृत सूत्र द्वारा 'अच्' प्रत्यय, धातुघटित ऋकार को गुणादेश तथा विभक्तिकार्य ॥१०१७।

## १०१८. अर्हश्च [४।३।१३]

[सूत्रार्थ]

कर्मकारक के उपपद में रहने पर 'अर्ह पूजायाम्' (१।२५०) धातु से 'अच्' प्रत्यय होता है ॥१०१८।

[दु० वृ०]

ताच्छील्यम् आङ् चेति न स्मर्यते । कर्मण्युपपदे अर्हतेरज् भवति । पूजार्हा स्त्री ॥१०१८।

[समीक्षा]

'पूजार्हा, गन्धार्हा, मालार्हा' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'अच्' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है — "अर्हः" (अ० ३।२।१२) । अतः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **पूजार्हा** स्त्री । पूजा + अर्ह + अच् + आ + सि । पूजामर्हति । 'पूजाम्' इस कर्म कारक के उपपद में रहने पर 'अर्ह पूजायाम्' (१।२५०) धातु से प्रकृत सूत्र द्वारा 'अच्' प्रत्यय, स्त्रीलिङ्ग में 'आ' प्रत्यय, समानलक्षण दीर्घ तथा विभक्तिकार्य ॥१०१८।

## १०१९. धृञः प्रहरणे चादण्डसूत्रयोः [४।३।१४]

[सूत्रार्थ]

'दण्ड–सूत्र' कर्म को छोड़कर प्रहरण-वाचक कर्म के उपपद में रहने पर 'धृञ् धारणे' (१।५९९) धातु से 'अच्' प्रत्यय होता है ॥१०१९।

[दु० वृ०]

दण्डसूत्रवर्जिते प्रहरणवाचके कर्मण्युपपदे धृञोऽज् भवति। वज्रं धरतीति **वज्रधरः**।

एवं चक्रधरः। अदण्डसूत्रयोरिति किम्? दण्डधारः, सूत्रधारः। सूत्रप्रतिषेधादप्रहरणेऽपि भूधरः, जटाधरः॥१०१९।

[समीक्षा]

पाणिनीय वैयाकरण 'भूधरः, जटाधरः, वज्रधरः, चक्रधरः' जैसे शब्दरूपों को 'धरतीति धरः, भुवो धरः भूधरः' इत्यादि व्युत्पत्ति करके सिद्ध करते हैं। तदनुसार पहले कर्ता अर्थ में पचादि अच् और फिर षष्ठीतत्पुरुष समास प्रवृत्त होता है। 'अण्' प्रत्यय के परिहारार्थ यह विधि अपनानी पड़ती है। कातन्त्रकार ने साक्षात् सूत्र बनाकर 'अण्' प्रत्यय का निषेध करके 'अच्' प्रत्यय का विधान किया है। इस प्रकार पाणिनीय प्रक्रिया की अपेक्षा कातन्त्रकार ने सरल मार्ग अपनाया है।

[रूपसिद्धि]

१. **वज्रधरः**। वज्रम् + धृ + अच् + सि। वज्रं धरति। 'वज्रम्' इस कर्म के उपपद में रहने पर 'धृञ् धारणे' (१।५९९) धातु से प्रकृत सूत्र द्वारा 'अच्' प्रत्यय, ऋकार को गुण तथा विभक्तिकार्य।

२. **चक्रधरः**। चक्रम् + धृ + अच् + सि। चक्रं धरति। 'चक्रम्' इस कर्म के उपपद में रहने पर 'धृ' धातु से अच् प्रत्यय आदि प्रक्रिया पूर्ववत्॥१०१९।

## १०२०. धनुर्दण्डत्सरुलाङ्गलाङ्कुशयष्टितोमरेषु ग्रहेर्वा [४।३।१५]

[सूत्रार्थ]

'धनुः – दण्ड' आदि कर्म कारक के उपपद में रहने पर 'ग्रह्' धातु से वैकल्पिक 'अच्' प्रत्यय होता है॥१०२०।

[दु० वृ०]

एषु कर्मसूपपदेषु ग्रहेरज् भवति वा। धनुर्गृह्णातीति **धनुर्ग्रहः, धनुर्ग्राहः**। एवं दण्डग्रहः, दण्डग्राहः। त्सरुग्रहः, त्सरुग्राहः। लाङ्गलग्रहः, लाङ्गलग्राहः। अङ्कुशग्रहः, अङ्कुशग्राहः। यष्टिग्रहः, यष्टिग्राहः। तोमरग्रहः, तोमरग्राहः। कथं घटग्रहः, घटीग्रहः। पचादित्वादच्। घटग्राहः, घटीग्राहः इत्यण्णपि। तथा सूत्रग्रहः इति धारणे। अन्यत्र सूत्रग्राहः। पचादिप्रपञ्चार्थं प्रकरणमिदम्॥१०२०।

[दु० टी०]

धनुः०। 'घटस्य ग्रहः घट्याश्च ग्रहः' इति षष्ठीसमासेन पचाद्यचा सिद्धमित्याह — **घटग्रह** इत्यादि। घटं गृह्णातीति कर्मण्यण् स्यादिति भावः। तथेत्यादि। सूत्रधारः, सूत्रग्राहः। यो हि सूत्रं क्रीणाति, उद्धरति, आदत्ते वा स **सूत्रग्राहो** भवति॥१०२०।

[वि० प०]

धनुः। पचादित्वादचि कृते 'घटस्य ग्रहः, घट्या ग्रहः' इति षष्ठीसमास इत्यर्थः। तेन घटघट्योश्चेति न वक्तव्यम्। तथेति। सूत्रग्रहः, सूत्रधारः। अन्यत्रेति। यः

सूत्रमुपादत्ते, क्रीणाति, उद्धरति वा तत्र अणेवेत्यर्थः । एवन्तर्हि पूर्वेणैवाचा सर्वमिदं सिद्धम् । तत्रापि पचादिग्रहणं **बाधकबाधनार्थ**मित्युक्तमेवेत्याह – पचादीत्यादि ॥१०२०।

**[समीक्षा]**

'दण्डग्रहः, लाङ्गलग्रहः, यष्टिग्रहः' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'अच्' प्रत्यय का विधान किया गया है । पाणिनीय व्याकरण में साक्षात् सूत्र नहीं है, इसकी पूर्ति वार्त्तिककार ने की है — "अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहेरुपसङ्ख्यानम्" (अ० ३।२।९-वा०) । अतः सामान्यतया उभयत्र समानता ही है, परन्तु कातन्त्रकारीय विकल्पविधान पाणिनीय की अपेक्षा विशेष महत्त्वपूर्ण है ।

**[विशेष वचन]**

१. पचादिप्रपञ्चार्थं प्रकरणमिदम् (दु० वृ०) ।

२. पचादिग्रहणं बाधकबाधनार्थम् (वि० प०) ।

**[रूपसिद्धि]**

१. **धनुर्ग्रहः, धनुर्ग्राहः**। धनुः + ग्रह + अच्, अण् + सि । धनुर्गृह्णाति । 'धनुः' इस कर्म के उपपद में रहने पर 'ग्रह उपादाने' (८।१४) धातु से प्रकृत सूत्र द्वारा 'अच्' प्रत्यय तथा विभक्तिकार्य । अच् प्रत्यय के अभाव में 'अण्' प्रत्यय–धनुर्ग्राहः ।

२-७. **दण्डग्रहः, दण्डग्राहः** । दण्ड + ग्रह् + अच्, अण् + सिं । **त्सरुग्रहः, त्सरुग्राहः** । त्सरु + ग्रह् + अच्, अण् + सि । **लाङ्गलग्रहः, लाङ्गलग्राहः**। लाङ्गल + ग्रह + अच् , अण् + सि। **अङ्कुशग्रहः, अङ्कुशग्राहः** । अङ्कुश + ग्रह + अच्, अण् + सि। **यष्टिग्रहः, यष्टिग्राहः**। यष्टि + ग्रह् + अच्, अण् + सि । **तोमरग्रहः, तोमरग्राहः** । तोमर + ग्रह् + अच्, अण् + सि ॥१०२०।

## १०२१. स्तम्बकर्णयो रमिजपोः [४।३।१६]

**[सूत्रार्थ]**

'स्तम्ब–कर्ण' के उपपद में रहने पर क्रमशः 'रम्–जप्' धातुओं से 'अच्' प्रत्यय होता है ॥१०२१।

**[दु० वृ०]**

स्तम्बकर्णयोरुपपदयो रमिजपिभ्यां यथासङ्ख्यम् अज् भवति । स्तम्बे रमते **स्तम्बेरमो** हस्त्येव । कर्णे जपतीति **कर्णेजपः** सूचकः एवाभिधीयते । तथा सप्तम्याश्चालुक् ॥१०२१।

**[दु० टी०]**

स्तम्ब० । हस्तिसूचकौ कर्तृविशेषणम् उपलक्षणं च पूर्ववत् ॥१०२१।

**[समीक्षा]**

'स्तम्बेरमः, कर्णेजपः' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'अच्' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "स्तम्बकर्णयो रमिजपोः" (अ० ३।२।१३) । अतः उभयत्र समानता ही है ।

**[रूपसिद्धि]**

१. **स्तम्बेरमो** हस्ती । स्तम्ब + रम् + अच् + सि । स्तम्बे रमते । 'स्तम्ब' शब्द

के उपपद में रहने पर 'रमु क्रीडायाम्' (१।५६१) धातु से प्रकृत सूत्र द्वारा 'अच्' प्रत्यय, सप्तमी विभक्ति का अलुक् तथा विभक्तिकार्य ।

२. **कर्णेजपः** सूचकः । कर्ण + जप् + अच् + सि । कर्णे जपति । 'कर्ण' के उपपद में रहने पर 'जप मानसे च' (१।१३५) धातु से अच् प्रत्यय आदि कार्य पूर्ववत् ॥१०२१।

## १०२२. शम्पूर्वेभ्यः सञ्ज्ञायाम् [४।३।१७]

**[सूत्रार्थ]**

सञ्ज्ञा के गम्यमान होने पर 'शम्'-पूर्वक धातुओं से 'अच्' प्रत्यय होता है ॥१०२२।

**[दु० वृ०]**

शम्पूर्वेभ्यो धातुभ्यः सञ्ज्ञायां गम्यमानायाम् अज् भवति । शं करोतीति शङ्करः। एवं शम्भवः, शंवदः, शंवरः । शम् पूर्वो येभ्यो धातुभ्यः इति बहुव्रीहिणा कृञो हेत्वादिष्वपि टो बाध्यते । तेन 'शङ्करा' नाम परिव्राजिका ॥१०२२।

**[दु० टी०]**

शम्०। शमि सञ्ज्ञायामिति सिद्धे पूर्वग्रहणं किमर्थम् इत्याह — शम्पूर्व इत्यादि। बहुवचनेन व्यक्तिरवधार्यते तद्बलाट्टो बाध्यते इति । ननु बहुवचनं रमिजपोर्निवृत्त्यर्थं कथन्न स्यात् कर्मानुवर्तनात् , तर्हि कथं सम्भवस्तस्मान्नामाधिकारोऽनुवर्तिष्यते, न तु कर्मणीति वर्तते । तर्हि उभयेनापि सम्बन्धो भविष्यति, न च वक्तव्यं सञ्ज्ञावशादभिधानाद् वा प्रतिपत्तिगौरवं स्यात् ॥१०२२।

**[वि० प०]**

शम्पू० । शमि सञ्ज्ञायामिति सिद्धे किमर्थं पूर्वग्रहणमित्याह — शम्पूर्व इत्यादि। बहुवचनेन व्यक्तिरवधार्यते, ततः कृञो हेत्वित्यादिना प्राप्तष्टप्रत्ययो न भवति, स्याच्चेत् तदा "**स्त्रियामादा**" (२।४।४९) न स्यात् ॥१०२२।

**[समीक्षा]**

'शङ्करः, शम्भवः, शंवदः, शंवरः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'अच्' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "शमि धातोः सञ्ज्ञायाम्" (अ० ३।२।१४) ।

**[विशेष वचन]**

१. बहुवचनेन व्यक्तिरवधार्यते (दु० टी०, वि० प०) ।

२. न च वक्तव्यं सञ्ज्ञावशादभिधानाद् वा प्रतिपत्तिगौरवं स्यात् (दु० टी०) ।

**[रूपसिद्धि]**

१. **शङ्करः** । शम् + कृ + अच् + सि । शं करोति । 'शम्' शब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'अच्' प्रत्यय, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से धातुघटित ऋकार को गुणादेश, 'म्' को अनुस्वार, परसवर्ण तथा विभक्तिकार्य ।

२. **शम्भवः** । शम् + भू + अच् + सि । शम् भवति । 'शम्' पूर्वक 'भू सत्तायाम्' (१।१) धातु से 'अच्' प्रत्यय आदि प्रक्रिया पूर्ववत् ।

३. **शंवदः** । शम् + वद् + अच् + सि । शं वदति । 'शम्' पूर्वक 'वद व्यक्तायां वाचि' (१।६१५) धातु से 'अच्' प्रत्यय आदि कार्य पूर्ववत् ।

४. **शंवरः** । शम् + वृ + अच् + सि । शं वृणुते । 'शम्' पूर्वक 'वृञ् वरणे' (४।८) धातु से 'अच्' प्रत्यय आदि कार्य पूर्ववत् ॥१०२२।

## १०२३. शीङोऽधिकरणे च [४।३।१८]

**[सूत्रार्थ]**

अधिकरण के उपपद में रहने पर 'शीङ् स्वप्ने' (२।५५) धातु से 'अच्' प्रत्यय होता है ॥१०२३।

**[दु० वृ०]**

अधिकरणे च नाम्न्युपपदे शेतेरज् भवति । खे शेते **खशयः**। चकारात् पार्श्वादौ करणे। पार्श्वेन शेते **पार्श्वशयः**। एवं पृष्ठशयः। उदरशयः । दिग्धेन सह शेते **दिग्धसहशयः** इति समासद्वयम् । उत्तानादिषु कर्तृषु – उत्तानः शेते **उत्तानशयः** ॥१०२३।

**[दु० टी०]**

शीङो० । चकारेण नामाधिकारो न विहन्यते तर्हि अधिकरणग्रहणं किमर्थम् , नामाधिकारस्य **लक्ष्यानुरोधार्थम्** । तेन पार्श्वादीनां च करणत्वादुपसंख्यानम् 'दिग्धसहपूर्वाच्च' इति लब्धम् । समासद्वयमिति । उपपदसमासे पश्चात् कारकसमास इत्यर्थः ।१०२३।

**[वि० प०]**

शीङो० । समासद्वयमिति । सह शेते **सहशयः**, दिग्धेन सह शेते **दिग्धसहशयः** इत्युपपदसमासे पश्चात् कारकेण सह समासः । दिग्धेन सहः दिग्धसहः इति कारकेण सह समासः । दिग्धेन सहः दिग्धसहः इति कारकसमासे पश्चादुपपदसमास **इत्यन्ये** । उत्तानादिष्विति । एवम् ऊर्ध्वमुखशयः, अवाङ्मुखशयः, प्राङ्मुखशय इत्यादि ।।१०२३।

**[क० च०]**

शीङ् । अधिकरण इति न प्रत्ययविशेषणम् , सोपपदप्रस्तावात् । ननु बहुव्रीहिसमाससूत्रे बहुग्रहणाद् बहुव्रीहिरेव बहुपदे । नान्यः समास इति नियमात् कथं दिग्धसहशयः इति बहुपदेऽन्यसमास इत्याह — दिग्धेनेति विषाक्तेनेत्यर्थः ।।१०२३।

**[समीक्षा]**

'खशयः, गर्तशयः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'अच्' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "अधिकरणे शेतेः" (अ० ३।२।१५) । अतः प्रायः उभयत्र समानता ही है । करण तथा कर्ता कारक के उपपद में रहने पर अच् प्रत्यय के लिए वार्तिक-सूत्रों की रचना की गई है ।

**[रूपसिद्धि]**

१. **खशयः**। ख + शीङ् + अच् + सि । खे शेते । 'खे' इस अधिकरण के उपपद में रहने पर 'शीङ् शये' (२।५५) धातु से प्रकृत सूत्र द्वारा 'अच्' प्रत्यय, धातुगत ईकार को गुण, एकार को अय् आदेश तथा विभक्तिकार्य ।

२. **पार्श्वशयः**। पार्श्व + शीङ् + अच् + सि । पार्श्वेन शेते । 'पार्श्वे' इस अधिकरण के उपपद में रहने पर 'शीङ्' धातु से अच् आदि कार्य पूर्ववत् ।

३. **पृष्ठशयः**। पृष्ठ + शीङ् + अच् + सि । पृष्ठेन शेते । 'शीङ्' धातु से अच् प्रत्यय आदि कार्य पूर्ववत् ।

४-६. **उदरशयः**। उदर + शीङ् + अच् + सि । उदरेण शेते । **दिग्धसहशयः**। दिग्ध + सह + शीङ् + अच् + सि । दिग्धेन सह शेते । **उत्तानशयः**। उत्तान + शीङ्+ अच् + सि । उत्तानः शेते । सर्वत्र 'शीङ्' धातु से 'अच्' प्रत्यय आदि कार्य पूर्ववत्॥१०२३।

## १०२४. चरेष्टः [४।३।१९]

**[सूत्रार्थ]**

अधिकरण कारक के उपपद में रहने पर 'चर्' धातु से 'ट' प्रत्यय होता है ॥१०२४।

**[दु० वृ०]**

अधिकरणे च नाम्न्युपपदे चरेष्टो भवति । कुरुषु चरतीति **कुरुचरः, कुरुचरी।** चकारादन्यत्रापि – भिक्षया चरतीति **भिक्षाचरः, भिक्षाचरी।** सेनया चरतीति **सेनाचरः, सेनाचरी।** आदाय चरतीति **आदायचरः, आदायचरी** ॥१०२४।

**[दु० टी०]**

चरे० । प्रत्ययान्तरकरणं स्त्रियामीप्रत्ययार्थम् अविवक्षितकर्मकत्वाद् आदानं कृत्वा चरति आदायचरः । अन्यथा आदायसापेक्षत्वात् टो न स्यात् ॥१०२४।

**[वि० प०]**

चरे० । आदायेति । आङ्पूर्वस्य दाञः क्त्वा–यबन्तस्य "**मीनात्यादिदादीनामा**" (४।१।३९) इत्यात्वे सति प्रयोगः । अत्राविवक्षितकर्मकत्वात् सापेक्षत्वं नास्तीति टो न विहन्यते – आदानं कृत्वा चरतीत्यर्थः ॥१०२४।

**[समीक्षा]**

'कुरुचरः, कुरुचरी' शब्दरूपों के सिद्ध्यर्थ दोनों ही शाब्दिकाचार्यों ने 'अच्' प्रत्यय का विधान किया है । पाणिनि का सूत्र है — "चरेष्टः" (अ० ३।२।१६) । इस प्रकार उभयत्र समानता ही है । 'भिक्षाचरः' इत्यादि शब्दरूपों की सिद्धि चकार के बल पर करण के भी उपपद में रहने पर मानी जाती है ।

**[विशेष वचन]**

१. प्रत्ययान्तरकरणं स्त्रियामीप्रत्ययार्थम् (दु० टी०) ।

**[रूपसिद्धि]**

१. **कुरुचरः, कुरुचरी** । कुरु + चर् + ट + सि । कुरुषु चरति । 'कुरुषु' के उपपद में रहने पर 'चर गत्यर्थः' (१।१८९) धातु से प्रकृत सूत्र द्वारा 'ट' प्रत्यय तथा

विभक्तिकार्य । स्त्रीलिङ्ग में "नदाद्यन्चिवाह्व्यन्स्यन्तृसखिनान्तेभ्य ई" (२।४।५०) सूत्र द्वारा 'ई' प्रत्यय होने पर – 'कुरुचरी' ।

२-४. **भिक्षाचरः, भिक्षाचरी** । भिक्षा + चर् + ट + सि । भिक्षया चरति । **सेनाचरः, सेनाचरी** । सेना + चर् + ट + सि । सेनया चरति । **आदायचरः, आदायचरी**। आदाय + चर् + ट + सि । आदाय चरति । करण कारक तथा आदाय के उपपद में रहने पर 'चर्' धातु से 'ट' प्रत्यय ॥१०२४।

## १०२५. पुरोऽग्रतोऽग्रेषु सर्तेः [४।३।२०]

**[सूत्रार्थ]**

'पुरस् – अग्रतस् – अग्र' शब्दों के उपपद में रहने पर 'सृ गतौ' (१।२७४) धातु से 'ट' प्रत्यय होता है ॥१०२५।

**[दु० वृ०]**

एषूपपदेषु सर्तेष्टो भवति । पुरः सरतीति **पुरःसरः, पुरःसरी** । अग्रतःसरः, अग्रतःसरी । आद्यादित्वात् तस् । अग्रेसरः, अग्रेसरी । एकारान्तमव्ययं निपातनादलुग् वा ॥१०२५।

**[समीक्षा]**

'पुरःसरः, अग्रतःसरः, अग्रेसरः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ट' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "पुरोऽग्रतोऽग्रेषु सर्तेः" (अ०३।२।१८) । अतः उभयत्र समानता ही है ।

**[रूपसिद्धि]**

१. **पुरःसरः, पुरःसरी**। पुरस् + सृ + ट + सि । पुरः सरति । 'पुरस्' के उपपद में रहने पर 'सृ गतौ' (१।२७४) धातु से प्रकृत सूत्र द्वारा 'ट' प्रत्यय, धातुघटित ऋकार को "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से गुण तथा विभक्तिकार्य । स्त्रीलिङ्ग में 'ई' प्रत्यय ।

२. **अग्रतःसरः, अग्रतःसरी** । अग्रतस् + सृ + ट + सि । अग्रतः सरति । 'अग्रतः' के उपपद में रहने पर 'सृ' धातु से 'ट' प्रत्यय आदि पूर्ववत् ।

३. **अग्रेसरः, अग्रेसरी** । अग्रे + सृ + ट + सि । अग्रे सरति । 'अग्रे' के उपपद में रहने पर 'सृ' धातु से 'ट' प्रत्यय आदि कार्य पूर्ववत् ॥१०२५।

## १०२६. पूर्वे कर्तरि [४।३।२१]

**[सूत्रार्थ]**

कर्तृवाचक 'पूर्व' शब्द के उपपद में रहने पर 'सृ' धातु से 'ट' प्रत्यय होता है ॥१०२६।

**[दु० वृ०]**

पूर्वशब्दे कर्तृवाचिन्युपपदे सर्तेष्टो भवति। पूर्वः सरतीति **पूर्वसरः, पूर्वसरी**। कस्मात् पूर्व इत्यविवक्षैव । कर्तरीति किम्? पूर्वं सरतीति **पूर्वसारः**॥१०२६।

[दु० टी०]

पूर्वशब्दस्य सम्बन्धिशब्दत्वात् सापेक्षत्वात् सापेक्षस्यापि गुरुदासादीनामिव गमकत्वात् समास: ।।१०२६।

[वि० प०]

पूर्वे० । कस्मादित्यादि । ननु यद्यपि नावध्यन्तरं विवक्षितम्, तथापि पूर्वशब्दस्य सम्बन्धिवचनत्वात् सम्बन्ध्यन्तरेणापेक्षाऽस्त्येवेति चेत् ? सत्यमेतत्, तथापि सम्बन्धिशब्देषु वृत्तिर्गमकत्वाद् यथा गुरुदास:, गुरुकुलमिति ।।१०२६।

[क० च०]

पूर्वे० । **पञ्जिका** नन्विति । अथ कस्मात् पूर्व इति विवक्षयैव सापेक्षत्वानुवृत्तौ सिद्धान्तो दत्त:, तत्कथमनेन देश्यभाशङ्क्यते ? सत्यम् । प्रत्ययोत्पत्तिं प्रति वृत्तौ कस्मात् पूर्व इति अविवक्षेत्युक्तम् अनेन तु समासं प्रति युक्तिरुक्ता । अथ **वृत्तौ** सामान्यवचनात् समासं प्रत्यपि बोद्धव्यं **चेद् अयमाशय:**–समासं प्रति नायं **सिद्धान्तो** दातव्य:, अन्य एव सिद्धान्तो विद्यते यत: यद्यपीति न विध्यन्तरं विवक्ष्यते । प्रत्ययोत्पत्तिं प्रतीत्यर्थ:, सम्बन्ध्यन्तरापेक्षाऽस्त्येवेति समासं प्रत्येवेत्यर्थ: ।।१०२६।

[समीक्षा]

'पूर्वसर:, पूर्वसरी' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ट' प्रत्यय किया गया है । पाणिनि का सूत्र है — "पूर्वे कर्तरि" (अ० ३।२।१९) । अत: उभयत्र समानता है ।

[रूपसिद्धि]

१. **पूर्वसर:, पूर्वसरी** । पूर्व + सृ + ट + सि । पूर्व: सरति । कर्तृवाची 'पूर्व:' शब्द के उपपद में रहने पर 'सृ गतौ' (१।२७४) धातु से प्रकृत सूत्र द्वारा 'ट' प्रत्यय, 'ट्' अनुबन्ध का प्रयोगाभाव, धातुगत ऋकार का "नाम्यन्तयोर्धातुविकरणयोर्गुण:" (३।५।१) से गुणादेश तथा विभक्तिकार्य । स्त्रीलिङ्ग में 'ई' प्रत्यय–पूर्वसरी ।।१०२६।

## १०२७. कृञो हेतुताच्छील्यानुलोम्येष्वशब्दश्लोककलह-गाथावैरचाटुसूत्रमन्त्रपदेषु [४।३।२२]

[सूत्रार्थ]

शब्द, श्लोक, कलह, गाथा, वैर, चाटु, सूत्र, मन्त्र एवं पद से भिन्न कर्मसंज्ञक शब्दों के उपपद में रहने पर हेतु–ताच्छील्य-आनुलोम्य अर्थों में 'डु कृञ् करणे' (७।७) धातु से 'ट' प्रत्यय होता है ।।१०२७।

[दु० वृ०]

अशब्दादिषु कर्मसूपपदेषु हेतौ कर्तरि, ताच्छील्ये, आनुलोम्ये च गम्यमाने कृञष्टो भवति । प्रतीतशक्तिकं कारणं हेतुरिह गृह्यते, कृञोऽनिनन्तत्वात् । हेतौ –

विद्या यशस्करी। ताच्छील्ये — श्राद्धकरः । आनुलोम्यम् अनुकूलता – वचनकरः। अशब्दादिष्विति किम्? शब्दकारः, श्लोककारः, कलहकारः, गाथाकारः, वैरकारः, चाटुकारः, सूत्रकारः, मन्त्रकारः, पदकारः। हेत्वानुलोम्ययोर**विवक्षा** स्थितैव । ताच्छील्ये स्यादिति वर्जनम्। कथं कुम्भादिकरणशीलाः कुम्भकारादय इति? **अभिधानात्** ॥१०२७।

**[दु० टी०]**

कृञो० । ननु ताच्छील्यमिति किमर्थो भावप्रत्ययनिर्देशः प्रकृतस्य कर्तुर्विशेषणमास्तां तच्छीले कर्तरीति? सत्यम्, **वैचित्र्यार्थमेव**। तर्हि तद्ग्रहणं किमर्थम्, तच्छब्देन धात्वर्थो निर्दिश्यते तदेव शीलमस्येति श्रुतत्वाद् धात्वर्थ एव प्रतीयते? सत्यम्। **प्रतिपत्तिगौरवनिरासार्थमेव**। तथा आनुलोम्यमिति भावप्रत्ययः। प्रतीतेत्यादि। "**कारयति यः स हेतुश्च**" (२।४।१५) इति न गृहीत इति हेतुमाह — कृञोऽनिनन्तत्वादिति । यद्यपि प्रवृत्तक्रियस्य कर्तुर्- हेतुत्वव्यभिचारस्तथापि हेतुर्विशेषणम् अप्रवृत्तक्रियेऽपि प्रतीतशक्तिके यथा स्यात् । विद्याया यशस्करणे सामर्थ्यम् अन्यत्र प्रसिद्धमिति यशोऽकरणेऽपि टप्रत्ययः सिद्धो भवति । श्राद्धं पितृक्रिया तत् कर्तव्यमित्येवं फलानपेक्षया यः करोति स उच्यते **श्राद्धकरः**। अनुकूलता आराध्यचित्तानुवृत्तिः । यदि शब्दादिकरणशीलाः शब्दकारादय इति प्रतिषिध्यते, तदा कुम्भादिकरणशीलेष्वपि प्रतिषेधो वक्तव्य इत्याह — कथमित्यादि । अभिधानादिति । अणन्त एवाभिधीयते इत्यर्थः । हेत्वाद्यर्थविवक्षायां वेत्यर्थः । शब्दकारादयोऽप्येवम् भविष्यन्तीति **दुःखबोधम्** ॥१०२७।

**[वि० प०]**

कृञो० । प्रतीतेत्यादि । "**कारयति यः स हेतुश्च**" (२।४।१५) इति प्रयोजको हेतुरिन्प्रत्ययवाच्यस्तदभावे लौकिक एव हेतुरित्यर्थः । तर्हि किं हेतुग्रहणेन ? कर्तरि कृद् भवति । कर्ता च क्रियां कुर्वन् हेतुरेवेति ? सत्यम् , अकुर्वतापि कर्तरि प्रतीतशक्तिके यथा स्यादिति । तेन विद्या यशस्करीति । विद्याया यशस्करणे प्रतीतशक्तिके यथा स्यादिति । तेन विद्या यशस्करीति । विद्याया यशस्करणे प्रतीता शक्तिः क्वचिद् यशोऽकरणेऽपि टप्रत्ययोत्पत्तिविघातो न भवतीति । श्राद्धं पितृक्रिया, तत् कर्तव्यमित्येवं यः फलानपेक्षया क्रियां करोति स **श्राद्धकरः** । यदि शब्दादिकरणशीलत्वात् शब्दकारादिषु ताच्छील्ये टप्रत्ययः स्यादिति प्रतिषिध्यते, तदा कुम्भादिकरणशीलेष्वपि प्रतिषेधो वक्तव्यः, कथमन्यथा तेष्वणिति न देश्यम् , परिहारमाह — कथमित्यादि ॥१०२७।

**[क० च०]**

कृञो० । प्रतीतेति । प्रतीता शक्तिर्यस्य । एतेन फलसाधनयोग्यपदार्थो हेतुरेवेति निश्चितम् । ननु 'देवदत्तः कटकारः' इत्यत्र कथन्न टप्रत्ययः । न च वाक्यं हेतुग्रहणमनर्थकम्। विद्या यशस्करीति योग्यतायां चरितार्थत्वात् । अन्यथा यशोऽकरणेऽपि हेतुत्वाभावात् कथं टप्रत्ययः, किन्तु फलोपधायको हेतुरेव स्यात् ? सत्यम् । तदा

ताच्छील्यानुलोम्ययोर्ग्रहणमनर्थकम् । 'श्राद्धकरः, वचनकरः' इत्यादौ ताच्छील्ये आनुलोम्ये च हेतुद्वारेणैव भविष्यति किमनयोर्ग्रहणेन । तस्मात् प्रतीतशक्तिके प्रसिद्ध एव हेतौ भवति नान्यत्र ॥१०२७।

[समीक्षा]

'यशस्करी, श्राद्धकरः, वचनकरः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ट' प्रत्यय का विधान किया गया है । पाणिनि ने विधि तथा निषेध के लिए पृथक् सूत्र बनाया है । अतः वहाँ दो सूत्र हैं — "कृञो हेतुताच्छील्यानुलोम्येषु, न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु" (अ० ३।२।२०, २३) । इस प्रकार सूत्रद्वयप्रयुक्त पाणिनीय गौरव के अतिरिक्त उभयत्र समानता ही है ।

[विशेष वचन]

१. प्रतीतशक्तिकं कारणं हेतुरिह गृह्यते (दु० वृ०) ।

२. ननु ताच्छील्यमिति किमर्थो भावप्रत्ययनिर्देशः ? ... वैचित्र्यार्थमेव (दु० टी०) ।

३. तद्ग्रहणं किमर्थम् ? प्रतिपत्तिगौरवनिरासार्थमेव (दु० टी०) ।

४. विद्याया यशस्करणे प्रतीता शक्तिः, क्वचिद् यशोऽकरणेऽपि टप्रत्ययोत्पत्तिविघातो न भवतीति (वि० प०) ।

५. न च वाच्यं हेतुग्रहणमनर्थकम् , विद्या यशस्करीति योग्यतायां चरितार्थत्वात् (क० च०) ।

[रूपसिद्धि]

१. **यशस्करी** विद्या । यशस् + कृ + ट + ई + सि । हेत्वर्थ के गम्यमान होने पर 'यशस्'- पूर्वक 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'ट' प्रत्यय, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से धातुघटित ऋकार को गुण, स्त्रीलिङ्ग में 'ई' प्रत्यय तथा विभक्तिकार्य ।

२. **श्राद्धकरः** । श्राद्ध + कृ + ट + सि । ताच्छील्य अर्थ में 'श्राद्ध'- पूर्वक 'कृ' धातु से 'ट' प्रत्यय आदि कार्य प्रायः पूर्ववत् ।

३. **वचनकरः** । वचन + कृ + ट + सि । आनुलोम्य अर्थ में 'वचन' पूर्वक 'कृ' धातु से 'ट' प्रत्यय आदि कार्य पूर्ववत् ॥१०२७।

## १०२८. तदाद्याद्यन्तानन्तकारबहुबाह्वहर्दिवाविभानिशाप्रभाभाश्चित्रकर्तृनान्दीकिंलिपिलिबिबलिभक्तिक्षेत्रजङ्घाधनुररुःसंख्यासु च [४।३।२३]

[सूत्रार्थ]

तदादि, आदि, अन्त, अनन्त, कार, बहु, बाहु, अहन् , दिवा, विभा, निशा,

प्रभा, भास् , चित्र, कर्तृ, नान्दी, किम् , लिपि, लिबि, बलि, भक्ति, क्षेत्र, जङ्घा, धनुस् , अरुस् एवं सङ्ख्यावाचक एक प्रभृति कर्म के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से 'ट' प्रत्यय होता है ।।१०२८।

**[दु० वृ०]**

अहेत्वाद्यर्थमिदम् । तदाद्यादिषु कर्मसूपपदेषु कृञष्टो भवति । तच्छब्दश्**छान्दसोऽयम्।** तत् करोतीति **तत्करः** । तस्करः **इति रूढित्वात्** तस्य सकारः । एवं यत्करः, आदिकरः, अन्तकरः, अनन्तकरः, कारकरः, बहुकरः, बाहुकरः, अहस्करः, दिवाकरः, विभाकरः, निशाकरः, प्रभाकरः, भास्करः, चित्रकरः, कर्तृकरः, नान्दीकरः, किङ्करः, लिपिकरः, लिबिकरः, बलिकरः, भक्तिकरः, क्षेत्रकरः, जङ्घाकरः, धनुष्करः, अरुष्करः, एककरः, द्विकरः, त्रिकरः, चतुष्करः । किंयत्तद्बहुषु स्त्रियामादेव कर्तव्यः । चकारात् 'रजनीकरः, क्षपाकरः, क्षणदाकरः' इत्यादयोऽप्यनुसर्तव्याः ।।१०२८।

**[दु० टी०]** —

तदा०। तदादिश्चेति। आदिश्च अन्तश्चेति द्वन्द्वः। अन्तग्रहणं ज्ञापयति —उपपदविधौ तदन्तता नास्तीति। 'अहस्करः, भास्करः' इत्यनव्ययविसृष्टत्वात् सकारः। 'धनुष्करः, चतुष्करः, अरुष्करः' इति, तत्रापिशब्दबलात् सिद्धम् । दिवादिशब्दोऽधिकरणप्रधानोऽव्ययः। दिवा दिवसे करोति प्राणिनश्चेष्टायुक्तान् इति **दिवाकरः।** किमित्यादि। **अन्यस्तु** स्त्रियाम् ईप्रत्ययः स्यादेवेति मन्यते। नात्र "**स्त्रियामादा**" (२।४।४९), नदादेराकृतिगणत्वादिति। तथा च जातिरिदानीं किङ्करी ते दृश्यते। चकारादित्यादि। अन्येष्वप्युपपदेष्वित्यर्थः। तदाद्यादिग्रहण**मविसंवादार्थम् ।** तदाद्यादिषु **सर्वदा हेत्वादिविवक्षा गरीयसीति** सूत्रम् ।।१०२८।

**[वि० प०]**

तदा० । त्यदादीति **केचित्** पठन्ति । तदयुक्तमित्याह — तच्छब्द इत्यादि । न खलु भाषायां त्यत्करः इति प्रयोगो दृश्यते इति । चतुष्करः इति । चतुरः करोतीति रेफविसर्गस्य "**अनव्ययविसृष्टस्तु सकारं कपवर्गयोः**" (२।५।२९) इति कृते तत्रापिग्रहणात् षत्वम् । एवं धनुष्करः इति ।।१०२८।

**[क० च०]**

तदा० । तदादिर्यस्येति **असौ तदादिः** भवन्तुपर्यन्तः । **'येन विधिस्तदन्तस्य'** (का० परि० ३) इति न्यायादन्तपाठेनैव सिद्धे किमनन्तपाठेन ? सत्यम् । अयमेव पाठो बोधयति **'विधौ तदन्तविधिर्नास्ति'** इति, तेन 'परमतत्करः' इत्यादिप्रयोगो न भवति। किंशब्दोऽयमसर्वनाम । त्यच्छब्द इति । ननु यदि **छान्दसोऽयं** त्यच्छब्दः पठ्यते, तदा कथं "**त्यदादीनाम विभक्तौ**" (२।३।२९) कर्मण्युपमाने इत्यादौ त्यद्शब्दः पठ्यते, इह **छान्दसस्याव्युत्पादनाद्** इत्याह — अयमिति, अयमपीति । अयं टप्रत्ययविषये उपपदभूत इत्यर्थः । अत एव **पञ्जिकायां** न खलु **भाषायां** त्यत्करः इति प्रयोगो दृश्यते। तथाहि अमीषामेव विस्मितप्रयोगः(?) । नान्दीकरः स्तुतिपाठकः। ननु 'चतुष्करः' इत्यादौ अन्तर्वर्तिनीं विभक्तिमाश्रित्य भिन्नपदत्वात् कथं षत्वम् इत्याह—

चतुर इति **पञ्जिका**। किंयत्तदित्यादि। यथा किङ्करा, यत्करा, तत्करा ॥१०२८।

[समीक्षा]

'दिवाकरः, निशाकरः, प्रभाकरः, नान्दीकरः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ट' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु" (अ० ३।२।२१) । अतः उभयत्र समानता ही है ।

[विशेष वचन]

१. तच्छब्दश्छान्दसोऽयम् (दु० वृ०) ।

२. चकाराद् 'रजनीकरः ........' इत्यादयोऽप्यनुसर्तव्याः (दु० वृ०) ।

३. तदाद्यादिग्रहणमविसंवादार्थम् (दु० टी०) ।

४. न खलु भाषायां त्यत्कर इति प्रयोगो दृश्यते (वि० प०) ।

५. किम् - शब्दोऽयमसर्वनाम (क० च०) ।

[रूपसिद्धि]

१. **तत्करः, तस्करः**। तत् + कृ + ट + सि । तत् करोति । 'तत्' शब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'ट' प्रत्यय, धातुघटित ऋकार को गुणादेश, रूढिवश तकार को सकारादेश तथा विभक्तिकार्य ।

२-३०. यत् आदि से लेकर चतुर् तक २९ शब्दों के उपपद में रहने पर 'कृ' धातु से 'ट' प्रत्यय होने पर 'यत्करः, आदिकरः, अन्तकरः, अनन्तकरः, कारकरः, बहुकरः, बाहुकरः, अहस्करः, दिवाकरः, विभाकरः, निशाकरः, प्रभाकरः, भास्करः, चित्रकरः, कर्तृकरः, नान्दीकरः, किङ्करः, लिपिकरः, लिबिकरः, बलिकरः, भक्तिकरः, क्षेत्रकरः, जङ्घाकरः, धनुष्करः, अरुष्करः, एककरः, द्विकरः, त्रिकरः, चतुष्करः' शब्दरूप सिद्ध होते हैं ॥१०२८।

## १०२९. भृतौ कर्मशब्दे [४।३।२४]

[सूत्रार्थ]

भृति = वेतन अर्थ के गम्यमान होने पर तथा कर्मकारक कर्मशब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से 'ट' प्रत्यय होता है ॥१०२९।

[दु० वृ०]

कर्मशब्दे कर्मण्युपपदे कृञष्टो भवति भृतौ गम्यमानायाम् । भृतिः कर्ममूल्यम् । कर्मकरो भृतकः, कर्मकरी दासी । भृताविति किम् ? कर्मकारः । शब्दग्रहणं प्रत्ययार्थः कर्म स्यादिति ॥१०२९।

[वि० प०]

भृतौ० । शब्देत्यादि । "**कर्तरि कृतः**" (४।६।४६) इत्यस्यापवादः । कर्मणि

टप्रत्ययः स्यादित्यर्थः ॥१०२९।

[क० च०]

भृतौ० । अथ सोपपदप्रस्तावात् प्रत्ययार्थो न भविष्यति ? सत्यम् । प्रत्ययोऽत्र द्वितीयाविभक्तिस्तस्यार्थः कर्मत्वम् , तच्च सञ्ज्ञेति । एतेन शब्दग्रहणेन **'स्वं रूपं शब्दस्याशब्दसंज्ञा'** (का० परि० २८) इत्यस्तीति सूचितम् ॥१०२९।

[समीक्षा]

'कर्मकरः, कर्मकरी' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'ट' प्रत्यय का विधान किया है। पाणिनि का सूत्र है — "कर्मणि भृतौ" (अ० ३।२।२२)। अतः उभयत्र समानता ही है ।

[विशेष वचन]

१. शब्दग्रहणं प्रत्ययार्थः कर्म स्यादिति (दु० वृ०) ।

[रूपसिद्धि]

१. **कर्मकरः, कर्मकरी** । कर्मन् + कृ + ट + सि । कर्म करोति । 'कर्मन्' शब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'ट' प्रत्यय, 'ट्' अनुबन्ध का प्रयोगाभाव, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से धातुघटित ऋकार को गुण तथा विभक्तिकार्य । स्त्रीलिङ्ग में 'ई' प्रत्यय 'कर्मकरी' ॥१०२९।

## १०३०. इः स्तम्बशकृतोः [४।३।२५]

[सूत्रार्थ]

'स्तम्ब-शकृत्' शब्दों के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से 'इ' प्रत्यय होता है ॥१०३०।

[दु० वृ०]

स्तम्बशकृतोः कर्मणोरुपपदयोः कृञ इर्भवति । स्तम्बकरिर्व्रीहिरेव । स्तम्बकारोऽन्यः। शकृत्करिर्वत्सः एवाभिधीयते । शकृत्कारोऽन्यः ॥१०३०।

[वि० प०]

इः । स्तम्बो विटपः । शकृत् विष्ठोच्यते ॥१०३०।

[समीक्षा]

'स्तम्बकरिः, शकृत्करिः' शब्दरूपों के सिद्ध्यर्थ पाणिनि ने 'इन्' तथा शर्ववर्मा ने 'इ' प्रत्यय किया है। पाणिनि का सूत्र है — "स्तम्बशकृतोरिन्" (अ० ३।२।२४)। अतः पाणिनीय नकार अनुबन्ध के अतिरिक्त उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **स्तम्बकरिः**। स्तम्ब + कृ + इ + सि । स्तम्बं करोति । 'स्तम्ब' शब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'इ' प्रत्यय, गुणादेश तथा विभक्तिकार्य ।

२. **शकृत्करिः**। शकृत् + कृ + इ + सि । शकृत् करोति । 'शकृत्' शब्द के

उपपद में रहने पर 'कृ' धातु से 'इ' प्रत्यय आदि कार्य पूर्ववत् ॥१०३०।

## १०३१. हरतेर्दृतिनाथयोः पशौ [४।३।२६]

[सूत्रार्थ]

पशु के कर्ता होने तथा 'दृति–नाथ' के उपपद में रहने पर 'हृ' धातु से 'इ' प्रत्यय होता है ॥१०३१।

[दु० वृ०]

दृतिनाथयोः कर्मणोरुपपदयोर्हरतेः पशौ कर्तरि इर्भवति । दृतिहरिः पशुः, नाथहरिः पशुः ॥१०३१।

[क० च०]

हरतेः । ननु पशुग्रहणं किमर्थम् । यथा "इः स्तम्बशकृतोः" (४।३।२५) इत्यत्र व्रीहिवत्सयोरेव, तथाऽत्रापि भविष्यति ? सत्यम् । उक्तार्थत्वेऽपि अस्य प्रयोगो यथा स्यादिति **कुलचन्द्रः** ॥१०३१।

[समीक्षा]

'दृतिहरिः, नाथहरिः' शब्दरूपों के सिद्ध्यर्थ पाणिनि ने 'इन्' प्रत्यय तथा शर्ववर्मा ने 'इ' प्रत्यय किया है । पाणिनि का सूत्र है — "हरतेर्दृतिनाथयोः पशौ" (अ० ३।२।२५) । अतः पाणिनीय नकारानुबन्ध को छोड़कर उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **दृतिहरिः**। दृति + हृ + इ + सि । दृतिं हरति । 'दृति' के उपपद में रहने पर 'हृञ् हरणे' (१।५९६) धातु से प्रकृत सूत्र द्वारा 'इ' प्रत्यय, गुणादेश तथा विभक्तिकार्य ।

२. **नाथहरिः**। नाथ + हृ + इ + सि । नाथं हरति । 'नाथ' शब्द के उपपद में रहने पर 'हृ' धातु से 'इ' प्रत्यय आदि कार्य पूर्ववत् ॥१०३१।

## १०३२. फले–मल–रजःसु ग्रहेः [४।३।२७]

[सूत्रार्थ]

'फले–मल–रजः' शब्दों के उपपद में रहने पर 'ग्रह' धातु से 'इ' प्रत्यय होता है ॥१०३२।

[दु० वृ०]

एषु कर्मसूपपदेषु ग्रहेरिर्भवति । फलानि गृह्णातीति **फलेग्रहिः** । सूत्रनिपातनादेत्वम्। मलं गृह्णातीति **मलग्रहिः** । रजो गृह्णातीति **रजोग्रहिः** ॥१०३२।

[दु० टी०]

फले० । फलेग्रहिर्वृक्ष एव रूढः ॥१०३२।

[क० च०]

फले० । फले इति न सप्तम्यन्तम् भिन्नपदं 'मलरजःसु' इत्यत्र द्विवचनप्रसङ्गाद् इत्याह — सूत्रनिपातनादिति ॥१०३२।

[समीक्षा]

पाणिनि ने केवल 'फलेग्रहिः' शब्द को इन्प्रत्ययान्त निपातन से सिद्ध किया है। उनका सूत्र है — ''फलेग्रहिरात्मम्भरिश्च'' (अ० ३।२।२६)। परन्तु कातन्त्रकार ने 'ग्रह्' धातु से इ-प्रत्यय करके तीन शब्द सिद्ध किए हैं। इस प्रकार व्यापकता की दृष्टि से कातन्त्र का उत्कर्ष सिद्ध होता है।

[रूपसिद्धि]

१. **फलेग्रहिः**। फल + ग्रह् + इ + सि। फलानि गृह्णाति। 'फल' शब्द के उपपद में रहने पर 'ग्रह उपादाने' (८।१४) धातु से प्रकृत सूत्र द्वारा 'इ' प्रत्यय, निपातन से 'फल' शब्द में एकार तथा विभक्तिकार्य।

२. **मलग्रहिः**। मल + ग्रह + इ + सि। मलं गृह्णाति। 'मल' शब्द के उपपद में रहने पर 'ग्रह्' धातु से 'इ' प्रत्यय आदि कार्य पूर्ववत्।

३. **रजोग्रहिः**। रजस् + ग्रह + इ + सि। रजो गृह्णाति। 'रजस्' शब्द के उपपद में रहने पर 'ग्रह्' धातु से 'इ' प्रत्यय आदि कार्य पूर्ववत्॥१०३२।

## १०३३. देववातयोरापेः [४।३।२८]

[सूत्रार्थ]

'देव-वात' कर्म के उपपद में रहने पर 'आप्लृ व्याप्तौ' (४।१४) धातु से 'इ' प्रत्यय होता है॥१०३३।

[दु० वृ०]

देववातयोः कर्मणोरुपपदयोराप्नोतेरिर्भवति। देवानाप्नोतीति **देवापिः**। वातानाप्नोतीति **वातापिः**। विशिष्ट एव रूढित्वात्॥१०३३।

[समीक्षा]

'देवापिः, वातापिः' शब्दों के सिद्ध्यर्थ पाणिनीय निर्देश प्राप्त नहीं है। अतः इन शब्दों की सिद्धि के लिए सूत्र बनाने पर कातन्त्र की यह विशेषता ही कही जाएगी।

[रूपसिद्धि]

१. **देवापिः**। देव + आप् + इ + सि। देवानाप्नोति। एक दानव का नाम। 'देव' शब्द के उपपद में रहने पर 'आप्लृ व्याप्तौ' (४।१४) धातु से प्रकृत सूत्र द्वारा 'इ' प्रत्यय, समानलक्षण दीर्घ तथा विभक्तिकार्य।

२. **वातापिः**। वात + आप् + इ + सि। वातानाप्नोति। एक दानव का नाम। 'वात' शब्द के उपपद में रहने पर 'आप्लृ' धातु से 'इ' प्रत्यय आदि कार्य पूर्ववत्॥१०३३।

## १०३४. आत्मोदरकुक्षिषु भृञः खिः [४।३।२९]

[सूत्रार्थ]

कर्म कारक में 'आत्मन् -उदर-कुक्षि' शब्दों के उपपद में रहने पर 'भृञ्' धातु से 'खि' प्रत्यय होता है॥१०३४।

[दु० वृ०]

एषु कर्मसूपपदेषु भृञः खिर्भवति । आत्मानमेव बिभर्तीति **आत्मम्भरिः**। एवम् उदरम्भरिः, कुक्षिम्भरिः ॥१०३४।

[दु० टी०]

आत्मो० । अवतक्ष्यादिवत् प्रयोगसामर्थ्यादवधारणार्थो गम्यते इति विग्रहेऽवधारणं दर्शितम् , एवं शेषयोरपि ॥१०३४।

[वि० प०]

आत्मो० । आत्मम्भरिरिति । "व्यञ्जनान्तस्य यत्सुभोः" (२।५।४) इत्यतिदेशबलात् नलोपे "ह्रस्वारुषोर्मोऽन्तः" (४।१।२२) इति मकारागमः । एवं शेषयोरपीति ॥१०३४।

[क० च०]

आ० । आत्मानं बिभर्त्तीत्युक्ते सर्वे एव आत्मम्भरिशब्दवाच्या भवितुमर्हन्ति, न हि कोऽपि आत्मनो भरणं न करोतीति ? सत्यम् । आत्मशब्दो नियमवचनपर इत्याह — आत्मानमेवेति ॥१०३४।

[समीक्षा]

'आत्मम्भरिः, कुक्षिम्भरिः, उदरम्भरिः' शब्दरूपों के सिद्ध्यर्थ दोनों व्याकरणों में आवश्यक विधान किया गया है । कातन्त्रकार ने सूत्र द्वारा 'खि' प्रत्यय तथा मुमागम किया है, जब कि पाणिनि निपातन से 'इन्' प्रत्यय तथा मुमागम करते हैं, उनका सूत्र है — "फलेग्रहिरात्मम्भरिश्च" (अ० ३।२।२६) । यह भी ज्ञातव्य है कि पाणिनि ने केवल 'आत्मम्भरिः' शब्द का पाठ किया है, 'कुक्षिम्भरिः, उदरम्भरिः' शब्दों की पूर्ति वृत्तिकार द्वारा की गई है — "अनुक्तसमुच्चयार्थश्चकारः-कुक्षिम्भरिः, उदरम्भरिः"। जबकि कातन्त्रकार ने तीनों ही शब्दों का पाठ सूत्र में कर दिया है । इस प्रकार कातन्त्रकार का वैशिष्ट्य सिद्ध होता है ।

[विशेष वचन]

१. आत्मशब्दो नियमवचनपर इत्याह — आत्मानमेवेति ॥

[रूपसिद्धि]

१. **आत्मम्भरिः**। आत्मन् + भृञ् + खि + सि । आत्मानमेव बिभर्ति । 'आत्मन्' शब्द के उपपद में रहने पर 'डु भृञ् धारणपोषणयोः' (२।८५) धातु से प्रकृत सूत्र द्वारा 'खि' प्रत्यय, "ह्रस्वारुषोर्मोऽन्तः" (४।१।२२) से मकारागम, गुणादेश तथा विभक्तिकार्य।

२. **उदरम्भरिः**। उदर + भृञ् + खि + सि । उदरमेव बिभर्ति । 'उदर' शब्द के उपपद में रहने पर 'भृ' धातु से 'खि' प्रत्यय आदि कार्य पूर्ववत् ।

३. **कुक्षिम्भरिः**। कुक्षि + भृञ् + खि + सि । कुक्षिमेव बिभर्ति । 'कुक्षि' शब्द के उपपद में रहने पर 'भृ' धातु से 'खि' प्रत्यय आदि पूर्ववत् ॥१०३४।

## १०३५. एजेः खश् [४।३।३०]

**[सूत्रार्थ]**

कर्मकारक के उपपद में रहने पर 'एजि' धातु से 'खश्' प्रत्यय होता है ॥१०३५।

**[दु० वृ०]**

कर्मण्युपपदे एजयतेः खश् भवति । अङ्गमेजयः, जनमेजयः । खानुबन्धान्मोऽन्तः शानुबन्धे सार्वधातुकत्वाद् विकरणे इनो गुणः स्यात् ॥१०३५।

**[दु० टी०]**

एजेः । **'एजृ कम्पने'** (१।७०) इत्ययमिनन्त इह गृह्यते। कथमेतत् खशः शानुबन्धकत्वाद् विकरणे सतीनो लोपाभाव इति तथोत्तरार्थं शानुबन्धकरणं तदुत्तरमादौ कृतं व्याख्यानतो वेन्ग्रहणम् ॥१०३५। —

**[समीक्षा]**

'अङ्गमेजयः, जनमेजयः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'खश्' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "एजेः खश्" (अ० ३।२।२८)। इस प्रकार उभयत्र समानता ही है ।

**[विशेष वचन]**

१. उत्तरार्थं शानुबन्धकरणम् (दु० टी०) ।

**[रूपसिद्धि]**

१. **अङ्गमेजयः** । अङ्ग + एजि + खश् + सि । अङ्गमेजयति । 'अङ्ग' शब्द के उपपद में रहने पर इन्प्रत्ययान्त 'एजृ कम्पने' (१।७०) धातु से प्रकृत सूत्र द्वारा 'खश्' प्रत्यय, 'ख्–श्' अनुबन्धों का प्रयोगाभाव, "अन् विकरणः कर्तरि" (३।२।३२) से 'अन्' विकरण, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से इकार को गुण, "ए अय्" (१।२।१२) से अयादेश, "ह्रस्वारुषोर्मोऽन्तः" (४।१।२२) से मकारागम तथा विभक्तिकार्य ।

२. **जनमेजयः** । जन + एजि + खश् + सि । जनमेजयति । 'जन' शब्द के उपपद में रहने पर 'एजि' धातु से 'खश्' प्रत्यय आदि पूर्ववत् ॥१०३५।

## १०३६. शुनीस्तनमुञ्जकूलास्यपुष्पेषु धेटः [४।३।३१]

**[सूत्रार्थ]**

'शुनी, स्तन, मुञ्ज, कूल, आस्य, पुष्प' शब्दों के उपपद में रहने पर 'धेट् पाने' (१।२६४) धातु से 'खश्' प्रत्यय होता है ॥१०३६।

[दु० वृ०]

एषु कर्मसूपपदेषु धेटः खश् भवति । शुनीं धयतीति **शुनिन्धयः,** स्तनौ धयतीति **स्तनन्धयः** । एवं मुञ्जन्धयः, कूलन्धयः, आस्यन्धयः, पुष्पन्धयः। मुञ्जादिषु **केचिन्नेच्छन्ति।** प्रकृतावानर्थक्याद् धेटष्टकारो **नदाद्यर्थो** विज्ञायते – शुनीन्धयी, स्तनन्धयी ॥१०३६।

**[दु० टी०]**

शुनी० । तिब्निर्देशे सति धाञोऽप्रसङ्गादित्याह —प्रकृतावित्यादि । अवयवे कृतं समुदायस्य विशेषकं भवति ॥१०३६।

**[वि० प०]**

शुनी० । शुनिन्धय इति "**दीर्घस्योपपदस्य**" (४।१।२०) इत्यादिना ह्रस्वे सति पूर्ववन्मोऽन्तः प्रकृतावित्यादि । 'धयः' इति निर्देशेऽपि नान्यस्य धातोः प्रसङ्गः ॥१०३६।

**[क० च०]**

शुनी० । प्रकृतावानर्थक्यादिति । एतेनावयवकृतं सिद्धं लिङ्गं समुदायस्य विशेषकमिति समर्थितम् ॥१०३६।

**[समीक्षा]**

'स्तनन्धयः, स्तनन्धयी' आदि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'खश्' प्रत्यय का विधान किया गया है । पाणिनि के दो सूत्र हैं — "नासिकास्तनयोर्ध्माधेटोः, नाडीमुष्ट्योश्च" (अ० ३।२।२९, ३०)। पाणिनि की अपेक्षा कातन्त्रकार ने अधिक शब्दों का पाठ किया है, अतः यह कातन्त्रीय विशेषता ही कही जाएगी ।

**[विशेष वचन]**

१. मुञ्जादिषु केचिन्नेच्छन्ति (दु० वृ०) ।

२. अवयवे कृतं समुदायस्य विशेषकं भवति (दु० टी०; क० च०) ।

**[रूपसिद्धि]**

१. **शुनिन्धयः** । शुनी + धेट् + खश् + सि । शुनीं धयति । 'शुनी' शब्द के उपपद में रहने पर 'धेट् पाने' (१।२६४) धातु से प्रकृत सूत्र द्वारा खश् प्रत्यय, "दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे" (४।१।२०) से ईकार को ह्रस्व, "ह्रस्वारुषोर्मोऽन्तः" (४।१।२२) से म्कारागम, गुण, अनुस्वार, परसवर्ण तथा विभक्तिकार्य ।

२. **स्तनन्धयः** । स्तन + धेट् + खश् + सि । स्तनौ धयति । 'स्तन' के उपपद में रहने पर 'धेट्' धातु से 'खश्' प्रत्यय आदि कार्य पूर्ववत् ।

३-६. **मुञ्जन्धयः** । मुञ्ज + धेट् + खश् + सि । **कूलन्धयः** । कूल + धेट् + खश् + सि । **आस्यन्धयः** । आस्य + धेट् + खश् + सि । **पुष्पन्धयः** । पुष्प + धेट् + खश् + सि । प्रक्रिया पूर्ववत् ॥१०३६।

## १०३७. नाडीकरमुष्टिपाणिनासिकासु ध्मश्च [४।३।३२]

**[सूत्रार्थ]**

'नाडी – कर – मुष्टि – पाणि – नासिका' के उपपद में रहने पर 'ध्मा शब्दाग्निसंयोगयोः, धेट् पाने' (१।२६६, २६४) धातुओं से 'खश्' प्रत्यय होता है ॥१०३७।

**[दु० वृ०]**

एषु कर्मसूपपदेषु धमतेर्धेटश्च खश् भवति । नाडिन्धमः, नाडिन्धयः । करन्धमः, करन्धयः। मुष्टिन्धमः, मुष्टिन्धयः । पाणिन्धमः, पाणिन्धयः । नासिकन्धमः, नासिकन्धयः। शुनीस्तनघटीखरीवातेषु धमतेरित्येके । शुनिन्धमः, स्तनन्धमः, घटिन्धमः, खरिन्धमः, वातन्धमः ॥१०३७।

**[दु० टी०]**

नाडी० । करो ध्मायतेऽस्मिन् पथीत्यधिकरणेऽपि कर्तरीत्येव भवतीत्यविशेषेणोदाहरणं स्थाली पचतीति यथा । एवं पाणिन्धमः पन्था इति ॥१०३७।

**[वि० प०]**

नाडी० । नाडिन्धमादिषु पूर्ववद् ह्रस्वत्वं सर्वत्र मोऽन्तश्च, शानुबन्धे सार्वधातुकत्वादनि विकरणे ध्मो धमश्चेति ॥१०३७।

**[समीक्षा]**

'नाडिन्धमः, नाडिन्धयः, नासिकन्धमः, नासिकन्धयः' आदि शब्दरूपों के सिद्ध्यर्थ दोनों आचार्यों ने 'खश्' प्रत्यय का विधान किया है । पाणिनि के दो सूत्र हैं — "नासिकास्तनयोर्ध्माधेटोः, नाडीमुष्ट्योश्च" (अ० ३।२।२९,३०) । पाणिनि की अपेक्षा कातन्त्रकार ने जो अधिक शब्दों का पाठ किया है, उससे कातन्त्र व्याकरण का वैशिष्ट्य ही सिद्ध होता है ।

**[रूपसिद्धि]**

१. **नाडिन्धमः** । नाडी + ध्मा + खश् + सि । नाडीं धमति । 'नाडी' शब्द के उपपद में रहने पर 'ध्मा शब्दाग्निसंयोगयोः' (१।२६६) धातु से प्रकृत सूत्र द्वारा 'खश्' प्रत्यय, अनुबन्धों का प्रयोगाभाव, "ध्मो धमश्च" (३।६।७२) से 'धम' आदेश, "दीर्घस्योपपदस्यानव्ययस्य०" (४।१।२०) से नाडीगत ईकार को ह्रस्व, "ह्रस्वारुषोर्मोऽन्तः" (४।१।२२) से मकारागम तथा विभक्तिकार्य ।

२. **नाडिन्धयः** । नाडी + धेट् + खश् + सि । नाडीं धयति । 'नाडी' शब्द के उपपद में रहने पर 'धेट् पाने' (१।२६४) धातु से प्रकृत सूत्र द्वारा 'खश्' प्रत्यय, अनुबन्धों का प्रयोगाभाव, ह्रस्व, मकारागम, एकार को अयादेश तथा विभक्तिकार्य।

३-१०. **करन्धमः** । कर + ध्मा + खश् + सि । **करन्धयः** । कर + धेट् +

खश् + सि । **मुष्टिन्धमः**। मुष्टि + ध्मा + खश् + सि । **मुष्टिन्धयः** । मुष्टि + धेट् + खश् + सि । **पाणिन्धमः** । पाणि + ध्मा + खश् + सि । **पाणिन्धयः** । पाणि + धेट् + खश् + सि । **नासिकन्धमः** । नासिका + ध्मा + खश् + सि । **नासिकन्धयः** । नासिका + धेट् + खश् + सि । प्रक्रिया पूर्ववत् ॥१०३७।

## १०३८. विध्वरुस्तिलेषु तुदः [४।३।३३]

**[सूत्रार्थ]**

कर्म कारक में 'विधु – अरुस् – तिल' शब्दों के उपपद में रहने पर 'तुद व्यथने' (५।१) धातु से 'खश्' प्रत्यय होता है ॥१०३८।

**[दु० वृ०]**

एषु कर्मसूपपदेषु तुदतेः खश् भवति । विधुन्तुदः, अरुन्तुदः, तिलन्तुदः ॥१०३८।

**[वि० प०]**

विध्वरु० । अरुन्तुदः इति । पूर्ववन्मोऽन्तत्वे "संयोगादेर्धुटः" (२।३।५५) इति सलोपः ॥१०३८।

**[क० च०]**

विध्वरु० । अरुःशब्देन मर्म उच्यते ॥१०३८।

**[समीक्षा]**

'विधुन्तुदः, अरुन्तुदः' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'खश्' - प्रत्यय किया गया है । पाणिनि का सूत्र है – "विध्वरुषोस्तुदः" (अ० ३।२।३५) । यहाँ कातन्त्रकार ने 'तिल' शब्द का अधिक पाठ करके कातन्त्र का उत्कर्ष सिद्ध किया है ।

**[रूपसिद्धि]**

१. **विधुन्तुदः** । विधु + तुद् + खश् + सि । विधुं तुदति । 'विधु' के उपपद में रहने पर 'तुद व्यथने' (५।१) धातु से प्रकृत सूत्र द्वारा 'खश्' प्रत्यय, 'ख् - श्' अनुबन्धों का प्रयोगाभाव, मकारागम तथा विभक्तिकार्य ।

२-३. **अरुन्तुदः** । अरुस् + तुद् + खश् + सि । **तिलन्तुदः** । तिल + तुद् + खश् + सि । प्रक्रिया पूर्ववत् ॥१०३८।

## १०३९. असूर्योग्रयोर्दृशः [४।३।३४]

**[सूत्रार्थ]**

कर्म कारक में 'असूर्य - उग्र' शब्दों के उपपद में रहने पर 'दृशिर् प्रेक्षणे' (१।२८९) धातु से 'खश्' प्रत्यय होता है ॥१०३९।

[दु० वृ०]

असूर्योग्रयोः कर्मणोरुपपदयोर्दृशः खश् भवति । न सूर्यं पश्यन्तीति **असूर्यम्पश्यानि** मुखानि, असूर्यम्पश्या राजदाराः । सूर्यमपि न पश्यन्तीत्यर्थः । दृशिना सह संबद्धस्य नञ् सूर्येण सह समासो गमकत्वात् । उग्रम्पश्यः ॥१०३९।

[दु० टी०]

असू० । सूर्यादन्योऽसूर्यः इति नाश्रीयते । गुप्तिपरं ह्येतत् सूर्यदर्शनप्रतिषेधेन दृष्टेरेव प्रतिषेधाख्यानात् । एवं नाम राजदाराणां गुप्तानि मुखानि यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्तीत्यसूर्यमपीत्यादि ॥१०३९।

[वि० प०]

असूर्य० । असूर्यमित्यादि । न तु सूर्यादन्योऽसूर्यस्तं पश्यन्तीति गुप्तिप्रधानत्वादस्य वाक्यस्य । सूर्यदर्शनप्रतिषेधेन हि अन्येषामेव दर्शनप्रतिषेध आख्यायते । एवं नाम सुगुप्तानि राजदाराणां मुखानि, येनापरिहार्यदर्शनं सूर्यमपि न पश्यन्तीत्यर्थः । न सूर्येण सह नञः सम्बन्ध इत्याह — दृशिनेत्यादि ॥१०३९।

[क० च०]

असूर्य० । अथ न सूर्योऽसूर्य इति सूर्यभिन्नो देवदत्तादिस्तं न पश्यन्ति, उत वाऽन्यत् , नैवम् । गुप्तिप्रधानोऽयं वाक्यार्थः, न तु पर्युदासः, किं तर्हि प्रसज्यवृत्तिरित्याह – सूर्यमपीति । अथ प्रसज्यनञः क्रियया सह सम्बन्धे सति युक्तार्थत्वाभावात् कथं समासः ? तथा चोक्तम् —

**अप्राधान्यं विधेर्यत्र निषेधस्य प्रधानता ।**
**प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् ।।**

इत्याह — दृशीत्यादि । गमकत्वाद् बोधकत्वादभिधानाद् इति यावत् । अथ "**अकर्तरि च कारके संज्ञायाम्**" (४।५।४) इत्यत्र कारकग्रहणं प्रसज्यनञ्समासज्ञापनार्थमित्युक्तम् । तत् कथमभिधानमाश्रीयते ? सत्यम् । तत्रापि गमकत्वमाश्रित्य सुखार्थं कारकग्रहणमित्युक्तमस्ति । अत्रापि तदेवोच्यते ॥१०३९।

[समीक्षा]

'असूर्यम्पश्या, उग्रम्पश्यः' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में खश् (निपातन भी ) प्रत्यय का विधान किया गया है । पाणिनि के दो सूत्र हैं — "असूर्यललाटयोर्दृशितपोः, उग्रम्पश्येरम्मदपाणिन्धमाश्च" (अ० ३।२।३६, ३७) । यहाँ यह ज्ञातव्य है कि पाणिनि ने एक शब्द से खश् प्रत्यय किया है तथा दूसरे शब्द की सिद्धि निपातनविधि से की है । जबकि कातन्त्र में दोनों ही शब्द एक सूत्र द्वारा खश् प्रत्यय से सिद्ध किए गए हैं । इससे कातन्त्रीय वैशिष्ट्य सिद्ध होता है ।

[विशेष वचन]

१. दृशिना सह सम्बद्धस्य नञः सूर्येण सह समासो गमकत्वात् (दु० वृ०) ।

२. एवं नाम राजदाराणां गुप्तानि मुख्यानि यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति (दु० टी०) ।

३. तत्रापि गमकत्वमाश्रित्य सुखार्थं कारकग्रहणम् (क० च०) ।

[रूपसिद्धि]

१. **असूर्यम्पश्यानि** मुखानि, **असूर्यम्पश्या** राजदाराः । असूर्य + दृशिर् + खश् + जस् । न सूर्यम्पश्यन्तीति । 'असूर्य' शब्द के उपपद में रहने पर 'दृशिर् प्रेक्षणे' (१।२८९) धातु से प्रकृत सूत्र द्वारा 'खश्' प्रत्यय, "दृशेः पश्यः" (३।६।७६) से 'दृश्' को 'पश्य' आदेश, मकारागम तथा विभक्तिकार्य ।

२. **उग्रम्पश्यः**। उग्र + दृशिर् + खश् + सि । उग्रम् पश्यति । 'उग्र' शब्द के उपप्द में रहने पर 'दृश' धातु से 'खश्' प्रत्यय आदि कार्य पूर्ववत् ॥१०३९।

## १०४०. ललाटे तपः [४।३।३५]

[सूत्रार्थ]

कर्म कारक में 'ललाट' शब्द के उपपद में रहने पर 'तप सन्तापे' (१।१३३) धातु से 'खश्' प्रत्यय होता है ॥१०४०।

[दु० वृ०]

ललाटे कर्मण्युपपदे तपतेः खश् भवति । ललाटं तपतीति **ललाटन्तपः** ॥१०४०।

[समीक्षा]

'ललाटन्तपः' शब्द के सिद्ध्यर्थ दोनों ही आचार्यों ने 'खश्' प्रत्यय का विधान किया है । पाणिनि का सूत्र है — "असूर्यललाटयोर्दृशितपोः" (अ० ३।२।३६) । अतः प्रायः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **ललाटन्तपः** । ललाट + तप + खश् + सि । ललाटं तपति । 'ललाट' शब्द के उपपद में रहने पर 'तप सन्तापे' (१।१३३) धातु से प्रकृत सूत्र द्वारा 'खश्' प्रत्यय, मकारागम तथा विभक्तिकार्य ॥१०४०।

## १०४१. मितनखपरिमाणेषु पचः [४।३।३६]

[सूत्रार्थ]

कर्म कारक में 'मित-नख-परिमाण' शब्दों के उपपद में रहने पर 'डु पचष् पाके' (१।६०३) धातु से 'खश्' प्रत्यय होता है ॥१०४१।

[दु० वृ०]

एषु कर्मसूपपदेषु पचतेः खश् भवति । मितम्पचा ब्राह्मणी, नखम्पचा यवागूः,

प्रस्थम्पचो माणवकः, द्रोणम्पचा स्थाली । प्रस्थादय एव परिमाणान्यत्राभिधीयन्ते, न कालः संख्या च । तेन मासम्पचति, एकम्पचतीति वाक्यमेव ॥१०४१।

**[समीक्षा]**

'मितम्पचा, नखम्पचा, प्रस्थम्पचा' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'खश्' प्रत्यय का विधान किया गया है । पाणिनि के दो सूत्र हैं — "परिमाणे पचः, मितनखे च" (अ० ३।२।३३, ३४) । इस प्रकार प्रत्ययसाम्य होते हुए भी पाणिनीय व्याकरण में सूत्रद्वयप्रयुक्त गौरव स्पष्ट है, जबकि कातन्त्रकार ने तीनों शब्दों का पाठ एक ही सूत्र में करके लाघव दिखाया है ।

**[रूपसिद्धि]**

१. **मितम्पचा** ब्राह्मणी । मित + पच् + खश् + आ + सि । मितं पचति । 'मित' शब्द के उपपद में रहने पर 'डु पचष् पाके' (१।६०३) धातु से प्रकृत सूत्र द्वारा 'खश्' प्रत्यय, "ह्रस्वारुषोर्मोऽन्तः" (४।१।२२) से मकारागम, स्त्रीलिङ्ग में 'आ' प्रत्यय, समान-दीर्घ तथा विभक्तिकार्य ।

२. **नखम्पचा** यवागूः । नख + पच् + खश् - आ + सि । नखं पचति । 'नख' शब्द के उपपद में रहने पर 'पच्' धातु से 'खश्' प्रत्यय आदि कार्य पूर्ववत् ।

३-४. **प्रस्थम्पचो** माणवकः । प्रस्थ + पच् + खश् + सि । प्रस्थं पचति । **द्रोणम्पचा** स्थाली । द्रोण + पच् + खश् + आ + सि । द्रोणम् पचति । 'प्रस्थ–द्रोण' शब्दों के उपपद में रहने पर 'पच्' धातु से 'खश्' प्रत्यय आदि कार्य पूर्ववत् ॥१०४१।

## १०४२. कूल उद्रुजोद्वहोः [४।३।३७]

**[सूत्रार्थ]**

'कूल' शब्द के उपपद में रहने पर 'उद्' उपसर्गपूर्वक 'रुजो भङ्गे' (५।५२) तथा 'वह प्रापणे' (१।६१०) धातुओं से 'खश्' प्रत्यय होता है ॥१०४२।

**[दु० वृ०]**

कूले कर्मण्युपपदे उद्रुजोद्वहोः खश् भवति । कूलमुद्रुजा नदी, कूलमुद्वहः समुद्रः ॥१०४२।

**[क० च०]**

कूल० । उदि रुजोद्वहोरित्युपपदे कूले कर्तरीत्यर्थः स्यादिति **हेमः**॥१०४२।

**[समीक्षा]**

'कूलमुद्रुजा नदी, कूलमुद्वहः समुद्रः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'खश्' प्रत्यय किया गया है । पाणिनि का सूत्र है — "उदि कूले रुजिवहोः" (अ० ३।२।३१) । अतः उभयत्र समानता ही है ।

**[रूपसिद्धि]**

१. **कूलमुद्रुजा** नदी । कूल + उद् + रुज् + खश् + आ + सि । 'कूल' शब्द के उपपद में रहने पर 'उद्' उपसर्गपूर्वक 'रुजो भङ्गे' (५।५२) धातु से प्रकृत सूत्र द्वारा

'खश्' प्रत्यय, मकारागम, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य ।

२. **कूलमुद्वहः** समुद्रः । कूल + उद् + वह् + खश् + सि । 'कूल' शब्द के उपपद में रहने पर 'उद्' उपसर्गपूर्वक 'वह प्रापणे' (१।६१०) धातु से खश् प्रत्यय आदि कार्य पूर्ववत् ॥१०४२।

## १०४३. वहंलिहाभ्रंलिहपरन्तपेरम्मदाश्च [४।३।३८]

[सूत्रार्थ]

'वहंलिह – अभ्रंलिह – परन्तप – इरंम्मद' शब्द खश्-प्रत्ययान्त निपातन से सिद्ध होते हैं ॥१०४३।

[दु० वृ०]

एते खश्प्रत्ययान्ता निपात्यन्ते । वहंलिहा गौः । अभ्रंलिहो वायुः । परन्तापयतीति **परन्तपः** शक्रः । इरया माद्यतीति **इरम्मदो** हस्ती । चकारात् — वातमजन्तीति **वातमजा** मृगाः । शर्धं जहतीति **शर्धञ्जहा** माषाः ॥१०४३।

[क० च०]

वहं०। 'स्कन्धप्रदेशस्तु वहः' **इत्यमरः** । इरया मदिरया, शर्धो वायुरिति ॥१०४३।

[समीक्षा]

'वहंलिह - अभ्रंलिह - परन्तप - इरम्मद' शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में प्रत्ययविधान किया गया है । इन चार शब्दों को पाणिनि ने ३ सूत्रों में पढ़ा है — "वहाभ्रे लिहः, उग्रम्पश्येरम्मदपाणिन्धमाश्च, द्विषत्परयोस्तापेः" (अ० ३।२।३२, ३७, ३९) । इनके अनुसार 'वहंलिह – अभ्रंलिह' शब्दों में 'खश्' प्रत्यय, 'परन्तप' शब्द में 'खच्' प्रत्यय होता है तथा 'इंरम्मद' शब्द निपातन से सिद्ध होता है । यहाँ जो भेद परिलक्षित होता है, वह प्रायः अपने-अपने व्याकरण की प्रक्रिया के अनुसार है। अतः प्रायः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **वहंलिहा गौः**। वहम् + लिह् + खश् + आ + सि । वहं लेढि । 'वह' शब्द के उपपद में रहने पर 'लिह आस्वादने' (२।६३) धातु से 'खश्' प्रत्यय, मकारागम, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य ।

२. **अभ्रंलिहो वायुः**। अभ्रम् + लिह् + खश् + सि । अभ्रं लेढि । 'अभ्र' के उपपद में रहने पर 'लिह्' धातु से निपातनविधि पूर्ववत् ।

३. **परन्तपः** शक्रः। परम् + तापि + सि । परन्तापयति । 'पर' शब्द के उपपद में रहने पर इन्प्रत्ययान्त 'तप सन्तापे' (१।१३३) धातु से निपातनविधि प्रायः पूर्ववत्।

४. **इरम्मदो** हस्ती । इरा + मदी + खश् + सि । इरया माद्यति । 'इरा' शब्द के उपपद में रहने पर 'मदी हर्षे' (३।४८) धातु से निपातनविधि पूर्ववत् ॥१०४३।

## १०४४. वदेः खः प्रियवशयोः [४।३।३९]

**[सूत्रार्थ]**

कर्मकारक में 'प्रिय – वश' शब्दों के उपपद में रहने पर 'वद व्यक्तायां वाचि' (१।६१५) धातु से 'ख' प्रत्यय होता है ॥१०४४।

**[दु० वृ०]**

प्रियवशयोः कर्मणोरुपपदयोर्वदेः खो भवति । प्रियंवदः, वशंवदः । **उत्तरार्थमिह प्रक्रियालाघवार्थं** च खः क्रियते ॥१०४४।

**[वि० प०]**

वदेः । अधिकृतेन खशैव सिध्यतीत्याह — उत्तरार्थमिति । अन्यथा खशः सार्वधातुकत्वाद् उत्तरत्र कृञस्तनादेरुः स्यात् । इह चासन्ध्यक्षरविधिना **प्रक्रियागौरवं** स्यादिति भावः ॥१०४४।

**[समीक्षा]**

'प्रियंवदः, वशंवदः' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ख–खच्' प्रत्ययों का विधान किया गया है । पाणिनि का सूत्र है — "प्रियवशे वदः खच्" (अ० ३।२।३८) । अनुबन्धयोजना अपने-अपने व्याकरण की प्रक्रिया पर आधारित है । अतः प्रायः उभयत्र समानता ही है ।

**[रूपसिद्धि]**

१. **प्रियंवदः**। प्रिय + वद् + ख + सि । प्रियं वदति । 'प्रिय' शब्द के उपपद में रहने पर 'वद व्यक्तायां वाचि' (१।६१५) धातु से प्रकृत सूत्र द्वारा 'ख' प्रत्यय, 'ख्' अनुबन्ध का प्रयोगाभाव, मकारागम, अनुस्वारादेश तथा विभक्तिकार्य ।

२. **वशंवदः**। वश + वद् + ख + सि । वशं वदति । 'वश' शब्द के उपपद में रहने पर 'वद्' धातु से 'ख' प्रत्यय आदि कार्य पूर्ववत् ॥१०४४।

## १०४५. सर्वकूलाभ्रकरीषेषु कषः [४।३।४०]

**[सूत्रार्थ]**

'सर्व, कूल, अभ्र' तथा 'करीष' शब्द के उपपद में रहने पर 'कष्' धातु से 'ख' प्रत्यय होता है ॥१०४५।

**[दु० वृ०]**

एषु कर्मसूपपदेषु कषतेः खो भवति । सर्वङ्कषः खलः । कूलङ्कषा नदी । अभ्रङ्कषो गिरिः । करीषङ्कषा वात्या ॥१०४५।

**[क० च०]**

सर्व०। वात्या वातसमूहः॥१०४५।

[समीक्षा]

'सर्वङ्कषः, कूलङ्कषा' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ख-खच्' प्रत्यय किए गए हैं । पाणिनि का सूत्र है — "सर्वकूलाभ्रकरीषेषु कषः" (अ० ३।२।४२) । भिन्न अनुबन्धयोजना के अतिरिक्त उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **सर्वङ्कषः** खलः। सर्व + कष् + ख + सि । सर्वं कषति । 'सर्व' शब्द के उपपद में रहने पर 'कष हिंसार्थः' (१।२२४) धातु से प्रकृत सूत्र द्वारा 'ख' प्रत्यय, मकारागम, अनुस्वार, ङकारादेश तथा विभक्तिकार्य ।

२-४. **कूलङ्कषा** नदी । कूल + कष् + ख + आ + सि । कूलं कषति । **अभ्रङ्कषो** गिरिः । अभ्र + कष् + ख + सि । अभ्रं कषति । **करीषङ्कषा** वात्या । करीष + कष् + ख + आ + सि । करीषान् कषति । प्रक्रिया पूर्ववत् ॥१०४५।

## १०४६. भयर्तिमेघेषु कृञः [४।३।४१]

[सूत्रार्थ]

कर्म कारक में 'भय-ऋति-मेघ' शब्दों के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से 'ख' प्रत्यय होता है ॥१०४६।

[दु० वृ०]

एषु कर्मसूपपदेषु कृञः खो भवति । भयङ्करः, अभयङ्करः । भयेन तदन्तविधिरिष्टः। ऋतिङ्करः, मेघङ्करः ॥१०४६।

[क० च०]

भय० । भयेनेति । यद्युपपदविधौ तदन्तता नास्ति अन्तग्रहणादुक्तम् , तथाप्यत्रेष्यत इति ॥१०४६।

[समीक्षा]

'भयङ्करः, मेघङ्करः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में ख-खच् प्रत्यय किए गए हैं। पाणिनि का सूत्र है — "मेघर्तिभयेषु कृञः" (अ० ३।२।४२)। अतः उभयत्र प्रायः समानता ही है ।

[रूपसिद्धि]

१-२. **भयङ्करः, अभयङ्करः**। भय-अभय + कृ + ख + सि । भयम् , अभयं करोति। 'भय-अभय' शब्दों के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'ख' प्रत्यय, मकारागम, अनुस्वार, ऋकार को गुण तथा विभक्तिकार्य।

३. **ऋतिङ्करः**। ऋति + कृ + ख + सि । ऋतिं करोति । 'ऋति' शब्द के उपपद में रहने पर 'कृ' धातु से 'ख' प्रत्यय आदि पूर्ववत् ।

४. **मेघङ्करः**। मेघ + कृ + ख + सि । मेघं करोति । 'मेघ' शब्द के उपपद में रहने पर 'कृ' धातु से 'ख' प्रत्यय आदि कार्य पूर्ववत् ॥१०४६।

## १०४७. क्षेमप्रियमद्रेष्वण् च [४।३।४२]

[सूत्रार्थ]

कर्म कारक मे 'क्षेम-प्रिय-मद्र' शब्दों के उपपद में रहने पर 'ख' तथा 'अण्' प्रत्यय होता है ॥१०४७।

[दु० वृ०]

एषु कर्मसूपपदेषु कृञः खो भवति अण् च । क्षेमङ्करः, क्षेमकारः। प्रियङ्करः, प्रियकारः । मद्रङ्करः, मद्रकारः । वेति सिद्धेऽण्ग्रहणं हेत्वादिष्वपि **टबाधनार्थम्** । एष्विति किम् ? भद्रकारः ॥१०४७।

[वि० प०]

क्षेम०। कर्मण्युप्पदे पक्षेऽण् भविष्यति । वाग्रहणे तु चकारो न कर्तव्यो भवतीत्याह — वेत्यादि । तेन 'क्षेमकारः' इति हेत्वाद्यर्थ**विवक्षाया**मपि न टो भविष्यतीत्यर्थः ॥१०४७।

[क० च०]

क्षेम० । वेत्तीति । ननु वाग्रहणे कृते उत्तरत्र वाऽधिकारः कथं न स्यात् , तर्हि **भवन्मते**ऽणधिकारः कथन्न स्यात् । नैवम्, अन्यत्र कर्मण्युपपदे दर्शनात् । अत्रापि तदेव कल्प्यते, दृष्टपरिकल्पनावशाच्चकारसम्बन्धाद् वा समुदायगौणत्वम् ? सत्यम् , **अधिकारस्येष्टविषयत्वाद्** वा न वर्तते ॥१०४७।

[समीक्षा]

'क्षेमङ्करः, क्षेमकारः' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ख (खच्)-अण्' प्रत्ययों का विधान किया गया है । पाणिनि का सूत्र है — "क्षेमप्रियमद्रेऽण् च" (अ० ३।२।४४) । अतः उभयत्र प्रायः समानता ही है ।

[रूपसिद्धि]

१. **क्षेमङ्करः, क्षेमकारः**। क्षेम + कृ + ख, अण् + सि । क्षेमं करोति । 'क्षेम' शब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'ख-अण्' प्रत्यय, क्रमशः गुण - वृद्धि, मकारागम तथा विभक्तिकार्य ।

२. **प्रियङ्करः, प्रियकारः**। प्रिय + कृ + ख, अण् + सि । प्रियं करोति । 'प्रिय' शब्द के उपपद में रहने पर 'कृ' धातु से 'ख - अण्' प्रत्यय आदि कार्य पूर्ववत् ।

३. **मद्रङ्करः, मद्रकारः**। मद्र + कृ + ख, अण् + सि । मद्रं करोति । 'मद्र' शब्द के उपपद में रहने पर 'कृ' धातु से 'ख-अण्' प्रत्यय आदि कार्य पूर्ववत् ॥१०४७।

## १०४८. भावकरणयोस्त्वाशिते भुवः [४।३।४३]

[सूत्रार्थ]

'आशित' शब्द के उपपद में रहने पर भाव तथा करण अर्थ में 'भू सत्तायाम्' (१।१) धातु से 'ख' प्रत्यय होता है ॥१०४८।

[दु० वृ०]

आशितशब्दोपपदे भावे करणे च भवतेः खो भवति । आशनम् आशितम्। आशितस्य भवनम् **आशितम्भवम्।** आशितं भवत्यनया **आशितम्भवा** पञ्चपूली ॥१०४८।

[दु० टी०]

भाव० । आशिरयमिनन्तत्वादाहारार्थे इति कर्मणि क्त इत्येके । तदसत् , भाव एव क्तोऽयमाशिराङ्पूर्वो वा विशेषाविवक्षायाम् आशितम्भवा पञ्चपूली छात्रस्येति सम्बन्धमात्रप्रतीतेः । आशितम् भवत्यनया पञ्चपूल्या आशितस्य भवनं वेति तत्राशनमेव प्रतिपाद्यम् इति भावः । खान्तं स्वभावाद् भावे नपुंसकमित्याह–आशनमित्यादि । अलुघञोरयमपवादः ॥१०४८।

[वि० प०]

भाव० । आशनमाशितमिति । 'अश भोजने' (८।४३) । आङ्पूर्वो भावे क्तः । भावे क्तान्तस्य स्वभावान्नपुंसकत्वम् ॥१०४८।

[समीक्षा]

'आशितम्भवम्, आशितम्भवा पञ्चपूली' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ख–खच्' प्रत्ययों का विधान किया गया है । पाणिनि का सूत्र है — "आशिते भुवः करणभावयोः" (अ० ३।२।४५) । अतः अनुबन्धभेद को छोड़कर उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **आशितम्भवम्** । आशित + भू + ख + सि । आशितस्य भवनम् । 'भाव' अर्थ में 'आशित' शब्द के उपपद में रहने पर 'भू सत्तायाम्' (१।१) धातु से प्रकृत सूत्र द्वारा 'ख' प्रत्यय, 'ख्' अनुबन्ध का प्रयोगाभाव, "ह्रस्वारुषोर्मोऽन्तः" (४।१।२२) से मकारागम, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से धातुघटित ऊकार को गुण, अवादेश तथा विभक्तिकार्य ।

२. **आशितम्भवा** पञ्चपूली । आशित + भू + आ + सि । आशितं भवत्यनया। 'करण' अर्थ की विवक्षा में 'आशित' शब्द के उपपद में रहने पर 'भू' धातु से प्रकृत सूत्र द्वारा 'ख' प्रत्यय आदि कार्य प्रायः पूर्ववत् ॥१०४८।

## १०४९. नाम्नि तृभृवृजिधारितपिदमिसहां सञ्ज्ञायाम् [४।३।४४]

[सूत्रार्थ]

नाम के उपपद में रहने पर सञ्ज्ञा के गम्यमान होने की स्थिति में 'तॄ, भृ, वृ, जि, धारि, तप्, दम्' तथा सह धातुओं से 'ख' प्रत्यय होता है ॥१०४९।

[दु० वृ०]

नाम्न्युपपदे एभ्यः सञ्ज्ञायां गम्यमानायां खो भवति । रथेन तरतीति **रथन्तरं** साम । विश्वं बिभर्त्तीति **विश्वम्भरा अवनिः**। पतिं वृणीते **पतिंवरा** कन्या । धनं जितवान् **धनञ्जयोऽर्जुनः** । वसु धारयतीति **वसुन्धरा** पृथ्वी । **अभिधानाद्** ह्रस्वः । शत्रून् तपतीति **शत्रुन्तपः**। अरीन् दाम्यति दमयति वा **अरिन्दमः**। **सर्वं** सहते **सर्वंसहा**। नाम कर्म च यथासम्भवं सञ्ज्ञात्वाद् गम्यते । नाम्नीति **सुखार्थम्** ॥१०४९।

[दु० टी०]

नाम्नि० । नामोपपदं कर्मोपपदं यथाभिधानं सम्बध्यते इत्याह – नामेत्यादि ॥१०४९।

[क० च०]

नाम्नि० । शत्रुं तपतीति अन्तर्भूतेनर्थत्वात् सकर्मकत्वम् ॥१०४९।

[समीक्षा]

'रथन्तरम् , विश्वम्भरा' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'ख–खच्' प्रत्यय किए हैं । पाणिनि का सूत्र है — "सञ्ज्ञायां भृतृवृजिधारिसहितपिदमः" (अ० ३।२।४६) । अतः अनुबन्धभेद को छोड़कर उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **रथन्तरं** साम । रथ + तृ + ख + सि । रथेन तरति । 'रथ' शब्द के उपपद में रहने पर 'तृ प्लवनतरणयोः' (१।२८३) धातु से प्रकृत सूत्र द्वारा 'ख' प्रत्यय, मकारागम, "मनोरनुस्वारो धुटि" (२।४।४४) से अनुस्वार, "वर्गे वर्गान्तः" (२।४।४५) से नकारादेश, गुण तथा विभक्तिकार्य ।

२. **विश्वम्भरा** अवनिः । विश्व + भृ + ख + आ + सि । विश्वं बिभर्ति । 'विश्व' शब्द के उपपद में रहने पर 'डु भृञ् धारणपोषणयोः' (२।८५) धातु से 'ख' प्रत्यय आदि कार्य पूर्ववत् ।

३. **पतिंवरा** कन्या । पति + वृ + ख + आ + सि । पतिं वृणीते । 'पति' शब्द के उपपद में रहने पर 'वृङ् सम्भक्तौ' (८।५१) धातु से 'ख' प्रत्यय आदि कार्य पूर्ववत् ।

४. **धनञ्जयोऽर्जुनः** । धन + जि + ख + सि । धनं जितवान् । 'धन' शब्द के उपपद में रहने पर 'जि जये' (१।१९१) धातु से 'ख' प्रत्यय आदि कार्य पूर्ववत् ।

५. **वसुन्धरा** पृथ्वी । वसु + धृ + ख + आ + सि । वसु धारयति । 'वसु' शब्द के उपपद में रहने पर 'धृञ् धारणे' (१।५९९) धातु से 'ख' प्रत्यय आदि कार्य पूर्ववत्।

६. **शत्रुन्तपः**। शत्रु + तप + ख + सि । शत्रूंस्तपति । 'शत्रु' शब्द के उपपद में रहने पर 'तप सन्तापे' (१।१३३) धातु से 'ख' प्रत्यय आदि कार्य पूर्ववत् ।

७. **अरिन्दमः**। अरि + दम् + ख + सि । अरीन् दाम्यति दमयति वा । 'अरि' शब्द के उपपद में रहने पर 'दमु उपशमे' (३।४२) धातु से 'ख' प्रत्यय आदि कार्य

पूर्ववत् ।

८. **सर्वंसहा** । सर्व + सह् + ख + आ + सि । सर्वं सहते । 'सर्व' शब्द के उपपद में रहने पर 'षह मर्षणे' (१।५६०) धातु से 'ख' प्रत्यय आदि कार्य पूर्ववत् ॥१०४९।

## १०५०. गमश्च [४।३।४५]

**[सूत्रार्थ]**

नाम के उपपद में रहने पर सञ्ज्ञा के गम्यमान होने की स्थिति में 'गम्' धातु से 'ख' प्रत्यय होता है ॥ १०५०।

**[दु० वृ०]**

नाम्न्युपपदे गमश्च खो भवति संज्ञायां गम्यमानायाम् । सुतङ्गमः, ऋतङ्गमः । भुजाभ्यां गच्छतीति **भुजङ्गमः**। मितं गच्छतीति **मितङ्गमो** हस्ती । **पूर्वङ्गमाः** पन्थानः । **हृदयङ्गमा** वाचः ॥१०५०।

**[दु० टी०]**

गम० । भुजाभ्यां गच्छति, भुजः सन् गच्छति, भुजं गच्छतीति क्रियाविशेषणं वा। एवं पतगः, पन्नगः ॥१०५०।

**[क० च०]**

गम० । भुजाभ्यामिति । भुजः कुटिलः सन् गच्छतीति वा बोध्यम् ॥१०५०।

**[समीक्षा]**

'सुतङ्गमः, ऋतङ्गमः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने ख–खच् प्रत्ययों का विधान किया है । पाणिनि का सूत्र है — "गमश्च" (अ० ३।२।४७) । अतः अनुबन्धभेद के अतिरिक्त उभयत्र समानता ही है ।

**[रूपसिद्धि]**

१. **सुतङ्गमः**। सुत + गम् + ख + सि । 'सुत' शब्द के उपपद में रहने पर 'गम्लृ गतौ' (१।२९९) धातु से प्रकृत सूत्र द्वारा 'ख' प्रत्यय, मकारागम, अनुस्वार, वर्गान्त आदेश तथा विभक्तिकार्य ।

२. **ऋतङ्गमः**। ऋत + गम् + ख + सि । 'ऋत' शब्द के उपपद में रहने पर 'गम्' धातु से 'ख' प्रत्यय आदि कार्य पूर्ववत् ।

३-६. **भुजङ्गमः**। भुज + गम् + ख + सि । भुजाभ्यां गच्छति, भुजं गच्छतीति वा । **मितङ्गमो** हस्ती । मित + गम् + ख + सि । मितं गच्छति । **पूर्वङ्गमाः** पन्थानः। पूर्व + गम् + ख + जस् । **हृदयङ्गमा** वाचः । हृदय + गम् + ख + आ+जस् । प्रक्रिया पूर्ववत्॥१०५०।

## १०५१. उरोविहायसोरुरविहौ च [४।३।४६]

[सूत्रार्थ]

'उरस् – विहायस्' शब्दों के उपपद में रहने पर 'गम्' धातु से संज्ञा अर्थ में 'ख' प्रत्यय तथा क्रमशः 'उर–विह' आदेश भी होते हैं ॥१०५१।

[दु० वृ०]

उरोविहायसोरुपपदयोर्गमश्च संज्ञायां खो भवति तयोर्यथासङ्ख्यम् उर-विहौ च भवतः । उरसा गच्छतीति **उरङ्गमः**। विहायसा गच्छतीति **विहङ्गमः** ॥१०५१।

[क० च०]

उरो० । गमेरुरविहौ प्रत्ययौ भवतश्चकारात् खश्चेति नार्थः सञ्ज्ञाप्रतीतेः । अतः आदेशावेव ताविति । अत्रापि किञ्चिद् रूपगतसादृश्यं श्रुतत्वाद् उरोविहायसोरेवादेशो न गमेरिति ॥१०५१।

—

[समीक्षा]

'उरङ्गमः, विहङ्गमः' शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'ख–खच्' प्रत्यय किए हैं । पाणिनि का सूत्र है – "गमश्च" (अ० ३।२।४७) । 'उरस्' शब्द को 'उर' आदेश न करके सकारलोप तथा विहायस् को 'विह' आदेश वार्त्तिककार द्वारा किए गए हैं – "उरसो लोपश्च, डे च विहायसो विहादेशो वक्तव्यः" (वै० सि० कौ० ३।२।४८–वा०) । यह ज्ञातव्य है कि पाणिनीय व्याकरण में ये आदेश 'ड' प्रत्यय होने पर किए जाते हैं, जिनसे 'उरगः, विहगः' शब्द सिद्ध होते हैं । इस प्रकार कातन्त्र में स्पष्टता और लाघव होने के कारण उत्कर्ष ही कहा जाएगा ।

[रूपसिद्धि]

१. **उरङ्गमः**। उरस् + गम् + ख + सि । उरसा गच्छति । 'उरस्' शब्द के उपपद में रहने पर 'गम्लृ गतौ' (१।२७९) धातु से प्रकृत सूत्र द्वारा 'ख' प्रत्यय, उरस् को 'उर' आदेश, मकारागम, अनुस्वार, वर्गान्त आदेश तथा विभक्तिकार्य ।

२. **विहङ्गमः**। विहायस् + गम् + ख + सि । विहायसा गच्छति । 'विहायस्' शब्द के उपपद में रहने पर 'गम्' धातु से 'ख' प्रत्यय आदि कार्य पूर्ववत् ॥१०५१।

## १०५२. डोऽसञ्ज्ञायामपि [४।३।४७]

[सूत्रार्थ]

नाम के उपपद में रहने पर सञ्ज्ञा तथा असञ्ज्ञा अर्थ में 'गम्' धातु से 'ड' प्रत्यय होता है एवं 'उरस् – विहायस्' के स्थान में क्रमशः 'उर–विह' आदेश भी होते हैं ॥१०५२।

[दु० वृ०]

नाम्न्युपपदे गमेर्डो भवति सञ्ज्ञायामसञ्ज्ञायामपि उरोविहायसोरुरविहौ च यथासङ्ख्यं

भवत:। भुजग:, तुरग:, प्लवग:, पुरग:, पतग:, अन्तग:, अत्यन्तग:, ग्रामग:, अध्वग:, दूरग:, पारग:, सर्वग:, सर्वत्रग:, पन्नग:, गुरुतल्पग: । सुग:, दुर्ग:, निर्गो देश: । नग:, अग:, तीरग:, पीठग:, उरग:, विहग: ।।१०५२।

[वि० प०]

डो० । सुगो दुर्ग: इति । सुखेन गम्यतेऽस्मिन् इत्यधिकरणे, तथा नि:शेषेण गम्यतेऽस्मिन्निति **निर्गो** देश एवोच्यते । नग:, अग: इति । तत्र क्वचिदधिकारात् "नस्य तत्पुरुषे लोप्य:" (२।५।२२) इति नगस्याप्राणिनि नलोपो वा दृश्यते । सर्वत्र डानुबन्धेऽन्त्यस्वरादिलोप: ।।१०५२।

[क० च०]

डो० । तुरस्त्वरावान् गच्छतीति **तुरग:**। पुरतीति **पुर:**, पुर: सन् गच्छतीति **पुरग:**। पततीति **पत:**, पत: सन् गच्छतीति **पतग:** इत्यादि ।।१०५२।

[समीक्षा]

'दूरग:, पन्नग:, पारग:' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ड' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है — "अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु ड:" (अ० ३।२।४८) । पाणिनि द्वारा सूत्र में पठित शब्दों से अतिरिक्त शब्दों में 'ड' प्रत्यय होता है । अत: पाणिनीय परिगणन की अपेक्षा कातन्त्रीय अभिधानाश्रय ही समीचीन कहा जा सकता है । अत: यहाँ कातन्त्र का उत्कर्ष सिद्ध है ।

[रूपसिद्धि]

१. **भुजग:**। भुज + गम् + ड + सि । भुजाभ्यां गच्छति । 'भुज' के उपपद में रहने पर 'गम्लृ गतौ' (१।२७९) धातु से प्रकृत सूत्र द्वारा 'ड' प्रत्यय, 'ड्' अनुबन्ध का प्रयोगाभाव, 'ड्' अनुबन्ध के कारण 'अम्' का लोप तथा विभक्तिकार्य ।

२-१५. **तुरग:**। तुर + गम् + ड + सि । तुरस्त्वरावान् गच्छति । **प्लवग:**। प्लव+ गम् + ड + सि । **पुरग:**। पुर + गम् + ड + सि । पुरतीति पुर:, पुर: सन् गच्छति । **पतग:**। पत + गम् + ड + सि । पततीति पत:, पत: सन् गच्छति । **अन्तग:**। अन्त + गम + ड + सि । **अत्यन्तग:**। अत्यन्त + गम् + ड + सि । **ग्रामग:**। ग्राम+ गम् + ड + सि । **अध्वग:**। अध्वन् + गम् + ड + सि । **दूरग:**। दूर + गम् + ड+ सि । **पारग:**। पार + गम् + ड + सि । **सर्वग:**। सर्व + गम् + ड + सि । **सर्वत्रग:**। सर्वत्र + गम् + ड + सि । **पन्नग:**। पन्न + गम् + ड + सि । **गुरुतल्पग:**। गुरुतल्प+ गम् + ड + सि । प्रक्रिया पूर्ववत् ।।१०५२।

[विशेष]

'सुग:, दुर्ग:, निर्ग:, नग:, अग:, तीरग:, पीठग:, उरग:, विहग:' प्रयोग भी द्रष्टव्य हैं ।

## १०५३. विहङ्ग-तुरङ्ग-भुजङ्गाश्च [४।३।४८]

[सूत्रार्थ]

सञ्ज्ञा अर्थ में विहङ्ग; तुरङ्ग तथा भुजङ्ग शब्द 'ड' प्रत्ययान्त सिद्ध होते हैं ॥१०५३।

[दु० वृ०]

एते डप्रत्ययान्ता निपात्यन्ते सञ्ज्ञायामेव । विहायसा गच्छतीति **विहङ्गः**। तुरो गच्छतीति **तुरङ्गः**। भुजाभ्यां गच्छतीति **भुजङ्गः**। चकारात् पतो गच्छतीति **पतङ्गः**। प्लवेन गच्छतीति **प्लवङ्गः**॥१०५३।

[समीक्षा]

पाणिनीय व्याकरण में उक्त तीनों शब्दों के सिद्ध्यर्थ सूत्र नहीं बनाए गए हैं। 'विहङ्ग' शब्द को सिद्ध करने के लिए वार्त्तिक सूत्र है — "खच्च डिद् वा वक्तव्यः" (अ० ३।२।३८-वा०)। इस प्रकार यहाँ कातन्त्रीय उत्कर्ष कहा जा सकता है।

[रूपसिद्धि]

१. **विहङ्गः**। विहायस् + गम् + ड + सि । विहायसा गच्छति । 'विहायस्' के उपपद में रहने पर 'गम्लृ गतौ' (१।२७९) धातु से 'ड' प्रत्यय, विहायस्' को 'विह' आदेश, मकारागम, 'अम्' का लोप तथा विभक्तिकार्य ।

२-३. **तुरङ्गः**। तुर + गम् + ड + सि । तुरस्त्वरावान् गच्छति । **भुजङ्गः**। भुज+ गम् + ड + सि । भुजाभ्यां गच्छति । प्रक्रिया पूर्ववत् ॥१०५३।

## १०५४. अन्यतोऽपि च [४।३।४९]

[सूत्रार्थ]

सञ्ज्ञा तथा असञ्ज्ञा अर्थ में गम्- भिन्न धातु से भी नाम के उपपद में रहने पर 'ड' प्रत्यय होता है ॥१०५४।

[दु० वृ०]

गमेरन्यस्मादपि सञ्ज्ञायामसञ्ज्ञायामपि नाम्न्युपपदे डो भवति। वारि चरतीति **वार्चो** हंसः। गिरौ शेते **गिरिशः**। वरान् आहन्ति **वराहः**। परिखन्यते **परिखा,** कर्मण्यपि दृश्यते॥१०५४।

[दु० टी०]

अन्य० । ननु. "**शीङोऽधिकरणे**" (४।३।१८) इत्यचा भवितव्यम् , कथं गिरिशः? अपिशब्दस्य बहुलार्थत्वाड् डो भवति ॥१०५४।

[समीक्षा]

पाणिनीय वाङ्मय में वार्त्तिककार द्वारा 'गिरिश' शब्द को छन्द में सिद्ध किया गया है – "गिरौ डश्छन्दसि" । 'वराह-परिखा' शब्दों की सिद्धि भी "डप्रकरणेऽन्येष्वपि दृश्यते" (अ० ३।२।४८-वा०) वार्त्तिक द्वारा सम्भव है । इस प्रकार कातन्त्रीय निर्देश उत्कर्षाधायक है ।

[रूपसिद्धि]

१. **वार्चो हंसः**। वार् + चर् + ड + सि । वारि चरति । 'वार्' शब्द के उपपद में रहने पर 'चर् गतौ' (१।१८९) धातु से प्रकृत सूत्र द्वारा 'ड' प्रत्यय, डानुबन्ध से धातुगत 'अर्' भाग का लोप तथा विभक्तिकार्य ।

२. **गिरिशः**। गिरि + शी + ड + सि । गिरौ शेते । 'गिरि' शब्द के उपपद में रहने पर 'शीङ् शये' (२।५५) धातु से 'ड' प्रत्यय आदि कार्य पूर्ववत् ।

३. **वराहः**। वर + आ + हन् + ड + सि । वरान् आहन्ति । 'वर' तथा 'आङ्' उपसर्ग के उपपद में रहने पर 'हन् हिंसागत्योः' (२।४) धातु से 'ड' प्रत्यय आदि कार्य पूर्ववत् ।

४. **परिखा**। परि + खन् + ड + आ + सि । परिखन्यते या । 'परि' पूर्वक 'खनु अवदारणे' (१।५८४) धातु से 'ड' प्रत्यय आदि कार्य पूर्ववत् ।।१०५४।

## १०५५. हन्तेः कर्मण्याशीर्गत्योः [४।३।५०]

[सूत्रार्थ]

कर्म के उपपद में रहने पर आशीः तथा गति अर्थ में 'हन्' धातु से 'ड' प्रत्यय होता है ।।१०५५।

[दु० वृ०]

कर्मण्युपपदे आशिषि गतौ च वर्तमानाद् हन्तेर्डो भवति । शक्रं वध्यात् **शक्रहः**। क्रोशं हन्ति **क्रोशहः** । कर्मण्येव निरपेक्षत्वात् । कर्मग्रहणं **सुखार्थम्** ।।१०५५।

[वि० प०]

हन्तेः० । ननु हन्तेः सकर्मकत्वात् कर्मण्युपपदे भविष्यति किं कर्मग्रहणेनेति? न च नामाधिकारादसिना वध्यादित्यत्र प्रसङ्ग इति, सापेक्षत्वात्। अपेक्षते हि शक्रं कर्मेत्याह- कर्मण्येवेति। ननु कर्मणोऽपि करणापेक्षत्वात् कुतो निरपेक्षता? तदयुक्तम्। **कर्ता हि क्रियासिद्ध्यर्थं** साक्षात् करणमपेक्षते न तु कर्म। तस्य सकरणकर्तृप्रसाधितक्रियाव्याप्यत्वात् करणस्य तु सापेक्षता युज्यते, उद्यमननिपातलक्षणस्य तत्कृतव्यापारस्य कर्मविषयत्वादिति न दोषः ।।१०५५।

[क० च०]

हन्तेः। **पञ्जिका** न कर्मेति। न कर्तृकरणमपेक्षते इत्यर्थः।।१०५५।

[समीक्षा]

'शक्रहः, क्रोशहः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'ड' प्रत्यय का विधान किया है । पाणिनि का सूत्र है — "आशिषि हनः" (अ० ३।२।४९) । पाणिनि ने सूत्र में कर्म अर्थ नहीं पढ़ा है, इसकी पूर्ति वार्त्तिककार ने की है – "कर्मणि समि च" । अतः कातन्त्र का निर्देश अधिक समीचीन है ।

[विशेष वचन]

१. कर्मग्रहणं सुखार्थम् (दु० वृ०) ।

२. कर्ता हि क्रियासिद्ध्यर्थं साक्षात् करणमपेक्षते न तु कर्म (वि० प०) ।

[रूपसिद्धि]

१. **शक्रहः**। शक्र + हन् + ड + सि । शक्रं वध्यात् । 'शक्र' शब्द के उपपद में रहने पर 'हन् हिंसायाम्' (२।४) धातु से प्रकृत सूत्र द्वारा 'ड' प्रत्यय, डानुबन्ध के कारण 'अन्' भाग का लोप तथा विभक्तिकार्य ।

२. **क्रोशहः**। क्रोश + हन् + ड + सि । क्रोशं हन्ति । 'क्रोश' शब्द के उपपद में रहने पर 'हन्' धातु से 'ड' प्रत्यय आदि पूर्ववत् ॥१०५५।

## १०५६. अपात् क्लेशतमसोः [४।३।५१]

[सूत्रार्थ]

कर्म कारक में 'क्लेश–तमस्' शब्दों के उपपद में रहने पर 'अप' उपसर्गपूर्वक 'हन्' धातु से 'ड' प्रत्यय होता है ॥१०५६।

[दु० वृ०]

क्लेशतमसोः कर्मणोरुपपदयोरपात् परस्य हन्तेर्डो भवति । क्लेशापहः, तमोऽपहः। कथं सुखापहः, दुःखापहः, ज्वरापहः, वातपित्तकफापहः, विषाग्निदर्पापहः? "**अन्यतोऽपि च**" (४।३।४९) इति सिद्धम्। **प्रपञ्चार्थं डविधानम्।** कथं दार्वाघाटः, चार्वाघाटः, वर्णसंघाटः? घटतेर्भविष्यति। चारु आहन्ति **चार्वाघाटः**। एवं वर्णसंघाटः। दार्वाघाटोऽपि तर्हि स्यात्? असञ्ज्ञायामिष्यत एव ॥१०५६।

[दु० टी०]

अपात्० । दार्वाङ्पूर्वस्य हन्तेः सञ्ज्ञायामणि टादेशोऽन्त्यस्य नित्यं चार्वाङ्पूर्वस्य वा सम्पूर्वस्य कर्मणि नोक्त इति चोदयन्नाह — कथमित्यादि । धात्वन्तरेण प्रतिपादयन्नाह- घटतेरित्यादि । **'अनेकार्था हि धातवः'** इति घटेरपि हन्त्यर्थः । नास्ति भेद इति भावः। टादेशाभावपक्षे हन्तेरेव प्रयोग इत्याह-चारु आहन्तीति । धातुद्वयेन रूपद्वयसाधनं न दार्वाङ्पूर्वस्यापि रूपद्वयप्रसङ्ग इत्याह — दार्वाघाट इत्यादि । आकर्षणे तर्हि शब्दः संज्ञायां तावदयमप्रयोगः संज्ञैव न भवतीति । असंज्ञायामपि निषेधाभावादभ्युपगमयन्नाह –असंज्ञायामित्यादि ॥१०५६।

[वि० प०]

अपात्० । दार्वाहनोऽण्यन्तस्य च टः संज्ञायाम् इति वक्तव्यम् । **अस्यार्थः**– दारुशब्दोपपदे आङ्पूर्वस्य हन्तेरणि टादेशः सञ्ज्ञाविषये । दारु आहन्तीति **दार्वाघाटः**। चारो वा – चार्वाघाटः, चार्वाघातः । कर्मणि समि च – वर्णसंघाटः, वर्णसंघातः, पदसंघातः । तदिह न वक्तव्यमित्याह-कथमिति । घटतेरिति धातूनामनेकार्थत्वाद् घटिना हन्त्यर्थेन सिध्यतीति भावः । टादेशाभावपक्षे हन्तिरेवेत्याह — चारु आहन्तीति। एवमिति । वर्णान् संहन्ति वर्णसंघातः तथा पदसंघात इति । यद्येवं सर्वत्र रूपद्वयस्य प्रसङ्ग इति देशयन्नाह-दार्वाघातोऽपि तर्हि स्यादिति । असंज्ञायां तु निषेधभावात् स्यादेवेत्याह — असंज्ञायामिष्यते इति ॥१०५६।

[समीक्षा]

'दु:खापह:, तमोऽपह:' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'ड' प्रत्यय का विधान किया है। पाणिनि का सूत्र है — "अपे क्लेशतमसो:" (अ० ३।२।५०)। अत: उभयत्र समानता ही है।

[रूपसिद्धि]

१. **क्लेशापह:**। क्लेश + अप + हन् + ड + सि। क्लेशानि अपहन्ति। 'क्लेश' के उपपद में रहने पर 'अप' उपसर्गपूर्वक 'हन् हिंसागत्यो:' (२।४) धातु से प्रकृत सूत्र द्वारा 'ड' प्रत्यय, 'ड्' अनुबन्ध के कारण 'अन्' भाग का लोप तथा विभक्तिकार्य।

२. **तमोऽपह:**। तमस् + अप + हन् + ड + सि। तमोऽपहन्ति। 'तमस्' शब्द के उपपद में रहने पर 'अप' उपसर्गपूर्वक 'हन्' धातु से 'ड' प्रत्यय-आदि कार्य पूर्ववत् ॥१०५६।

## १०५७. कुमारशीर्षयोर्णिन् [४।३।५२]

[सूत्रार्थ]

कर्म कारक में 'कुमार-शीर्ष' शब्दों के उपपद में रहने पर 'हन् हिंसागत्यो:' (२।४) धातु से 'णिन्' प्रत्यय होता है ॥१०५७।

[दु० वृ०]

शिर:पर्याय: शीर्षशब्द:। कुमारशीर्षयो: कर्मणोरुपपदयोर्हन्तेर्णिन् भवति। कुमारघाती, शीर्षघाती ॥१०५७।

[वि० प०]

कुमार०। शिर इत्यादि। तथा च **'शीर्षोपहारादिभिरात्मन: स्वै:'** इति प्रयोग:। शिरस: शीर्षादेश इति **अन्ये**। इज्वद्भावाद् घत्वादिकम्॥१०५७।

[समीक्षा]

'कुमारघाती, शीर्षघाती' प्रयोगों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'णिन्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है — "कुमारशीर्षयोर्णिनि:" (अ० ३।२।५१)। अत: उभयत्र समानता ही हैं।

[रूपसिद्धि]

१. **कुमारघाती**। कुमार + हन् + णिन् + सि। कुमारं हन्ति। 'कुमार' शब्द के उपपद में रहने पर 'हन् हिंसागत्यो:' (२।४) धातु से प्रकृत सूत्र द्वारा 'णिन्' प्रत्यय, इज्वद्भाव के कारण "हस्य हन्तेर्घि:" (३।६।२८) से हकार को घकार, "अस्योपधाया

दीर्घो०" (३।६।५) से उपधादीर्घ, "हन्तेस्तः" (४।१।२) से नकार को तकारादेश तथा विभक्तिकार्य।

२. **शीर्षघाती**। शीर्ष + हन् + णिन् + सि। 'शीर्ष' शब्द के उपपद में रहने पर 'हन्' धातु से 'णिन्' प्रत्यय आदि कार्य पूर्ववत्॥१०५७।

## १०५८. टग्लक्षणे जायापत्योः [४।३।५३]

[सूत्रार्थ]

कर्म कारक में 'जाया–पति' शब्दों के उपपद में रहने पर लक्षणवान् कर्ता के गम्यमान होने पर 'हन् हिंसागत्योः' (२।४) धातु से 'टक्' प्रत्यय होता है ॥१०५८।

[दु० वृ०]

लक्षणयोगाल्लक्षणम् । जायापत्योः कर्मणोरुपपदयोर्हन्तेर्लक्षणवति कर्तरि टग् भवति । जायाघ्नो ब्राह्मणः, पतिघ्नी वृषली ॥१०५८।

[दु० टी०]

टग्०। टकारो **नदाद्यर्थः**, ककारो **यण्वद्भावार्थः** इत्युपधालोपो हन्तेर्भवति। लक्षणमस्तीति। अर्शआदित्वादत् प्रत्ययः इति **अन्यः**॥१०५८।

[वि० प०]

टक्०। **"गमहन०"** (३।६।४३) इत्यादिनोपधालोपे **"लुप्तोपधस्य च"** (३।६।२९) इति घत्वम् ॥१०५८।

[क० च०]

टग्० । ननु लक्षणे कर्तरि अमनुष्यकर्तृक इत्यनेनैव सिद्धं किमनेनेति ? मैवम्, लक्षणशब्दस्य मुख्यार्थाभावे लक्षणवत्युपचार इति लक्षणशब्देन लक्षणवान् देवदत्तादिरुच्यते, अतः परेण न सिध्यतीत्याह — लक्षणयोगाल्लक्षणमिति । एतेन अमनुष्यकर्तर्यपि लक्षणवत्युपचारः, लक्षणवान् इत्येव भवति न तु मनुष्यमात्र इत्याह — स्त्रीघ्नशब्द इति **हेमः** ॥१०५८।

[समीक्षा]

'जायाघ्नः, पतिघ्नी' शब्दरूपों को सिद्ध करने के लिए दोनों ही व्याकरणों में 'टक्' प्रत्यय किया गया है । पाणिनि का सूत्र है — "लक्षणे जायापत्योष्टक्" (अ० ३।२।५२) । अतः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **जायाघ्नः**। जाया + हन् + टक् + सि । जायां हन्ति । 'जाया' शब्द के

उपपद में रहने पर 'हन् हिंसागत्योः' (२।४) धातु से प्रकृत सूत्र द्वारा 'टक्' प्रत्यय, 'अंन्' के अकार का लोप, हकार को घकारादेश तथा विभक्तिकार्य ।

२. **पतिघ्नी।** पति + हन् + टक् + ई + सि । पतिं हन्ति । 'पति' शब्द के उपपद में रहने पर 'हन्' धातु से 'टक्' प्रत्यय आदि कार्य पूर्ववत् ॥१०५८।

## १०५९. अमनुष्यकर्तृकेऽपि च [४।३।५४]

[सूत्रार्थ]

कर्म के उपपद में रहने पर मनुष्यभिन्न कर्ता यदि हो तो 'हन्' धातु से 'टक्' प्रत्यय होता है ॥१०५९।

[दु० वृ०]

कर्मण्युपपदेऽमनुष्यकर्तृके धात्वर्थे वर्तमानाद् हन्तेष्टग् भवति। जायाघ्नस्तिलकः। पतिघ्नी पाणिरेखा। श्लेष्मघ्नं त्रिकटुकम् । पित्तघ्नं घृतम् । वातघ्नं तैलम्। अमनुष्यकर्तृक इति किम्? आखुघातः शूद्रः, ब्राह्मणघातो वृषलः। कथं चौरघातो गजः, शस्यघातो वृषभः? अपिशब्दात् — कृतघ्नः खलः, शत्रुघ्नः शूरः इत्यपि भवति॥१०५९।

[दु० टी०]

अमनु० । अपि चेति बहुलार्थश्चेत् किं प्रतिपदविधानेन । टगितिमात्रं विदध्याद् अमनुष्यकर्तृकेऽप्यभिधानलक्षणा हि कृतः इति भावः ? सत्यम् , **प्रपञ्चार्थमेव** ॥१०५९।

[समीक्षा]

मनुष्यभिन्न कर्ता होने पर 'जायाघ्नस्तिलकः, पतिघ्नी पाणिरेखा' शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'टक्' प्रत्यय किया गया है । पाणिनि का सूत्र है — "अमनुष्यकर्तृके च" (अ० ३।२।५३) । अतः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **जायाघ्नस्तिलकः** । रूपसिद्धि पूर्व सूत्र सं० – १०५८ की तरह ।

२. **पतिघ्नी** पाणिरेखा । रूपसिद्धि पूर्ववत् ।

३. **श्लेष्मघ्नं** त्रिकटुकम्। श्लेष्मन् + हन् + टक् + सि। श्लेष्माणं हन्ति। 'श्लेष्मन्' के उपपद में रहने पर 'हन्' धातु से 'टक्' प्रत्यंय आदि कार्य पूर्ववत्।

४-५. **पित्तघ्नं** घृतम्। पित्त + हन् + टक् + सि। पित्तं हन्ति। **वातघ्नं** तैलम्। वातं हन्ति। रूपसिद्धि को प्रक्रिया पूर्ववत्॥१०५९।

## १०६०. हस्तिबाहुकपाटेषु शक्तौ [४।३।५५]

[सूत्रार्थ]

शक्ति अर्थ के गम्यमान होने पर 'हस्तिन्-बाहु-कपाट' शब्दों के उपपद में रहने पर 'हन्' धातु से 'टक्' प्रत्यय होता है ॥१०६०।

[दु० वृ०]

एषु कर्मसूपपदेषु शक्तौ गम्यमानायां हन्तेष्टग् भवति । हस्तिघ्नः, बाहुघ्नः इति मतम्। कपाटघ्नः । नगरे तु अहस्तिन्यपि वचनात् – नगरघ्नोऽग्निः । नगरघातो हस्ती चेत् ॥१०६०।

[दु० टी०]

हस्ति० । मतमिति । परन्तु बाहुशब्दं न पठतीत्यर्थः ॥१०६०।

[वि० प०]

हस्ति०। मतमित्यस्य मतम्। अन्यस्तु बाहुघ्न इति न मन्यते इति॥१०६०।

[क० च०]

हस्ति० । नगरे त्विति । नगरे कर्मण्युपपदे हस्तिभिन्ने कर्तरि अपिशब्दस्य बाहुल्यादित्यर्थः ॥१०६०।

[समीक्षा]

'हस्तिघ्नः, कपाटघ्नः' शब्दरूपों के सिद्ध्यर्थ दोनों आचार्यों ने 'टक्' प्रत्यय किया है। पाणिनि ने दो ही शब्दों को सूत्र में पढ़ा है, उनका सूत्र है- "शक्तौ हस्तिकपाटयोः" (अ० ३।२।५४),परन्तु कातन्त्र में 'बाहु' शब्द का अधिक पाठ करके उत्कर्ष ही बताया गया है ।

[रूपसिद्धि]

१. **हस्तिघ्नः**। हस्तिन् + हन् + टक् + सि । हस्तिनं हन्तुं शक्तः । 'हस्तिन्' शब्द के उपपद में रहने पर 'हन्' धातु से प्रकृत सूत्र द्वारा 'टक्' प्रत्यय, अकारलोप, हकार को घकारादेश तथा विभक्तिकार्य ।

२-३. **बाहुघ्नः**। बाहु + हन् + टक् + सि। बाहू हन्तुं शक्तः। **कपाटघ्नः**। कपाट + हन् + टक् + सि । कपाटं हन्तुं शक्तः। रूपसिद्धि की प्रक्रिया पूर्ववत् ॥१०६०।

## १०६१. पाणिघताडघौ शिल्पिनि [४।३।५६]

[सूत्रार्थ]

शिल्पी यदि कर्ता हो तो 'पाणिघ–ताडघ' शब्द टक्-प्रत्ययान्त निपातन से सिद्ध होते हैं ॥१०६१।

[दु० वृ०]

एतौ शिल्पिनि कर्तरि निपात्येते। पाणिभ्यां पाणौ वा हन्ति **पाणिघः**। ताडं हन्ति **ताडघः**। शिल्पिनीति किम्? पाणिघातः, ताडघातः। राजानं हन्ति **राजघः** इत्यप्यधिकारात्॥१०६१।

[दु० टी०]

पाणि० । शिल्पं विज्ञानं तद्युक्तस्य कर्तुस्तस्मिन् हन्तेष्टगन्त्यस्वरादिलोपो घत्वं च निपात्यते ॥१०६१।

[समीक्षा]

'पाणिघ-ताडघ' शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने निपातनविधि का आश्रय लिया है। पाणिनि का सूत्र है — "पाणिघताडघौ शिल्पिनि " (अ० ३।२।५)। अत: उभयत्र समानता ही है।

[रूपसिद्धि]

१. **पाणिघ:**। पाणि + हन् + टक् + सि । पाणिभ्यां पाणौ वा हन्ति । 'पाणि' शब्द के उपपद में रहने पर 'हन् हिंसागत्यो:' (२।४) धातु से निपातनद्वारा 'टक्' प्रत्यय, धातुगत 'अन्' का लोप, हकार को घकारादेश तथा विभक्तिकार्य ।

२. **ताडघ:**। ताड + हन् + टक् + सि । ताडं हन्ति । 'ताड' के उपपद में रहने पर 'हन्' धातु से 'टक्' प्रत्यय आदि प्रक्रिया पूर्ववत् ॥१०६१।

## १०६२. नग्नपलितप्रियान्धस्थूलसुभगाढ्येष्वभूततद्भावेषु कृञ: ख्युट् करणे [४।३।५७]

[सूत्रार्थ]

अभूततद्भाव अर्थ में वर्तमान 'नग्न-पलित-प्रिय-अन्ध-स्थूल-सुभग-आढ्य' शब्दों के उपपद में रहने पर करण कारक में 'डु कृञ् करणे' (७।७) धातु से 'ख्युट्' प्रत्यय होता है ॥१०६२।

[दु० वृ०]

अभूततद्भावे वर्तमानेषु नग्नादिषूपपदेषु कृञ: ख्युड् भवति करणे कारके । अनग्नो नग्न: क्रियतेऽनेनेति **नग्नङ्करणं** द्यूतम् । एवं पलितङ्करणं तैलम् । प्रियङ्करणं शीलम् । अन्धङ्करण: शोक: । स्थूलङ्करणं दधि । सुभगङ्करणं रूपम् । आढ्यङ्करणं वित्तम् । अनग्नङ्करणमित्यादि तदन्तविधिना । अभूततद्भाव इति किम् ? आढ्यं करोति । तैलेनाभ्यञ्जयतीत्यर्थ: । उत्पादार्थेऽप्यभूततद्भावस्याविवक्षितत्वात् । व्यक्तेर्विवक्षितत्वात् च्व्यन्तेषु न भवति । उत्तरत्राप्येवम् — नग्नीकरोत्यनेनेति युडपि नैवाविशेषात् ॥१०६२।

[दु० टी०]

नग्न० । अनग्नङ्करणमित्यादि । अभयङ्करवदिहापि तदन्तविधिरिष्यते इत्यर्थ: । अन्यत्र तूपपदं न विशेषणमेवेति । तथा च ज्ञापितम् – अभूततद्भाव इत्यादि । अथवा आढ्यं करोति तैलेन घृतं तु न ददातीति । ननु करोतिरयमभूतप्रादुर्भावार्थ-स्ततोऽभूततद्भावान्न भिद्यते, तथा आढ्य एव किञ्चित् क्रियते दण्डनादिषु (अभ्यञ्जनादिषु)

च करोतेर्वृत्तिरिति । एवमपि सर्ववस्तूनामात्मनो हेतुत्वादभूतप्रादुर्भाव औज्ज्वल्यादिसम्बन्धो बाहिरङ्गस्तथा वक्ष्यमाणेऽपि भवति । यदा सत्तार्थस्तदाप्येवम् , नैवं सामान्यविशेषयोरैक्याभावाच्च व्यर्थोऽभूततद्भावः, अवस्थावतोऽवस्थान्तरेणाविद्यमानस्य तदात्मना **भाव** उच्यते अभूतप्रादुर्भावस्त्वनाश्रितपूर्वावस्थेऽपि कार्ये भवतीत्याह — उत्पादार्थेऽपीति । व्यक्तेरित्यादि । अवर्णस्य च्वावीत्वे व्यक्त्यन्तरत्वं मन्यते । यद्येवम् अनाढ्य आढयः क्रियतेऽनेनेति **आढ्यङ्करणं** न स्यात् । **'लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्'** (का० परि० १७) इति जातार्थत्वात्। सत्यम्, स्त्रीलिङ्गस्याविवक्षैव। अथवा च्व्यन्तस्य शब्दान्तरत्वाद् अन्यव्यक्तित्वम्, न हि गोग्रहणे महिषस्यापि ग्रहणम्। शृङ्गमस्तीति लिङ्गविशेषस्य ग्रहणं विवक्षितायां व्यक्तौ व्यक्त्यन्तरोच्छेदेन जातिर्न विहन्यते। अथ सत्यप्यर्थभेदे च्विलोपादेकत्वाध्यवसायः स एवायमिति। तदाविवक्षितायां प्रकृतौ नकारागमकृतो विशेषश्च्व्यन्तेषु युटा नास्ति विशेषः इत्याढ्यीकरणमिति भवितव्यम् , तर्हि च्व्यन्तेष्वपि खिष्णुखुकञौ स्याताम् । तथा च वक्ष्यति —आढ्यीभवितेत्यादि। **रूढिशब्दप्रकारा हि ताच्छीलिकाः।** प्रकारशब्दः सादृश्ये । यथा परिनिष्ठितस्यार्थस्याभिधातारो **रूढिशब्दास्**तथा ताच्छीलिका अपीत्यर्थः। तेन भ्राज्यलंकृञ्भूसहीत्यादिनेष्णुच् नास्ति शृकमगमहन-वृषभूस्थेत्यादिना, अत उकञ् नास्ति । न हि भवति 'प्रदेवकः, प्रजागरूकः' इति । कथन्तर्हि 'प्रभावुकः, अपलाषुकः, आगामुकः, प्रस्थायुकः' इति व्युत्पत्त्यङ्गप्रत्ययाः केचित्ताच्छीलिका इति तत्रोपसर्गयोगो दृश्यते तथा रूढिशब्दानां च व्याघ्र आकाश इति। च्व्यन्तस्याभूततद्भावोऽर्थस्ताच्छीलिकत्वं हि स्वभावस्तस्मान्नित्यानित्ययोः परस्परमनभिसम्बन्धादभिधानमेवाश्रय इति । च्व्यन्तेषु तृचो विषयता युडपि नैवाविशेषादिति नञ् प्रस्तुतेन ख्युटा सम्बन्धनीयः, न ख्युडेव भवति, युडपि भवति अविशेषादिति **भाष्यकारीयं मतम्।** आद्यपक्षे त्विह व्यक्तिवशात् ख्युट् तावन्न भवति, रूपस्याविशेषादित्यर्थः। **पदकारमतं** चैतत् ॥१०६२।

**[वि० प०]**

नग्न० । नग्नमित्यादि० । अभयङ्करवदत्रापि तदन्तविधिरिष्यते इति भावः । अन्यस्मिंस्तूपपदविधौ तदन्तता नास्ति । तदाद्याद्यन्तानन्तेत्यादावनन्तग्रहणाद् विज्ञायते, अन्यथा अन्तग्रहणेनैव तदन्तविधिना सिद्धमिति भावः । अभूततद्भाव इत्यादि । धातूनामनेकार्थत्वात् करोतिरत्राभ्यञ्जने वर्तते । ननु तत्रापि करोतेरभूतप्रादुर्भावार्थत्वादभ्यङ्गः पूर्वमसन्नेव क्रियते अभूततद्भावोऽस्त्येव । नहि अभूतप्रादुर्भावादन्योऽभूततद्भाव इति, तदयुक्तम् । विशिष्टो हि **अभूततद्भावो** नाभूतप्रादुर्भावमात्रम् , तथाहि अभूतस्याजातस्य तदात्मना भावोऽभूततद्भाव इति आश्रितपूर्वावस्थस्य कार्यस्य भाव उच्यते । अभूतप्रादुर्भावस्तु अनाश्रितपूर्वावस्थस्य कार्यस्येत्याह — उत्पादेत्यादि । उत्पादोऽभूतप्रादुर्भावस्तस्मिन् सत्यप्यविवक्षाऽभूततद्भावस्य प्रकृतेरनाश्रयणात् । **प्रकृतिः** कार्यस्य पूर्वावस्थोच्यते ।

व्यक्तेरित्यादि। च्वावीत्वे व्यक्त्यन्तरत्वमित्यर्थः। यद्येवम्, अनग्ना नग्ना क्रियतेऽनेनेति

**नग्नङ्करण**मित्यपि न स्यात्। नच लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति युक्तम् , जातावस्याव्यापारात्? सत्यम् , इह सामान्येन प्रत्ययः, स्त्रीत्वप्रतिपत्तिस्तु तत्प्रकरणात्। एतच्चावश्यकमभ्युपेयम्। अन्यथा स्त्र्याकारस्य ह्रस्वत्वे विशेषाभावः। यदि पुनः ख्युडभावे युड् भवेत् तदा ख्युटः प्रतिषेधोऽनर्थकः स्यात् , विशेषाभावात्। मकारागमकृतो हि विशेषः, न चासौ च्व्यन्तस्याव्ययस्य दीर्घान्तरस्यास्तीत्याह — युडपीत्यादि । **अन्ये** पुनर्नग्नीकरणमिति **मतान्तरमवलोकयन्तो** युडपि नैव, अविशेषादित्यन्यथा व्याचक्षते – ख्युडेव भवतीति, किन्तु न युडपि, विशेषाभावादिति ॥१०६२।

**[क० च०]**

नग्न०। अभूतस्येति **पञ्जिका**। अभूतस्याजातस्य शुक्लादेः किम्भूतस्य तदात्मना तत्स्वरूपेण पूर्वावस्थायुक्तप्रकृतिरूपेण वस्त्वन्तराविशिष्टस्याभाव **उत्पत्तिरि**ति विशेषणे तृतीया। एतेना**यमर्थः**— यत्र प्रकृतेराश्रयणं तत्राभूततद्भावः। यत्र तन्नास्ति तत्राभूतप्रादुर्भाव इति. तर्हि कथमाश्रितपूर्वावस्थाश्रयणं युक्तं चेद् आश्रिता पूर्वावस्थावती प्रकृतिर्येनेति पूर्वावस्थशब्देन **प्रकृतिरु**च्यते। **हेमकरसङ्ग**त्या प्रकृतिरिति। ननु प्रकृतिशब्देन विकारयुक्तद्रव्यमुच्यते, तत् कथं पूर्वावस्था इत्युक्तमित्याह — नन्विति **हेमः**॥१०६२।

**[समीक्षा]**

'नग्नङ्करणम्, प्रियङ्करणम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में ख्युट् (पा०–ख्युन्) प्रत्यय किया गया है । पाणिनि का सूत्र है — "आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्" (अ० ३।२।५६)। 'ट्–न्' अनुबन्धभेद को छोड़कर अन्य तो प्रायः उभयत्र समानता ही है ।

**[विशेष वचन]**

१. पदकारमतं चैतत् (दु० टी०) ।

२. प्रकृतिः कार्यस्य पूर्वावस्थोच्यते (वि० प०) ।

**[रूपसिद्धि]**

१. **नग्नङ्करणं** द्यूतम् । नग्न + कृ + ख्युट् + सि । अनग्नो नग्नः क्रियतेऽनेन। 'नग्न' शब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'ख्युट्' प्रत्यय, "युवुझामनाकान्ताः" (४।६।५४) से 'यु' को 'अन' आदेश, ऋकार को गुण, मकारागम, अनुस्वार, वर्गान्त आदेश तथा विभक्तिकार्य ।

२. **पलितङ्करणं** तैलम् । पलित + कृ + ख्युट् + सि । अपलितः पलितः क्रियतेऽनेन । 'पलित' शब्द के उपपद में रहने पर 'कृ' धातु से 'ख्युट्' प्रत्यय आदि कार्य पूर्ववत् ।

३. **प्रियङ्करणं** शीलम् । प्रिय + कृ + ख्युट् + सि । प्रियं क्रियतेऽनेन । 'प्रिय' शब्द के उपपद में रहने पर 'कृ' धातु से 'ख्युट्' प्रत्यय आदि कार्य पूर्ववत् ।

४. **अन्धङ्करणः** शोकः । अन्ध + कृ + ख्युट् + सि । अनन्धः अन्धः

क्रियतेऽनेन । 'अन्ध' शब्द के उपपद में रहने पर 'कृ' धातु से 'ख्युट्' प्रत्यय आदि कार्य पूर्ववत् ।

५. **स्थूलङ्करणं** दधि । स्थूल + कृ + ख्युट् + सि । अस्थूलः स्थूलः क्रियतेऽनेन। 'स्थूल' शब्द के उपपद में रहने पर 'कृ' धातु से 'ख्युट्' प्रत्यय आदि कार्य पूर्ववत् ।

६. **सुभगङ्करणं** रूपम् । सुभग + कृ + ख्युट् + सि । असुभगः सुभगः क्रियतेऽनेन । 'सुभग' शब्द के उपपद में रहने पर 'कृ' धातु से 'ख्युट्' प्रत्यय आदि कार्य पूर्ववत् ।

७. **आढ्यङ्करणं** वित्तम् । आढ्य + कृ + ख्युट् + सि । अनाढ्यः आढ्यः क्रियतेऽनेन । 'आढ्य' शब्द के उपपद में रहने पर 'कृ' धातु से 'ख्युट्' प्रत्यय आदि कार्यविधान पूर्ववत् ।।१०६२।

## १०६३. भुवः खिष्णुखुकञौ कर्तरि [४।३।५८]

[सूत्रार्थ]

अभूततद्भाव अर्थ में वर्तमान 'नग्न-पलित-प्रिय-अन्ध-स्थूल-सुभग-आढ्य' शब्दों के उपपद में रहने पर 'भू सत्तायाम्' (१।१) धातु से 'खिष्णु' तथा 'खुकञ्' प्रत्यय होते हैं।।१०६३।

[दु० वृ०]

अभूततद्भावे वर्तमानेषु नग्नादिषूपपदेषु भुवः खिष्णुखुकञौ भवतः कर्तरि । नग्नम्भविष्णुः, नग्नम्भावुकः । पलितम्भविष्णुः, पलितम्भावुकः । प्रियम्भविष्णुः, प्रियम्भावुकः । अन्धम्भविष्णुः, अन्धम्भावुकः । स्थूलम्भविष्णुः, स्थूलम्भावुकः । सुभगम्भविष्णुः, सुभगम्भावुकः । आढ्यम्भविष्णुः, आढ्यम्भावुकः । 'अनग्नम्भविष्णुः, अनग्नम्भावुकः' इत्यादि तदन्तविधिना । च्व्यन्तेषु न भवति – आढ्यीभविता । ताच्छीलिकत्वान्नास्त्यभूततद्भाव इति न परावपीष्णुजुकञौ । इकारः **सुखार्थः** । तथा कर्तरीति ।।१०६३।

[दु० टी०]

इटेकारादित्वं सिद्धम् , नैवम्। सन्देहः स्यात् किमयं खकारः ककारो वेति । कानुबन्धे इड्गुणयोरभावः, प्रथममकृत्वा निर्दिश्यते **पाठगौरवं** स्यादित्याह — इकार इत्यादि । कर्तरि कृदित्यविशेषे कर्तरि सिद्ध एव भवतेरकर्मकत्वात् कर्तरीति नग्नविशेषणमपि न भवति अभूततद्भाव इति किम् ? आढ्यो भवति ।।१०६३।

[वि० प०]

भुवः। अनग्नम्भविष्णुरित्यपि तदन्तविधिरिष्यत इति भावः। आढ्यीभवितेति व्यक्त्यन्तरत्वात् तृच्। अत्रापि "**भ्राज्यलम्०**" (४।४।१६) इत्यादिना "**शृकमगमहन०**" (४।४।३४) इत्यादिना इष्णुजुकञौ परत्वात् तृचं बाधित्वा कथं न भवतः ? न देश्यम्, विशेषाभावात् । न ह्यनयोरुत्पत्तौ खिष्णुखुकञोर्निषेधोऽर्थवान् । आगमलक्षणस्य विशेषस्य

पूर्ववदिहाप्यभावात्। सत्यप्यस्मिन् परिहारे **मतान्तरविवक्षया परिहारान्तरमाह**— ताच्छीलिकत्वाद् इति। ताच्छील्ये कर्तरि तयोर्विधानादिति–एतदुक्तं भवति । **ताच्छील्यं** हि तत्स्वभाव: । अभूततद्भावश्चावस्थितस्य धर्मिण: पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्ति:, स चाधेयत्वान्न स्वभाव इति । कथन्ताच्छील्ये विहितौ च्व्यन्ते उपपदेऽभूततद्भावे भवत इति। इडागमेनैव सिध्यतीत्याह — इकार इति। अन्यथा खकारस्य प्रथमत्वे कानुबन्धाशङ्कायां "**न श्र्युवर्णवृतां कानुबन्धे**" (४।६।७९) इतीट्प्रतिषेधो गुणाभावश्च स्यात्। अत्र च प्रतिवक्तव्यम् अघोषे प्रथमं न करिष्याम: इति । एवं सति कष्टं स्यादित्यर्थ:। तथेति। "**कर्तरि कृत:**" (४।६।४६) इत्यविशेषेणैव सिद्धम् । न च नग्नादिसहचरितं करणम् इह वर्तते, पृथग् योगाद् इष्टतश्चाधिकाराणां प्रवृत्तिर्निवृत्तिश्चेति वा ।।१०६३।

**[क० च०]**

भुव: । ताच्छीलिकत्वादिति । यस्य मते नग्नादौ व्यक्तिव्याख्या नास्ति पूर्वत्र नग्नीकरणमित्येव भवति, तन्मतेऽयं **सिद्धान्त:।** ननु ताच्छीलिकत्वान्नास्त्यभूततद्भाव इति कथमुक्तम् । न च आढ्यीभवितेत्यत्राभूततद्भावो नास्ति । न त्वभूततद्भावस्तयोरनुपपत्तौ कारणम् ? सत्यम् । एवं योज्या **वृत्ति:**। ताच्छीलिकत्वात् ताच्छील्ये कर्तरि तयोर्विधानात् न परावपि इष्णूकञाविति। तैर्ह्यत्रापि **ताच्छील्यं** विवक्ष्यते इत्याह — नास्तीति। अभूततद्भावे नास्ति ताच्छील्यमिति शेष:। **वस्तुतस्तु** यथाश्रुतसम्बन्ध एव घटते तथाहि ताच्छील्ये कर्तरि तयोर्विधानात् तयोर्विषये नास्त्यभूततद्भाव इति हेतो: 'आढ्यीभविता' इत्यत्राभूततद्भावेन परावपि इष्णूकञौ न भवत: ।।१०६३।

**[समीक्षा]**

'आढ्यम्भविष्णु:, प्रियम्भावुक:' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में प्राय: समान प्रत्यय किए गए हैं । पाणिनि का सूत्र है — "कर्तरि भुव: खिष्णुच्खुकञौ" (अ० ३।२।५७) । इस प्रकार पाणिनीय व्याकरण में चकारानुबन्ध को छोड़कर अन्य सभी प्रकार की उभयत्र समानता ही है ।

**[विशेष वचन]**

१. इकार: सुखार्थ: (दु० वृ०) ।

२. पृथग्योगाद् इष्टतश्चाधिकाराणां प्रवृत्तिर्निवृत्तिश्चेति वा (वि० प०) ।

**[रूपसिद्धि]**

१. **नग्नम्भविष्णु:**। नग्न + भू + खिष्णु + सि । अनग्नो नग्नो भवति । 'नग्न' शब्द के उपपद में रहने पर 'भू सत्तायाम्' (१।१) धातु से प्रकृत सूत्र द्वारा 'खिष्णु' प्रत्यय, 'ख्' अनुबन्ध का प्रयोगाभाव, मकारागम, धातुघटित ऊकार को गुण, अवादेश तथा विभक्तिकार्य ।

२. **नग्नम्भावुक:**। नग्न + भू + खुकञ् + सि । अनग्नो नग्नो भवति । 'नग्न' शब्द के उपपद में रहने पर 'भू' धातु से 'खुकञ्' प्रत्यय, मकारागम, ऊकार को वृद्धि, आव् आदेश तथा विभक्तिकार्य ।

३-१४. **पलितम्भविष्णुः, पलितम्भावुकः**। पलित + भू + खिष्णु-खुकञ् + सि। अपलितः पलितो भवति । **प्रियम्भविष्णुः, प्रियम्भावुकः** । प्रिय + भू + खिष्णु-खुकञ् + सि । अप्रियः प्रियो भवति। **अन्धम्भविष्णुः, अन्धम्भावुकः**। अन्ध + भू + खिष्णु + खुकञ् + सि। अनन्धः अन्धो भवति । **स्थूलम्भविष्णुः, स्थूलम्भावुकः**। स्थूल + भू + खिष्णु-खुकञ् + सि। अस्थूलः स्थूलो भवति। **सुभगम्भविष्णुः, सुभगम्भावुकः** । सुभग + भू + खिष्णु-खुकञ् + सि । असुभगः सुभगो भवति । **आढ्यम्भविष्णुः, आढ्यम्भावुकः**। आढ्य + भू + खिष्णु-खुकञ् + सि । अनाढ्य आढ्यो भवति । प्रक्रिया पूर्ववत् ॥१०६३।

## १०६४. भजो विण् [४।३।५९]

**[सूत्रार्थ]**

कर्म कारक के उपपद में रहने पर 'भज सेवायाम्' (१।६०४) धातु से 'विण्' प्रत्यय होता है ॥१०६४।

**[दु० वृ०]**

कर्मण्युपपदे भजो विण् भवति । अर्द्धभाक्, पादभाक् । उपसर्गेऽपि **केचित्** — अर्द्धप्रभाक् ॥१०६४।

**[क० च०]**

भजो० । **'विशेषातिदिष्टः प्रकृतं न बाधते'** (का० परि० १९) इति न्यायात् कर्मणीति लब्धं विशेषणविशेष्यभावस्य प्रयोक्तुरायत्तत्त्वादिति **सागरः** ॥१०६४।

**[समीक्षा]**

'अर्द्धभाक्, पादभाक्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने समान प्रत्यय किए हैं । अन्तर यह है कि 'विण्' प्रत्यय में णकारानुबन्ध की योजना कातन्त्रकार अन्त में करते हैं, जब कि पाणिनि ने इसे प्रारम्भ में पढ़ा है — 'ण्वि'। पाणिनि का सूत्र है — "भजो ण्विः" (अ० ३।२।६२) । अतः उभयत्र समानता ही है ।

**[रूपसिद्धि]**

१. **अर्द्धभाक्**। अर्ध + भज् + विण् + सि । अर्द्धं भजति । 'अर्द्ध' शब्द के उपपद में रहने पर 'भज सेवायाम्' (१।६०४) धातु से प्रकृत सूत्र द्वारा 'विण्' प्रत्यय, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधागत अकार को दीर्घ, 'विण्' का लोप तथा विभक्तिकार्य ।

२-३. **पादभाक्**। पाद + भज् + विण् + सि । पादं भजति । **अर्धप्रभाक्** । अर्ध + प्र + भज् + सि । अर्द्धं प्रभजति । अन्य सभी प्रक्रिया पूर्ववत् ॥१०६४।

## १०६५. सहश्छन्दसि [४।३।६०]

**[सूत्रार्थ]**

नाम के उपपद में रहने पर 'षह मर्षणे' (१।५६०) धातु से वैदिक सञ्ज्ञा के विषय में 'विण्' प्रत्यय होता है ॥१०६५।

**[दु० वृ०]**

नाम्न्युपपदे सहश्छन्दसि **सञ्ज्ञायां** विण् दृष्टः। स च लोके प्रयुज्यते इति वचनम्। तुराषाट्। 'तुरासाहं पुरोधाय' इति॥१०६५।

**[वि० प०]**

सह०। तुरः सहते इति। "**ह्रस्वस्य दीर्घता**" (२।५।२८) इत्युपपदस्य दीर्घत्वम्, तत्रापिग्रहणात् षत्वम्॥१०६५।

**[क० च०]**

सह०। नन्वनेन छन्दःशब्दस्योपेक्षणात् कथमिदं सूत्रं कृतमित्याह—स चेति । विरामविषये व्यञ्जने परे तत्रापिशब्दबलात् सस्य षत्वं स्वरपरे हकारे तुरासाहमिति न षत्वं संज्ञाबलादेव नामोपपदं विशेषणविशेष्यभावस्य प्रयोक्तुरायत्तत्वाद् वा एवं वक्ष्यमाणेऽपि ॥१०६५।

**[समीक्षा]**

'तुराषाट्' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में समान प्रत्यय 'विण् –ण्वि' किए गए हैं । पाणिनि का सूत्र है — "छन्दसि सहः" (अ० ३।२।६३)। पाणिनि के अनुसार 'तुराषाट्' का प्रयोग केवल वेद में ही माना जाएगा, परन्तु कातन्त्र व्याकरण केवल लौकिक संस्कृत से ही सम्बद्ध है, अतः उसमें इसका उल्लेख लौकिक संस्कृत में भी 'तुराषाट्' शब्द को साधु सिद्ध करता है । कुमारसम्भव में कालिदास ने 'तुरासाहम्' का प्रयोग किया है — "[1]तुरासाहं पुरोधाय" ।

**[रूपसिद्धि]**

१. **तुराषाट्**। तुरा + सह + विण् + सि । तुरः सहते । 'तुरा' शब्द के उपपद में रहने पर 'षह मर्षणे' (१।५६०) धातु से प्रकृत सूत्र द्वारा 'विण्' प्रत्यय, "ह्रस्वस्य दीर्घता" (२।५।२८) से दीर्घ, विण् का लोप, सकार को षकार तथा विभक्तिकार्य ॥१०६५।

## १०६६. वहश्च [४।३।६१]

**[सूत्रार्थ]**

नाम के उपपद में रहने पर सञ्ज्ञा अर्थ में 'वह प्रापणे' (१।६१०) धातु से वेद में 'विण्' प्रत्यय होता है ॥१०६६।

**[दु० वृ०]**

नाम्न्युपपदे वहेश्छन्दसि सञ्ज्ञायां विण् दृष्टः । प्रष्ठवाट् , प्रष्ठौहः । वाहेर्वा शब्दस्यौरिति । इदमपि पूर्ववत् ॥१०६६

**[वि० प०]**

वहः। इदमपीति। अस्यापि **लोके** प्रयुक्तत्वादित्यर्थः॥१०६६।

---

१. तस्मिन् विप्रकृताः काले ताडकेन दिवौकसः।
तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः॥(कु० सं०)।

[क० च०]

वहः। प्रष्ठवाड् युगपार्श्वगः ॥१०६६।

[समीक्षा]

'प्रष्ठवाट्, प्रष्ठौहः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने समान प्रत्यय (विण्–ण्वि) किए हैं । पाणिनि का सूत्र है -- "वहश्च" (अ०३।२।६४) । अतः उभयत्र समानता ही कही जाएगी ।

[रूपसिद्धि]

१. **प्रष्ठवाट्** । प्रष्ठ + वह् + विण् + सि । प्रष्ठं वहति । 'प्रष्ठ' शब्द के उपपद में रहने पर 'वह प्रापणे' (१।६१०) धातु से प्रकृत सूत्र द्वारा 'विण्' प्रत्यय, "अस्योपधाया दीर्घो०" (३।६।५) से धातु की उपधा अकार को दीर्घ, "हो ढः" (३।६।५६) से हकार को ढकार, "पदान्ते धुटां प्रथमः" (३।८।१) से ढकार को टकार तथा विभक्तिकार्य ।

२. **प्रष्ठौहः।** प्रष्ठ + वह् + विण् + शस् । प्रष्ठं वहन्ति तान् । 'प्रष्ठ' शब्द के उपपद में रहने पर 'वह्' धातु से प्रकृत सूत्र द्वारा 'विण्' प्रत्यय, उपधादीर्घ, विण्–लोप, "वाहेर्वाशब्दस्यौः" (२।२।४८) से 'वा' को औ, अकार को औकार–औकारलोप तथा विभक्तिकार्य ॥१०६६।

## १०६७. अनसि डश्च [४।३।६२]

[सूत्रार्थ]

'अनस्' शब्द के उपपद में रहने पर 'वह् प्रापणे' (१।६१०) धातु से 'विण्' प्रत्यय तथा 'अनस्' शब्द के अन्तिम सकार को डकारादेश भी होता है ॥१०६७।

[दु० वृ०]

अनस्युपपदे वहेर्विण् दृष्टः, अनसश्च डो भवति । अनो वहतीति **अनड्वान्** । अनडुहीति **रूढित्वात्** ॥१०६७।

[वि० प०]

अन० । अनड्वानिति । **"सौ नुः"** (२।२।४३) इति नुरागमः, अनडुहीति । **"अनडुहश्च"** (२।२।४२) इति वाशब्दस्योत्त्वम् । रूढित्वादिति । अस्यापिशब्दस्य **लोकप्रसिद्धत्वादिदं** वचनमित्यर्थः ॥१०६७।

[क० च०]

अनसि० । सञ्ज्ञात्वाड्डकारः आदेशः । एवं **"अनडुहश्च"** (२।२।४२) इति ज्ञापकात् । तथा अकार **उच्चारणार्थः** ॥१०६७।

[समीक्षा]

'अनस्' शब्द के उपपद में रहने पर 'वह्' धातु से 'विण्' प्रत्यय करके पाणिनि ने 'अनड्वान्' शब्द सिद्ध नहीं किया है। वे 'अनुडुह्' प्रातिपदिक से "चतुरनडुहोरामुदात्तः" (अ० ७।१।९८) से 'आम्' आगम तथा "सावनडुहः" (अ०७।१।८२) से 'नुम्' आगम करके 'अनड्वान्' शब्द सिद्ध करते हैं। अतः यह कातन्त्रकार का एक वैशिष्ट्य ही कहा जाएगा ।

[रूपसिद्धि]

१. **अनड्वान्** । अनस् + वह् + विण् + सि । अनो वहति । 'अनस्' शब्द के उपपद में रहने पर 'वह प्रापणे' (१।६१०) धातु से प्रकृत सूत्र द्वारा 'विण्' प्रत्यय, इज्वद्भाव, दीर्घ, सकार को डकार, लिङ्गसंज्ञा, सि-प्रत्यय, नकारागम, सिलोप तथा हकारलोप ॥१०६७।

## १०६८. दुहः को घश्च [४।३।६३]

[सूत्रार्थ]

कर्म कारक के उपपद में रहने पर 'दुह प्रपूरणे' (२।६१) धातु से 'क' प्रत्यय तथा हकार को घकारादेश होता है ॥१०६८।

**[दु० वृ०]**

कर्मण्युपपदे दुहः को भवति घश्चान्तादेशः । ब्रह्मदुघा गौः-

**गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः।**

**दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ।** (काव्या० १।६) ॥१०६८।

**[क० च०]**

दुहः । **विशेष्यविशेषणभावस्य प्रयोक्तुरायत्तत्वादिह** तत् कर्मणीति सम्बध्यते । अथ क-आदेशो घप्रत्ययः कथं न स्यात् , नैवम्। अन्यत्रेष्टतया घकारस्यानुबन्धत्वं निश्चितम् । अतो घकारो न स्थितिमांस्तस्यानुबन्धत्वेन किञ्चिन्न फलमित्यादेश एव ब्रह्म दोग्धि पूरयति गौर्वाणी **ब्रह्मदुघा** इत्यर्थः । प्रसिद्धप्रयोगमाह — गौर्गौरिति । **'अप्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति'** इति परार्द्धम् । **अस्यार्थः**— गौर्वाणी सम्यक् प्रयुक्ता चेत् कामदुघा गौरिव कामधेनुरिव पण्डितैः स्मर्यते । चेद् यदि दुष्प्रयुक्ता तदा सैव वाणी प्रयोक्तुः प्रयोगकर्तुः गोत्वं वृषत्वं शंसति कथयतीत्यर्थः ॥१०६८।

[समीक्षा]

'कामदुघा, अर्थदुघा' इत्यादि शब्दों के सिद्ध्यर्थ कातन्त्रकार ने 'क' प्रत्यय तथा पाणिनि ने 'कप्' प्रत्यय किया है । पाणिनि का सूत्र है — "दुहः कब् घश्च" (अ० ३।२।७०) । इस प्रकार पकारानुबन्ध के अतिरिक्त उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **ब्रह्मदुघा गौः**। ब्रह्मन् + दुह् + क + आ + सि । 'ब्रह्मन्' शब्द के उपपद में रहने पर 'दुह प्रपूरणे' (२।६१) धातु से प्रकृत सूत्र द्वारा 'क' प्रत्यय, हकार को घकार, स्त्रीलिङ्ग में "स्त्रियामादा" (२।४।४९) से 'आ' प्रत्यय, समानदीर्घ, लिङ्गसंज्ञा, सि-प्रत्यय तथा उसका लोप ।

२. **कामदुधा** । काम + दुह् + क + आ + सि । 'काम' शब्द के उपपद में रहने पर 'दुह' धातु से 'क' प्रत्यय आदि कार्य पूर्ववत् ॥१०६८।

## १०६९. विट् क्रमिगमिखनिसनिजनाम् [४।३।६४]

[सूत्रार्थ]

नाम के उपपद में रहने पर 'क्रम् - गम् - खन् - सन् - जन्' धातुओं से 'विट्' प्रत्यय होता है ॥१०६९।

[दु० वृ०]

नाम्न्युपपदे एभ्यो विड् भवति ।

**अग्रेग्रा उदधिक्राश्च गोषाश्च विषखास्तथा।**
**श्रियं दधतु राजेन्द्र ! तवाब्जासहिला इमे।।**

छन्दसि सञ्ज्ञात्वेन विश्रुता **लोके** प्रयुज्यन्ते इति मतम् ॥१०६९।

[वि० प०]

विट्० । "**विड्वनोरा**" (४।१।७०) इति सर्वत्राकारः ॥१०६९।

[क० च०]

विट्०। नामोपपदमात्रं पूर्वोक्तादेव हेतोः ॥१०६९।

[समीक्षा]

'अग्रेगाः, गोषाः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'विट्' प्रत्यय का विधान किया है । 'गम्' आदि पाँचों धातुओं से सिद्ध होने वाले शब्दरूप वेद में तो प्रयुक्त हैं ही, इनका लोक में भी प्रयोग होता है। इसीलिए कातन्त्रकार ने यहाँ इनके साधुत्वहेतु सूत्र बनाया है । पाणिनि का सूत्र है — "जनसनखनक्रमगमो विट्" (अ० ३।२।६७) । अतः उभयत्र समानता ही है ॥

[रूपसिद्धि]

१. **अग्रेगाः** ब्रह्मा। अग्रे + गम् + विट् + सि । 'अग्रे' शब्द के उपपद में रहने पर 'गम्लृ गतौ' (१।२७९) धातु से प्रकृत सूत्र द्वारा 'विट्' प्रत्यय, "विड्वनोरा" (४।१।७०) से मकार को आकार, समानलक्षण दीर्घ, लिङ्गसंज्ञा, सि-प्रत्यय तथा विसर्गादेश ।

२. **उदधिक्राः** विष्णुः । उदधि + क्रम् + विट् + सि । 'उदधि' शब्द के उपपद में रहने पर 'क्रमु पादविक्षेपे' (१।१५७) धातु से 'विट्' प्रत्यय आदि कार्य पूर्ववत् ।

३. **गोषाः** इन्द्रः । गो + सन् + विट् + सि । 'गो' शब्द के उपपद में रहने पर 'षणु दाने' (७।२) धातु से 'विट्' प्रत्यय आदि कार्य पूर्ववत् ।

४. **विषखाः** शिवः । विष + खन् + विट् + सि । 'विष' शब्द के उपपद में रहने पर 'खनु अवदारणे' (१।५८४) धातु से 'विट्' प्रत्यय आदि कार्य पूर्ववत् ।

५. **अब्जाः** लक्ष्मीः । अप् + जन् + विट् + सि । 'अप्' शब्द के उपपद में रहने पर 'जन प्रादुर्भावे' (३।९४) धातु से 'विट्' प्रत्यय आदि कार्य पूर्ववत् ।।१०६९।

## १०७०. मन्त्रे श्वेतबहुक्थशंसपुरोडाशावयजिभ्यो विण् [४।३।६५]

[सूत्रार्थ]

मन्त्र अर्थ में 'श्वेत' के उपपद में रहने पर 'वह्' धातु से, 'उक्थ' के उपपद में रहने पर 'शंस्' धातु से, 'पुरस्' के उपपद में रहने पर 'दाश्'-धातु से तथा 'अव' के उपपद में रहने पर 'यज देवपूजासङ्गतिकरणदानेषु (१।६०४) धातु से 'विण्' प्रत्यय होता है ।।१०७०।

[दु० वृ०]

एभ्यो विण् भवति मन्त्रेऽर्थे। श्वेतैरुह्यते **श्वेतवा** इन्द्रः। उक्थानि उक्थैर्वा शंसति **उक्थशा** यजमानः। पुरो दाश्यत्येनं **पुरोडाः**। दस्य डत्वं निपातनात्। पुरो दश्यते इति वा अकारान्तश्च निपात्यते। **'सदा पुरोडाशपवित्रिताधरे'** (कादम्बरी-मङ्गलाचरण- श्लोकः) इति। अवयजते **अवयाः**। विगमे व्यञ्जनादौ चैषामन्तस्य डस् – श्वेतवोभ्याम्। उक्थशोभ्याम् पुरोडोभ्याम्। अदन्तपक्षे तु – पुरोडाशाभ्याम्। स्वरादौ तु श्वेतवाहौ, उक्थशंसौ, पुरोडाशौ, अवयाजौ। **मन्त्रे रूढित्वाद्** यथादर्शनं गम्यते। सञ्ज्ञात्वाल्लोके प्रयुज्यन्ते इति मतम् ।।१०७०।

[वि० प०]

मन्त्रे०। श्वेतवा इत्यादि। विरामे व्यञ्जनादौ चैषामन्तस्य डसि कृते डानुबन्धेऽन्त्यस्वरादेर्लोपे **"अन्त्वसन्तस्य चाधातोः सौ"** (२।२।२०) इति दीर्घः । पुरो दश्यते इति वेति । 'दाशृ दाने, दन्श् दशने' (१।५८७, २९०) वेति भावः । विराम इत्यादि । विरामे दर्शितम् । श्वेतवोभ्यामित्यादिना व्यञ्जनादौ डसं दर्शयति । ननु श्वेतैरुह्यते इत्यादौ क्वचित् कर्मणि क्वचित् कर्तरि। डसादेशश्च वचनमन्तरेण कथं प्रतीयते इत्याह — मन्त्र इत्यादि । एतेन **"अन्त्वसन्तस्य चाधातोः सौ"** (२।२।२०) इत्यत्रान्तग्रहणस्योपदेशासन्तत्वप्रतिपादनार्थत्वादिह लाक्षणिकस्य कथं दीर्घः इति देश्यमपास्तम्, **मन्त्रे** तथैव दर्शनात् । अत एव सम्बुद्धावपि दीर्घत्वमेषामेके प्रतिपन्ना इति ।।१०७०।

[क० च०]

मन्त्रे० । मन्त्रविषये संज्ञात्वात् कर्मणि च भवति । श्वेतैः श्वेताश्वेतैरुह्यते या

मन्त्रमयी देवतेति इन्द्र एवात्र मन्त्रे इति मन्त्रविषयत्वम् । उक्थशा इति । उक्थशब्देन ऋग्विषये उच्यते इति मन्त्रविषयता। **पुरोडा** इति। पुरो अग्रे दाशति एनं द्रव्यमिति कर्मणि प्रत्ययः। कर्तृपदेन विशिष्टार्थ उक्तः। यथा सृजन्ति तामिति **स्त्रक्।** पुरोडःशब्देन यज्ञीयद्रव्यमुच्यते। यज्ञे च मन्त्रोऽस्ति मन्त्रविषयताऽस्येति दाश्धातोर्दस्य डत्वं निपातनात् सूत्रनिपातनादित्यर्थः। पुरो दश्यते पक्षे दन्श्धातोर्डाश इति सूत्रे निपातः।

नन्वत्र पक्षे सूत्रेऽनिपातनेन किं फलं पुरोडाश इति क्रियताम्। पुरोडा इत्यादौ च डसि कृते आलोपो भविष्यतीति? सत्यम्, अदन्तपक्षे प्रयोजनमस्तीति। यथा पुरोडाश इति तथा स्वरे डसोऽभावे पुराडाशावित्यादावपि। सदेति पुराडाशेन पवित्रितावधरौ यस्य। यद् वा पवित्रतेति पाठः पुरोडाशेन पवित्रतां धरतीति **पवित्रताधरः।** एतेन पुरोडाशशब्दोऽदन्तोऽपि भवति निपातनाददन्त इति मतम् । एवं पुरोडाश इत्यादि। ननु **छन्दस्येवास्य** प्रयोगस्तत्सिद्ध्यर्थं कथं सूत्रमुच्यते इत्याह — संज्ञात्वादिति। अत एवेति **पञ्जी** सञ्ज्ञाबलादेवेत्यर्थः ॥१०७०।

**[समीक्षा]**

'श्वेतवाः, पुरोडाः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने प्रायः समान प्रत्यय किए हैं तथा प्रायः समान प्रक्रिया भी अपनाई है । पाणिनि का सूत्र है — ''मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्'' (अ० ३।२।७१) । अतः प्रायः उभयत्र समानता ही है ।

**[रूपसिद्धि]**

१. **श्वेतवा इन्द्रः।** श्वेत + वह् + विण् + सि । श्वेतैरुह्यते । 'श्वेत' शब्द के उपपद में रहने पर 'वह प्रापणे' (१।६१०) धातु से 'विण्' प्रत्यय, इज्वद्भाव, दीर्घ, 'वि' का लोप, 'श्वेतवाह्' शब्द की लिङ्गसंज्ञा, 'सि' प्रत्यय, सिलोप, डस् आदेश, डकारानुबन्ध के कारण आकार का लोप, ''अन्त्वसन्तस्य चाधातोः सौ'' (२।२।२०) से दीर्घ तथा सकार को विसर्गादेश ।

२. **उक्थशाः** यजमानः । उक्थ + शन्स् + विण् + सि । उक्थानि उक्थैर्वा शंसति । 'उक्थ' शब्द के उपपद में रहने पर 'शंसु स्तुतौ च' (१।२४१) धातु से प्रकृत सूत्र द्वारा 'विण्' प्रत्यय, नलोप, लिङ्गसंज्ञा, सि-प्रत्यय, धातुघटित उपधा को दीर्घ, सि-लोप तथा सकार को विसर्गादेश ।

३. **पुरोडाः** यज्ञीयपिष्टकम् । पुरस् + दाश् + विण् + सि। पुरो दाशत्येनम् , पुरो दश्यते इति वा। 'पुरस्' शब्द के उपपद में रहने पर 'दाशृ दाने, दशि दंशने' (१।५८७, ९।१०८) धातु से प्रकृत सूत्र द्वारा 'विण्' प्रत्यय, दकार को डकार तथा शेष पूर्ववत् । मतान्तर से निपातन द्वारा अकारान्त रूप भी साधु माना जाता है— ''पुरोडाशः''।

४. **अवयाः।** अव + यज् + विण् + सि। अवयजते। 'अव' उपसर्गपूर्वक 'यज देवपूजासङ्गतिकरणदानेषु' (१।६०८) धातु से प्रकृत सूत्र द्वारा 'विण्' प्रत्यय आदि कार्य प्रायः पूर्ववत् ॥१०७०।

## १०७१. आतो मन् –क्वनिब् – वनिब्-विचः [४।३।६६]

[सूत्रार्थ]

आकारान्त धातु से 'मन् , क्वनिप् , वनिप्' तथा 'विच्' प्रत्यय होते हैं ।।१०७१।

[दु० वृ०]

आकारान्ताद् धातोः 'मन् , क्वनिप् , वनिप् , विच्' इत्येते प्रत्यया भवन्ति। मन् –शोभनं ददातीति **सुदामा**। अश्व इव तिष्ठति **अश्वत्थामा**। क्वनिप् – सुधीवा, सुपीवा। वनिप् -- भूरिदावा, घृतपावा। विच् – कीलालपाः ।।१०७१।

[वि० प०]

आतः । अश्वत्थामेति । सकारस्य वर्णविकारस्तकारः । क्वनिपि **"दा-मा-गायति०"** (३।४।२९) इत्यादिना ईत्वम् ।।१०७१।

[क० च०]

आतो० । अश्व इवेति। अश्वस्येव स्थाम और्जित्यमस्येति **श्रीपतिः** । क्वनिब्वनिपोः पकारः **"धातोस्तोऽन्तः पानुबन्धे"** (४।१।३०) इति तकारागमार्थः । तेन वक्ष्यमाणे प्रातरित्वेति सिद्धम् । इकारः **सुखार्थः**। विचश्चकार **उच्चारणार्थः**। कीलालपा इति **हेमः**। ननु कथमेतत् , कृतेऽपीत्वे निमित्ताभावान्निवर्तिष्यते । न च प्रत्ययलोपलक्षणन्यायेन वाच्यम् , न वर्णाश्रये प्रत्ययलोपलक्षणम् इति प्रतिषेधात् ? सत्यम् । क्वचित् पितुरभावे पुत्रस्य स्थितिरितीकारो न निवर्तते इति **हृदयम्** ।।१०७१।

[समीक्षा]

'सुदामा, अश्वत्थामा, सुधीवा' आदि शब्दरूपों को सिद्ध करने के लिए दोनों ही व्याकरणों में प्रायः समान ही प्रत्यय किए गए हैं। अन्तर यह है कि पाणिनि ने सूत्र में तीन ही प्रत्ययों का पाठ किया है। अतः 'विच्' प्रत्यय की पूर्ति वृत्तिकार ने की है। पाणिनि का सूत्र है –– "आतो मनिन्क्वनिब्वनिपश्च" (अ० ३।२।७४)। अतः अनुबन्धयोजना को छोड़कर अन्य तो प्रायः उभयत्र समानता ही है।

[रूपसिद्धि]

१. **सुदामा**। सु + दा + मन् + सि। शोभनं ददाति। 'सु' उपसर्गपूर्वक 'डु दाञ् दाने' (२।८४) धातु से प्रकृत सूत्र द्वारा 'मन्' प्रत्यय, 'सुदामन्' की लिङ्गसंज्ञा, सि-प्रत्यय, नकार की उपधा को दीर्घ, नकार तथा सि- प्रत्यय का लोप।

२. **अश्वत्थामा**। अश्व + स्था + मन् + सि। अश्व इव तिष्ठति। 'अश्व' शब्द के उपपद में रहने पर 'ष्ठा गतिनिवृत्तौ' (१।२६७) धातु से प्रकृत सूत्र द्वारा 'मन्' प्रत्यय, सकार को तकार, दीर्घ, नकार तथा 'सि' प्रत्यय का लोप।

३. **सुधीवा**। सु + धा + क्वनिप् + सि। 'सु' उपसर्गपूर्वक 'डु धाञ् धारणपोषणयोः' (२।८५) धातु से प्रकृत सूत्र द्वारा 'क्वनिप्' प्रत्यय, ''दामागायति०'' (३।४।२९) से आकार को ईकार तथा विभक्तिकार्य।

४. **सुपीवा**। सु + पा + क्वनिप् + सि। 'सु' उपसर्गपूर्वक 'पा पाने' (१।२६४) धातु से क्वनिप् प्रत्यय आदि कार्य पूर्ववत्।

५. **भूरिदावा**। भूरि + दा + वनिप् + सि। 'भूरि' के उपपद में रहने पर 'डु दाञ् दाने' (२।८४) धातु से 'वनिप्' प्रत्यय तथा विभक्तिकार्य।

६. **घृतपावा**। घृत + पा + वनिप् + सि। 'घृत' शब्द के उपपद में रहने पर 'पा पाने' (१।२६४) धातु से 'वनिप्' प्रत्यय आदि कार्य पूर्ववत्।

७. **कीलालपाः**। कीलाल + पा + विच् + सि। कीलालं पिबति। 'कीलाल' शब्द के उपपद में रहने पर 'पा पाने' (१।२६४) धातु से 'विच्' प्रत्यय एवं अन्य प्रक्रिया पूर्ववत्॥१०७१।

## १०७२. अन्येभ्योऽपि दृश्यन्ते [४।३।६७]

**[सूत्रार्थ]**

आकारान्त भिन्न धातुओं से भी 'मन् - क्वनिप् - वनिप् - विच्' प्रत्यय होते हैं॥१०७२।

**[दु० वृ०]**

अन्येभ्योऽपि धातुभ्य एते प्रत्यया दृश्यन्ते। मन् - सुशर्मा। क्वनिप् - प्रातरित्वा। वनिप् - विजावा। विच् - 'रिश रुश हिंसायाम्' (५।५५) - रेट्, रोट्। दृशिग्रहणं **प्रयोगानुसारार्थम्**॥१०७२।

**[वि० प०]**

अन्ये०। प्रातरित्वेति। प्रातर् - पूर्व **'इण् गतौ'** (२।१३)। **''तोऽन्तश्च''** (४।१।३०)। विजावेति। **''विड्वनोरा''** (४।१।७०) इति॥१०७२।

**[क० च०]**

अन्ये०। विजावा इति। **'जन जनने'** (२।८०)। **'इवि व्याप्तौ'** (१।२०३) इत्यस्य विपूर्वस्य ईदनुबन्धत्वान्नकारागमे ''स्वोर्व्यञ्जने'' (४।१।३५) इति यलोपः। **''विड्वनोरा''** (४।१।७०) इति नकारस्यात्वे इकारस्य यत्वे च विजावेति अन्तस्थायकारवान् स्यात् ॥१०७२।

**[समीक्षा]**

'सुशर्मा, प्रातरित्वा' आदि प्रयोगों के सिद्ध्यर्थ दोनों ही आचार्यों ने प्रायः समान विधान किया है। पाणिनीय व्याकरण में तीन प्रत्ययों का ही ग्रहण सूत्र द्वारा होने के कारण 'विच्' प्रत्यय की पूर्ति वृत्तिकार ने की है। पाणिनि का सूत्र है — ''अन्येभ्योऽपि दृश्यन्ते'' (अ०३।२।७५)। अतः प्रायः उभयत्र समानता ही है।

[रूपसिद्धि]

१. **सुशर्मा।** सु + शृ + मन् + सि। 'सु' उपसर्गपूर्वक 'शृ हिंसायाम्' (८।१५) धातु से प्रकृत सूत्र द्वारा 'मन्' प्रत्यय, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से धातुघटित ऋकार को गुण-अर्, लिङ्गसञ्ज्ञा तथा विभक्तिकार्य।

२. **प्रातरित्वा।** प्रातर् + इण् + क्वनिप् + सि। 'प्रातर्' शब्द के उपपद में रहने पर 'इण् गतौ' (२।१३) धातु से प्रकृत सूत्र द्वारा 'क्वनिप्', "धातोस्तोऽन्तः पानुबन्धे" (४।१।३०) से तकारागम तथा विभक्तिकार्य।

३. **विजावा।** वि + जन् + वनिप् + सि। 'वि' उपसर्ग के उपपद में रहने पर 'जनी प्रादुर्भावे' (१।५३१) धातु से प्रकृत सूत्र द्वारा 'वनिप्' प्रत्यय, "विड्वनोरा" (४।१।७०) से धातुघटित नकार को आकार तथा विभक्तिकार्य।

४. **रेट्।** रिश् + विच् + सि। 'रिश रुश हिंसायाम्' (५।५५) धातु से प्रकृत सूत्र द्वारा 'विच्' प्रत्यय, उसका सर्वापहारी लोप, धातुघटित इकार को गुण् तथा विभक्तिकार्य ॥१०७२।

५. **रोट्।** रुश् + विच् + सि। 'रिश रुश हिंसायाम्' (५।५५) धातु से विच् प्रत्यय आदि पूर्ववत् प्रक्रिया॥१०७२।

## १०७३. क्विप् च [४।३।६८]

[सूत्रार्थ]

सभी धातुओं से 'क्विप्' प्रत्यय होता है॥१०७३।

[दु० वृ०]

धातोः क्विप् च दृश्यते। उखायाः स्रंसते — **उखास्रत्।** पर्णानि ध्वंसते **पर्णध्वत्।** दिव् - अक्षद्यूः। क्रुङ्, प्रत्यङ्, ऊः, कीः, गीः, धूः, लूः॥१०७३।

[दु० टी०]

क्विप्०। अक्षैर्दीव्यति, क्रुञ्चति, प्रत्यञ्चति, वयति, नयति, किरति, गिरति, लुनातीति॥१०७३।

[वि० प०]

क्विप्०। "**स्रसिध्वसोश्च**" (२।३।४५) इति अन्तस्य दकारः। ऊरिति। '**वेञ् तन्तुसन्ताने**' (२।६११) क्विप्, यजादित्वात् सम्प्रसारणे "**वः क्वौ**" (४।१।५३) इति दीर्घः। '**अव रक्ष पालने वा**' (१।२०२), "**श्रिव्यविमवि०**" (४।१।५७) इत्यादिना सर्वस्योट् ॥१०७३।

[क० च०]

क्विप्०। धुर्व्वि धुरिति **वृत्तौ** पाठो नास्तीति **टीकायां** क्रमेण वाक्यदर्शनात्॥१०७३।

[समीक्षा]

'उखास्रत्, पर्णध्वत्' इत्यादि शब्दरूपों के सिद्ध्यर्थ 'क्विप्' प्रत्यय का विधान

दोनों ही आचार्यों ने किया है। पाणिनि का सूत्र है -- ''क्विप् च'' (अ० ३।२।७६)। अतः उभयत्र समानता ही समझनी चाहिए।

**[रूपसिद्धि]**

१. **उखास्रत्।** उखा + स्रन्स् + क्विप् + सि। उखायाः स्रंसते। 'उखा' शब्द के उपपद में रहने पर 'स्रन्सु अवस्रंसने' (१।४८१) धातु से प्रकृत सूत्र द्वारा 'क्विप्' प्रत्यय, सर्वापहारी लोप, ''स्रसिध्वसोश्च'' (२।३।४५) से सकार को दकार, नकारलोप तथा विभक्तिकार्य।

२. **पर्णध्वत्।** पर्ण + ध्वन्स् + क्विप् + सि। पर्णानि ध्वंसते। 'पर्ण' शब्द के उपपद में रहने पर 'ध्वन्सु अवस्रंसने' (१।४८१) धातु से 'क्विप्' प्रत्यय आदि कार्य पूर्ववत् ।

३. **अक्षद्यूः।** अक्ष + दिव् + क्विप् + सि। अक्षैर्दीव्यति। 'अक्ष' शब्द के उपपद में रहने पर 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिकान्तिगतिषु'' (३।१) धातु से प्रकृत सूत्र द्वारा 'क्विप्' प्रत्यय, सर्वापहारी लोप, सि-प्रत्यय, ''च्छ्वोः शूटौ पञ्चमे च'' (४।१।५६) से वकार को ऊकार, इकार को यकार तथा सकार को विसर्गादेश।

४. **क्रुङ्।** क्रुन्च् + क्विप् + सि। क्रुञ्चति। 'क्रुन्च कौटिल्याल्पीभावयोः' (१।४६) धातु से 'क्विप्' प्रत्यय, सर्वापहारी लोप तथा विभक्तिकार्य।

५. **प्रत्यङ्।** प्रति + अन्च् + क्विप् । प्रत्यञ्चति। 'प्रति' पूर्वक 'अन्चु गतिपूजनयोः' (१।४८) धातु से 'क्विप्' प्रत्यय आदि कार्य पूर्ववत्।

६. **ऊः।** वेञ् + क्विप् + सि। 'वेञ् तन्तुसन्ताने' (१।६११) धातु से क्विप् प्रत्यय,सम्प्रसारण, दीर्घ तथा विभक्तिकार्य।

७-१०. **कीः।** कॄ + क्विप् + सि। किरति। 'कॄ विक्षेपे' (५।२१)। **गीः।** गॄ + क्विप् + सि। गिरति। 'गॄ निगरणे' (५।२२)। **धूः।** धुर्व् + क्विप् +सि। 'धुर्वी हिंसार्थः' (१।१९४)। **लूः।** लू + क्विप् + सि। लुनाति। 'लूञ् छेदने' (८।९)। इन प्रयोगों की प्रक्रिया प्रायः समान है।।१०७३।

## १०७४. वहे पञ्चम्यां भ्रंशेः [४।३।६९]

**[सूत्रार्थ]**

पञ्चम्यन्त 'वह' (वहात्) के उपपद में रहने पर 'भ्रन्शु अधःपतने' (३।६३) धातु से 'क्विप्' प्रत्यय होता है।।१०७४।

**[दु० वृ०]**

वहे पञ्चम्यन्तोपपदे भ्रंशेः क्विब् भवति। वहाद् भ्रश्यतीति **वहभ्रट्** ।।१०७४।

**[क० च०]**

वहे०। **'स्कन्धप्रदेशस्तु वहः' इत्यमरः।**।१०७४।

[समीक्षा]

'स्कन्धप्रदेश' अर्थ में 'वह' तथा 'वाह' शब्द का प्रयोग होता है, उसके उपपद में रहने पर 'भ्रन्श्' धातु से क्विप् - प्रत्ययविधानार्थ पाणिनि ने पृथक् सूत्र नहीं बनाया है। ''क्विप् च'' (अ० ३।२।७६) सूत्र से ही वहाँ क्विप् प्रत्यय करके 'वाहभ्रट्' शब्द सिद्ध किया गया है, परन्तु कातन्त्रकार ने तदर्थ पृथक् सूत्र बनाकर इस प्रयोग की ओर विशेष ध्यान आकृष्ट किया है। वस्तुतः यहाँ पाणिनि की रचना में ही लाघव है। पृथक् सूत्र बनाने से कातन्त्र में गौरव ही कहा जाएगा।

[रूपसिद्धि]

१. **वहभ्रट्**। वह + भ्रन्श् + क्विप् + सि। वहाद् भ्रश्यति। 'वह' शब्द के उपपद में रहने पर 'भ्रन्शु अधःपतने' (३।६३) धातु से प्रकृत सूत्र द्वारा 'क्विप्', सर्वापहारी लोप, लिङ्गसञ्ज्ञा, सि - प्रत्यय, ''छशोश्च'' (३।६।६०) से श् को ष्, ''धुटां तृतीयः'' (२।३।६०) से ष् को ड्, ''वा विरामे'' (२।३।६२) से वैकल्पिक ड् को ट्, नकारलोप तथा सिलोप॥१०७४।

## १०७५. स्पृशोऽनुदके [४।३।७०]

[सूत्रार्थ]

'उदक' शब्द से भिन्न नामपद के उपपद में रहने पर 'स्पृश संस्पर्शे' (५।५४) धातु से 'क्विप्' प्रत्यय होता है॥१०७५।

[दु० वृ०]

अनुदके नाम्न्युपपदे स्पृशः क्विब् भवति। घृतं स्पृशतीति **घृतस्पृक्**। मन्त्रेण स्पृशतीति **मन्त्रस्पृक्**। अनुदक इति किम् ? उदकं स्पृशतीति **उदकस्पर्शः**॥१०७५।

[समीक्षा]

'घृतस्पृक्, मन्त्रस्पृक्' इत्यादि प्रयोगों के सिद्ध्यर्थ दोनों ही आचार्यों ने प्रायः समान रूप में ही प्रत्यय किए हैं। पाणिनि का सूत्र है—''स्पृशोऽनुदके क्विन्'' (अ० ३।२।५८)। इस प्रकार पाणिनीय नकारानुबन्ध को छोड़कर उभयत्र समानता ही कही जाएगी।

[रूपसिद्धि]

१. **घृतस्पृक्**। घृत + स्पृश् + क्विप् + सि। घृतं स्पृशति। 'घृत' शब्द के उपपद में रहने पर 'स्पृश संस्पर्शे' (५।५४) धातु से प्रकृत सूत्र द्वारा 'क्विप्' प्रत्यय, सर्वापहारी लोप, लिङ्गसञ्ज्ञा, सि-प्रत्यय, शकार को षकार, षकार को ककार तथा सि-लोप।

२. **मन्त्रस्पृक्**। मन्त्र + स्पृश् + क्विप् + सि। मन्त्रेण स्पृशति। 'मन्त्र' शब्द के उपपद में रहने पर 'स्पृश्' धातु से 'क्विप्' प्रत्यय आदि कार्य पूर्ववत् ॥१०७५।

## १०७६. अदोऽनन्ने [४।३।७१]

[सूत्रार्थ]

अन्नभिन्न नाम पद के उपपद में रहने पर 'अद भक्षणे' (२।१) धातु से 'क्विप्' प्रत्यय होता है॥१०७६।

[दु० वृ०]

अनन्ने नाम्न्युपपदेऽदः क्विब् भवति। शस्यमत्ति शस्यात्। अनन्न इति किम् ? अन्नादः। कणाद इत्यपि दृश्यते॥१०७६।

[समीक्षा]

'आमात्, शस्यात्' आदि शब्दरूपों के सिद्ध्यर्थ दोनों आचार्यों ने जिन क्विप्-विट् प्रत्ययों का विधान किया हैं, उनमें भिन्नता होने पर भी दोनों का सर्वापहारी लोप हो जाता है- इस प्रकार दोनों में समानता ही कही जाएगी। पाणिनि का सूत्र है— "अदोऽनन्ने" (अ०३।२।६८)। अत: उभयत्र समानता ही समझनी चाहिए।

[रूपसिद्धि]

१. शस्यात्। शस्य + अद् + क्विप् + सि। शस्यमत्ति। 'शस्य' शब्द के उपपद में रहने पर 'अद भक्षणे' (२।१) धातु से प्रकृत सूत्र द्वारा 'क्विप्' प्रत्यय, सर्वापहारी लोप, समानलक्षण दीर्घ तथा विभक्तिकार्य।

२. आमात् । आम + अद + क्विप् + सि। आममत्ति। 'आम' शब्द के उपपद में रहने पर 'अद्' धातु से 'क्विप्' प्रत्यय आदि कार्य पूर्ववत् ॥१०७६।

## १०७७. क्रव्ये च [४।३।७२]

[सूत्रार्थ]

'क्रव्य' शब्द के उपपद में रहने पर 'अद्' धातु से 'क्विप्' प्रत्यय होता है॥१०७७।

[दु० वृ०]

क्रव्ये चोपपदेऽदः क्विब् भवति। पुनर्वचनात् पक्वे — क्रव्यात्। अपक्वे तु अणेव। क्रव्यादा राक्षसाः। चतुःसूत्रीयं प्रपञ्चार्थेति॥१०७७।

[वि० प०]

क्रव्ये०। दृशिग्रहणस्य प्रयोगानुसारार्थत्वात् "क्विप् च" (४।३।६८) इत्यनेनैव सिध्यतीत्याह-चतुरित्यादि॥१०७७।

[क० च०]

क्रव्ये०। चतुर्णां सूत्राणां समाहारश्चतुःसूत्री। 'अनन्तश्च समाहारो नदादिषु निगद्यते' इत्युक्तमेव॥१०७७।

[समीक्षा]

'क्रव्यात्' शब्द के सिद्ध्यर्थ दोनों ही व्याकरणों में सर्वापहारी लोप वाले (कात०-क्विप् । पा०-विट्) प्रत्यय किए गए हैं। पाणिनि का सूत्र है — "क्रव्ये च"

(अ० ३।२।६९)। अतः भिन्न भिन्न प्रत्ययों के विहित होने पर भी समानता ही कही जाएगी।

[रूपसिद्धि]

१. **क्रव्यात्** । क्रव्य + अद् + क्विप् + सि। क्रव्यम् = पक्वम् अत्ति। 'क्रव्य' शब्द के पूर्वपद में रहने पर 'अद भक्षणे' (२।१) धातु से प्रकृत सूत्र द्वारा 'क्विप्' प्रत्यय, सर्वापहारी लोप, समानलक्षण दीर्घ, लिङ्गसञ्ज्ञा, सि-प्रत्यय, सि-लोप तथा दकार को तकारादेश॥१०७७।

## १०७८. ऋत्विग् - दधृक् - स्रग् - दिगुष्णिहश्च [४।३।७३]

[सूत्रार्थ]

'ऋत्विक्, दधृक्, स्रक्, दिक्, उष्णिक्' इन क्विप् - प्रत्ययान्त पाँच शब्दों की निपातन से सिद्धि होती है॥१०७८।

[दु० वृ०]

एते क्विबन्ता निपात्यन्ते। ऋतौ यजतीति **ऋत्विक्**। रूढित एव धृषो द्विर्वचनम् - दधृक्। सृजेर्ऋतः परोऽत्, कर्मणि च क्विप् । सृजति तामिति **स्रक्**। दिशेः कर्मणि च क्विप् । दिशति तामिति **दिक्**। ऊर्ध्वं स्निह्यति **उष्णिक्**। उदो दलोपः, षत्वं च, गत्वं तु दृगादित्वात् ॥१०७८।

[समीक्षा]

'ऋत्विक्, स्रक्' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने प्रायः समान सूत्र बनाए हैं। पाणिनि ने 'अञ्चु, युज्, क्रुञ्च्' इन धातुओं का अधिक पाठ किया है। उनका सूत्र है — "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" (अ० ३।२।५९)। इन तीन शब्दों की अधिकता को छोड़कर अन्य तो उभयत्र समानता ही है । 'क्विप्' हो चाहे 'क्विन्'- दोनों का ही सर्वापहारी लोप होता है, अतः भिन्नता नहीं कही जा सकती है ।

[रूपसिद्धि]

१. **ऋत्विक्** । ऋतु+ यज् + क्विप् + सि । ऋतौ यजति । ऋतु शब्द के उपपद में रहने पर 'यज देवपूजासङ्गतिकरणदानेषु' (१/१६८) धातु से क्विप् प्रत्यय, सर्वापहारी लोप, यकार को सम्प्रसारण, उकार को वकार तथा विभक्तिकार्य ।

२. **दधृक्** । धृष्+ क्विप् + सि । 'ञि धृषा प्रागल्भ्ये' (४।१८) अथवा "धृषप्रहसने ' ९/२८९) धातु से क्विप् प्रत्यय, सर्वापहारी लोप, रूढिवशात् 'धृष्' को द्वित्व, अभ्यासकार्य, लिङ्गसंज्ञा तथा विभक्तिकार्य ।

३. **स्रक्** । सृज् + क्विप् + सि । सृजति ताम् । 'सृज विसर्गे' (३।११६) धातु से क्विप् प्रत्यय, सर्वापहारी लोप, रूढिवश (निपातन से ) धातुघटित ऋकार के बाद अकार, ऋकार को रकार तथा विभक्तिकार्य ।

४. **दिक्** । दिश् + क्विप् + सि । दिशति ताम् । 'दिश अतिसर्जने ' (५।३) धातु से कर्म में क्विप् प्रत्यय, सर्वापहारी लोप तथा विभक्तिकार्य

५. **उष्णिक्** । ऊर्ध्व +स्निह् + क्विप् + सि । ऊर्ध्वं स्निह्यति । 'उद् ' शब्द के उपपद में रहने पर 'ष्णिह प्रीतौ '(३/४० ) धातु से क्विप् प्रत्यय, सर्वापहारी लोप, निपातन से उद् -घटित दकारका लोप, सकार को षकार, लिङ्गसंज्ञा, सि-प्रत्यय, सिलोप तथा "चवर्गदृगादीनां च" (२।३।४८) से हकार को गकारादेश ॥ १०७८ ।

## १०७९- सत्सूद्विष्द्रुहदुहयुजविदभिदछिदजिनीराजा-मुपसर्गेऽपि [४।३।७४]

[सूत्रार्थ]

उपसर्ग के तथा उपसर्गभिन्न नाम के उपपद में रहने पर तथा न रहने पर भी 'सद्, सू, द्विष् , द्रुह, दुह, युज्, विद्, भिद्, छिद्, जि, नी' तथा 'राज्' धातु से 'क्विप्' प्रत्यय होता है ॥ १०७९ ।

[दु०वृ०]

एषामुपसर्गेऽनुपसर्गेऽपि नाम्न्युपपदे क्विब् भवति । उपसीदति - **उपसत्**, सत् , सभासत् । द्विषः साहचर्यात् सूरदादिः । प्रसूते- प्रसूः, सूः, अण्डसूः । विद्विट्, द्विट्, मित्रद्विट् । प्रध्रुक् , ध्रुक् , मित्रध्रुक् । प्रधुक्, धुक्, गोधुक् । प्रयुक्, युङ् , अश्वयुक् । संवित्, वित्, वेदवित् । लाभार्थात्र दृश्यते । प्रभित्, भित् , काष्ठभित् । प्रच्छित् , छित् , रज्जुच्छित् । अभिजित्, जित्, अरिजित्। प्रणीः, नीः, सेनानीः। विराट्, राट्, गिरिराट्। **प्रपञ्चार्थमिदम्** ॥ १०७९. ।

[क० च०]

सत्सू० । सूरदादिरिति प्रसवार्थस्यैव (३।८१) सूधातोर्ग्रहणम्, न 'षू प्रेरणे' (५।१८) इति चौरादिकस्येत्यर्थः (तौदादिकस्य)। युङिति । **"युजेरसमासे नुर्घुटि"** (२।२।२८) इति नुरागमः ॥ १०७९ ।

[समीक्षा]

'प्रसूः, गोधुक्, अभिजित् ' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने समानसंख्यक १२ धातुएँ पढ़ी हैं तथा समान प्रत्यय=क्विप् भी किया है । पाणिनि का सूत्र है - "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् " (अ० ३।२।६१)। यह ज्ञातव्य है कि कातन्त्रकार प्रत्येक के ३-३ रूप बनाते हैं । १- उपसर्ग के उपपद में रहने पर, २- नाम के उपपद में रहने पर तथा ३- केवल धातु से । जैसे-अभिजित्, जित्, अरिजित् इत्यादि । परन्तु पाणिनीय व्याख्याकार 'राट्' को छोड़कर अन्य धातुओं के स्वतन्त्र धातुनिष्पन्न रूप नहीं दिखाते, जबकि सूत्रार्थ के अनुसार दिखाए जाने चाहिए। अतः इस अंश के अतिरिक्त अन्य तो सर्वविध समानता ही कही जा सकती है ।

[रूपसिद्धि]

१-३. **उपसत्, सत्, सभासत्** । उप, सभा+सद् + क्विप् +सि । 'उप-सभा' के उपपद में रहने पर 'षद्लृ विशरणे' (५।६०) धातु से क्विप् प्रत्यय, सर्वापहारी लोप, लिङ्गसञ्ज्ञा, सिप्रत्यय, सिलोप तथा "पदान्ते धुटां प्रथमः" (३।८।१ ) से दकार को तकारादेश ।

४-६ **प्रसूः, सूः, अण्डसूः** । प्र, अण्ड+सू+क्विप् + सि । 'प्र, अण्ड' के उपपद में रहने पर 'षूङ् प्राणिप्रसवे' (३।८१) धातु से 'क्विप् ' प्रत्यय आदि कार्य पूर्ववत्।

७-९ **विद्विट्, द्विट् , मित्रद्विट्** । वि, मित्र+द्विष् +क्विप् + सि । 'वि, मित्र' के उपपद में रहने पर 'द्विष अप्रीतौ' (२।६०) धातु से 'क्विप् ' प्रत्यय आदि कार्य प्रायः पूर्ववत् ।

१०-१२. **प्रध्रुक्, ध्रुक्, मित्रध्रुक्** । प्र, मित्र+द्रुह+क्विप् + सि । 'प्र, मित्र' के उपपद में रहने पर 'द्रुह जिघांसायाम् ' (३।३८) धातु से क्विप्, ह को घ, द को ध तथा विभक्तिकार्य ।

१३-१५. **प्रधुक्, धुक् ,गोधुक्** । प्र, गो+दुह+क्विप् +सि । 'प्र,गो' के उपपद में रहने पर 'दुह प्रपूरणे' (२।६१) धातु से क्विप् आदि पूर्ववत् ।

१६-१८. **प्रयुक् , युङ् , अश्वयुक्** । प्र, अश्व+युज् +क्विप् + सि । 'प्र, अश्व' के उप्पद में रहने पर 'युजिर् योगे' (६।७) धातु से क्विप् प्रत्यय आदि कार्य पूर्ववत्। 'युङ्' में 'नु' आगम ।

१९-२१. **संवित्, वित्, वेदवित्**। सम् , वेद + विद् + क्विप् +सि। 'सम्, वेद' के उपपद में रहने पर 'विद ज्ञाने' २।२७) धातु से 'क्विप्' प्रत्यय आदि कार्य पूर्ववत्।

२२-२४. **प्रभित्, भित्, काष्ठभित्**। प्र, काष्ठ + भिद् +क्विप् +सि । 'प्र, काष्ठ' के उपपद में रहने पर 'भिदिर् विदारणे' (६।२) धातु से 'क्विप् ' प्रत्यय आदि कार्य नूर्ववत् ।

२५-२७. **प्रच्छित्, छित्, रज्जुच्छित्**। प्र, रज्जु +छिद् +क्विप् +सि । 'प्र, रज्जु' के उपपद में रहने पर 'छिदिर् द्विधाकरणे' (६।३) धातु से क्विप् प्रत्यय आदि कार्य पूर्ववत् ।

२८-३०. **अभिजित् , जित् , अरिजित्** । अभि, अरि+जि +क्विप् + सि । 'अभि, अरि' के उपपद में रहने पर 'जि जये' (१।१९१ ) धातु से 'क्विप्' आदि कार्य पूर्ववत् ।

३१-३३. **प्रणीः, नीः, सेनानीः**। प्र, सेना+नी +क्विप् + सि । 'प्र, सेना' के उपपद में रहने पर 'क्विप् ' प्रत्यय आदि कार्य पूर्ववत् ।

३४-३६. **विराट्, राट्, गिरिराट्** । 'वि, गिरि' के उपपद में रहने पर 'राजृ दीप्तौ' (१।५३९) धातु से क्विप् प्रत्यय आदि कार्य पूर्ववत् ॥ १०७९ ।

## १०८०. कर्मण्युपमाने त्यदादौ दृशष्टक्सकौ च [४।३।७५]

[सूत्रार्थ]

उपमान त्यदादि के उपपद में रहने पर उपमेय कर्म अर्थ में 'दृशिर् प्रेक्षणे' (१।२८९) धातु से टक् , सक् तथा क्विप् प्रत्यय होता है ॥ १०८० ।

[दु० वृ०]

त्यदादावुपमाने उपपदे कर्मण्युपमेयेऽर्थे कर्मणि दृशष्टक्सकौ भवतः क्विप् च । स्य इव दृश्यते त्यादृशः, त्यादृशी, त्यादृक्षः त्यादृक् । स इव दृश्यते तादृशः, तादृशी, तादृक्षः, तादृक्। एषु समानस्य स इति - सदृशः, सदृशी, सदृक्षः, सदृक्। ''आ सर्वनाम्नः'' (४।६।६९) इति वचनात् - अन्यादृशः, अन्यादृशी, अन्यादृक्षः, अन्यादृक्। त्यदादाविति किम् ? वृक्ष इव दृश्यते । उपमान इति किम् ? स दृश्यते। कर्मणीति किम् ? स इव पश्यति ॥ १०८० ।

[दु० टी०]

कर्म । समानान्ययोश्चेति न वक्तव्यमित्याह- एष्वित्यादि । आत्यादि । आत्यदादाविति सिद्धे यद् ''आ सर्वनाम्नः'' (४।६।६९) इत्याह, तद् बोधयति - अन्यशब्देऽपि भवतीति । ज्ञापकज्ञापिताश्च विधयो लक्ष्यमनुसरन्तीति भावः । त्यदादयो द्विपर्यन्ताः सर्वनामसु पठ्यन्ते । तुल्यतयोपलभ्यमानस्य सदृशादिशब्दवाच्यत्वादवयवार्थावगमेनार्थभावे (?) तादृश्यादिशब्दानां वृत्तिरिति तथैवान्वाख्यानं युक्तं न रूढिवदिति व्यासनिर्देशाश्रयणम्।

**कश्चिद् आह-** कर्मणीति त्यादिविशेषणं तर्हि नास्ति कर्तत्वं तुल्यधर्मातिदेशमात्रं यादृशो ग्रामस्तादृशं नगरमिति । नैवम् । धर्मोऽपि गम्यते , अन्यथा सदृशो ग्रामस्येति स्यात्, तमेवाऽऽत्मानं पश्यति तादृगिति । ननु कर्मकर्तृत्वमेव **दुर्घटम्,** न हि भवति कुशूलमिवात्मानं बिभर्ति भिद्यते कुशूल इति। न च कर्मकर्त्रर्थोऽत्र निर्दिष्टो मन्यते । **रूढिशब्दा** इमे यथाकथञ्चिद् व्युत्पाद्या इतीवार्थो बाधककर्मकर्त्रर्थो दृश्यते इति ॥ १०८० ।

[वि० प०]

कर्मणि० । ''आ सर्वनाम्नः'' (४।६।६९) इत्युपपदस्यात्वम् । समानान्ययोश्चेति न वक्तव्यम् इत्याह- एष्वित्यादि । न ह्यन्यथा दृग्दृशदृक्षेषु समानस्य स इति वचनम् उपपद्यते इति भावः । एवम् आ त्यदादेरिति सिद्धे यद् आ सर्वनाम्नः इति ब्रवीति तज्ज्ञापयति- त्यदादेरन्यस्यापि दृगादिष्वात्वमिति, अतोऽन्यशब्देऽपि उपपदे दृशेष्टगादयः प्रत्ययास्तथा सत्यात्वमित्याह- आ सर्वनाम्न इति ॥ १०८० ।

[क० च०]

कर्म० । उपमीयते येन तद् **उपमानम्** । ननु कर्मणीति संनिहितत्वादुपमान इति त्यदादेर्विशेषणं कथं न स्यात् ततश्च कर्मण्युपमाने त्यदादावुपपदे कर्तरि स्याताम्, यथा

तमिव पश्यतीति ? सत्यम् । उपमेयमन्तरेणोपमानं न सम्भवतीति उपमेयकर्मापेक्षत्वात् कुतः प्रत्ययः, अतः कर्मणीति प्रत्ययविशेषणमिति **हेमः** । त्यदादिश्चात्र भवन्तुपर्यन्तः। ननु त्वमिव दृश्यते यः, अहमिव दृश्यते यः, भवानिव दृश्यते यः इति व्युत्पत्त्या त्वादृशादिशब्दानां कथमुपमाने वृत्तिरुपमेयकर्मणि प्रत्ययविधानात् तस्यैवाभिधानं युक्तम्। तथा च प्रयोगोऽपि दृश्यते -

**कियन्मात्रं जलं विप्र ! जानुदघ्नं नराधिप !**
**तथापीयमवस्था ते न हि सर्वे भवादृशाः।।**

इत्यत्र भवादृशशब्देनोपमेयं कर्मोच्यते न तूपमानम् । न हि सर्वे जना भवादृशा इत्यर्थः। अत्र कश्चिद् यत्रान्यपदं नोपमेयं सम्भवति उपमानस्य सादृश्याभावात् तत्रोपमानस्यैवोपमेयता । यथा - **'रामरावणयोर्युद्धं रामरावणयोरिव'** इति । तद्वदत्रापि त्वादृशादीनां कुतश्चिदुपमानस्याभिधानं यत्र सम्भवति तत्रोपमेयस्याभिधानमित्याचष्टे। **वस्तुतस्तु** क्षणभङ्गुरवादिमते एकस्यापि पुरुषस्येह प्रतिक्षणं हान्युपचयसम्बन्धाद् भेदः पूर्वदृष्टोऽसौ देवदत्त इदानीं नासौ हानेरुपचयाद् वा भेदबुद्धेः। अतो भवानिव दृश्यते भवानित्येकस्यापि भवच्छब्दस्य वाच्यस्य भेदादुपमेयतोपमानता चेत्यदोषः।। १०८०।

[समीक्षा]

'तादृक् , तादृशः' इत्यादि शब्दरूपों के सिद्ध्यर्थ पाणिनि 'क्विन् ' तथा 'कञ्' प्रत्ययों का साक्षात् विधान करते हैं । वार्तिककार ने 'क्स' प्रत्यय से 'तादृक्षः' इत्यादि शब्दरूप सिद्ध किए हैं । सूत्र इस प्रकार है - "त्यदादिषु दृशोऽनालोचने कञ् च " (अ० ३।२।६० ) ! वार्तिक सूत्र है - "दृशेः क्सश्च वक्तव्यः" (अ० ३।२।६०-वा०) । इस प्रकार यदि अनुबन्धभेद को छोड़ भी दिया जाय तो भी पाणिनीय व्याकरण में गौरव तथा कातन्त्र में लाघव स्पष्ट है ।

[रूपसिद्धि]

१-४ **त्यादृशः त्यादृशी, त्यादृक्षः, त्यादृक्** । त्यद् +दृश्+टक् , ई, सक्, क्विप् + सि । स्य इव दृश्यते । 'त्यद्' शब्द के उपपद में रहने पर प्रकृत सूत्र द्वारा 'ट्क्' प्रत्यय, 'ट् - क्' अनुबन्धों का प्रयोगाभाव, "आ सर्वनाम्नः " (अ० ३।६।६९) से दकार को आकार तथा विभक्तिकार्य । स्त्रीलिङ्ग में 'ई' प्रत्यय। 'सक्' प्रत्यय होने पर शकार को ककार, सकार को षकार, 'क् -ष् ' संयोग से 'क्ष् ' -त्यादृशः । 'क्विप्' प्रत्यय होने पर उसका सर्वापहारी लोप- त्यादृक् ।

५-८ **तादृशः, तादृशी, तादृक्षः, तादृक्**। तद् + दृश् + टक्, ई, सक्, क्विप् + सि । स इव दृश्यते । प्रक्रिया पूर्ववत् ।

९-१२. **सदृशः, सदृशी, सदृक्षः, सदृक्** । समान + दृश् + टक्, ई, सक्, क्विप् + सि । समान इव दृश्यते । प्रक्रिया प्रायः पूर्ववत् ।

१३-१६. **अन्यादृशः, अन्यादृशी, अन्यादृक्षः, अन्यादृक्**। अन्य + दृश् + टक्, ई, सक् , क्विप् + सि। प्रक्रिया पूर्ववत् ॥ १०८०।

## १०८१. नाम्न्यजातौ णिनिस्ताच्छील्ये [४।३।७६]

**[सूत्रार्थ]**

जातिभिन्न नाम के उपपद में रहने तथा ताच्छील्य अर्थ के गम्यमान होने पर धातु से 'णिनि' प्रत्यय होता है ॥ १०८१।

**[दु० वृ०]**

तच्छब्देन धात्वर्थो निर्दिश्यते । तदेव शीलमस्य कर्तुरिति विग्रहः । अजातिवाचके नाम्न्युपपदे धातोस्ताच्छील्ये गम्यमाने णिनिर्भवति । उष्णभोजी, धर्मावभाषी। नाम्नीति किम् ? उपभोक्ता, सम्भोक्ता । कथम् उदासारी, प्रत्यासारी, ब्रह्मवादी ? साधौ च - साधु ददातीति **साधुदायी** । साधु करोतीति **साधुकारी**ति वक्तव्यमेव । अजाताविति किम् ? ब्राह्मणानामन्त्रयिता ।

**आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।**
**सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ।।**
**प्रागुत्पत्तिविनाशाभ्यां सत्त्वस्य युगपद् गुणैः ।**
**असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ।।**इत्यन्ये ।

तदा **कुमारवादीति** भवितव्यमेव, अजातित्वात् ॥१०८१।

**[दु० टी०]**

नाम्नि०। जायन्ते ययाऽनुगताः सर्वपदार्थाः इति **जातिः**। सा चाभिन्नबुद्धिध्वनिप्रसवनिबन्धनमनेकव्यक्त्यास्पदमर्थवृत्तिलक्षणमाकाङ्क्षितानवधारितव्यक्तिविशेषणं सामान्यमित्युच्यते, सा च बहुप्रकारा **लोकत** एव प्रसिद्धा । यथा गौरश्वः शकुनिर्मृगो व्याघ्र इति संस्थानाभिव्यज्यमाननियतशरीरा काचिद् 'ब्राह्मणक्षत्रियवैश्यशूद्राः कैवर्तो निषादः' इत्याचारविशेषलिङ्गानुमीयमानस्वरूपा, काचिद् गार्ग्यो बैदः कठः कालाप इति गोत्रचरणाभिधीयमाना प्रतीतिमात्रगम्या इत्याह-आकृतीत्यादि । गृहीतिर्**ग्रहणम्**, आकृतेर्ग्रहणं यत्रेति भिन्नाधिकरणे बहुव्रीहिः । एवं कुमारीभार्येति भवितव्यम् , जातेः पुंवद्भावस्याभावात्। अपरस्मिंस्तु कुमारभार्य इति अजातित्वात् पुंवद्भावः । कथमित्यादि। वक्तव्यं व्याख्येयम्। अनाम्नोऽपि दृश्यते इति, तेन उत्प्रतिभ्यामाङः सर्तेस्ताच्छील्ये भवति अताच्छील्येऽपि दृश्यते साधुशब्दे साधु ददातीति क्रियाविशेषणम् , तथा ब्रह्मणो वद इति **ब्रह्मवादी**। अणोऽपवादः। अथवा **अभिधानादल्** वा-वदनं वदः, ब्रह्मणो वदः । सोऽस्यास्तीतीन् ॥१०८१॥

**[वि० प०]**

नाम्नि०। उत्प्रतिभ्यामाङः सर्तेरिति वक्तव्यम् अनामत्वात् । तथा ब्रह्मणो वद इति । जातित्वात् ताच्छील्याभावाद् वा। साधौ चेति साधुशब्देऽप्यताच्छील्ये क्रियाविशेषणे

न सिध्यतीत्याह- कथमित्यादि । वक्तव्यं व्याख्येयम् । दृशिग्रहणं प्रयोगानुसारार्थम् अनुवर्तते, तत इत्यर्थः । आमन्त्रयितेति । ताच्छील्ये तृन् । आकृतीत्यादिना जातेः **परिभाषामाह-** आक्रियते व्यज्यतेऽनया इति **आकृतिः** संस्थानमुच्यते । गृह्यतेऽनेनेति **ग्रहणम्** । आकृतिरेव ग्रहणं यस्याः सा **आकृतिग्रहणा,** संस्थानव्यङ्ग्येति यावत्। **एतेन** 'गौर्मृगः सिंहो व्याघ्रः' इत्यादिषु विषाणादिमत्संस्थानव्यङ्ग्यत्वाद् **आकृतिग्रहणा** गोत्वादिलक्षणजातिरुक्ता, गुणक्रिया च प्रत्युक्ता संस्थानव्यङ्ग्यत्वाभावात् । न हि गुणक्रिययोरन्वितयोरप्याकारविशेषव्यङ्ग्यताऽस्ति, तयोराश्रयमात्रोपलब्धावुपलब्धेरिति ब्राह्मणत्वादिरूपा तु न संस्थानव्यङ्ग्या, तदधिष्ठानस्य जात्यन्तरेणापि समानत्वात् । अतो लक्षणान्तरमाह - लिङ्गानां च न सर्वभागिति ।

याऽपि लिङ्गानां सर्वं रूपं न भजते, सर्वाणि लिङ्गानि न भजते इत्यर्थः, साऽपि जातिः । यथा ब्राह्मणत्वादिः । सा हि पुंस्त्रियोरेव वर्तते न तु नपुंसके इत्यसर्वलिङ्गभाग् भवति । विध्यर्थं चेदम् । अतः सर्वलिङ्गभाजोऽपि पूर्वेण जातित्वं स्यादेव । यथा तटः, तटी, तटमिति । यद्येवम् , देवदत्तादिशब्दोऽसर्वलिङ्गभाक्त्वाज्जातिशब्दः स्यात्? सञ्ज्ञाशब्दश्चायमिष्यते ? सत्यमेतत् , किन्तु नेदं स्वतन्त्रलक्षणम् , अपि तूपदेशापेक्षम् असर्वलिङ्गभाक्षु ब्राह्मणादिषूपदेशव्यङ्ग्या जातिरित्यर्थः । ननु देवदत्तादिशब्दोऽप्युपदेशमपेक्षते एव। न ह्यनुपदिष्टे देवदत्तादिशब्दं प्रयुङ्क्ते, प्रयुक्तत्वात् तदर्थं प्रतिपत्तुमर्हतीति? तदयुक्तम्, उपदेशार्थापरिज्ञानात् । उपदेशो ह्येकस्यां व्यक्तावेकदा कृतोऽनेकव्यक्तिषु तत्तत्प्रत्ययनिमित्तं भवन् सकलव्यापक इहाभ्युपगम्यते नोपदेशमात्रम्। न चैकद्रव्यसमवायिनो देवदत्तादिशब्दस्यैकस्यां व्यक्तावुपदिष्टस्य व्यक्त्यन्तरानुयायित्वमस्ति तदर्थस्य भेदाभावात्। अथ बाल्यादिभेदाद् भेद इति चेत् तदयुक्तम्। न खलु जातिरिह स्वरूपसामान्यमाश्रीयते द्रव्याणाम् , अपि तु सादृश्यसामान्यम्। येन स्वभावेन भावाः समानाः सदृशाः भवन्ति सा जातिरित्यर्थः । न च बाल्यकौमारयौवनादेरवस्थायाः सादृश्यमस्तीति। अतो यद्यप्यमी यदृच्छाशब्दा नानावस्थमेकमर्थमाचक्षते, तथाप्येकैव सा व्यक्तिरिति न दोषः ।

उपदेशापेक्षत्वमाह- सकृदाख्यातनिर्ग्राह्येति । एतत्तु सर्वस्या एव जातेरुपयुक्तम् । सकृद् एकवारमाख्यातोपदिष्टा सती निश्चयेन ग्राह्या । तथाहि काले धवले वा गोपिण्डे सकृदेकवारम् आख्याता पिण्डान्तरेऽपि गौरिति ज्ञाननिर्ग्राह्या भवति । उपदेशस्य देशकालविक्षिप्तासु अशेषव्यक्तिषु प्रतिव्यक्तिष्वशक्यसाधनत्वादिति । तृतीयलक्षणमाह- गोत्रं च चरणैः सहेति । **'अपत्यं पौत्रप्रभृतिकं गोत्रम् ''** (अ० ४।१।१६२) **इति पूर्वाचार्यैः** परिभाषितमिह गोत्रं गृह्यते । यथा गार्ग्यो वात्स्य इति । यद्यपि गार्ग्यादिषु गार्ग्यत्वादिर्गवादिषु गोत्वादिवदस्ति, तथापि न संस्थानव्यङ्ग्या, तदाश्रयस्य जात्यन्तरेणापि सदृशत्वात् । नाप्यसर्वलिङ्गभाक् । गार्ग्यो गार्ग्यम् इति सर्वलिङ्गदर्शनाद् अतः पृथगुच्यते। तथा कठबह्वृचादिश्चरणशब्दश्चाध्ययनक्रियासम्बन्धेन प्रवृत्तत्वात् क्रियाशब्द एव न जातिशब्दः।

तथाहि कठशब्दोऽप्यध्ययनविशेषमाचक्षाणो यदा तदध्ययनसम्बन्धात् तदध्येतृषु पुरुषेषु वर्तते तदाऽयं चरणशब्द इति क्रियैवास्य प्रवृत्तिनिमित्तम् अतो जातित्वप्रसिद्धये चरणैः सहेत्युक्तम् । **मतान्तरमाह-** प्रागुत्पत्तिविनाशाभ्यामिति । गुणानामजात्यात्मकत्वं दर्शयितुं गुणैरिति विशेषणे तृतीयामाह । अनेकगुणाश्रयश्चार्थो भवतीति बहुवचनम् । **अयमर्थः-** गुणाः खलूपजननापायधर्माणः सत्येव अर्थे उत्पद्यन्ते विपद्यन्ते च, तेनोत्पत्तिविपत्तिधर्मकैरनेकैर्गुणैर्युगपद् विशिष्टो गवादिरर्थे भवति । तस्य चैवंविधस्यार्थस्य यद्रूपान्तरमुत्पत्तिविनाशाभ्यां प्राङ् नोत्पद्यते, न च विनश्यति केवलमुत्पत्तेः प्रभृत्याविनाशमनुगच्छति तत्सामान्यात्मकं गोत्वादिलक्षणं जातिरित्यर्थः ।

ब्राह्मणत्वादिकन्तु नोत्पत्तेः प्रभृत्याविनाशमनुवर्तते । ब्राह्मणो हि तपःश्रुतियोनिसम्बन्धाद् भवति, यथोक्तम् -

**'तपः श्रुतिश्च योनिश्च एतद् ब्राह्मणकारणम्'**। न च तदहर्जातस्य एतत्त्रयमुत्पत्तेः प्रभृत्युपपद्यते । तथा सत्यपि तस्मिन् पिण्डे विमार्गगामिनि क्रियाभ्रंशाद् ब्राह्मणत्वस्य भ्रंश इति नाविनाशमनुवर्तते गोत्वादिवदिति । अतो लक्षणान्तरमाह- असर्वलिङ्गाम् इति। यस्यामपि सर्वं लिङ्गं न विद्यते किन्त्वेकं द्वे लिङ्गे वा भवतः, साऽपि **जातिः**। यथा ब्राह्मणत्वादिः । अत्र मते गोत्रचरणलक्षणाऽप्यसर्वलिङ्गत्वादेव जातिः। यदाह **शाकटायनः- 'गोत्रचरणमत्रिलिङ्गतैव जातिः'** इति। एवं सति देवदत्तत्वादेरपि जातित्वं स्याद् अतस्तन्निरसितुमाह- बह्वर्थामिति। अनेकव्यवक्त्याधारा जातिरित्यर्थः। न चैवं देवदत्तत्वादिरिति। तदेत्यादि। न हि कुमारत्वमुत्पत्तेः प्रभृत्याविनाशमनुवर्तते। तिष्ठत्येव हि देवदत्तादिकेऽर्थे तद् विनश्यति, वयोऽन्तरं चोत्पाद्यते इति । न प्रागुत्पत्तिविनाशाभ्यां कुमारत्वमस्ति इति अजातित्वं स्यादिति। **पूर्वपक्षे** तु कुमारत्ववृद्धत्वादेराकृत्या ग्रहणमस्तीति जातित्वमेवेति **कुमारवादीत्यपप्रयोग** इति ॥१०८१।

**[क० च०]**

नाम्नि० । तच्छब्देनेति । धातोः प्रस्तावात् तस्माण्णिनिर्भवति, अतः प्रस्तुतत्वात् तस्यार्थ एव निर्दिश्यते इत्याह- तच्छब्देनेत्यादि । अयं च प्रकृत्यर्थः, **निर्गलितार्थस्तु** फलनिरपेक्षा प्रवृत्तिस्ताच्छील्यम् इत्युक्तमेव कर्तरि प्रत्ययः, कर्तुश्च ताच्छील्यधर्मोऽस्ति, अतो गम्यमानं ताच्छील्यं तृन्बाधकमिदम् । जायेते अर्थप्रत्ययौ अनया जातिरिति करणे क्तिः, न जातिरजातिस्तस्यां गोत्वादिजातिभिन्नं गुणादिकमजातिशब्देनोच्यते, तस्या अमूर्तत्वान्नास्ति नामत्वम् । अतोऽजातिवाचकं नाम अजातिशब्देनोच्यते इत्याह- अजातिवाचक इति । उष्णभोजीति ।

ननु अनन्तरत्वाद् दृशेरनुवर्तने धर्मदर्शीत्युदाहरणं युक्तम्, कथमिदमुच्यते । न च वाच्यं घञन्तादिनि सति 'धर्मदर्शी' इति सिद्धमेव, वचनवैयर्थ्यात् । सामान्यधातोरनुवृत्तिरिति

यस्मात् कर्मोपपदे तृनो बाधने सूत्रस्य सफलत्वम् ? सत्यम् । दृशिग्रहणस्य प्रयोगानुसारित्वात् तदा कर्मोपपदे तृन् न भवतीति वाच्यम् , स्थितोऽप्यवश्यं चैतदङ्गीकर्तव्यम् , कथमन्यथा उत्प्रतिभ्यामाङः सर्तेः कर्तरि ताच्छील्ये तृन् स्यात् । तथा ब्रह्मवादीत्यादावपि तस्मात् सूत्रबलादेव व्याप्तिर्गम्यते नाम्नीति किमित्युपसर्गस्य नामत्वं डप्रत्ययविधौ ज्ञापितमेव ।

ननु नाम्नीत्यस्याभावे त्यदादीनामनन्तरत्वादेवानुवर्तनं युक्तम् , ततश्च सोदाहरणमपि न सिध्यति इदं वा कथं प्रत्युदाहरणम् ? सत्यम् , अजाताविति प्रतिषेधात् त्यदादीनां नानुवृत्तिः, न हि त्यदादीनां मध्ये वक्ष्यमाणलक्षणेन जातित्वं घटते, येन तत्र व्यावृत्तिः। अथ त्यदादेः पूर्ववस्तुपरामर्शित्वाद् यदा जातिवाचकं गवादिकं परामृश्यते तदा व्यावृत्तिरिति। अजातिविषयेषु वर्तमानेषु भविष्यति, जातिविषयेषु तु वर्तमानेषु न भवति? सत्यम् , अजाताविव्यस्य पदस्य सामान्यस्योपपदत्वकल्पने सामानाधिकरण्येनान्वयः, त्यदादीनामुपपदत्वेऽपि अजाताविव्यस्य वैयधिकरण्येनान्वयः । न हि सामानाधिकरण्यसम्भवे वैयधिकरण्यं कल्प्यते इति न त्यदाद्यनुवृत्तिः, किञ्च त्यदाद्यनुवर्तने तद्विशेषणस्यापि उपमानस्यानुवृत्तिः, ततश्च तमिव भाषितुं शीलमस्येति सापेक्षत्वात् कथं प्रत्ययः, स्थितौ तु विशेष्यनिवृत्तौ विशेषणस्यापि निवृत्तिरिष्टा, उपमानोपमेयभावे आरोपः, **ताच्छील्यं च स्वभावः**। स तत्र कथं घटते इति नोपमानानुवृत्तिरिति **कश्चित्** । तत्र, पण्डितस्येव भाषितुं शीलमस्येति घटनात् । णिनेरिकारः **सुखार्थः** ।

ननु प्रतियोगिज्ञानाधीनमेवाभावज्ञानम् , यदि प्रतियोगी ज्ञायते तदाऽभावो ज्ञातव्यः इति प्रतियोगिनं ज्ञापयितुमाह- आकृतीत्यादि । चरणैरित्यादि । गोत्रं जातिश्चरणं च **जातिरित्यर्थः** । प्रागुत्पत्तिरिति । युगपद् गुणैर्विशिष्टस्य सत्त्वस्य गवादिद्रव्यस्योत्पत्तिविनाशाभ्यां प्राग् यद्धर्मान्तरमवतिष्ठते सा जातिः । **अयमर्थः** - पूर्वं यदेव धर्मान्तरं गोत्वादिर्गवादिव्यक्तेरुत्पत्तिक्षणप्रभृतिविनाशपर्यन्तं गवादिद्रव्यमवलम्ब्यावतिष्ठते, न च व्यक्तौ तस्यां तां विहायावतिष्ठते, तस्या विनाशे तु अन्यस्यां विद्यते एव, अत एव **पञ्जिकाकारः** केवलम् उत्पत्तेः प्रभृत्याविनाशमनुगच्छतीति प्राह- उत्पत्तेः प्रागित्यनेन नित्यत्वलाभः, विनाशात् प्रागित्यनेन विनाशपर्यन्तं स्थितिता प्रतिपादिता, शीतोष्णादिकं तु नोत्पत्तिप्रभृत्याविनाशमनुगच्छतीति तत्र व्यावृत्तिः । गुणैरित्यनेन गुणविशिष्टस्य गवादेरेव धर्मान्तरस्य जातित्वम् , न तु गवादीनां शुक्लादेर्गुणस्य गुणविशेषणानौचित्यात्। युगपदिति । सम्भवपरतयोक्तं बहुवचनमित्यपि तथा ।

संस्थानमिति **पञ्जी** । शरीरमित्यर्थः। तेनैव गोत्वादिस्वरूपा गृह्यते सा जातिरित्यर्थः। शृङ्गाद्यवयवदर्शनादेव गोत्वादिज्ञानोत्पत्तेः। संस्थानव्यङ्ग्यत्वादिति । संस्थानम् आकृतिः, व्यज्यतेऽनेनेति **व्यङ्ग्यम्**। संस्थानमेव व्यङ्ग्यव्यञ्जकं यस्या इत्याकृतिग्रहणत्वादित्यर्थः। प्रत्युक्तेति **पञ्जी** खण्डितेत्यर्थः। गुणक्रिययोरिति। सम्बन्धे षष्ठीयम्। न हि गुणक्रिये

आकारविशेषव्यङ्ग्ये भवतः इत्यर्थः। अन्वितयोरित्यादि। द्रव्यान्वितयोरपीत्यर्थः। आश्रयमात्रेति । आश्रयमात्रस्य केवलद्रव्यस्योपलब्धौ तयोरुपलब्धिः। न तु द्रव्यस्य गवादेर्विषाणादिकसंस्थानापेक्षयोपलब्धिरिति भावः। **कुमारत्वं** तु करचरणादिसंस्थान-व्यङ्ग्यत्वमित्यस्ति भेदः । तदधिष्ठानस्येति । तत्र ब्राह्मणेऽधिष्ठानं यस्य संस्थानस्येत्यर्थः। सर्वभागिति उपपदे सर्वपदं रूपपरम् । विध्यर्थं चेदमिति । न हि सिद्धे सत्यारम्भोऽयं येन नियमाय भविष्युति विधौ सति स्वप्रवृत्तिरेवास्य फलं कथं लक्षणान्तरेण प्राप्तस्य जातित्वस्य बाधा न कर्तुं शक्यते इति भावः । यद्येवमिति। अस्मन्मते पूर्वलक्षणसापेक्षमिदं लक्षणमित्यभिप्रेतम् । इदानीं यदि निरपेक्षत्वमुक्तं तदाऽन्यत्र दूषणं स्याद् इत्यभिप्रायेणोक्तम् - यद्येवमिति । उपदेशशब्दार्थमप्रतिपन्नः सन् पक्षमाह-नन्विति। न ह्यनुपदिष्ट इति उपदेशरहितो जन इत्यर्थः । एकस्यामित्यादि । एतेन षट्कर्मशालित्वं ब्राह्मणत्वमित्यत्र सङ्केतोपदेश इति ध्वनितम् । एतदादिसङ्केतव्यङ्ग्या जातिरित्यर्थः । तदर्थस्येति । तस्य देवदत्तादेरर्थस्य भेदाभावादित्यर्थः। व्यक्त्यन्तरान्वयित्वे सति तदर्थस्य भेदः सम्भवतीति भावः । स्वरूपसामान्यमेवेति । यथा चन्द्रत्वं सूर्यत्वमित्यादि । सादृश्यसामान्यमिति। अस्यैवार्थमाह- येनेति । येन स्वभावेन घटत्वपटत्वादिना भावाः सत्तायोगिनो घटपटादयः शुक्लादिगुणेन विसदृशा अपि सदृशा भवन्ति, घटपटादीनां विसदृशरूपेष्वपि सम्भवात् तद्घटत्वपटत्वादिकं जातिरित्यर्थः ।

नानावस्थमिति। नाना अवस्था यस्य एकार्थस्य सर्वस्येति सर्वलक्षणस्य विशेषणमित्यर्थः। पिण्डान्तर इति। कृष्णेऽपीत्येवेत्यर्थः। ननु लिङ्गानां च न सर्वभागित्यनेनैव गवादीनां जातित्वं सिद्धम् , गुणक्रिययोस्तु न भविष्यति सर्वलिङ्गभाक्तत्वात् । तथा सकृदाख्यातनिर्ग्राह्येत्यनेन च देवदत्तादेर्यदृच्छाशब्दस्य न भविष्यति, किमाकृतिग्रहणा जातिरित्यनेन ? सत्यम् । कुमारत्वतटत्वादीनां सर्वलिङ्गभाक्तत्वाज्जातित्वं न भविष्यति। अथ सकृदाख्यातनिर्ग्राह्येति स्वतन्त्रलक्षणमास्ताम् , तेनैव ब्राह्मणत्वादेर्जातित्वं भविष्यति किं द्वितीयलक्षणेन ? सत्यम् , तदा आकृतिग्रहणा जातिरित्यनेन देवदत्तादेरपि जातित्वं स्यात् , स्थितौ तु न स्यात् । आकृतिग्रहणा जातिरित्यस्यापि सकृदाख्यातनिर्ग्राह्येति विशेषणत्वात् ।

ननु एकव्यक्तावाख्याता गोत्वादिलक्षणा जातिरशेषव्यक्तिषु निर्ग्राह्येति कुतो निश्चितम्। प्रतिव्यक्तिषु भिन्नोपदेशस्येति कथं न स्यादित्याह- उपपदस्येत्यादि। तृतीयमिति। सकृदाख्यातनिर्ग्राह्येति न स्वतन्त्रलक्षणमेवोक्तम्। अतस्तृतीयमेवोक्तम्। तदाश्रयस्येति स एव गर्गादिरेवाश्रयो यस्य संस्थानस्येति विग्रहः। तदा कठबह्वृचादिजातिरिति। अयमपि सर्वलिङ्गभाग् भवतीत्यर्थः। गुणानामिति। उत्पत्तिप्रभृत्याविनाशमनुगच्छतां गवादेः शुक्लादीनां गुणानामित्यर्थः। उष्णशीतबाल्यानां तु उत्पत्तिप्रभृत्याविनाशमनुगमनाभावादेव निरासः, न तदर्थं गुणैरिति विशेषणम् । तर्हि बहुवचनं किमर्थमित्याह-अनेक इति । आर्थो घटपटादिः ।

गुणा इति। खलुशब्दो यस्मादर्थे। यस्माद् गुणा उत्पत्तिविनाशधर्मिण: शीतोष्णादयोऽर्थे गवादौ सत्यपि उत्पद्यन्ते तेन हेतुनेति। परं सुगमम्। नोत्पद्यते न च विनश्यतीति । एतेनोत्पत्तिविनाशाभ्यां प्राग् भवतीति कृत इत्यर्थ:। एतेन वा किं प्रतिपादितं भवतीति केवलमिति। किन्त्वित्यर्थ:। **अयमर्थ:**- नित्यत्वेन स्थितं गोत्वादिकं व्यक्तेरुत्पत्तिलक्षण एव तामवलम्ब्य विनाशपर्यन्तं तिष्ठतीति। योनिश्चेति। विशुद्धमातृपितृकत्वमित्यर्थ:। तदहर्जातस्येति। ननु "**स्यातां यदि पदे द्वे तु**" (२।५।९) इत्यत्र बहुग्रहणाद् बहुव्रीहिरेव, न तत्पुरुषादिकम्। तत् कथमत्र बहुपदे तत्पुरुष: ? न च वक्तव्यम् - तच्च तदहश्चेति कर्मधारये पश्चात् तत्पुरुष: "**राजन्नहन् सखि**" (२।६।४१-१) इति राजादित्वादत् स्यात्? सत्यम् , बहुव्रीहिरेव। जननं जातं तस्मिन्नहनि जातं जन्म यस्येति। न हीति। न च वक्तव्यम् असर्वलिङ्गभाक्तत्वाज्जातित्वम्। कुमार:, कुमारी, कुमारम् इति सर्वलिङ्गभाक्तत्वादिति कुमारवादीत्यपप्रयोग एवेति तदा कुमारभार्येत्यपि तथा जातेरिति पुंवत्प्रतिषेधादिति स्थितम्।। १०८१।

**[समीक्षा]**

ताच्छील्य अर्थ के गम्यमान होने पर 'उष्णभोजी, शीतभोजी, धर्मावभाषी' आदि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'णिनि' प्रत्यय का विधान किया है । पाणिनि का सूत्र है- "सुप्यजातौ णिनिस्ताच्छील्ये" (अ० ३।२।७८)। पाणिनि ने जिसे सुबन्त पद कहा है, कातन्त्रकार ने उसकी 'नाम' संज्ञा की है- 'स्याद्यन्तं च पदं नाम'। अत: 'सुबन्त-नाम' शब्दों के भेद को छोड़कर अन्य तो उभयत्र समानता ही है ।

**[विशेष वचन]**

१. सा च बहुप्रकारा लोकत: एव प्रसिद्धा (दु० टी०)।

२. गोत्वादिलक्षणा जातिरुक्ता (वि० प०)।

३. गोत्रचरणम् अत्रिलिङ्गत्वैव जाति: (वि० प०)।

४. फलनिरपेक्षा प्रवृत्तिस्ताच्छील्यम् (क० च०)।

५. णिनेरिकार: सुखार्थ: (क० च०)।

६. कुमारत्वं तु करचरणादिसंस्थानव्यङ्ग्यत्वम् (क० च०)।

७. षट्कर्मशालित्वं ब्राह्मणत्वम् (क० च०)।

८. एकव्यक्तावाख्याता गोत्वादिलक्षणा जातिरशेषव्यक्तिषु निर्ग्राह्या (क० च०)।

**[रूपसिद्धि]**

**१. उष्णभोजी**। उष्ण + भुज् + णिनि + सि । उष्णं भोक्तुं शीलमस्य । 'उष्ण' शब्द के उपपद में रहने पर 'भुज पालनाभ्यवहारयो:' (६।१४) धातु से प्रकृत सूत्र द्वारा 'णिनि' प्रत्यय, इज्वद्भाव, गुण, लिङ्गसंज्ञा, सि-प्रत्यय, दीर्घ तथा 'न् - सि' का लोप ।

२. **धर्मावभाषी** । धर्म + अव + भाष् + णिनि + सि । धर्ममवभाषितुं

शीलमस्य। 'धर्म + अव' के उपपद में रहने पर 'भाष व्यक्तायां वाचि' (१।४३४) धातु से 'णिनि' प्रत्यय आदि कार्य पूर्ववत् ॥ १०८१।

## १०८२. कर्तर्युपमाने [४।३।७७]

[सूत्रार्थ]

कर्तृवाचक उपमान नामपद के उपपद में रहने पर धातु से 'णिनि' प्रत्यय होता है ॥ १०८२।

[दु० वृ०]

उपमानेऽर्थे नाम्नि कर्तृवाचिन्युपपदे धातोर्णिनिर्भवति। जात्यर्थमताच्छील्याभीक्ष्ण्यार्थं च। उष्ट्र इव क्रोशति उष्ट्रक्रोशी। ध्वाङ्क्ष इव रौति ध्वाङ्क्षरावी। कर्तरीति किम्? शालीनिव कोद्रवान् भुङ्क्ते। उपमान इति किम्? उष्ट्रः क्रोशति। उपपदवाच्यः कर्ता णिन्यर्थस्य कर्तुरुपमानं न्याय्यम्। उष्ट्रस्येव क्रोशनमस्येति वाक्येऽन्तरङ्गसम्बन्धेऽपि गौणत्वमिति ॥ १०८२।

[दु० टी०]

कर्त०। उपपदवाच्य इत्यादि। उपमानोपमेयसम्बन्धो णिनिना द्योत्यते इति वृत्ताविवशब्दो न युज्यते। ननु प्रत्यासत्तेरन्तरङ्गत्वाच्च धात्वर्थस्योपमेयत्वं धातोरुपमेयादिति। कर्ता हि नाम व्यापारवान् भवति कथमीदृशेनोपमानेन ध्वनिरूपस्य धात्वर्थस्योपमेयत्वम्, न च कर्तृसम्बन्धिनोः क्रोशनयोरेवोपमानोपमेयत्वं स्यात्, कर्तर्युपमान इति वचनं विरुध्येत। अतोऽत्र उष्ट्र इव क्रोशति उष्ट्रक्रोशनमस्येति वाक्यार्थो भिद्यते न वस्त्वर्थस्तेनोपमानोपमेयक्रोशनसम्बन्धात् तत्सम्बन्धिनोरपि कर्त्रोरुपमानोपमेयत्वं शक्यते एवानुमानवशात् तदिति, नैवं शक्यम् 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' (का० परि० २) इति भावः॥ १०८२।

[वि० प०]

कर्तरि०। ननूपपदवाच्यः कर्ता उपमानो भवन् धात्वर्थस्य णिन्यर्थस्य वा स्यात्, न तावद् धात्वर्थस्य। क्रियाश्रयो हि कर्ता, स कथं क्रियाया एवोपमानं स्यात्। तन्निबन्धनस्य सदृशभावस्यैवाभावात्। अतो णिन्यर्थस्य कर्तुरुपमानं युक्तमित्याह- उपपदेत्यादि। ननु कथमिदं न्याय्यम् अत्रापि सादृश्याभावात्। न हि उष्ट्रस्योपपदवाच्यस्य णिन्यर्थेन देवदत्तादिना कर्त्रा सादृश्यमस्ति। तस्मात् प्रत्यासत्तेरन्तरङ्गत्वाच्च धात्वर्थस्यैवोपमेयत्वम्, क्रियावतः कर्तुरुपमानत्वमिति। अत्रापि ध्वनिरूपं धात्वर्थं प्रति न युक्तमिति चेद्, एवमेतदुपमानमपि धात्वर्थ एवास्तु उष्ट्रस्यैव क्रोशनमस्येति? तदयुक्तम्, एवं सति 'कर्तर्युपमाने' इति वचनमनर्थकं स्यात्, उष्ट्रस्य सम्बन्धित्वेनोपमानकर्तृत्वस्यानुपपत्तेः। अथेदमेव वाक्यम् - उष्ट्र इव क्रोशतीत्येवंकारं भिद्यते। अर्थाद् उपमानोपमेयभूतक्रोशनसम्बन्धात् तत्सम्बन्धिनोः कर्त्रोरुपमानोपमेयभाव उच्यते? सत्यम्, एवं सत्यनुमीयमानत्वात् कर्तृत्वं गौणं स्यादित्याह- उष्ट्रस्येति। यद्यपीदमन्तरङ्गसम्बन्धं

वाक्यं तथाप्येतन्नाश्रीयते । यतोऽस्मिन् वाक्ये कर्तृत्वमनुमेयत्वाद् गौणम् । न च मुख्यकर्तृत्वे सति गौणकर्तृपरं सूत्रं युज्यते वक्तुमित्यर्थः। **अन्ये** तु यथाक्षरं व्याचक्षाणा अस्यैव वाक्यस्य अन्तरङ्गसम्बन्धस्याप्येतद्वचनार्थानुपपत्त्या गौणत्वमिति समर्थयन्ति, षष्ठीसप्तम्योरर्थं प्रत्यभेदादिति ॥ १०८२।

**[क० च०]**

कर्तरि०। ननु किमर्थमिदं पूर्वेणैव सिध्यतीत्याह-जात्यर्थमिति । कोद्रवानिति । शस्यविशेषानित्यर्थः । कोन इति यस्य ख्यातिः । उपपदवाच्य इति । क्रियाद्वारेणैव सादृश्यात् कर्तुरुपमानोपमेयभाव इति अन्तरङ्गसम्बन्धेऽपीति उपमानोपमेयभावस्य साक्षात् सम्बन्धादिति भावः । गौणत्वं कर्तुरिति शेषः । **पञ्जिका**-क्रियाश्रय इति । **अयमर्थः**- क्रिया कर्तृसाध्या, तां प्रति कथं कर्तुरुपमानत्वम्, कार्यकारणभावविलोपापत्तेः तन्निबन्धनस्य कर्तृनिबन्धनस्येत्यर्थः । न हि उष्ट्रस्योपपदवाच्यस्येति द्रव्यस्य द्रव्यान्तरेण सहोपमानं विना क्रियया गुणेन वा सम्भवतीति भावः । प्रत्यासत्तेरिति । धातोः परस्य णिनेर्विधानात् क्रियैव प्रत्यासन्ना तर्हि **'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः'** (का० वृ० १।२।५६) इति कर्ताऽपि प्रत्यासन्नः इत्याह- अन्तरङ्गत्वादिति । क्रियाद्वारेणैव कर्ता यतः प्रतीयते क्रियावतः इति णिन्यर्थस्य कर्तुरित्यर्थः ।

**सिद्धान्तमाह**- अत्रापीति। ध्वनिरूपं क्रोशनमित्यर्थः। युक्तम् इत्युक्तोऽत्र हेतुः। अथेदमिति। उष्ट्रस्येव क्रोशनमस्येत्येवं वाक्यम् , उष्ट्र इव क्रोशतीति। एवंकारम् एवं कृत्वा भिद्यते, अपि तु न भेदः। तथाप्यनयोर्भेदः, किं कर्तृत्वेनोपमानत्वेन वा? कर्तृत्वेन चेत्, क्रियाश्रयः कर्ता उष्ट्रस्येव क्रोशनमस्येति। अत्रापि कर्तृत्वमस्ति। अथ उष्ट्रस्येव क्रोशनमस्येति वाक्यक्रिययोरुपमानोपमेयभावः। उष्ट्र इव क्रोशतीति वाक्ये कर्त्रोः, अत उपमानोपमेयत्वेन भेद इति वक्तव्यमित्याह-अर्थादिति। एतेनोष्ट्रस्येव क्रोशनमस्येत्यत्र कर्त्रोरुपमानोपमेयभावः सिद्धः। उष्ट्र इव क्रोशतीत्यत्रापि इत्थमेव कर्त्रोरुपमानोपमेयभावः। अनुमीयमानत्वादिति। क्रियाश्रयः कर्तेत्यनेन प्रकारेणानुमीयमानं कर्तृत्वमित्यर्थः।

**अन्ये** त्विति। **अन्ये** यथाक्षरं यथाश्रुतं व्याचक्षाणाः। **अस्मन्मते** कर्तुर्गौणत्वम्, तेषां मते वाक्यस्येति यथाश्रुतव्याख्या। अस्योष्ट्रस्येव क्रोशनमस्येति वाक्यस्यान्तरङ्ग-सम्बन्धस्यापि गौणत्वम् इति हेतोः समर्थयन्ति सूत्रमर्थयन्ति। अन्यथा योजयन्तीति यावत्। तथाहि 'उपमाने कर्तरि' इत्यस्य कोऽर्थः उपमानस्य कर्तुरिति। अस्य मते उपमानस्य क्रोशनस्य कर्तरि उष्ट्रादावुपपदे उष्ट्रस्येव क्रोशनमस्येति वाक्ये एव णिनिः। ननु उपमान इति सप्तम्यन्तत्वे सति कथमुपमानस्य षष्ठ्यन्तरार्थः क्रियते इत्याह-षष्ठीति। षष्ठीसप्तम्योरित्यादि। अस्य मतेऽपि कर्तुर्गौणत्वमत्र विशेषाभावात्। षष्ठीसप्तम्योरर्थं प्रति भेदो नास्तीति व्याख्यानमनादृत्यानेनोष्ट्र इव क्रोशतीति दर्शितम्। तथोपमानस्य

क्रोशनादेः कर्तर्युपमानपदे णिनिरिति सूत्रार्थेऽपरिहार्यत्वेनैव गौणकर्तृपरं सूत्रम्। न ह्युपमाने क्रोशनपदक्रियायां सत्यां मुख्यः कर्ता सम्भवतीति चेत् तथाप्युभयोः समानत्वम्। **अस्मन्मते** मुख्यकर्तृपरस्य सूत्रस्य सम्भवे गौणकर्तृपरत्वमनुचितम्, किन्तु **भवन्मते** षष्ठीसप्तम्योरर्थं प्रति भेदाभाव इत्यतिरिक्तकल्पना।। १०८२।

[समीक्षा]

'उष्ट्रक्रोशी, ध्वाङ्क्षरावी' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'णिनि' प्रत्यय का विधान किया है । पाणिनि का सूत्र है - ''कर्त्तर्युपमाने'' (अ० ३।२।७९)। अतः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **उष्ट्रक्रोशी** । उष्ट्र + क्रुश् + णिनि + सि । उष्ट्र इव क्रोशति । 'उष्ट्र' शब्द के उपपद में रहने पर 'क्रुश आह्वाने' (१।५६४) धातु से प्रकृत सूत्र द्वारा 'णिनि' प्रत्यय, धातुघटित उपधा उकार को गुण तथा विभक्तिकार्य ।

२. **ध्वाङ्क्षरावी**। ध्वाङ्क्ष + रु + णिनि + सि । ध्वाङ्क्ष इव रौति । 'ध्वाङ्क्ष' शब्द के उपपद में रहने पर 'रु शब्दे' (२।१०) धातु से प्रकृत सूत्र द्वारा 'णिनि' प्रत्यय, वृद्धि, आवादेश तथा विभक्तिकार्य ।। १०८२।

## १०८३. व्रताभीक्ष्ण्ययोश्च [४।३।७८]

[सूत्रार्थ]

व्रत तथा आभीक्ष्ण्य अर्थ के गम्यमान होने पर एवं नाम के उपपद में रहने पर धातु से 'णिनि' प्रत्यय होता है ।। १०८३।

[दु० वृ०]

**व्रतं** शास्त्रविहितो नियमः । **आभीक्ष्ण्यं** पौनःपुन्यम् आसेवा वा । नाम्न्युपपदे धातोर्व्रताभीक्ष्ण्ययोर्गम्यमानयोर्णिनिर्भवति । अश्राद्धभोजी, अलवणभोजी । अर्थित्वात् प्रवृत्तौ नियमः सति भोजनेऽश्राद्धमेव भुङ्क्ते न श्राद्धमिति । आभीक्ष्ण्ये - क्षीरपायिण उशीनराः, सौवीरपायिणो बाह्लीकाः । तत्रान्यत् पेयं नास्तीति । रुचिं विनापि क्षीरे तात्पर्यमिति । शीलादन्यदाभीक्ष्ण्यम् ।। १०८३।

[दु० टी०]

व्रता०। जात्यर्थमताच्छील्याभीक्ष्ण्यार्थं च वचनम्। कर्तृविशेषणे हि व्रतग्रहणे कर्तरि णिनिः प्रसज्येत, न तद्वति देवदत्ते। न च पदार्थो नियमः कामचारस्य विशेषेऽवबोधो नियम उच्यते। स च वाक्यार्थो यथा **'नोद्यन्तमर्कमीक्षते'** इति। तस्मात् समुदायोपाधिर्व्रतमाभीक्ष्ण्यसाहचर्याच्चेति। अश्राद्धभोजी। अश्राद्धम् अधिकरणं कर्म च विवक्षावशात्। एवम् अमृन्मयेऽश्नाति अमृन्मयाशी। स्थण्डिले शेते - स्थण्डिलशायी। अर्थित्वादित्यादि। अर्थित्वाद् यथेष्टं भोजनादिप्रवृत्तौ प्राप्तायामर्थान्तराद् व्यावृत्य विशेषे

श्राद्धादाववस्थानाद् व्रतशब्दस्य सन्निधानम् , गमकत्वान्नञ्समासः। णिनिमुत्पाद्य पश्चान्नञ्समास **इत्येके**। अश्राद्धं न भुङ्क्ते तदा व्रतलोपः स्यात्। यथा स्नानं मया कर्तव्यमिति नियमे सति अस्नाने व्रतभङ्ग इत्याह - सतीत्यादि। न हि शीलमन्तरेण तात्पर्यं युज्यते। नैतच्चोद्यमित्याह-तत्रान्यदित्यादि । यथा आतुरस्यौषधपाने शीलमन्तरेणापि **तात्पर्यमिति** भावः ।।१०८३।

**[वि० प०]**

व्रता०। अर्थित्वादिति। अर्थित्वाद् यथेष्टं सामान्येन भोजने प्रवृत्तौ प्राप्तायां सत्याम् अश्राद्धभोजनं शास्त्रविहितमुपलभमानस्य श्राद्धाद् विनिवृत्य विशेषे हि श्राद्धे प्रवृत्तिनियमो व्रतमुच्यते। **नियमश्चात्र द्विविधः** संभवति-अश्राद्धं भुङ्क्त एव। अश्राद्धमेव भुङ्क्त इति वा। तत्रार्थनियमे यदैवाश्राद्धं न भुङ्क्ते तदैव व्रतलोपः स्यात्। न खल्वेतत् शक्यम् , यदश्राद्धं भुञ्जानेन सर्वदा भोक्तव्यमेव, भोजनस्य बुभुक्षाधीनत्वाद् अभोजनलक्षणस्यापि सम्भवाद् अतो द्वितीयं **नियममाह**-सतीत्यादि। आभीक्ष्ण्ये दर्शयति-क्षीरेत्यादि। तत्रापि वचनात् समासान्तसमीपयोर्वेति णत्वम् । ननु चाभीक्ष्ण्यं तात्पर्यम्, तत् पुनस्ताच्छील्यमेव पूर्वेणैव णिनिः सिद्धः, किमनेनेत्याह-तत्रान्यदिति । **यथौषधिपाने** रोगिणः शीलमन्तरेण तात्पर्यम्। तथेदमपीति । किञ्च जात्यर्थं चेदमिति न दुष्यति ।। १०८३।

**[क० च०]**

व्रता०। आसेवा तात्पर्यमित्यर्थः । उशीनरा उशीनरदेशोद्भवा इत्यर्थः । **सौवीरं काञ्जीति** यस्य ख्यातिः, **बदररस इत्यन्ये** । अर्थित्वाद् याचकत्वादित्यर्थः ।।१०८३।

**[समीक्षा]**

'अश्राद्धभोजी ब्राह्मणः, क्षीरपायिण उशीनराः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'णिनि' प्रत्यय का विधान किया गया है। पाणिनि के दो सूत्र हैं- ''व्रते, बहुलमाभीक्ष्ण्ये'' (अ०३।२।८०,८१)। पाणिनीय सूत्रकृत गौरव को छोड़कर उभयत्र प्रायः समानता ही है ।

**[रूपसिद्धि]**

१. **अश्राद्धभोजी** । अश्राद्ध + भुज् + णिनि + सि । अश्राद्धं भुङ्क्ते । 'अश्राद्ध' शब्द के उपपद में रहने पर 'भुज पालनाभ्यवहारयोः' (६।१४) धातु से प्रकृत सूत्र द्वारा 'णिनि' प्रत्यय, ''नामिनश्चोपधाया लघोः'' (३।५।२) से धातुघटित उपधा उकार को गुण, 'अश्राद्धभोजिन् ' की लिङ्गसंज्ञा, सि-प्रत्यय, ''नान्तस्य चोपधायाः'' (२।२।१६) से न् की उपधा इकार को दीर्घ तथा 'सि-न् ' का लोप ।

२. **अलवणभोजी**। अलवण + भुज् + णिनि + सि । अलवणं भुङ्क्ते । 'अलवण' शब्द के उपपद में रहने पर 'भुज् ' धातु से 'णिनि' प्रत्यय आदि कार्य पूर्ववत् ।

३. **क्षीरपायिण उशीनराः।** क्षीर + पा + णिनि + जस् । क्षीरमाभीक्ष्ण्येन पिबन्ति। 'क्षीर' शब्द के उपपद में रहने पर 'पा पाने' (१।२६४) धातु से प्रकृत सूत्र द्वारा 'णिनि' प्रत्यय, यकारागम, नकार को णकार तथा "रेफसोर्विसर्जनीयः" (२।३।६३) से सकार को विसर्गादेश ।

४. **सौवीरपायिणो बाह्लीकाः।** सौवीर + पा + णिनि + जस् । सौवीरं काञ्जीं बदररसं वा आभीक्ष्ण्येन पिबन्ति । 'सौवीर' शब्द के उपपद में रहने पर 'पा' धातु से 'णिनि' प्रत्यय आदि कार्य पूर्ववत् ॥१०८३॥

## १०८४. मनः पुंवच्चात्र [४।३।७९]

**[सूत्रार्थ]**

कर्म कारक के उपपद में रहने पर 'मन ज्ञाने' (३।११३) धातु से 'णिनि' प्रत्यय तथा उपपद को यथासम्भव पुंवद्भाव भी होता है ॥१०८४।

**[दु० वृ०]**

कर्मण्युपपदे मन्यतेर्णिनिर्भवति, अस्मिंश्च णिनिप्रत्ययान्ते धातावुपपदस्य पुंवच्चोपतिष्ठते यथासम्भवम्। पटुम्मन्यते पटुमानी। पट्वीम् मन्यते पटुमानिनी। पुंवच्चेति। पुंवदादिशास्त्रमत्राभिप्रेतम्। तेन खट्वामानिनी, ब्रह्मबन्धूमानिनी। द्रोणीमानिनी इति सिद्धम्।। १०८४।

**[दु० टी०]**

मनः । जात्यर्थमताच्छील्यार्थं च वचनम् । **'मन ज्ञाने'** (३।११३) इत्यस्य प्रतिपदोक्तस्य ग्रहणं न लाक्षणिकस्य । **'मनु बोधने'** (७।९) इत्यस्य **'निरनुबन्धग्रहणे न सानुबन्धकस्य'** (का० परि० ४८) इत्याह- मन्यतेरित्यादि । **अन्य** आह-न कश्चिदिहार्थरूपकृतविशेषः । किन्तूत्तरार्थं शानुबन्धे मन्यतेर्दिवादित्वाद् मनुतेस्तनादित्वाद् उविकरणं प्रसज्येत । एकदेशेनापि समुदाय उपलक्ष्यते । यथा भीमो भीमसेन इत्याह- पुंवच्चेति । कार्यातिदेशे हि खट्वादिषु पुंवद्भावः प्रसज्येतेति भावः । 'देवदत्तेन मन्यते, देवदत्तोऽयं मन्यते' इत्यादौ न भवति, बहिरङ्गकर्मापेक्षत्वात् । **अन्यस्त्वाह**- कर्मणीति स्मर्यते न नाम्नीति ॥१०८४।

**[वि० प०]**

मनः। कर्मण्युपपदे इति। नाम्नीत्यनन्तरमपि न स्मर्यते इत्यर्थः। मन्यतेरिति। 'मनु बोधने' (७।९) इत्यस्य तु तनादिपठितस्य न ग्रहणम् , उकारलोपे लाक्षणिकत्वात्। विशेषस्तूत्तरत्र शानुबन्धे खशि विकरणकृतोऽस्तीति। एकदेशेनापि समुदायोलक्ष्यते। यथा भीमो भीमसेन इत्याह-पुंवच्चेत्यादि। तेन यद् भाषितपुंस्कम्, यद् ऊङन्तम्, यच्च समानायामाकृताविति न वर्तते, तत्र यथाक्रमं सर्वत्र व्यावृत्तिः सिद्धेति। पुंवद्भाषितपुंस्केत्यादिसूत्रे सकलस्यास्य व्यावृत्तिविषयत्वादिति। यदि पुनरिह पुंवच्चेति

कार्यातिदेशः स्यात् तदाऽनेन पुंवद्भावो भवन् खट्वादिष्वपि स्यादिति॥ १०८४।

[क० च०]

मनः। पुंवदिति। ननु यदि शास्त्रमभिमतमत्र तदा 'पटुमानिनी' इत्यत्र कथं पुंवद्भावः, तुल्याधिकरणे पदे तस्य विषयत्वात्। अथास्मादेवातिदेशाद् विषयेऽपि प्रवर्तते इति। अन्यथा तेनैव सिद्धम्, किमनेनेति। तर्हि 'खट्वामानिनी' इत्यत्रापि स्यात्। यथा तुल्याधिकरणपदाभावेऽपि प्रवर्तते। तथा भाषितपुंस्कत्वाभावेऽपि प्रवर्तताmिति न देश्यम्, यस्य भागस्यार्थपरित्यागं विना सूत्रमनुपपन्नं स्यात्, तस्यैव तुल्याधिकरणपदस्याप्यभावे एतत् सूत्रं प्रवर्तते इति तस्मादतिदेशान्नान्यत्र। अन्यथा णिन्यन्तपदे परतः उपपदस्य पुंवद्भावातिदेशो णिन्यन्तपरं च तुल्याधिकरणं न सम्भवतीति कथमतिदेशोऽर्थवान् स्यात्, उपपदं तु भाषितपुंस्कं सम्भवतीति कथमन्यत्र स्यात्।

ननु यदि कार्यातिदेशपक्षेऽनेनैव कार्यं क्रियते इत्यन्यत्र प्रतिषिद्धस्यापि ऊङन्तादेवात्र पुंवद्भावः स्यात् तदा कथम् "**अग्निवच्छसि**" (२।१।६५) इत्यत्र कार्यातिदेशेऽपि तत्रास्त्रियामिति प्रतिषेधान्मातृरित्युक्तं कार्यातिदेशपक्षेऽनेनैव कार्यस्य क्रियमाणत्वात्। अथ "**अग्निवच्छसि**" (२।१।६५) इत्यत्र कार्यातिदेशेऽपि यस्य यदुक्तं तस्य तदेव श्रुतत्वादिति वाच्यं चेत् , तर्हि तत्रापि कार्यातिदेशश्रुतस्याश्रयणे को दोषः? सत्यम् , श्रुतत्वमनादृत्योक्तमिदं यदाद्रियते श्रुतत्वं तदा कार्यातिदेशेऽपि न दोषः। न स्मर्यते इति **पञ्जी**। कारणं चात्र मनधातोः सकर्मकत्वात् कर्मोपपदे निरपेक्षता 'देवदत्तेन मन्यते' इत्यादौ करणादावुपपदे सापेक्षतेति । लाक्षणिकत्वादिति। यद्यप्यनुबन्धकृतलाक्षणिकत्वं नाश्रीयते, तदा **'क्षिष् हिंसायाम्'** (८।३०) इति लाक्षणिकत्वाद् अभ्युपगम्योक्तम् ॥ १०८४।

[समीक्षा]

'पटुमानी, पटुमानिनी, दर्शनीयमानी' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'णिनि' प्रत्यय का विधान किया गया है । कातन्त्रकार ने उपपद में पुंवद्भाव का विधान प्रकृत सूत्र में ही करके लाघव दिखाया है, जबकि पाणिनि ने प्रकारान्तर से ह्रस्वविधानार्थ भिन्न सूत्र बनाया है । पाणिनि के णिनिप्रत्ययविधायक तथा ह्रस्वविधायक सूत्र हैं- "मनः, खित्यनव्ययस्य" (अ० ३।२।८२;६।३।६६)। इस प्रकार कातन्त्रीय लाघव तथा पाणिनीय गौरव स्पष्ट है ।

[रूपसिद्धि]

१. **पटुमानी**। पटु + मन् + णिनि + सि । पटुम्मन्यते । 'पटु' शब्द के उपपद में रहने पर 'मन ज्ञाने' (३।११३) धातु से प्रकृत सूत्र द्वारा 'णिनि' प्रत्यय, उपधादीर्घ, लिङ्गसञ्ज्ञा, सि-प्रत्यय, नकारं की उपधा को दीर्घ तथा 'सि-न् ' का लोप ।

२. **पटुमानिनी**। पट्वी + मन् + णिनि + ई + सि । पट्वीं मन्यते । 'पट्वी'

शब्द के उपपद में रहने पर 'मन्' धातु से णिनि प्रत्यय, पुंवद्भाव, उपधादीर्घ, स्त्रीलिङ्ग में 'ई' प्रत्यय तथा विभक्तिकार्य ॥१०८४।

## १०८५. खश्चात्मने [४।३।८०]

[सूत्रार्थ]

कर्म के उपपद में रहने पर आत्मार्थक 'मन्' धातु से 'णिनि' प्रत्यय तथा 'खश्' प्रत्यय होता हैं ॥१०८५।

[दु० वृ०]

कर्मण्युपपदे आत्मार्थो यो मन्यतिस्तस्माण्णिनिर्भवति खश्च। विदुषीमात्मानं मन्यते **विद्वन्मानिनी, विदुषिम्मन्या।** विद्वांसमात्मानं मन्यते **विद्वन्मानी, विद्वन्मन्यः।** पट्वीमात्मानं मन्यते पटुमानी, पटुम्मन्यः तुल्याधिकरणत्वाण्णिनि पुंवद्भावः। **तादर्थ्यम**त्रार्थद्वारेण। आत्मशब्दः कर्मभूतो वाक्ये **सुखार्थः**। कारकशक्तिभेदाद् भेद इति । एक एव कर्ता कर्म च स्यात् । यथा पीयमानं मधु मदयति । बाह्योऽत्रात्मवचनात् ॥१०८५।

[दु० टी०]

खश०। चकारेण खश् एव समुच्चीयते, अधिकाराण्णिनिर्भवति । यदि पुनश्चकारेण णिनिरनुकृष्यते, तदोत्तरत्रानुवृत्तिर्न स्यात्, खशेव स्यादित्याह- खश्चेति। आत्मशब्दः पराभाववचनः, परो यो न भवति स इहात्मेति न पुनरन्तरात्मा गृह्यते, व्यवच्छेद्याभावात्। **अन्यस्त्वाह**-करचरणादिलक्षणं विहाय को नाम विद्वान् अदृष्टपरिकल्पनमाद्रियते, युक्तं चादृष्टं विहाय दृष्टपरिकल्पनमित्याह-बाह्य इत्यादि। **यस्त्वात्मनीति** सप्तमीं पठति तस्य सामर्थ्यादात्मशब्दो मननक्रियाविषयो भवति, न कर्तृविशेषणमात्मविषयं मन्यतेरित्यर्थः। अपण्डितः पण्डित इवान्यैर्मन्यते, सोऽन्यैर्मन्यमानः स्वयमेवात्मानं पण्डितं मन्यते। किन्तु यथा ऋत्विजिति तादर्थ्यचतुर्थ्यां सुखावबोधने तथा सप्तम्यामिति। एवमपि ज्ञानग्रहणं कर्तव्यमात्मज्ञाने इत्यात्मसम्बन्धिनि ज्ञाने वर्तमानादिति । नैवम् , मनिर्ज्ञान एव वर्तते साकाङ्क्षत्वेऽपि चात्मार्थस्य गमकत्वात् समासः ॥१०८५।

[वि० प०]

खश्०। अधिकृत इव णिनिः प्रवर्तते। चकारस्तु खशमेव समुच्चिनोतीत्याह-खश्चेति। यनि पुनश्चकारेण णिनिरनुकृष्यते, तदा चानुकृष्टत्वादसौ नोत्तरत्र प्रवर्तते, किन्तु खश एव प्रवृत्तिः स्यादिति भावः। आत्मन इति किम्? परार्थे मन्यतौ मा भूत्। पटुमानी देवदत्तस्येति पूर्वेण णिनिरेव। तुल्येत्यादि। खशि तु दीर्घस्योपपदस्येत्यादिना ह्रस्व एव परत्वात्। तादर्थ्यमित्यादि। अर्थद्वारेणेति। मन्यतेरात्मार्थत्वादित्यर्थः। कथं पुनरेकस्यैव कर्मत्वं कर्तृत्वं च कदा युज्यते इत्याह-कारकेत्यादि। परो यो न भवति स इह आत्मा बाह्यः शरीरलक्षण एवोच्यते, न पुनरन्तरात्मा ज्ञानादिगुणाधारः, अत एवात्मग्रहणात्। अन्यथा ज्ञानस्यात्मगुणत्वाद् ज्ञानार्थो मन्यतिः परार्थोऽपि आत्मार्थ एवेति किमात्मनेग्रहणेनेत्याह-बाह्य इति॥१०८५।

[क० च०]

खश्चा०। ननु पुंवच्चेत्यस्यानुवृत्तिर्नास्तीति लक्ष्यते वृत्तावविवरणात्। तत्कथं विद्वन्मानिनीत्यत्र पुंवद्भाव इत्याह-तुल्याधिकरणत्वादिति। एतेन पुंवदित्यत्र न वर्तते तुल्याधिकरणत्वात् पुंवद्भाषितेत्यादिना सिद्धत्वादिति ध्वनितम्। ननु वाक्ये आत्मशब्दप्रयोगाद् आत्मार्थता गम्यते प्रयोगे तदभावात् कथमात्मार्थता प्रतीयते? सत्यम् , आत्ममननं मन्यतेरर्थः। अत्र मननस्यात्मविषयत्वाद्, अतो मन्यतेरर्थद्वारेणैवात्मार्थः प्रतीयते, कुतः आत्मशब्दप्रयोगप्रसङ्ग इत्याह-तादर्थ्यमित्यादि। तादर्थ्यमात्मार्थता अर्थद्वारेणैव मन्यतेर्वाच्यत्वेनेत्यर्थः, तर्हि कथं वाक्ये आत्मशब्दप्रयोगः, मन्यतेरेव तदर्थत्वादित्याह-आत्मशब्द इत्यादि। **कश्चिद** आह-ननु मनधातुर्ज्ञाने पठ्यते तत्कथमात्मार्थो मन्यतिरित्युच्यते? सत्यम् , मनधातोरर्थो ज्ञानम् आत्मार्थं भवति, तद्द्वारा मन्यतेरपि आत्मार्थतेत्युच्यते इत्याह-तादर्थ्यमिति। कारकेति। शक्तिं कारकमिति **वैयाकरणाः**। यदि 'वह्निर्दहति' इत्यादौ शक्तिमतो वह्नेः कारकत्वमुच्यते तदाऽरण्यावष्टब्धायां शक्तौ सत्रपि स शक्तिमान् वह्निर्न दहतीति दूषणम्, प्रथमोपस्थितत्वाच्च शक्तेरेव कारकत्वम् , कारकं च तच्छक्तिश्चेति **कारकशक्तिः**, तस्या भेदः, तस्मादेकस्यापि शक्तिमतो वस्तुनो भेद इत्यर्थः। एतेन शक्तेर्द्वित्वादेकस्यापि द्वित्वम्।

पीयमानमिति । सर्वसादृश्यमत्र नास्तीति, यतोऽत्र क्रियापेक्षया शक्तिद्वयम् । पटुमानिनीत्यत्र तु एकक्रियापेक्षया भेद इति, किन्तु एकस्यापि शक्तिभेदाद् भेद इत्यंशे सादृश्यम्। बाह्य इति **वेदान्तवादिनो** मते एक एवात्मा विभुस्तस्य नास्ति भेद इति आत्मग्रहणव्यावृत्तिरेव नास्ति। आत्मशब्देन शरीरलक्षणमुच्यते। इत्याह-बाह्य इत्यादि। तथा चात्मा शरीरे पुरुषे च, **नैयासिकानां** तु जीवात्मा परमात्मा च, न तन्मते पक्षः।। १०८५।

[समीक्षा]

'दर्शनीयमानी, दर्शनीयम्मन्यः, विद्वन्मानी, विद्वन्मन्यः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'खश् ' तथा 'णिनि' प्रत्यय किए गए हैं । पाणिनि का सूत्र है- "आत्ममाने खश्च" (अ० ३।२।८३)। अतः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **विद्वन्मानिनी**। विदुषी+ मन् +णिनि+ई+सि। विदुषीमात्मानं मन्यते। 'विदुषी' शब्द के उपपद में रहने पर 'मन ज्ञाने' (३।११३ ) धातु से प्रकृत सूत्र द्वारा 'णिनि' प्रत्यय, उपधादीर्घ, "भाषितपुंस्कं पुंवद् वा " (२।२।१४) से 'विदुषी' शब्द को पुंवद्भाव, स्त्रीलिङ्ग में 'ई' प्रत्यय, लिङ्गसंज्ञा, सि-प्रत्यय तथा उसका लोप ।

२. **विदुषिम्मन्या**। विदुषी+ मन+खश् +आ +सि । विदुषीमात्मानं मन्यते।

'विदुषी' शब्द के उपपद में रहने पर 'मन् ' धातु से खश् प्रत्यय, "दिवादेर्यन्" (३।२।३३) से 'यन् ' विकरण, "दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे" (४।१।२०) से ह्रस्व, "ह्रस्वारुषोर्मोऽन्तः" (४।१।२२) से मकारागम तथा विभक्तिकार्य ।

३-४ **विद्वन्मानी, विद्वन्मन्यः।** विद्वस् +मन् +णिनि, खश् + सि । विद्वांसमात्मानं मन्यते । 'विद्वस् ' शब्द के उपपद में रहने पर 'णिनि-खश्' प्रत्यय आदि कार्य प्रायः पूर्ववत् ।

५-६. **पटुमानिनी, पटुम्मन्या।** पट्वी + मन् + णिनि - खश् + सि । पट्वीमात्मानं मन्यते । 'पट्वी' शब्द के उपपद में रहने पर 'मन् ' धातु से 'णिनि-खश् ' प्रत्यय आदि कार्य पूर्ववत् ।

७-८. **पटुमानी, पटुम्मन्यः।** पटु + मन् + णिनि, खश् + सि । पटुमात्मानं मन्यते । 'पटु' शब्द के उपपद में रहने पर 'मन् ' धातु से 'णिनि-खश् ' प्रत्यय आदि कार्य पूर्ववत् ।। १०८५।

## १०८६. करणेऽतीते यजः [४।३।८१]

**[सूत्रार्थ]**

करण कारक वाले नाम के उपपद में रहने पर अतीतक्रियार्थक 'यज देवपूजासङ्गतिकरणदानेषु' (१।६०८) धातु से 'णिनि' प्रत्यय होता है ।।१०८६।

**[दु० वृ०]**

करणवाचिन्युपपदेऽतीते क्रियायां वर्तमानाद् यजतेर्णिनिर्भवति। अग्निष्टोमयाजी, वाजपेययाजी। अग्निष्टोमाख्यैर्यागैः स्वर्गाख्यं फलं भावितवानित्यर्थः। स्वर्गशब्दस्तु वृत्तावन्तर्भूतो वाक्ये न प्रयुज्यते। यदि विशेषव्यापारः सामान्यव्यापारस्य करणं तत्कथम् अग्निहोत्रं जुहुयात् स्वर्गकामः? **अपौरुषेयाणि वेदवाक्यानीति।** अतीत इति किम्? अग्निष्टोमेन यजति । करण इति किम् ? ग्रामे यजति स्म, अविवक्षितकरणत्वात् ।।१०८६।

**[दु०टी०]**

करणे०। अतीतमतिक्रान्तं प्रकृतिविशेषणं चैतत् ।तस्याः प्रकृतेः स्वस्मिन्नभिधेये यद्गुणीभूतायामतीतविशेषणं न सम्भवतीति शब्दे कार्यस्यासम्भवादर्थे कार्यं विज्ञायमानं तादर्थ्यस्य विशेषणमित्याह-अतीतक्रियायां वर्तमानादिति। कर्तृविशेषणेऽतीतेऽग्निष्टोमयाज्ययं वटुरिति न सिध्यति। येषां क्रिययैव काल इति दर्शनं तेषामधिकरणमन्तरेणापि कालनिर्देश एवायम्। येषामपि व्यतिरिक्तः कालस्तेषामपि क्रियाया विशेषा एव तेषामभिव्यञ्जका भेदका वेति तद्ग्रहणेन तस्यापि ग्रहणमेवेति। यद्येवं निष्ठायामितरेतराश्रयत्वात् तदप्रसिद्धिः।

नैतदेवम्, स्वभावतोऽयमतीतः क्तान्तशब्दोऽतिक्रान्ते वर्तते। यद्येवम्, णिनिप्रभृतयोऽप्यतीतशब्दत्वात् स्वभावादतिक्रान्तो वर्तिष्यन्ते? सत्यम्, स्वाभाविकमेव शब्दैरर्थानामभिधानम्, किन्तु प्रतिपत्तिवशादतीतविधानम्। यथाहि सर्वेषामतीतशब्दोऽतिक्रान्ते प्रतीतो न तथा णिनिप्रभृतयः ।

अथवा अत्रातीतशब्दो न व्युत्पाद्यते किन्तर्ह्यतीतो भावी भूतो निपातनादतिक्रान्ते वर्तते । ननु यजिरयं सकर्मकोऽग्निष्टोमादयः कर्तव्यत्वात् कर्म भवन्ति न करणानि । **केचिद्** आहुः अग्निष्टोमादिनिबन्धना ग्रन्था इहाग्निष्टोमादयस्तैरग्निष्टोमाख्यैर्विधानैर्यो हरिः प्रक्षिप्तवान् न तु दत्तवान् सोऽग्निष्टोमयाजी । नैवम्, **उपचार**परम्परया न वेदार्थ इति, अग्निष्टोम इति यागविशेष उच्यते, तस्य कर्तव्यता-यजेत । यागं कुर्यादिति सम्बन्ध उपपद्यते फलप्रदं च श्रूयते । स्वर्गकाम इति । स्वर्गं कामयते स्वर्गं करोतीति गम्यते । यस्माद् यत् काम्यते तत् क्रियते नैतदपि ? सत्यम् , न हि स्वर्गकामो यजेतेति वाक्ये यागस्य साधनत्वं गम्यते, प्रत्यक्षानुमानयोरविषयत्वात् । योऽपि शब्दो यजेतेति सोऽपि यागस्य कर्तव्यतामाचष्टे न फलस्येति । तस्मादग्निष्टोमेन स्वर्गकामो वसन्ते ज्योतिषा दर्शपौर्णमासाभ्यां यजेतेत्येवमादीनां स्वर्गफलभावनायां करणत्वम्, स्वर्गस्य भवतो या भावना उत्पादना यजमानसम्बन्धी व्यापारस्तत्राग्निष्टोमादिः करणमित्याह-अग्निष्टोमाख्यैरित्यादि।

न चाग्निष्टोमादिव्यतिरेकेण यजमानस्य भावनाख्यो व्यापारो नास्ति तत्र यागः करणमिष्यते। नैतदेवम्, विशेषव्यापारेऽपि सामान्यव्यापारोऽस्ति विशेषस्य सामान्यानतिरिक्तत्वात् सामान्यव्यापार एव हि फलार्थिनो बुद्धौ संनिविशते, तस्मात् सामान्यव्यापारे यज्ञस्योत्पादने विशेषव्यापारोऽग्निष्टोमादियागः स्वर्गभावकः करणम्। अथ यागस्य करणत्वे किं कर्मेति एकवाक्योपनीतं स्वर्गादिफलमिति ब्रूमः। न च 'स्वर्गकामः' इत्यस्य फलस्यान्यपदार्थे गुणीभूतस्य यजेतेति कर्तव्यतावचनेन समसम्बन्धो न युज्यते। नैवम्, यदप्युक्तितोऽन्यपदार्थस्य प्राधान्यम्, अर्थतस्तु स्वर्गस्यैवोपमेयतया तदुपायान्वेषणदशायां च यागः श्रूयमाणः उपायतया विज्ञायते, वाक्यगम्यत्वात् कार्यकारणभावस्य । कथं यागः कर्तव्यता विभक्तिश्रूयमाणा तस्मादाक्षिप्तफलपदेन सम्बन्धयितुं शक्यते। तदुच्यते, अभिहितमेतद् यागस्य कर्तव्यता नोपपद्यते, सिद्धरूपस्य करणत्वेनोपादानात् । सन्निहितं च फलपदं यदा तेन स्वर्गस्य सम्बन्धो न युक्तो हेतुरितिं अन्तरङ्गसम्बन्धे पदवाच्येऽनुत्पन्ने बहिरङ्गोऽपि न स्यात्। मा भूद्, आनर्थक्यमिति तत्रोच्यते 'काष्ठैः स्थाल्यामोदनं पचेतात्मकामः' इति किमत्र प्रधानं विधीयमानत्वात् पाक इति साधनानामन्येषामुपायत्वाभावः। यथा- 'तैलं पक्वं घृतं पक्वम् ' इति पच्यमानान्यपि द्रव्यान्तराणि न व्यपदिश्यन्ते एवम् अग्निष्टोमेन स्वर्गकामो यजेतेतिं अयागप्रतिषेधेन यागस्य विधीयमानत्वात् प्राधान्यं कर्मार्थः प्रतिपद्यते यागेन यागं कुर्यादिति सम्बन्ध उपपद्यते चेद्, नैवम्। स हि

यागः क्रियमाणः केनचित् क्रियतामिति तदुपायत्वात् करणत्वमन्वयितव्यम्, यद्यपि अग्निष्टोमादयो यागविशेषाः कर्मविवक्षातः करणं भवति तथा मन्दं गच्छति, मन्दया गत्यागच्छतीति सकर्मकापि अविवक्षितकर्मका भवति, यजते यजनकाले उपतिष्ठते। 'विकुर्वते सैन्धवाः' इति, यद्येवमुपायेऽपि यजेः परस्परसम्बन्धादनर्थकता ॥१०८६।

[वि० प०]

करणे०। अग्निष्टोमेनेष्टवान् **अग्निष्टोमयाजी**। एवं वाजपेययाजी। अग्निष्टोमाख्यैरित्यादि । एतेन स्वर्गफलभावनायाम् अग्निष्टोमादेः करणत्वमिति दर्शितम्। तथाहि स्वर्गस्य भवतो भावना उत्पादना यजमानसम्बन्धी व्यापारः, तदग्निष्टोमः करणम् , तेन हि स्वर्गमुत्पादयतीति । ननु चाग्निष्टोमादिव्यतिरेकेण यजमानसम्बन्धी व्यापारो भावनाख्यो नास्त्येव, तत्कथं यागः करणमिष्यते? नैवम् , एवं विशेषव्यापारेऽपि सामान्यव्यापारोऽस्ति, विशेषस्य सामान्यव्यभिचाराभावात्। सामान्यव्यापार एवादौ फलार्थिनो बुद्धौ संनिविशते। तथाहि स्वर्गकामेन स्वर्गः कर्तव्यः इति सामान्यव्यापारमेव बुद्धावारोपयति । ततः केन क्रियताम् इत्युपायमनुसरन् **'अग्निष्टोमेन स्वर्गकामो यजेत' इति श्रुतेः**। अग्निष्टोमस्यैव स्वर्गभावनायां करणत्वमाश्रयति, तस्मात् सामान्यव्यापारे स्वर्गस्योत्पादने विशेषव्यापारोऽग्निष्टोमादिको यागस्तत्साधकतमत्वात् करणम् । ननु करणं तदेव भवति येनावच्छिन्नकर्तृव्यापारः फलमुत्पादयति । तथा चाह-

**करणं खलु सर्वत्र कर्तृव्यापारगोचरः ।**
**तिरोदधाति कर्तारं प्राधान्यं तन्निबन्धनम् ।।**

न चाग्निष्टोमादिः स्वर्गफलभावनाविषयो भाव्यमानस्य स्वर्गस्य जन्मान्तरेऽभावाच्च क्षणिकत्वाच्च यागस्य तत्कालावस्थानानुपपत्तेः कथं करणत्वमिति ? सत्यम् , यागः स्वर्गस्य किञ्चित् कृत्वा विनश्यति, तत्कामिभिरनुष्ठीयमानत्वाद् वृक्षमूलानुष्ठितसेचनवत्। यथा फलार्थी वृक्षस्योदकमासिञ्चति । न च सेककर्मफलकालमनुवर्तते ततस्तेनाहितसंस्कारो वृक्षः फलाय कल्पते, तथा यागोऽपि किञ्चिदपूर्वं कृत्वा विनश्यति तच्चापूर्वं यागस्यावान्तरव्यापारतया शक्तिरिति तद्द्वारेणैव स्वर्गफलभावनायां यागः करणम्। एतेनैतदपि देश्यमपास्तम्, तर्हि अपूर्वनिष्पत्तौ यागः करणम् अपूर्वं च स्वर्गभावनायामिति, अपूर्वद्वारेण यागस्यैव करणत्वात्। न हि स्वव्यापारव्यवायः कारकाणां कारकभावमुपहन्ति, सर्वत्र तथाभावप्रसङ्गात् , न हि पाके करणभूतानां काष्ठानां ज्वलनमवान्तरव्यापारस्तेषां करणत्वमुपहन्तीति। तदुक्तम् -

ज्वलनाज्जायमानेऽपि पाके तत् समनन्तरम् ।
काष्ठानां करणत्वं यत् प्रागुक्तं तन्न हीयते ।।
स्वर्गादिफलमप्येवमपूर्वानन्तरं भवत् ।
देशनालक्षणं यागकरणत्वं न हापयेत् ।।

तत्र यद्यसौ यागः स्वर्गफलभावनां प्रति साधनत्वेन क्रियमाणः कर्मतामनुभवति, तथापि तस्य शक्तिभेदात् करणत्वं न विरुध्यते । यथा 'पीयमानेन मधुना मत्तः' इति। अत्र कर्मत्वमनुभवतो मधुनः करणत्वम् । यदीत्यादि । पुरुषा हि रागाद्युपहतचेतसो विपरीतमप्यर्थमभिदधतीति तत् कृतस्येव दोषप्रसङ्गो न तु अपौरुषेयेषु ।

एतदुक्तम् -

**दोषाः सन्ति न सन्तीति पौरुषेयेषु युज्यते ।**
**वेदे कर्तुरभावाच्च दोषाशङ्कैव नास्ति नः ।।इति ।। १०८६।**

**[क० च०]**

करणे०। **''स्वं रूपं शब्दस्याशब्दसंज्ञा''** (का० परि० २८) इति न्यायेन करणसंज्ञकस्यैव न शब्दस्वरूपस्य ग्रहणम्। ननु 'अतीते' इति कर्तृविशेषणं कथन्न स्याद् इत्यतीते कर्तरीति तदायमग्निष्टोमयाजीति प्रयोगो न स्यात्। न च वक्तव्यम्, अत्र कालाधिकारोऽस्ति येन तस्य विशेषणं भविष्यति? सत्यम्, अतीतपदं प्रकृतेरेव श्रुताया न चाश्रुतस्य कर्तुः। अथ 'यज' इति पदेन स्वरूप एव प्रतीयते शब्दस्वरूपस्य चातीते प्रतीतिर्नास्तीति कुतः प्रकृतेर्विशेषणम्, नैवम्, शब्दे कार्यासम्भवादर्थे कार्यमिति। 'अतीत' इति यजेरर्थस्य विशेषणम्। तेनायमर्थः- अतीते धात्वर्थे वर्तमानादित्याह - अतीतक्रियायामिति। अग्निष्टोमयाजीति। ननु अग्निष्टोमो हि यागो यजेरर्थः स एव कथं करणं तस्य कर्तृसाध्यत्वादित्याह - अग्निष्टोमाख्यैरिति । एतेन स्वर्गभावना यजेरर्थः इति समर्थितम् । भावितवान्- उत्पादितवानित्यर्थः । एतेनाग्निष्टोमशब्देन नाग्निष्टोमविधायकं शास्त्रमुच्यते । अन्तःकरणत्वमस्तीति **कश्चिद्** आह । तन्निरस्तम्, उपचारपरम्परया न वेदार्थः ।

ननु यदि स्वर्गस्योत्पादना यजेरर्थः प्रतीयते तदा स्वर्गशब्दप्रयोगोऽयुक्त इत्याह- स्वर्गशब्द इति। स्वर्गशब्दः पुनर्वृत्तौ समासे न प्रयुज्यते इत्यर्थः। अन्तर्भूत इति चेद् यजेरर्थेऽन्तर्भूत इत्यर्थः। वाक्ये त्वर्थकथनेन स्पष्टार्थं प्रयुज्यते इति। **पञ्जिका-करणं** खल्विति। **'तिरोदधाति कर्तारं प्राधान्यं तन्निबन्धनम्'** इति परार्द्धम्। **अस्यार्थः-** कर्तारं तिरोदधाति व्यवधत्ते क्रियासिद्धेस्तदन्तर्भावित्वात्, तर्हि करणस्यैव प्राधान्यं तत् कथं स्वतन्त्रः कर्तेत्याह-प्राधान्यमिति ।कर्तुः प्राधान्यं तन्निबन्धनं यस्मादेवम्भूतस्यापि करणस्य कर्ता प्रेरक इति स्वतन्त्रः कर्ता भवति । भाव्यमानस्येति । अथ यागो हि जन्मान्तरभाविनं स्वर्गमनुगच्छतीति वक्ष्याम इत्याह-क्षणिकत्वादिति किञ्चिदिति । अपूर्वमित्यर्थः। **अयमर्थः- चत्वारि प्रमाणानि** प्रत्यक्षोपमानानुमानशब्दभेदात् तत्रान्येषामसम्भवात्। अग्निष्टोमेन स्वर्गकामो यजेदिति विधिवाक्यदर्शनादनुमानमत्र प्रमाणम्। तत्रापि पक्षसाध्यहेतुदृष्टान्तान्तरेणैवानुमानसिद्धिः। यथा 'पर्वतोऽयं वह्निमान् धूमात्, महानसवत्' इत्यत्र पर्वतः पक्षः, वह्निमत्त्वं साध्यम्, धूमादिति हेतुः, महानसवदिति दृष्टान्तम्। तद्वदत्रापि यागः

पक्षः स्वर्गस्य किञ्चित् कृत्वा विनश्यतीति साध्यम्, तत्कामिभिरनुष्ठीयमानत्वादिति हेतुः। तत्कामिभिः स्वर्गकामिभिरित्यर्थः। वृक्षमूलेत्यादि दृष्टान्तम्, तेनानुमानसिद्धिः, तच्चेति। तदपूर्वं यागादेः शक्तिरवान्तरव्यापारतया तद्द्वारेणेति अपूर्वशक्तिरेव द्वारम्, तेनेत्यर्थः। तथा च द्वारलक्षणम् - तज्जन्यत्वे सति तज्जन्यजनको द्वारमिति। व्यापारश्च स एव तेन यागेन जन्यः सन् यागेन जन्यं स्वर्गं जनयति, तद्द्वारकमित्यर्थः। अपूर्वं च स्वर्गफलभावनायां करणमित्यर्थः। स्वर्गव्यापारोऽपूर्वं व्यवायो व्यवधानता तथाभावप्रसङ्गात् करणत्वाभावप्रसङ्गादित्यर्थः। अथैव विना कारणत्वं कुत्रापि नास्तीति सर्वत्र तथात्वं प्रतिपादयन्नाह-नहीति। तत्समनन्तरं तस्य ज्वलनस्य समनन्तरं सम्यगव्यवहितं यथा स्यात् तथा जायमाने क्रियमाणे इति क्रियाविशेषणं प्रागुक्तम्, नहि स्वव्यापारव्यवाय इत्यादिना प्राक् साधकतमं करणमिति यदुक्तं तन्न हीयते त्याज्यं न भवतीत्यर्थः। एवं स्वर्गादिकफलमप्यपूर्ववान् अन्तरं भवत् किम्भूतं देशनालक्षणं दिश्यते धर्माधर्मावनयेति देशना श्रुतिस्तया लक्ष्यते यत् फलं तद् यागस्य करणत्वं न हापयेदित्यर्थः।

ननु अपूर्वकल्पनया किं प्रयोजनम् , यागध्वंस एव स्वर्गफलभावनायां करणं भविष्यति, यथा विघ्नध्वंसो मङ्गलस्य कारणम् । न च ध्वंसस्य स्वर्गफलभावनकालमवस्थानं नास्ति, तस्य विनाशात् । अन्यथा अभावस्याभावो भाव एव । देवदत्तस्य पितामहादीनां पुनरावृत्तिः कथन्न स्यात्? सत्यम्। बहुवित्तप्रयासे कर्मणि पुरुषप्रवृत्तिर्न स्यात्। उभयथापि ध्वंसस्य तुल्यत्वात्। न हि बहुवित्तव्यसनादल्पवित्तव्यसनाद् वा ध्वंसस्य किञ्चिदन्यथात्वमस्ति। यद् वा एकत्र भावाभावयोः कारणत्वकल्पनायाः अनौचित्यात्। **वस्तुतस्तु** ध्वंसस्य करणत्वे यागस्य स्वर्गभावनायां स्वर्गस्य प्रतिबन्धकत्वमायातम्, कथमिति चेद् उच्यते, कारणीभूताभावप्रतियोगित्वं **प्रतिबन्धकत्वमिति** प्रतिबन्धकलक्षणम्। न च वक्तव्यम्, भवतु स्वर्गभावनायां यागस्य प्रतिबन्धकत्वम्, तेन किं विधिवाक्ये यागस्य करणत्वदर्शनात्। **नैयासिकास्तु** यदि ध्वंसः करणं तदा कर्मनाशाजलस्पर्शात् कृतयागस्य पुरुषस्य स्वर्गभावो न स्यात्, ध्वंसस्याविनाशित्वात्। तथापि,

**गङ्गास्नानादि यागादि व्यापारः स प्रकीर्तितः।**
**कर्मनाशाजलस्पर्शादिना नान्यस्त्वसौ मतः ।।** इति ।

स्थितौ तु अपूर्वनाशात् स्वर्गाभावः स्याद् इत्थमाचष्टे । ननु यथा यागोऽन्यक्रिया-व्याप्यस्तदाऽकर्मकत्वात् कथं करणत्वं स्यादित्याह-तत्रेति । अपौरुषेयेषु ईश्वरातिरिक्तपुरुषाकृतेषु। कर्तुरभावादीश्वरातिरिक्तस्येत्यर्थः।।१०८६।

**[समीक्षा]**

'अग्निष्टोमयाजी, वाजपेययाजी' इत्यादि शब्दरूपों के सिद्ध्यर्थ भूतकालिक क्रिया अर्थ में 'णिनि' प्रत्यय दोनों ही व्याकरणों में किया गया है । पाणिनि के दो सूत्र हैं - "भूते, करणे यजः" (अ० ३।२।८४,८५) । पाणिनि ने भूतकालिक

अधिकार के लिए स्वतन्त्र सूत्र बनाया है, जबकि कातन्त्रकार ने णिनिप्रत्ययविधायक सूत्र में ही उसका उल्लेख कर लाघव का आश्रय लिया है ।

**[रूपसिद्धि]**

१. **अग्निष्टोमयाजी।** अग्निष्टोम + यज् + णिनि + सि । अग्निष्टोमेनेष्टवान्। 'अग्निष्टोम' शब्द के उपपद में रहने पर 'यज देवपूजासङ्गतिकरणदानेषु' (१।६०८) धातु से प्रकृत सूत्र द्वारा 'णिनि' प्रत्यय, 'ण् - इ' अनुबन्धों का प्रयोगाभाव, उपधादीर्घ, 'अग्निष्टोमयाजिन् ' शब्द की लिङ्गसंज्ञा, सि - प्रत्यय, नकार की उपधा को दीर्घ तथा 'सि-न् ' का लोप।

२. **वाजपेययाजी।** वाजपेय + यज् + णिनि + सि । वाजपेयेनेष्टवान् । 'वाजपेय' शब्द के उपपद में रहने पर 'यज् ' धातु से 'णिनि' प्रत्यय आदि कार्य पूर्ववत् ॥ १०८६।

## १०८७. कर्मणि हनः कुत्सायाम् [४।३।८२]

**[सूत्रार्थ]**

कर्मकारक के उपपद में रहने पर अतीत अर्थ में वर्तमान 'हन हिंसागत्योः' (२।४) धातु से कुत्सा अर्थ यदि गम्यमान हो तो 'णिनि' प्रत्यय होता है ॥१०८७।

**[दु० वृ०]**

कर्मण्युपपदेऽतीते वर्तमानाद् हन्तेः कुत्सायां गम्यमानायां णिनिर्भवति । पितृघाती, मातृघाती। कुत्सायामिति किम्? चौरं हतवान्। दण्डेन हतवान् पितृव्यमिति सापेक्षत्वात्। कर्मग्रहणं **सुखार्थम्** ॥१०८७।

**[दु० टी०]**

कर्म०। कर्मग्रहणं किमर्थम् अर्थात् कर्मणि भविष्यतीत्याह-दण्डेनेत्यादि । सापेक्षत्वं चासमर्थं भवतीति भावः । "कुमारशीर्षयोर्णिनिः" (४।३।५२) इति वचनं वर्तमानभविष्यतोरपि प्रापणार्थम् ॥ १०८७।

**[वि० प०]**

कर्मणि०। अथ कर्मणीति किमर्थम्? पूर्वसूत्रादनुवर्तमानकरणनिवृत्त्यर्थम् । यथा दण्डेन हतवानिति चेत्, न, कुत्सनस्याभावात् । अथ 'दण्डेन हतवान् पितृव्यम्' इत्यत्रापि स्यादित्याह - दण्डेनेत्यादि ॥१०८७।

**[क० च०]**

कर्म०। कर्मग्रहणं किमर्थम् , प्रकृतत्वान्नाम्नीत्यनुवृत्तिः स्यात् तर्हि सामान्यत्वात् करणाद्युपपदे स्यादित्याह-दण्डेनेति । एतेन नामाधिकारेऽपि कर्मोपपदे स्यादिति भावः। अथ कर्मग्रहणं **सुखार्थमिति** कथमुच्यते प्रत्ययार्थं स्यात्। नैवम् , तदा हनः कर्मणीति कुर्यात्। घञन्तादिना सिद्धे कर्मोपपदे कुत्सायामणबाधनार्थं वचनम्॥१०८७।

[समीक्षा]

'पितृघाती, मातृघाती' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'णिनि' प्रत्यय किया गया है । पाणिनि का सूत्र है - "कर्मणि हनः" (अ० ३।२।८६)। यह ज्ञातव्य है कि पाणिनि ने कुत्सार्थ का सूत्र में उल्लेख नहीं किया है, अतः व्याख्याकारों ने 'कुत्सितग्रहणं कर्तव्यम् ' वचन पढ़कर इस अंश की पूर्ति है, परन्तु कातन्त्रकार ने सूत्र में ही उल्लेख करके उत्कर्ष सिद्ध किया है ।

[विशेष वचन]

१. कर्मग्रहणं सुखार्थम् (दु० वृ०; क० च०)।

२. कुत्सायामणबाधनार्थं वचनम् (क० च०)।

[रूपसिद्धि]

१. **पितृघाती।** पितृ + हन् + णिनि + सि। पितरं हतवान्। 'पितृ' शब्द के उपपद में रहने पर 'हन हिंसागत्योः' (२।४) धातु से प्रकृत सूत्र द्वारा 'णिनि' प्रत्यय, "हस्य हन्तेर्घिरिनिचोः" (३।६।२८) से हकार को घकार, "हन्तेस्तः" (४।१।२) से नकार को तकार, उपधादीर्घ, 'पितृघातिन् ' शब्द की लिङ्गसञ्ज्ञा तथा विभक्तिकार्य।

२. **मातृघाती।** मातृ+ हन् + णिनि +सि । मातरं हतवान् । 'मातृ' शब्द के उपपद में रहने पर 'हन्' धातु से 'णिनि' प्रत्यय आदि कार्य पूर्ववत् ॥ १०८७ ।

## १०८८. क्विब् ब्रह्मभ्रूणवृत्रेषु [४।३।८३]

[सूत्रार्थ]

कर्म कारक में 'ब्रह्मन् , भ्रूण, वृत्र' शब्दों के उपपद में रहने पर अतीत अर्थ में वर्तमान 'हन् हिंसागत्योः' (२/४) धातु से क्विप् प्रत्यय होता है ॥१०८८॥

[दु० वृ०]

ब्रह्मादिषु कर्मसूपपदेषु अतीते वर्तमानाद् हन्तेः क्विब् भवति । ब्रह्महा, भ्रूणहा, वृत्रहा। ब्रह्मादिष्वेव, हन्तेरेव, अतीते एव, क्विबेवेति चतुर्विधोऽत्र **नियमः**। तेन गां हतवान्, ब्रह्माधीतवान्, ब्रह्म हन्ति, ब्रह्म हतवान्। अतो नाण्। विनियमोऽपि दृश्यते- मधुहा, अहिहा, गोत्रहा, ब्रह्मघ्नः, वृत्रस्य हन्तुः, ब्रह्मवित्॥१०८८॥

[दु० टी०]

क्विप्०। सर्वधातुभ्यः क्विप् सिद्ध एव, नियमार्थं वचनम् इति। धातुनियमः, उपपदनियमः, कालनियमः, प्रत्ययनियमो विशेषाभावात् । **भाष्यकारस्तु** नियमद्वयमाह। ब्रह्मादिष्वेव, हन्तेरेव, अतीते एव, क्विबेवेति । आखुहा बिडाल इति आखून् हन्तुं योग्य इति कालविशेषविवक्षाया योग्यतामात्रे "**अन्येभ्योऽपि दृश्यन्ते**" (४।३।६७) इति क्विप् ॥१०८८।

[वि० प०]

क्विप्० । "**क्विप् च**" (४।३।६८) इत्यनेन सामान्येन सिद्धे नियमार्थमिदम्। नियमश्च धातूपपदकालप्रत्ययानां चतुर्णामेव विशेषाभावादित्याह - ब्रह्मादिष्वेवेति। तेनोपपदधातुकालान्यत्वे सति क्रमेण त्रीणि प्रत्युदाहरणानि। चतुर्थनियममाह-ब्रह्म हतवानिति। ब्रह्मादिषूपपदेषु हन्तेरतीते काले क्विबेव प्रत्यय इत्यर्थः। तेन कर्मण्यण् न भवति। एतदेवाह- अतो नाण् इति। यद्येवं निष्ठापि न प्राप्नोतीति चेत्, तदयुक्तम्। **'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते न परान्'** (व्या० परि० पा० १०) इति न दोषः। विनियम इत्यादि। उपपदान्यत्वे त्रीणि उदाहरणानि 'व्रात्रघ्नः' इत्यन्योऽपि प्रत्ययोऽमनुष्यकर्तृकेऽपि चेति टक्। तथा वृत्रस्य हन्तुरिति तृच्। ब्रह्मविदिति, अन्यतोऽपि धातोः क्विप्। एतेनाभिधानमेवाश्रय इति स्थितम्। तथा च वक्ष्यति। इयमपि **चतुःसूत्री प्रपञ्चार्थेति**।।१०८८।

[क० च०]

क्विप्०। मधुहेति । "**इन्हन्०**" (२।२।२१) इत्यादिना दीर्घः । ननु "**पञ्चमोपधायाः**" (४।१।५५) इत्यनेन कथन्न दीर्घः? सत्यम् । "**इन्हन्०**" (२।२।२१) इत्यत्र इनः पाठात् । अत एव तत्रोक्तम् । अस्मादेव हन उपधया दीर्घात् क्विपि न दीर्घः , तेन मधुहनि, मधुघ्नीति सिद्धम् । **'मध्येऽपवादा०'** (व्या० परि० पा०१०) इत्यादि **'पूर्वान् उत्सर्गान् विधीन् बाधन्ते न तु पराननुत्सर्गान्'** इति । ननु निष्ठा कथमुत्सर्गः अयं वा कथमपवादः, येनेदमुच्यते इत्याह-निरुपपद इति **हेमः**।। १०८८ ।

**[समीक्षा]**

'ब्रह्महा, भ्रूणहा, वृत्रहा', शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने क्विप् प्रत्यय का विधान किया है । पाणिनि का सूत्र है- "ब्रह्मभ्रूणवृत्रेषु" (अ०३।२।८७)। अतः उभयत्र समानता ही है ।

**[विशेष वचन]**

१. भाष्यकारस्तु नियमद्वयमाह (दु० टी०) ।

२. इयमपि चतुःसूत्री प्रपञ्चार्था (वि० प०) ।

**[रूपसिद्धि]**

१. **ब्रह्महा**। ब्रह्मन् + क्विप् + सि । ब्रह्म हतवान् । 'ब्रह्मन् ' शब्द के उपपद में रहने पर 'हन् हिंसागत्योः' (२।४) धातु से प्रकृत सूत्र द्वारा 'क्विप् ' प्रत्यय, सर्वापहारी लोप, लिङ्गसंज्ञा, सि-प्रत्यय, नकार की उपधा को दीर्घ तथा 'सि-न् ' का लोप ।

२. **भ्रूणहा** । भ्रूण + हन् + क्विप्। भ्रूणं हतवान् । 'भ्रूण' शब्द के उपपद में रहने पर 'हन् ' धातु से 'क्विप् ' प्रत्यय आदि कार्य पूर्ववत् ।

३. **वृत्रहा** । वृत्र + हन् + क्विप् + सि । वृत्रं हतवान् । 'वृत्र' शब्द के उपपद में रहने पर 'हन्' धातु से प्रकृत सूत्र द्वारा 'क्विप्' प्रत्यय आदि कार्य पूर्ववत्।।१०८८।

## १०८९. कृञः सुपुण्यपापकर्ममन्त्रपदेषु [४।३।८४]

[सूत्रार्थ]

कर्म कारक में 'सु- पुण्य-पाप-कर्म-मन्त्र-पद' के उपपद में रहने पर 'डु कृञ् करणे' (७।७ ) धातु से 'क्विप्' प्रत्यय होता है ॥ १०८९ ।

[दु० वृ०]

एवु कर्मसूपपदेषु अतीते वर्तमानात् कृञः क्विब् भवति । सुष्ठु कृतवान् सुकृत्। एवं पुण्यकृत्, पापकृत् ,कर्मकृत्, मन्त्रकृत्, पदकृत् । स्वादिषु कृञ एव, अतीत एव, क्विबेवेति त्रिविध एवात्र नियमः। तेन मन्त्रानधीतवान् , कर्म करोति, कर्म कृतवान् । अतो नाण् । शास्त्रकृत्, सूत्रकृदिति भवितव्यमेव ॥ १०८९ ।

[दु० टी०]

कृञः । त्रिविध एवेति । उपपदनियमः, प्रत्ययनियमो धातुनियमश्च भवति । स्वादिष्वेव, कृञ एव, अतीत एव क्विबिति करोतेः क्विप् । अतो नाणिति । कर्मण्यण् न भवतीत्यर्थः । व्यभिचारोऽपि दृश्यते - पदकार इति । केचित् पदग्रहणं न पठन्त्येव। पदं करोतीति पदकृत् इत्यपि मन्यन्ते वर्तमानेऽपि ॥१०८९।

[वि० प०]

कृञः। इदमपि पूर्ववन्नियमार्थमित्यत आह-स्वादिष्वित्यादि । अतो नाऽण् इति । अत्रापि कर्मण्यण् न भवतीत्यर्थः । स्वादिष्वेव कृञ इति उपपदनियमाभावादुपपदान्तरेऽपि स्यादित्याह-शास्त्रकृदित्यादि । व्यभिचारोऽपि दृश्यते - पदं कृतवान् पदकार इति ॥१०८९।

[समीक्षा]

'सुकृत् , पुण्यकृत्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'क्विप्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है "सुकर्मपापमन्त्रपुण्येषु कृञः" (अ० ३।२।८९)। अतः उभयत्र प्रायः समानता ही है।

[रूपसिद्धि]

१. सुकृत्। सु + कृ + क्विप् + सि। सु = शोभनं सुष्ठ वा कृतवान्। 'सु' उपसर्गपूर्वक 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'क्विप् ' प्रत्यय, सर्वापहारी लोप, तकारागम तथा विभक्तिकार्य।

२. पुण्यकृत् । पुण्य + कृ + क्विप् + सि । पुण्यं कृतवान् ।

३. पापकृत् । पाप + कृ + क्विप् + सि । पापानि कृतवान् ।

४. कर्मकृत् । कर्मन् + कृ + क्विप् + सि । कर्माणि कृतवान् ।

५. मन्त्रकृत् । मन्त्र + कृ + क्विप् + सि । मन्त्रं कृतवान् ।

६. पदकृत् । पद + कृ +क्विप् + सि । पदं कृतवान् । संख्या २ से ५ तक के शब्दों की साधनप्रक्रिया पूर्ववत् ॥ १०८९ ।

## १०९०. सोमे सुञः [४।३।८५]

**[सूत्रार्थ]**

कर्म कारक में 'सोम' 'शब्द के उपपद में रहने पर भूतकालार्थक 'षुञ् अभिषवे' (४।?) धातु से 'क्विप्' प्रत्यय होता है ॥ १०९० ।

**[दु० वृ०]**

सोमे कर्मण्युपपदेऽतीते वर्तमानात् सुञः_क्विब् भवति । सोमं सुतवान् **सोमसुत्**। चतुर्विधोऽत्र नियमः । तेन 'सुरां सुतवान् , सोमं विक्रीतवान् , सोमं सुनोति, सोमं सुतवान्'। अतो नाऽण् । अन्येभ्यः क्विबभावेऽण् स्यादेव ॥१०९०।

**[समीक्षा]**

'सोमसुत्' शब्दरूप के सिद्ध्यर्थ दोनों ही आचार्यों ने 'क्विप्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है। "सोमे सुञः" (अ० ३।२।९०)। अतः उभयत्र समानता ही है।

**[रूपसिद्धि]**

१. **सोमसुत्**। सोम + सु + क्विप् + सि। सोमं सुतवान्। 'सोम' शब्द के उपपद में रहने पर 'षुञ् अभिषवे' (४।१) धातु से प्रकृत सूत्र द्वारा 'क्विप्' प्रत्यय, सर्वापहारी लोप, तकारागम तथा विभक्तिकर्य ॥१०९० ।

## १०९१ . चेरग्नौ [४।३।८६]

**[सूत्रार्थ]**

'अग्नि' शब्द के उपपद में रहने पर अतीतकालार्थक 'चिञ् चयने' (४।५) धातु से 'क्विप्' प्रत्यय होता है ॥१०९१ ।

**[दु० वृ०]**

अग्नावुपपदेऽतीते वर्तमानाच्चिनोतेः क्विब् भवति । अग्निं चितवान् **अग्निचित्।** चतुर्विधोऽत्रापि **नियमः**- तेन पुष्यं चितवान्, अग्निं हुतवान्, अग्निं चिनोति, अग्निं चितवान्। अतो नाऽण्। अग्न्यर्थे त्विष्टकानां रचनाविशेषे गम्यमाने कर्मण्यपि दृश्यते। श्येन इव चीयते स्म **श्येनचित्**। रथचक्रमिव चीयतेस्म **रथचक्रचित्**। इयमपि चतुःसूत्री **प्रपञ्चार्थेति**॥१०९१।

**[दु० टी०]**

चेः। अग्न्यर्थ इति कालत्रयेऽप्यन्येभ्योऽपि दृश्यते इत्यपिग्रहणस्य बहुलार्थत्वात् कर्मणि सिद्ध एवेति भावः। इयमपीत्यादि। चतुर्णां सूत्राणां समाहारश्चतुः**सूत्री**। पूर्वाणि चतुःसूत्राणि क्विबर्थानि प्रपञ्चार्थानीति । अन्यथा "**अन्येभ्योऽपि दृश्यन्ते**" (४।३।६७ ) इति दृशिग्रहणं **प्रयोगानुसारार्थं** यतो मातृहा, पितृहा, सर्वरोगहा, कफपित्तहा इत्येवमादयः सिद्धाः। ब्रह्मादिषु च हन्तेर्णिनिर्भवत्येवेति भावः॥१०९१।

[वि० प०]

चेः। अग्न्यर्थ इत्यादि। "क्विप् च" (४।३।६८) इत्यत्र "अन्येभ्योऽपि दृश्यन्ते" (४।३।६८) इत्यतो दृशिग्रहणानुवृत्तेः कर्मण्यनिर्दिष्टकालत्वाच्चातीतेऽपि स्यादित्यर्थः। पाकार्थमिष्टकानां रचनाविशेषः श्येन इवेत्यादिना कथ्यते । इयमपीति । न केवलं वहेः पञ्चम्यां भ्रंशेरित्यादि, चतुःसूत्रीत्यपिशब्दार्थः ॥१०९१ ।

[क० च०]

चेः । अग्न्यर्थ इति । अग्निप्रयोजनरूपत्वात् पाक एवाग्निरुच्यते, अग्न्यर्थे पाकार्थे इत्यर्थः। अत आह- पाकार्थ इति **पञ्जी**। तत्रानिर्दिष्टकालत्वेऽपि दृशिग्रहणस्य प्रयोगानुसारित्वात् तत्रातीते एव स्यात् । अत एव वाक्ये स्मशब्दो दर्शितः॥१०९१।

[समीक्षा]

'अग्निचित्' शब्दरूप के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क्विप् ' प्रत्यय का विधान किया गया है । पाणिनि का सूत्र है - "अग्नौ चेः" (अ० ३।२।९१)। अतः उभयत्र समानता ही कही जाएगी ।

[विशेष वचन]

१. इयमपि चतुःसूत्री प्रपञ्चार्था (दु० वृ०)।

२. पूर्वाणि चतुःसूत्राणि क्विबर्थानि प्रपञ्चार्थानि (दु०टी०)।

३. दृशिग्रहणं प्रयोगानुसारार्थम् (दु० टी०)।

४. पाकार्थमिष्टकानां रचनाविशेषः श्येन इवेत्यादिना कथ्यते (वि० प०)।

[रूपसिद्धि]

१. **अग्निचित्**। अग्नि + चि + क्विप् + सि । अग्निं चितवान् । 'अग्नि' शब्द के उपपद में रहने पर 'चिञ् चयने' (४।५) धातु से प्रकृत सूत्र द्वारा 'क्विप् ' प्रत्यय, सर्वापहारी लोप, तकारागम तथा विभक्तिकार्य ॥ १०९१।

## १०९२. विक्रिय इन् कुत्सायाम् [४।३।८७]

[सूत्रार्थ]

कर्म कारक के उपपद में रहने पर तथा कुत्सा अर्थ के गम्यमान होने पर अतीतार्थक 'वि' पूर्वक 'डु क्रीञ् द्रव्यविनिमये' (८।१) धातु से 'इन् ' प्रत्यय होता है ॥१०९२।

[दु० वृ०]

कर्मण्युपपदे विपूर्वादतीते क्रीणातेः कुत्सायां गम्यमानायामिन् भवति। सोमं विक्रीतवान् **सोमविक्रयी**। तैलं विक्रीतवान् **तैलविक्रयी**। एवं मांसविक्रयी। अलन्तादस्त्यर्थे इना सिद्धे कुत्सायामणबाधनार्थं वचनमिदम् ॥१०९२।

[दु० टी०]

विक्रिय०। कुत्सायामिति । मांसविक्रायो व्याधः । कर्मण्यण् भवति । अलन्तादिति।

''**स्वरवृद्गमिग्रहामल्**'' (४।५।४१)। सोऽस्यास्तीति इन् । यद्येवं धान्यविक्रय्यपि स्यात् , भवितव्यमेव मत्वर्थीयस्यानिषेधात् परिहारमाह - कुत्सायामिति । न च वक्तव्यम् अणपि **अभिधानादित्युक्तम्** , **बालसम्मोहः** स्यात् ।।१०९२।

**[वि० प०]**

विक्रिय०। किमर्थमिदम् ? विक्रयणं **विक्रयः** । स्वरान्तादलि कृते सोऽस्यास्तीति इना सिध्यति, तर्हि अकुत्सायामपि स्यात्,धान्यविक्रयीति चेद्-इष्टमेव । एवं सति कुत्सायामण् मा भूद् इत्यालोच्य देश्यं परिहारं चाह - अलन्तादिति ।।१०९२।

**[समीक्षा]**

'सोमविक्रयी, रसविक्रयी' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने प्रायः समान ही प्रत्यय (इन् - इनि) किए हैं। पाणिनि का सूत्र है - ''कर्मणीनिर्विक्रियः'' (अ० ३।२।९३)। अतः पाणिनीय इकारानुबन्ध की अधिकता से अतिरिक्त तो उभयत्र समानता ही है ।

**[विशेष वचन]**

१. कुत्सायामणबाधनार्थं वचनमिदम् (दु० वृ०)।

**[रूपसिद्धि]**

१. **सोमविक्रयी**। सोम + वि + क्री + इन् + सि । सोमं विक्रीतवान् । 'सोम' के उपपद में रहने पर 'वि' उपसर्गपूर्वक 'डु क्रीञ् द्रव्यविनिमये' (८।१) धातु से प्रकृत सूत्र द्वारा 'इन् ' प्रत्यय, धातुघटित ईकार को ''नाम्यन्तयोर्धातुविकरणयोर्गुणः'' (३।५।१) से गुण एकार, ''ए अय्'' (१।२।१२) से अयादेश, 'सोमविक्रयिन् ' की लिङ्गसंज्ञा तथा विभक्तिकार्य ।

२. **तैलविक्रयी**। तैल + वि + क्री + इन् + सि । तैलं विक्रीतवान् । 'तैल' शब्द के उपपद में रहने पर 'वि' उपसर्गपूर्वक 'क्री' धातु से 'इन् ' प्रत्यय आदि कार्य पूर्ववत्।

३. **मांसविक्रयी**। मांस + वि + क्री + इन् +सि । मांसं विक्रीतवान् । 'मांस' शब्द के उपपद में रहने पर 'वि' उपसर्गपूर्वक 'क्री' धातु से 'इन् ' प्रत्यय आदि कार्य पूर्ववत् ।।१०९२।

## १०९३. दृशेः क्वनिप् [४।३।८८]

**[सूत्रार्थ]**

कर्म कारक के उपपद में रहने पर अतीतकालार्थक 'दृशिर् प्रेक्षणे' (१।२८९) धातु से 'क्वनिप् ' प्रत्यय होता है।।१०९३।

[दु० वृ०]

कर्मण्युपपदेऽतीते वर्तमानाद् दृशेः क्वनिब् भवति । मेरुं दृष्टवान् **मेरुदृश्वा**। अतीते क्विबादीनां बाधनार्थमिदम् ॥१०९३।

[दु० टी०]

दृशेः। क्विबादीनामित्यादि । अन्यथा "**अन्येभ्योऽपि दृश्यन्ते**" (४।३।६७) इति क्वनिप् सिद्ध एव, दृशिग्रहणं तत्र प्रयोगानुसारार्थं चेद् **बालसम्मोहः** स्यात् ॥१०९३।

[वि० प०]

दृशेः। "**अन्येभ्योऽपि दृश्यन्ते**" (४।३।६७) इति क्वनिप् सिद्ध एवेत्याह - अतीत इत्यादि । यदि पुनस्तत्र दृशिग्रहणस्य प्रयोगानुसारार्थत्वादतीते क्वनिबेव दृश्यते इत्युच्यते तदा **सुखार्थमेव** भवति ॥१०९३।

[समीक्षा]

'मेरुदृश्वा, परलोकदृश्वा' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क्वनिप्' प्रत्यय का विधान किया है । पाणिनि का सूत्र है- "दृशेः क्वनिप्" (अ० ३।२।९४)। अतः उभयत्र समानता ही है ।

[विशेष वचन]

१. अतीते क्विबादीनां बाधनार्थमिदम् (दु० वृ०)।

२. दृशिग्रहणं तत्र प्रयोगानुसारार्थम् (दु० टी०)।

३. तदा सुखार्थमेव भवति (वि० प०)।

[रूपसिद्धि]

१. **मेरुदृश्वा**। मेरु-दृश् + क्वनिप् + सि । मेरुं दृष्टवान् । 'मेरु' शब्द के उपपद में रहने पर 'दृशिर् प्रेक्षणे' (१।२८९) धातु से प्रकृत सूत्र द्वारा 'क्वनिप्' प्रत्यय, 'क् - इ - प्' अनुबन्धों का प्रयोगाभाव, 'मेरुदृश्वन्' शब्द की लिङ्गसंज्ञा तथा विभक्तिकार्य ॥१०९३।

## १०९४. सहराज्ञोर्युधः [४।३।८९]

[सूत्रार्थ]

कर्म कारक में 'सह-राजन्' शब्दों के उपपद में रहने पर अतीतार्थक 'युध सम्प्रहारे' (३।११०) धातु से 'क्वनिप्' प्रत्यय होता है ॥१०९४।

[दु० वृ०]

सहराज्ञोः कर्मणोरुपपदयोरतीते वर्तमानाद् युध्यतेः क्वनिब् भवति । सह युध्यते स्म **सहयुध्वा**। राजानं युध्यते स्म **राजयुध्वा**। अन्तर्भूतेनर्थः सकर्मकः । राजानं योधितवानित्यर्थः ॥१०९४।

[क० च०]

सह०। सहशब्दस्य कर्मत्वाभावेऽपि कर्मणोरिति विशेषणम् एकदेशे चरितार्थम् ॥१०९४।

[समीक्षा]

'राजयुध्वा, सहयुध्वा' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क्वनिप् ' प्रत्यय किया गया है । पाणिनि के दो सूत्र हैं - "राजनि युधिकृञः, सहे च" (अ० ३।२।९५,९६)। अतः पाणिनि ने सूत्रद्वयप्रयुक्त गौरव किया है, जबकि कातन्त्रकार ने लाघव अपनाया है ।

[रूपसिद्धि]

१. **सहयुध्वा।** सह + युध् + क्वनिप् + सि । सह युध्यते स्म । 'सह' शब्द के उपपद में रहने पर 'युध सम्प्रहारे' (३।११०) धातु से प्रकृत सूत्र द्वारा 'क्वनिप् ' प्रत्यय, 'क् - इ - प् ' अनुबन्धों का प्रयोगाभाव, लिङ्गसञ्ज्ञा तथा विभक्तिकार्य ।

२. **राजयुध्वा।** राजन् + युध् + क्वनिप् + सि । राजानं युध्यते स्म । 'राजन् ' शब्द के उपपद में रहने पर 'युध् ' धातु से 'क्वनिप् ' प्रत्यय आदि कार्य पूर्ववत् ॥ १०९४।

## १०९५. कृञश्च [४।३।९०]

[सूत्रार्थ]

कर्म कारक में 'सह-राजन् ' शब्दों के उपपद में रहने पर अतीतार्थक 'डु कृञ् करणे' (७।७) धातु से 'क्वनिप् ' प्रत्यय होता है ॥१०९५।

[दु० वृ०]

सहराज्ञोः कर्मणोरुपपदयोरतीते वर्तमानात् कृञः क्वनिब् भवति । सह करोति स्म सहकृत्वा । एवं राजकृत्वा ॥१०९५।

[क० च०]

कृञः । सहराज्ञोर्युध्कृञोरित्युक्ते यथासंख्ये स्यात् । 'युध् - कृञ् ' इति **समाहारः** कर्तव्यश्चेत् , तदा **स्पष्टार्थः**॥१०९५।

[समीक्षा]

'सहकृत्वा, राजकृत्वा' शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क्वनिप् ' प्रत्यय का विधान किया गया है । पाणिनि के दो सूत्र हैं - "राजनि युधिकृञः, सहे च" (अ० ३।२।९५,९६)। इस प्रकार पाणिनीय गौरव तथा कातन्त्रकारीय लाघव स्पष्ट है ।

[रूपसिद्धि]

१. **सहकृत्वा।** सह + कृ + क्वनिप् + सि । सह करोति स्म । 'सह' शब्द के उपपद में रहने पर "डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'क्वनिप् ' प्रत्यय, अनुबन्धों का प्रयोगाभाव, तकारागम तथा विभक्तिकार्य ।

२. **राजकृत्वा।** राजन् + कृ + क्वनिप् + सि । राजानं करोति स्म । 'राजन्' शब्द के उपपद में रहने पर 'कृ' धातु से 'क्वनिप्' प्रत्यय आदि कार्य पूर्ववत् ॥१०९५।

## १०९६. सप्तमीपञ्चम्यन्ते जनेर्डः [४।३।९१]

**[सूत्रार्थ]**

सप्तम्यन्त तथा पञ्चम्यन्त शब्द के उपपद में रहने पर अतीतकालार्थक 'जन्' धातु से 'ड' प्रत्यय होता है ।।१०९६।

**[दु० वृ०]**

सप्तम्यन्ते पञ्चम्यन्ते चोपपदेऽतीते वर्तमानाज्जनेर्डो भवति । जले जातं **जलजम्**, सरसि जातं **सरसिजम्**। बुद्धिजम् , क्रोधजम् । संस्कारजः, ब्राह्मणजो धर्मः । क्षत्रियजं युद्धम् । कथम् अश्वाज्जातः, हस्तिनो जातः इति ? प्रायः पञ्चम्यामजातावेव दृश्यते ।।१०९६।

**[दु० टी०]**

सप्तमी०। प्राय इत्यादि । यद्येवं ड इत्यास्ताम् , सप्तम्यां जनेर्डः, पञ्चम्यामजातौ, जातावपि डप्रसङ्गात् संज्ञायामसंज्ञायामपि अनोः कर्मपूर्वात् केवलादप्यभिधानसामर्थ्याद् भवतीति ? सत्यम् , **मन्दमतिबोधनार्थं** सूत्रद्वयमुच्यते इति न दोषः ।।१०९६।

**[वि०प०]**

सप्तमी०। कथमित्यादि । प्रायोग्रहणेन जातावपि क्वचिद् आचष्टे । यथोदाहृतम् - ब्राह्मणजो धर्मः, क्षत्रियजं युद्धम् । अन्यथा 'बुद्धिजः, संस्कारजः' इत्येव स्याद् अत एव पञ्चम्यामजाताविति न कृतो नियमः ।।१०९६।

**[क० च०]**

सप्तमी०। **'येन विधिस्तदन्तस्य'** इति सिद्धे अन्तग्रहणं **स्पष्टार्थम्** ।।१०९६।

**[समीक्षा]**

'सरसिजम् , संस्कारजः' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ड' प्रत्यय का विधान किया गया है । पाणिनि के दो सूत्र हैं - "सप्तम्यां जनेर्डः, पञ्चम्यामजातौ" (अ०३।२।९७,९८)। कातन्त्रकार ने 'ब्राह्मणजो धर्मः, क्षत्रियजं युद्धम् ' जैसे कुछ प्रयोगों में जाति में भी पञ्चम्यन्त से 'ड' प्रत्यय माना है । अतः उन्होंने पाणिनि की तरह "पञ्चम्यामजातौ" यह पृथक् सूत्र न बनाकर उत्कर्ष सूचित किया है ।

**[विशेष वचन)]**

१. मन्दमतिबोधनार्थं सूत्रद्वयमुच्यते (दु० टी०)।

२. येन विधिस्तदन्तस्येति सिद्धेऽन्तग्रहणं स्पष्टार्थम् (क० च०)।

[रूपसिद्धि]

१. **जलजम्**। जल + जन् + ड + सि । जले जातम् । 'जल' शब्द के उपपद में रहने पर 'जनी प्रादुर्भावे' (३।९४) धातु से 'ड' प्रत्यय, 'ड्' अनुबन्ध के फलस्वरूप 'अन्' का लोप तथा विभक्तिकार्य ।

२. **सरसिजम्**। सरसि + जन् + ड + सि । सरसि जातम् । 'सरसि' के उपपद में रहने पर 'जन्' धातु से 'ड' प्रत्यय आदि कार्य प्रायः पूर्ववत् ।

३-७. **बुद्धिजः**। बुद्धि + जन् + ड + सि । बुद्धेर्जातः । **क्रोधजम्**। क्रोध + जन् + ड + सि । क्रोधाज्जातम् । **संस्कारजः**। संस्कार + जन् + ड + सि । संस्काराज्जातः । **ब्राह्मणजो धर्मः**। ब्राह्मण + जन् + ड + सि । ब्राह्मणाज्जातः। **क्षत्रियजं युद्धम्** । क्षत्रिय + जन् + ड + सि । क्षत्रियाज्जातम् । प्रक्रिया पूर्ववत् ॥१०९६।

## १०९७. अन्यत्रापि च [४।३।९२]

[सूत्रार्थ]

सप्तम्यन्त-पञ्चम्यन्त से भिन्न शब्दों के भी उपपद में रहने पर 'जन्' धातु से 'ड' प्रत्यय होता है ॥१०९७।

[दु० वृ०]

अन्यस्मिन्नुपपदेऽतीते वर्तमानाज्जनेर्डो भवति । न जातोऽजः। द्विर्जातो **द्विजः**। प्रजः, अभिजः, परिजः। पुमांसमनुजातः **पुमनुजः**। स्त्रियमनुजातः **स्त्र्यनुजः** ॥१०९७।

[वि०प०]

अन्यत्रा०। पुमांसमनुजात इति उपसर्गोऽयमनुशब्दः। कर्मप्रवचनीये तु नाभिधानम्। पुमनुजेति। स्त्रियामुदाहरणमुचितम् । एवं स्त्रियमनुजातः स्त्र्यनुजः कुमारः इति॥१०९७।

[क० च०]

अन्य०। पुमनुजेति। तर्हि कथं **वृत्तौ** पुमनुजः इति पुंसि दर्शितमित्याह - पुंसि सामान्येनेति **हेमः**। योगरूढवशात् पुमनुजशब्देन स्त्र्येवोच्यते इत्यर्थः। तथा स्त्र्यनुजशब्देन पुमानेव ॥१०९७।

**।। इति श्रीसुषेणविद्याभूषणाचार्यविरचिते कलापचन्द्रे कृत्प्रत्ययाध्याये चतुर्थे कर्मादिपादस्तृतीयः समाप्तः ।।**



[समीक्षा]

अजः, द्विजः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने एक भिन्न सूत्र द्वारा 'ड' प्रत्यय का विधान किया है । पाणिनि का सूत्र है- "अन्येष्वपि दृश्यते" (अ० ३।२।१०१)। अतः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **अजः**। न + जन् + ड+सि । न-जातः । 'नञ्' के उपपद में रहने पर 'जनी

प्रादुर्भावे' (३।९४) धातु से प्रकृत सूत्र द्वारा 'ड' प्रत्यय, 'न'- घटित नकार का लोप, अन्लोप तथा विभक्तिकार्य ।

२.**द्विजः**। द्वि + जन् + ड + सि । द्विर्जातः । 'द्वि' शब्द के उपपद में रहने पर 'जन्' धातु से 'ड' प्रत्यय आदि कार्य पूर्ववत् ।

३- ७. **प्रजः**। प्र + जन् + ड + सि । **अभिजः**। अभि + जन् + ड + सि। **परिजः**। परि+जन् +ड +सि । **पुमनुजः**। पुमन्स् + अनु +जन् +ड + सि । पुमांसमनुजातः । **स्त्र्यनुजः**। स्त्री + अनु +जन् +ड + सि। स्त्रियमनुजातः । प्रक्रिया पूर्ववत् ॥ १०९७ ।

## १०९८. निष्ठा [४।३।९३]

**[सूत्रार्थ]**

अतीत = भूत अर्थ में धातु से निष्ठासंज्ञक प्रत्यय होता है ॥ १०९८ ।

**[दु० वृ०]**

अतीते वर्तमानाद् धातोर्निष्ठाप्रत्ययो भवति । कृतः, कृतवान् । शयितः, शयितवान् ॥ १०९८ ।

**[दु० टी०]**

निष्ठा । यदि पुनरिह क्तक्तवन्तू निष्ठेति विधिपूर्विका संज्ञोच्यते, अतीते क्तक्तवन्तू भवतस्तौ च निष्ठेति तदा भिन्न इति दाद् दस्य चेति न भवति । ञ्यनुबन्ध इत्यादिना वर्तमाने क्तस्य निष्ठासञ्ज्ञाभावात् ॥ १०९८ ।

**[वि० प०]**

निष्ठा । "शीङ्पूङ्धृषि०" (४।१।१५ ) निष्ठाया गुणित्वात् शीङो गुणः ॥ १०९८।

**[समीक्षा]**

भूत अर्थ में 'कृतः, कृतवान् , भुक्तवान् ' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में निष्ठासंज्ञक प्रत्यय किए गये हैं । पाणिनि का सूत्र है - "निष्ठा" (अ० ३।२।१०२)। 'क्त' प्रत्यय के लिए कातन्त्रकार ने नकारघटित 'क्तवन्तु' प्रत्यय माना है । दोनों ही अवस्थाओं में कहीं नकारागम तो कहीं नलोप करना पड़ता है । इस प्रकार उभयत्र समानता ही है ।

**[रूपसिद्धि]**

१. **कृतः**। कृ + क्त + सि । 'डु कृञ् करणे' (७१७ ) धातु से प्रकृत सूत्र द्वारा

'क्त' प्रत्यय, 'क्' अनुबन्ध का प्रयोगाभाव, "धातुविभक्तिवर्जमर्थवल्लिङ्गम्" (२।१।१) से 'कृत्' शब्द की लिङ्गसंज्ञा, सि- प्रत्यय तथा विसर्गादेश ।

२. **कृतवान्** । कृ+क्तवन्तु +सि । 'कृ' धातु से 'क्तवन्तु' प्रत्यय, लिङ्गसंज्ञा तथा विभक्तिकार्य ।

३. **शायितः**। शी + इट् + क्त + सि । 'शीङ् शये' (२।५५) धातु से क्त - प्रत्यय, इडागम, गुण, अयादेश तथा विभक्तिकार्य ।

४. **शयितवान्**। शी + इट् + क्तवन्तु +सि । 'शी' धातु से क्तवन्तु प्रत्यय, इडागम, गुण, अयादेश, 'शयितवन्त्' शब्द की लिङ्गसंज्ञा तथा विभक्तिकार्य ॥ १०९८।

## १०९९. ङ्वनिप् सुयजोः [४।३।९४]

[सूत्रार्थ]

भूत अर्थ में 'सु-यज्' धातुओं से 'ङ्वनिप्' प्रत्यय होता है॥१०९९।

[दु० वृ०]

अतीते वर्तमानयोः सुयजोर्ङ्वनिब् भवति । सुतवान्-सुत्वा । इष्टवान् -यज्वा, यज्वानौ। ङकारोऽगुणार्थः॥१०९९।

[दु० टी०]

ङ्वनिप्०। पकारः "**धातोस्तोऽन्तः पानुबन्धे**" (४।१।३०) इति **विशेषणार्थः**। स्त्रियाम् - यज्वरी । वनो नकारस्यारेफप्रकृतेरपि रत्वम् । ननु च सुनोतेः क्वनिब् यजेश्च वनिप् सिद्धः ? सत्यम् । नियमार्थं सुयजिभ्यां ङ्वनिबेव यथा स्यात् क्विबादयो भा भूवन्निति, दृशिग्रहणं तत्र **प्रयोगानुसारार्थं** चेत् तथापि **प्रपञ्चः श्रेयानिति** ॥१०९९ ।

[वि० प०]

ङ्वनिप्०। सुत्वेति । पानुबन्धत्वात् तोऽन्तः। यदि पुनः अन्येभ्योऽपि-दृश्यन्ते सुञः क्वनिप् यजेश्च वनिप् भविष्यति किमनेनेत्युच्यते, तदा नियमार्थमेवेदं भविष्यति - आभ्यां ङ्वनिबेव न क्वनिबादयः । तदपि दृशिग्रहणादिति चेत् तर्हि प्रपञ्चार्थमिदमपि॥१०९९ ।

।। इत्याचार्यश्रीमत्त्रिलोचनदासकृतायां कातन्त्रवृत्तिपञ्जिकायां चतुर्थे कृत्प्रत्ययाध्याये तृतीयः कर्मादिपादः समाप्तः ।।



[समीक्षा]

'सुत्वा-यज्वा' शब्दरूपों की सिद्धि के लिए दोनों ही आचार्यों ने 'ङ्वनिप्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है - "सुयजोर्ङ्वनिप्" (अ० ३।२।१०३)। अतः उभयत्र समानता ही है ॥ १०९९ ।

[रूपसिद्धि]

१. **सुत्वा**। सु + ङ्वनिप् + सि । सुतवान् । 'षुञ् अभिषवे' (४।१) धातु से

प्रकृत सूत्र द्वारा 'ङ्वनिप्.' प्रत्यय, 'ङ् -इ-प् ' अनुबन्धों का प्रयोगाभाव, तकारागम, 'सुत्वन्' शब्द की लिङ्गसंज्ञा तथा विभक्तिकार्य ।

२-३. यज्वा, यज्वानौ । यज् +ङ्वनिप् + सि, औ । 'यज देवपूजासङ्गतिकरणदानेषु'। (१।६०८) धातु से ङ्वनिप् प्रत्यय आदि कार्य प्रायः पूर्ववत् ॥ १०९९ ।

## ११००. जीर्यतेरन्तृन् [४।३।९५]

[सूत्रार्थ]

भूतकाल अर्थ में 'जॄ' धातु से 'अन्तृन् ' प्रत्यय होता है ॥११००।

[दु० वृ०]

अतीते वर्तमानाज्जीर्यतेरन्तृन् भवति । जरन्, जरती । ऋकारो नकारश्चोच्चारणार्थः ॥ ११००।

**॥ इत्याचार्यदुर्गसिंहप्रणीतायां कातन्त्रवृत्तौ चतुर्थे कृत्प्रत्ययाध्याये तृतीयः कर्मादिपादः समाप्तः ॥**



[दु० टी०]

जीर्य० । जॄष इति सिद्धे तिब्निर्देशः पाठसुखार्थोऽसन्देहार्थश्च भवतीति। अन्तृरिति नकारमन्तरेण विसर्जनीये सति सकारान्तोऽयमिति प्रतिपद्येत ॥११०० ।

**॥ इत्याचार्यदुर्गसिंहप्रणीतायां कातन्त्रवृत्तिटीकायां चतुर्थे कृत्प्रत्ययाध्याये तृतीयः कर्मादिपादः समाप्तः ॥**



[समीक्षा]

'जरन्, जरन्तौ, जरती' आदि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'अन्तृन् ' पाणिनि ने 'अतृन्' प्रत्यय किया है। पाणिनि का सूत्र है - 'जीर्यतेरतृन्" (अ० ३।२।१०४ । अतः प्रायः उभयत्र समानता ही है ।

[विशेष वचन]

१. ऋकारो नकारश्चोच्चारणार्थः (दु० वृ०)।

२. तिब्निर्देशः पाठसुखार्थोऽसन्देहार्थश्च (दु० टी०)।

[रूपसिद्धि]

१. जरन्। जॄष् + अन्तृन् + सि । 'जॄष् वयोहानौ' (३।१८) धातु से प्रकृत सूत्र द्वारा 'अन्तृन् ' प्रत्यय, गुण, 'जरन्त् ' की लिङ्ग सञ्ज्ञा, सि-प्रत्यय तथा 'सि - त्' का लोप ।

२. जरती। जॄष् + अन्तृन् + ई +सि । 'जॄष् ' धातु से 'अन्तृन् ' प्रत्यय, गुण, स्त्रीलिङ्ग में 'ई' प्रत्यय, नलोप तथा विभक्तिकार्य ॥ ११०० ।

**॥इति कृत्प्रत्ययाध्याये चतुर्थे सम्पादकीयसमीक्षात्मकः कर्मादिपादस्तृतीयः समाप्तः॥**

:०:

# अथ चतुर्थे कृत्प्रत्ययाध्याये चतुर्थः क्वन्सुपादः

## ११०१. क्वन्सुकानौ परोक्षावच्च [४।४।१]

[सूत्रार्थ]

भूतकाल अर्थ में धातु से 'क्वन्सु-कान' प्रत्यय होते हैं तथा उनका परोक्षावद्भाव भी होता है ॥ ११०१ ।

[दु० वृ०]

अतीते वर्तमानाद् धातोः क्वन्सुकानौ भवतः, तौ च परोक्षे इव व्यपदिश्येते । पेचिवान् , पाचयाञ्चकृवान् । ररज्वान् , ओषाम्बभूवान् , शिशीर्वान्, दिदीर्वान्, जजागर्वान्, बभज्वान् । यणि दृष्टत्वादेवेर् जागर्तेर्गुणोऽनुषङ्गलोपश्च । व्यतिपेचानः, चक्राणः । अतीताधिकारः किम् ? श्रुसदवसामतीतमात्रे क्वन्सुरभिधातव्यः । उपशुश्राव, उपाश्रौषीत्, उपाशृणोत्, उपशुश्रुवान्, उपससाद, उपासदत् , उपासीदत्, उपसेदिवान्। अनूवास, अन्ववात्सीत् , अन्ववसत् - अनूषिवान् । तथा इणो नञ्पूर्वाच्चाश्नातेः। ईयिवान्, समीयिवान् , उपेयिवान्, अनाश्वान्। तथा अनुपूर्वाद् वचेः कानः कर्तर्येव- अनूचानः । अतीताभिधायिनोऽपि पूर्ववत् प्रयोक्तव्याः । शृणोत्यादय एवामी भाषायां रूढाः॥ ११०१ ।

[दु० टी०]

क्वन्सु०। निमित्तादयोऽतिदेशा न युज्यन्त इत्याह-व्यपदिश्येते इति। परोक्षाविभक्तेरतीतः परोक्षः कालो निमित्तं तदतिदिश्यमानं द्विर्वचनादिकं न साधयति । विशेषाभावादस्त्वेवमिति चेत् , न । "अर्त्तीण्घसैकस्वरातामिड्वन्सौ" (४।६।७६) इत्यात्रार्त्यादिरुपादानात्। अन्यथा एकस्वरद्वारेणैव सिध्यतीत्यर्थः । क्वन्सुकानौ परोक्षारूपिणौ चेत् ततः किं क्वन्सुकानौ परोक्षाकार्यिणाविति द्विर्वचनादिकं धातोः कर्म न पुनः परोक्षायाः। अथ परोक्षायां दृष्टं यत् कार्यं तत् परोक्षाया इत्यध्यारोप्यते इति प्रतिपत्तिगौरवं स्यात् । शास्त्रातिदेशोऽपि न घटते । व्यपदेशातिदेशोऽपि संज्ञातो न भिद्यते, वरं सञ्ज्ञैवास्ताम्, किं वद्ग्रहणेन ? सत्यम् , स्वाश्रयार्थम् । अन्यथा क्वन्सुकानौ परोक्षाविभक्ती भवतः इति विभक्तिवर्जं लिङ्गमिति लिङ्गसञ्ज्ञा न स्यात्। वद्ग्रहणे तु कृत्त्वाल्लिङ्गसञ्ज्ञा न विहन्यते ।

ननु लोकोपचारादेव विभक्तित्वं स्याद् अस्त्यादेश्चणः परोक्षेत्यनेन भवतः किं वत्करणेन? सत्यम्, प्रतिपत्तिसुखार्थमेवेत्यर्थः। न च वक्तव्यम् एवं वहे-महे, तदनन्तरं क्वन्सुकानौ विदध्याद् भिन्नकर्तृकत्वात् । पेचिवानिति परोक्षायामभ्यासस्यैत्वमभ्यासलोपश्च। पाचयाञ्चकृवानिति, प्रत्ययान्तत्वाद् आमः कृञनुप्रयोगः परोक्षायाम्। शिशीर्वानिति। 'शॄ हिंसायाम्' (८।१५), "ॠदन्तानां च" (३।६।१६) इति गुणो न भवति, यथा

विशशरतुरिति कानुबन्धसामर्थ्यात्, तर्हि जजागर्वानिति गुणोऽपि स्यात् जजागरतुरिति, यथा 'बभञ्ज्वान्, ररञ्ज्वान्' इति । 'भन्ज आमर्दने; रन्ज रागे' (६।१३;३।१२१)। परोक्षायामिन्द्धीत्यादिनियमादनुषङ्गस्थितिर्नास्तीति कानुबन्धबलादेव जागर्तेरपि गुणो न भवति, यणि दृष्टं कार्यं तत् कानुबन्धेऽपि यथा जागर्यते इत्याह-यणि दृष्टत्वादेवेरित्यादि। अतीताधिकारः किमिति परोक्षावद्भावाद् इहातीतत्वं लब्धमिति भावः। तेन यथाविषयमतीतप्रयोगानुदाहरति- उपाश्रौषीदित्यादि । तथेति इण्मात्रमिह प्रमाणमुपसर्गैरपि न विहन्यते इत्याह- समीयिवान्, उपेयिवानिति । इयाय, अगात्, ऐत्, इतवान् । नाश, नाशीत्, नाश्नात् , अनशितवान्। ब्रुवो वचिः - अनूवाच, अन्ववोचत् , अन्ववक्, अन्वब्रवीत् , अनूक्तवान्। वाऽभिधानव्यवस्थेयमविशेषनिर्देशात् । शृणोत्यादिभ्यः क्वन्सुकानावतीताभिधायिनौ न बाधकाविति ।

अन्यस्त्वाह- वाऽसरूपविधानादद्यतन्यादयोऽपि भवन्ति । न च कृतस्यैवायं नियमो यथा शक्येत, शक्यम्- सह्येत, सह्यमिति। शृणोत्यादय एवेति। अन्ये धातवः क्वन्सुकानान्ताश्छन्दस्येवेत्यादि। ते च परोक्षकालविषया एव। शास्त्रकारमतं तु लक्ष्यते-अन्येऽपि धातवः क्वन्सुकानान्ता भाषायाम्, यदयम् "अर्तीण्घसैकस्वरातमिड्वन्सौ" (४।६।७६) इत्याह - "गमहनविदविशदृशां वा" (४।६।७७) इति । अन्य आह - अनूचानादन्यत्र कानश्छन्दसीति । तथा शृणोत्यादीन् प्रत्यतीताधिकार इत्यभिधानात् । अतीतानुवर्तनोपायश्चकारग्रहणम् ।।११०१।

[वि० प०]

क्वन्सु०। व्यपदिश्यते इत्यनेन व्यपदेशातिदेशोऽयं नान्य इति दर्शितम् । तथाहि न तावन्निमित्तातिदेशः। परोक्षाविभक्तेरतीतपरोक्षकालो निमित्तम् , तच्चेदतिदिश्यते न धातोर्द्विर्वचनादिकं स्यात् तन्निबन्धनस्य परोक्षाव्यपदेशस्यैवाभावात् । अथ रूपातिदेशोऽस्तु ? क्वन्सुकानौ परोक्षारूपिणाविति चेत् किमतः सिद्धं परोक्षरूपमिति चेत् किं तदिति न विद्मः। अडादिकमिति चेत् किं क्वन्सुकानाभ्यां तदेव कुर्यात् स्थानिवद्भावेन यणवत् कार्यमिति चेत् तदयुक्तम् , एवं सति अडादिर्यणवद् इति ब्रूयात् । अस्तु तर्हि कार्यातिदेशः? क्वन्सुकानौ परोक्षाकार्यिणाविति तदयुक्तम् , परोक्षायाः कार्याभावात्। द्विर्वचनादिकं हि धातोः कार्यं न परोक्षाया इति । अथ परोक्षायां यद् दृष्टं कार्यं तत् परोक्षाया इति भाव्यते । तथापि प्रतिपत्तिगौरवं स्यात् । तथा "चण्परोक्षा०" (३.३.७) इत्यादिशास्त्रातिदेशो गरीयानिति। ननु व्यपदेशातिदेशोऽपि संज्ञातो न भिद्यते संज्ञैवास्तां किं वद्ग्रहणेन? सत्यम्, वद्ग्रहणं स्वाश्रयार्थम्। अन्यथा क्वन्सुकानौ परोक्षा चेत्युक्ते परोक्षाविभक्ती भवत इति विभक्तित्वाल्लिङ्गसंज्ञा तदन्तस्य न स्यात् । वद्ग्रहणे तु क्वन्सुकानयोः स्वाश्रयं कृत्त्वमस्तीति लिङ्गसंज्ञा न विरुध्यते । पेचिवानिति। पचेः क्वन्सुः। परोक्षावद्भावाद् द्विर्वचनम् । "अस्यैकव्यञ्जनमध्ये" (३।४।५१) इत्यादिना अकारस्यैत्त्वम् अभ्यासलोपश्च भवति इति। तथा पाचयाञ्चकृवानिति। पचेरिनन्तात्

क्वन्सौ परोक्षावद्भूते "चकासकास्०" (३।२।१७) इत्यादिना आम्, "आमः कृञनुप्रयुज्यते" (३।२।२२) इत्यादिना कृञनुप्रयोगः । ओषाम्बभूवानिति । "उषविदजागृभ्यो वा" (३।२।२०) इत्याम् भूधातोश्चानुप्रयोगः । कानुबन्धे यणि यद् दृष्टं कार्यं भवतीत्याह- यणीत्यादि ।"ऋदन्तस्येरगुणे" (३।५।४२) इतीर् । यथा शीर्यते इति। न तु "ऋदन्तानां च" (३।६।१६) इति गुणः, यथा- विशशरतुरिति । "यणाशिषोर्ये" (३।६।१३) इति गुणः, यथा जागर्यते इति, न तु परोक्षायामगुणे इत्यनेन , यथा जजागरतुरिति। "अनिदनुबन्धानाम्" (३।६।१) इत्यादिनाऽनुषङ्गलोपः, यथा- भज्यते, रज्यते इति। न तु "परोक्षायामिन्धि०" (३।६।३) इत्यादिना इन्ध्यादीनामेवेति नियमात् । अनुषङ्गस्थितिः, यथा बभञ्जतुरिति। कानमुदाहरति - 'व्यतिपेचानः, चक्राणः' इति । पचेरनियमे च "अगतिहिंसाशब्दार्थहसः" इति क्रियाविनिमये रुचादित्वादात्मनेपदम्।

यदा तु 'व्यतिपेठानः' इति पुस्तकान्तरे पाठस्तदा अशुद्ध एव । शब्दार्थत्वेन कर्तरि व्यावृत्तिविषयत्वात् । परोक्षावद्भावादतीतः कालो लब्ध एवेत्याह-अतीतेत्यादि । अतीताधिकारः सामान्येन वर्तमानः श्रुप्रभृतिभिरेव धातुभिः संबध्यते नान्यैरित्यर्थः । अन्येषां पुनः परोक्षाकालविषयत्वमेव परोक्षावद्भावाद् वेदितव्यम् । श्रुप्रभृतिभ्यः परोक्षादयो विशेषविहिताः पक्षे विकल्पाद् भवन्ति, न तु क्वन्सुकानाभ्यां बाध्यन्ते, तयोरतीतसामान्यविहितयोरुत्सर्गत्वात् । धातुविशेषाभावेनापवादत्वम् इति चेत् तथाप्यभिधानतः कृतो भवन्तीति, नैतौ बाधकावित्याह-उपशुश्रुवेति । परोक्षाद्यतनीह्यस्तन्यो यथा स्वे काले क्वन्सुश्च सर्वत्रातीतकाल इति 'श्रु श्रवणे' १।२७८), यदा विशरणार्थस्तस्य लृदनुबन्धत्वादद्यतन्यामण् क्वन्सौ द्विर्वचनादिके कृते "अर्तीण्घसैकस्वरातामिड्वन्सौ" (४।६।७६) इतीट् । 'वस निवासे' (१।६१४), "परोक्षायामभ्यासस्योभयेषाम्" (३।४।४) इति सम्प्रसारणम्, अद्यतन्यां सिचि "सस्य सेऽसार्वधातुके तः" (३।६।९३), क्वन्सौ यजादित्वात् कृतसम्प्रसारणस्य द्विर्वचने समानदीर्घत्वे "शासिवसिघसीनां च" (३।८।२७) इति षत्वम् । तथेति । क्वन्सौ द्विर्वचनम्, "दीर्घ इणः परोक्षायामगुणे" (३।३।१७) इत्यभ्यासे दीर्घत्वम् । पूर्ववदिटि कृते "इणश्च" (३।४।५९) इति यत्वम्। इण्मात्रस्य प्रमाणत्वाद् उपसर्गैरपि न विरुध्यते-'समीयिवान्, उपेयिवान् ' इति। नञ्पूर्वाच्चाश्नातेरिति, अस्योदाहरणमाह-अनाश्वानिति । 'अश भोजने' (८।४।३), क्वन्सुः, द्विर्वचनम्, "अस्यादेः सर्वत्र" (३।३।१८) इति दीर्घत्वे परलोपे चैकस्वरत्वात् पूर्ववद् इट् प्राप्तोऽभिधानान्न भवति । न आश्वान् अनाश्वानिति नञ्समासः । तथेत्यादि । 'वच भाषणे' (२।३०) परस्मैपदिनोऽप्यत एव वचनात् कान आत्मनेपदम् । इह ब्रूञो वा कृतवच्यादेशस्य ग्रहणं "स्वपिवचि०" (३।४।३) इत्यादिना कृतसम्प्रसारणस्य द्विर्वचनम्।

अतीताभिधायिनोऽपीति। इण्प्रभृतेरिति शेषः। यथा इयाय, अगात् ईत्।

नञ्पूर्वोऽश्नातिः। यथा नाश, नाशीत् , नाश्नात्। अनुपूर्वो वचिर्यथा। अनूवाच, अन्वोचत्, अन्ववक्। ब्रूञो वा अन्वब्रवीदिति सार्वधातुके वच्यादेशस्याभावात्। एवं निष्ठाप्रत्ययोऽतीताभिधायी श्रुप्रभृतिभ्यो यथायोगमुदाहर्तव्यः। शृणोत्यादय एवेति। अन्ये तु परोक्षकालविषयाः क्वन्सुकानान्ताश्छन्दस्येवेत्यर्थः। तत्तु मतान्तरम्। सूत्रकारस्य मतं लक्ष्यते क्वन्सुकानान्ताः परोक्षकालविषया अमी भाषायामपि यस्माद् ''अर्तीण्घसैकस्वराताम् इड्वन्सौ'' (४।६।७६) इति। ''गमहनविदविशदृशां वा'' (४।६।७७) इत्याह। न चैतच्छन्दोविषयतया चरितार्थमिति शक्यते वक्तुम्, छान्दसानां शब्दानामिहानादरादिति॥११०१।

[क० च०]

क्वन्सु० । अनयोः ककारो यण्वद्भावार्थः। क्वन्सोरुकार उदनुबन्धशन्तृड्पुंसामेवेति नियमार्थो नलोपश्चेत्यत्रोक्तम् । तथाहि गोमत्यतीति क्विपि यलोपे निमित्ताभावात् पुनर्नकारस्थितौ 'प्रत्ययलोपे प्रत्ययलक्षणम्' (का० परि० ५२) इति पुनर्लोपः कथन्न स्यात्, यथा गोमानित्यादि? अत्र सिद्धान्तः- यिन्नाय्योर्घुटि प्रत्ययलोपलक्षणं नास्तीति। तर्हि 'पथ्यौ, मंथ्यौ' इत्यत्र कथं नलोपः, तदायं नियम उच्यते- उदनुबन्धशन्तृड्पुंसामेवेति, यथा पेचवान् इत्यादि । पञ्जिकायां तन्निबन्धनस्येति । नन्वेतेन किं नहि दूषणमेव सिद्धान्तः? सत्यम् , ''अर्तीण्घसैकस्वराताम् इड्वन्सौ'' (४।६।७६) इति सूत्रे अर्त्यादिग्रहणान्नायमतिदेशः, तत्र हि द्विर्वचने एकस्वरत्वं गृह्यते । इदानीं यदि क्वन्सोर्द्विर्वचनं नास्ति, तदा एकस्वरद्वारेणैवार्त्यादेरपि ग्रहणं भविष्यति किमर्त्यादिग्रहणेन। यद् वा वद्ग्रहणमनर्थकम् , क्वन्सुकानौ परोक्ष इति कुर्यात् । अतीते परोक्षे क्वन्सुकानौ भवत इत्यर्थः । यण्वदिति । अयोक्तम् इत्यध्याहार्यम्। अडादिर्यण्वदयोक्तमिति कुर्यादित्यर्थः। अन्यथा इकारागमदीर्घगुणा न स्युरिति । अस्मिन् पक्षेऽडादेर्विभक्तित्वात् कथं तदन्तात् स्यादीनामुत्पत्तिः ? सत्यम् , कृदधिकारे विधानादस्य कृत्त्वात् प्रत्ययत्वमेव, न तु विभक्तित्वम् । तथा ''चण्परोक्षा'' (३।३।७) इति तथा पूर्वोक्तोपचारेणेत्यर्थः। नहि परोक्षाशास्त्रमस्ति, किन्तर्हि तस्यां धातोरेव स्वाश्रयमिति कृत्त्वार्थमित्यर्थः।

कानुबन्ध इति। परोक्षावद्भावाद् ऋदन्तानां चेति गुणो न स्यात् । यण्वद्भावादेव न स्यादिति कथं नियमः, न च वक्तव्यम् , कानुबन्धबलादेव भवतीति । पेचिवानित्यादावगुणेऽस्यैकव्यञ्जनमध्ये इत्यादिना एत्वाभ्यासलोपे चरितार्थत्वात्? सत्यम्, एवं च सति ङ्वन्सुकानाविति कुर्यात् । ''ङे न गुणः'' (४।१।६) इत्यनेनैवागुणत्वं भविष्यति, तस्मात् ककारसामर्थ्याद् यणि यद् दृष्टं तदेव भविष्यतीत्यदोषः । यद् वा आनस्यात्मनेपदित्वात् ''सर्वत्रात्मने'' (३।५।२१) इत्यनेनैवागुणत्वं सिद्धं किं कानस्य कानुबन्धकरणेन तस्माद् यण्वत् कार्यमेव । ''यणाशिषोर्ये'' (३।६।१३) इति । ननु कथं ''के यण्वच्च योक्तवर्जम्'' (४।१।७) इत्यनेन ये उक्तं वर्जयित्वैव यण्वद्भावः। ''यणाशिषोर्ये'' ((३।६।१३) इति तूक्तमिति नेदं प्रति यण्वद्भावः, सत्यम्, ''जागुः

कृत्यशन्तृङ्व्योः" (४।१।८) इत्यनेनैव यण्वद्भावः परत्वादपवादत्वाच्च तत्र योक्तवर्जं नास्तीत्युक्तमेव, तत्रैव यद्यप्यत्र परोक्षायामगुण इत्यनेनैवागुणे विशेषाभावस्तथापि वस्तुविचारः कृतः। व्यतिपेचान इति । नन्वशुद्धमिति कथमुक्तं कर्मणि कानः स्यात्? सत्यम् , तदा व्यत्युपसर्गोऽनर्थकः। अथोभयपदित्वादस्य कानः सिद्ध एव किं व्यत्युपसर्गाश्रयणेन? सत्यम् , व्यतिपेचान इत्यनेन कर्तरि रुच्यादिभ्य इत्यस्य चक्राण इत्यनेन "इन्ज्यजादेः" (३।२।४५) इत्यस्य चोदाहरणं क्रमशो दर्शितम् । इण्मात्रस्येति । अन्यस्तु निरुपसर्गत्वादिण एव क्वन्सुरिति मन्यते, तन्मतं निरस्तमिति भावः ॥११०१।

[समीक्षा]

'पेचिवान् , अनूचानः' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने क्वन्सु-कान (च् ) प्रत्ययों का विधान किया है । पाणिनि के दो सूत्र हैं - "लिटः कानज् वा, क्वसुश्च" (अ० ३।२।१०६, १०७)। नकार-चकार की योजना अपने अपने व्याकरणों की प्रक्रिया के अनुसार की गई है । इसे छोड़कर अन्य समानता ही है। यह ज्ञातव्य है कि पाणिनि उक्त प्रत्ययों का विधान छन्द में करते हैं, जबकि कातन्त्रकार ने इनका विधान लौकिक संस्कृत में माना है, क्योंकि कातन्त्र में वैदिक शब्दों की सिद्धि के लिए सूत्र नहीं बनाए गए हैं।

[विशेष वचन]

१. शृणोत्यादय एवामी भाषायां रूढाः (दु० वृ०)।

२. ननु लोकोपचारादेव विभक्तित्वं स्यात् (दु० टी०)।

३. शास्त्रकारमतं तु लक्ष्यते (दु० टी०)।

४. तथापि प्रतिपत्तिगौरवं स्यात् (वि० प०)।

५. न चैतच्छन्दोविषयतया चरितार्थमिति शक्यते वक्तुं छान्दसानां शब्दानामिहानादरादिति (वि० प०)।

[रूपसिद्धि]

१. पेचिवान्। पच् + क्वन्सु + सि । 'डु पचष् पाके' (१।६०३) धातु से प्रकृत सूत्र द्वारा 'क्वन्सु' प्रत्यय, परोक्षावद्भाव, द्विर्वचन, एत्व-अभ्यासलोप, 'पेचिवन्स्' शब्द की लिङ्गसंज्ञा तथा विभक्तिकार्य ।

२. पाचयाञ्चकृवान्। पच् + इन् + आम् + कृ + क्वन्सु + सि । 'पच् ' धातु से इन्, आम् प्रत्यय, गुण, अयादेश, 'कृ' का अनुप्रयोग, द्विर्वचनादि तथा विभक्तिकार्य ।

३. ररज्वान्। रञ्ज् + क्वन्सु + सि । 'रन्ज् रागे' (३।१२१) धातु से क्वन्सु प्रत्यय आदि कार्य पूर्ववत् ।

४. ओषाम्बभूवान्। उष् + आम् + भू + क्वन्सु + सि । 'उष दाहे' (१।२२९) धातु से क्वन्सु प्रत्यय, 'भू' का अनुप्रयोग इत्यादि ।

५-८. शिशीर्वान्। शॄ + क्वन्सु + सि । दिदीर्वान् । दॄ + क्वन्सु + सि । जजागर्वान्। जागृ + क्वन्सु + सि । बभज्वान्। भन्ज् + क्वन्सु + सि । प्रक्रिया पूर्ववत्।

९. व्यतिपेचानः। वि + अति + पच् + कान + सि । 'वि + अति' उपसर्ग-पूर्वक 'डु पचष् पाके' (१।६०३) धातु से प्रकृत सूत्र द्वारा 'कान' प्रत्यय, द्विर्वचनादि तथा विभक्तिकार्य ।

१०. चक्राणः। कृ + कान + सि । 'डु कृञ् करणे' (७।७) धातु से 'कान' प्रत्यय, द्विर्वचनादि तथा विभक्तिकार्य ॥ ११०१।

## ११०२. वर्तमाने शन्तृङानशावप्रथमैकाधि-करणामन्त्रितयोः [४।४।२]

[सूत्रार्थ]

वर्तमान काल में प्रथमैकाधिकरण्य तथा आमन्त्रित अर्थ में वर्तमान धातु से 'शन्तृङ् - आनश् ' प्रत्यय होते हैं ॥११०२।

[दु० वृ०]

वर्तमानक्रियायां वर्तमानाद् धातोः शन्तृङानशौ भवतः अप्रथमैकाधिकरणे आमन्त्रितविषये च, प्रथमान्तेन चेत् शन्तृङानशोः सामानाधिकरण्यं न भवतीत्यर्थः । पचन्तं पचमानं छात्रं पश्य । पचता पचमानेन छात्रेण कृतमित्यादि । आमन्त्रितविषये च-हे पचन् ! हे पचमान ! अप्रथमैकाधिकरणामन्त्रितयोरिति किम् ? पचति छात्रः । नञा निर्दिष्टस्यानित्यत्वात् - जुहोति, जुह्वत् । तथा मायोगे त्वाक्रोशे । मा पचन् , मा पचमानः । आनश्च क्रियापेक्षायाम् पचन्नास्ते, पचमानस्तिष्ठति । संज्ञायां वा - सन् गुणः, अस्ति गुणः, विद्यमानो ब्राह्मणः, विद्यते ब्राह्मणः ॥११०२।

[दु० टी०]

वर्तमाने०। शन्तृङ् इति ऋकार उच्चारणार्थः । ङकारो "ङे न गुणः" (४।१।६) इति विशेषणार्थः । आनशः शकारः सार्वधातुकार्थः । एकशब्दः समानार्थः, प्रथमाया एकाधिकरणम् प्रथमैकाधिकरणम् । प्रसज्यनञः प्रतिषेधो यावता वाक्यभेदोऽसमर्थः समासश्चेत्याह - प्रथमान्तेन चेदित्यादि । यदि पुनः पर्युदासः स्यात् । न प्रथमा अप्रथमा, प्रथमा अन्या द्वितीयाद्या विभक्तय उच्यन्ते आभिरेकार्थमात्रप्रथमैकाधिकरणमिति। 'कौर्वतः पचते' इति कुर्वतोऽपत्यं छात्रस्येति सापेक्षत्वात् तद्धितवृत्तिर्न स्यात् । कुर्वद्भक्तिरिति कुर्वतो भक्तिश्छात्रस्येति समासश्च न स्यात् । अनपेक्षायां तु शन्तृङेव स्यात् , प्रसज्यपक्षेऽपि कथं कुर्वत्तर इति प्रकृष्टः कुर्वन्, कुर्वद्रूप इति प्रशस्तः कुर्वन्, कुर्वत्कल्प इति ईषदसमाप्तः कुर्वन्निति।

तथा चलन्ती पताका यस्येति **चलत्पताकम्** ? सत्यम् , एवं मनसि कृत्वाह- नञा निर्दिष्टस्येति । तच्चानित्यत्वं लक्ष्यानुसारेणेति पचतितराम् इत्यादिषु न भवतः। यद्येवं "वर्तमाने शन्तृङानशौ" इत्यास्ताम् अभिधानादभिमतप्रयोगसिद्धिर्भविष्यति? सत्यम् , **मन्दधियां सुखार्थम्**। अव्यापकं चेदिह "**प्रत्ययोत्तरपदयोश्च**" इति वक्तव्यं नाश्रीयते इतरेतराश्रयदोषप्रसङ्गादिति। ननु कथमुत्पन्नयोः शन्तृङानशोः प्रथमैकाधिकरण्यं स्यात् , उत्पन्नयोश्च तयोस्तत्प्रतिबन्धकः इति नाविद्यमानयोर्विशेषणमुपलभ्यते? सत्यम्। कृदन्तसाधनं बुद्ध्या विशेषे विशेषणेन युज्यते । यथा "**वाऽणपत्ये**" (२।६।१) इत्युत्पन्ने च प्रत्ययेऽपत्यार्थोऽभिधीयते । 'पचन्तं पचमानं छात्रं पश्य' इति पचिक्रियापेक्षया छात्रः कर्ता दृशिक्रियापेक्षया कर्म सोऽयमपरित्यक्तकर्तृत्व एव क्रियान्तरे कर्मेति भवत एव । एतावता प्रथमैकाधिकरणाविति। ननु अपचन्तं पश्येति फलस्यानुवृत्तेर्वर्तमानता गम्यते इति नञापि प्रयोगौ भवतः ॥११०२।

[वि० प०]

वर्तमाने०। प्रथमया एकाधिकरणं **प्रथमैकाधिकरणम्** , तस्याभावोऽ**प्रथमैकाधिकरणम्**, प्रसज्यार्थो नञित्याह- प्रथमान्तेन चेदिति । यदि पुनः पर्युदासः सदृशग्राही स्यात्र प्रथमाऽप्रथमेति तदा प्रथमाव्यतिरिक्ताभिर्द्वितीयादिभिरेव विभक्तिभिः सामानाधिकरण्ये शन्तृङानशाविति । कुर्वतोऽपत्यं पचतोऽपत्यमिति विग्रहे कौर्वतः पचत इति **तद्धितवृत्तिर्न** स्यात् , सापेक्षत्वात् । अपेक्षते हि शन्तृङन्तो द्वितीयाद्यन्तं समानाधिकरणम् । यथा कुर्वतोऽपत्यं देवदत्तस्येति, न ह्यन्यथा शन्तृङ् अस्तीति तथा कुर्वतो भक्तिः कुर्वद्भक्तिरिति समासोऽपि न स्यात् । कुर्वतश्छात्रस्येत्यपेक्ष्यमाणत्वात् प्रसज्यार्थे तु नैष दोषः । शन्तृङानशोः प्रथमैकाधिकरणाभावनिबन्धनोत्पत्तिकतया द्वितीयाद्यन्तासमानाधिकरणपदापेक्षानुपपत्तेः ।

ननु प्रसज्यपक्षेऽपि कथमिदं लभ्यते इति भक्तिः । कुर्वन् भक्तिरस्य **कुर्वद्भक्तिः**। **कुर्वाणो** भक्तिरस्य कुर्वाणभक्तिरिति? तद्धिताश्च कथं प्रथमासमानाधिकरणवृत्तयः। यथा प्रकृष्टः कुर्वन् **कुर्वत्तरः**, प्रशस्तः कुर्वन् **कुर्वद्रूपः**, ईषदसमाप्तं कुर्वन् **कुर्वत्कल्पः** पुरुष इति? तथोत्तरपदेऽपि। चलन्ती पताका यस्य **चलत्पताकं** गृहम्? सत्यमेतत्, तथा नञा निर्दिष्टस्यानित्यत्वाद् भविष्यति। तथा चेदमेवाग्रतो वक्ष्यतीति। तेन "**प्रत्ययोत्तरपदयोश्च**" इति न वक्तव्यं भवति। अनित्यत्वं च लक्षणमनुसरतीति पचतितरामित्यादौ वर्तमानैव भवति न शन्तृङानशौ नञित्यादि। जुह्वदिति। "**जुहोतेः सार्वधातुके**" (३।४।६१) इति वत्वम् , "**अभ्यस्तादन्तिरनकारः**" (२।२।२९) इति नलोपः। सन्निति। "**अस्तेरादेः**" (३।४।४१) इत्यकारलोपः॥११०२।

[क० च०]

वर्तमाने०। वर्तते इति वर्तमानः कालः। परिच्छिन्ना क्रियैव हि काल इत्याह - वर्तमानक्रियायामिति । अथात्र प्रथमैकाधिकरणविषये शन्तृङ् , आमन्त्रितविषये आनशिति न यथासङ्ख्यं वर्तमान इति निर्देशात् । एकशब्दस्तुल्यवचनः अधिक्रियते नियुज्यतेऽस्मिन् शब्द इत्यधिकरणमर्थः। एकं च तदधिकरणं चेति **एकाधिकरणम्**, प्रथमाया एकाधिकरणं **प्रथमैकाधिकरणम्**, न प्रथमैकाधिकरणम् **अप्रथमैकाधिकरणम्** इति। ननु प्रथमया सहैकाधिकरणता न सम्भवतीत्याह-प्रथमान्तेन चेद् इत्येवं शन्तृङानशोरित्यर्थः। ननु यदि शन्तृङानशावव्युत्पन्नौ तदा विशेषणम् अप्रथमान्तेन कथं घटते येन निषेधः? सत्यम्, वाक्यार्थवशाद् बुद्धयेदं विशेषणं कल्प्यते, क्रियमाणयोः शन्तृङानशोः प्रथमान्तेन सह सामानाधिकरण्यं भविष्यतीति यत्रैवायं दृश्यते तत्रैव निषेध इति भावः।

अप्रथमैकाधिकरण इत्युक्ते आमन्त्रिते प्रथमान्तेन सामानाधिकरण्ये न स्यादित्यामन्त्रितग्रहणम् । यदि पुनरिति पञ्जी। अथायमेव नञ् कथं न स्यात् , न हि दूषणमेव सिद्धान्तः? सत्यम् , प्रसज्यार्थस्य प्राधान्यात् स एव । तथा चेति । अस्मिन्नेव सूत्रे शन्तृङानशाविति, अन्यथा प्रथमान्तेन सामानाधिकरण्यात् कथं शन्तृङानशाविति भावः। कुर्वन्निति - पुंस्त्वाविधेयत्वाद् भक्तिरस्त्रीलिङ्गेऽपि पचत्तर इति शन्तृङ् सत्यनिष्टं स्यात्, तथोत्तरपदेऽपीति। ननु कुर्वन् भक्तिरित्यनेनैव उत्तरपदे दर्शितम् , तत् कथं पुनरुच्यते? सत्यम्, भक्तिरस्येति व्यधिकरणेन बहुव्रीहिणापि कुर्वद्भक्तिरिति स्यात्, अतो नास्त्यत्र क्षतिः । चलत्पताकमित्यत्र सर्वथैव दोष इति पुनरुक्तम् ॥ ११०२।

[समीक्षा]

'पचन्तं पचमानं देवदत्तं पश्य' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'शन्तृङ् - आनश् ' प्रत्यय किए हैं और पाणिनि के 'शतृ-शानच् ' प्रत्यय हैं । अनुबन्धादि की योजना अपने अपने व्याकरण की प्रक्रिया के अनुसार है । अतः सामान्यतः उभयत्र समानता ही है । दो अर्थों के लिए पाणिनि के दो सूत्र अवश्य गौरवाधायक कहे जा सकते हैं -"लटः शतृशानचावप्रथमासमानाधिकरणे, सम्बोधने च" (अ०३।२।१२४,१२५)।

[विशेष वचन]

१. शन्तृङ् इति ऋकार उच्चारणार्थः, ङकारो "ङे न गुणः" इति विशेषणार्थः (दु० टी०)।
२. आनशः शकारः सार्वधातुकार्थः (दु० टी०)।
३. अनित्यत्वं च लक्षणमनुसरति (वि० टी०)।
४. अधिक्रियते नियुज्यतेऽस्मिन् शब्द इत्यधिकरणमर्थः (क० च०)।

[रूपसिद्धि]

१. पचन्तं छात्रं पश्य । पच् + शन्तृङ् + अम् । 'डु पचष् पाके' (१।६०३) धातु

से प्रकृत सूत्र द्वारा 'शन्तृङ् ' प्रत्यय, 'श् - ऋ-ङ् ' अनुबन्धों का प्रयोगाभाव, अन् - विकरण, 'पचन्त् ' की लिङ्गसंज्ञा, अम् प्रत्यय ।

२. पचमानं छात्रं पश्य । पच् + आनश् + अम् । 'पच् ' धातु से 'आनश् ' प्रत्यय, मकारागम, अन् - विकरण तथा विभक्तिकार्य ।

३. पचता छात्रेण । पच् + शन्तृङ् + टा । 'पच् ' धातु से 'शन्तृङ् ' प्रत्यय, अन् - विकरण, नकारलोप तथा विभक्तिकार्य ।

४. पचमानेन छात्रेण । पच् + आनश् + टा । 'पच् ' धातु से 'आनश् ' प्रत्यय, मकारागम, अन् - विकरण तथा विभक्तिकार्य ।

५. हे पचन् ! पच् + शन्तृङ् + सि । 'पच् ' धातु से शन्तृङ् ' प्रत्यय, अन् -विकरण तथा विभक्तिकार्य ।

६. हे पचमान ! पच् + आनश् + सि । 'पच् ' धातु से 'आनश् ' प्रत्यय, मकारागम, अन् - विकरण तथा विभक्तिकार्य ॥११०२।

## ११०३. लक्षणहेत्वोः क्रियायाः [४।४।३]

[सूत्रार्थ]

क्रिया के लक्षण तथा हेतु अर्थ में 'शन्तृङ् ' एवं 'आनश् ' प्रत्यय होता है ॥११०३।

[दु० वृ०]

आभूताद् वर्तमानाधिकारः । क्रियाया लक्षणे हेतौ चार्थे वर्तमानाद् धातोः शन्तृङानशौ भवतः । तिष्ठन्तोऽनुशासति गणकाः, शयाना भुञ्जते यवनाः। हेतौ च - अर्जयन् वसति, अधीयानो वसति । लक्षणं चिह्नम् , जनको हेतुः । लक्षणहेत्वोरिति किम् ? पचति च पठति च । क्रियाया इति किम् ? यः कम्पते सोऽश्वत्थः, यदुत्प्लवते तल्लघु ॥११०३।

[दु० टी०]

लक्षण०। अत्र हि स्थानं लक्षणम् , तेन हि अनुशासनक्रिया लक्ष्यते । ननु च 'शयाना भुञ्जते यवनाः' इति शयनभोजनयोः सहभावित्वं नास्ति, न हि शयने भोजनमवश्यम्भावि, अथ भोजनं शयनेन विना न भवति । यथा धूमोऽग्निनेति। भोजनमेव तर्हि लक्षणं विशेषणं स्यात् शयनस्य न शयनं भोजनस्य ? सत्यम् , अत्र लक्षणार्थः क्रियान्तरानुवृत्तौ यो धात्वर्थो लक्षणं तत्र वर्तमानादिति । तथा च साधनद्वारेणैव क्रियाया लक्षणम् । एवं सति तिष्ठन् मूत्रयति, भक्षयन् गच्छतीति सिद्धम् । ननु च यथा अधीते वटुः, अधीयानो वटुरिति नञा निर्दिष्टस्यानादित्वात् सिध्यति, तथा लक्षणहेत्वोः प्रथमैकाधिकरणे शन्तृङानशौ भवतः एव? सत्यम् , प्रपञ्चार्थम्। आनश्च क्रियापेक्षायामित्यत्र प्रथमैवान्तर्भवति परसूत्रमेतदेके न पठन्त्येव । क्रियाया इत्यादि कम्पनोत्प्लवनाख्यद्रव्यगुणौ लक्ष्येते ॥११०३।

[वि० प०]

लक्षण०। तिष्ठन्त इत्यादि । अत्रावस्थानेनानुशासनं दैवपर्यालोचनं लक्ष्यते इत्यवस्थानं लक्षणं भवति । ननु कथं 'शयाना भुञ्जते यवनाः' इति ? शयनस्य

भोजनमन्तरेणापि सम्भवाल्लक्षणत्वानुपपत्तेः । न हि शयने भोजनमवश्यम्भावीति । अथान्तरेण शयनं न भोजनम् , यथा अग्निमन्तरेण न धूम इति चेद् एवमेतत् , किन्त्वेवं सति भोजनमेव लक्षणं स्यात् शयनस्य । यथाऽग्नेर्धूम इति । नैष दोषः, इह लक्षणशब्दस्य विशेषणार्थत्वाद् इदमुक्तं भवति । क्रियाया लक्षणं विशेषणं यो धात्वर्थस्तस्मिन् वर्तमानाद् धातोरित्यर्थः । तेन तिष्ठन् मूत्रयति, भक्षयन् गच्छतीत्याद्यपि सिद्धम् । हेताविति। 'अर्ज षर्ज अर्जने' (१।६५), हेत्विनन्तात् शन्तृङ् , चौरादिकत्वात् स्वार्थिकेनन्तादित्यपरे। अत्राप्यर्जनाध्ययने वसतिक्रियाहेतुस्तयोरभावे तदभावात्। अथ 'वर्षतीति धावति, हन्तीति पलायते' इत्यत्र कथन्न भवति । वर्षणहनने हि धावनपलायनहेतू इति? न देश्यम् इतिशब्देनैवात्र हेत्वर्थस्य द्योतितत्वात्। क्रियाया इत्यादि। इह कम्पनोत्प्लवनाभ्यां यथाक्रमम् अश्वत्थलघुसञ्ज्ञकौ द्रव्यगुणौ लक्ष्येते न तु क्रियेति व्यावृत्तिः। तर्हि कथमधीयानो वटुरिति वटोर्द्रव्यत्वादिति चेत्? सत्यम्, प्रथमैकाधिकरणेऽपि पूर्वेणानित्यत्वबलाद् भविष्यति। यदि पुनरानश्च क्रियापेक्षायामित्यनेनैव सिध्यति किमनेन सूत्रेणेत्युच्यते तदा तस्यैव प्रपञ्चार्थमिदं भविष्यति ॥११०३।

[क० च०]

लक्षण०। आभूतादिति । "उणादयो भूतेऽपि" (४।४।६७) इति पर्यन्तम् ॥११०३।

[समीक्षा]

'अर्जयन् वसति, शयाना भुञ्जते यवनाः' इत्यादि प्रयोगों के सिद्ध्यर्थ कातन्त्रकार ने 'शन्तृङ् - आनश् ' प्रत्यय तथा पाणिनि ने 'शतृ - शानच् ' प्रत्यय किए हैं । पाणिनि का सूत्र है - "लक्षणहेत्वोः क्रियायाः" (अ० ३।२।१२६)। प्रत्ययों में अनुबन्धों तथा नकार की योजना अपने अपने व्याकरण की प्रक्रिया के अनुसार है। अतः सामान्यतया दोनों में समानता ही है ।

[विशेष वचन]

१. साधनद्वारेणैव क्रियाया लक्षणम् (दु० टी०)।

२. परसूत्रमेतदेके न पठन्त्येव (दु० टी०)।

३. तदा तस्यैव प्रपञ्चार्थमिदं भविष्यति (वि० प०)।

[रूपसिद्धि]

१. तिष्ठन्तोऽनुशासति गणकाः । स्था + शन्तृङ् + जस् । 'ष्ठा गतिनिवृत्तौ' (१।२६७) धातु से प्रकृत सूत्र द्वारा 'शन्तृङ्' प्रत्यय, 'श् - ऋ - ङ् ' अनुबन्धों का प्रयोगाभाव, "स्थस्तिष्ठः" (३।६।७३) से 'स्था' को 'तिष्ठ' आदेश तथा विभक्तिकार्य।

२. **शयाना भुञ्जते यवनाः** । शी + आनश् + जस् । 'शीङ् स्वप्ने' (२।५५) धातु से 'आनश् ' प्रत्यय, 'श् ' अनुबन्ध का प्रयोगाभाव, धातुघटित ईकार को गुण, अयादेश तथा विभक्तिकार्य ।

३. **अर्जयन् वसति** । अर्ज् + इन् + शन्तृङ् + सि । 'अर्ज प्रतियत्ने' (९।१४५) धातु से 'इन् ' प्रत्यय, 'अर्जि' की धातुसंज्ञा, 'शन्तृङ् ' प्रत्यय, इकार को गुण, अयादेश तथा विभक्तिकार्य ।

४. **अधीयानो वसति** । अधि + इङ् + आनश् + सि। 'अधि उपसर्ग पूर्वक 'इङ् अध्ययने' धातु से प्रकृत सूत्र द्वारा आनश् प्रत्यय, "स्वरादाविवर्णोवर्णान्तस्य धातोरियुवौ" (३।४।५५) से 'इ' को 'इय् ' आदेश, समानलक्षण दीर्घ तथा विभक्तिकार्य ।।११०३।

## ११०४. वेत्तेः शन्तुर्वन्सुः [४।४।४]

**[सूत्रार्थ]**

'विद ज्ञाने' (२।२६) धातु से उत्तरवर्ती 'शन्तृङ् ' प्रत्यय के स्थान में 'वन्सु' आदेश विकल्प से होता है ।।११०४।

**[दु० वृ०]**

वेत्तेः परस्य शन्तुर्वन्सुर्भवति वा। विद्वान्, विद्वांसौ, विदन् , विदन्तौ। तिब्निर्देशः **सुखार्थः**। वेत्तेरेवानन्तरः शन्तृङिति।।११०४।

**[दु० टी०]**

वेत्तेः । सत्तालाभार्थयोर्यन्विकरणाभ्यां व्यवधानाद् विचारार्थश्च रौधादिक आत्मनेपदीति ज्ञानार्थ एवात्र पारिशेष्यादित्याह- तिबित्यादि । ननु वेत्तेः 'शन्सुङ् ' इत्यास्ताम् , किमादेशेन शकारस्य सार्वधातुकत्वादिड् न भवति ङे न गुणः इति च ? सत्यम् , लक्षणहेत्वोरित्यत्र प्रथमैकाधिकरणं न वर्तते वचनादिहानुवर्तते तर्हि प्रथमैकाधिकरणे कथं शन्तृङ् अनित्यत्वबलादिति चेद् एवमधिकारोऽपि न वर्तिष्यते इष्टत्वादिति ? सत्यम् , प्रतिपत्तिगौरवं स्यात् ।।११०४।

**[वि० प०]**

वेत्तेः। पण्डिताभिधायिन एव वन्सुरन्यत्र नाभिधीयते इत्यभिप्रायेणाह - वेत्तेरिति। तदयुक्तम् , अन्यत्रापि दृश्यते वन्सुरादेशो यथा - विद्वान् घटमिति । तथा च प्रयोगः- **'महिम्नः पारं ते परमविदुषः'** (शि० म० स्तो०) इति निष्ठादित्वात् कर्मणि षष्ठी प्रतिषिध्यते । तेन पण्डितपर्यायत्वे सति कर्मविभक्तिर्युज्यते । तस्मादभिधानादेवात्र विकल्प इति । वेत्तेरेवेत्यादि । विदः सत्तार्थस्य विचारार्थस्य चात्मनेपदित्वादेव न शन्तृङ् । परस्मैपदं तु लाभार्थस्योभयपदित्वादस्ति केवलमन्विकरणेन शन्तृङो न व्यवधानम् । विद इति । इह **'पञ्चम्या निर्दिष्टे परस्य'** (का० परि० २२) इत्यनन्तरस्यैव पारिशेष्याद् विदिर्ज्ञानार्थ एव लभ्यते इत्यर्थः ।।११०४।

[क० च०]

वेत्तेः । ननु सूत्रे वाग्रहणाभावात् कथं विकल्प उपलभ्यते इत्याह - पण्डिताभिधायिन इति । अयमर्थः - यदैव पदेन पण्डित उच्यते तदैव क्रियते वन्स्वादेशः, यदा क्रियोच्यते तदा शन्तृङः स्थितिः। 'महिम्नः पारं ते परमविदुषः' इति ते तव महिम्नः पारम् अविदुषोऽजानत इत्यर्थः ॥ ११०४।

[समीक्षा]

'विद्वान् , विद्वांसौ' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'शन्तृङ् ' को 'वन्सु' आदेश तथा पाणिनि ने 'शतृ' को 'वसु' आदेश किया है । पाणिनि का सूत्र है- "विदेः शतुर्वसुः" (अ० ७।१।३६)। प्रत्यय तथा आदेश में नकार का योग तथा उसका अभाव तो अपने अपने व्याकरण की प्रक्रिया के अनुसार है । अतः उभयत्र समानता ही है ।

[विशेष वचन]

१. तिब्निर्देशः सुखार्थः (दु० वृ०)।

२. सत्यम् , प्रतिपत्तिगौरवं स्यात् (दु० टी०)।

[रूपसिद्धि]

१. विद्वान्, विदन्। विद् + शन्तृङ् - वन्सु + सि । 'विद ज्ञाने' (२।२७) धातु से 'शन्तृङ् ' प्रत्यय, वन्सु - आदेश तथा विभक्तिकार्य । वन्सु - आदेश के अभाव में 'विदन् ' शब्दरूप ।

२. विद्वांसौ, विदन्तौ। विद् + शन्तृङ् - वन्सु + औ । 'विद' धातु से शन्तृङ्, वन्सु - आदेश तथा विभक्तिकार्य । वन्सु - आदेश के अभाव में 'विदन्तौ' शब्दरूप ॥११०४।

## ११०५. आनोऽत्रात्मने [४।४।५]

[सूत्रार्थ]

'क्वन्सु - कान - शन्तृङ् - आनश् ' प्रत्ययों में से 'कान-आनश् ' इन दो प्रत्ययों की 'आत्मनेपद' संज्ञा होती है ॥११०५।

[दु० वृ०]

अत्रैतेषु क्वन्सुप्रभृतिषु मध्ये आन एवात्मनेपदसञ्ज्ञो भवति, इतरः परस्मैपदमर्थात्। अधीयमानम् , स्थीयमानम् , पचमानः, रोचमानः, चक्राणः, व्यतिबभूवानः। आत्मनेपदत्वाद् भावकर्मणोः कर्तरि रुचादिभ्यश्च भवति ॥११०५।

[दु० टी०]

आनो०। आन इति कानानशोः ककारशकारानुबन्धावुत्सृज्य निर्दिश्यते । अत्रेति निर्द्धारणे सप्तमी । शन्तृङ्क्वन्सू परस्मैपदम् इति प्रतियोगित्वादत्र ग्रहणमवधारयति, तेन परस्मैपदिभ्य एव भवतः ॥११०५।

[वि० प०]

आनः । कानानशोरुत्सृष्टानुबन्धयोरान इह गृह्यते । इतर इति । शन्तृङ् क्वन्सुः पारिशेष्यात् ।।११०५।

[क० च०]

आनो० इत्यादि। अत्रेत्यवधारणे सप्तमी। एषूक्तेषु क्वन्सुप्रभृतिषु मध्ये य आनः स आत्मनेपदम् , नान्य इत्यर्थः प्रतियोगित्वात् । शन्तृङ्क्वन्सू एव परस्मैपदमिति तत्रोक्तत्वात् कानानशोरेवानस्य ग्रहणम् , न तु शानङोऽनुक्तत्वात् , व्यावृत्तिरप्युक्तयोः शन्तृङ्क्वन्स्वोरिति। अथवा 'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य' (व्या० परि० ४६) इति न्यायात् कानानशावेवेह गृह्येते, ततश्च व्यावृत्तिरपि सहचरितत्वात् शन्तृङ्क्वन्स्वोरेवेति भावः । अत एव पञ्ज्यामुक्तं कानानशोरित्यादि। नन्वत्र ग्रहणाभावात् सन्निहितत्वादानशः आनस्यैव ग्रहणं स्याद् अतोऽत्रग्रहणस्य व्याप्त्यर्थत्वात् कानस्यानो गृह्यते इति व्याप्त्यर्थमेवात्रपदम्, तत् कथं तद्बलादितरः परस्मैपदमित्यवगम्यते इत्याह - आन आत्मने इति हेमः । न च सन्देहे गुरुलाघवचिन्ता युक्तिमतीति भावः ।।११०५।

[समीक्षा]

'अधीयमानम् , पचमानः, चक्राणः' आदि शब्दरूपों में 'इङ् - पच् - कृ' इत्यादि धातुओं से भाव - कर्म अर्थों में 'आनश्, कान' प्रत्ययों के विधानार्थ दोनों ही आचार्यों ने उनकी आत्मनेपद संज्ञा की है । पाणिनि का सूत्र है - "तङानावात्मनेपदम्" (अ० १।४।१००)। अतः उभयत्र समानता है ।

[विशेष वचन]

१. न च सन्देहे गुरुलाघवचिन्ता युक्तिमती (क० च०)।

[रूपसिद्धि]

१. **अधीयमानम्** । अधि + इङ् + आनश् + सि । 'अधि' उपसर्गपूर्वक 'इङ् अध्ययने' (२।५६) धातु से आनश् प्रत्यय, "सार्वधातुके यण् " (३।२।३१) से कर्म अर्थ में 'यण् ' प्रत्यय, "आन्मोऽन्त आने" (४।४।७) से मकारागम, समानदीर्घ तथा विभक्तिकार्य ।

२. **स्थीयमानम्** । स्था + यण् + आनश् + सि । 'ष्ठा गतिनिवृत्तौ" (१।२६७) से आनश् प्रत्यय, भाव अर्थ में 'यण् ' प्रत्यय, मकारागम, "दामागायतिपिबतिस्थास्यतिजहातीनामीकारो व्यञ्जनादौ" (३।४।२९) से स्थागत आकार को ईकार तथा विभक्तिकार्य ।

३. **पचमानः**। पच् + आनश् + सि । 'डु पचष् पाके' (१।६०३) धातु से आनश् प्रत्यय, मकारागम, अन् - विकरण तथा विभक्तिकार्य ।

४. **रोचमानः**। रुच् + आनश् + सि । 'रुच दीप्तौ' (१।४७३) धातु से आनश् प्रत्यय, मकारागम, अन् - विकरण, गुण तथा विभक्तिकार्य ।

५. चक्राणः। कृ + कान + सि । 'डु कृञ् करणे' (७१७) धातु से 'कान' प्रत्यय, 'कृ' को द्विर्वचनादि, ऋकार को रकार, नकार को णकार तथा विभक्तिकार्य ।

६. व्यतिबभूवानः। वि + अति + भू + कान + सि । 'वि - अति' उपसर्गपूर्वक 'भू सत्तायाम्' (१।१) धातु से 'कान' प्रत्यय आदि कार्य प्राय: पूर्ववत् ॥११०५।

## ११०६. ई तस्यासः [४।४।६]

[सूत्रार्थ]

'आस् उपवेशने' (२।४५) धातु से परवर्ती आन - प्रत्यय के आदि में स्थित आकार को ईकार आदेश होता है ॥११०६।

[दु० वृ०]

आसः परो यः आनस्तस्यादेरीर्भवति । आसीनः । तस्येति रूपमात्रानुकर्षणार्थम्, तेन शानङोऽपि - कतीहोदासीनाः सन्ति ॥११०६।

[दु० टी०]

ई०। ननु परस्यादेरितीह परिभाषा न प्रयोजयतीति प्रागुक्तम् , ततश्च वर्णान्तस्य विधिरित्यन्ते स्यात् । न चैतावता तस्य प्रयोजनमिह तस्य 'आ आ स' इति प्रश्लेषः, आ इत्यत्र षष्ठी प्रथमा वा लुप्यते, तस्यानस्य आ ईकारो भवतीति मनसिकृत्याह - आदेरित्यादि । अथवा आस इति समीपलक्षणा षष्ठी तस्येत्यवयवलक्षणा आसः समीपानस्यावयव ईकारो भवतीति **'व्याख्यानतो विशेषार्थप्रतिपत्तिर्न हि सन्देहादलक्षणम्'** (का० परि० ६५)। तस्येत्यादि । न चेदं देश्यम् , तस्य ग्रहणेन विना प्रत्ययान्तरस्वीकारः स्यादित्यर्थघटनया **'अर्थवशाद् विभक्तिविपरिणामः'** (का० परि० २५) इत्यपि न युक्तम् । इह 'आ आसः' इति प्रश्लेषनिर्देशादानस्येति षष्ठी प्रकल्प्यते अनन्तरत्वाद् द्वितीयेऽपि पक्षेऽत्रेत्यनुवर्तते एतस्मिन्नाने आसः समीपवर्ण एवावसीयतेऽर्थात् । उत्पूर्वः **'आस उपवेशने'** (२।४५) ताच्छील्ये शानङ् ॥११०६।

[वि० प०]

ई तस्य०। ननु कथम् आदेरिति निश्चितम् । न हीह परस्यादेरिति वचनमाद्रियते, अतो वर्णान्तस्यैव स्यात् ? तदयुक्तम् । तस्येत्यवयवावयविसम्बन्धे षष्ठी, तेनासः परो यः आनस्तस्यावयवस्येति वाक्यार्थे कथमन्तस्य व्यवहितस्य स्यात् । अथानन्तरसूत्रादानो वर्तते तस्य च प्रथमान्तस्याप्यर्थवशादेव षष्ठ्या योगे सिध्यति किं तस्येत्यनेनेत्याह- तस्येति। "शक्तिवयस्ताच्छील्ये" (४।४।९) इति वक्ष्यमाणेन शानङ् स्यात् ॥११०६।

[क० च०]

ई०। तस्येत्यादि । एतेन प्रक्रान्त - प्रक्रंस्यमानार्थस्तच्छब्दोऽत्र दर्शितः । ननु तद्ग्रहणाभावे आसधातोरीप्रत्ययो भवतीत्यर्थः कथन्न स्यात् , आनस्याधिकारे किं

प्रमाणम् । यद् वा भवतु आनाधिकारस्तथापि तस्मिन् परे मध्ये प्रत्ययान्तरं भवतीत्यर्थः कथन्न स्यात् । यद् वा आस्धातोरन्तस्य आने परे ईकारादेशो भवतीत्यर्थो वा कथं न स्यात् ? नैवम् , यद् ईप्रत्ययः स्यात् तदा आस ईरिति विधिः स्यात् । कार्यी निमित्तं कार्यमित्यस्य विपर्ययनिर्देशान्निर्विभक्तिकनिर्देशाच्च नायं प्रत्ययः, तर्हि आसेरादेशः स्यात् , नैवम् । पूर्वत्र आनस्य कार्यित्वदर्शनादत्रापि स एव कार्यी प्रतीयते । अथ भवतु स एव कार्यी तथापि दूषणम् , आन इति प्रथमान्तत्वेनानुवर्तिष्यते ततश्च आन ईर्भवतीत्यभेदात् समुदायस्यादेशः स्यात् । न च वक्तव्यम् अर्थवशाद् विभक्तिविपरिणामं करिष्यति प्रथमान्तेनैवार्थस्य सम्भवात् ? सत्यम् , तदा प्रश्लेषव्याख्यां करिष्यति । तथाहि 'आ आसः' इति 'आ' इति लुप्तप्रथमा । **तेनायमर्थः** - आसः परस्यानस्याकार ईकारो भवतीत्यर्थः । अस्मिन् पक्षेऽपि दृष्टपरिकल्पनावशात् सप्तम्यन्तेन सम्बध्यते । अतः आनस्यैव कार्यित्वं कुत आसः आकारः ईकारो भवतीत्यर्थः । एतदेव मनसि कृत्वा पञ्जिकायामुक्तम् अन्तरङ्गत्वादानो वर्तते इति ॥११०६।

[समीक्षा]

'आसीनः' शब्दरूप-के सिद्ध्यर्थ आन्घटित आकार को ईकारादेश दोनों ही आचार्यों ने किया है । "पाणिनि का सूत्र है- "**ईदासः**" (अ० ७।२।८३)। अतः उभयत्र समानता है ।

[रूपसिद्धि]

१. **आसीनः**। आस् + आनश् + सि । 'आस उपवेशने' (२।४५) धातु से 'आनश् ' प्रत्यय, प्रकृत सूत्र द्वारा 'आन' के आदि में स्थित आकार को ईकार तथा विभक्तिकार्य ॥११०६।

## ११०७. आन्मोऽन्त आने [४।४।७]

[सूत्रार्थ]

'आन' प्रत्यय के परे रहते पूर्ववर्ती अकार के बाद मकार आगम होता है ॥११०७।

[दु० वृ०]

अकारात् परो य आनस्तस्मिन् परेऽकारान्तस्य मकारोऽन्तो भवति । पचमानः, क्रियमाणः, करिष्यमाणः ॥११०७।

[दु० टी०]

अन्मो०। अथ किमर्थं पञ्चमीनिर्देशः स्येन संहितेऽपि संश्लिष्टेऽप्याने मकारागमप्रतिपत्त्यर्थः। अकार इति वर्णग्रहणं ततस्तेन समुदायस्य विशेषणमित्याह- अकारान्तस्येति । यद्येवं प्राणनं प्राण आन इति स्थिते आदित्यस्तीति सत्यम् , तेषु तच्छब्दानुवर्तनात् तस्मिन्नाने परं इति प्रत्ययप्रस्तावाच्च । अन्य आह - धातोरित्यनुवर्तते

न हि धातुरदन्तोऽस्तीति । धातोरिति निमित्तसम्बन्धे षष्ठी विज्ञायते धातोर्निमित्तस्य योऽकार इति, यद्येवम् इह न स्यात् करिष्यमाणः, अपर्यस्यमानः समुदायस्य निमित्तत्वान्नैष दोषः । धातोर्निमित्तस्याकारान्तस्येति विज्ञानात् 'पचमानः' इत्यत्र व्यपदेशिवद्भावाद् भविष्यतीति । एवमकारो वर्णः स कथं वर्णो वर्णस्यावयवो भवति । वर्णेऽप्यादिमध्यान्तभागाः सम्भवन्ति । उच्चैरुदात्तः, नीचैरनुदात्तस्तयोर्मिश्रश्च समाहारः स्वरितः इति प्रतिभागदर्शनात्। तस्मात् संहतिरूपस्य वर्णस्य वर्णान्तरमवयव इति नास्ति विरोधः । अपर आह - किमिह तदन्तविशेषणेन श्रुतस्याकारस्य मकारागमो भवतीत्यकारादिरयं समुदायो मकारान्तो भवतीति को दोषस्तेनास्य वमोर्दीर्घो न भवीति ॥११०७।

[वि० प०]

आन्मोऽन्तः । ननु चान इति सप्तमीनिर्देशात् पूर्वस्य मोऽन्त इत्यागमत्वादस्येति षष्ठी युज्यते, कथमादिति पञ्चमीनिर्देशः सत्यम् , इह पञ्चमीनिर्देशोऽकारमात्रादान इह प्रतिपत्त्यर्थः। तेन 'करिष्यमाणः' इत शन्त्रानौ स्यसंहितौ शेषे चेति स्येन संहितेऽतिसंश्लिष्टेऽप्याने मोऽन्तो भवतीति ॥११०७।

[क० च०]

आत्०। तस्येति वर्तते उच्चारणार्थवशात् सप्तम्यन्तत्वेन संबध्यते तस्मिन्नान इति, तेन शानङानस्यापि ग्रहणं तस्येति रूपमात्रानुकर्षणार्थम् इत्युक्तमेव । ततः कुतः **'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य'** (व्या० परि० ४६) इति न्यायात् शानङो न ग्रहणमित्याशङ्का । ननु वर्णस्यावयवो वर्णः सम्भवति । अत एव वृत्तावकारान्तस्येत्युक्तं तत् कथं पञ्जिकायामागमत्वादस्येति षष्ठी युज्यते इत्युक्तम्? सत्यम्, अस्येत्युक्तेऽकारान्तसमुदायस्यैवागमत्वं भविष्यतीत्यदोषः। यद् वा उच्चैरुदात्तो नीचैरनुदात्तस्तयोर्मिश्रश्च समाहारः इति प्रविभागदर्शनाद् वर्णे आदिमध्यान्तभागः सम्भवति अभिसंश्लिष्ट इति पञ्जी। संहिता निरतिशयमानन्तर्यम् । अतः स्यसंहितत्वविधानाद् मध्ये वर्णान्तरानुप्रवेशो न सम्भवतीति पञ्चमीबलान्मध्येऽपि विधिरिति ॥११०७।

[समीक्षा]

'पचमानः, यजमानः, क्रियमाणः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने मकारागम किया है । पाणिनि ने इसमें 'मुक्' आगम किया है - "आने मुक्" (अ० ७।२।८२)। पाणिनीय 'मुक्' का स्थान निश्चित करने के लिए "आद्यन्तौ टकितौ" (अ० १।१।४६) यह परिभाषासूत्र बनाया गया है । इस प्रकार पाणिनीय प्रक्रिया में गौरव तथा कातन्त्रीय प्रक्रिया में लाघव सन्निहित है ।

[विशेष वचन]

१. वर्णेऽप्यादिमध्यान्तभागाः सम्भवन्ति (दु० टी०)।

२. संहतिरूपस्य वर्णस्य वर्णान्तरमवयव इति नास्ति विरोधः (दु० टी०)।

३. वर्णस्यावयवो वर्णः सम्भवति (क० च०)।

[रूपसिद्धि]

१. पचमानः। पच् + आनश् + सि । 'डु पचष् पाके' (१।६०३) धातु से 'आनश् ' प्रत्यय, अन् - विकरण, प्रकृत सूत्र द्वारा मकारागम तथा विभक्तिकार्य ।

२. क्रियमाणः। कृ + यण् + आनश् + सि । 'डु कृञ् करणे' (७।७) धातु से आनश् प्रत्यय,, यण् , ऋकार को 'रि' आदेश, मकारागम तथा विभक्तिकार्य ।

३. करिष्यमाणः। कृ + स्य + आनश् + सि । 'कृ' धातु से 'स्य' प्रत्यय, इडागम, गुण, सकार को षकार, आनश् प्रत्यय, मकारागम तथा विभक्तिकार्य ॥११०७।

## ११०८. पूङ्यजोः शानङ् [४।४।८]

[सूत्रार्थ]

'पूङ् पवने' (१।४६५) तथा 'यज देवपूजासङ्गतिकरणदानेषु' (१।६०८) धातु से 'शानङ् ' प्रत्यय होता है ॥११०८।

[दु० वृ०]

पूङो यजश्च शानङ् भवति। पवते - पवमानः। यजते- यजमानः। आभ्यां कर्तर्येवानास्थित्यर्थं वचनम् इति एके। भावकर्मणोरानशा भाव्यमिति। प्रथमैकाधिकरणप्रपञ्चार्थमित्यन्ये। बहिष्पवमानं मध्यन्दिनमित्यनवयवार्थ एवायं संज्ञाशब्दः ॥११०८।

[दु० टी०]

पूङ्०। बहिरित्यादि । अकर्त्रर्थो वर्तमानकालश्चाव्युत्पन्नः एवायं सञ्ज्ञाशब्दः इत्यर्थः । व्युत्पत्तिवादी त्वाह - औणादिकोऽयमिति ॥११०८।

[वि० प०]

पूङ्। नञा निर्दिष्टस्यानित्यत्वात् प्रथमैकाधिकरणेऽप्यानशा सिध्यतीत्याह- आभ्यामित्यादि। अनवयवार्थ इति। न कश्चिदिहोपपदप्रकृतिप्रत्ययानामवयवानामर्थोऽस्तीत्यव्युत्पन्न एवायं सञ्ज्ञाशब्द इति ॥११०८।

[क० च०]

पूङ् । शकारः सार्वधातुकार्थः। ङकारोऽगुणार्थः। वक्ष्यमाणेऽगुणः फलमिह विकरणे गुणः । पूङो ङकारः क्रैयादिकस्य पूञो निषेधार्थः । अथ यजतेर्भौवादिकस्य साहचर्यात् पूङोऽपि भौवादिकस्य ग्रहणं भविष्यति । यद् वा पूङोऽत्र शानङोऽभावेऽतिपूर्वेणानशा भवितव्यम् । अतः को विशेष इत्याह - सुखार्थमिति हेमः। ननु बहिष्पवमानशब्देन वेदस्य भागविशेष उच्यते, नात्र वर्तमानकालकर्तृत्वप्रतीतिरस्ति तत्कथमत्र शानङ् इत्याह - बहिरित्यादि । मध्यन्दिनमिति। इतिशब्द इवार्थे मध्यन्दिनमिवेत्यर्थः । अतो नात्र शानङ्प्रत्ययः । किन्त्वेवंभूत एव सञ्ज्ञाशब्द इति भावः । व्युत्पत्तिवादी त्वाह - औणादिकोऽयमिति ॥११०८।

[समीक्षा]

'पवमानः, यजमानः' शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने प्रायः समान ही प्रत्यय किए हैं। कातन्त्रकार ने प्रत्यय के अन्त में 'ङ् ' अनुबन्ध की तथा पाणिनि ने 'न्' अनुबन्ध की योजना की है । पाणिनि का सूत्र है-"पूङ्यजोः शानन् " (अ० ३।२।१२८)। अतः प्रायः उभयत्र समानता है ।

[विशेष वचन]

१. शकारः सार्वधातुकार्थः, ङकारोऽगुणार्थः (क० च०)।

२. सुखार्थमिति हेमः (क० च०)।

[रूपसिद्धि]

१. **पवमानः**। पू + शानङ् + सि । पवते । 'पूङ् पवने' (१।४६५) धातु से प्रकृत सूत्र द्वारा 'शानङ्' प्रत्यय, 'श् - ङ्' अनुबन्धों का प्रयोगाभाव, अन् - विकरण, मकारागम, गुण, अवादेश तथा विभक्तिकार्य ।

२. **यजमानः**।, यज् + शानङ् + सि । यजते । 'यज देवपूजासङ्गतिकरणदानेषु' (१।६०८) धातु से 'शानङ्' प्रत्यय आदि कार्य प्रायः पूर्ववत् ।। ११०८।

## ११०९. शक्तिवयस्ताच्छील्ये [४।४।९]

[सूत्रार्थ]

शक्ति (सामर्थ्य), यौवनादि वयस् तथा ताच्छील्य (स्वभाव) अर्थ के गम्यमान होने पर धातु से 'शानङ् ' प्रत्यय होता है ।।११०९।

[दु० वृ०]

शक्त्यादिषु गम्यमानेषु धातोः शानङ् भवति । कतीह निघ्नानाः । कतीह कवचमुद्वहमानाः । कतीह नृत्यमानाः । **अभिधानाद्** वासरूपः शन्तृङ् न स्यात् ।।११०९।

[दु० टी०]

शक्ति०। शक्तिः सामर्थ्यम् । वयः प्राणिनां कालकृतोऽवस्थाविशेषो यौवनादिः। **शीलं स्वभाव** इति । क्रमेणोदाहरति-परस्मैपदादिभ्यः प्रापणार्थः प्रथमैकाधिकरणार्थश्च ।।११०९।

[वि० प०]

शक्ति०। अस्यात्मनेपदसंज्ञा नास्तीति परस्मैपदिभ्योऽपि भवतीति । अर्थत्रये क्रमेणोदाहरणत्रयं दर्शयति । निघ्नाना इति । गमहनेत्यादिनोपधालोपे "लुप्तोपधस्य च" (३।६।२९) इति घत्वम् ।।११०९।

[क० च०]

शक्ति०। परस्मैपदिभ्योऽप्राप्त्यर्थं प्रथमैकाधिकरणार्थं च वचनमिदं न चात्रानशः

प्राप्तिरस्ति । ननु वासरूपन्यायाच्छन्तृङ् कथन्न स्यादस्य विषय इत्याह - अभिधानादिति ॥११०९।

[समीक्षा]

'निघ्नानाः' उद्वहमानाः, कतीह नृत्यमानाः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों के प्रायः समान प्रत्यय हैं । कातन्त्रीय 'शानङ्' प्रत्यय में 'ङ्' तथा पाणिनीय 'चानश्' प्रत्यय में 'च्' अनुबन्ध भिन्न है। पाणिनि का सूत्र है- "ताच्छील्यवयोवचनशक्तिषु चानश्" (अ० ३।२।१२९)। अतः प्रायः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. कतीह निघ्नानाः। नि + हन् + शानङ् + जस् । 'नि' उपसर्गपूर्वक 'हन् हिंसागत्योः' (२।४) धातु से 'शानङ्' प्रत्यय, 'हन्' की उपधा का लोप, हकार को घकार तथा विभक्तिकार्य ।

२. कतीह कवचमुद्वहमानाः। उद् + वह् + शानङ् + जस्। 'उद्' उपसर्गपूर्वक 'वह प्रापणे' (१।६१०) धातु से 'शानङ्' प्रत्यय, अन् - विकरण, मकारागम तथा विभक्तिकार्य ।

३. कतीह नृत्यमानाः। नृत् + शानङ् + जस् । 'नृती गात्रविक्षेपे' (३।७) धातु से 'शानङ्' प्रत्यय, "दिवादेर्यन्" (३।२।३३) से 'यन्' विकरण, मकारागम तथा विभक्तिकार्य ॥११०९।

## ११९०. इङ्धारिभ्यां शन्तृङकृच्छ्रे [४।४।१०]

[सूत्रार्थ]

कृच्छ्रभिन्न अर्थ के गम्यमान होने पर 'इङ् अध्ययने' (२।५६) तथा इन्प्रत्ययान्त 'धृञ् धारणे' (१।५९९) धातु से 'शन्तृङ्' प्रत्यय होता है ॥१११०।

[दु० वृ०]

इङो धारयतेश्च शन्तृङ् भवति अकृच्छ्रे गम्यमाने । अधीयन् पारायणम् । धारयन्नुपनिषदम्। इङः आनशि प्राप्ते धारेरुभयप्राप्तौ वा वचनम् । वाऽसरूपोऽपि नेष्टव्य एव । अकृच्छ्र इति किम् ? कृच्छ्रेणाधीते ॥१११०।

[दु० टी०]

इङ्०। उभयप्राप्तौ वेति वाशब्दः । प्रथमैकाधिकरणमाश्रित्य शन्तृङानशोरप्राप्तिं कथयति । अनित्यपक्षमाश्रित्य प्राप्तिरिति । अकृच्छ्र इत्यादि । कृच्छ्रेण धारयति कृच्छ्रं कष्टम्। शक्ताविति कृते प्रतिपत्तिगौरवं स्यात् ॥१११०।

[वि० प०]

इङ् । अधीयन्निति । "स्वरादाविवर्णोवर्णान्तस्य" (३।४।५५) इत्यादिना इय्।

उभयप्राप्तौ वेति। अनित्यपक्षे प्रथमैकाधिकरण्येऽप्युभौ शन्तृङानशौ प्राप्तौ । अनित्यत्वानभ्युपगमे तु न कस्यापि प्राप्तिरिति वाशब्देन सूच्यते ॥१११०।

[क० च०]

इङ् । कस्मिन् प्राप्ते इदमारभ्यते इत्याह - इङः आनशि प्राप्ते इति आत्मनेपदित्वादस्येति भावः । ननु कृच्छ्रे शन्तृङ्निवृत्त्यर्थ एवात्र धारिग्रहणं चरितार्थम्। यथा कृच्छ्रेण धारयतीति तत्कथं धारयन्नुपनिषदमित्यत्र वासरूपन्यायात् पूर्वेण आनश् स्याद् इत्याह - वासरूप इत्यादि । ननु यद्यत्र वासरूपविधिर्नाश्रीयते तत् कथम् 'अधीयानो वटुः' इत्याद्यानशः प्राप्तिरित्याह - 'अधीयानो वटुः' इति हेमः ॥१११०।

[समीक्षा]

'अधीयन् पारायणम्, धारयन्नुपनिषदम् ' शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने प्रायः समान प्रत्यय किए हैं । कातन्त्रीय शन्तृङ् प्रत्यय के लिए पाणिनि ने 'शतृ' प्रत्यय किया है - "इङ्धार्योः शत्रकृच्छ्रिणि" (अ० ३।२।१३०)। नकारघटित प्रत्यय से कातन्त्रकार ने कुछ शब्दरूपों की साधनप्रक्रिया में लाघव प्रस्तुत किया है ।

[विशेष वचन]

१. शक्ताविति कृते प्रतिपत्तिगौरवं स्यात् (दु० टी०)।

[रूपसिद्धि]

१. **अधीयन् पारायणम्**। अधि + इङ् + शन्तृङ् + सि। 'अधि' उपसर्गपूर्वक 'इङ् अध्ययने' (२।५६) धातु से प्रकृत सूत्र द्वारा 'शन्तृङ्' प्रत्यय, अनुबन्धों का प्रयोगाभाव, इकार को इयादेश, समानदीर्घ, लिङ्गसंज्ञा तथा विभक्तिकार्य ।

२. **धारयन्नुपनिषदम्** । धृ + इन् + शन्तृङ् + सि । 'धृञ् धारणे' (१।५९९) धातु से 'इन् ' प्रत्यय, वृद्धि, 'धारि' की धातुसंज्ञा, शन्तृङ् प्रत्यय, गुण, अयादेश तथा विभक्तिकार्य ॥ १११० ।

## ११११. द्विषः शत्रौ [४।४।११]

[सूत्रार्थ]

कर्तृरूप शत्रु अर्थ में 'द्विष अप्रीतौ' (२।६०) धातु से 'शन्तृङ् ' प्रत्यय होता है ॥११११।

[दु० वृ०]

द्विषः शत्रौ कर्तरि शन्तृङ् भवति । द्विषन्, द्विषन्तौ । शत्राविति किम् ? द्वेष्टि पतिं भार्या॥११११॥

[क० च०]

द्विषः । शत्रुश्चौर इति हेमः। ननु यदि शत्रुपर्यायः स्यात् तदा कर्मत्वं न स्याद् व्यावृत्तेरभावात् । यथा पण्डितपर्यायो विद्वान् इति भावः ॥ ११११।

[समीक्षा]

'द्विषन्' द्विषन्तौ' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने तदनुरूप प्रत्यय किए हैं । पाणिनि का 'शतृ' प्रत्यय है, जबकि कातन्त्रकार ने 'शन्तृङ्' प्रत्यय माना है । पाणिनि का सूत्र है - "द्विषोऽमित्रे"(अ० ३।२।१३०) । 'शन्तृङ् ' प्रत्यय मानने पर नकारागम की आवश्यकता नहीं होती है, इस दृष्टि से कातन्त्रप्रक्रिया में लाघव कहा जा सकता है ।

[रूपसिद्धि]

१. द्विषन्। द्विष् + शन्तृङ् + सि । द्वेष्टि। 'द्विष अप्रीतौ' (२।६०) धातु से प्रकृत सूत्र द्वारा 'शन्तृङ् ' प्रत्यय, 'श् - ऋ- ङ्' अनुबन्धों का प्रयोगाभाव, अन्- विकरण का लुक्, लिङ्गसंज्ञा तथा विभक्तिकार्य

२. द्विषन्तौ । द्विष् + शन्तृङ् + औ । 'द्विष् ' धातु से 'शन्तृङ् ' प्रत्यय आदि कार्य पूर्ववत् ।। ११११।

## ११११२. सुञो यज्ञसंयोगे [४।४।१२]

[सूत्रार्थ]

यज्ञफल के साथ संयोग अर्थ में 'षुञ् अभिषवे' (४।१) धातु से 'शन्तृङ् ' प्रत्यय होता है ।। १११२ ।

[दु० वृ०]

यज्ञफलेन संयोगविषये वर्तमानात् सुञः शन्तृङ् भवति । सुन्वन्तो यजमानाः । संयोगग्रहणं फलवत्कर्तृप्रतिपत्त्यर्थम्। यज्ञसंयोग इति किम्? सुरां सुनोति।। १११२ ।

[दु० टी०]

सुञः। यज्ञेन संयोग इत्युक्ते कथं यज्ञफलेनेत्यवसीयते इत्याह-संयोगेत्यादि। अन्यथा 'सुञो यज्ञः' इत्युच्यते । फलवन्तो ये कर्तारस्तेषां प्रतिपत्त्यर्थं ये यागस्य कर्तारो भूत्वा फलं प्राप्नुवन्तस्ते प्रधानकर्तारः सत्रिण उच्यन्ते न याजकाः ।। १११२ ।

[वि० प०]

सुञोः०। फलग्रहणस्याभावात् कथमुक्तं यज्ञफलेनेत्याह-संयोगेत्यादि । अन्यथा सुञो यज्ञ इत्येवं कुर्यात् । तेन ये यज्ञस्य कर्तारः साक्षात् फलं लभन्ते, ते सुन्वन्तः सत्रिण उच्यन्ते, न याजका इत्यर्थः।। १११२ ।

[क० च०]

सुञो०। फलवत्कर्ता यजमानः इत्यर्थः ।। १११२ ।

[समीक्षा]

'सुन्वन्तः' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'शन्तृङ् ' प्रत्यय तथा पाणिनि ने 'शतृ' प्रत्यय किया है ।'पाणिनि का सूत्र है - "सुञो यज्ञसंयोगे "

(अ०३।२।१३२) । 'शन्तृङ् ' प्रत्यय करने से 'सुन्वन्तः' आदि शब्दों के सिद्ध्यर्थ नकारागम नहीं करना पड़ता है। अतः कातन्त्रीय प्रक्रिया में अपेक्षाकृत लाघव ही कहा जा सकता है ।

[विशेष वचन]

१. संयोगग्रहणं फलवत्कर्तृप्रतिपत्त्यर्थम् (दु० प्र०) ।

[रूपसिद्धि]

१. सुन्वन्तो यजमानाः । सु+ शन्तृङ् + जस् । 'षुञ् अभिषवे' (४।१) धातु से प्रकृत सूत्र द्वारा 'शन्तृङ् ' प्रत्यय, अनुबन्धों का प्रयोगाभाव, "नुः ष्वादेः" (३।२।३४) से 'नु' विकरण, उकार को वकार तथा विभक्तिकार्य ॥ १११२ ।

## १११३. अर्हः प्रशंसायाम् [४।४।१३]

[सूत्रार्थ]

'प्रशंसा' अर्थ के गम्यमान होने पर 'अर्ह पूजायाम् ' (१।२५०) धातु से 'शन्तृङ्' प्रत्यय होता है ॥ १११३ ।

[दु० वृ०]

प्रशंसायां गम्यमानायां वर्तमानादर्हतेः शन्तृङ् भवति । अर्हन् भवान् विद्याम् । प्रशंसायामिति किम् ? अर्हति चौरो वधम् ॥ १११३ ।

[दु० टी०]

अर्हः। प्रशंसा स्तुतिपर्यायः। नियमार्थं प्रशंसायामेवेति॥१११३।

[समीक्षा]

'अर्हन् ' शब्द के सिद्ध्यर्थ कातन्त्रकार ने 'शन्तृङ् ' प्रत्यय तथा पाणिनि ने 'शतृ ' प्रत्यय किया है । 'शन्तृङ् ' प्रत्यय करने पर नकारागम नहीं करना पड़ता है । अतः कातन्त्रीय प्रक्रिया में लाघव ही कहा जाएगा । पाणिनि का सूत्र है - "अर्हः प्रशंसायाम् " (अ० ३।२।१३३) ।

[रूपसिद्धि]

१. अर्हन् भवान् विद्याम् । अर्ह + शन्तृङ् + सि । 'अर्ह पूजायाम् ' (१।२५०) धातु से शन्तृङ् प्रत्यय तथा विभक्ति - कार्य ॥ १११३ ।

## १११४. तच्छील- तद्धर्म-तत्साधुकारिष्वा क्वेः [४।४।१४]

[सूत्रार्थ]

"क्विब् भ्राजिपृधुर्वीभासाम्" (४।३।६८) सूत्र पर्यन्त तच्छील, तद्धर्म तथा तत्साधुकारी अर्थों का अधिकार रहेगा ॥ १११४ ।

[दु० वृ०]

आ क्वे:। क्विपमभिव्याप्य तच्छीलादिषु कर्तृष्वित: प्रत्यया वेदितव्या: ।। १११४।

[दु० टी०]

तच्छील० । क्विपमभिव्याप्येति । अभिविधावयमाङ् न मर्यादायामिति दर्शयति "क्विब् भ्राजिपृधुर्वी०" (४।३।६८) इत्यादौ ताच्छील्यादिषु क्विपो विधानात् ।।१११४।

[वि० प०]

तच्छील० । क्विपमभीति । एतेन आ क्वेरित्याङ् अभिविधौ वर्तते न मर्यादायामिति दर्शितम् । अत: "क्विब् भ्राजिपृधुर्वी०" (४।३।६८) इत्यादौ ताच्छील्यादिषु क्विप् सिद्ध: । तच्छब्देन धात्वर्थो निर्दिश्यते । शीलं स्वभाव: फलनिरपेक्षा प्रवृत्ति:। धर्मश्च शास्त्रविहिताचार:। तदेव शीलं यस्य, स एव धर्मो यस्य । साधु करोतीति साधुकारी। तस्य धात्वर्थस्य साधुकारीति विग्रह: ।। १११४ ।

[क० च०]

तच्छील०। सर्वत्र तद्ग्रहणं न क्रियताम्, शीलधर्मसाधुकारिष्विति क्रियताम्। एतेषु गम्यमानेष्वित्युक्ते अर्थात् कर्तुरेव ताच्छील्यादिमत्त्वं प्रतीयते । शीलादयोऽपि धात्वर्थविशेषणं प्रस्तुतत्वात्? सत्यम् । सुखार्थमधिकारोऽयं परार्थ:। आ क्वेरिति भिन्नपदम् असमासात् समासे सति आ क्वीति स्यात् । "आङ् मर्यादाभिविध्यो:" (अ० २।१।१३) इति पाणिनिसूत्रेण मर्यादाभिविधौ चाव्ययीभावविधानात्। [पाठा० - ननु इत्यादि हेम:। ननु कथमेतद् मर्यादायामव्ययीभावो नाभिविधावित्याह-मर्यादाभिविध्योरिति पाणिनिसूत्रोणोभयत्रापि समासविधानात् । अत: 'आक्वि' इति कृते स एव सन्देह: स्यात् किं मर्यादाभिविधाविति चाव्ययीभावविधानादिति टीकाकारवचनमेव साधु हेमोक्तवचनमसङ्गतमिति सागर:]।। १११४ ।

[समीक्षा]

'कर्ता कटान्, वदिता जनापवादान् , कर्ता कटम्' इत्यादि शब्दों के सिद्ध्यर्थ 'तच्छील' आदि अर्थों की आवश्यकता होती है । इसकी पूर्ति दोनों ही आचार्यों ने की है । पाणिनि का सूत्र है - "आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु" (अ० ३।२।१३४)। अत: उभयत्र पूर्णत: समानता है ।।१११४ ।

## १११५. तृन् [४।४।१५]

[सूत्रार्थ]

तच्छील, तद्धर्म तथा तत्साधुकारी अर्थों में धातु से 'तृन् ' प्रत्यय होता है ।। १११५।

[दु० वृ०]

तच्छीले तद्धर्मे तत्साधुकारिणि च कर्तरि धातोस्तृन् भवति । तृजाद्यपवाद:। वदिता जनापवादान् खल: । मुण्डयितार: श्राविष्ठायना: वधूमूढाम्। साधु गच्छति गन्ता खेलम् । साधु: कुशलार्थ एवात्र।।१११५।

[दु० टी०]

तृन्०। नकारो "न निष्ठादिषु" (२।४।४२) इति विशेषणार्थः । तच्छील इत्यादि। शीलं स्वभावः फलनिरपेक्षा प्रवृत्तिः। तच्छब्देन धात्वर्थ उच्यते, तदेव शीलमस्येति विग्रहः । एवं तद्धर्म इति । धर्मः शास्त्रविहिताचारः। साधु करोतीति साधुकारी, तस्य धात्वर्थस्य साधुकारी । साधुशब्द इह क्रियाविशेषणम् । शीलधर्मसाधुष्वित्युक्ते प्रतिपत्तिगौरवं स्यात् । शीलादिषु गम्यमानेषु अर्थात् कर्तुरिति । वदतीति वदिता। '[1]मुडि खण्डने' (१।१०७) इति चुरादौ । मुण्डनं कुर्वन्तीति वा तत्करोतीति इन्। श्राविष्ठायना नाम ऋषयो वधूमूढां मुण्डयन्ति, मुण्डयित्वाश्रमपदं निवेशयन्ति । तस्या मुण्डनं नोच्यते किन्तु तेषां कुलधर्मः । खेलं सलीलं साधुर्योग्यो हितः कुशलोऽभिधीयते, अनेकार्थत्वेऽपि साधुशब्दस्य विवक्षितार्थबलात् कुशलार्थस्य ग्रहणमित्याह-साधुरित्यादि। अत्रेति। अत्र प्रकरणे इत्यर्थः।।१११५।

[वि० प०]

तृन्। खेलमिति। सलीलमित्यर्थः। यद्यपि कुशलो योग्यो हितश्च साधुरुच्यते। यथा गुडे साधुरिक्षुः। गोषु साधुर्गोधुगिति। तथापि कुशलार्थ एवात्र प्रकरणे साधुशब्दोऽभिधीयते। यथा सामसु साधुरिति।।१११५ ।

[क० च०]

तृन्०। मुण्डयितारः इति। श्राविष्ठायना ऋषयः श्रविष्ठदेशोद्भवा जना वा ऊढां वधूं मुण्डयन्ति। मुण्डयितारो मुण्डयित्वा आश्रमपदं प्रवेशयन्ति इति ऊढामुण्डनं तेषां धर्मः। साध्विति। साधु यथा स्याद् यथा गच्छतीत्यर्थे गन्ता खेलमिति।। १११५।

[समीक्षा]

तच्छील इत्यादि अर्थों में 'कर्ता कटान्, वदिता जनापवादान् , साधु गच्छति गन्ता खेलम् ' इत्यादि शब्दों के सिद्ध्यर्थ 'तृन्' प्रत्यय का विधान दोनों ही आचार्यों ने किया है । पाणिनि का सूत्र है । "तृन्" (अ० ३।२।१३५)। अतः उभयत्र पूर्ण समानता ही है ।

[रूपसिद्धि]

१. वदिता जनापवादान् खलः। वद् + इट् + तृन् + सि । 'वद व्यक्तायां वाचि' (१।६१५) धातु से प्रकृत सूत्र द्वारा 'तृन् ' प्रत्यय, 'न्' अनुबन्ध का प्रयोगाभाव, इडागम, लिङ्गसंज्ञा तथा विभक्तिकार्य ।

२. मुण्डयितारः श्राविष्ठायना वधूमूढाम्। मुण्ड् + इन् + तृन् + जस् । 'मुडि खण्डने' (१।१०७) धातु से इन्, प्रकृत सूत्र द्वारा 'तृन् ' प्रत्यय, इकार को गुण, अयादेश, लिङ्गसंज्ञा तथा विभक्तिकार्य ।

३. साधु गच्छति गन्ता खेलम्। गम् + तृन् + सि। 'गम्लृ गतौ' (१।२७९) धातु से 'तृन्' प्रत्यय, मकार को अनुस्वार, मकार को नकार, लिङ्गसंज्ञा तथा विभक्तिकार्य।।१११५।

---

१. उपलब्धकातन्त्रधातुपाठे मुण्डनार्थको मार्जनार्थकश्च भ्वादौ दृश्यते न तु चुरादौ ।

## -१११६. भ्राज्यलंकृञ्भूसहिरुचिवृतिवृधिचरिप्रजनापत्रपेनामिष्णुच् [४।४।१६]

[सूत्रार्थ]

'भ्राज् - अलंकृ -भू- सह- रुच् - वृत् - वृध्-चर- प्रजन्-अपत्रप' तथा इन्-प्रत्ययान्त धातुओं से ताच्छील्य अर्थों के गम्यमान होने पर 'इष्णुच् ' प्रत्यय होता है ।। १११६ ।

[दु० वृ०]

एभ्य इष्णुज् भवति तच्छीलादिषु कर्तृषु । तृनोऽपवादः। भ्राजिष्णुः, अलंकरिष्णुः। अलं भूषणपर्याप्तिवारणेषु। मण्डने युमपि बाधते। भविष्णुः, सहिष्णुः, रोचिष्णुः, वर्तिष्णुः, वर्धिष्णुः, चरिष्णुः, प्रजनिष्णुः, अपत्रपिष्णुः। इनन्तानां छन्दसीति एके। धारयिष्णुः पारयिष्णुः, निराकरिष्णुरिति वक्तव्यम्।। १११६।

[दु० टी०]

भ्राज्य० । अलम्भूषण इत्यादि। अलंकरणशीलः अलंकरणधर्मात् साधुर्वा अलंकरोतीति अलंकरिष्णुः कन्याम् । व्यक्तिरिहाश्रयणीया। अन्यथा ''क्रुधिमण्डिचलिशब्दार्थेभ्यो युः'' (४।४।३०) इति युना परत्वाद् बाध्यते इतीष्णुचोऽवकाशः। पापान्यलंकरिष्णुः, पापानि वारयतीत्यर्थः । योरवकाशो मण्डनो भूषण इति । अन्य आह-विप्रतिषेधेन सिद्धं तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वक्तव्यं 'पूर्वपरयोः परविधिर्बलवान्' इति पूर्वशब्दस्येष्टविषयत्वात् सिद्धम् । निरित्यादि वक्तव्यं व्याख्येयम् । निराङ्पूर्वस्य कृञस्तेनैव भाव्यमित्ययं मन्यते निराकर्तेति । इष्णुजिति चकारं विहाय सविसर्गपाठे सान्तरान्ताशङ्का स्यादिति तन्निरासार्थश्चकारः।। १११६ ।

[वि० प०]

भ्राज्यलम्० । अलमित्यादि । ननु चालंकरिष्णुः संग्रामे पापादलंकरिष्णुरिति पर्याप्तौ वारणे च सावकाश इष्णुच् । ''क्रुधिमण्डिचलिशब्दार्थेभ्यो युः'' (४।४।३०) इति युरपि मण्डने । भूषणो मण्डन इति । अतः 'अलंकरिष्णुः कन्याम्' इति परत्वाद् युरेव स्यादिति ? सत्यम्, इह व्यक्तिराश्रयणीयेत्याह-मण्डन इत्यादि । न केवलं तृन्मात्रं युमपीत्यपेरर्थः। वक्तव्यं व्याख्येयम् । इह तृन्नेव प्रमाणम् - निराकर्तेति ।। १११६ ।

[क० च०]

भ्राज्यलम्० । इष्णुजिति । चकारः सान्तरेफान्तशङ्कानिरासार्थः। ष्णुजित्युक्ते 'अलंकरिष्णुः' इति न सिध्यति, अनिट्त्वात् । किमर्थस्यालंशब्दस्येह ग्रहणमित्याह-अलंभूषणेति । ननु चेति पञ्जी। दातव्यस्य परत्वसिद्धान्तस्य सावकाशतामुभयोर्घटयन्नाह-

अलंकरिष्णुरिति । 'भूषण'इत्यत्रोभयोः सावकाशलेति शेषः। इष्णुजिति षत्वनिर्देशाभावात् षत्वं न स्यादित्यपि मन्यते । न च षत्वनिर्देशे गौरवमस्ति येन लाघवार्थमेवाकृतषत्वनिर्देश इति पश्चात् षत्वप्रवृत्तिः ॥ १११६ ।

[समीक्षा]

कातन्त्रकार ने 'भ्राजिष्णुः' इत्यादि शब्दरूपों के सिद्ध्यर्थ 'भ्राज् ' इत्यादि १० धातुओं के अतिरिक्त इनन्त धातुओं का भी निर्देश किया है । जबकि पाणिनि १३ धातुओं के अतिरिक्त इनन्त धातुओं से 'इष्णुच् ' प्रत्यय करते हैं । । एतदर्थ उनके तीन सूत्र हैं । 'भ्राजिष्णुः' शब्द की सिद्धि चकार को अनुक्तसमुच्चयार्थ मानकर की जाती है । तीन सूत्र इस प्रकार हैं -

"अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् , णश्छन्दसि, भुवश्च" (अ० ३।२।१३६-१३८)। इस प्रकार कातन्त्रीय प्रक्रिया में लाघव स्पष्ट है ।

[रूपसिद्धि]

१. भ्राजिष्णुः। भ्राज् + इष्णुच् + सि । 'भ्राजृ दीप्तौ, टु भ्राजृ दीप्तौ (१। ३४७, ५४०) धातु से प्रकृत सूत्र द्वारा 'इष्णुच् ' प्रत्यय, 'भ्राजिष्णु' की लिङ्गसंज्ञा तथा विभक्तिकार्य ।

२. अलंकरिष्णुः। अलम् + कृ + इष्णुच् + सि। 'अलम् ' के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से 'इष्णुच्' प्रत्यय आदि कार्य प्रायः पूर्ववत् ।

३- १२. भविष्णुः। भू + इष्णुच् + सि । सहिष्णुः। सह + इष्णुच् + सि। रोचिष्णुः। रुच् + इष्णुच् + सि । वर्तिष्णुः। वृत् + इष्णुच् + सि । वर्द्धिष्णुः। वृध् + इष्णुच् + सि । चरिष्णुः। चर्+ इष्णुच् + सि । प्रजनिष्णुः । प्र + जन् + इष्णुच् + सि। अपत्रपिष्णुः। अप + त्रप् + इष्णुच् + सि । धारयिष्णुः। धृ + इन् + इष्णुच् + सि। पारयिष्णुः। पृ + इन् + इष्णुच् + सि । १११६ ।

## १११७. मदिपतिपचामुदि [४।४।१७]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'उद्' उपसर्गपूर्वक 'मदी हर्षे, पत्लृ पतने, डु पचष् पाके' (३।४८;१।५५४,६०३) धातुओं से 'इष्णुच्' प्रत्यय होता है॥१११७।

[दु० वृ०]

उद्युपपदे एभ्य इष्णुज् भवति तच्छीलादिषु। उन्मदिष्णुः, उत्पतिष्णुः, उत्पचिष्णुः। यथासंख्यं नास्तीति॥१११७।

[दु० टी०]

मदि०। यथासंख्यं नास्तीति तच्छीलादीनां प्रत्ययेन सम्बन्धस्य विवक्षितत्वात्र धातोरिति॥१११७।

[वि० प०]

मदि०। यथासङ्ख्यमिति । अर्थत्रयस्य प्रत्ययेन सम्बन्धो विवक्षितो न धातुत्रयेणेति वैषम्यमिति भावः ॥१११७।

[क० च०]

मदि०। ननु ताच्छील्यादिभिस्त्रिभिरर्थैः सह मद्यादीनां कथं न यथासंख्यम् इत्याह-यथेति ॥१११७।

[समीक्षा]

'उन्मदिष्णुः' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'इष्णुच्' प्रत्यय किया है । पाणिनि का सूत्र है -

"अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् " (अ० ३।२।१३६)। अतः उभयत्र समानता है । कातन्त्रकार ने उक्त तीन धातुओं के लिए पृथक् सूत्र बनाया है, जिनमें 'उद् ' उपसर्ग की योजना करनी पड़ती है ।

[रूपसिद्धि]

१. उन्मदिष्णुः। उद् + मद् + इष्णुच् + सि । 'उद्' उपसर्गपूर्वक 'मदी हर्षे' (३।४८) धातु से प्रकृत सूत्र द्वारा 'इष्णुच्' प्रत्यय, लिङ्गसंज्ञा तथा विभक्तिकार्य ।

२. उत्पतिष्णुः। उद् + पत् + इष्णुच् + सि । 'उद्' उपसर्गपूर्वक 'पत्लृ गतौ' (१।५५४) धातु से 'इष्णुच् ' प्रत्यय आदि कार्य पूर्ववत् ।

३. उत्पचिष्णुः। उद् + पच् + इष्णुच् + सि । 'उद्' उपसर्गपूर्वक 'डु पचष् पाके' (१।६०३) धातु से 'इष्णुच्' प्रत्यय आदि कार्य पूर्ववत् ॥१११७।

## १११८. जिभुवोः स्नुक् [४।४।१८]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'जि जये, भू सत्तायाम् ' (१।१९१,१।१) धातुओं से 'स्नुक्' प्रत्यय होता है ॥१११८।

[दु० वृ०]

आभ्यां स्नुग् भवति तच्छीलादिषु ।जिष्णुः, भूष्णुः ॥१११८।

[दु० टी०]

जि०। ककारो गुणप्रतिषेधार्थः, "न श्र्युवर्णवृतां कानुबन्धे" (४।६।७९) इति भवतेरिट्प्रतिषेधार्थश्च ॥१११८।

[क० च०]

जि०। ननु ष्णुगित्यत्र षत्वनिर्देशो न क्रियताम् , "ग्लाम्ला०" (४।४।१९) इत्यत्र स्नुग्रहणं न क्रियताम् , इदमेवाधिक्रियताम् । न च वक्तव्यम् , अषत्वनिर्देशबलात् जिष्णुरित्यत्र षत्वं न भविष्यतीति । उत्तरत्र 'ग्लास्नुः' इत्यत्र चरितार्थत्वात्, नैवम् ।

उत्तरत्र ग्लास्नोरित्यगुणत्वात् "दामागायति०" (३।४।२९) इत्यादि ईत्त्वं स्यात् परिमाक्ष्णुरित्यत्र "मर्जो मार्जिः" (३।८।२३) न स्यात् ॥१११८।

[समीक्षा]

'जिष्णुः, भूष्णुः' शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने स्नुक् प्रत्यय तथा पाणिनि ने 'क्स्नु' प्रत्यय किया है । पाणिनि का सूत्र है - "ग्लाजिस्थश्च क्स्नुः" (अ० ३।२।१३९)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. जिष्णुः। जि + स्नुक् + सि । 'जि जये' (१।१९१) धातु से 'स्नुक्' प्रत्यय, सकार को षकार, नकार को णकार तथा विभक्तिकार्य ।

२. भूष्णुः । भू + स्नुक् + सि । 'भू सत्तायाम्' (१।१) धातु से 'स्नुक्' प्रत्यय आदि कार्य पूर्ववत् ॥१११८।

## १११९. ग्लाम्लास्थाक्षिपचिपरिमृजां स्नुः [४।४।१९]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'ग्ला-म्ला - स्था - क्षि - पच - परिमृज' धातुओं से 'स्नु' प्रत्यय होता है ॥१११९।

[दु० वृ०]

एभ्यः स्नुर्भवति तच्छीलादिषु । ग्लास्नुः, म्लास्नुः, स्थास्नुः, क्षेष्णुः, पक्ष्णुः, परिमाक्ष्णुः ॥१११९।

[दु० टी०]

ग्ला०। स्नुगिति वर्तमानेऽपि यत् स्नोर्ग्रहणं तत् तिष्ठतेर्दामादिसूत्रेणेत्वाभावार्थम्। परिमाक्ष्णुरिति मर्जो मार्जिर्भवेत् । केचित् तिष्ठतेरेव स्नुप्रत्ययमिच्छन्ति, तदसत् । शिष्टप्रयुक्ता हि दृश्यन्ते 'क्षेष्णवे स्वर्गाय' इत्यादयः ॥१११९।

[वि० प०]

ग्ला०। परिमाक्ष्णुरिति। मृजेर्गुणे सति "मर्जो मार्जिः" (३।८।२३) इति भृजादित्वात् षत्वम्, "षढोः कः से" (३।८।४) इति कत्वे निमित्तत्वात् षत्वम् , षाट्टवर्गान्नकारस्य णकारः ॥१११९।

[क० च०]

ग्लाम्ला०। 'क्षिप प्रेरणे, चिञ् चयने' (५।५;४।५) इत्यनयोः कथन्न स्यात् , नैवम् । ग्लादिधातोरनुविकरणस्य साहचर्यात् क्षिपच्योरनुविकरणान्वितयोर्ग्रहणम् ॥१११९।

[समीक्षा]

'ग्लास्नुः, स्थास्नुः' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'स्नु' प्रत्यय तथा पाणिनि ने 'क्स्नु' प्रत्यय किया है । पाणिनि का सूत्र है - "ग्लाजिस्थश्च क्स्नुः" (अ० ३।२।१३९)। वस्तुतः यहाँ व्याख्याकार 'क्' अनुबन्ध को उपयोगी नहीं मानते। अतः कातन्त्रकार का विधान ही उचित है।

[रूपसिद्धि]

१. ग्लास्नुः। ग्लै + स्नु + सि। 'ग्लै हर्षक्षये' (१।२५१) धातु से प्रकृत सूत्र द्वारा ' प्रत्यय, "सन्ध्यक्षरान्तानामाकारोऽविकरणे" (३।४।२०) से ऐकार को आकार तथा क्तिकार्य ।

२. म्लास्नुः। म्लै + स्नु + सि । 'म्लै गात्रविनामे' (१।२५२) धातु से 'स्नु' त्यय आदि कार्य पूर्ववत् ।

३. स्थास्नुः। स्था + स्नु + सि । 'ष्ठा गतिनिवृत्तौ' (१।२६७) धातु से 'स्नु' त्यय आदि कार्य पूर्ववत् ।

४ - ६. क्षेष्णुः । क्षि + स्नु + सि । पक्ष्णुः । पच् + स्नु + सि । परिमार्क्ष्णुः। : + मृज् + स्नु + सि। प्रक्रिया पूर्ववत् ॥११११।

## ११२० त्रसिगृधिधृषिक्षिपां क्नुः [४।४।२०]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'त्रसी उद्वेगे, गृधु अभिकाङ्क्षायाम्, ञि धृषा गल्भ्ये, क्षिप् प्रेरणे' (३।८,८०;४।१८;३।१२) धातुओं से 'क्नु' प्रत्यय होता है ११२०।

[दु० वृ०]

एभ्यः क्नुर्भवति तच्छीलादिषु । त्रस्नुः, गृध्नुः धृष्णुः, क्षिप्नुः ॥११२०।

[दु० टी०]

त्रसि०। ककारो गुणप्रतिषेधार्थः। त्रसिगृधिधृषां घोषवत्योश्च कृति नेट् । त्रस्यति, सतीति वा त्रस्नुः। गृध्यतीति गृध्नुः। धृष्णोतीति धृष्णुः। क्षिप्यति क्षिपतीति वा क्षप्नुः॥११२०।

[क० च०]

त्रसि०। 'त्रसी उद्वेगे' (३।८)। त्रस्यति त्रसतीति टीकायां दर्शितम् । त्रसेर्दैवादिकस्य हणम्, भ्वादौ पाठाङ्गीकारात् । तथा च "दिवादेर्यन्" (३।२।३३) इत्यत्रोक्तम् ॥११२०।

[समीक्षा]

'गृध्नुः, धृष्णुः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'क्नु' प्रत्यय का विधान किया है । पाणिनि का सूत्र है - "त्रसिगृधिधृषिक्षिपेः क्नुः" (अ० ३।२ २४०)। अतः उभयत्र पूर्ण समानता है ।

[रूपसिद्धि]

१. त्रस्नुः। त्रस् + क्नु + सि । 'त्रसी उद्वेगे' (३।८) धातु से प्रकृत सूत्र द्वारा 'क्नु' प्रत्यय, 'क्' अनुबन्ध का प्रयोगाभाव, 'त्रस्नु' की लिङ्गसञ्ज्ञा तथा विभक्तिकार्य ।

२ - ४. गृध्नुः। गृध् + क्नु + सि। धृष्णुः। धृष् + क्नु + सि । क्षिप्नुः। क्षिप् + क्नु + सि । प्रक्रिया पूर्ववत् ॥११२०।

## ११२१. शमामष्टानां घिणिन् [४।४।२१]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'शम् - दम् - तम् - श्रम् - भ्रम् - क्षम् - क्लम् - उन्मद्' धातुओं से 'घिणिन् ' प्रत्यय होता है ॥११२१।

[दु० वृ०]

शमादीनामष्टानां घिणिन् भवति तच्छीलादिषु । शाम्यतीति शमी। एवं दमी, तमी, श्रमी, भ्रमी, क्षमी, क्लमी, उन्मादी । अष्टानामिति किम् ? असिता ॥११२१।

[दु० टी०]

शमा०। शमादीनामिति बहुवचनं गणस्य संसूचकम् , मदिपर्यन्ता अष्टौ भवन्तीति। अथ कथम् उन्मादी। "मदिपतिपचामुदि" (४।४।१७) इतीष्णुचा भवितव्यम्, प्रमादी-मादीत्यस्य विषयत्वात्? सत्यम् , व्यक्तिनिर्देशः पूर्ववत् प्रतिषेधो वाऽत्रेति। घिणिनिति घकारः कत्वगत्वार्थः, णकार इज्वद्भावार्थः। इहापि 'प्रमादीति इकार उच्चारणार्थः। घिणिन् कर्मणि न भवति, अभिधानात्। 'वनं भ्रमिता'। तथोत्तरत्रापि शाकं संपृणक्तीति ॥११२१।

[वि० प०]

शमा०। "न सेटोऽमन्तस्य०" (४।१।३) इति दीर्घप्रतिषेधः कथम् उन्मादीति? "मदिपतिपचामुदि" (४।४।१७) इति विशेषेणेष्णुचा भवितव्यम्, प्रमादीत्यस्य सूत्रस्य विषयत्वात् ? सत्यम् , इहापि व्यक्तिराश्रितेति न दोषः । कथं 'वनं भ्रमिता' इति ? सत्यम् । अकर्मकेभ्य एव घिणिन्नभिधीयते सकर्मकेभ्यस्तृन्नेवेति ॥११२१।

[क० च०]

शमा०। ननु शमिः कथम् अष्टौ एकत्वात् तस्य ? सत्यम् , उपचारात् । शमादौ शमशब्दः, अत एव बहुवचनं गणस्य संसूचकार्थं भवति । अष्टग्रहणं मदीपर्यन्तः शमादिरिति व्यवच्छेदार्थम् । अथ तत्र मदीपर्यन्तः शमादिर्वृत्करणादेवानुमीयते, किमष्टग्रहणेन। यथा शमादीनां दीर्घो यनीत्यत्र ? सत्यम् । व्यक्त्यर्थं भविष्यति । अत एवाष्टग्रहणात् कात्यायनमते गणे वृत्करणं नास्तीति धातुवृत्तिकारः। पञ्जिका सत्यमिति । एतेन तस्य विषयत्वादस्य व्यक्तित्वादुभयोः समानं बलमिति पाक्षिकी वृत्तिरिष्टेति भावः ॥११२१।

[समीक्षा]

'शमी, भ्रमी, क्षमी' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'घिणिन् ' तथा पाणिनि ने 'घिनुण्' प्रत्यय किया है। उनका सूत्र है - "शमित्यष्टाभ्यो घिनुण् " (अ० ३।२।१४१)। दोनों ही प्रत्ययों में 'इन् ' भाग शेष रहता है तथा 'ण् ' अनुबन्ध

---

१. प्रमादीत्यादौ यथाऽस्य विषयस्तथा उन्मादीत्यत्राप्यस्य विषय इति यावत् (सं० टि०)।

के कारण वृद्धि होती है । अतः स्वरूपभेद होने पर भी फल की दृष्टि से उभयत्र समानता ही कही जा सकती है।

[विशेष वचन]

१. बहुवचनं गणस्य संसूचकम् (दु० टी०)।

२. घकारः कत्वगत्वार्थः, णकार इज्वद्भावार्थः । इकार उच्चारणार्थः (दु० टी०)।

३. कात्यायनमते गणे वृत्करणं नास्तीति धातुवृत्तिकारः (क० च०)।

[रूपसिद्धि]

१. शमी। शम् + घिणिन् + सि । शाम्यति । 'शमु उपशमे' (३।४२) धातु से प्रकृत सूत्र द्वारा 'घिणिन् ' प्रत्यय, 'घ् - इ - ण् ' अनुबन्धों का प्रयोगाभाव, 'ण्' अनुबन्ध के कारण इज्वद्भाव, लिङ्गसंज्ञा तथा विभक्तिकार्य ।

२ - ८. दमी। दम् + घिणिन् + सि । तमी। तम् + घिणिन् + सि । श्रमी। श्रम् + घिणिन् + सि । भ्रमी। भ्रम् + घिणिन् + सि । क्षमी। क्षम् + घिणिन् + सि। क्लमी। क्लम् + घिणिन् + सि । उन्मादी। उद् + मद् + घिणिन् + सि । प्रक्रिया पूर्ववत् ॥११२१।

## ११२२. युजभजभुजद्विषद्रुहदुहदुषाङ्क्रीडत्यजानुरुधाङ्यमाङ्यसरञ्जाभ्याङ्हनां च [४।४।२२]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'युज् ' आदि धातुओं से 'घिणिन् ' प्रत्यय होता है ॥११२२।

[दु० वृ०]

एभ्यो घिणिन् भवति तच्छीलादिषु । 'युजि; युज' (६।७;३।११५)-योगी । 'भज' (१।६०४) - भागी । 'भुज' (६।१४)-भोगी । 'द्विष' (२।६०) - द्वेषी । 'द्रुह' (३।३८)-द्रोही । 'दुह' (२।६१)- दोही । 'दुष' (३।२८) - दोषी । 'आङ् क्रीड' (१।१२६) - आक्रीडी । 'त्यज' (१।२८७)- त्यागी । 'अनु-रुध' (३।११२)- अनुरोधी । 'आङ्-यम' (१।१५८)- आयामी । 'आङ् - यस् ' (३।५०)- आयासी। 'रन्ज् ' (१।५३१,६०५)- रागी । 'अभ्याङ् - हन् ' (२।४)- अभ्याघाती॥११२२।

[वि० प०]

युज०। रागीति । "वुषघिणिनोश्च" (४।१।६७) इति पञ्चमलोपः ॥११२२।

[समीक्षा]

'योगी, भोगी, रागी' इत्यादि शब्दों के सिद्ध्यर्थ कातन्त्रकार ने 'घिणिन् ' प्रत्यय तथा पाणिनि ने 'घिनुण् ' प्रत्यय किया है। उनका सूत्र है-

"संपृचानुरुधाङ्यमाङ्यस्परिसृसंसृज----- भजातिचरापचरामुषाभ्याहनश्च" (अ० ३।२।१४२)। पाणिनि ने कातन्त्रकार की अपेक्षा कुछ शब्द अधिक पढ़े हैं । प्रत्यय आदि की दृष्टि से उभयत्र प्रायः समानता ही है ।

[रूपसिद्धि]

१. **योगी** । युज् + घिणिन् + सि । 'युज समाधौ, युजिर् योगे' (३।१११;६।७) धातु से प्रकृत सूत्र द्वारा 'घिणिन्' प्रत्यय, अनुबन्धों का प्रयोगाभाव, लघूपधगुण, जकार को गकार, 'योगिन्' शब्द की लिङ्गसञ्ज्ञा तथा विभक्तिकार्य।

२-१३. **भागी**। भज् + घिणिन् + सि। **भोगी**। भुज् + घिणिन् + सि। **द्वेषी**। द्विष् + घिणिन् + सि। **द्रोही**। द्रुह + घिणिन् + सि। **दोही** । दुह + घिणिन् + सि। **दोषी** । दुष् + घिणिन् + सि। **आक्रीडी**। आङ् - क्रीड् + घिणिन् + सि । **त्यागी**। त्यज् + घिणिन् + सि । **अनुरोधी** । अनुरुध् + घिणिन् + सि । **आयामी** + आङ् - यम् + घिणिन् + सि । **आयासी** । आङ् - यस् + घिणिन् + सि । **रागी**। रन्ज् + घिणिन् - सि । **अभ्याघाती** । अभि + आङ् + हन् + घिणिन् + सि । प्रक्रिया प्रायः पूर्ववत् ।। ११२२।

## ११२३. सृजिपृचिज्वरित्वराम् [४।४।२३]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'सम्' के उपपद में रहने पर 'सृज विसर्गे, पृची संपर्के, ज्वर रोगे, ञि त्वरा सम्भ्रमे' (३।११६;६।२१०;१।५०१,५००) धातुओं से 'घिणिन्' प्रत्यय होता है ।।११२३।

[दु० वृ०]

सम्युपपदे एभ्यो घिणिन् भवति तच्छीलादिषु । संसर्गी, सम्पर्की, संज्वरी, संत्वरी। मानुबन्धत्वाद् ह्रस्वः ।।११२३।

[दु० टी०]

समि०। 'पृची सम्पर्के' (६।२१) इति रुधादिः, न त्वदादिः, सविकरणैः साहचर्यात् ।।११२३।

[वि० प०]

समि०। 'पृची संपर्के' (६।२१) रुधादिर्गृह्यते न तु लुग्विकरणोऽदादिः, सविकरणेन साहचर्यात् । मानुबन्धत्वाद् ह्रस्व इति । ज्वरित्वरिभ्यामिनन्ताभ्यां घिणिन् इति ।।११२३।

[समीक्षा]

'संसर्गी, संपर्की' इत्यादि शब्दरूपों के सिद्ध्यर्थ घिनुण् - घिणिन् प्रत्यय किए गए हैं । इनमें 'इ - उ' अनुबन्धों के भेद को छोड़कर शेष उभयत्र समानता है । पाणिनि ने 'त्वर' धातु का पाठ नहीं किया है । उनका सूत्र है - "संपृचानुरुधाङ् - -------- चरामुषाभ्याहनश्च" (अ० ३।२।१४२)।

[रूपसिद्धि]

१. संसर्गी । सम् + सृज् + घिणिन् + सि । 'सम् ' उपसर्ग के उपपद में रहने पर 'सृज विसर्गे' (३।११६) धातु से प्रकृत सूत्र द्वारा 'घिणिन् ' प्रत्यय, गुण, जकार को गकार तथा विभक्तिकार्य ।

२-४. संपर्की। सम् + पृच् + घिणिन् + सि । संज्वरी। सम् + ज्वर् + घिणिन् + सि । संत्वरी। सम् + त्वर् + घिणिन् + सि । प्रक्रिया पूर्ववत् ॥११२३।–

## ११२४. वौ विचकत्थस्रन्भुकष (लस् )-लषाम् [४।४।२४]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'वि' उपसर्ग के उपपद में रहने पर 'विच् - कत्थ - स्रन्भ् - कष् - लष् ' धातुओं से 'घिणिन् ' प्रत्यय होता है ॥११२४।

[दु० वृ०]

वावुपपदे एभ्यो घिणिन् भवति तच्छीलादिषु । विवेकी, विकत्थी, विस्रन्भी, विकाषी, विलाषी ॥११२४।

[दु० टी०]

वौ०। विचिर् (६।५) - विविनक्ति विविङ्क्ते इति वा विवेकी । 'कष हिंसार्थः' (१।२२४)। विकषणशीलो विकषति विकाषी। वसिमपि केचित् पठन्ति, तेषां विवासी। 'अपाच्च लसः' इति परो ब्रूते। 'लष कान्तौ' (१।५९१)। अपपूर्वाद् विपूर्वाच्च अपलषति अपलाषी, विलषति विलाषी ॥११२४।

[वि०प०]

वौ०। 'कष हिंसायाम् ' (१।२२४)। 'लष कान्तौ' (१।५९१)। अयमपादपीष्यते - अपलाषी ॥११२४।

[क० च०]

वौ०। विविक्त इति हेमः। विवेकीति घिणिन्नेव स्यात् ,कथं क्तप्रत्यय इति चिन्त्यम् । क्वचिद् वासरूपविधिर्लक्ष्यते इति भाव इति कश्चित्। तत्र, आभूताद् वर्तमानाधिकार इत्युक्तत्वाद् वर्तमाने घिणिन् क्रियते, क्तस्त्वतीते एव कुतो बाध्यबाधकभावस्तस्माच्चिन्त्यम् इत्यस्यायमर्थः-इडभावः कथमिति 'आगमशासन-मनित्यमिति', तदसदिति । विवेकोऽपि ज्ञानविशेष इति ज्ञापनार्थत्वाद् वर्तमानत्वं सिद्धमेव । किन्तु इडभावः कर्तरि क्तप्रत्ययश्च चिन्त्यौ ॥११२४।

[समीक्षा]

'विवेकी, विकत्थी' आदि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने पाँच धातुएँ प्रकृत सूत्र में पढ़ी हैं, जबकि पाणिनि ने ४ धातुओं का एक में तथा पाँचवीं धातु का पाठ दूसरे सूत्र में किया है। उनके दो सूत्र हैं —

"संपृचानु ------ विविच ------ मुषाभ्याहनश्च, वौ कषलसकत्थस्रम्भः" (अ० ३।२।१४२,१४३)। वस्तुतः 'वि' के उपपद में रहने पर 'विच' धातु का भी पाठ एक ही सूत्र में किया जाना चाहिए । इस दृष्टि से कातन्त्रकार का सूत्रपाठ सरलताबोधक कहा जा सकता है ।

[रूपसिद्धि]

१. विवेकी। वि + विच् + घिणिन् + सि । 'वि' उपसर्ग के उपपद में रहने पर 'विचिर् पृथग्भावे' (६।५) धातु से प्रकृत सूत्र द्वारा 'घिणिन्' प्रत्यय, गुण, चकार को ककार तथा विभक्तिकार्य ।

२ - ५. विकत्थी । वि + कत्थ + घिणिन् + सि । विस्रम्भी । वि + स्रम्भ्+ घिणिन् + सि । विकाषी । विं + कष् + घिणिन् + सि । विलाषी । वि+ लष् + घिणिन् + सि । प्रक्रिया प्रायः पूर्ववत् ।।११२४।

## ११२५. प्रे द्रुमथवदवसलपाम् [४।४।२५]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'प्र' उपसर्ग के उपपद में रहने पर 'द्रु - मथ - वद - वस - लप' धातुओं से 'घिणिन् ' प्रत्यय होता है ।।११२५।

[दु० वृ०]

'प्रे' उपपदे एभ्यो घिणिन् भवति तच्छीलादिषु । प्रद्रावी, प्रमाथी, प्रवादी । 'वस निवासे' (१।६१४) एव - प्रवासी, प्रलापी ।।११२५।

[दु० टी०]

प्रे०। 'वस निवासे' (१।६१४) इति, न 'वस आच्छादने' (२।४७) इत्यस्य ग्रहणम् , सविकरणैः साहचर्यादिति । वपिं केचित् पठन्ति, तेषां 'प्रवापी' ।।११२५।

[वि० प०]

प्रे०। वस निवासार्थ एव न तु आच्छादनार्थोऽदादिः, सविकरणैः साहचर्यात् । आच्छादने प्रवासीत्यपि केचित् ।।११२५।

[समीक्षा]

'प्रमाथी, प्रवासी' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने उक्त के अनुसार व्यवस्था की है । पाणिनि ने 'सृ' इस एक धातु का अधिक पाठ किया है - "प्रे लपसृद्रुमथवदवसः" (अ० ३।२।१४५)। अतः प्रायः उभयत्र समानता ही है ।।११२५।

[रूपसिद्धि]

१. प्रद्रावी । प्र + द्रु + घिणिन् + सि । 'प्र' उपसर्गपूर्वक 'द्रु गतौ' (१।२७९) धातु से प्रकृत सूत्र द्वारा 'घिणिन् ' प्रत्यय, वृद्धि, आव्-आदेश तथा विभक्तिकार्य ।

२ - ५. प्रमाथी । प्र + मथ् + घिणिन् + सि । प्रवादी । प्र + वद् + घिणिन् + सि । प्रवासी । प्र + वस् + घिणिन् + सि । प्रलापी । प्र + लप् + घिणिन् + सि। प्रक्रिया प्राय: पूर्ववत् ।।११२५।

## ११२६. परौ सृदहोः [४।४।२६]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'परि' उपसर्ग के उपपद में रहने पर 'सृ - दह्' धातुओं से 'घिणिन् ' प्रत्यय होता है ।।११२६।

[दु० वृ०]

परावुपपदे आभ्यां घिणिन् भवति तच्छीलादिषु । परिसारी, परिदाही । अस्तिविवक्षायामिना सिद्धम् , घिणिन् किमर्थ: ? यथा प्रयमणम् प्रयामः, सोऽस्यास्तीति प्रयामी । एवं 'प्रयासी, अनुवादी, विवादी, सञ्चारी, व्यभिचारी, विघाती, विद्रावी, संवादी, विसारी, विदाही, रोगी' इत्यादय: । ताच्छील्यादिविवक्षायां तृन् मा भूद् इति वचनम् ।।११२६।

[दु० टी०]

परौ०। प्रे च वसतेरिति परो ब्रूते - प्रवासी ।।११२६।

[वि० प०]

परौ०। प्रसारीत्यपि केचित् ।।११२६।

[क० च०]

परौ०। ननु विद्रावीत्यत्र स्वरान्तत्वादलेव स्यात् , कथं घञ् ? सत्यम् , तत्रैवोक्तमप्यधिकाराद् विद्राव इत्याह - विद्रावीति हेमः। तृन् मा भूदिति । तृनादिर्मा भूदित्यर्थ: ।।११२६।

[समीक्षा]

'परिसारी, परिदाही' शब्दरूपों के सिद्ध्यर्थ उक्त की तरह दोनों ही व्याकरणों में व्यवस्था की गई है । पाणिनि ने एक ही सूत्र में जिन अनेक धातुओं को पढ़ा है, कातन्त्रकार ने उनमें से 'प्र - वि -परि' उपपद वाली धातुओं का पृथक् सूत्रों में पाठ किया है, जिससे अर्थावबोध तथा योजना में सरलता होती है । अत: कातन्त्रकारीय योजना में लाघव कहा जा सकता है । पाणिनि का सूत्र है- "संपृचानु ---- मुषाभ्याहनश्च" (अ० ३।२।१४२)।

[रूपसिद्धि]

१. परिसारी । परि + सृ + घिणिन् + सि । 'परि' उपसर्ग के उपपद में रहने

पर 'सृ गतौ' (१।२७४) धातु से प्रकृत सूत्र द्वारा 'घिणिन्' प्रत्यय, वृद्धि तथा विभक्तिकार्य ।

२. प्रदाही । प्र + दह् + घिणिन् + सि । 'प्र' उपसर्ग के उपपद में रहने पर 'दह भस्मीकरणे' (१।२४३) धातु से 'घिणिन् ' प्रत्यय आदि कार्य पूर्ववत् ।।११२६।

# ११२७. क्षिप - रट - वद - वादि - देविभ्यो वुण् च [४।४।२७]

[सूत्रार्थ]

ताच्छील्यादि अर्थों में 'परि' उपसर्ग के उपपद में रहने पर 'क्षिप् - रट् -वद् - वादि - देव् ' धातुओं से 'घिणिन् ' तथा 'वुण् ' प्रत्यय होते हैं ।।११२७।

[दु० वृ०]

परावुपपदे एभ्यो घिणिन् भवति वुण् च तच्छीलादिषु । परिक्षेपकः, परिक्षेपी। परिराटकः, परिराटी । परिवादकः, परिवादी । परिवादयतीत्यर्थेऽप्येवम् । परिदेवते इति **परिदेवकः, परिदेवी।** वादिदेविभ्यां घिणिन्नेवेत्येके । वुण्ग्रहणं ताच्छीलिकेषु वासरूपविधिर्नास्तीति ज्ञापनार्थम् ।।११२७।

[वि० प०]

क्षिप०। परिदेवते इति । 'तेवृ देवृ देवने' (१।४२१)। "वाऽसरूपोऽस्त्रियाम्" (४।२।८) इति वचनाद् घिणिन्विषये "वुण्तृचौ" (४।२।४७) इति वुण् सिद्ध एवेत्याह - वुण्णाति ।।११२७।

[क० च०]

क्षिप०। अभिधानादिति। 'तेवृ देवृ देवने' (१।४२१) इत्यस्य ग्रहणं न तु दिवेरिनन्तस्येति परिवादी त्वेवमुदाहरणम् इत्यर्थः। ताच्छीलिकेष्विति। ताच्छील्ये भवास्ताच्छीलिकाः प्रत्ययास्तेष्वित्यर्थः। तर्हि तद्धर्मतत्साधुकारिणि वासरूपः स्यात्। नैवम्, ताच्छीलिकेष्वित्युपलक्षणम्, ताच्छीलिकादिष्विति बोद्धव्यम्।।११२७।

[समीक्षा]

'परिक्षेपकः, परिक्षेपी' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में दो दो प्रत्यय किए गए हैं । कातन्त्रकार 'घिणिन् - वुण् ' प्रत्ययों में जो 'इ-ण् ' अनुबन्ध करते हैं, उनके लिए पाणिनि ने 'उ-ञ्' अनुबन्ध लगाए हैं । पाणिनि ने उक्त पाँच धातुओं को ३ सूत्रों में पढ़ा है - "संपृचानु ---परिक्षिपपरिरटपरिवद -- मुषाभ्याहनश्च, निन्दहिंस - - परिक्षिपपरिरटपरिवादि - - वुञ्, देविक्रुशोश्चोपसर्गे" (अ० ३।२।१४२,१४६,१४७)। इस प्रकार पाणिनीय योजना की अपेक्षा कातन्त्रीय योजना अधिक सुगम है ।

[रूपसिद्धि]

१. **परिक्षेपकः** । परि + क्षिप् + वुण् + सि । 'परि' उपसर्ग के उपपद में रहने पर 'क्षिप प्रेरणे' (५।५) धातु से प्रकृत सूत्र द्वारा 'वुण्' प्रत्यय, 'ण्' अनुबन्ध का प्रयोगाभाव, ''युवुझामनाकान्ताः'' (४।६।५४) से 'वु' को 'अक' आदेश, लघूपध गुण तथा विभक्तिकार्य ।

२. **परिक्षेपी**। परि + क्षिप् + घिणिन् + सि । 'परि' पूर्वक 'क्षिप्' धातु से 'घिणिन्' प्रत्यय आदि कार्य पूर्ववत् ।

३ - १०. **परिराटकः** । परि + रट् + वुण् + सि । **परिराटी** । परि + रट् + घिणिन् + सि । **परिवादकः** । परि + वद् + वुण् + सि । **परिवादी** । परि + वद् + घिणिन् + सि । **परिवादकः** । परि + वद् + इन् + वुण् + सि । **परिवादी** । परि + वद + इन् + घिणिन् + सि । **परिदेवकः** । परि + देव् + वुण् + सि । **परिदेवी**। परि + देव् + घिणिन् + सि । प्रक्रिया प्रायः पूर्ववत् ।।११२७।

## ११२८. निन्दहिंसक्लिशखादानेकस्वरविनाशिव्याभाषासूयां वुञ् [४।४।२८]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'निन्द् - हिन्स् ' इत्यादि धातुओं से 'वुञ् ' प्रत्यय होता है ।।११२८।

[दु० वृ०]

एभ्यो वुञ् भवति तच्छीलादिषु । निन्दकः, हिंसकः, क्लेशकः, खादकः, गणकः, दरिद्रायकः । अनेकस्वरान्नेच्छन्त्यन्ये । विनाशयतीति विनाशकः, व्याभाषकः, असूयकः । कण्डूयादिभ्योऽसूयादेवानेकस्वरादिति । पुनर्वुञ्ग्रहणात् प्रकृतेऽपि घिणिन् न स्यात् ।।११२८।

[दु० टी०]

निन्द०। 'क्लिश उपतापे, क्लिशू विबाधने' (३।१०४;८।४२) द्वयोरेव ग्रहणम्। क्लिश्यते क्लिश्नाति वा **क्लेशकः** । योऽत्र रुचादिस्तस्य प्राप्तौ वचनम् । पुनरित्यादि। ननु चानुकृष्टत्वाद् घिणिन् नानुवर्तिष्यते ? सत्यम् । घिणिन् भवति वुण् चेति चकारस्य सम्बन्धः प्रतिपद्यते एवेति भावः । [1]अथवा वुणधिकारे वुञ्वचनं वुञेव निन्दादिभ्यः इत्यवधार्यते । अर्थावधिकश्चावधारणं तच्छीलादिषु वुञेव नान्यः इति समानजातीयत्वाच्च वुण् वुञ् च निन्दादिभ्यो निवृत्तावनुवृत्तौ वा विशेषो नास्तीति । तथा भाष्यकारोऽप्याह- निन्दादिभ्यो वुञ्ग्रहणं नान्येभ्यो वुण्प्रतिषेधार्थमिति सर्वे एव तृजादयो वासरूपेण न भवन्तीति अवधारणार्थमचिन्तयित्वा लिङ्गमपरे समर्थयन्ते । यद्यप्राप्तास्तृजादयस्ताच्छीलिकेषु तस्मादप्राप्ते वुणि वुञ्वचनमर्थवद् भवतीति ।।११२८।

---

१. वुण् भवति घिणिन् चेति पक्षेऽङ्गीक्रियमाणे किमुत्तरं वाच्यमित्याह - अथवेति कश्चित् । यद् वा स्वमतमाह-अथेवति (सं० टि०)।

[वि० प०]

निन्द०। अनेकस्वरादेवासूयादपि सिध्यतीत्याह -कण्डूयादिभ्य इति । अधिकृतेनैव वुणा सिध्यतीत्याह-कण्डूयादिभ्य इति। अधिकृतेनैव वुणा सिध्यतीत्याह - पुनरित्यादि। ननु घिणिन् चानुकृष्टत्वान्न वर्तते, नैवम् । वुणैव चकारस्य सम्बन्धो दृष्टः, अधिकारस्तु घिणिन् भवतीत्यपि वाक्यार्थं मन्यते ।।११२८।

[क० च०]

निन्द०। अनेकस्वरत्वात् सिद्धे विनाशेः पाठो "भ्राज्यलंकृञ्" - इत्यादिना इष्णुज्बाधनार्थः। तर्हि कथं गणक इति ? चुरादेर्विकल्पेनेनन्तत्वादिनोऽभावपक्षे इत्येके। वासरूपाश्रयणादित्यपरे ।।११२८।

[समीक्षा]

'निन्दकः, हिंसकः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'वुञ् ' प्रत्यय का विधान किया है । पाणिनि का सूत्र है- "निन्दहिंसक्लिशखाद-विनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्" (अ० ३।२।१४६)। अतः उभयत्र प्रायः समानता ही कही जा सकती है ।

[रूपसिद्धि]

१. निन्दकः। निन्द् + वुञ् - अक + सि । 'णिदि कुत्सायाम् ' (१।२४) धातु से प्रकृत सूत्र द्वारा 'वुञ् ' प्रत्यय, 'वु' को 'अक' आदेश तथा विभक्तिकार्य ।

२ - ९. हिंसकः। हिन्स् + वुञ् - अक + सि । क्लेशकः। क्लिश् + वुञ् - अक + सि । खादकः । खाद् + वुञ् - अक + सि । गणकः । गण + वुञ् - अक + सि । दरिद्रायकः। दरिद्रा + वुञ् - अक + सि । विनाशकः। वि + नश् + वुञ् - अक + सि । व्याभाषकः। वि + आ + भाष् + वुञ् - अक + सि । असूयकः। नञ् + सू + वुञ् - अक + सि । प्रक्रिया प्रायः पूर्ववत् ।।११२८।

## ११२९. देविक्रुशोश्चोपसर्गे [४।४।२९]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में इनन्त 'दिव्' तथा 'क्रुश्' धातु से उपसर्ग के उपपद में रहने पर 'वुञ्' प्रत्यय होता है ।।११२९।

[दु० वृ०]

उपसर्गे उपपदे देवयतेः क्रुशेश्च वुञ् भवति तच्छीलादिषु । आदेवकः, परिदेवकः। क्रीडायामेवाभिधानम् । आक्रोशकः । उपसर्ग इति किम् ? देवयिता, क्रोष्टा ।।११२९।

[क० च०]

देवि०। देवेरिनन्तस्यैव ग्रहणम्, न तु क्रुशेः साहचर्यात् 'तेवृ देवृ देवने' (१।४२१) इत्यस्य देवक्रुशोश्चेत्यकरणात्। ननु दिविस्तावत् क्रीडाविजिगीषादौ वर्तते। ततश्च सामान्यार्थे अर्थविशेषे वा वुणित्याह-क्रीडायामिति देवयितेति। ननु भ्राज्यलमित्यादिना

प्राप्तस्येष्णुचो बाधनार्थो देवयतेः पाठः। ततश्च तेनैव प्रत्युदाहरणमुचितम्? सत्यम्, देवयतेरभिधानाद् इष्णुच् नास्तीति कश्चित्। ताच्छीलिकेष्वपि वासरूपविधेरिष्टत्वादयमपीति सागरः॥११२९।

[समीक्षा]

'आदेवकः, आक्रोशकः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'वुञ्' प्रत्यय किया है । पाणिनि का सूत्र है - "देविक्रुशोश्चोपसर्गे" (अ० ३।२।१४७)। अतः उभयत्र समानता ही है ।

[रूपसिद्धि]

१ - २. **आदेवकः, परिदेवकः** । आङ् , परि + दिव् + इन् + वुञ् - अक + सि । 'आङ् - परि' उपसर्गपूर्वक 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिषु' (३।१) धातु से 'इन् ' प्रत्यय, 'देवि' की धातुसंज्ञा, प्रकृत सूत्र से 'वुञ्' प्रत्यय, 'अक' आदेश, इन् - लोप-तथा विभक्तिकार्य ।

३. **आक्रोशकः**। आङ् + क्रुश + वुञ् - अक + सि । 'आङ्' उपसर्गपूर्वक 'क्रुश आह्वाने' (१।५६४) धातु से वुञ् प्रत्यय, अकादेश, लघूपधगुण तथा विभक्तिकार्य ॥११२९।

## ११३०. क्रुधिमण्डिचलिशब्दार्थेभ्यो युः [४।४।३०]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'क्रुध्' इत्यादि धातुओं से 'यु' प्रत्यय होता है ॥११३०।

[दु० वृ०]

एभ्यो युर्भवति तच्छीलादिषु। अर्थशब्दः प्रत्येकमभिसम्बध्यते। क्रुध्यर्थात् क्रोधनः। मण्ड्यर्थाद् मण्डनः, भूषणः। चल्यर्थात् चलनः, कम्पनः। शब्दार्थात् शब्दनः, रवणः। शब्द इति लिङ्गमिनन्तम्। चौरादिकमित्येके। कथं पठिता विद्याम्? अभिधानाच्चलि-शब्दार्थाभ्यामकर्मकाभ्यामिति ॥११३०।

[क० च०]

क्रुधि०। क्रुधिश्च मण्डिश्च चलिश्च शब्दश्चेति क्रुधिमण्डिचलिशब्दास्त एवार्था येषामिति द्वन्द्वात् परः श्रूयमाणः शब्दो हि प्रत्येकमभिसम्बध्यते इत्याह-अथेति। अथात्र किं प्रमाणं शब्द एवार्थो येषां ते शब्दार्थास्ततश्च पश्चाद् द्वन्द्वः कथं न स्यात् । नैवम्, तदा शब्दार्थक्रुधिमण्डिचलीति विदध्यात्। शब्दार्थादिति। शब्दार्थात् शब्दनः, रवणः इति। अथ शब्द इति धातुर्वास्तीति तत् तस्माद् युप्रत्यय इत्याह - शब्द इति। व्यस्तेनान्वयः। चौरादिक इतिशब्द उपसर्गादाविष्कार इति चुरादौ केचित् पठन्तीति भावः ॥११३०।

[समीक्षा]

'क्रोधनः, मण्डनः' आदि शब्दों के सिद्ध्यर्थ कातन्त्रकार ने 'यु' प्रत्यय तथा पाणिनि ने 'युच्' प्रत्यय किया है । उनके दो सूत्र हैं - "चलनशब्दार्थादकर्मकाद् युच्, क्रुधमण्डार्थेभ्यश्च" (अ० ३।२।१४८,१५१)। पाणिनीय चकारानुबन्ध चित्स्वरविधान के लिए है । कातन्त्र में वैदिक शब्द सिद्ध नहीं किए गए हैं। अतः उभयत्र प्रायः समानता ही है ।

[रूपसिद्धि]

१. **क्रोधनः**। क्रुध् + यु - अन + सि । 'क्रुध रोषे' (३।६८) धातु से प्रकृत सूत्र द्वारा 'यु' प्रत्यय, 'अन' आदेश, उपधागुण तथा विभक्तिकार्य ।

२-७. **मण्डनः**। मंडि + यु - अन + सि। **भूषणः**। भूष् + यु - अन + सि। **चलनः**। चल् + यु - अन + सि। **कम्पनः**। कम्पृ + यु - अन + सि । **शब्दनः**। शब्द् + यु - अन + सि। **रवणः**। रु + यु - अन + सि। प्रक्रिया प्रायः पूर्ववत्।। ११३०।

## ११३१. रुदादेश्च व्यञ्जनादेः [४।४।३१]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में रुदादिगणपठित धातुओं के अन्तर्गत व्यञ्जनादि धातुओं से 'यु' प्रत्यय होता हैं ।।११३१।

[दु० वृ०]

रुदादेर्गणाद् व्यञ्जनादेर्युर्भवति तच्छीलादिषु। येभ्य आत्मनेभाषः श्रूयते ते रुचप्रकारा गणे ङानुबन्धवर्जिता इति। रोचनः, वर्धनः, वर्तनः। रुचादेरिति किम्? भविता, शयिता। व्यञ्जनादेरिति किम्? एधिता। आदिग्रहणं किम्? जुगुप्सनः, तितिक्षणः, मीमांसनः, बीभत्सनः इत्यपि स्यात्, एभ्योऽन्ये रुचादयो व्यञ्जनान्ता इति। कथं वसिता वस्त्रम्? अभिधानाद् इहाप्यकर्मकेभ्य इति।। ११३१।

[दु० टी०]

रुचा०। आदीत्यादि । ननु चात्राप्यस्य च लोपेन भवितव्यमनेनेति विषयसप्तमीत्वात्? सत्यम्। व्यञ्जनेन तदन्तविधिविज्ञानाद् भूतपूर्वात् स्वरान्तान्न स्याद् , न पुनरादिग्रहणम् अननीति विषयसप्तमीमपि ज्ञापयितुं शक्नोति ।।११३१।

[वि० प०]

रुचादेः। आदीत्यादि। व्यञ्जनादित्युक्ते तदन्तविधिना व्यञ्जनान्तादिति स्यात् ततो जुगुप्सादिभ्यः स्वरान्तेभ्यो व्यावृत्तिः स्यात् । आदिग्रहणे तु अन्तस्याविशेषितत्वात् स्वरान्तेभ्योऽपि भवति। ननु यदा अननीति विषयसप्तमी तदा बुद्धिस्थे प्रत्यये प्रागेवास्य च लोपे एते व्यञ्जनान्ता एवेत्यर्थाद् व्यञ्जनग्रहणम् आदिविशेषणं भविष्यति न तदन्तस्य विशेषणम् , न हि रुचादिः कश्चिदपरः स्वरान्तोऽस्ति, यद्व्यवच्छित्तये तदन्तो विशिष्यते? सत्यम् , तदन्तविशेषणबलाद् भूतपूर्वस्वरान्तेभ्योऽपि व्यावृत्तिर्मन्येत, परसप्तमीपक्षे तु तदन्तविशेषणव्यावृत्तिविषयतया जुगुप्सादीनां सर्वथा न स्याद् इत्यादिग्रहणम् ।।११३१।

[क० च०]

रुचादेः। ननु रुचादेरित्युक्ते परपठितानामेव ग्रहणम्। कथं वर्धन इति पूर्वपठितस्योदाहरणमित्याह-येभ्य इति। अयमर्थः। आदिशब्दः प्रकारवचनः, रुचसदृशा रुचादयः इति। सादृश्यं चानुदात्तानुबन्धद्वारेण, तेन शीङादिभ्यः परमप्यात्मनेभाषाः श्रूयन्ते, तेषामपि रुचादित्वाद् युप्रत्ययः स्यादित्याह- गण इति। अथात्र किं प्रमाणमिति चेदुच्यते-शीङादीनां ङानुबन्धं विहाय कर्तरि रुचादिसूत्रे ङानुबन्धग्रहणमकृतं स्यात्। रुचादित्वादात्मनेपदं भविष्यतीति भावः। तस्माद् गणे ङानुबन्धं शीङादीनां विधाय यत् सूत्रे ङानुबन्धग्रहणं करोति तद् बोधयति - सत्यप्युदात्तानुबन्धत्वे शीङादीनां रुचादिग्रहणेन ग्रहणं भवति। ननु भवितेति "भ्राज्यलंकृञ्०" (४।४।१६) इत्यादिना इष्णुजेवास्ति तत् कथं तृन्? सत्यम् ,क्वचित् ताच्छीलिकेऽपि वासरूपविधिरस्तीति तृन्नपि स्यादिति भावः॥११३१।

[समीक्षा]

'रोचनः, वर्द्धनः' इत्यादि शब्दों के सिद्ध्यर्थ कातन्त्रकार ने 'यु' प्रत्यय तथा पाणिनि ने 'युच्' प्रत्यय किया है । पाणिनि के द्वारा चकारानुबन्घ की योजना चित् स्वर के लिए की गई है, कातन्त्र में स्वरव्यवस्था नहीं है । अतः सामान्यतया उभयत्र समानता ही कही जा सकती है । पाणिनि का सूत्र है- "अनुदात्तेतश्च हलादेः" (अ० ३।२।१४९)। पाणिनि ने जिन धातुओं को अनुदात्तेत् माना है, क़ातन्त्रकार ने उन्हें रुचादिगण के अन्तर्गत पढ़ा है ।

[रूपसिद्धि]

१. **रोचनः**। रुच् + यु - अन + सि। 'रुच दीप्तौ' (१।४७३) धातु से कर्ता अर्थ में प्रकृत सूत्र द्वारा 'यु' प्रत्यय, "युवुझामनाकान्ताः" (४।६।५४) से 'यु' को 'अन' आदेश, "नामिनश्चोपधाया लघोः" (३।५।२) से उपधासंज्ञक उकार को गुण, लिङ्गसंज्ञा, 'सि' प्रत्यय तथा 'रेफसोर्विसर्जनीयः" (२।३।६३) से सकार को विसर्गादेश।

२ - ३. **वर्द्धनः**। वृध् + यु - अन + सि । **वर्तनः**। वृत् + यु - अन + सि। प्रक्रिया प्रायः पूर्ववत् ॥११३१।

## ११३२. जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदाम् [४।४।३२]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'जु' इत्यादि धातुओं से 'यु' प्रत्यय होता है ॥११३२।

[दु० वृ०]

एभ्यो युर्भवति तच्छीलादिषु । 'जु' इति सौत्रो धातुर्गतौ - जवनः । चङ्क्रमणः, दन्द्रमणः। "यस्यानननि" (३।६।४८) इति यलोपः। सरणः, गर्धनः, ज्वलनः, शोचनः,

अभिलाषणः, प्रपतनः, प्रपदनः। चलनार्थानां ग्रहणं सकर्मकार्थम्, पतिपदिभ्यामुकञ्। बाधितत्वाद् युप्राप्त्यर्थं वचनम्। ताच्छीलिकेषु वासरूपविधिर्नास्तीति। समावेशोऽपि दृश्यते चेद् यथा विकत्थीति विकत्थनः, भासुरम् , भास्वरम् , भासनम्, जागरिता, जागरूकः, वर्द्धिष्णुः, वर्द्धनः, अपलषिता, अपलाषुकः, अपलषणः इति। एवं सति सकर्मकार्थमित्यन्ये॥११३२।

[दु० टी०]

जु०। 'जु' इत्यादि। सूत्रभवोऽयं धातुर्न गणपरिपठित इत्यर्थः, सूत्रं चेदमेवानुरोधकम्। चङ्क्रम्य इति। 'क्रमु पादविक्षेपे' (१।१५७)। दन्द्रम्य इति। 'अम द्रम हम्म मीमृ हय गतौ' (१।१६०)। गत्यर्थात् कौटिल्य एवेति यशब्दः। 'सृ' इति भौवादिकजौहोत्यादिकयोर्ग्रहणम्। 'लष कान्तौ' (१।५९१)। चलनार्थानामित्यादि। जुचङ्क्रम्यदन्द्रम्यसृपतपदश्चलनार्थ इत्यर्थः। क्रमुपदी तु केवलं चलनार्थौ रुचादी व्यञ्जनादी च। तेन चङ्क्रमणो ग्रामस्य ग्रामस्थस्य प्रपदनः इत्याद्यर्थः सिद्धो भवति, अर्थान्तरवृत्तय इमे। तथाहि जवतिरयं यद्यपि गतौ तथापि चलनार्थः। किन्तर्हि चलनस्य करणं वेगमाचष्टे। न च वेगचलनयोरभेदः, वेगवत्यपि चलनस्य विशेषणत्वसम्भवात्, यथा पीतिश्चलः, सादिनिश्चलोऽश्ववारः। अनेकस्वरत्वाच्चङ्क्रम्यदन्द्रम्ययोर्वुञ् प्राप्तः। ग्रन्थमनुसरति सन्निपतति उत्पद्यते इति नात्र चलनार्थता सकर्मकेभ्योऽप्यभिधानादित्युच्यमानेऽपि। भाष्यकारस्तु ताच्छीलिकेषूत्सर्गापवादेषु वासरूपविधिर्नास्तीति विज्ञापयति, तेन चिकीर्षिता कटम्, अलंकर्तात्मानमित्यादि न साधु भवतीति ॥११३२।

[वि० प०]

जुचं०। चङ्क्रम्य- दन्द्रम्य इति। 'क्रमु पादविक्षेपे' (१।१५७)। 'अम द्रम गतौ' (१।१६०)। गत्यर्थात् कौटिल्य एव यशब्दः। इह केचिच्चलनार्थाः केचिदचलनार्था अपि सन्तो रुचादयः। तत्र यथायोगं पूर्वेणैव युप्रत्ययः सिद्ध इत्याह - चलनार्थेत्यादि। जुचङ्क्रम्यदन्द्रम्यसृणामित्यर्थः।. तेन चङ्क्रमणो ग्रामस्येति सिद्धम्। अन्यथा पूर्वत्राकर्मकेभ्य एवोक्तत्वात् कथमेतत् स्यात्। पतिपद्योस्तु "भृकम०" (४।४।३४) इत्यादिना विशेषविहितेनोकञा बाधितयोर्युप्राप्त्यर्थमुपादानम्। न च वासरूपन्यायेन युप्राप्तिरिति दर्शयति - ताच्छीलिकेष्विति। एतच्च "क्षिपरट०" (४।४।२७) इत्यादौ वुण्ग्रहणेन ज्ञापितम्। तस्य प्रायिकत्वे दीपे रो युं बाधते इत्यादिना वक्ष्यति इत्यालोच्य परमतमाशङ्क्याह- समावेशोऽपीति। वासरूपस्येति शेषः।

एवं सतीति। तेन 'ग्रामस्य प्रपतनः, ग्रन्थस्य प्रपदनः' इति सिद्धम्। एकेऽन्ये। अयं तु मन्यते नामी चलनार्थवृत्तयः, किन्तर्हि अर्थान्तरवृत्तयः एव गृह्यन्ते। तथाहि जवतिरयं यद्यपि गतौ पठ्यते तथापि न चलनार्थः, यस्मादसौ चलनस्य करणं वेगमाह-यथा वेगेन चलति। चङ्क्रम्यदन्द्रम्ययोश्चलनार्थयोरप्यनेकस्वरत्वाद् वुञ्

प्राप्तस्तदपवादो युर्विधीयते। ग्रन्थमनुसरति सन्निपतति उत्पद्यते इत्यत्र न चलनार्थता, तत् कथं ग्रन्थस्यानुसरण इत्यादि पूर्वेण सिध्येत्। तस्मादर्थान्तरनिवृत्त्यर्थमेवैषामुपादानम्, चलनार्थवृत्तिभ्यस्त्वेतेभ्यः पूर्वेण यौ क्रियमाणे सकर्मकेभ्योऽप्यभिधानात् कर्तव्यः। तेन नगरस्य सरण इत्यादि सिद्धमिति।।११३२।

[क० च०]

जुचङ्क्रम्य०। केचिदिति पञ्जी ।केचित् जुचङ्क्रम्यदन्द्रम्यसृपतयश्चलनार्थाः। एते रुचादयो भवन्ति, उदात्तानुबन्धलिङ्गाभावात्। केचिदचलनार्था इति। कथमेतत्, न ह्येकोऽप्यचलनार्थो रुचादिरस्ति। अत एव कश्चिच्चलनार्थो रुचादिरिति पाठं करोतीति दुर्गादित्यः। अस्य तु मते पदिश्चलनार्थो रुचादिरित्यर्थः। तन्नेति सागरः। पदेरेकत्वेऽपि उत्पद्यते सम्पद्यते इत्यर्थभेदाच्छब्दभेद इति मतेन बहुत्वम्। अतोऽचलनार्थाः सन्तः पदधातवो रुचादयोऽपिशब्दाच्चलनार्थत्वेऽपि रुचादित्वं पदेरिति बोद्धव्यम्। तत्र यथायोगमिति क्रुधिमण्डीत्यादिना चलनार्थे, अचलनार्थे तु रुचादेश्च व्यञ्जनादेरित्यनेनेति। एक इति। चलनार्थानामित्यादि यदुक्तं तदन्ये वदन्ति न त्वयम् , तत् कथं ग्रन्थस्येत्यादि। ननूत्पत्त्याद्यनेकवृत्तेरपि क्रुधिमण्डीत्यादिना युर्न भवति तथापि रुचादेरित्यनेन भविष्यति किमस्योपादानेन? सत्यम्, एवं सत्युकञ्बाधनार्थं बोद्धव्यम्। तथापि यदि वासरूपाश्रयणादित्युच्यते तदा सुखार्थम्। सकर्मकेभ्य इत्यादि। यथा कर्मग्रहणाभावेऽपि पूर्वेणाकर्मकेभ्य एव युर्भवति तथाऽत्रापि अभिधानात् सकर्मकेभ्य इत्युक्ते को दोषः ।।११३२।

[समीक्षा]

'जवनः, ज्वलनः,पतनः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने प्रायः समान ही प्रत्यय किए हैं । पाणिनीय 'युच् ' प्रत्यय में चकारानुबन्ध की योजना चित्स्वरार्थ है, जिसका कातन्त्र में सर्वथा अभाव है । अतः धातु - प्रत्यय - रूप की दृष्टि से उभयत्र समानता ही कही जाएगी । पाणिनि का सूत्र है - "जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः" (अ०३।२।१५०) ।

[विशेष वचन]

१. 'जु' इति सौत्रो धातुः (दु० वृ०, दु० टी०)।

२. अयं तु मन्यते नामी चलनार्थवृत्तयः, किन्तर्हि अर्थान्तरवृत्तयः (वि० प०)।

३. वासरूपाश्रयणादित्युच्यते तदा सुखार्थम् (क० च०)।

[रूपसिद्धि]

१. **जवनः**। जु + यु - अन + सि। गत्यर्थक 'जु' इस सौत्र धातु से प्रकृत सूत्र द्वारा 'यु' प्रत्यय, 'अन' आदेश, गुण, अवादेश तथा विभक्तिकार्य ।

२. **चङ्क्रमणः**। क्रम् + य = चङ्क्रम्य + यु - अन + सि । 'क्रमु पादविक्षेपे' (१।१५७) धातु से चेक्रीयितसंज्ञक 'य' प्रत्यय होने पर 'चङ्क्रम्य' धातु निष्पन्न होती है, उससे 'यु' प्रत्यय, 'अन' आदेश, यलोप तथा विभक्तिकार्य ।

३. दन्द्रमणः। द्रम् + य + यु - अन + सि । 'द्रम गतौ' (१।१६०) धातु से चेक्रीयितसंज्ञक 'य' प्रत्यय करने पर 'दन्द्रम्य' धातु निष्पन्न होती है । उससे 'यु' प्रत्यय, 'अन' आदेश, यकारलोप, णकार तथा विभक्तिकार्य ।

४ - १०. **सरणः**। सृ + यु - अन + सि। **गर्धनः**। गृध् + यु - अन + सि। **ज्वलनः**। ज्वल् + यु - अन + सि । **शोचनः**। शुच् + यु - अन + सि। **अभिलाषणः**। अभि + लष् + यु - अन + सि। **प्रपतनः**। प्र + पत् + यु - अन + सि। **प्रपदनः**। प्र + पद् + यु-अन + सि। प्रक्रिया पूर्ववत्।।११३२।

## ११३३. न यान्तसूददीपदीक्षाम् [४।४।३३]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'यकारान्त - सूद - दीप - दीक्ष' धातुओं से 'यु' प्रत्यय नहीं होता है ।।११३३।

[दु० वृ०]

यान्तानां सूद - दीप - दीक्षां च युर्न भवति तच्छीलादिषु। यान्तानां क्रुध्यादित्वात् सूद - दीप - दीक्षां च रुचादित्वात् प्राप्ते प्रतिषेधः। क्रूयिता, क्ष्मायिता, वयिता, सूदिता, दीपिता। कथम् अरिसूदन इति? नन्द्यादित्वात्। दीपे रो युं बाधत एव। दीपिग्रहणं वासरूपविधिर्लक्ष्यते इति ज्ञापनार्थम्। तेन तृन्नपि स्यात्। दीपिता, दीप्रः। तथा कामुकः, कमिता, कमनः, कम्र इति।।११३३।

[वि० प०]

न यान्त०। अरिसूदन इति। उपलक्षणमेतत् - मधुसूदन इत्यादिरपि ज्ञेयः। यद्येवम्, सूदेः प्रतिषेधो व्यर्थः, नन्द्यादिविहितस्यास्य च योर्विशेषाभावात् ? सत्यम्, तृनः समावेशार्थम्। अन्यथा रुचादिविहितो युरेव स्यात्। दीपेरित्यादि। "दीपिकम्प्यजसि०" (४।४।५०) इत्यादिना विशेषविहितो योरपवादो रप्रत्यय इत्यर्थः।।११३३।

[समीक्षा]

'वयिता, दीपिता' इत्यादि में 'यु' प्रत्यय के निषेधार्थ दोनों ही व्याकरणों में सूत्रनिर्देश प्राप्त होता है। पाणिनि के दो सूत्र हैं - "न यः, सूददीपदीक्षश्च" (अ० ३।२।१५२, १५३)। दो सूत्रों से प्रयुक्त पाणिनीय गौरव को छोड़कर अन्य तो उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **क्रूयिता** । क्रूय् + इट् + तृन् + सि । 'क्रूयी शब्दे' (१।४११) धातु से तृन् प्रत्यय, इडागम तथा विभक्तिकार्य।

२ - ६. **क्ष्मायिता**। क्ष्माय् + इट् + तृन् + सि । **वयिता** । वय् + इट् + तृन्+सि। **सूदिता**। सूद् + इट् + तृन् + सि। **दीपिता**। दीप् + इट् + तृन् + सि । **दीक्षिता** । दीक्ष् + इट् + तृन् + सि। प्रक्रिया पूर्ववत् ।।११३३।

## ११३४. शृकमगमहनवृषभूस्थालषपतपदा-मुकञ् [४।४।३४]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'शृ' इत्यादि धातुओं से 'उकञ्' प्रत्यय होता है ॥११३४।

[दु० वृ०]

एभ्य उकञ् भवति तच्छीलादिषु । शारुकः, कामुकः, आगामुकः, आघातुकः, वर्षुकः, प्रभावुकः, प्रस्थायुकः, अपलाषुकः, प्रपातुकः, प्रपादुकः ॥११३४।

[समीक्षा]

'वर्षुकः पर्जन्यः, प्रपातुको गर्भः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'उकञ्' प्रत्यय का विधान किया है । पाणिनि का सूत्र है - "लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्" (अ० ३।२।१५४)। अतः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **शारुकः**। शृ + उकञ् + सि । 'शृ हिंसायाम् ' (८।१५) धातु से प्रकृत सूत्र द्वारा 'उकञ्' प्रत्यय, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से 'ऋ' को वृद्धि - आर् तथा विभक्तिकार्य ।

२ - १०. **कामुकः**। कम् + उकञ् + सि। **आगामुकः**। आङ् + गम् + उकञ् + सि। **आघातुकः**। आङ् + हन् + उकञ् + सि। **वर्षुकः**। वृष् + उकञ् + सि। **प्रभावुकः**। प्र + भू + उकञ् + सि। **प्रस्थायुकः**। प्र + स्था + उकञ् + सि। **अपलाषुकः**। अप + लष् + उकञ् + सि। **प्रपातुकः**। प्र + पत् + उकञ् + सि। **प्रपादुकः**। प्र + पद् + उकञ् + सि। प्रक्रिया प्रायः पूर्ववत् ॥११३४।

## ११३५. वृङ्भिक्षिलुण्टिजल्पिकुट्टां षाकः [४।४।३५]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'वृङ्' इत्यादि धातुओं से 'षाक' प्रत्यय होता है ॥११३५।

[दु० वृ०]

एभ्यः षाको भवति तच्छीलादिषु । वराकः, वराकी । भिक्षाकः, भिक्षाकी । लुण्टाकः, लुण्टाकी । जल्पाकः, जल्पाकी । कुट्टाकः, कुट्टाकी । वृञस्तु - वरिता । षकारो नदाद्यर्थः- 'वराकी' इत्यादि ॥११३५।

[समीक्षा]

'जल्पाकः, वराकः, वराकी' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'षाक' प्रत्यय तथा पाणिनि ने 'षाकन् ' प्रत्यय किया है । पाणिनीय नकार अनुबन्ध

नित् स्वर के लिए है, जिस स्वरविधान का कातन्त्र में सर्वथा अभाव है। अतः उभयत्र प्रायः समानता ही है। पाणिनि का सूत्र है-"जल्पभिक्षकुट्टलुण्टवृङः षाकन्" (अ० ३।२।१५५)।

[रूपसिद्धि]

१. वराकः, वराकी। वृ + षाक (ई) + सि। 'वृङ् सम्भक्तौ' (८।५१) धातु से प्रकृत सूत्र द्वारा 'षाक' प्रत्यय, गुण, तथा विभक्तिकार्य। 'ष्' अनुबन्ध नदाद्यर्थ है, अतः स्त्रीलिङ्ग में 'ई' प्रत्यय होता है।

२ - ५. **भिक्षाकः, भिक्षाकी।** भिक्ष् + षाक (ई) + सि। **लुण्टाकः,** लुण्टाकी। लुण्ट् + षाक (ई) + सि। **जल्पाकः, जल्पाकी।** जल्प् + षाक (ई) + सि। **कुट्टाकः, कुट्टाकी।** कुट्ट + षाक (ई) + सि। प्रक्रिया पूर्ववत्॥११३५।

## ११३६. प्रे जुसुवोरिन् [४।४।३६]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'प्र' उपसर्गपूर्वक 'जु - सु' धातुओं से 'इन्' प्रत्यय होता है ॥११३६।

[दु० वृ०]

प्र उपपदे जवतेः सवतेश्च इन् भवति तच्छीलादिषु। प्रजवी। 'षु प्रसवे' (४।१), प्रसवी ॥११३६।

[वि० प०]

प्रे०। 'षुं प्रसवे' (४।१) इति। अन्ये तु 'षु प्रेरणे' (५।१८) इत्यस्यापि ग्रहणं मन्यन्ते ॥११३६।

[क० च०]

प्रे०। **अन्ये त्विति** पञ्जी। जुसुवोरिति निर्देशस्य **'सू प्रेरणे'** (५।१८) इति दीर्घान्तस्यापि सम्भवादित्यर्थः। अथ यदि **'सू प्रेरणे'** (५।१८) इत्यस्य ग्रहणं तदा आदादिकोऽस्ति तस्यापि ग्रहणं स्यादित्याह - जवतीति हेमः। एतेनादादिकस्य **'षु प्रसवे'** (४।१) इत्यस्य ग्रहणमिति भावः ॥११३६।

[समीक्षा]

'प्रजवी, प्रसवी' इत्यादि शब्दरूपों के निष्पादनार्थ दोनों ही आचार्यों ने ११ धातुएँ दो सूत्रों में पढ़ी हैं। पाणिनि के दो सूत्र हैं- "प्रजोरिनिः, जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च" (अ० ३।२।१५६,१५७)। वस्तुतः 'प्र' उपसर्गपूर्वक 'जु - सु' इन दो धातुओं से 'इन्' प्रत्यय होता है। इस दृष्टि से कातन्त्रकार की योजना अधिक समीचीन है, क्योंकि उन्होंने प्रकृत सूत्र में 'प्र' उपसर्गपूर्वक दो धातुओं से इन् प्रत्यय का विधान किया है तथा ९ धातुएँ अग्रिम सूत्र में पढ़ी हैं। इसके विपरीत

मूर्च्छापर्यायोऽव्युत्पत्त्यर्थ इकारान्त औणादिको वा शेषाद् वा कप्रत्यय इति। शयालुरिति। वक्तव्यं व्याख्येयम्। शीङः आलुरेव नास्तीति मतम्। अन्य आह- शयनं शयः, सोऽस्यास्तीत्ययमपि रूढितस्तद्धितो भविष्यति ॥११३८।

[वि० प०]

दयि०। वक्तव्यमिति । व्याख्येयम् । इदमस्यासम्मतमिति ॥११३८।

[क० च०]

दयि०। तन्द्रेति दकारवानयम् ॥११३८।

[समीक्षा]

'दयालुः, श्रद्धालुः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने ७ - ७ धातुओं से आलु (पाणिनीय आलुच्) प्रत्यय किया है । पाणिनि ने चकारानुबन्ध की योजना चित्स्वरार्थ की है, जिसका कातन्त्र में सर्वविध अभाव है । अतः उभयत्र प्रायः समानता ही कही जाएगी । पाणिनि का सूत्र है - "स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्" (अ० ३।२।१५८)।

[विशेष वचन]

१. तन्द्रेति सौत्रो धातुः (दु० वृ०)।

२. रूढितस्तद्धितो भविष्यति (दु० टी०)।

[रूपसिद्धि]

१. दयालुः। दय् + आलु + सि । 'दय दानगतिहिंसादानेषु' (१।४०८) धातु से प्रकृत सूत्र द्वारा 'आलु' प्रत्यय तथा विभक्तिकार्य ।

२ - ७. पतयालुः। पत् + इट् + आलु + सि । गृहयालुः। गृह् + इट् + आलु + सि । स्पृहयालुः। स्पृह् + इट् + आलु + सि । श्रद्धालुः। श्रत् + धा + आलु + सि । तन्द्रालुः। तन्द्र् + आलु + सि । निद्रालुः। नि + द्रा + आलु + सि । प्रक्रिया पूर्ववत् ॥११३८।

## ११३९. शदिसदिधेड्दासिभ्यो रुः [४।४।३९]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'शद् - सद्' आदि धातुओं से 'रु' प्रत्यय होता है ॥११३९।

[दु० वृ०]

एभ्यो रुर्भवति तच्छीलादिषु। शद्रुः, सद्रुः, धारुः। ददाति दयते यच्छति द्यति वा दारुः। 'षिञ् बन्धने' (४।२)- सेरुः॥११३९।

[दु० टी०]

शदि०। धेड्ग्रहणाद् दारूपमात्रं गृह्यते न तु संज्ञा । धारुर्वत्सो मातरम् इति निष्ठादित्वात्र षष्ठी द्वितीयैव ॥११३९।

[वि० प०]

शदि०। धेङ्ग्रहणाद् दारूपं गृह्यते न सञ्ज्ञेत्याह-ददातीति ॥११३९।

[क० च०]

शदि०। 'स्वं रूपं शब्दस्याशब्दसंज्ञा' (का० परि०२८) इति न्यायाद् दासंज्ञको गृह्यते, तेन दाप्दैपोर्निरासः । तत्रापि धेङ्ग्रहणाद् दारूपस्यैव विशिष्टस्य दासंज्ञकस्य ग्रहणम् । यथा - "प्रे दाज्ञः" (४।३।७) इति दारूपमिहेति पञ्जी। दासञ्ज्ञकदारूपमिह गृह्यते न तु दासंज्ञामात्रमित्यर्थः ॥११३९।

[समीक्षा]

'दारुः, सेरुः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में ५ - ५ धातुओं से 'रु' प्रत्यय किया गया है। पाणिनि का सूत्र है - "दाधेट्सिशदसदो रुः" (अ० ३।२।१५९)। अतः उभयत्र पूर्ण समानता ही है ।

[रूपसिद्धि]

१. शद्रुः। शद् + रु + सि । 'शद्लृ शातने' (१।५६३) धातु से प्रकृत सूत्र द्वारा 'रु' प्रत्यय तथा विभक्तिकार्य ।

२ - ५. सद्रुः। षद्लृ + रु + सि। धारुः। धेट् + रु + सि । दारुः। दा - दो + रु + सि। सेरुः। षिञ् + रु + सि। प्रक्रिया प्रायः पूर्ववत्॥११३९।

## ११४०. सृदिघसां मरक् [४।४।४०]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'सृ - अद् - घस्' धातुओं से 'मरक्' प्रत्यय होता है ॥११४०।

[दु० वृ०]

एभ्यो मरग् भवति तच्छीलादिषु । ससर्ति सरति वा सृमरः । युक्वरपावपि वचनात् - सरणः, सृत्वरः । अद्मरः । घस्लृ प्रकृत्यन्तरम् - घस्मरः ॥११४०।

[वि० प०]

सृदि० । युक्वरपाविति । जुचङ्क्रम्येति युः, सृजीण्नशामिति क्वरप् ॥११४०।

[क० च०]

सृदि०। अदः साहचर्याल्लुग्विकरणस्यैव सृधातोर्ग्रहणमिति न देश्यम्, व्यक्तिप्रधानत्वान्निर्देशस्येति हेमाशयः। सृधातोर्युक्वरपोः प्राप्तयोः शेषाभ्यां तृनि प्राप्ते वचनम्, घस्लृ प्रकृत्यन्तरमिति। मरग्विषय एव घस्लृ प्रकृत्यन्तरमाश्रीयते, न तु सर्वत्र वा परोक्षायामिति वचनात्॥११४०।

[समीक्षा]

'घस्मरः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने ३ - ३ धातुओं

पाणिनि ने प्रथम सूत्र में 'प्र' उपसर्गपूर्वक केवल 'जु' धातु का पाठ करके द्वितीय सूत्र में ९ धातुओं के अतिरिक्त 'प्रसू' को भी पढ़ा है।

[रूपसिद्धि]

१. प्रजवी। प्र + जु + इन् + सि । 'प्र' उपसर्गपूर्वक गत्यर्थक 'जु' इस सौत्र धातु से प्रकृत सूत्र द्वारा 'इन्' प्रत्यय, उकार को गुण, अवादेश तथा विभक्तिकार्य ।

२. प्रसवी। प्र + सु + इन् + सि । 'प्र' उपसर्गपूर्वक 'षु प्रसवे, षु प्रेरणे' (४।१,५।१८) धातु से 'इन्' प्रत्यय आदि कार्य पूर्ववत् ॥११३६।-

## ११३७. जीण्दृक्षिविश्रिपरिभूवमाभ्यमाव्यथां च [४।४।३७]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'जि - इण्' आदि ९ धातुओं से 'इन्' प्रत्यय होता है ॥११३७।

[दु० वृ०]

एभ्य इन् भवति तच्छीलादिषु। जि - जयी। इण्-अत्ययी। दृङ् - आदरी। क्षि - क्षयी। विश्रि - विश्रयी। परिभू-परिभवी। टु वम - वमी। अभ्यम - अभ्यमी। न व्यथते इति अव्यथी। तच्छीलादिविवक्षायां तृन् मा भूदिति वचनम् ॥११३७।

[दु० टी०]

जीण्०। 'क्षिष् हिंसायाम् ' (८।३०) इत्यस्य न ग्रहणम् , षानुबन्धत्वादित्येको ब्रूते। यथा पूर्वसूत्रे सूतिसुवत्योर्न ग्रहणम्, ङानुबन्धत्वादिति। योगविभागः स्पष्टार्थः। अन्यथा प्रेण योगः किं जुसुवोरन्यस्यापीति॥११३७।

[वि० प०]

जीण्०। किमर्थमिन्विधानम् ? स्वरान्तत्वादलि जयोऽस्यास्तीति इनि सति जयीत्यादिकं सिद्धमित्याह - तच्छीलेति । ननु "न सेटोऽमन्तस्य०" (४।१।३) इति इज्वद्भावप्रतिषेधाद् घञि उपधादीर्घत्वाभावेऽभ्यमीति सिध्यति, वमेस्तूपधादीर्घत्वमस्त्येव वामीति स्यात् ? सत्यम् । वमेरिन् कार्य एव । व्यथेस्तु भिदादित्वात् "षानुबन्धभिदादिभ्यस्त्वङ्" (४।५।८२) इति कृते व्यथाऽस्तीति इनि न व्यथीति नञ्समासः ॥११३७।

[क० च०]

जीण्०। 'क्षिष् हिंसायाम्' (८।३०) इत्यस्य न ग्रहणम् ,लाक्षणिकत्वात् 'निरनुबन्धग्रहणे न सानुबन्धकस्य' इत्यनेन भिन्नयोगात्। 'प्र' इति नानुवर्तते। न्यायोऽस्तीति वन्तुरवर्णतस्तथेति नियमाद् वन्तुरेव भवतीति तदा तद्धितानामाकृतिप्रधानत्वा-दित्याह- न भविष्यतीति हेमः॥११३७।

[समीक्षा]

द्रष्टव्य सूत्र - संख्या ११३६ की समीक्षा ।

[विशेष वचन]

१. तच्छीलादिविवक्षायां तृन् मा भूदिति वचनम् (दु० वृ०)।

२. योगविभागः स्पष्टार्थः (दु० टी०)।

[रूपसिद्धि]

१.जयी। जि + इन् + सि । 'जि जये' (१।१९१) धातु से प्रकृत सूत्र द्वारा 'इन्' प्रत्यय, गुण, अयादेश तथा विभक्तिकार्य ।

२ - ९. **अत्ययी**। अति + इण् + इन् + सि । **आदरी**। आङ् + दृङ् + इन् + सि। **क्षयी**। क्षि + इन् + सि। **विश्रयी**। वि + श्रि + इन् + सि। **परिभवी**। परि + भू + इन् + सि। **वमी**। टु वम् + इन् + सि। **अभ्यमी**। अभि + अम् + इन् + सि। **अव्यथी**। नञ् + व्यथ् + इन् + सि। प्रक्रिया प्रायः पूर्ववत्।।११३७।

## ११३८. दयिपतिगृहिस्पृहिश्रद्धातन्द्रानिद्राभ्य आलुः [४।४।३८]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'दय् - पत्' आदि धातुओं से 'आलु' प्रत्यय होता है ।।११३८।

[दु० वृ०]

एभ्य आलुर्भवति तच्छीलादिषु । दय् - दयालुः । पतिगृहिस्पृहयश्चुरादाविनन्ताः - पतयालुः, गृहयालुः, स्पृहयालुः । श्रत्पूर्वो धाञ्-श्रद्धालुः । तन्द्रेति **सौत्रो धातुः**- तन्द्रालुः । निपूर्वो द्रा - निद्रालुः । शयालुरिति वक्तव्यम् । कथं हृदयालुः ? हृदयमस्यास्तीति विवक्षायामालुस्तद्धितो **रूढितः** ।।११३८।

[दु० टी०]

दयि०। पतीत्यादि । गृहिस्पृहाभ्यां चौरादिकाभ्यां सहचरितः पतिरिनन्तश्चौरादिक इत्यर्थः। आदन्तत्वाच्चैषां दीर्घगुणौ न स्याताम् इति यथासम्भवम् । नन्वालुश् इति शानुबन्धः क्रियताम् "नाल्विष्ण्वाय्यान्तेलुषु" (४।१।३७) इत्यालुग्रहणं न कर्तव्यं स्यात्। तत्र सिद्धान्तः श्रत्पूर्वो धाञित्यत्र जौहोत्यादिकत्वाद् द्विवर्चनं प्रसज्येत, धेड्रुच्यते चेद् धेटोऽप्यात्वं न स्याद् अन्विकरणे आत्वं चाविकरणे श्रद्धेति धात्वन्तराद् विज्ञेयम्, नैवम्। काल्पनिकमेतत्। निपूर्वो 'द्रा कुत्सायाम्' (२।२०)-निद्रालुरिति। तन्द्रेति। तत्पूर्वो 'द्रा कुत्सायाम्' (२।२०)। अत एव निपातनात् तकारस्य नकारः इत्यर्थः। कथम् अस्ततन्द्रिणेति। तन्द्रिशब्दश्चेद् बहुव्रीहौ कः प्रसज्येत? सत्यम्। तन्द्रिशब्दोऽयं

से 'मर' प्रत्यय किया है । पाणिनि ने इसमें 'क् -च्' दो अनुबन्ध तथा कातन्त्रकार ने केवल 'क्' अनुबन्ध लगाया है । पाणिनीय 'च्' अनुबन्ध चित्स्वरार्थ प्रसिद्ध है, परन्तु कातन्त्र में स्वरप्रकरण का सर्वथा अभाव है । अत: प्राय: उभयत्र समानता ही है । पाणिनि का सूत्र है - "सृघस्यद: क्मरच्" (अ० ३।२।१६०)।

[रूपसिद्धि]

१. सृमर:। सृ + मरक् + सि । 'सृ गतौ' (१।२७४;२।७४) धातु से प्रकृत सूत्र द्वारा 'मरक्' प्रत्यय तथा विभक्तिकार्य ।

२ - ३. अद्मर:। अद् + मरक् + सि । घस्मर:। घस्लृ + मरक् + सि । प्रक्रिया पूर्ववत् ।।११४०।

## ११४१. मिदिभासिभन्जां घुरः [४।४।४१]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'मिद् - भास् - भन्ज्' धातुओं से 'घुर' प्रत्यय होता है ।।११४१।

[दु० वृ०]

एभ्यो घुरो भवति तच्छीलादिषु। मेद्यतीति मेदुर:। भासते इति भासुर:। भज्यते स्वयमेवेति कर्मकर्तर्येवाभिधानात् भङ्गुरं काष्ठम् । यस्तु परं भनक्ति ततस्तृन्नेव भङ्क्ता ।।११४१।

[समीक्षा]

'भासुर:' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में ३ - ३ धातुओं से 'घुर' प्रत्यय किया गया है। केवल पाणिनीय चकारानुबन्ध से यहाँ भिन्नता नहीं माननी चाहिए। पाणिनि का सूत्र है - "भञ्जभासमिदो घुरच् " (अ० ३।२।१६१)। अत: उभयत्र समानता ही है ।

[रूपसिद्धि]

१. मेदुर:। मिद् + घुर + सि। 'ञि मिदा स्नेहने' (२।७७) धातु से प्रकृत सूत्र द्वारा 'घुर' प्रत्यय, उपधागुण तथा विभक्तिकार्य।

२ - ३. भासुर:। भास् + घुर + सि। भङ्गुरम्। भन्ज् + घुर + सि। प्रक्रिया प्राय: पूर्ववत्।।११४१।

## ११४२. छिदिभिदिविदां कुरः [४।४।४२]

[सूत्रार्थ]

ताच्छील्य इत्यादि अर्थों में 'छिद् - भिद् - विद्' धातुओं से 'कुर' प्रत्यय होता है ।।११४२।

[दु० वृ०]

एभ्य: कुरो भवति तच्छीलादिषु। छिदुर:, भिदुर:। वेत्तीति विदुर:। छिदिभिद्यो:

कर्मकर्तर्येवाभिधानात्। केचिद् अकर्मकर्तर्यपि। दोषान्धकारभिदुरो दृप्तारिपक्षच्छिदुरः इति॥११४२।

[समीक्षा]

यहाँ पर उक्त समीक्षा के अनुसार दोनों में समानता है, क्योंकि पाणिनीय 'कुरच्' प्रत्यय में चकारानुबन्ध से कोई अन्तर नहीं आता। पाणिनि का सूत्र है- "विदिभिदिच्छिदेः कुरच्" (अ०३।२।१६२)।

[रूपसिद्धि]

१. छिदुरः। छिद् + कुर + सि। 'छिदिर् द्विधाकरणे' (६।३) धातु से प्रकृत सूत्र द्वारा 'कुर' प्रत्यय तथा विभक्तिकार्य ।

२ - ३. भिदुरः। भिदिर् + कुर + सि। विदुरः। विद् + कुर + सि। प्रक्रिया पूर्ववत्॥११४२।

## ११४३. जागुरूकः [४।४।४३]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'जागृ निद्राक्षये' (२।३६) धातु से 'ऊक' प्रत्यय होता है ॥११४३।

[दु० वृ०]

जागर्तेरूको भवति तच्छीलादिषु। जागरूकः ॥११४३।

[दु० टी०]

जागु०। जागर्तेस्तृनि प्राप्ते ऊक आरभ्यते। दीपिज्ञापकत्वाद् वासरूपन्यायेन तृन्नपि जागरिता ॥११४३।

[क० च०]

जागु०। जागर्तेस्तृन्निति प्राप्ते इति टीका। तृन्प्राप्तियोग्यतायामनेकस्वरत्वाद् उञो बाध इति भावः॥११४३।

[समीक्षा]

'जागरूकः' शब्दरूप के सिद्ध्यर्थ दोनों ही व्याकरणों में समान विधान प्राप्त होता है । पाणिनि का सूत्र है - "जागरूकः" (अ० ३।२।१६५)।

[रूपसिद्धि]

१. जागरूकः। जागृ + ऊक + सि । 'जागृ निद्राक्षये' (२।३६) धातु से प्रकृत सूत्र द्वारा 'ऊक' प्रत्यय, गुण तथा विभक्तिकार्य ॥११४३।

## ११४४. चेक्रीयितान्तानां यजिजपिदन्शिवदाम् [४।४।४४]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में चेक्रीयितप्रत्ययान्त 'यज् - जप् - दन्श् - वद्' धातुओं से 'ऊक' प्रत्यय होता है ॥११४४।

[दु० वृ०]

चेक्रीयितान्तानामेषामूको भवति तच्छीलादिषु । यायजूकः, जञ्जपूकः, दन्दशूकः, वावदूकः । सासहि - चाचलि - पापति - वावदयोऽपि चेक्रीयितान्ताः किप्रत्ययान्ता निपात्यन्ते ॥११४४।

[दु० टी०]

चेक्री०। पृथक्समानविभक्तिनिर्देशाद् विशेषणविशेष्यभावोऽवसीयते एव । यदन्तग्रहणमिह तत् स्पष्टार्थमेव। भृशं पुनः पुनर्वा गर्हितं दशतीति चेक्रीयितेऽपि लुप्ते प्रत्ययलोपलक्षणमित्यनुषङ्गलोपः। भृशं पुनः पुनर्वा वदतीति। केचिद् विदिग्रहणं न पठन्ति, तदसत्। प्रयोगदर्शनात् 'कतीह सन्तः खलु वावदूकाः' इति। सासहीति। यथाप्राप्तं तृनादेशप्रसङ्गे ताच्छीलिकेषु कैश्चिद् इति सम्बन्धः। "वञ्चिस्रन्सि०" (३।३।३०) इत्यादिना नीरागमो भवति पतेरभ्यासस्य। केचिद् धातुमात्रमेव निपातयन्ति। 'सहनशीलः, वदनशीलः, चलनशीलः, पतनशीलः' इत्यादि। एते छान्दसा एव न वक्तव्या इति भावः॥११४४।

[वि० प०]

चेक्री०। यजिदन्शिभ्यां लुपादेर्गर्ह्यादिति यशब्दः "जपादीनां च" (३।३।३२) इत्यनुस्वारागमः । सर्वत्रास्य च लोपे "यस्यानिनि" (३।६।४८) इति यलोपः । सासहीत्यादि । तच्छीलादिषु निपात्यन्ते कैश्चिदिति सम्बन्धः । अस्य तु मतं वर्णयन्ति छान्दसा एवैते शब्दाः इति ॥११४४।

[समीक्षा]

'यायजूकः' इत्यादि शब्दों के सिद्ध्यर्थ कातन्त्रकार ने 'वद' धातु अधिक पढ़ी है । पाणिनीय व्याकरण में इसे "उलूकादयश्च" (उ० सू० ४।४१) इस उणादि सूत्र द्वारा स्वीकार किया गया है । पाणिनि का सूत्र है - "यजजपदशां यङः" अ० ३।२।१६६)। अतः प्रायः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. यायजूकः। यज् + य + ऊक + सि । 'यज देवपूजासङ्गतिकरणदानेषु' १।६०८) धातु से चेक्रीयितसंज्ञक 'य' प्रत्यय, द्वित्वादि, 'यायज्य' की धातुसंज्ञा, ऊक' प्रत्यय, यलोप तथा विभक्तिकार्य ।

२ - ४. जञ्जपूकः। जप् + य + ऊक + सि । दन्दशूकः । दन्श् + य + ऊक सि । वावदूकः । वद् + य + ऊक + सि । प्रक्रिया पूर्ववत् ॥११४४।

## ११४५. तस्य लुगचि [४।४।४५]

[सूत्रार्थ]

ताच्छील्य इत्यादि अर्थों में चेक्रीयितसंज्ञक 'य' प्रत्यय का लोप होता है अच् प्रत्यय के परवर्ती होने पर ॥११४५।

[दु० वृ०]

तस्य चेक्रीयितस्य लुग् भवति अचि परे तच्छीलादिषु । लोलुवः, पोपुवः । व्यञ्जनान्तात् सिद्ध एव । केचिद् योगं विभजन्ति । तेन बोभवीति, रारटीति सिद्धम् ॥११४५।

[दु० टी०]

तस्य०। तद्ग्रहणं षष्ठ्येकवचनान्तमप्रधानस्यापि चेक्रीयितस्यानुवर्तनार्थम् , अन्यथा चेक्रीयितान्तानां यजिजपिदन्शिवदां लुगचि सम्भाव्येत । केचिद् इत्यादि । "तस्य लुग् " इत्येकयोगस्ततोऽचीति द्वितीयः। अच्येव नियमात् पूर्वविधिरनित्यो निरपेक्षस्तेन वा लुक् चेक्रीयितस्येति न वक्तव्यं स्यात्। प्रयोगानुसारेण कियन्त एव भाषायां दृष्टाः न सर्वे। तथा च 'बोभवीति' भट्टिकाव्ये निबद्धम्। अन्ये तु सर्वे एव छान्दसा इति प्रतिपद्यन्ते, तदिह प्रमाणम्॥११४५।

[वि० प०]

तस्य०। "प्रत्ययलुकां चानाम्" (४।१।४) इत्यचोऽगुणत्वादुवादेशः। व्यञ्जनान्तादिति। "यस्यानत्रि" इत्यनेनेत्यर्थः। तत्र हि व्यञ्जनात् परस्येत्युक्तम्। इह स्वरान्तात् लोपो दर्शितः। केचिदित्यादि। तस्य लुगित्येकयोगः। अचीति द्वितीयः, अच्येवेति नियमार्थः। तेन पूर्वयोगो निरपेक्षो विकल्पेन भवति। अतो वा लुक् चेक्रीयितस्येति न वक्तव्यं भवति। तत् पुनर्भाषायां प्रयोगानुसारेण वेदितव्यम्, न सर्वत्र। तथा च भट्टिकाव्ये बोभवीति दृश्यते। अन्ये तु सर्वे एव चेक्रीयितलुगन्ताश्छान्दसा इति प्रतिपन्नास्तदत्र प्रमाणम्। 'चर्करीताद् वा' इतीट्, अदादौ चेदं पठ्यते इति अन्विकरणस्य लुक् ॥११४५।

[क० च०]

तस्य०। तद्ग्रहणादेकस्यापि चेक्रीयितान्तशब्दस्य तच्छब्देन सम्बन्धः, अन्यथा अनन्तरत्वाच्चेकीयितान्तानां यजिजपिदन्शिवदामनुवृत्तिः सिद्धैव, किन्तच्छब्देनेत्याह - तस्येति। अथ 'लोलुवः, पोपुवः' इति स्वरान्तादेव दर्शितम्, व्यञ्जनान्ताद् धातोः कथन्न दर्शितमित्याह - व्यञ्जनान्तादिति। केचिदिति। अस्य सूत्रस्यान्ये वृत्तिकारा इच्छन्ति। पञ्जी - केन सूत्रेण सिद्धमित्याह - यस्याननीति। तर्हि तेनैव सिद्धं किमनेनेत्याह-तत्र व्यञ्जन इति तस्य लुगिति तर्हि अनेनैव सिद्धं किमचीत्यनेनेत्याह-अच्येवेति। एतेन सिद्धे सत्यारम्भो विधिर्नियमाय भवन् अच्येव परतो नान्यस्मिन्निति नियमयतीति भावः, तर्हि पूर्वसूत्रमनर्थकमित्याह-निरपेक्ष इति। एतेनाचीत्यनेन निमित्तान्तरव्यावृत्त्या पूर्वयोगस्य निरपेक्षता साधिता तर्हि वाग्रहणाभावान्नित्य एव, यदि निरपेक्षो लोपस्तदा बोभवीतीति नित्यं स्यात्, न तु बोभूयते इत्याह - विकल्पेनेति । विकल्पे च कारणं चेक्रीयितान्तादिति वचनम् , अन्यथा निरपेक्षे लोपे साक्षात् चेक्रीयिताभावात् कुतस्तस्य

विषयः, तत्र चान्तग्रहणं साक्षात् चेक्रीयितार्थमित्युक्तम् , निरपेक्षलोपे च प्रयोजनं बोभवीतीत्यादौ गुणादिकम् , अन्यथा सापेक्षलोपे "प्रत्ययलुकां चानाम्" (४।१।४) इति प्रतिषेधः स्यात् । निरपेक्षे तु न निषेधः, श्रुतत्वाद् यस्मिन्नेव प्रत्यये परे धात्वेकदेशो लुप्तस्तस्मिन्नेव यत् प्राप्तं तन्निषिध्यते इति तत्रोक्तत्वात् । अतो निरपेक्षलोपाश्रितः। अथ योगविभागेन यदुक्तं तत् किं पाणिनेर्मतवत् सर्वत्र? किं प्रयोगानुसारेण? इत्याह-तत्पुनरिति। तर्हि भवन्मते किं प्रमाणमित्याह - अन्येष्वित्यदादौ पठ्यते इति । अथ ईटा कथमलो बाधनं क्रियते, नैवम् ईट् आगमः, अल् तावत् प्रत्यय इति।।११४५।

[समीक्षा]

'लोलुवः, पोपुवः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में चेक्रीयितसंज्ञक 'य' प्रत्यय का लुक् किया गया है। पाणिनि का सूत्र है - "यङोऽचि च" (अ० २।४।७४)। इस प्रकार पाणिनीय ङकारानुबन्ध के अतिरिक्त अन्य प्रकार की तो उभयत्र समानता ही है ।

[रूपसिद्धि]

१. लोलुवः। लू + य + अच् + सि । चेक्रीयितप्रत्ययान्त 'लोलूय' धातु से 'अच्' प्रत्यय, प्रकृत सूत्र से 'य' का लुक्, ऊकार को उवादेश तथा विभक्तिकार्य ।

२. पोपुवः। पू + य + अच् + सि । 'पोपूय' धातु से 'अच्' प्रत्यय आदि कार्य पूर्ववत् ॥ ११४५ ।

## ११४६. ततो यातेर्वरः [४।४।४६]

[सूत्रार्थ]

ताच्छील्य इत्यादि अर्थों में चेक्रीयितप्रत्ययान्त 'या' धातु से 'वर' प्रत्यय होता है ॥ ११४६ ।

[दु० वृ०]

ततश्चेक्रीयितान्ताद् यातेर्वरो भवति तच्छीलादिषु । यायावरः। वरे विषयभूतेऽस्य च लोपे यस्य व्यञ्जने लोपः स्यात् ॥ ११४६ ।

[दु० टी०]

ततो०। यातेर्वरो भवति तस्य यातेर्लुक् सम्भावयेत्, अतस्ततोग्रहणमित्याह-ततश्चेक्रीयितान्तादित्यादि। यातेरिति तिब्निर्देशः। स्पष्टार्थोऽन्यथाकारान्ताच्चेक्रीयितान्तादित्यपि प्रतिपद्येत ॥ ११४६ ।

[वि० प०]

ततो०। वर इत्यादि। 'परनिमित्तको हि स्वरादेशः स्थानिवद् भवति', तेन 'वर' इत्यकारलोपस्य स्थानिवद्भावस्याभावाद् व्यञ्जननिमित्तमेव भवति "य्वोर्व्यञ्जनेऽये" इति स्यादेव लोप इत्यर्थः। "यस्यानिनि" (३।६।४८) इत्यस्य चाविषय एव स्वरपरत्वात्।।११४६।

[क० च०]

ततो०। अथ ततोग्रहणं किमर्थम्, अनन्तरत्वाद् विशेषणत्वेन तस्येत्यनुवर्तिष्यते, ततस्तस्य चेक्रीयितान्तस्य यातेर्वरो भवतीत्यर्थो भविष्यति? सत्यम्, **सुखार्थम्**। ततो यातेरपि तिब्निर्देशः। 'यायावरः' इति कथं यलोपः, न च **"यस्यानन्नि"** (३।६।४८) इत्यनेन लोपो व्यञ्जनपरत्वाभावात्, न वा **"य्वोर्व्यञ्जनेऽये"** (४।१।३५) इत्यनेन लोपः, **"अस्य च लोपः"** (३।६।४९) इत्यनेन लुप्तस्याकारस्य 'स्वरादेशः परनिमित्तकः पूर्वविधिं प्रति स्थानिवदिति व्यञ्जननिमित्तासम्भावाद् इत्याह- वर इति । इदं तु **"न पदान्त०"** ( का ० परि० १० ) इत्यादिना निषेधादभ्युपगमेनोक्तम्, अन्यथा लोपविधित्वात् कुतः स्थानिवद्भावः ॥ ११४६ ।

[समीक्षा]

'यायावरः' शब्दरूप के सिद्ध्यर्थ दोनों ही आचार्यों नें चेक्रीयितप्रत्यत्यान्त 'या' धातु से 'वर' प्रत्यय किया है । पाणिनीय चकारानुबन्ध से कोई विषमता नहीं आती । पाणिनि का सूत्र हैं- "यश्च यङः" (अ० ३।२।१७६)। अतः उभयत्र प्रायः समानता ही है ।

[रूपसिद्धि]

१. **यायावरः**। या + वर + सि । चेक्रीयितप्रत्ययान्त ' यायाय' धातु से प्रकृत सूत्र द्वारा 'वर' प्रत्यय "अस्य च लोपः " (३।६।४९ ) से 'य' प्रत्यय घटित अकार का लोप, "य्वोर्व्यञ्जनेऽये " (४।१।३५) से यकारलोप तथा विभक्तिकार्य ॥ ११४६ ।

## ११४७. कसिपिसिभासीशस्थाप्रमदां च [४।४।४७]

[सूत्रार्थ]

ताच्छील्य इत्यादि अर्थों में 'कस् - पिस् - भास् -ईश् - स्था-प्रमद् ' धातुओं से 'वर' प्रत्यय होता है ॥११४७।

[दु० वृ०]

एषां वरो भवति तच्छीलादिषु । कस्वरः, पेस्वरः, भास्वरः, ईश्वरः, स्थावरः, प्रमद्वरः ॥ ११४७ ।

[दु० टी०]

कसि० । कसिपिसिभ्यां तृनि प्राप्ते भासेरीशेश्च रुचादित्वाद् यौ प्राप्ते तिष्ठतेरुकञ्यपि सृकमेत्यादिवंचनात् , प्रपूर्वान्मदेश्च तृनि प्राप्ते वचनमिदमारभ्यते ॥ ११४७ ।

[क० च०]

'कसि०। **'कसि गतिशातनयोः, पिष्लृ संचूर्णने, कासृ भासृ दीप्तौ, ईश ऐश्वर्ये'** (२।४८;६।१२;३।४४०;२।४४)। तिष्ठतेरुकञपीति टीका । न केवलं **"ग्लाम्लास्था०"** (४।४।१९) इत्यादिना स्नुप्राप्ते इत्यपिशब्दार्थः ॥ ११४७।

[समीक्षा]

'ईश्वरः, स्थावरः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'वर' प्रत्यय किया है । पाणिनीय चकारानुबन्ध से विषमता नहीं कही जा सकती । अतः

प्राय: उभयत्र समानता है। पाणिनि का सूत्र है - "स्थेशभासपिसकसो वरच्" (अ० ३।२।१७५)।

[रूपसिद्धि]

१. कस्वरः। कस् + वर + सि। 'कसि गतिशातनयो: (२।४८) धातु से प्रकृत सूत्र द्वारा 'वर' प्रत्यय तथा विभक्तिकार्य।

२-६ पेस्वरः। पिस् + वर + सि। भास्वरः। भास् + वर + सि। ईश्वरः। ईश् + वर+ सि। स्थावरः। स्था + वर + सि। प्रमद्वरः। प्र + मद् + वर + सि। प्रक्रिया प्राय: पूर्ववत्॥ ११४७।

## ११४८. सृजीण्नशां क्वरप् [४।४।४८]

[सूत्रार्थ]

ताच्छील्य इत्यादि अर्थों में 'सृ-जि. -इण् - नश्' धातुओं से 'क्वरप्' प्रत्यय होता है॥ ११४८।

[दु० वृ०] -

एषां क्वरब् भवति तच्छीलादिषु। सृत्वरः, जित्वरः, इत्वरः, नश्वरः। क्वरप् नदादौ-सृत्वरी॥ ११४८।

[क० च०]

सृजि०। 'सृज विसर्गे' (३।११६) इति नाशङ्क्यते, 'सृजिण्' इत्यकरणात्। 'इण' इति सूत्रेऽकार उच्चारणार्थः। 'इङ् अध्ययने' (२।५६) इति निरासार्थो णकारानुबन्धपाठः। क्वरबिति ककारोऽगुणार्थः, पकारोऽपि तकारागमार्थः। 'सृ' इति भौवादिकजौहोत्यादिकयोर्ग्रहणम्॥११४८।

[समीक्षा]

'जित्वरः, नश्वरः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'सृ' इत्यादि चार धातुओं से 'क्वरप्' प्रत्यय किया गया है। पाणिनि का सूत्र है - "इण्नश्जिसर्तिभ्य: क्वरप्" (अ० ३।२।१६३)। अत: उभयत्र पूर्णतया समानता ही है।

[रूपसिद्धि]

१. सृत्वरः। सृ + क्वरप् + सि। 'सृ गतौ' (१।२६८;२।७४) धातु से प्रकृत सूत्र द्वारा 'क्वरप्' प्रत्यय, 'क् -प्' अनुबन्धों का प्रयोगाभाव, तकारागम तथा विभक्तिकार्य।

२-४. जित्वरः। जि + क्वरप् + सि। इत्वरः। इण् + क्वरप् + सि। नश्वरः। नश् + क्वरप् + सि। प्रक्रिया पूर्ववत्॥ ११४८।

## ११४९. गमस्त च [४।४।४९]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'गम्लृ गतौ' (१।२७९) धातु से 'क्वरप्' प्रत्यय तथा मकार के स्थान में तकार आदेश होता है ।।११४९ ।

[दु० वृ०]

गमः क्वरप् भवति तच्छीलादिषु तकारश्चान्तादेशः । गत्वरः । गत्वरी ।।११४९।

[क० च०]

गम०। सविभक्तिरेव प्रत्ययनिर्देशः सर्वत्र दृश्यते, तदभावेऽत्रादेश एव कल्प्यते। "द्युतिगमोर्द्वे च" (४।४।५८) इति क्विपि प्राप्ते "शृकम०" (४।४।३४) इत्यादिना उकञि प्राप्ते चेयमारभ्यते ।। ११४९ ।

[समीक्षा]

'गत्वरः, गत्वरी' शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने विधिसूत्र द्वारा तथा पाणिनि ने निपातनसूत्र द्वारा क्वरप् प्रत्यय किया है । पाणिनि का सूत्र है-" गत्वरश्च" (अ० ३।२।१६४)। अतः प्रायः उभयत्र समानता ही कही जायेगी ।

[रूपसिद्धि]

१. गत्वरः, गत्वरी। गम् + क्वरप् + सि । 'गम्लृ गतौ' (१।२७९) धातु से प्रकृत सूत्र द्वारा 'क्वरप्' प्रत्यय, 'क् - प्' अनुबन्धों का प्रयोगाभाव, मकार को तकारादेश तथा विभक्तिकार्य । स्त्रीलिङ्ग में 'ई' प्रत्यय'- गत्वरी ।। ११४९ ।

## ११५०. दीपिकम्प्यजसिहिंसिकमिस्मिनमां रः [४।४।५०]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'दीप् - कम्प्' आदि धातुओं से 'र' प्रत्यय होता है ।।११५०।

[दु० वृ०]

एषां रो भवति तच्छीलादिषु। दीप्रः, कम्प्रः। नञ्पूर्वो 'जसु मोक्षणे' (३।५१)- अजस्रः। हिंस्रः, कम्रः, स्मेरः, नम्रः। युरपि दृश्यते-कम्पनः,कमनः।।११५०।

[समीक्षा]

'स्मेरः, नम्रः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'र' प्रत्यय किया है । पाणिनि का सूत्र है- "नमिकम्पिस्म्यजसकमहिंसदीपो रः" (अ० ३।२।१६८)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-७. **दीप्रः**। दीप् + र + सि। **कम्प्रः**। कम्प् + र + सि। **अजस्रः**। नञ् + जस् + र + सि। **हिंस्रः**। हिन्स् + र + सि। **कम्रः**। कम् + र + सि। **स्मेरः**। स्मि + र + सि। **नम्रः**। नम् + र + सि। सामान्यतया सम्बद्ध धातुओं से 'र' प्रत्यय तथा विभक्तिकार्य। 'स्मेरः' में गुणादेश॥ ११५०।

## ११५१. सनन्ताशंसिभिक्षामुः [४।४।५१]

[सूत्रार्थ]

सनन्त धातुओं तथा आङ् उपसर्गपूर्वक शंस् - भिक्ष् धातुओं से ताच्छील्य इत्यादि अर्थों में 'उ' प्रत्यय होता है॥ ११५१।

[दु० वृ०]

सनन्तस्याशंसेर्भिक्षेश्च उर्भवति तत्छीलादिषु। चिकीर्षुः। 'आङः शसि इच्छायाम्' इति न्याय्यः पाठः-आशंसुः, भिक्षुः। अन्तग्रहणं **'षणु दाने'** (७।२) इति **शङ्कानिरासार्थम्**॥११५१।

[दु० टी०]

सन०। आङ् इत्यादि। आङा सह निर्देशादिति भावः। न **'शंसु स्तुतौ'** (१।२।४१) इत्यस्य ग्रहणम्। अन्तेत्यादि। यदि वा **'षण सम्भक्तौ'** (१।१५५) इति जिगीषुशब्दस्य गर्गादिपाठात् सन् प्रत्यय एवेति। **ज्ञापको** गरीयानिति भावः॥११५१।

[वि० प०]

सन०। आङ इत्यादि। न्याय्यत्वं पुनराङा सह निर्देशात्. न तु **'शंसु स्तुतौ'** (१।२४१) इत्यस्येति॥११५१।

[क० च०]

सन०। अन्तग्रहणमिति। **'षण संभक्तौ'** (१।१५५) इत्यस्याशङ्कानिरासार्थम्। ननु कथमेतद् यावता **'षणु दाने, षण संभक्तौ'** (७।२;१,१५५) इत्युभयोरपि मूर्धन्यणकारान्तत्वात् कुतः सन्देहः, सत्यम्। षण इति निर्देशे **'षणु दाने, षण सम्भक्तौ'** (७।२;१।१५५) इत्यनयोः 'धात्वादेः षः सः'' (३।८।२४) इति कृते निमित्ताभावे मूर्धन्यणकारान्तस्याभावेऽपि सन इति रूपस्य विद्यमानत्वात् सन्देहः स्यात्। एतच्च शङ्कामात्रं तदा हि **निःसन्देहार्थं** षणेत्यकृतसत्त्वमत्र विदध्यात्। षणीति इक्निर्देशो वा। यद् वा सनन्ताद् उप्रत्ययाभावे जिगीषुशब्दो न साधुः, कथं तस्य गर्गादौ पाठः इति सन् प्रत्यय एवावसीयते॥ ११५१।

[समीक्षा]

'चिकीर्षुः, आशंसुः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'उ' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है-''सनाशंसभिक्षामुः'' (अ० ३।२।१६८)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. चिकीर्षुः। कृ + सन् + उ + सि । सन्प्रत्ययान्त 'डु कृञ् करणे' (७।७) धातु = 'चिकीर्षु' से प्रकृत सूत्र द्वारा 'उ' प्रत्यय, अकारलोप तथा विभक्तिकार्य ।

२-३. आशंसुः। आङ् + शंस् + उ + सि । भिक्षुः । भिक्ष् + उ + सि । प्रक्रिया पूर्ववत् ॥ ११५१ ।

## ११५२. बिन्दिच्छू च [४।४।५२]

[सूत्रार्थ]

'बिन्दुः' तथा 'इच्छुः' शब्द ताच्छील्य आदि अर्थों में निपातन से सिद्ध होते हैं ॥ ११५२ ।

[दु० वृ०]

बिन्दुरिच्छुरिति निपात्यते तच्छीलादिषु । अभिधानाद् 'विद् ज्ञाने' (२।२७)- बिन्दुः। 'इषु इच्छायाम्' (५।७०) -इच्छुः। कथं 'बिदि अवयवे' (१।२३) बिन्दुः? स्तोकपर्यायः संज्ञाशब्दः औणादिक इति ॥ ११५२ ।

[दु० टी०]

निपातनाद् वा नान्येषां विदादीनां च इषीणां च —

**अकृतस्य क्रिया चैव प्राप्तेर्बाधनमेव वा ।**
**अधिकार्थविवक्षा च त्रयमेतन्निपातनात्** ॥। इति ।

यद्येवं कथमिदमुक्तं **धातुपारायणे** बिदि अवयवे बिन्दिस्तिबादिलोपं प्रतिपादयति केवलमुकारान्तो दृश्यते बिन्दुरिति नैवं विन्दुः । तथा **चाभियुक्ताः** पठन्ति भ्वादावपवर्गीयो विन्दुरिति, विन्दिरिति । एवं मनसिकृत्याह- कथमित्यादि। **कश्चिदाह**- वेदनार्थे बिन्दुरिति न दृश्यते, तदसत् ॥ ११५२ ।

[समीक्षा]

'विद्' धातु से नकारागम तथा 'इष्' धातु से छकारादेश निपातन से 'बिन्दुः- इच्छुः' शब्दरूपों के साधनार्थ दोनों ही व्याकरणों में किए गये हैं । पाणिनि का सूत्र है - "बिन्दुरिच्छुः" (अ० ३।२।१६९) । अतः उभयत्र पूर्ण समानता है ।

[रूपसिद्धि]

१. बिन्दुः। विद् + नकारागम + उ + सि । 'विद ज्ञाने' (२।२७) धातु से प्रकृत निपातनसूत्र द्वारा 'उ' प्रत्यय, नकारागम तथा विभक्तिकार्य ।

२. इच्छुः। इष् + छकारादेश + उ + सि । 'इषु इच्छायाम्' ५।७०) धातु से 'उ' प्रत्यय आदि कार्य पूर्ववत् ॥ ११५२ ।

## ११५३. आदृृवर्णोपधलोपिनां किर्द्वे च [४।४।५३]

[सूत्रार्थ]

ताच्छील्यादि अर्थों में आकारान्त, ऋवर्णान्त तथा उपधालोप वाली धातुओं से 'कि' प्रत्यय तथा धातु को द्वित्व होता है ॥ ११५३ ।

[दु० वृ०]

आदन्तस्य ऋवर्णान्तस्योपधालोपिनश्च किर्भवति तच्छीलादिषु । तत्सन्नियोगे च द्वे-उक्ती भवतः। 'डु धाञ्' (२।८५) - दधिः। ऋवर्णान्तात् - चक्रिः,। उपधालोपिनश्च- 'जनी जन' (१।५३१;।३।९४;२।८०)- जज्ञिः। भाषायां रूढाः। एवमन्येऽपि ।।११५३ ।

[दु० टी०]

आदृ०। द्वे चेति स्थानापेक्षयाऽपि यदि नपुसकं स्यात्र तदापि दोषः । द्वे स्थाने भवतः इति । एते इत्यादि । अन्यथा 'धाञ्सृकृजनिभ्यः' इति विदध्यात्। सदिनमिवसीनामेत्वमभ्यासलोपश्चेति न वक्तव्यम् , संज्ञाशब्दत्वात् - सेदिः, नेमिः, वेसिः ।।११५३।

[क० च०]

आदृ०। द्वे उक्ती। रूपशब्दाध्याहारेऽपि न दोषः। द्वे रूपे भवतः इत्यर्थः।। ११५३ ।

[समीक्षा]

'दधिः, चक्रिः, जज्ञिः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'कि' प्रत्यय तथा द्वित्व का विधान किया गया है । पाणिनि ने इन शब्दों को वैदिक घोषित किया है, जब कि कातन्त्रकार इन्हें लौकिक संस्कृत में प्रयुक्त मानते हैं । पाणिनि का सूत्र है- "आदृगमहनजनः किंकिनौ लिट् च" (अ० ३।२।१७१) । इस प्रकार धातुपरिगणन-प्रत्यय-द्वित्वविधान की दृष्टि से उभयत्र साम्य है, जबकि उक्त शब्दों का लोकप्रयुक्त मानना कातन्त्रीय उत्कर्ष कहा जा सकता है ।

[रूपसिद्धि]

१. दधिः। धा + कि + सि। 'डु धाञ् धारणपोषणयोः' (२।८५) धातु से प्रकृत सूत्र द्वारा 'कि' प्रत्यय, धातु को द्वित्व, अभ्यासकार्य, अकारलोप तथा विभक्तिकार्य ।

२-४. चक्रिः। कृ + कि +सि । सस्रिः। सृ + कि + सि । जज्ञिः। जन् + कि + सि । प्रक्रिया पूर्ववत्।। ११५३ ।

## ११५४. तृषिधृषिस्वपां नजिङ् [४।४।५४]

[सूत्रार्थ]

ताच्छील्य आदि अर्थों में 'तृष् - धृष् - स्वप्' धातुओं से 'नजिङ्' प्रत्यय होता है ।। ११५४ ।

[दु० वृ०]

एषां नजिङ् भवति तच्छीलादिषु । तृष्णक् , धृष्णक् , स्वप्नक्। धृषेर्नेच्छन्त्यन्ये ।। ११५४ ।

[दु० टी०]

तृषि० । 'नजिङ्' इति इकार उच्चारणार्थः ।। ११५४ ।

[क० च०]

तृषि० । सन्नियोगशिष्टत्वाद् द्वित्वे क्विपोऽनुवृत्तौ द्वे चेति नेच्छन्ति ॥ १५४ ।

[समीक्षा]

'स्वप्नक्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'नजिङ् ' प्रत्यय का विधान किया है । पाणिनि का सूत्र है- "स्वपितृषोर्नजिङ् " (अ० ३।२।१७२)। पाणिनि ने 'धृष् ' धातु का पाठ सूत्र में नहीं किया है, उसकी पूर्ति वार्त्तिककार ने की है - "धृषेश्चेति वक्तव्यम् " (का० वृ० ३।२।१७२-वा०) । इस प्रकार कातन्त्र में उत्कर्ष कहा जा सकता है ।

[विशेष वचन]

१. नजिङ् इति इकार उच्चारणार्थः (दु० टी० ) ।

[रूपसिद्धि]

१-३. तृष्णक्। ञि तृष पिपासायाम् (३।६६) + नजिङ् + सि। धृष्णक्। ञि धृषा प्रागल्भ्ये (४।१८ ) + नजिङ् + सि। स्वप्नक्। ञि ष्वप शये (२।३२) + नजिङ् + सि। तीनों धातुओं से प्रकृत सूत्र द्वारा नजिङ् प्रत्यय तथा विभक्तिकार्य॥११५४।

## ११५५. शृवन्द्योरारुः [४।४।५५]

[सूत्रार्थ]

ताच्छील्य इत्यादि अर्थों में 'शृ-वन्द् ' धातुओं से आरु' प्रत्यय होता है॥११५५।

[दु० वृ०]

शृणोतेर्वन्दतेश्चारुर्भवति तच्छीलादिषु। शरारुः, वन्दारुः ॥ ११५५ ।

[दु० टी०]

शृ०। शृणातेः "शृकम०" (४।४।३४) इत्यादिना उकञि प्राप्ते 'वदि अभिवादनस्तुत्योः' (१।२९९) इत्यस्माद् रुचादित्वाद् यौ प्राप्ते विधिरयम्॥११५५।

[समीक्षा]

'शरारुः, वन्दारुः' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'आरु' प्रत्यय किया गया है । पाणिनि का सूत्र है- "शृवन्द्योरारुः" (अ०३।२।१७३)। अतः उभयत्र समानता है ।

[रूपसिद्धि]

१-२. शरारुः। शृ हिंसायाम् (८।१५) + आरु + सि। वन्दारुः। वदि अभिवादनस्तुत्योः + आरु + सि। दोनों धातुओं से 'आरु' प्रत्यय तथा विभक्तिकार्य॥११५५।

## ११५६. भियो रुक्-लुकौ च [४।४।५६]

[सूत्रार्थ]

ताच्छील्य इत्यादि अर्थों में 'ञि भी भये' (२।६८) धातु से 'रुक् -लुक्' प्रत्यय होते हैं।।११५६ ।

[दु० वृ०]

भियो रुक् -लुकौ च भवतस्तच्छीलादिषु । भीरुः, भीलुः । भीरुकः, भीलुकः । को बहुलार्थ एव ।। ११५६ ।

[दु० टी०]

भियो०। रलयोरेकत्वाच्चेल्लत्वं भविष्यति । यथा कपिरः, कपिलः । तदसत् , शयालुमधुरयो रत्वलत्वस्यादर्शनात् । प्रयोगानुसारोऽपि गरीयान् ।। ११५६ ।

[क० च०]

भियो० । ककारोऽगुणार्थः तर्हि "भीरुकः, भीलुकः' इति कथमित्याह - को बहुलार्थः। स्वार्थे कप्रत्यय इत्यर्थः ।। ११५६ ।

[समीक्षा]

कातन्त्रकार 'रुक् ' प्रत्यय से भीरुः, 'लुक् ' प्रत्यय से भीलुः तथा स्वार्थ में 'क' प्रत्यय करके 'भीरुकः- भीलुकः' प्रयोग सिद्ध करते हैं । परन्तु पाणिनि ने 'क्रुक्' प्रत्यय से भीरुः, 'लुकन् ' प्रत्यय से भीलुः तथा वार्त्तिककार ने 'क्रुकन्' प्रत्यय से 'भीरुकः'शब्दरूप सिद्ध किया है । फलतः कातन्त्रकार की योजना उत्कर्षाधायिका कही जा सकती है । पाणिनि का सूत्र है-"भियः क्रुक्लुकनौ" (अ० ३।२।१७४ )।

[रूपसिद्धि]

१-२. भीरुः। ञि भी भये + रुक् + सिं । भीलुः । भी + लुक् + सि । 'भी' धातु से 'रुक्-'लुक' प्रत्यय तथा विभक्तिकार्य ।। ११५६ ।

## ११५७. क्विब् भ्राजि - पॄ- धुर्वी-भासाम् [४।४।५७]

[सूत्रार्थ]

ताच्छील्य इत्यादि अर्थों में 'भ्राज् - पॄ-धुर्व् - भास् ' धातुओं से 'क्विप् ' प्रत्यय होता है ।। ११५७ ।

[दु० वृ०]

एषां क्विब् भवति तच्छीलादिषु। विभ्राट् , विभ्राजौ, विभ्राजः। पूः, पुरौ, पुरः। धूः, धुरौ, धुरः। भाः, भासौ, भासः। ताच्छीलिकतृन्बाधनार्थं पुनः क्विब् -ग्रहणम्।।११५७।

[दु० टी०]

क्विब् वचिप्रच्छिश्रिद्रुस्रुप्रुज्वां क्विब् दीर्घश्चेति वक्तव्यम् । दीर्घबलाच्च वचिप्रच्छ्योर्न

सम्प्रसारणम् । वचेः- वाक्। प्रच्छेः- शब्दप्राट् । कटप्रूः । कटादेव प्रवतेरभिधानम् । यथा आयातं सूयते ।

आयातादेव सूतेः क्विब् दृश्यते - आयातसूः। एवं क्रमेण योज्यम्। तत्र वक्तव्यम्। रूढिशब्दत्वाद् वर्णविकारो दृश्यते, न च ताच्छील्यमभिधीयते । यथा जवतीति जूः। उणादिषु द्रष्टव्यम् इति अपरे। एवं भुवः सञ्ज्ञायामन्तरे च गम्यमाने स्वयम्भूः, मित्रभूर्नाम कश्चित् । प्रतिभूर्वणिगधमर्णयोर्दानाय प्रत्ययवचसोऽन्तरे तिष्ठति ॥११५७।

[क० च०]

क्विप्०। 'पॄ पालनपूरणयोः; धुर्वी हिंसार्थः' (८।१६;१।१९४)। सन्दिह्येति हेमः। परार्थः विभासधुरामित्यकरणात् ॥११५७।

[समीक्षा]

'विभ्राट् , पूः, धूः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'क्विप्' प्रत्यय किया है । पाणिनि का सूत्र है - "भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् " (अ० ३।२।१७७)। अतः प्रायः उभयत्र समानता ही है।

[रूपसिद्धि]

१. विभ्राट्। वि + भ्राज् + क्विप् + सि । 'वि' उपसर्गपूर्वक 'भ्राज दीप्तौ' (१।३४७) धातु से 'क्विप् ' प्रत्यय, सर्वापहारी लोप, जकार को षकार, उसको डकार - टकार तथा विभक्तिकार्य ।

२ - १२. विभ्राजौ, विभ्राजः। वि + भ्राज् + क्विप् + औ, जस् । पूः, पुरौ, पुरः। पॄ + क्विप् + सि, औ, जस्। धूः, धुरौ, धुरः, धुर्व् + क्विप् + सि, औ, जस्। भाः, भासौ, भासः। भास् + क्विप् + सि, औ, जस् । सभी धातुओं से क्विप् प्रत्यय तथा विभक्तिकार्य ॥११५७।

## ११५८. द्युतिगमोर्द्वे च [४।४।५८]

[सूत्रार्थ]

ताच्छील्य इत्यादि अर्थों में 'द्युत् - गम्' धातुओं से क्विप् प्रत्यय तथा द्वित्व कार्य होता है॥११५८।

[दु० वृ०]

द्युतेर्गमेश्च क्विब् भवति तच्छीलादिषु द्वे उक्ती च भवतः । दिद्युत् , जगत् ॥११५८।

[दु० टी०]

द्युति०। 'दिद्युत् ' इति । "द्युतिस्वाप्योरभ्यासस्य" (३।४।१६) इति सम्प्रसारणम्। जगदिति । "यमम्न०" (४।१।६९) इत्यादिना पञ्चमलोप आतश्चाद् भवति। ह्वयतेश्चेत्येके - जुहूः । एष भाषायां नास्तीति गम्यते "अभ्यस्तस्य च" (३।४।१५) इति सम्प्रसारणमिह॥११५८।

[वि० प०]

द्युति०। दिद्युदिति । "द्युतिस्वाप्योरभ्यासस्य" (३।४।१६) इति सम्प्रसारणम् । जगदिति । "यममनतनगमां क्वौ" (४।१।६९) इति पञ्चमलोपः, आतश्च अद् इति कृते तोऽन्तः ॥११५८।

[क० च०]

द्युति०। अत्रापि द्वे चेति पूर्ववत् । द्युते रुचादित्वाद यौ प्राप्ते गमेश्च "शॄकम०" (४।४।३४) इत्यादिना उकञि प्राप्ते "गमस्त च" (४।४।४९) इत्यनेन क्वरपि च प्राप्ते इदमारभ्यते ॥११५८।

[समीक्षा]

'दिद्युत् - जगत् ' शब्दरूपों के सिद्ध्यर्थ पाणिनि ने किसी सूत्र में व्यवस्था नहीं की है, परन्तु वार्त्तिककार ने इसकी पूर्ति की है - "द्युतिगमिजुहोतीनां द्वे च" (अ० ३।२।१७८ - वा०)। इस प्रकार कातन्त्रकार ने सूत्र बनाकर उत्कर्ष दिखाया है ।

[रूपसिद्धि]

१-२. दिद्युत् । द्युत् + क्विप् + सि । जगत् । गम् + क्विप् + सि । दोनों धातुओं से क्विप् प्रत्यय, द्वित्व, अभ्यासकार्य तथा विभक्तिकार्य ॥११५८।

## ११५९. भुवो डुर्विशम्प्रेषु [४।४।५९]

[सूत्रार्थ]

'वि - शम् - प्र' के उपपद में रहने पर 'भू' धातु से 'डु' प्रत्यय होता है ॥११५९।

[दु० वृ०]

विशम्प्रेषूपपदेषु भुवो डुर्भवति । विभुः, शम्भुः, प्रभुः । डकारोऽन्त्यस्वरादिलोपार्थः ॥११५९।

[दु० टी०]

भुवो०। समि चेति वक्तव्यम् - सम्भुर्जनिता। तत्र वक्तव्यम् औणादिको भविष्यति यदि भाषायां दृश्यते ॥११५९।

[समीक्षा]

'शम्भुः' आदि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'डु' प्रत्यय किया गया है । पाणिनि का सूत्र है - "विप्रसम्भ्यो ड्वसंज्ञायाम् " (अ० ३।२।१८०)। अतः उभयत्र समानता ही है ।

[रूपसिद्धि]

१ - ३. विभुः। वि + भू + डु + सि । शम्भुः । शम् + भू + डु + सि । प्रभुः। प्र + भू + डु + सि.। 'वि - शम् -प्र' पूर्वक 'भू सत्तायाम् ' (१।१) धातु से प्रकृत

सूत्र द्वारा 'डु' प्रत्यय, डकारानुबन्ध के बल से भूधातुगत ऊकार का लोप तथा विभक्तिकार्य ॥११५९।

## ११६०. कर्मणि धेटः ष्ट्रन् [४।४।६०]

[सूत्रार्थ]

कर्म कारक में 'धेट् पाने' (१।२६४) धातु से 'ष्ट्रन्' प्रत्यय होता है ॥११६०।

[दु० वृ०]

धेटो धातोः कर्मणि कारके ष्ट्रन् भवति । षकारो नदाद्यर्थः। धयति तामिति धात्री स्तनपायिनी, आमलकी चोच्यते । केचिद् दधातेरपीच्छन्ति । दधाति तां भैषज्यार्थमिति धात्री। सञ्ज्ञाशब्दत्वाद् विशेषाभावः ॥११६०।

[क० च०]

कर्म०। नकार उच्चारणार्थः। षकारो नदाद्यर्थः। अथ प्रकृतावानर्थक्याद् धेटष्टकारो नदाद्यर्थो विज्ञायते, एतदर्थो धेटष्कारः किमर्थः? सत्यम् , सुखार्थमिति। कश्चिद् आह-नियमार्थम् , अत्रैव नित्यम् ईप्रत्ययः, नान्यत्रेति। तेन 'दंष्ट्रा' इति सिद्धम्। श्रीपतिस्त्वाह - यत्र षानुबन्धस्तत्र टानुबन्धः क्रियतां किमुभयपाठेन? सत्यम्, षटोरुपादानमन्योऽन्यव्यभिचारार्थम् । तेन 'दंष्ट्रा' इत्यादि सिद्धम् । स्वमते तु नदादेराकृतिगणत्वादेव न भवति ॥११६०।

[समीक्षा]

'धात्री' शब्द के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ष्ट्रन्' प्रत्यय किया गया है । पाणिनि का सूत्र है - "धः कर्मणि ष्ट्रन्" (अ० ३।२।१८१)। अतः उभयत्र साम्य ही है ।

[रूपसिद्धि]

१. धात्री। धेट् + ष्ट्रन् + ई + सि । 'धेट् पाने' (१।२६४) धातु से प्रकृत सूत्र द्वारा 'ष्ट्रन्' प्रत्यय, 'ष् - न्' अनुबन्धों का प्रयोगाभाव, "सन्ध्यक्षरान्तानामाकारोऽविकरणे" (३।४।२०) से एकार को आकार, षकार के नदाद्यर्थ होने से "नदाद्यन्चिवाह्यन्स्यन्तृसखिनान्तेभ्य ई" (२।४।५०) द्वारा स्त्रीलिङ्ग में 'ई' प्रत्यय, "इवर्णावर्णयोर्लोपः स्वरे प्रत्यये ये च" (२।६।४४) से अकारलोप, लिङ्गसंज्ञा, 'सि' प्रत्यय तथा "ईकारान्तात् सिः" (२।१।४८) से उसका लोप ॥११६०।

## ११६१. नी-दाप्-शसु-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दन्श-नहां करणे [४।४।६१]

[सूत्रार्थ]

करण अर्थ में 'नी - दाप्' इत्यादि १३ धातुओं से 'ष्ट्रन्' प्रत्यय होता है ॥११६१।

[दु० वृ०]

एषां करणे ष्ट्रन् भवति । नीञ् - नेत्रम् । 'दाप् लवने' (२।२३) दात्रम् । शसु-शस्त्रम् । यु - योत्रम् । युजिर् - योक्त्रम् । ष्टुञ्-स्तोत्रम् । तुद् - तोत्त्रम् । षिञ्-सेत्रम्। षिच् - सेक्त्रम् । मिह्-मेढ्रम् । पत् - पत्त्रम् । दन्श् - दंष्ट्रा । सदैव स्त्रियामादा। नह्-नद्ध्री ।।११६१।

[दु० टी०]

नीदाप्०। 'दाप् लवने' (२।२३) एवेति, 'दैप् शोधने' (१।२६३) इत्यस्यानभिधानादिति भाव:।।११६१।

[वि० प०]

नीदाप्०। 'दाप् लवने' (२।२३) एवेति, न 'दैप् शोधने' (१।२६३) इत्यस्यानभिधानात् । तथा 'शस्त्रम् , योत्रम्' इत्यत्रेडागमोऽपि न भवति । पत्रमित्यत्र तु "युग्यं पत्रे" (४।२।३३) इति निर्देशात् । इतरे तु प्रतिषिद्धेट एवेति ।।११६१।

[समीक्षा]

'नेत्रम् , शस्त्रम् ' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'ष्ट्रन् ' प्रत्यय किया है । पाणिनि का सूत्र है - "दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे" (अ० ३।२।१८२)। अत: उभयत्र समानता ही है ।

[रूपसिद्धि]

१. नेत्रम् । नी + ष्ट्रन् + सि । नयति अनेन। 'णीञ् प्रापणे' (१।६००) धातु से प्रकृत सूत्र द्वारा 'ष्ट्रन् ' प्रत्यय, धातुगत ईकार को गुण तथा विभक्तिकार्य ।

२ - १३. **दात्रम्**। दाप् + ष्ट्रन् + सि। **शस्त्रम्**। शस् + ष्ट्रन् + सि । **योत्रम्**। यु + ष्ट्रन्+ सि। **योक्त्रम्** । युज् + ष्ट्रन् + सि । **स्तोत्रम्** । स्तु + ष्ट्रन् + सि । **तोत्त्रम्** । तुद् + ष्ट्रन् + सि । **सेत्रम्** । सि + ष्ट्रन् + सि । **सेक्त्रम्** । सिच् + ष्ट्रन् + सि । **मेढ्रम्**। मिह्+ ष्ट्रन्+ सि । **पत्त्रम्** । पत् + ष्ट्रन् + सि । **दंष्ट्रा** । दन्श् + ष्ट्रन् + सि । **नद्ध्री** । नह्+ ष्ट्रन् + सि । प्रक्रिया प्राय: पूर्ववत् ।।११६१।

## ११६२. हलशूकरयोः पुवः [४।४।६२]

[सूत्रार्थ]

हल अथवा शूकर का अवयवार्थ विवक्षित होने पर 'पूञ् - पूङ्' धातुओं से करण अर्थ में 'ष्ट्रन् ' प्रत्यय होता है ।।११६२।

[दु० वृ०]

पूञः पूङो वा करणे ष्ट्रन् भवति, तच्चेत् करणं हलशूकरयोरवयवः स्यात् । हलस्य पोत्रम् । शूकरस्य पोत्रम् मुखमित्यर्थः । "**सर्वधातुभ्यः ष्ट्रन्**" (कात० उ० ५।१८) इत्युणादावस्य प्रपञ्चार्थम्।।११६२।

[वि० प०]

हल०। हलशूकरयोरित्यवयवावयविसम्बन्धे षष्ठी, न ह्यन्यथा हलशूकरयोरवयवो गम्यते इति । पोत्रमितीट् न भवति ॥११६२।

[क० च०]

हल०। सर्वधातुभ्य इत्युणादौ सूत्रमिदम्, न ह्यन्यथेति पञ्जी। एतेनाभिधानमाश्रित्येति भावः । अभिधानाश्रयणे प्रयोजनान्तरमाह-पोत्रमिति ॥११६२।

[समीक्षा]

'पोत्रम्' शब्दरूप के सिद्ध्यर्थ दोनों ही व्याकरणों में 'ष्ट्रन्' प्रत्यय किया गया है । पाणिनि का सूत्र है - "हलसूकरयोः पुवः" (अ०३।२।१८३)। अतः उभयत्र समानता है ।

[रूपसिद्धि]

१. पोत्रम्। पूञ्, पूङ् + ष्ट्रन् + सि । हलशूकरयोरवयवः । 'पूञ् पवने, पूङ् पवने' (८।८;१।४६५) धातु से प्रकृत सूत्र द्वारा 'ष्ट्रन्' प्रत्यय, 'ष् - न्' अनुबन्धों का प्रयोगाभाव, धातुघटित ऊकार को गुण, लिङ्ग संज्ञा, सि - प्रत्यय तथा "अकारादसम्बुद्धौ मुश्च" (२।२।७) से सिलोप - 'मु' आगम ॥११६२।

## ११६३. अर्त्ति-लू-धू-सू-खनि-सहि-चरिभ्य इत्रन् [४।४।६३]

[सूत्रार्थ]

करण अर्थ में 'ऋ - लू - धू' इत्यादि ७ धातुओं से 'इत्रन्' प्रत्यय होता है ॥११६३।

[दु० वृ०]

एभ्यः करणे इत्रन् भवति । अरित्रम्, लवित्रम्, धवित्रम्। 'षू प्रेरणे' (५।१८)- सवित्रम् । खनित्रम्, सहित्रम् । 'चर गत्यर्थः' (१।१८९) - चरित्रम् ॥११६३।

[दु० टी०]

अर्त्ति०। भौवादिकजौहोत्यादिकयोर्ग्रहणम् । तिपमन्तरेण ऋकारान्तादित्यपि प्रतिपद्येत। धातुसाहचर्याद् धातुरेवायमिति गरीयान् पक्षः । 'धूञ् कम्पने, षूङ् प्राणिगर्भविमोचने, षूङ् प्राणिप्रसवे' (८।१३;२।५४;३।८१), एषामपि यदि ग्रहणं स्यात् तदाप्यदोषो रूढिशब्दत्वात् । अपरस्त्वाह - 'निरनुबन्धग्रहणे न सानुबन्धकस्य' (का० परि० ४८) इति । इत्रन्निति नकारः सुखार्थ एव, अन्यथा विसर्जनीये सति सान्तोऽयमिति विप्रतिपद्येत॥११६३।

[क० च०]

अर्त्ति०। अर्त्तीति सामान्यनिर्देशाद् भौवादिकजौहोत्यादिकयोरपि ग्रहणम् । इत्रन्निति नकारः श्रुतिसुखार्थः ॥११६३।

[समीक्षा]

'सवित्रम् , चरित्रम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'इत्र' प्रत्यय किया है । कातन्त्रकार द्वारा प्रयुक्त नकारानुबन्ध श्रुतिसुखार्थ माना गया है । अत: उससे भिन्नता नहीं कही जा सकती । पाणिनि का सूत्र है - "अर्त्तिलूधूसूखनसहचर इत्र:" (अ० ३।२।१८४)। अत: उभयत्र समानता ही समझनी चाहिए ।

[रूपसिद्धि]

१ - ७. **अरित्रम्।** ऋ + इत्रन् + सि । **लवित्रम्।** लूञ् + इत्रन् + सि । **धवित्रम्।** धूञ् + इत्रन् + सि । **सवित्रम् ।** षूञ् + इत्रन् + सि । **खनित्रम्।** खन् + इत्रन् + सि । **सहित्रम्।** सह् + इत्रन् + सि । **चरित्रम्।** चर् + इत्रन् + सि । 'ऋ - लूञ् - धूञ् - षूञ् - खन् - सह- चर्' धातुओं से 'इत्रन् ' प्रत्यय, आवश्यकतानुसार गुण, अवादेश तथा विभक्तिकार्य ।।११६३।

## ११६४. पुवः सञ्ज्ञायाम् [४।४।६४]

[सूत्रार्थ]

करण अर्थ में सञ्ज्ञा के गम्यमान होने पर 'पूङ् - पूञ् ' धातुओं से 'इत्रन्' प्रत्यय होता है ।।११६४।

[दु० वृ०]

पूङ: पूञो वा करणे इत्रन् भवति सञ्ज्ञायां गम्यमानायाम् । पवित्रं यज्ञोपवीतम्, पवित्रा नाम नदी ।।११६४।

[दु० टी०]

पुव: । पवन्ते पुनन्ति वा पापमिति **पवित्रम्** ।।११६४।

[क० च०]

पुव: । करणे इति वर्तते इति हेमकरपाठात् करणे इति वृत्तौ पाठो नास्ति। ननु यदि संज्ञायामेव इत्रन्, तर्हि कथं पवित्रं जलम् इत्यादि? सत्यम्, अन्तर्भूतोपमानोपमेयार्थम् इति। पवित्रमिव जलादिकमुच्यते। यथा सिंहो माणवक:, पीन: श्लेष्मा इत्यादि ।।११६४।

[समीक्षा]

'पवित्रम्' शब्दप्रयोग के सिद्ध्यर्थ दोनों ही व्याकरणों में 'इत्र' प्रत्यय किया गया है । कातन्त्रकार ने नकार अनुबन्ध की योजना श्रुतिसुखार्थ की है । पाणिनि का सूत्र है - "पुव: संज्ञायाम्" (अ०३।२।१८५)। अत: उभयत्र समानता ही है ।

[रूपसिद्धि]

१. **पवित्रं यज्ञोपवीतम्** । पू + इत्रन् + सि । 'पूञ् पवने, पूङ् पवने' (८।८;१।४६५) धातु से 'इत्रन्' प्रत्यय, ऊकार को गुण, अवादेश तथा विभक्तिकार्य।

२. **पवित्रा नाम नदी** । प्रक्रिया पूर्ववत् ।।११६४।

## ११६५. ऋषिदेवतयोः कर्तरि [४।४।६५]

[सूत्रार्थ]

कर्ता अर्थ में 'ऋषि-देव' के गम्यमान होने पर 'पू' धातु से 'इत्रन्' प्रत्यय होता है ॥११६५।

[दु० वृ०]

पुव इत्रन् भवति ऋषौ देवतायां च कर्तरि। पुनातीति पवित्रोऽयमृषिः। पवित्रोऽग्निः। केचित् करणमनुवर्त्य यथासंख्यसम्बन्धमिच्छन्ति। विवक्षायां को विशेष इति ॥११६५।

[दु० टी०]

ऋषि०। केचिदित्यादि । ऋषौ करणे देवतायां कर्तरीत्यर्थः । एवं पवन्तो पुनन्ति वा तेनेति विवक्षा कोऽर्थविशेष इति रूढित्वादिति करणस्यापि कर्तृत्वविवक्षेति ॥११६५।

[वि० प०]

ऋषि० । केचिदिति । ऋषौ कर्तरि देवतायां च करणे इति विवक्षायां को विशेषः? करणे तु कर्तृत्वविवक्षायां प्रत्यये न कश्चिद् भेदः ॥११६५।

[समीक्षा]

द्रष्टव्य सूत्र सं० - ११६४ की समीक्षा। पाणिनि का सूत्र है - "कर्तरि चर्षिदेवतयोः" (अ० ३।२।१८६)।

[रूपसिद्धि]

१ - २. पवित्रोऽयमृषिः । पवित्रोऽग्निः । प्रक्रिया पूर्ववत् ॥११६५।

## ११६६. ञ्यनुबन्धमतिबुद्धिपूजार्थेभ्यः क्तः [४।४।६६]

[सूत्रार्थ]

भाव, कर्म तथा कर्ता अर्थ में 'ञि' अनुबन्धवाली धातुओं से तथा मति - बुद्धि - पूजार्थक धातुओं से वर्तमान में 'क्त' प्रत्यय होता है ॥११६६।

[दु० वृ०]

मतिरिच्छा, बुद्धिर्ज्ञानम्, पूजा सत्कारः । ञ्यनुबन्धेभ्यो मतिबुद्धिपूजार्थेभ्यश्च वर्तमाने क्तो भवति भावे कर्मणि कर्तरि च यथासम्भवम् । ञि मिदा - मिन्नः । ञि क्ष्विदा - क्ष्विण्णः । मत्यर्थात् - राज्ञां मतः, राज्ञामिष्टः । बुद्ध्यर्थात् - राज्ञां बुद्धः, राज्ञां ज्ञातः । पूजार्थात् - राज्ञां पूजितः, राज्ञामर्चितः। अन्यत्रापीति बहुलत्वात् -

शीलितो रक्षितः क्षान्तः आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ।। १।
हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत् स्मृताः ।। २।

तथा 'सुप्तः, शयितः, आसितः, लिप्तः, स्निग्धः, तृप्तः' इत्यादयः। वर्तमाने भूतो भावी च क्रियाक्षणोऽस्त्येव **विवक्षा गरीयसीति** वचनम् ॥११६६।

**[दु० टी०]**

ञ्यनुबन्ध०। अन्यत्रापीत्यादि । "कृत्ययुटोऽन्यत्रापि" (४।५।९२) इत्यपिशब्दस्य बहुलार्थत्वादित्यर्थः । शीलादिभ्यो धातुभ्यो वर्तमाने भवतीति शीलयतीति शीलित इति। कष्टमिति भविष्यत्काले करिष्यतीति कष्टम् । 'अमृताः' इति बहुवचनेन गणो गृह्यते। न म्रियन्ते इत्यमृताः पूर्ववद् वर्तमाने इत्यर्थः । भूते क्तो विहितो वर्तमाने न स्यादिति वचनम् । बहवः क्रियाक्षणाः सन्तीति दर्शयति-वर्तमान इत्यादि । भूतक्रियाक्षणमाश्रित्य भूते भविष्यतीति भावः । ञि मिदाप्रभृतीनां च धातूनां ञ्यनुबन्धे न विधेयः स्यात् परिहरति विवक्षेत्यादि वर्तमानलक्षणोऽपि क्तोऽयमिष्यते इति । अन्य आह-विशेषधातुविहितत्वादर्थभेदे सत्यप्युक्तिबाधया भूतविहितस्य बाधकोऽयम् । यथा ब्राह्मणेभ्यो दधि दीयताम् , तक्रं कौण्डिन्यायेति । 'त्वया ज्ञातः, मया ज्ञातः, सुरैः पूजितः' इति **शिष्टप्रयोगाश्च दृश्यन्ते** ॥११६६।

**[वि० प०]** -

ञ्यनु०। अतीते क्तः सिद्धो वर्तमाने न स्यादिति वचनम् । मिन्नः, क्ष्विण्ण इति। "आदनुबन्धाच्च" (४।६।९१) इतीट्प्रतिषेधात् "**दाद् दस्य च**" (४।६।१०२) इति नत्वम् । "**रषृवर्णे०**" (२।४।४८) इत्यादिना क्ष्विदेर्नस्य णत्वं परस्य तु नस्य "**तवर्गस्य षटवर्गाद् टवर्गः**" (३।८।५) इति । राज्ञामित्यादि । "**न निष्ठादिषु**" (२।४।४२) इति कर्तृकर्मणोः षष्ठीप्रतिषेधात् "क्तस्य च वर्तमाने" इति पुनस्तद्विधानाभावाच्च कथमिह षष्ठी ? सत्यम् , वर्तमाने विहिते क्ते सम्बन्धविवक्षैव दृश्यते, अतीतविहिते तु 'राजभिर्मतः, राजभिरिष्टः' इति तृतीयैव । अन्यत्रापीत्यादि । रुषितश्चेति। "**वेषुसह०**" (४।६।८१) इत्यादिना वेट्त्वात् "**न डीश्वी०**" (४।६।९०) इत्यादिना इट्प्रतिषेधे प्राप्ते "**वा रुष्यमत्वर०**" (४।६।९८) इत्यादिना वा इट् । कष्टमिति भविष्यति काले "**क्षुभिवाहि०**" (४।६।९३) इत्यादिना कृच्छ्रार्थे कषेरिडभावः। **'अमृताः'** इति बहुवचनं गणार्थम् । पूर्ववदिति । वर्तमाने इत्यर्थः । न म्रियते इति **अमृतम्।** गणमेवोदाहरति - तथेति । स्निग्ध इति । **'ष्णिह प्रीतौ'** (३।४०)। "मुहद्रुहष्णुहष्णिहां विभाषया" इति वचनाद् हस्य घत्वे "**घढधभेभ्यस्तथोर्धोऽधः**" (३।८।३) इति तस्य धत्वम् । 'शीलितः' इत्यादिना वर्तमानक्तान्तेनापि योगे "**न निष्ठादिषु**" (२।४।४२) इति षष्ठीप्रतिषेधः । देवदत्तेन शीलितः, देवदत्तेन रक्षितः। प्रारम्भोऽपरिसमाप्तिर्वर्तमानः। तत्र च बहवः क्रियाक्षणाः सन्तीति। भूतक्रियाक्षणमाश्रित्यातीते निष्ठा सिद्धा इत्याह - वर्तमान इत्यादि ॥११६६।

[क०-च०]

ञ्यनुबन्ध०। ननु मतिबुद्धिशब्दौ 'बुद्धिर्मनीषा धिषणा धीः' इत्येकपर्यायपठितौ समानार्थौ लक्ष्येते तदनयोरेकोपादानेनैव सिद्धं किमुभयोरुपादानेनेति भेदं प्रतिपादयन्नाह - मतिरिच्छेति । अथ तथापि को भेद इति चेद् उच्यते - ज्ञानमिच्छायाः कारणम् , इच्छा तत्कार्येति । तथाहि आदौ घटज्ञानमुत्पद्यते तदनन्तरं तत्कारणा इच्छा जायते । ततश्च प्रयत्न इति । तथा च ज्ञानेच्छाकृतीनां तुल्यकालेऽविषयत्वादिति भेदः ।

**कश्चिद्** आह - यद्यपीच्छाज्ञानाभेदस्तथापि द्वयोरेवोपादानाद् बोधयति - अन्यत्र ज्ञानार्थस्य ग्रहणेनेच्छार्थस्य न ग्रहणम्, तेन **"ध्रौव्यगतिबुद्धि०"** (कात० परि० - का० १८) इत्यादिसूत्रेण एषयत्यौषधम् आतुरेण भिषक् । बुद्ध्यर्थे आतुरेणेति कर्तरि न तृतीया, भावे कर्मणि कर्तरीति । 'मित्रः, क्ष्विण्णः' इत्यकर्मकलक्षणः कर्तरि क्तप्रत्ययः, 'राज्ञां मतः' इति कर्मणि । ननु कथमिदमुक्तम् अनन्तरत्वात् कर्तरीत्यधिकाराद् वर्तमाने काले कर्तरि क्तप्रत्ययः । न भावकर्मणोरित्यादिना भावे कर्मणि च? सत्यम्, **'इष्टतो ह्यधिकाराणां प्रवृत्तिर्निवृत्तिर्वा'** (चा० परि० पा० ४३) इति न दोषः । अन्यत्रापीति । **"कृत्ययुटोऽन्यत्रापि"** (४।५।९२) इति वचनाद् अपिशब्दो बहुलार्थः। तेन प्रयोगानुसारेण कृतो भवन्तीत्यर्थः । भविष्यन्तीति भविष्यति काले कष्टमिति **पूर्वाचार्या** आहुरित्यर्थः। अत्राप्यपिरेव कारणम् । सुप्त इति । **'ञि ष्वप् शये'** (२।३२)। ननु ञ्यनुबन्धत्वात् सूत्रद्वारेणैव सिद्धो वर्तमाने क्तस्तत्कथम् अमृतादौ पठ्यते तथाकान्त इत्यपि इच्छार्थद्वारेणैव सिद्धम् ? सत्यम्, वर्तमानाधिकरणयोः सौत्र इत्यनेन सूत्रद्वारेण विहिते क्ते षष्ठी भवतीति वक्तव्यद्वारेण विहिते न भवति । अस्यापि यदा सूत्रद्वारेण क्तस्तदा षष्ठी । यथा 'ओदनपाकं सुप्तो देवदत्तस्य ओदनपाकस्य सुप्तो देवदत्तः' इति वक्तव्येन क्तस्तदा न स्यात् । यथा 'ओदनपाकं सुप्तो देवदत्तः' इति ओदनपाकः सुप्तो देवदत्तेनेत्येतदर्थम् अमृतादौ पठ्यते कालाध्वभावदेशानामकर्मकैर्योगे कर्मत्वमिति कर्मणि क्तः। स्निग्ध इति, रधादित्वादनिट्त्वम् । वर्तमान इत्येतदुक्तं भवति प्रारम्भोऽपरिसमाप्तिर्वर्तमानस्तत्र बहवः क्रियाक्षणाः सन्ति । अनागतोऽतिक्रान्तः साम्प्रतिकश्च। एषु मध्येऽतिक्रान्तं क्रियाक्षणं समुदाये वर्तमानेऽध्यारोप्य निष्ठेत्यनेनैव सिद्धः किमनेनेति भावः।

अतीतविहितेति **पञ्जी**। ननु ञ्यनुबन्धादिभ्यो वर्तमानोक्तेन क्तेनातीतक्तस्य बाधनात् त्वया मतः, मया ज्ञातमित्यनिष्टं स्यात् , तत् कथमेवमुक्तम् । नैवम् , असमानविषयत्वात् कथं बाध्यबाधकभावः , तेन तु अतीतेऽनेन वर्तमान इति न समानविषयता । अत एव प्रयोगोऽपि दृश्यते - **'वसामोऽविदिताः परैः'** इति **महाभारते, 'स पुण्यकर्मा भुवि पूजितो नृपैः'** इति **सुश्रुतस्य, 'पूर्वैः प्रहरणमष्टाविधं मतम्'** इति वात्स्यायनस्य, ननु **'जनाविदितैर्भवद्व्यलीकैः'** इति माघस्य,

'जनैरविदितविभवो भवानीपतिः' इति भारवेश्च । अत्र यदि वर्तमाने क्तः स्यात् तदा कर्तरि षष्ठी स्यात् ततश्च प्रतिपदविहितायाः षष्ठ्याः समासो नास्तीति ॥११६६।

[समीक्षा]

'धृष्टः, राज्ञां मतः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क्त' प्रत्यय का विधान किया गया है । पाणिनि के दो सूत्र हैं -. ''ञीतः क्तः, मतिबुद्धिपूजार्थेभ्यश्च'' (अ० ३।२।१८७,१८८)। इस प्रकार पाणिनीय सूत्रद्वयप्रयुक्त गौरव को छोड़कर अन्य प्रकार की तो उभयत्र समानता ही है ।

[रूपसिद्धि]

१ - ८. मिन्नः। ञि मिदा + क्त + सि । क्ष्विण्णः। ञि क्ष्विदा + क्त + सि । राज्ञां मतः। मन् + क्त + सि । राज्ञामिष्टः। इषु + क्त + सि । राज्ञां बुद्धः। बुध् + क्त + सि । राज्ञां ज्ञातः। ज्ञा + क्त + सि । राज्ञां पूजितः। पूज् + क्त + सि । राज्ञामर्चितः। अर्च् + क्त + सि । 'ञि मिदा' इत्यादि ८ धातुओं से 'क्त' प्रत्यय तथा विभक्तिकार्य ॥११६६।

## ११६७. उणादयो भूतेऽपि [४।४।६७]

[सूत्रार्थ]

'उण् ' इत्यादि प्रत्यय वर्तमान तथा भूत अर्थ में भी साधु माने जाते हैं ॥११६७।

[दु० वृ०]

उणादयः प्रत्यया वर्तमाने भूतेऽपि साधवो भवन्ति । केचिद् वर्तमाने - करोतीति कारुः। एवं वातीति वायुः। केचिद् भूते - वृत्तं तदिति वर्त्म। भसितं तदिति भस्म। प्रकृतिप्रत्ययावगमो व्युत्पत्तावपि रूढित एव ॥११६७।

[दु० टी०]

उणा०। ''कृवापाजिमिस्वदिसाध्यशुसनिजनिदृचरिचटिभ्य उण्'' (कात० उ० १।१) इत्यारभ्य येऽभिव्यक्तास्ते उणादयः । भूतशब्दोऽयमतीतार्थः । स्वरूपार्थे तूपपदं स्यात् । ननु च भूतशब्दोऽयमनेकार्थवृत्तिः, यथा 'आत्मवत् सर्वभूतेषु' इति प्राणिवचनः, 'मातृभूतः, पितृभूतः' इत्युपमानवचनः, 'चत्वारि मत्वा भूतानि' इति पृथिव्यादिवचनः, 'प्रमाणभूतः' इत्युत्पत्तिवचनः, 'भूतगृहीतः' इति प्राणिविशेषवचनः । प्राणाद्यर्थो हि भूतशब्दः कर्तृविशेषणं स्यात् , स च यथाभिधानं दृश्यते । तस्माद् भूतेऽतीतेऽर्थे वर्तमानाद् धातोरिति स्थितम् ।

रूढिव्यवस्थां दर्शयति - केचिदित्यादि । यदि तावद् रूढिव्यवस्था किमर्थं तर्हि सूत्रमिति मन्दधियां सुखार्थमिति। प्रकृतीत्यादि । अभियुक्तैरपि न च प्रकृतयः सर्वाः संगृहीता नापि प्रत्यया इति । तथा बाहुरिति वहेरुण् दृश्यते उक्तं च -

**सञ्ज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।**
**कार्यैर्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ।।**

संज्ञाशब्दा ये लोकप्रयोगास्तेषामनुमाने नावगतिरिति । कार्यैर्विद्यादनूबन्धमिति-

**नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ।**
**यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ।।**

इति निरुक्तकारो 'नाम' इति शब्दानपि धातोर्निर्णीतान् मन्यते, तदेतद् व्याकरणाचार्याणामभिप्रायो न भवतीत्यत आह-शकटस्याचार्यस्य तोकमपत्यं शाकटायनो वैयाकरणो नाम धातुजमेव मन्यते, यच्च पदार्थविशेषेण न समुत्थितम्, यस्य प्रकृतिप्रत्ययौ न विहितौ तस्यापि प्रकृतिप्रत्यायावुन्नेतव्यावन्यत्र दर्शनादिति । उणादय इति । इहाव्युत्पन्ना एवेति दर्शनं मतान्तरेण सूत्रमिति भावः ।।११६७।

**[वि० प०]**

उणा०। केचिदित्यादि । **''कृवापाजिमिस्वदिसाध्यशूदृसनिजनिचरिचटिभ्य उण्''** (कात० उ० १।१)। एवं पायुः, जायुः, मायुः, स्वादुरित्यादि । उणो णानुबन्धत्वादिज्वद्भावे वृद्धिरादेशः । वर्त्म, भस्मेति । सर्वधातुभ्यो मन् । प्रकृत्यादि । व्युत्पत्तिपक्षेऽपि रूढिमाश्रित्य प्रकृतिप्रत्ययाववगन्तव्याविति । एतदुक्तं भवति। औणादिका हि संज्ञाशब्दास्ते चान्तरेणैव व्युत्पत्तिं लोके विशिष्टविषयतया प्रसिद्धा इति। नेह तेषां व्युत्पत्तिः क्रियते, न च ते शक्या व्युत्पादयितुम्, यदृच्छाशब्दानामनन्तत्वात्। अत एवेदं मतान्तरेण सूत्रान्तरं प्रणीतम्। येऽप्यमीषां व्युत्पत्तिमाद्रियन्ते न तैरपि साकल्येन प्रकृत्यादयो दर्शिताः, अशक्यत्वात्। अतस्तेऽपि रूढिमेव प्रतिपन्नाः इति भावः। वहेरनुक्तोऽप्युण् प्रत्ययो दृश्यते - बाहुरिति । तदुक्तम् -

**नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ।**
**यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ।।**

**अस्यार्थः-** निरुक्तकारः स्वस्मिन् शास्त्रे निरुक्ते नाम च धातुजमाह - चकारो भिन्नक्रमेऽवधारणे वा लिङ्गशब्दान् धातोरेव जातानाह - न केवलं स्वशास्त्रे निरुक्तकार एवमाह - शकटस्य च तोकमपत्यं शाकटायनोऽप्याचार्यो व्याकरणे नाम च धातुजमेवाह- यत् पुनरप्रतिपादितप्रकृतिप्रत्ययविशेषरूपं तस्य कथं धातुजत्वं निश्चेतव्यमित्याह- यन्नेति। प्रकृत्यादिः पदार्थ उच्यते। पदमर्थः प्रयोजनमस्येति कृत्वा स हि पदसिद्ध्यर्थमुपादीयते। पदार्थस्य विशेषः पदार्थविशेषः समुत्थानं समुत्थं स्थास्नापिबतिव्यधिहनिभ्यः कः स्यादिति वक्ष्यमाणवचनात् कप्रत्ययः। पदार्थविशेषात् समुत्थं प्रादुर्भावो यस्य तत् तथोक्तम्, यन्नैवंविधमिति। एतदुक्तं भवति। यदप्रतिपदातिप्रकृतिप्रत्यय-विशेषमनासादितात्मनिष्पत्तिकं शब्दरूपं तस्यापि धातुजत्वमूह्यम् ऊहनद्वारेण विज्ञातव्यम्, प्रत्ययात् प्रकृतेश्चेति। ऊहश्चायं क्वचिदपि तु लोकप्रसिद्धेषु सञ्ज्ञाशब्देषु प्रकृतिप्रत्ययकल्पनया कर्तव्यः। यथोक्तम् -

**सञ्ज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परम् ।**
**कार्यैर्विद्यादनूबन्धमेतदूह्यमुणादिषु ॥**

कार्यैर्गुणवृद्ध्यादिलक्षणैः अनुबन्धम् अकारादिलक्षणं जानीयादिति ॥११६७।

**[क० च०]**

उणादयः। **परिभाषासूत्रमिदम्,** तथाप्यनिर्दिष्टकालत्वाद् उणादयस्त्रिष्वपि कालेषु स्युरिति अनियमे नियमः क्रियते। न ह्यनेनोणादयो विधीयन्ते इति। 'सञ्ज्ञापूर्वको विधिरनित्यः' (का० परि० ३२) इत्युणादय इति न द्विर्भावः, अत एव निर्देशादित्यन्ये। अतीते वर्तमाने सर्वत्रैवोणादयो न भवन्तीति, किन्तु संज्ञाशब्दत्वात् केचिद् वर्तमाने केचिद् अतीते इत्याह - केचिदित्यादि। सूत्रमिदं न **कात्यायनस्य,** किन्तु मतान्तरस्य **वृत्तिकारेणोपलक्षणार्थमिह लिखितमिति। स्वमते** तु सर्वे एवोणादयोऽव्युत्पन्ना इति। यत् पुनरिति **पञ्जी** अप्रतिपादितः प्रकृतिप्रत्ययविशेषो यस्य शब्दरूपस्येति विग्रहः। अनासादितेति। अनासादिता आत्मनो निष्पत्तिरात्मलाभो यस्य । कुत ऊह्यमित्याह- ऊहनद्वारेणेति। अथासावूहः किं सर्वत्रेत्याह - ऊहश्चायमिति ॥११६७।

**[समीक्षा]**

वर्तमान तथा भूत अर्थ में 'उण्' आदि प्रत्ययों के विधानार्थ दोनों ही व्याकरणों में सूत्र बनाए गए हैं । पाणिनि के दो सूत्र हैं - "उणादयो बहुलम् , भूतेऽपि दृश्यन्ते" (अ० ३।३।१,२)। इस प्रकार कातन्त्रकार ने एक ही सूत्र में दोनों अर्थों का समावेश करके लाघव प्रदर्शित किया है, जबकि दो अर्थों के अभिप्राय से दो सूत्र बनाकर पाणिनि ने गौरव का आश्रय लिया है ।

**[विशेष वचन]**

१. प्रकृतिप्रत्ययावगमो व्युत्पत्तावपि रूढित एव (दु० वृ०)।
२. इहाव्युत्पन्ना एवेति दर्शनम् (दु० टी०)।
३. चकारो भिन्नक्रमेऽवधारणे वा (वि० प०)।
४. स्वमते तु सर्वे एवोणादयोऽव्युत्पन्ना इति (क० च०)।

**[रूपसिद्धि]**

१. **कारुः**। कृ + उण् + सि । करोति । 'डु कृञ् करणे' (७।७) धातु से वर्तमान अर्थ में प्रकृत परिभाषासूत्र के नियमानुसार "कृवापाजि०" (कात० उ०१।१ ) सूत्र द्वारा 'उण्' प्रत्यय, 'ण्' अनुबन्ध का प्रयोगाभाव, इज्वद्भाव, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से ऋकार को वृद्धि तथा विभक्तिकार्य ।

२. **वायुः**। वा + उण् + सि । वाति। 'वा गतिगन्धनयोः' (२।१७) धातु से उण् प्रत्यय, यकारागम तथा विभक्तिकार्य ।

३ - ४. **वर्त्म**। वृत् + मन् + सि । वृत्तं तत् । **भस्म**। भस् + मन् + सि । भसितं तत् । 'वृत् ' तथा 'भस् ' धातु से भूत अर्थ में "सर्वधातुभ्यो मन् " (कात० उ० ४।२८) सूत्र द्वारा 'मन् ' प्रत्यय तथा विभक्तिकार्य ॥११६७।

## ११६८. भविष्यति गम्यादयः [४।४।६८]

[सूत्रार्थ]

'गमी' इत्यादि उणादिप्रत्ययान्त शब्द भविष्यत्काल में साधु होते हैं ।।११६८।

[दु० वृ०]

गमीत्येवमादयः शब्दा औणादिका भविष्यति काले साधवो भवन्ति। गमादिभ्यो भविष्यत्कालवृत्तिभ्य इन् स्यादित्यर्थः । ग्रामं गमी, ग्राममागामी, भावी, स्थायी । श्वस्तनीविषयेऽपि - श्वो ग्रामं गमी । पदार्थश्वस्तने - श्वो ग्रामं गन्तेति प्राप्तम् ।।११६८।

[दु० टी०]

भवि०। श्व इत्यादिपक्षे श्वस्तन्यपि नापवादोऽभिधानात् । संज्ञाविहितत्वाच्चात्र पदार्थोऽत्र भविष्यत्सामान्यम् , स च शास्त्रे कार्याङ्गम्, वाक्यार्थश्च श्वस्तनार्थस्तस्माद् भविष्यत्सामान्यपरिग्रहणे शब्दसंस्कारवति निवृत्ते पश्चात् श्वःशब्द उपनीयते बाह्यरूपं श्वस्तनार्थं बोधयति, स तु विशेषः सामान्ये न विद्यते एव न सामान्यप्रत्ययस्य निवृत्तिः, सामान्योपक्रमविशेषाभिधानमस्तीति श्वःशब्दोऽपि युज्यते । यदा तु विशेष एव पदार्थत्वेन विवक्ष्यते, भवितव्यमेव तदा अपवादेन - श्वो ग्रामं गन्तेति । यस्त्वाह - श्वःशब्दोऽत्र श्वस्तनविषय इति प्रतिपादकः, न त्वसौ शब्दोऽत्र युज्यते इतिं । अतः प्रयोगे निमित्ताभाव इति, तदसत् । एवं 'प्रस्थायी, प्रतिरोधी, प्रयामी' **षडेव गम्यादयः** ।।११६८।

[वि० प०]

भविष्यति०। इन्निति । निरनुबन्धः सामान्येन निर्दिश्यते । आगामीत्यादिषु णिनिरयं प्रत्ययः । तथा च सत्युपधाया दीर्घत्वमायिरादेशो वृद्धिश्च णानुबन्धत्वात् । एवं 'प्रस्थायी, प्रतिरोधी, प्रमादी' **षडेव गम्यादयः**। श्वस्तनीत्यादि । ननु पदार्थश्वस्तने श्वस्तनी भवति । अत्र तु श्वःशब्दसान्निध्याद् वाक्यार्थ एव श्वस्तनः प्रतीयते । तत्कथं श्वस्तनीविषयता ? नैवम् । इहापि पदार्थ एव श्वस्तनः, तदभिद्योतनार्थ एव श्वःशब्दः प्रयुज्यते । अत एवाह - पदार्थ इति । अन्यथा तदेव स्यात् , विशेषविहितत्वात् । श्वस्तन्या इति । तेन पक्षे श्वस्तन्यपि भवति ।।११६८।

[क० च०]

भविष्यति०। इदमपि **परिभाषासूत्रम्**। गम्यादयो ह्यौणादिकाः शब्दाः पूर्वेण वर्तमानेऽतीते च स्युरिति पूर्वस्य बाधकम् । **निर्गलितार्थमाह** - गमादिभ्य इति । ननु इन्निति कथमुक्तम् आगामीत्यादौ णिनिरपि दृश्यते ? सत्यम् । इनिति उत्सृष्टानुबन्धो णिनिरपि गृह्यते । अत एव **पञ्जिकायामुक्तम्** इनीति । श्वस्तनीविषयेऽपीति **वृत्तिः**। ननु श्वःशब्दादत्र श्वस्तनकाल एव प्रतीयते, अतो वाक्यार्थ एवात्र श्वस्तनः, न चात्र श्वस्तनी

विधीयते । तथा च तत्रैवोक्तम् । पदार्थश्वस्तने श्वस्तनी न वाक्यार्थ इति मतम् , तत् कथं श्वस्तन्या विषये इदमुच्यते इत्याह - पदार्थ एव श्वस्तन इति । अत्रापि पदार्थ एव श्वस्तनः इति श्वस्तनीविषयः । अतः श्वो ग्रामं गन्तेति नित्यं प्राप्तमिति तदपवादार्थं पक्षे निपातनबलादिदमुच्यते इति भावः ॥११६८।

[समीक्षा]

'ग्रामं गमी, ग्राममागामी' इत्यादि शब्दरूपों के भविष्यत् अर्थ में सिद्ध्यर्थ दोनों ही व्याकरणों में तदनुकूल समान सूत्र बनाए गए हैं । पाणिनि का सूत्र है - "भविष्यति गम्यादयः" (अ० ३।३।३)। अतः उभयत्र पूर्ण समानता है ।

[रूपसिद्धि]

१. **ग्रामं गमी**। गम्लृ + इन् + सि । गमिष्यति । 'गम्लृ गतौ' (१।२७९) धातु से भविष्यत् अर्थ में प्रकृत परिभाषासूत्र के अनुसार "गमेरिनिः" (कात० उ० ४।४७) से 'इनि' प्रत्यय तथा विभक्तिकार्य ।

२. **ग्राममागामी** । आङ् + गम् + णिन् + सि । आगमिष्यति । 'आङ्' उपसर्गपूर्वक 'गम् ' धातु से "आङि णिनिः" (कात० उ०४।४८) सूत्र द्वारा 'णिनि' प्रत्यय, दीर्घ तथा विभक्तिकार्य ।

३ - ४. **भावी** । भू + णिनि + सि । भविष्यति । **स्थायी** । स्था + यकारागम + णिनि + सि । 'भू - स्था' धातुओं से "भूस्थाभ्यां णिनिः" (कात० उ० ४।४९) सूत्र द्वारा 'णिनि' प्रत्यय तथा विभक्तिकार्य ॥११६८।

## ११६९. वुण्तुमौ क्रियायां क्रियार्थायाम् [४।४।६९]

[सूत्रार्थ]

क्रियार्थक क्रिया के उपपद में रहने पर भविष्यत्कालार्थक धातु से 'वुण् ' तथा 'तुम् ' प्रत्यय होते हैं ॥११६९।

[दु० वृ०]

क्रियायां क्रियार्थायामुपपदे भविष्यत्यर्थे वर्तमानाद् धातोर्वुण्तुमौ भवतः । पाचको व्रजति, पक्तुं व्रजति । पक्ष्यामीति कृत्वा व्रजतीत्यर्थः । क्रियायामिति किम् ? भिक्षिष्ये इत्यस्य जटा । क्रियार्थायामिति किम् ? धातवस्ते पतिष्यति दण्डः । वुण्ग्रहणं तृजादिनिवृत्त्यर्थम् - तुम्भावमेवाभिधत्ते ॥११६९।

[दु० टी०]

वुण् ०। **'कृद्विहितो भावो द्रव्यवत् प्रकाशते'** (व्या० प० पा० १११) इति वद्ग्रहणात् क्रियापि भवतीति । स्नातव्यं भोक्तुं वटुनेति सिद्धम् । अहं भिक्षिष्ये जटा. क्रियार्थो द्रव्यं धातवः इति क्रिया, न तु क्रियार्थो वुण्तृचाविति सिद्धे किमर्थं वुण्ग्रहणम्? भविष्यदर्थमिति चेत् , न । तृजादीनामकालविभागाद् यदा भविष्यति

विधीयते तदाऽस्य भविष्यदर्थता । 'ओदनं पाचको व्रजति' इति भविष्यदर्थेऽके निष्ठादित्वात् षष्ठी प्रतिषिध्यते । अथ भविष्यदधिकारविहितेऽके प्रतिषेधार्थम् , यथा 'पुत्रपौत्राणां प्रदर्शकः' इति षष्ठी सिद्धा भवति । नैवम् , इह पदान्तरसम्बन्धाद् भविष्यत्ता वाक्यार्थो न पदार्थ इति । अव्ययकृतो भावे भवन्तीति तुमर्थभेदादेव न बाधकः कर्तृविहितस्य वुणः शन्त्रानौ स्यसंहितौ शेषे चेति तर्हि बाधकौ स्याताम् , न वाऽसरूपेण समावेशात् तर्हि ज्ञापनार्थं क्रियार्थायां क्रियायामुपपदे न वाऽसरूपविधिरिति। तेन 'पाचको व्रजति, ओदनस्य पक्ता व्रजति, विक्षिपो व्रजति' इति न भवति । एवं मनसिकृत्याह - वुण्ग्रहणमित्यादि । अक्रियार्थोपपदास्त्वेते प्रयोगा भवन्त्येव । पक्ता व्रजति, सूपकारो व्रजतीत्यर्थः । **पदकारस्त्वाह** - नैवायं वुण्समानार्थः स कर्तरि, अयं तु भावे । भोक्तुं व्रजतीत्यनेन समानार्थमिदम् ॥११६९।

[वि० प०]

वुण् ०। भिक्षिष्ये इति । भविष्यन्त्यात्मनेपदस्योत्तमपुरुषैकवचनं मध्ये इडागमः। अस्त्यत्र क्रियार्थोपपदं जटा, तद्युक्तो हि प्रायो भिक्षां सादरं प्राप्नोति, किन्तु न सा क्रिया, अपि तु द्रव्यम् । तथा धावत इति क्रियोपपदमस्ति न तु क्रियार्थम् । दण्डपतनार्थत्वाद् अस्तिक्रियार्थत्वमिति युक्तम् । अर्थशब्दो हि प्रयोजनवाची यच्च यदुद्दिश्य प्रवर्तते तत् तस्य प्रयोजनम् । न चासौ दण्डपतनमुद्दिश्य धावति, अपि तु कार्यान्तरार्थमिति नास्ति धावनस्य क्रियार्थतेति । अथ किमर्थं वुण्ग्रहणं वुण्तृचाविति सिद्धमेव ? भविष्यति यथा स्यादिति चेत् , नैवम् । सोऽप्यनिर्दिष्टकालत्वाद् भविष्यतीति केन निवार्यते । एतेन 'ओदनं पाचको व्रजति' भविष्यति विहितस्याकस्य निष्ठादिपाठे षष्ठीप्रतिषेधोऽप्युपपद्यते ।

अथ भविष्यदधिकारविहितेऽके षष्ठीप्रतिषेधो यदि स्यादिह मा भूत् - 'पुत्रपौत्रस्य दर्शकः, वर्षशतस्य पूरकः' इति, तदयुक्तम् । इह पदान्तराद् भविष्यत्ता गम्यते। अतोऽसौ वाक्यार्थो बहिरङ्ग इति पदार्थान्तरङ्गे भविष्यति षष्ठी प्रतिषिध्यमाना 'ओदनं पाचको व्रजति' इत्यादिष्वेव प्रतिषिध्यते। ननु कथमिह सामान्यविहितस्य वुणोऽवकाशः? यावता **"शन्त्रानौ स्यसंहितौ शेषे च"** (४।४।७२) इत्यपवादेन तस्य बाधा स्यात् ? सत्यम् , वासरूपविधिना भविष्यति । एवं तर्हि तृजादयोऽपि स्युरित्याह-वुणित्यादि । वुण्ग्रहणं ज्ञापयति - नेह प्रकरणे वाऽसरूपविधिरस्तीति । तेन 'पक्ता व्रजति, विक्षिपो व्रजति' इति क्रियायां क्रियार्थायामुपपदे न भविष्यतीति सिद्धम्। विक्षिप इति। नाम्युपधलक्षणः कप्रत्ययः। इदं च न वक्तव्यमेव तुमा विशेषविहितेन वुणो बाधा स्यादिति भिन्नार्थत्वाद् वुण् कर्तरि, तुम् भावे, अव्ययकृत्त्वादेतदेवाह - तुम्भावमेवेति ॥११६९।

[क० च०]

वुण्०। क्रियैवार्थः प्रयोजनमस्येति विग्रहः । **धात्वर्थः** क्रिया तस्या उपपदत्वं न

सम्भवतीति । अर्थात् तद्वाचकभूप्रभृतावुपपदे इत्यर्थः । भिक्षिष्ये इति कथमेतत्, अहं भिक्षिष्ये इति कृत्वाऽस्य जटा इति ? सत्यम् । **अयमर्थः** - यस्य देवदत्तस्य जटास्ति तेनोच्यते - अहं भिक्षिष्ये इति कृत्वा देवदत्तसम्बन्धिनो वाक्यस्यानुवादोऽयमेवं पक्ष्यामीत्यादावपि । धावत इति । नन्वत्र प्रत्यासत्तिन्यायादन्तरङ्गसम्बन्धाच्च यत्र प्रकृतिभूता क्रिया उपपदक्रिया चैककर्तृनिष्पाद्या तत्रैवास्य विषयः । अत्र तु भिन्नकर्तृकत्वात् कथं प्राप्तिरिति द्व्यङ्गविकलमिदं प्रत्युदाहरणमिति ? सत्यम् , नात्र धावनक्रियोपपदभूता, किन्तु अध्याहृता स्थितिक्रिया । धावतस्ते स्थितो दण्डः पतिष्यतीत्यर्थ इति **कश्चित्**। तदसत् , न चासौ पतनमुद्दिश्य धावतीति **पञ्जिका**ग्रन्थासङ्गतेः।

**वस्तुतस्तु** धावन् स्खलिष्यतीति धावतः स्खलनमिति प्रत्युदाहरणं बोध्यम्। धावतस्तु इति। तदर्थं क्रियमाणम् एतदपि विषयीकरोतीति न्यायादुक्तमिति **गुरवः**। **केचिद्** आहुः - भिन्नकर्तृकायामपि स्यात्। तथा च प्रयोगः कंसं हन्तुं नारायणं कथकः प्रयुङ्क्ते, होमं कर्तुं भवन्तमहं वृणे, तथा प्रभुणा भोक्तुं मांसं क्रीणन्तीत्यादि। सागरोऽपि "**इच्छार्थ०**" (४।५।१०६) इत्यादिसूत्रे तदेव वक्ष्यति। **कश्चिद्** आह - एककर्तृक एव विधिरत्र, कंसं हन्तुमित्यादौ तु स्थितिपदाध्याहारेणान्वयः। विशेषस्तु "**इच्छार्थेषु०**" (४।५।१०६) इत्यत्र वक्ष्यामः। अथ **पञ्जिका** - वुण् इति। न वुणि तुमर्थ इति षष्ठी निषिद्धा, सा यथा स्यादिति वुण्ग्रहणं वाच्यम्। नैवम् , इत्याह - एतेनेति। इह मा भूदिति। अत्रानिर्दिष्टकालत्वादेव भविष्यत्त्वप्रतीतिर्न त्वधिकारादिति भावः। इह पदान्तरादिति। ननु किं प्रमाणम्, अत्र पदान्तराद् गम्यते, अत्र पदादिति? सत्यम्। स्वभावादिति **ऋजवः**। आशंसाप्रधानोऽयं **वाक्यार्थः** पुत्रपौत्रस्य दर्शको भूयात्, वर्षशतस्य पूरको भूयादिति गम्यमानाद् भूयादिति पदान्तरात् प्रतीयते इति **गुरवः**। पुत्रपौत्रास्ते भूयासुः, वर्षशतमायुस्तव भूयादित्याशंसापरमिदं वाक्यम्। अतो भाविपुत्रपौत्रापेक्षया भाविशतवर्षापेक्षया च दर्शनस्य भविष्यत्ता प्रतीयते इति पदान्तरापेक्षया भविष्यत्ताप्रतीतेरिति गम्यते ।

विशेषविहितेनेति। तुमेति कथं कर्तरि तृतीया कर्तर्यनञ्वुञीति प्रतिषेधाद् उभयत्रापि षष्ठीप्रसङ्गात्। यथा चिकीर्षा पुण्यानां सताम् , भिदा तमसामर्कस्य। न च वा भावे स्त्रियामिति वाच्यम्, तस्य शेषे कृति विषयत्वात्? सत्यम्, करणे इयं तृतीया, ग्रन्थकारस्येति। कर्तुरिति। यद् वा वुण इति शैषिकी षष्ठी क्रियायामिति **हेमः**। स्त्रीलिङ्गनिर्देशबलात् क्रियायामिति लभ्यते इति भावः। ननु वुण्ग्रहणाद् वासरूपविधिर्नास्तीति किमनेन ज्ञापकेनेति क्तयुट्तुम्खलर्थेषु वासरूपविधिर्नास्तीति भावः। अत्र **ऋजवः** क्तयुटोः प्रकरणे पठितस्यैव तुमो ग्रहणं तत्र। अयं तु भिन्नप्रकरणविहितः। अत एवेच्छामि भुञ्जीतवानित्यत्र इषधातुप्रयोग एव दर्शितः इत्याहुः। **वस्तुतस्तु** तुम् भावे वुण् कर्तरीति कथमनयोर्वासरूपविधेः सम्भवः, समानविषयत्वाभावात्। यत्तु तत्र भुञ्जीतेति कर्तरि दर्शितम् , तदर्थं क्रियमाणमेतदपि विषयीकरोतीति न्यायादुक्तमिति भावः। तत्र वासरूपोऽस्त्रियामित्यत्र ॥११६९।

[समीक्षा]

'भोक्तुं व्रजति, भोजको व्रजति' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'तुम्-वुण्' प्रत्यय तथा पाणिनि ने 'तुमुन् - ण्वुल् ' प्रत्यय किए हैं । यहाँ स्वरविधानार्थ किए गए पाणिनीय 'ल् - न् ' अनुबन्धों को छोड़कर अन्य प्राय: समानता ही है। पाणिनि का सूत्र है - "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् " (अ० ३।३।१०)।

[रूपसिद्धि]

१. **पाचको** व्रजति । पच् + वुण् - अक + सि । पक्ष्यति । 'डु पचष् पाके' (१।६०३) धातु से प्रकृत सूत्र द्वारा 'वुण् ' प्रत्यय, "युवुझामनाकान्ता:" (४।६।५४) से 'वु' को 'अक' आदेश, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से दीर्घ तथा विभक्तिकार्य ।

२. **पक्तुं** व्रजति। पच् + तुमुन् + सि । 'डु पचष् पाके' (१।६०३) धातु से प्रकृत सूत्र द्वारा 'तुम् ' प्रत्यय, "चवर्गस्य किरसवर्णे" (३।६।५५) से चकार को ककार, लिङ्गसञ्ज्ञा, सि - प्रत्यय, अव्ययसंज्ञा तथा "अव्ययाच्च" (२।४।४) से 'सि' प्रत्यय का लुक् ॥११६९।

## ११७०. भाववाचिनश्च [४।४।७०]

[सूत्रार्थ]

क्रियार्थक क्रिया के उपपद में रहने पर भविष्यत्काल अर्थ में वर्तमान धातु से भावविहित प्रत्यय होते हैं ॥११७०।

[दु० वृ०]

क्रियायां क्रियार्थायामुपपदे भविष्यदर्थे वर्तमानाद् धातोर्भाववाचिनश्च प्रत्यया भवन्ति । पाकाय व्रजति, पक्तये व्रजति, पचनाय व्रजति । तुमि नित्ये प्राप्ते वचनम्। वासरूपविधिरत्र नास्तीति ॥११७०।

[दु० टी०]

भाव०। भाववाचिना यथाभिधानमिति परो यथाभिधानमेषां भावे एवं क्रियार्थोपपदेनेति वक्तव्यम् , भावाभिधायित्वाद् भाव इत्यास्ताम् , भाव इति सप्तम्यां वा तत्रैवमिति संबन्ध: क्रियते । भावे ये विहिता: प्रत्ययास्त इह भवन्तीति यदाह-भावं वक्तुं शीलमेषां ते भाववाचिनोऽपरित्यक्तोपसर्गलिङ्गविशेषा इति साङ्कर्यदोषो न वर्तते ॥११७०।

[वि० प०]

भाव०। भावं वक्तुं शीलमेषां ते **भाववाचिन:**, ये भावविहिता घञादयस्ते प्रत्यया इत्यर्थ: । ननु वाचिग्रहणं किमर्थम् ? भाव इत्युच्यताम् , भावे ये विहिता: प्रत्ययास्त इह क्रियायां क्रियार्थायामुपपदे भवन्तीति ? सत्यमेतत् , किन्तु येभ्यो धातुभ्यो येन

विशेषणेन लिङ्गादिना विहिता घञादयस्तेभ्यस्तेनैव यथा स्युरिति वाचिग्रहणम्। अन्यथेह विशेषानुपादानाद् धातुमात्राद् अविशेषणेनैव ते भवेयुरिति । पाकायेत्यादि। **"तुमर्थाच्च भाववाचिनः"** (२।४।२८) इति चतुर्थी । तुमीत्यादि । ननु वासरूपेण भाववाचिनोऽपि भविष्यन्तीत्याह - वासरूप इति । तथा चानन्तरसूत्रे वुण्ग्रहणेन ज्ञापितमिति ।।११७०।

[क० च०]

भाव०। भाव इत्युच्यतामिति पञ्जी। नन्वेवं कृतेऽधिकृतत्वाद् भावे वुण् भवतीत्यर्थः कथन्न स्यात् ? नैवम् , तदा पूर्वत्रैव भावे चेति कुर्यात् , चकारात् कर्तर्यपि, तथापि कथं घञादयो निश्चिताः ? सत्यम् , अर्थवशाद् भावे कृत्प्रत्ययो भवन् प्रत्यासत्त्या भावे विहितघञादिरेव भविष्यति । अथवा भाव इति प्रथमैकवचनं कर्तव्यमिति **त्रिलोचनाशयः**। ततश्च भावविहितकृत्प्रत्ययो भाव इत्युपचारात् । तथा च **टीकायामुक्तम्** - भाव इत्यास्तामिति लिङ्गादिनेति । लिङ्गं स्त्रीत्वादि । आदिशब्देनोपसर्गानुसर्गावुच्येते इति शेषः। अन्यथेति । वाचिग्रहणं विना पुंस्यपि क्तिः स्यात् , स्त्रियामपि घञ् स्यात्। संरावाय व्रजतीति उपसर्गेऽपि घञ् स्यात् । भावाय व्रजतीत्यनुपसर्गेऽपि घञ् स्यादित्यर्थः। **"उपसर्गे रुवः"** (४।५।७) इत्यनेनोपसर्गे एव रौतेर्घञ् इत्युक्तेः । तथा श्रिनीभूभ्योऽनुपसर्ग एव भवतेरिति कुतोऽन्यत्र प्रसङ्गः । अत्रापि यस्य यदुक्तं तस्य तदेवोच्यते, तदा **सुखार्थम्** ।।११७०।

[समीक्षा०]

'पाकाय व्रजति' इत्यादि शब्दरूपों को भविष्यदर्थ में सिद्ध करने के लिए दोनों ही आचार्यों ने सूत्र बनाए हैं । पाणिनि का सूत्र है-"भाववचनाश्च" (अ० ३।३।११)। अत: उभयत्र समानता है ।

[रूपसिद्धि]

१. **पाकाय** व्रजति। पच् + घञ् + ङे । 'डु पचष् पाके' (१।६०३) धातु से घञ् प्रत्यय, अकार को दीर्घ, चकार को ककार तथा विभक्तिकार्य ।

२. **पक्तये** व्रजति । पच् + क्ति + ङे । 'पच् ' धातु से क्तिन् , चकार को ककार तथा विभक्तिकार्य ।

३. **पचनाय** व्रजति । पच् + ल्यु + ङे । 'पच् ' धातु से 'ल्यु' प्रत्यय, 'यु' को 'अन' आदेश तथा विभक्तिकार्य ।। ११७० ।

## ११७१. कर्मणि चाण् [४।४।७१]

[सूत्रार्थ]

क्रियार्थक क्रिया तथा कर्म कारक के उपपद में रहने पर भविष्यदर्थक धातु से अण् प्रत्यय होता है ।। ११७१ ।

[दु० वृ०]

क्रियायां क्रियार्थायामुपपदे कर्मणि च भविष्यत्यर्थे वर्तमानाद् धातोश्चाण् भवति। काण्डलावो व्रजति, गोदायो व्रजति , गोसंदायो व्रजति, सामगायो व्रजति, सुरापायो व्रजति।।११७१।

[दु० टी०]

कर्मणि० । सामान्याणि सिद्धे पुनर्वचनं क्रियायामुपपदे क्रियार्थायां वुण्बाधनार्थमणपवादाः कादयः परत्वेनाणा बाध्यन्ते इत्याह-गोदायो व्रजतीत्यादि । अथ किमर्थश्चकारः क्रियायां क्रियार्थायामिति वचनादनुवर्तिष्यते । केवले हि कर्मणि भविष्यत्यपि तेनैवाणः सिद्धत्वान्न पर्यायप्रसङ्गस्तर्हि कुम्भकारो व्रजतीत्युपपदसमासो न स्यात् , प्रत्येकमुपपदसञ्ज्ञाभावात् ।। ११७१ ।

[वि० प०]

कर्मणि । "**कर्मण्यण्** " (४।३।१) इति सामान्येनाण् विहितः। क्रियायां क्रियार्थायामुपपदे विशेषविहितेन वुणा बाधितो न स्याद् इति पुनरण् विधीयते, सोऽप्यपवादत्वाद् वुणं बाधते, तथा येऽपि सामान्यविहितस्याणोऽपवादभूताः कादयः प्रत्ययाः, तद्विषयेऽपि परत्वादयमणित्याह- गोदाय इत्यादि। "**आतोऽनुपसंगात् कः, समि ख्यः, गष्टक् , सुरासीध्वोः पिबतेः**" (४।३।४, ८,९,१०) इत्येते न भवन्ति ।। ११७१ ।

[क० च०]

कर्मणि० ।चकारात् क्रियायां क्रियार्थायामिति स्वातन्त्र्येणानुवर्तते यद्यपि, तथापि युगपदेकोपपदत्वम् , न स्वतन्त्रत्वेन, कर्मग्रहणानर्थक्यप्रसङ्गात् । केवले कर्मणि अण् सिद्ध एव तर्हि चकारो व्यर्थः कर्मग्रहणादेव क्रियार्थक्रियोपपदे भविष्यति । अन्यथा केवले कर्मणि सिद्ध एव? सत्यम् , प्रत्येकमुभयोरुपपदसंज्ञार्थश्चकारः, अन्यथा द्वयोरुपपदत्वे कर्मभूतेन नाम्ना सह समासो न स्यात् , तस्य स्वतन्त्रोपपदत्वाभावात् । चकारे सत्येकयोगे क्रियायां क्रियार्थायामुपपदे कर्मणि चेत्युक्ते सर्वमनवद्यमिति टीकायामुक्तम्, तर्हि कथं कटं कारको व्रजतीति विशेषत्वादेवास्य विषय इति न देश्यम् । नन्वत्र कर्मोपपदे वुण् कृतः किं तर्हि पश्चात् कर्मविवक्षा । यदि तु कर्मण उपपदत्वम्, तदा टीकाकारेणातीते घटकारो व्रजतीत्येवं स्यात् ।। ११७१ ।

[समीक्षा]

"काण्डलावो व्रजति' इत्यादि शब्दरूपों के सिद्ध्यर्थ भविष्य अर्थ में 'अण् ' प्रत्यय के विधान-हेतु दोनों ही आचार्यों ने सूत्र बनाए हैं । पाणिनि का सूत्र है- "अण् कर्मणि च " (अ० ३।३।१२) । व्याख्याकारों ने इस सूत्र को बनाने का प्रयोजन स्पष्ट किया है । इस प्रकार उभयत्र समानता ही है।

[रूपसिद्धि]

१-५. **काण्डलावो व्रजति** । काण्ड + लू + अण् + सि । **गोदायो व्रजति**। गो + दा+ अण् + सि । **गोसंदायो व्रजति** । गो + सम् + दा + अण् + सि । **सामगायो व्रजति** । सामन् + गा + अण् + सि । **सुरापायो व्रजति** । सुरा + पा + अण् + सि। 'काण्ड' आदि कर्म कारक के उपपद में रहने पर 'लू' आदि धातुओं से 'अण् ' प्रत्यय तथा विभक्तिकार्य।।११७१।

## ११७२. शन्त्रानौ स्यसंहितौ शेषे च [४।४।७२]

[सूत्रार्थ]

क्रियार्थक क्रिया तथा कर्म के उपपद में रहने पर अथवा उपपद के न रहने पर भी भविष्यत् अर्थ में वर्तमान धातु से 'स्य' के साथ 'शन्तृङ्' एवं 'आनश्' प्रत्यय होते हैं।।११७२।

[दु० वृ०]

शन्तृङ्सहचरित आन इह गृह्यते । क्रियायां क्रियार्थायां कर्मणि चोपपदे शेषे च भविष्यदर्थे वर्तमानाद् धातोः शन्तृङानशौ स्येन संहितौ भवतः । करिष्यन् व्रजति, करिष्यमाणो व्रजति । कटं करिष्यन् व्रजति, कटं करिष्यमाणो व्रजति। शेषे च- करिष्यन्, करिष्यमाणः, हे करिष्यन् ! हे करिष्यमाण ! ॥ ११७२ ।

**।। इत्याचार्यदुर्गसिंहप्रणीतायां कातन्त्रवृत्तौ चतुर्थे कृत्प्रत्ययाध्याये चतुर्थः क्वन्सुकानपादः समाप्तः।।**



[दु० टी०]

शन्त्रानौ०। कानशानङावुत्सृष्टानुबन्धौ, तयोरिह न ग्रहणमित्याह-शन्तृङित्यादि। शेष इहान्यवचनः, यथा शेषाः कर्मकरणेत्यत्र । न चोपपदं किन्तर्हि क्रियोपपदाद् भविष्यतोऽन्योऽभविष्यन् शेषस्तत्राप्येतौ शन्त्रानौ स्यसंहितावित्यर्थः । चशब्देनात्र समुच्चयः क्रियते क्रियायामुपपदे क्रियार्थायां भवतः, शेषे चेति वाक्यद्वयं योगविभागेनापि सिध्यति, चकारः सुखावबोधार्थः। 'शन्त्रानौ स्यात्' इति सिद्धे संहिताग्रहणमाभ्यां तुल्यकक्षार्थं स्याद्- अप्रथमैकाधिकरणेष्विति ॥११७२।

**।। इत्याचार्यदुर्गसिंहप्रणीतायां कातन्त्रवृत्तिटीकायां चतुर्थे कृत्प्रत्ययाध्याये चतुर्थः क्वन्सुकानपादः समाप्तः ।।**



[वि० प०]

शन्त्रानौ० । कानशानङोरप्युत्सृष्टानुबन्ध आनोऽस्ति, स कथन्न गृह्यते इत्याह- शन्तृङ् इत्यादि । 'स्यादि' इति सिद्धे संहिताग्रहणं शन्तृङानशाभ्यां स्यशब्दस्य तुल्यसम्बन्धार्थम् । तेनानेनापि अप्रथमैकाधिकरणादिषु स्यसंहितौ शन्तृङानशौ भवतः।। प्रथमैकाधिकरणेऽपि क्वचित् तत्र नञा निर्दिष्टस्यानित्यत्वात् ॥११७२।

**।। इति श्रीमत्त्रिलोचनदासकृतायां कातन्त्रवृत्तिपञ्जिकायां चतुर्थे कृत्प्रत्ययाध्याये चतुर्थः क्वन्सुकानपादः समाप्तः।।**



[क० च०]

शन्त्रानौ० । वर्तमाने शन्तृङित्यादिना यावेतौ शन्त्रानौ तावेव भविष्यतः, स्येन संहितौ भवत इति, न तु अन्यौ स्वतन्त्रौ विधीयेते । तेनाप्रथमैकाधिकरणे एव प्राय एतौ भवतः। नञोऽनित्यत्वादिह लक्ष्यानुसारेणैव प्रथमैकाधिकरणे, अन्यथैतन्न लभ्यते। तथा यदि स्वतन्त्रावेतौ स्याताम्, तदा कर्मोपपदे कटं करिष्यन् व्रजतीत्युपपदसमासेऽनिष्टं स्यात्। स्थितौ तु न भवति। वर्तमाने इत्यादिना विहितयोः शन्तृङानशोरिति स्येन शब्देन साहित्यं क्रियते न तु तौ विधीयेते । न च कर्मोपपदत्वमस्ति, अत एव कर्म करिष्यन् व्रजतीति उदाहृतम्। यद् वृत्तौ उपपदमित्युक्तं तदप्युपोच्चारि पदमित्यर्थः, न तूपकारि पदमिति ।

अथ स्वतन्त्रप्रत्ययाभावे किं प्रमाणं चेदुच्यते- शकारकरणबलात्, अन्यथा स्यशब्देन व्यवधानेनैव सार्वधातुकवत् कार्यं न भविष्यति किं शकारानुबन्धेनेति? तस्माच्छकारो बोधयति - शन्तृङिति स्वतन्त्रः । तत्साहचर्यादानोऽपि न स्वतन्त्रः, किन्तु पूर्वोक्त एव, तर्हि उक्तशानङ्कानयोरप्यानो विद्यते तस्यापि- ग्रहणं स्यादित्याह - शन्तृङिति । शेषशब्दोऽन्यार्थः, यत्र शेषाः कर्मकरणेत्यादौ, तद्विशेषः उक्तापेक्षयाऽन्यः, ततश्चातीतोऽप्यन्यो भविष्यति, तस्मिन्नपि स्यात् । नैवम् , कर्मक्रियोपपदे भविष्यतोऽन्यः कर्मक्रियोपपदयोरन्यत्वे सति यः केवलो भविष्यन्नित्यर्थो विशेषणान्यत्वमेव गम्यते । यथा लोहिताद् गोरन्यमानयेत्युक्ते वर्णान्तरविशिष्टो गौरेवानीयते । तथा च "अन्यस्माल्लुक्" (२।४।३) इत्यकारान्ताद् योऽन्योऽव्ययीभाव इति । एतेन शेषे केवले भविष्यतीत्यर्थः, नात्र युगपदुपपदत्वं कारणाभावात् । पूर्वत्र तु कर्मग्रहणादुक्तम् , तत्राह - करिष्यन्निति क्रियोपपदे इदमुदाहरणम्, आनश्च क्रियापेक्षायामित्यनेनैव शन्तृङानशौ । शेषे चेत्यस्य मूलोदाहरणम् -करिष्यन्तं व्रजतीति । क्रियोपपदमस्तीति वाच्यम् , तदपेक्षाया अनभिधानात् करिष्यन्निति प्रथमैकाधिकरणे यदुक्तं तन्नञा निर्दिष्टमनित्यमिति न्यायात् तदर्थं क्रियमाणमेतदपि विषयीकरोतीति हेमः।

स्यादीति पञ्जी। ननु स्यादीत्युक्तम् - आदिशब्दोऽवयवार्थ इत्यवयवत्वेना-व्यवधानात् करिष्यन्नित्यादौ इडभावे विकरणश्च स्यात् , तदा शकारकरणादेव न स्वतन्त्राविति यदुक्तं तदपि निरस्तम् , शकारस्य सार्वधातुकवत् कार्यत्वात् । नैवम्, आदिशब्दोऽयं समीपवचनः इति नावयवार्थः शन्तृङानशोरिति । तेनेडभावेन शकारस्य कार्यान्तरत्वात् । अथ शकारग्रहणादेव शन्तृङानशोर्ग्रहणादेतल्लभ्यते किं संहिताग्रहणेन? सत्यम् , सुखार्थम्। दुःखं पुनरेतद् आदिशब्दोऽयं समीपवचनोऽवयववचनो वेत्यत्रापि "भविष्यति भविष्यन्त्याशीः" (३।१।१५) इति ज्ञापकमूह्यमिति । साहित्यं परेणापि घटते इति कथं पूर्वेणैवेति निश्चयः इति पक्षे स्थितावपि इदं ज्ञापकमिति चेत् तथापि वैचित्र्यार्थम् ॥ ११७२ ।

।। इत्याचार्यसुषेणविद्याभूषणकविराजविरचिते कलापचन्द्रे चतुर्थे कृत्प्रत्ययाध्याये चतुर्थः कवन्सुपादः समाप्तः ।।



[समीक्षा]

'करिष्यन् व्रजति, करिष्यमाणो व्रजति' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'स्य' सहित 'शन्तृङ् - आन' प्रत्यय किए हैं, जब कि पाणिनि "स्यतासी लृलुटो:" (अ० ३।१।३३ ) से 'स्य' प्रत्यय तथा "लृट: सद् वा " (अ० ३।३।१४) से 'शतृ - शानच्' प्रत्यय करते हैं । एतदर्थ "तौ सत् " (अ० ३।२।१२७) इस संज्ञासूत्र का भी स्मरण करना पड़ता है । इस प्रकार अनुबन्ध-योजना को छोड़कर पाणिनीय व्याकरण में सूत्रत्रयप्रयुक्त गौरव तथा कातन्त्रव्याकरण में एक सूत्र से ही अभीष्ट निर्देश के कारण लाघव कहा जा सकता है ।

[विशेष वचन]

१. चकार: सुखावबोधार्थ: (दु० टी०) ।

२. किं संहिताग्रहणेन ? सत्यम् , सुखार्थम् (क० च०) ।

३. आदिशब्दोऽयं समीपवचनोऽवयववचनो वा (क० च०) ।

४. इति पक्षे स्थितावपीदं ज्ञापकमिति चेत् तथापि वैचित्र्यार्थम् (क० च०) ।

[रूपसिद्धि]

१-८. **करिष्यन् व्रजति।** कृ + स्य - शन्तृङ् + सि । **करिष्यमाणो व्रजति।** कृ + स्य + आन + सि। कटं **करिष्यन् व्रजति।** कृ + स्य + शन्तृङ् + सि । कटं **करिष्यमाणो व्रजति** । कृ + स्य- आन+ सि । **करिष्यन्।** कृ + स्य - शन्तृङ् + सि । **करिष्यमाण:।** कृ + स्य + आन + सि । **हे करिष्यन् !** कृ + स्य - शन्तृङ् + सि। **हे करिष्यमाण!** कृ + स्य - आन + सि। 'डु कृञ् करणे' (७।७) धातु से भविष्य अर्थ में स्यसहित 'शन्तृङ् - आन' प्रत्यय, इडागम, गुणादेश तथा विभक्तिकार्य ॥ ११७२ ।

**।। इति सम्पादकीयसमीक्षायां चतुर्थे कृत्प्रत्ययाध्याये चतुर्थ: क्वन्सुकानपाद: समाप्त:।।**

: ० :

# अथ चतुर्थे कृत्प्रत्ययाध्याये पञ्चमो घञ्प्रत्ययादिपादः

## ११७३. पदरुजविशस्पृशोचां घञ् [४।५।१]

[सूत्रार्थ]

'पद् - रुज् - विश् - स्पृश् - उच्' धातुओं से 'घञ्' प्रत्यय होता है।।११७३।

[दु० वृ०]

एषां घञ् भवति। घानुबन्धश्चजोः कगाविति कत्वगत्वार्थः, ञानुबन्ध इज्वद्भावार्थः। पद्यते, पत्स्यते, अपादि, पेदे वा - पादः। एवं रोगः, वेशः। स्पर्शो नाम क्षयो व्याधिश्च। ओकः।।११७३।

[दु० टी०]

पद०। पदेः "वुण्तृचौ" (४।२।४७) इति तृचि प्राप्ते नाम्युपधत्वाद् रुजविशस्पृशोचां के प्राप्ते कर्तरि घञ् विधीयते। क्षयो व्याधिश्चेति चकारेणान्योऽपि कर्ता ख्यायते। स्पृशतीति स्पर्शो देवदत्तः। कम्बलं स्पृशतीति कम्बलस्य स्पर्शो देवदत्तः इति वस्तुगुणः स्पर्शः। स्पृश्यते इति "अकर्तरि च कारके संज्ञायाम्" (४।५।४) इति घञ् । यद्येवं सूत्रेणापि किम् ? पद्यते पत्स्यते वाऽनेनेति पादः कायैकदेशश्चतुर्भागादिर्वा। रुजत्यनेनेति रोगो व्याधिः। विशत्यस्मिन् मनो यूनामिति वेशो वेश्यागृहम् । यूनां मनःस्वधिकं विशतीति कर्तरि वा । उच्यति सम्र्वैत्यस्मिन् ओको गृहम् । उच्यतीति कर्तरि सञ्ज्ञाशब्दत्वात् तृजादयो न भवन्तीति वक्ष्यति। प्रपञ्चार्थं पदिग्रहणमिति पदीतीहोपलक्षणम्। परस्तूचेर्घञ् नाद्रियते, स्पृशेस्तु पचादौ पाठ इति स्पृशेः स्वरे विशेष इत्युच्यते।।११७३।

[वि० प०]

पद०। इह कालस्यानिर्दिष्टत्वाद् भविष्यदधिकारस्यापि पादान्तरितत्वात् सामान्ये काले भवतीत्याह—पद्यते इति। क्षयो व्याधिश्चेति। चकारेणान्योऽपि कर्ता कथ्यते। स्पृशतीति स्पर्शो देवदत्तः इति।।११७३।

[समीक्षा]

'पादः, रोगः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'घञ्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है — "पदरुजविशस्पृशो घञ्" (अ० ३।३।१६)। अतः प्रायः उभयत्र समानता है।

[रूपसिद्धि]

१. पादः। पद + घञ् + सि। पद्यते, पत्स्यते, अपादि, पेदे वा। 'पद गतौ' (३।१०७) धातु से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, 'घ् - ञ्' अनुबन्धों का प्रयोगाभाव, इज्वद्भाव, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से उपधादीर्घ तथा विभक्तिकार्य।

२-५. रोगः। रुज् + घञ् + सि। वेशः। विश् + घञ् + सि। स्पर्शः। स्पृश्

+ घञ् + सि। **ओकः**। उच् + घञ् + सि। 'रुज् - विश् - स्पृश् - उच्' धातुओं से 'घञ्' प्रत्यय, उपधागुण, चवर्ग को कवर्गादेश तथा विभक्तिकार्य॥११७३।

## ११७४. सृ स्थिरव्याध्योः [४।५।२]

[सूत्रार्थ]

स्थिर तथा व्याधि अर्थ के गम्यमान होने पर 'सृ गतौ' (१।२७४) धातु से कर्ता अर्थ में 'घञ्' प्रत्यय होता है॥११७४।

[दु० वृ०]

सृधातोः स्थिरे व्याधौ च कर्तरि घञ् भवति। सरति कालान्तरमिति **सारः**। स्थिरोऽर्थः। अतीसारो व्याधिः। ह्रस्वस्य दीर्घता। सरन्त्यनेनेति सारी बलम्। विसरन्त्यनेनेति विसारो मत्स्यः। सञ्ज्ञाशब्दत्वात् करणे एव सिद्धः। पद्यतेऽनेनेति पादो भविष्यति? सत्यम्, प्रपञ्चार्थं पदिग्रहणम्॥११७४।

[दु० टी०]

सृ०। 'सृ' इति कृतपञ्चमीलोपो निर्देशः सर्तेर्गतिरर्थ इति सारः कालान्तरस्थायिन एव कर्तुः सम्भवतीत्याह— स्थिरोऽर्थ इति। अन्यस्मिन् कर्तरि सारकः, सर्तेति भवति। अथवा बलेऽपि स्थैर्यमस्तीति **स्थिर** इत्यनेनैव सिद्धम्॥११७४।

[वि० प०]

सृ०। सृ इति लुप्तपञ्चम्येकवचनम्। सरन्त्यनेनेत्यादि। एतेन बलमत्स्ययोश्चेति न वक्तव्यम्, "**अकर्तरि च कारके संज्ञायाम्**" (४।५।४) इति सिद्धत्वात्। एतदेवोपजीव्याह- यद्येवमिति। पदीत्युपलक्षणम्। रुजत्यनेनेति **रोगो** व्याधिः। विशत्यस्मिन् यूनां मन इति **वेशो** वेश्यागृहम्। स्पृश्यते इति **स्पर्शो** गुणविशेषः। स्पृशतीति **स्पर्शो** देवदत्तः इति पचाद्यचा सिद्धमेव। उच्यति समवैत्यस्मिन् जन इति **ओको** गृहम्। रुजतीत्यादौ कर्तर्यच् प्रत्ययो नाभिधीयते संज्ञाशब्दात्। तथा अतिसरन्त्यनेन प्राणिन इति **अतीसारः**। सरन्ति कालान्तरमनेन तदर्थिनः पुरुषा इति **सारः** कालान्तरस्थायी पदार्थ उच्यते। एतेऽपि सञ्ज्ञाशब्दत्वात् तेनैव सिद्धा इति भावः॥११७४।

[क० च०]

सृ०। तदर्थिन इति पञ्जी। स चासावर्थश्चेति तदर्थः, सोऽस्यास्तीति इन् स्थिरांशयुक्तः, अनेन स्थिरांशेन कालान्तरं सरतीत्यर्थः॥११७४।

[समीक्षा]

'सारः, अतीसारः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घञ्' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है — "सृ स्थिरे" (अ० ३।३।१७)। यहाँ अन्तर यह है कि कातन्त्रकार ने दो अर्थों में 'सृ' धातु से घञ् प्रत्यय किया है। जबकि पाणिनि ने केवल एक ही अर्थ में। द्वितीय अर्थ की पूर्ति वार्तिक-सूत्र में की गई है। इस प्रकार यहाँ कातन्त्रकारीय उत्कर्ष सिद्ध होता है।

[विशेष वचन]

१. प्रपञ्चार्थं पदिग्रहणम् (दु० वृ०)।

२. 'सृ' इति लुप्तपञ्चम्येकवचनम् (वि० प०)।

[रूपसिद्धि]

१. सारः। सृ + घञ् + सि। सरति कालान्तरम्। 'सृ गतौ' (१।२७४) धातु से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, 'घ् - ञ्' अनुबन्धों का प्रयोगाभाव, इज्वद्भाव, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से ऋकार की वृद्धि तथा विभक्तिकार्य।

२. अतीसारो व्याधिः। अति + सृ + घञ् + सि। अतिसरन्त्यनेन प्राणिनः। प्रक्रिया प्रायः पूर्ववत् ॥११७४।

## ११७५. भावे [४।५।३]

[सूत्रार्थ]

'भाव' अर्थ में सभी धातुओं से 'घञ्' प्रत्यय होता है॥११७५।

[दु० वृ०]

सर्वस्माद् धातोर्भावे घञ् भवति। पाकः, पाकौ, पाकाः। भवत्यर्थः क्रियासामान्यः।इह हि सिद्धताख्यः सत्त्वभूत इति द्विवचनबहुवचने भवतः॥११७५।

[दु० टी०]

भावे। ननु भाव इति भवतिना घञन्तेन निर्देशस्ततश्च भवतेर्यो भावस्तस्मिन्नेव वाच्ये घञादिः स्यात्, स च भवतेरेवोत्पद्यमानेन घञादिना शक्यो विधातुं न पचादिभ्यः इत्याह— भवत्यर्थ इत्यादि। यथोक्तम् — **'कृभ्वस्तयः क्रियासामान्यवचनाः'** इति। विशेषे सामान्यमस्तीति। भावस्य चत्वार आत्मानः— अभिधेयात्मा नान्तरीयकः परार्थोऽसाधारणश्चाभिधेयात्मा प्रधानपरमार्थस्तत्र यद्यभिधानात् तुल्यार्थात् प्रकृति-प्रत्ययभेदाल्लिङ्गादिभिन्नमभिधेयात्मानं प्रतिपादयतीति भावः। क्रिया कर्मेति, तदा लिङ्गं वचनं वा क्षेप्तव्यं स्यादिति, इतरथा हि भावे घञादयः इति भूते क्तादयः 'स्त्रियां भावे क्तिः, नपुंसके भावे क्तः" (४।५।७२,९३) इति सामानाधिकरण्यं न स्याद् इतरोऽभिधेयात्मा प्राधान्यादर्थः शब्दस्य तस्मिन् प्रतिपाद्ये शब्द उपायमात्रं न च प्रधानमात्रं प्रधानप्रतिपादनार्थमुपात्तलिङ्गादिभिर्विशिष्यते निर्देशमात्रोपयोगिभिः स्वयमविशिष्टमर्थं प्रतिपादयतीति न्याय्यः पक्षः। तथाहि युटष्टकारानुबन्धः स्त्रियामीप्रत्ययार्थः॥११७५।

[वि० प०]

भावे। सर्वस्मादिति। विशेषानुपादानादित्यर्थः। सर्तिरनन्तरोऽनुवर्तते इति न देश्यम्। अत

एव भाव इति भवतेर्घञ्दर्शनात्। ननु तथापि सर्वस्मादिति कथं लभ्यते। भावो हि नाम भवतेरर्थस्तस्मिन्नभिधेये भवन् भवतेरेव स्यान्न पचादिभ्यः, न हि तेभ्यः उत्पन्नेन घञा भावोऽभिधातुं पार्यते। किं च पूर्वापरीभूतो धात्वर्थो भाव उच्यते। तस्य चासत्त्वभूतत्वात् लिङ्गसंख्याभ्यां योगो न स्यादिति नैष दोषः। भवतिर्हि क्रियासामान्यवाची। यथोक्तम्— **'कृभ्वस्तयः सामान्यवचनाः'** इति। क्रियासामान्यं च सर्वक्रियानुगतम्। अतः क्रियासामान्यवाचिना भवतिनाऽर्थनिर्देशः क्रियमाणः सर्वधातुविषयीकृतो भवतीति पचादिभ्यो घञ् भवति। स चायं भवत्यर्थः साध्यतालक्षणः सिद्धतालक्षणश्च। तत्र प्रथमस्त्यादिवाच्यः, द्वितीयस्तु द्रव्यरूपो घञादिवाच्यः। यथोक्तम्—

**क्रियायाः साध्यतावस्था सिद्धता च प्रकीर्तिता।**
**सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति घञ्विधिम्।।**

द्रव्यस्वभावाल्लिङ्गसंख्याभ्यामस्य योग इत्यालोच्याह—भवत्यर्थ इति। साधारणपर्यायो वाच्यलिङ्गः सामान्यशब्दोऽयम्। अतः क्रियासामान्य इति पुंसा निर्देशः। इह हीति। इह घञ्विधौ हिशब्दो यस्मादर्थे। यस्मादिह घञ्विधौ सत्त्वभूतो द्रव्यभूतो भवत्यर्थस्तस्मात् तदाश्रये द्विवचनबहुवचने पुंस्त्वं च युज्यते इति।।११७५।

[क० च०]

भावे। ननु भाव इति भूधातोरर्थस्तस्मिन्नभिधेये इत्युक्ते भूधातोरेव स्यात्, कथं पचादेरित्याह— भवत्यर्थ इत्यादि। **अयमर्थः- भावः सत्ता,** सा च सर्वगता, नहि पदार्थः सत्तां जहाति, अयं सन् अयं सन्निति प्रतीयमानत्वात् । अतः क्रियास्वपि समवेतेति सत्तायां प्रत्ययो भवन् सर्वासु क्रियास्वपि भवति। अत एव भावः क्रियेति पर्यायः। तथा 'कृभ्वस्तयः क्रियासामान्यवचनाः' इति स्थिते कृधातुः कथं सामान्यवचनश्चेद् उच्यते - करोत्यर्थः प्रयत्नः, स च सर्वासु क्रियासु कारणत्वेन विद्यते, ज्ञानेच्छाकृतीनां तुल्यकालविषयत्वात् । ततश्च कारणे कार्योपचारात् करोतीत्यर्थोऽपि क्रियासामान्य इति, तर्हि सत्तायाः केवललिङ्गसंख्याभ्यां योगो नास्तीति अद्रव्यरूपत्वात् । तत् कथं 'पाकः, पाकौ, पाकाः' इति द्विवचनबहुवचने लिङ्गयोगश्चेत्याह— इह हीति। **'कृदभिहितभावो द्रव्यवत् प्रकाशते'** (व्या० परि० पा० १११) इति स्वभावाद् इति भावः। तत्रापि तव्यादीनां नपुंसकलिङ्गयोगोऽस्ति, स्त्रीलिङ्गे च "स्त्रियां क्तिः" (४।५।७२) इत्यादयः। द्वित्वादिसंख्यायोगो न दृश्यते। यथा देवदत्तेन भोक्तव्यमित्यादि।

ननु यथा द्रव्यतुल्यत्वाद् द्वित्वादियोगस्तथा लिङ्गप्रयोगः कथं न स्यात् । अत्र **कश्चिद्** आह— यदि लिङ्गत्रयमुचितम्, तथापि स्वभावाद् घञलौ पुंसि विज्ञेयाविति। **वस्तुतस्तु** नपुंसके भावे क्तयुटौ बाधकौ स्तः, स्त्रीलिङ्गे च स्त्रियां क्तिरित्यादि पुंल्लिङ्गे च घञलाविति। अत एवेति **पञ्जी**। ननु कथमेतत् "श्रिनीभूभ्योऽनुपसर्गे" (४।५।१०) इत्यनेनैव सिद्धेः। न च स्थितावप्यनेन भाव इति साध्यम् , अलो विषयत्वात् ?

सत्यम्, अनेन साध्यमिति केनोच्यते, किन्त्वत्र सर्तेरनुवर्तते "श्रिनीभूभ्यः" (४।५।१०) इत्यनेन सिध्यतीति भावः। अथ कथन्न सिध्यतीति चेद् उच्यते— अकर्तरि चेत्यत्र चकाराद् भावानुकर्षणेन 'पाकः' इत्यादि सिद्धम्। ततश्च भावाधिकारस्य चानुकृष्टत्वादुत्तरत्र सम्बन्धो नास्तीति भूधातोः श्रिनीत्यादिना भावे घञ्, अल् न प्राप्नोतीति। अथ स्थितिपक्षेऽप्येवं कथन्न स्यात् , नैवम् । स्थितौ भाव इत्यनेनैव सूत्रेण पाक इत्यादि पदं साध्यते। अतः अकर्तरीति सूत्रे चकारस्य फलं नास्तीति चकारेण भावानुकर्षणम् इङाभ्यां चेत्यनेनानुकर्षणार्थं भविष्यति। इदानीं 'पाकः' इत्यादिसिद्ध्यर्थं स्वसूत्र एव फलमस्तीति कथमुत्तरार्थं भविष्यतीति स्वरान्तादल्बाधकः इति व्यञ्जनान्तादुपतिष्ठते। दूषणान्तरमाह— किञ्चेति तथेत्यर्थः। घञ्विधिमिति। घञादिविधिमित्यर्थः। घञ्विधावित्युपलक्षणमेतद् घञादिविधावित्यर्थः॥११७५।

[समीक्षा]

'पाकः, रागः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'घञ्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है — "भावे" (अ० ३।३।१८)। इस प्रकार उभयत्र पूर्ण समानता है।

[रूपसिद्धि]

१. पाकः, पाकौ, पाकाः। पच् + घञ् + सि, औ, जस् । 'डु पचष् पाके' (१।६०३) धातु से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, इज्वद्भाव, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु" (३।६।५) से धातुघटित उपधा को दीर्घ, "चजोः कगौ धुड्घानुबन्धयोः" (४।६।५६) से चकार को ककार, लिङ्गसंज्ञा तथा विभक्तिकार्य॥११७५।

## ११७६. अकर्तरि च कारके संज्ञायाम् [४।५।४]

[सूत्रार्थ]

संज्ञा होने पर कर्तृभिन्न कारक तथा भाव अर्थ में धातु से 'घञ्' प्रत्यय होता है॥११७६।

[दु० वृ०]

कर्तृवर्जिते कारके भावे च धातोः संज्ञायां गम्यमानायां घञ् भवति। प्रकुर्वन्ति तमिति **प्राकारः**। **प्राश्यते इति प्राशः**। आहरन्ति तमिति **आहारः**। प्रसीदन्त्यस्मिन्नयनमनांसीति **प्रासादः**। दीर्यन्ते एभिरिति **दाराः**। जीर्यन्तेऽनेनेति **जारः**। अकर्तरीति किम् ? नदतीति **नदः** शोणः। असंज्ञायामपि-दायो दत्तः, लाभो लब्धः। कारकग्रहणं प्रसज्यनञ्समासज्ञापनार्थम् ॥११७६।

[दु० टी०]

अक०। करोतीति **कारकम्**। क्रियायाः साधनं निर्वर्तकं निमित्तमिति पर्यायाः। एतेन **योगरूढमिति** प्रतिपादितम् । तत् पुनर्द्रव्यगुणक्रियासंज्ञाजातिभेदात् **पञ्चविधम्** ।

यथा दण्डः, शुक्लः, पंक्तिश्चैत्रो गौरिति। पुनश्च षोढा कर्मादिभेदात् । पुनश्च द्विधा-स्वशब्दवाच्यम् अन्यशब्दवाच्यं च। यथा पाक्यं कृतः कर्ता गोघ्नः प्रियम्भविष्णुरिति। शब्दान्तरवाच्यो यथा देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीति। अथ किं द्रव्यादय एव कर्त्रादिरूपकाः कारकम् उत तच्छक्तिः शक्तिमन्तो वा द्रव्यादयः। न तावत् पूर्वः पक्षो यदि द्रव्यमेव कारकं न विशिष्टं नवा शक्तिस्तदा स्थाली पचतीति स्थालीरूपत्वेन पचतिक्रियायां कर्तृकारकमित्युक्तेऽधिकरणादिकं न स्यात् , कारकाणां परस्परव्यावृत्तिरूपत्वात्।

अथ क्रियाश्रयत्वेन कर्तृत्वमन्यरूपेण कर्मादित्वमिति चेद् इदमेव शक्तिमदिति कुतो यतः खलु येन रूपेण स्वस्यां क्रियायां निमित्ततामापद्यते, न तु तेनैव क्रियान्तरस्य। न तु शब्दाः शब्दज्ञानस्य कारणभावमापद्यमानाः कदाचित् क्वचिदपि नीलादिज्ञानस्य कारणं भवन्ति। तथा च सति स्थाली पचति, स्थाल्या पचति, स्थाल्यां पचतीति नोपपद्यते, सर्वेषां कारकाणां परस्परव्यावृत्तिरूपत्वात् । अस्तु तर्हि शक्तिः कारकम्। भिन्ना हि शक्तयः, भिन्नाः शक्त्याधाराश्चेति द्रव्यादयो भवन्ति। तत्र या या शक्तिर्येन येन स्वरूपेण विवक्ष्यते तेन तेन तत् कारकं भविष्यति। विवक्षातो हि कारकाणि भवन्ति। शक्तिमन्तो वा द्रव्यादयः एव कारकम् । दृश्यते हि वस्तुन्यभिन्नेऽपि पुत्रः पिता पितामहो मातुल इति पार्थिवो द्रव्यं घटो मूर्तः। शक्तिभेदनिबन्धनो व्यपदेशभेद इति करणादिशक्तिमन्तो द्रव्यादयः कारकम् । यथा कर्तुः समवायिनीं कर्मसमवायिनीं च क्रियामभिनिर्वर्तयतः पारम्पर्यक्रमेण कर्तृत्वम् । तथा कर्मणोऽपि क्रियायाः समुत्पद्यमानस्य सम्बन्धमनुभवतो व्याप्तौ निमित्तभावस्तथा करणस्यापि छेदानुप्रवेशेन परशोः। तथा सम्प्रदानस्यापादानस्याधारस्य च त्यागोपगमनधारणक्रियाया निमित्तभावात् सर्वेषां यथायथं क्रियासु प्रवर्तयिता कर्ता प्रधानमित्युच्यते। भाव इत्यस्य निवृत्त्याशङ्कानिरासार्थश्चकारः क्रियते।

ननु कर्तरीति पर्युदासात् कर्मादिष्वेव भविष्यति किं कारकग्रहणेन प्रसज्यनिषेधोऽपि नैव, भावे पूर्वेण सिद्धत्वात् ? सत्यम्, पूर्वोक्तभावो नियमार्थः, भाव एवाभिधेये येन स्वार्थ इति मन्यमान आह-कारकेत्यादि। प्रसज्यप्रतिषेधेऽपि कारकग्रहणं यत् किञ्चिदेतदसम्बन्धसमानानामसकृज्ज्ञापितत्वात् । संज्ञायामिति प्रायोवृत्त्यर्थमित्याह-संज्ञायामपीति। अथवा दायो लाभ इति भाव एव प्रत्ययो द्रव्येणाभिसम्बन्धादत्र व्यावृत्तिः सिध्यति। यथा विंशतिरश्वाः शतं गावः इति। दारजारावचि सिद्धाविति चेद् इनो लुक् चेति वक्तव्यं स्यात् । लुग्लोपत्वान्मानुबन्धत्वाद् ह्रस्वप्रतिषेध इति। तथाहि ये दारयन्ति तैरसौ दीर्यते, यश्च जरयति तेनासौ जीर्यते इति नार्थभेदः, अनिर्दिष्टकालत्वाद् भूतेऽपि भविष्यत्यपि परोक्षेऽपि घञादयो योज्याः विवक्षावशात् । अकर्तरि च कारके संज्ञायामिति भावे चेत्यधिकारस्यावधिः कृत्ययुटोऽन्यत्रापीति वचनम् ।।११७६।

[वि० प०]

अकर्त०। 'प्राकारः, प्रासादः' इति ह्रस्वस्य दीर्घता। दारजारौ कर्तरि कारितस्य लुक् चेति वक्तव्यमिति **कैश्चित्**। **'दॄ विदारणे, जॄष् झॄष् वयोहानौ'** (८।१९;३।१८) आभ्यां कारितान्ताभ्यां कर्तरि तृजादौ प्राप्ते घञि कारितस्य लुक् चेति निपात्यते। कारितलोपः सिद्ध एव, किन्तु लोपे सति प्रत्ययलोपलक्षणेन जरतेर्मानुबन्धत्वाद् ह्रस्वत्वं स्यादिति लुक् निपात्यते, तेन **"लुग्लोपे न प्रत्ययकृतम्"** इति भावः। न च ह्रस्वत्वे पुनर्घञ्युपधाया दीर्घ इति युज्यते वक्तुम्, स्वरादेशः परनिमित्तकः पूर्वविधिं प्रति स्थानिवद्भावादुपधैव न स्यादिति, लुकि तु निरपेक्षे न स्थानिवद्भाव इत्युपधादीर्घो घञि स्यादेव। यथा दारयन्तीति **दाराः**, तदिह न वक्तव्यम्, करणत्वविवक्षायां सिद्धत्वादित्याह— दीर्यन्ते इत्यादि। तथाहि ये दारयन्ति तैरसौ दीर्यते, यश्च जरयति तेनासौ जीर्यते इति नार्थो भिद्यते। कारितान्ताभ्यां कर्तर्यचा सिध्यतीति न वक्तव्यम्, तृजादेरपि प्रसङ्गात् कारितस्य लुक् चेति वक्तव्यप्रसङ्गाच्च। अन्यथा प्रत्ययलोपलक्षणेन जरयतेर्मानुबन्धत्वाद् ह्रस्वत्वं स्यादित्युक्तम् ।

ननु घञेव नास्ति ऋकारान्तत्वादनयोरला भवितव्यम्, यद् वक्ष्यति— 'दीर्घादलेव, कॄ- करः, गॄ-गरः' इति? सत्यम् । **अभिधानादाभ्यां घञ्** भविष्यतीति न दोषः। सञ्ज्ञायामिति प्रायोवृत्त्यर्थमित्याह— असंज्ञायामपीति । अथ कारकग्रहणं किमर्थम् अकर्तरीति पर्युदासात् कर्तृसदृशे कारके भविष्यति, तर्हि प्रसज्यपक्षे दुष्यति, तत्र हि क्रियाप्रतिषेधमात्रं प्रतीयते कर्तरि न भवति,-न तु तत्सदृशं वस्त्वन्तरमिति कथं कारके स्यात् । नैवं प्रसज्यवृत्तिरभावमात्रविषयो नञ्, तस्य क्रिययैव सम्बन्धो नोत्तरपदेनेति सामर्थ्याभावात् । तथा चाकर्तरीति पर्युदासवृत्तेरेवायं समासो न प्रसज्यवृत्तिरिति तर्हि कथमयं प्रसङ्गः? सत्यम् । इदमेव कारकग्रहणं बोधयति-असामर्थ्येऽपि समास इत्याह- कारकेत्यादि। तेनार्वन्नर्वन्तिरसावनञित्यत्रासाविति प्रसज्यसमासादनपेक्षे एवार्वन्तिः सर्वत्र भवतीति व्याख्यानान्तरं सिद्धम्। यदि पुनरसामर्थ्ये समासो गमकत्वाद् भविष्यतीत्युच्यते, तदा कारकग्रहणमर्थान्तरनिवृत्त्यर्थमेव भवति। प्रसज्यसमासे हि कारकग्रहणमन्तरेणानिर्दिष्टार्थो घञ् स्वार्थेऽपि स्यात् ।

ननु स्वार्थो हि भावः, तत्र पूर्वेणैव सिद्धे इति वचनादर्थान्तरे कर्मादौ भविष्यतीति, नैवम् । **द्विविधो हि भावः**- बाह्यः आभ्यन्तरश्च। बाह्यः सिद्धताख्यः, इतरः साध्यताख्यः। तत्र बाह्ये घञ् सिद्धः, अनेनाभ्यन्तरे स्यादिति। यथोक्तम् — पूर्वापरीभूतं भावमाख्यातमाचष्टे इति। तर्हि सिद्धतासाध्यतारहिते धात्वर्थमात्रे स्यादिति चेत् , तदयुक्तम् । अनेन हि सामान्ये सिद्धताख्ये स्वार्थेऽपि घञि सिद्धे पूर्वोक्तभावो नियमार्थो भविष्यति। भाव एवाभिधेये घञ् , न तु केवले स्वार्थे। तस्माद् 'अकर्तरि च कारके संज्ञायाम्' इत्युक्ते प्रसज्यप्रतिषेधेऽपि अन्यत्रानुपपद्यमानो घञ् कर्मादिषु कारकेष्वेव भविष्यति न खल्वन्यथा

सञ्ज्ञापि गम्यते इति, तदा कारकग्रहणं सुखार्थमेवेति॥११७६।

[क० च०]

अकर्तरि०। यद्यपि पूर्वेणैव भावे सिद्धस्तथापि चकारेण तस्यानुकर्षणम् उत्तरार्थम्, तेन 'चानुकृष्टं नोत्तरार्थम्' (का० परि०२२) इति देश्यमपास्तम् , स्वसूत्रे सफलत्वे सति तस्य विषयत्वात्। 'प्रासः' इत्यस्त्रविशेषः। "लुग्लोपे न प्रत्ययकृतम्" (३।८।२९) इति पञ्जी। ननु कथमेतद् इनो लुकि सति निमित्ताभावाद् वृद्धिरपि निवर्तते इति जॄरूपेण स्थितिः। न च प्रत्ययलोपे प्रत्ययलक्षणो विधिरितीनोऽभावे वृद्धिरिति वाच्यम्, "लुग्लोपे०" (३।८।२९) इत्यनेन निषेधात्। लोपपक्षे तु प्रत्ययलोपलक्षण इति पुनः स्याद् वृद्धिरिति? सत्यम्। "छादेर्घेस्मन्तृन्०" (४।१।१९) इत्यादिज्ञापकात् क्वचिन्निमित्ताभाव इति नास्तीत्युक्तमेव। अतोऽत्रापि इनो लुक्यपि न निमित्ताभावः, "अस्योपधायाः" (३।६।५) इत्यत्र विषयसप्तमीस्वीकारादित्यन्ये।

ननु लुग्वचनादेव न जरतेर्निमित्ताभावः, अन्यथा इनो लोपे मानुबन्धत्वाद् ह्रस्वत्वे सति सिद्धे किं लुग्वचनेनेति सागरः। ननु तथापि कारितलुक् न क्रियताम् इनो लोपे प्रत्ययलोपलक्षणत्वाद् ह्रस्वत्वे सति घञि पुनरुपधाया दीर्घो भविष्यतीत्याह-न चेति। स्वरादेश इति। ननु कथमिदमुक्तं न पदान्त० इत्यादिना दीर्घविधिं प्रति स्थानिवद्भावस्य प्रतिषेधात् ? सत्यम्। प्रथमकक्षायामिदमुक्तम् , किन्तु घञि दीर्घत्वेऽपि प्रत्ययलोपे प्रत्ययलक्षणमिति पुनरिनि ह्रस्वः स्यादिति हेमः। "प्रत्ययलुकां चानाम्" (४।१।४) इति प्रतिषेधान्न दीर्घ इति कुलचन्द्रः। ननु इनो लुकि जरयतेः प्रत्ययलोपः इत्यनेनैव प्राप्तस्य ह्रस्वस्य "लुग्लोपे०" (३।८।२९) इत्यादिना निषेधः, स्थानिवद्भावेन जारः इति स्यादित्याह— लुकि त्विति। यद् वा भवतु जरयतेरिनो लुकि निमित्ताभावस्तथापि न दोषः। घञि "अस्योपधाया दीर्घः" (३।६।५) इत्यादिना वृद्धौ जार इत्यसिद्धत्वात्। अथ प्रत्ययलोपलक्षणन्यायेन प्राप्तस्य कार्यस्य लुग्लोपत्वान्निषेधः, इनो लुप्तस्य स्वरादेश इत्यादिना स्थानिवद्भावात् सिद्धौ सत्यां मानुबन्धेत्यादिना ह्रस्वत्वे सत्यप्यनिष्टं स्यात् , नैवम् इत्याह-लुकि त्विति वैद्यः।

यद् वा भवतु जरयतेरिनो लुकि निमित्ताभावाद् जॄरूपस्थितिस्तथापि न दोषः। घञि "अस्योपधायाः" (३।६।५) इत्यादिना वृद्धेः सम्भवात्। अथ स्थानिवद्भावादिनो नाम्यन्तत्वाभावे कथं वृद्धिरित्याह— लुकीति। उपधाया दीर्घत्वं स्यादिति उत्पद्यते इति नार्थः। किन्तु स्यात् सत्तायोगी तिष्ठतीति यावद् दीर्घविधानाभावात्। अस्मन्मते तु वृद्धौ सत्यां स्याद् उत्पद्यते इत्यर्थः। एतेन "प्रत्ययलुकां चानाम्" (४।१।४) इति प्रतिषेधात् कथं वृद्धिरिति देश्यमपास्तं निरपेक्षत्वात् प्रत्ययलुगेव भवतीति। ननु जरयतेरिनि पूर्वमेव ह्रस्वोऽभूत्, तत् कथमिदमुच्यते लुकि सति ह्रस्वो न भवतीति? सत्यम्, भूतपूर्वमपि ह्रस्वत्वमिनो लुकि सति निमित्ताभावान्निवर्तते तर्हि वृद्धिः कथं निवर्तते चेद्

"अस्योपधायाः" (३।६।५) इत्यत्र विषयसप्तमीस्वीकारादित्युक्तमेव निमित्ताभावे ज़ॄरूपावस्थितिपक्षे तु घञि वृद्धिरिति व्याख्यातमेव। सामर्थ्याभावादिति युक्तार्थताभावादित्यर्थः।

अथ 'अकर्तरि' इति कथं समासः इत्यसमर्थोऽपि इति। यथा 'असूर्यम्पश्या राजदाराः, अश्राद्धभोजी' इत्यादयः। असंज्ञायामपि 'दायो दत्तः' इति वृत्तिः। 'इङाभ्यां च" (४।५।६) इत्याकारान्ताद् घञित्यर्थः। नन्वनेन पूर्वं व्यञ्जनान्तत्वादस्य विषयः स्यादित्यनपेक्ष एवार्वन्तिरित्येतेन अन्स्यन्तविहिताया नद्यास्तरमादिषु विभाषया ह्रस्वः पुंवद्भावश्चेति सिद्धं भवति। यथा 'अर्वतितमा, अर्वतीतमा, अर्वत्तमा' इत्यादि। तत्रैवोक्तं गमकत्वादभिधानादित्यर्थः। मतान्तरमाह— प्रसज्यसमास इति। असावपीति स्वभावात् साध्यताख्यभावस्यादिशब्दवाच्य एवेति भावः॥११७६।

[समीक्षा]

'प्राकारः, आहारः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घञ्' प्रत्यय किया गया है। पाणिनि का सूत्र है — "अकर्तरि च कारके संज्ञायाम् " (अ० ३।३।१९)। अतः उभयत्र पूर्ण समानता है।

[विशेष वचन]

१. करोतीति कारकं ........ योगरूढम् । .... पञ्चविधम् (दु० टी०)।

२. शक्तिः कारकम् (दु० टी०)।

३. विवक्षातो हि कारकाणि भवन्ति (दु० टी०)।

४. आशङ्कानिरासार्थश्चकारः (दु० टी०)।

५. द्विविधो हि भावः - बाह्य आभ्यन्तरश्च (वि० प०)।

[रूपसिद्धि]

१. प्राकारः। प्र + कृ + घञ् + सि। प्रकुर्वन्ति तम् । 'प्र' उपसर्ग-पूर्वक 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, इज्वद्भाव, "अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु"(३।६।५) से ऋकार को वृद्धि, उपसर्ग को दीर्घ तथा विभक्तिकार्य।

२-६. प्राशः। प्र + अश् + घञ् + सि। प्राश्यते । आहारः। आ + हृ + घञ् + सि। आहरन्ति तम् । प्रासादः। प्र + सद् + घञ् + सि। प्रसीदन्त्यस्मिन्नयनमनांसि। दाराः। दॄ + घञ् + जस्। दीर्यन्ते एभिः। जारः। जॄ + घञ् + सि। जीर्यन्तेऽनेन। 'अश्' इत्यादि धातुओं से 'घञ्' प्रत्यय आदि प्रक्रिया पूर्ववत् ॥११७६।

## ११७७. सर्वस्मात् परिमाणे [४।५।५]

[सूत्रार्थ]

परिमाण के विषय में यदि सञ्ज्ञा हो तो कर्तृभिन्न कारक तथा भाव अर्थ में धातु से 'घञ्' प्रत्यय होता है॥११७७।

[दु० वृ०]

परिमेयत्वात् परिमाणम् । परिमाणविषये वर्तमानात् सर्वस्माद् धातोर्घञ् भवति कर्तृवर्जिते कारके भावे च संज्ञायां गम्यमानायाम् । संख्या प्रस्थादिर्वा परिमाणम् । एकस्तण्डुलनिश्चायः, द्वौ शूर्पनिष्पावौ, प्रस्थनिश्चायः, द्रौणावक्षायः। अलो बाधकत्वात् सर्वस्माद् भवति। सर्वस्मादिति ज्ञापयति— धात्वाश्रितः प्रत्ययो घञा बाध्यते, न त्वर्थाश्रित इति। तेनैका तिलोच्छित्तिः (च्छ्रितिः), द्वे श्रुती तैलस्य, क्तिरेवैकं श्रवणम्, द्वे प्रस्थाने, युट् सिद्धः। कथमेको निश्चयः? अप्यधिकारात् ॥११७७।

[दु० टी०]

सर्व०। न विना परिमेयेण परिमाणमित्याह-परिमेयत्वादिति। धातुः कथं परिमाणविषये वर्तते, अर्थे कार्यस्यासम्भवात् तद्वाचिनः प्रत्ययसमुदायस्य न चेह संज्ञा गम्यते, श्रुतत्वात् परिमाणस्यैव निश्चायादयः सञ्ज्ञा परिमाणशब्दोऽप्यत्र क्रियाशब्दो गृह्यतेऽभिधानात्, न तु रूढाः प्रस्थादयः। संख्यायाः परिमीयते इति संख्यापि परिमाणमित्याह-संख्येत्यादि। बाधकबाधनार्थं वचनं घञनुक्रमणम् । ननु शूर्पनिष्पावाविति कथमुदाहरणम् ''निरभ्योः पूल्वोः'' (४।५।१७) इत्यनेन घञस्त्येव ? सत्यम्, परिमाणसंज्ञाविर्भावनमेव फलम् । अलो बाधकत्वादित्यादि। कथमेतदवसीयतेऽल एवायं बाधको न क्त्यादीनामिति **'पुरस्तादपवादोऽनन्तरान् विधीन् बाधते'** (व्या० परि० ९) इति नात्र शास्त्रपरिभाषितमेतत् ? सत्यम् , लौकिकोऽयमन्यत्र न्यायः **'अनन्तरस्य विधिः प्रतिषेधो वा'** (का० परि० १९) इति। यथा कश्चिदर्थार्थी गृहाद् गृहान्तरं गच्छन् यद्यनन्तरगेह एवार्थं लभते, स नापरं गृहं याति, तत्रैव कृतार्थत्वात् । प्रत्यासत्तिरियमतो बहुलार्थेन यदा प्रयोजनमस्य गृहान्तराण्यपि संविशतीति व्याप्तिरपि दृश्यते ।

अथवा त्यक्तावयं न्यायोऽनन्तरत्वं परत्वं च सम्भवति विधीनां जातेरेकत्वात् कथं क्त्यादीनां बाधाप्रत्यासत्तेश्च न्यायस्याभावाद् व्यावृत्तिरेव स्यात् । सर्वशब्दो व्याप्त्यर्थोऽपि पञ्चम्यन्तो धातुसमानाधिकरणो धात्वाश्रितस्यैवापवादस्य बाधको भवति, 'एकः कारो द्वौ कारौ' इति नार्थाश्रितस्य तेन स्त्रियामर्थे क्तिः सिद्धा नपुंसके चार्थे युट् सिद्धः इत्यर्थः। सर्वग्रहणमन्तरेण पञ्चमी न लभ्यते इति सर्वशब्दोपादानम् । कथमिति। **''उणादयो भूतेऽपि''** (४।४।६७) इत्यतो मण्डूकगतिन्यायेनापि भवतीत्यर्थः। यद्येवं बहुलार्थत्वादेव क्त्यादयो भविष्यन्तीति किं सर्वस्मादित्यनेन? सत्यम् ? प्रपञ्चः

सुखावह इति। ननु संख्याताविति सूत्रमास्तां किं क्रियाशब्दविशिष्टेन परिमाणग्रहणेन? सत्यम् , संख्यायाः संख्यातार्थाद् धातोरित्युच्यमाने 'प्रस्थनिश्चायः' इति न सिध्यति। नात्र संख्यातार्थो धात्वर्थ इति, नैवम् । सामर्थ्यादत्राप्येकादिसंख्यावगमादिति, यथा प्रस्थस्य स्थाली अपरिमितप्रस्थनिश्चयेऽपि प्रस्थप्रयोगोऽनर्थकः स्यात्? सत्यम्, प्रतिपत्तिरियं गरीयसीति॥११७७।

[वि० प०]

सर्वस्मात्०। परिमेयस्याभावात् कथं परिमाणमित्याह-परिमेयत्वादिति। क्रियाभावो हि धातुः, स च परिमाणविषये वर्तितुं नोत्सहते इति। अर्थाद् धात्वर्थः परिमेयभूतो वर्तते। तत्र चार्थे कार्याभावात् तद्वाचिनो धातोः प्रत्ययः संज्ञा च समुदायेनैव गम्यते। श्रुतत्वान्निश्चायादयः परिमाणस्यैव संज्ञेति। संख्येत्यादि। संख्यया परिमीयते परिच्छिद्यते इति साऽपि परिमाणमत्राभिधीयते, न तु रूढं प्रस्थादिकमेवेति भावः। द्वौ शूर्पनिष्पावाविति। "निरभ्योः पूल्वोः" (४।५।१७) इति घञ् सिद्ध एव, परिमाणविषयत्वादिहोदाहृतम्। अल इत्यादि। कथमिदं निश्चितम् अल एव बाधको न तु क्त्यादीनामिति। नहीह **'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते न परान्'** (व्या० परि० ९) इति परिभाषितमस्तीति? सत्यम्, **'अनन्तरस्य विधिः प्रतिषेधो वा'** (का० परि० १९) इति लौकिकादेव न्यायात् सिध्यतीति। सर्वस्मादिति। स्वरान्तापेक्षयेदमुच्यते, तत्रैवाल्विधेः सम्भवात् । तेन सर्वशब्दो व्याप्त्यर्थकोऽपि पञ्चम्यन्तात्वाद् धातोः समानाधिकरणो धात्वाश्रितस्यैवापवादस्य बाधको भवति नार्थाश्रितस्य। एवं **'कॄ विक्षेपे'** (५।२१)। एकः कारः, द्वौ काराविति। अर्थाश्रितस्तु भवत्येव। यथा स्त्रियामर्थे क्तिः, नपुंसके चार्थे युट्। अन्यथा अल इव क्तियुटोरप्यनेन बाधा स्यादिति भावः। कथमित्यादि। **"उणादयो भूतेऽपि"** (४।४।६७) इत्यतो मण्डूकप्लुतिन्यायेनापिशब्दो वर्तते, तेनाल्-प्रत्ययोऽपीत्यर्थः॥११७७।

[क० च०]

सर्वस्मात् ०। परिमीयते परिच्छिद्यते येन तत् **परिमाणम्** इत्यर्थे संख्या प्रस्थादिश्च परिमाणमिष्यते न तु योगरूढत्वात् प्रस्थादिरेव तर्हि अन्वर्थबलात् कालः कथं न गृह्यते, तेनापि परिमीयते यतः? सत्यम् , इष्टत्वान्न तस्य ग्रहणम्, परिमेयश्च धात्वर्थमन्तरेण नान्यार्थः सम्भवतीति, ततश्च परिमाणे संख्या प्रस्थादिविषये वर्तमानो यो धात्वर्थः परिमेयभूतस्ततः प्रत्ययो भवन्नर्थे कार्यासम्भवात् तद्वाचिनो धातोः सर्वस्माद् घञ् भवतीति सूत्रार्थः। अथ परिमाणे इत्यभिधेयसप्तमी कथन्न स्यात्? सत्यम् । अकर्तरीत्यनुवर्तते, तदेव प्रत्ययविशेषणम् । अथ तेन किम् ? अन्यदपि विशेषणं भविष्यति। तथाहि परिमाणे किम्भूते अकर्तरि कारके इति? सत्यम्, सर्वस्माद् इत्युपस्थितस्य विशेषणत्वसम्भवेऽनुपस्थितस्य प्रत्ययस्य कल्पनाया अनौचित्यात् ।

यद् वा प्रत्ययश्चैकेनैव विशेषणेन चरितार्थः, अन्यविशेषणकल्पनाया अयुक्तत्वाद् व्याप्तिन्यायान्नाभिधेयसप्तमीति **सागरः**। ननु संख्यादिपरिमाणविषये केन प्रकारेण

धात्वर्थो वर्तते? परिमेयत्वेन चेत्, परिमेयग्रहणं सूत्रे दातुमुचितम्, सर्वस्मात् परिमेयादिति, तदभावात् कथं धात्वर्थस्य परिमेयत्वप्रतीतिरित्याह— परिमेयत्वादिति। "त्वतल्भ्यां सम्बन्धाभिधानम्' इति भाष्यात् सम्बन्धमात्रेऽत्र त्वप्रत्ययस्तेनायमर्थः—यतः परिमेयसम्बन्धादेव परिमाणत्वं सम्भवति। अतो धात्वर्थः परिमाणविषये परिमेयत्वेन वर्तते इति न कार्यं परिमेयग्रहणमिति। सागरस्तु विना परिमेयेण परिमाणं न भवतीति परिमेयाभावात् कथं परिमाणप्रतीतिरित्याह—धात्वर्थस्य परिमेयत्वादिति। धात्वर्थस्य परिमेयत्वात् परिमाणं प्रमीयते इत्यर्थ इत्याचष्टे। भावादिति पञ्जी। सद्भावादित्यर्थः। ननु यदि अनन्तरस्य विधिरित्यादिन्यायादल एवायं बाधकस्तत् किं सर्वस्मादित्यनेन? सत्यम्, 'अनन्तरस्य विधिः प्रतिषेधो वा' (का० परि० १९) इत्यस्य व्यञ्जनान्तात् प्राप्तस्य क्त्यादेरनर्थकतेत्यनेनैव चरितार्थता स्वरान्ताच्चानेनालो बाधकत्वाद् घञेव स्यादिति सर्वग्रहणमिति हेमः।

अथालो बाधको घञ् कथं स्त्रियां नपुंसके च न स्याद् येन क्त्यादेर्बाधक इति? सत्यम्, सुखार्थं सर्वग्रहणम् । अत एवेति। स्वरान्तादेवेत्यर्थः। अथ ग्रहेरपि अलो बाधासम्भवः। तथा च वक्ष्यति—एकः शाकसंग्रह इति? सत्यम् , तदर्थं नेदं सूत्रम् , तथा "समि मुष्टौ" (४।५।२६) इत्यनेनैव सिद्धम् , किन्तु यदि एकस्तण्डुलनिश्चायः इत्याद्यर्थं सूत्रं तदा एतदपि विषयीकरोतीति न्यायादुक्तम्-तेनेति। ननु यद्यलो बाधकमिदं सूत्रं तदा सर्वस्मादिति व्याप्तिवचनमनर्थकं स्यात् तद्बलाद् व्यवहितानामपि क्त्यादीनां न कथं बाधकमिति? नैवम् । तदा सर्वस्मादित्यर्थे सर्वत्रेत्यर्थनिर्देशं कुर्यात् , तस्माद् धातुसमानाधिकरणप्रकृतिनिर्देशात् सर्वग्रहणं बोधयति—सूत्रे धातुमात्रश्रुत्या यत् कार्यं प्रतीयते तदेवानेन विधीयते इत्याह—पञ्चम्यन्तादिति। एकस्तण्डुलनिश्चाय इति कर्मणि घञ्। निश्चीयते इति निश्चायः। तण्डुलश्चासौ निश्चायश्चेति तण्डुलनिश्चायः। भावे वा- तण्डुलस्य निश्चायस्तण्डुलनिश्चायः इत्येवं सर्वत्र बोध्यम् ॥११७७।

[समीक्षा]

'एकस्तण्डुलनिश्चायः, द्वौ शूर्पनिष्पावौ' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घञ्' प्रत्यय किया गया है। पाणिनि का सूत्र है—"परिमाणाख्यायां सर्वेभ्यः" (अ० ३।३।२०)। इस प्रकार उभयत्र पूर्णरूपेण समानता ही है।

[विशेष वचन]

१. प्रपञ्चः सुखावहः (दु० टी०)।

२. प्रतिपत्तिरियं गरीयसी (दु० टी०)।

३. सुखार्थं सर्वग्रहणम् (क० च०)।

[रूपसिद्धि]

१. **निश्चायः**। निर् + चि + घञ् + सि। निश्चीयते यः। 'निर्' उपसर्गपूर्वक 'चिञ् चयने' (४।५) धातु से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, इज्वद्भाव, वृद्धि, आयादेश, रेफ को विसर्ग, विसर्ग को शकार तथा विभक्तिकार्य।

२-३. **निष्पावौ।** निर् + पू + घञ् + औ। **अवक्षायः।** अव + क्षि + घञ् + सि। प्रक्रिया पूर्ववत् ।।११७७।

## ११७८. इङाभ्यां च [४।५।६]

[सूत्रार्थ]

सञ्ज्ञा के गम्यमान होने पर कर्तृभिन्न कारक तथा भाव अर्थ में धातु से 'घञ्' प्रत्यय होता है।।११७८।

[दु० वृ०]

इङः आकारान्ताच्च धातोर्घञ् भवति भावेऽकर्तरि च कारके संज्ञायामित्यविशेषेऽयमधिकारो वेदितव्यः। अलोऽपवादः। अध्ययनम् अधीयते वा अध्यायः। उपेत्याधीयते यस्माद् उपाध्यायः, उपाध्याया, उपाध्यायी। इङो घञ् नदादौ विभाषयेति। आकारान्ताच्च-दायः, धायः।।११७८।

[दु० टी०]

इङा०। इङोऽपादाने स्त्रियामुपसङ्ख्यानं कर्तव्यमित्याह—उपाध्यायेति। नदादिपाठबलात् स्त्रियां क्तिर्न भवतीत्यर्थः। उपाध्याया। स्वयमध्यापयित्री ब्रह्मवादिनीत्युच्यते। पुंसः आख्याभूतात्तु नाम्न इत्यनेन उपाध्यायी। उपाध्यायस्य भार्येत्युच्यते, न तु ब्रह्मवादिनीति।।११७८।

[वि० प०]

इङा०। परिमाण इति न वर्तते पूर्वेण सिद्धत्वात् । विवरणलाघवार्थमाह-भाव इत्यादि।।११७८।

[क० च०]

इङा०। उपाध्यायेत्यादि। एतेन इङोऽपादाने स्त्रियामुपसंख्यानमिति दर्शितम्, नदादिपाठबलादेव क्तिप्रत्ययस्य प्रतिषेधः सिद्धः। उपेत्याधीयते यस्या इति विगृह्य घञ् स्वयं व्याख्यात्रीयमुच्यते। यदा तूपाध्यायस्य भार्येत्यर्थो विवक्ष्यते तदा नित्यमुपाध्यायीत्येव भवति।।११७८।

[समीक्षा]

'अध्यायः' शब्द के सिद्ध्यर्थ दोनों ही आचार्य 'घञ्' प्रत्यय करते हैं। पाणिनि का सूत्र है — "इङश्च" (अ० ३।३।२०)। परन्तु आकारान्त 'दा' आदि धातुओं से 'दायः, धायः' आदि शब्दों के सिद्ध्यर्थ कातन्त्रकार ने 'घञ्' प्रत्यय तथा पाणिनि ने 'ण' प्रत्यय किया है। पाणिनि का सूत्र है—"श्याद्व्याधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च" (अ०३।१।१४१)। इस प्रकार 'इङ्' निर्देश में समानता होने पर भी आकारान्त धातुओं के निर्देश में प्रत्ययभिन्नता है। फल की दृष्टि से इस अंश में भी समानता ही समझनी चाहिए।

[रूपसिद्धि]

१-४. अध्याय:। अधि + इङ् + घञ् + सि। अध्ययनम् अधीयते वा। उपाध्याय:। उप + अधि + इङ् + घञ् + सि। उपेत्याधीयते यस्मात् । उपाध्याया। उप+ अधि + इङ् + घञ् + आ + सि। स्वयमध्यापयित्री ब्रह्मवादिनी। उपाध्यायी। उप+ अधि + इङ् + घञ् + ई + सि। उपाध्यायस्य भार्या। अधि तथा 'उप - अधि' उपसर्ग-पूर्वक 'इङ् अध्ययने' (२।५६) धातु से 'घञ्' प्रत्यय, 'इ' को वृद्धि, ''आय्' आदेश, स्त्रीलिङ्ग में 'आ-ई' प्रत्यय तथा विभक्तिकार्य।

५-६. दाय:। दा + आयादेश + घञ् + सि। धाय:। धा + आयादेश + घञ् + सि। 'डु दाञ् दाने—डु धाञ् धारणपोषणयो:' (२।८४,८५) धातुओं से 'घञ्' प्रत्यय, यकारागम तथा विभक्तिकार्य।।११७८।

## ११७९. उपसर्गे रुव: [४।५।७]

[सूत्रार्थ]

उपसर्ग के उपपद में रहने पर 'रु शब्दे' (२।१०) धातु से 'घञ्' प्रत्यय होता है।।११७९।

[दु० वृ०]

उपसर्गे उपपदे रौतेर्घञ् भवति। संराव:, उपराव:। उपसर्ग इति किम् ? रव:। 'सांराविणम्' इत्यत्र इनुण् बाधक:।।११७९।

[दु० टी०]

उप०। सांराविणमित्यादि। **'येन नाप्राप्तौ यो विधिरारभ्यते स तस्य बाधक:'** (व्या० परि०४२) इति, न चाप्राप्तेऽलि घञारभ्यते इनुणि पुन: प्राप्ते चाभिविधौ प्राप्तेऽन्यत्राप्राप्ते तस्मात् परत्वाद् इनुण् एव बाधको न पुनरिनुणं घञ् बाधते इति भाव:।।११७९।

[वि० प०]

उप०। सांराविणम् इति। संरवणं वर्तते इति विगृह्याभिविधौ भावे इनुण्, तदन्ताच्च स्वार्थेऽणि कृते उपसर्गस्य वृद्धि:। अल एव बाधको घञ् तस्मिन् प्राप्तेऽस्यारम्भाद् इनुणि पुनरभिविधौ प्राप्तेऽन्यत्राप्राप्ते अत इनुण् एव परत्वाद् घञं बाधते।।११७९।

[समीक्षा]

'संराव:, उपराव:' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'घञ्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है—''उपसर्गे रुव:'' (अ०३।३।२२)। अत: उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१-२ संरावः । सम् +रु+ घञ् +सि । उपरावः । उप+ रु+घञ् +सि । 'सम् -उप' उपसर्गपूर्वक 'रु शब्दे' (२।१०) धातु से प्रकृत सूत्र द्वारा 'घञ् ' प्रत्यय, उकार को वृद्धि, औकार को 'आव् ' आदेश, मकार को अनुस्वार तथा विभक्तिकार्य ।।११७९ ।

## ११८०. समि दुवः [४।५।८]

[सूत्रार्थ]

'सम् ' उपसर्ग-पूर्वक 'टु दु उपतापे' (४।१०) धातु से 'घञ् ' प्रत्यय होता है ।।११८०।

[दु० वृ०]

सम्युपपदे दुनोतेर्घञ् भवति । सन्दावः । समीति किम् ? दवः ।।११८०।

[समीक्षा]

'संटुवः, संदावः, संयावः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'घञ् ' प्रत्यय किया है । अन्तर यह है कि पाणिनि ने केवल 'सम् ' उपसर्ग के ही उपपद में रहने पर 'द्रु' आदि धातुओं से घञ् प्रत्यय एक ही सूत्र द्वारा किया है - "समि युद्रुदुवः" (अ० ३।३।२३)। कातन्त्रकार ने 'सम् ' उपसर्ग के उपपद में रहने पर केवल 'दु' धातु से तथा 'सम्-उद् ' उपसर्गों के उपपद में रहने पर 'यु-द्रु' धातुओं से 'घञ् 'प्रत्यय करने के कारण दो सूत्र बनाए हैं । अतः कातन्त्रीय निर्देश में उत्कर्ष प्रतीत होता है।

[रूपसिद्धि]

१. सन्दावः। सम् +दु+घञ् + सि । 'सम्' उपसर्गपूर्वक 'टु दु उपतापे' (४।१०) धातु से प्रकृत सूत्र द्वारा 'घञ् ' प्रत्यय, 'घ् -ञ् ' अनुबन्धों का प्रयोगाभाव, उकार को वृद्धि, 'आव् ' आदेश, मकार को अनुस्वार, वर्गान्त आदेश तथा विभक्तिकार्य ।।११८०।

## ११८१. युद्रुवोरुदि च [४।५।९]

[सूत्रार्थ]

'उद्' तथा 'सम् ' उपसर्गों के उपपद में रहने पर 'यु-द्रु' धातुओं से 'घञ् ' प्रत्यय होता है ।।११८१।

[दु० वृ०]

उद्युपपदे समि च युद्रुभ्यां घञ् भवति। उद्यावः, उद्रावः। 'संयावः, संद्रावः' एवेति केचित्। उदि चेति किम्? यवः, द्रवः। अप्यधिकारात् — यावः, द्रावः। 'दावः' इति च स्यात्। तथा शारो वायुः। शारः शबलः, नीशारः प्रावरणम्। ह्रस्वस्य दीर्घता।।११८१।

[दु० टी०]

युद्रु० । 'संयाव:, संद्राव:' एवेति केचिद् इति चेत् तर्हि समि युद्रुदुभ्य: इत्येकयोगं पठन्ति, 'उद्याव:, उद्द्राव:' इति नेच्छन्तीत्यर्थ: । अयं तु प्रयोगमपप्रयोगं मन्यमानो युद्रुवोरुदि चेत्याह— समि दुव इति । अत्राप्यपिशब्दो वर्तते इत्याह- तथेत्यादि । "अकर्तरि च कारके संज्ञायाम्" (४।५।४) इत्यत्राप्यधिकारवशाद् अप्यसिद्धो रूढितो वा ॥११८१ ।

[वि० प०]

यु० । केचिद् इति । 'उद्याव:, उद्द्राव:' इति नेच्छन्तीत्यर्थ: ।अत एव "समि यु-दु-द्रुव:" इति एकयोगं पठन्ति । श्रणातेर्वायुवर्णावरणेष्विति न वक्तव्यमित्याह— तथेति । अप्यधिकारादित्यर्थ: ॥११८१।

[क० च०]

युद्रु० । शबलो वर्णविशेष:। द्रावशब्दस्य गतौ रूढत्वान्न 'द्रुङ् जिघांसायाम्' (४।१७), 'मीङ् द्रुङ् हिंसायाम्' (३।८५) इति दुर्गादित्य:। समुदोर्युद्रुव इति कृते सन्द्राव इति सिध्यति, किन्तु उद्द्राव इति च स्यात् । अथ उद्गतो दाव: इति प्रादिसमासे भविष्यतीति चेत् , नैवम् । तदा 'दुव:' इति कुर्यात् किं समीत्यनेन तस्मात् संग्रहणादेव न प्रादिसमास: ॥११८१।

[समीक्षा]

द्रष्टव्य समीक्षा-सूत्रसंख्या—११८०

[रूपसिद्धि]

१-४. उद्याव:, उद् + यु+ घञ् +सि । उद्द्राव: । उद् + द्रु + घञ् +सि । संयाव:। सम् +यु+घञ् +सि । सन्द्राव: । सम् +द्रु+ घञ् +सि । 'उद् - सम्' उपसर्गपूर्वक 'यु— द्रु' धातुओं से 'घञ्' प्रत्ययादि पूर्ववत् ॥११८१॥

## ११८२. श्रिनीभूभ्योऽनुपसर्गे [४।५।१०]

[सूत्रार्थ]

किसी भी उपसर्ग के उपपद में न रहने पर 'श्रि-नी-भू' धातुओं से 'घञ्' प्रत्यय होता ॥११८२॥

[दु० वृ०]

एभ्योऽनुपसर्गे घञ् भवति। श्राय:,नाय:, भाव:। अनुपसर्ग इति किम्? प्रश्रय:, प्रणय:, प्रभव:। कथं प्रकृष्टो भाव: प्रभाव:, अनुगतो भाव: अनुभाव:, विगतो भाव: विभाव:। अप्यधिकारात् नय इति च॥११८२ ॥

[समीक्षा]

'भाव:' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'घञ्' प्रत्यय किया है । पाणिनि का सूत्र है— "श्रिणीभुवोऽनुपसर्गे" (अ० ३।३।२४) । अत: उभयत्र समानता है ।

[रूपसिद्धि]

१-३. श्रायः। श्रि + घञ् + सि। नायः। नी + घञ् + सि। भावः। भू + घञ् + सि। 'श्रि - नी - भू' धातुओं से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, 'इ - ई-ऊ' की वृद्धि, 'आय् - आव्' आदेश तथा विभक्तिकार्य॥११८२।

## ११८३. क्षुश्रुभ्यां वौ [४।५।११]

[सूत्रार्थ]

'वि' उपसर्ग के उपपद में रहने पर 'क्षु-श्रु' धातुओं से 'घञ्' प्रत्यय होता है॥११८३।

[दु० वृ०]

वावुपपदे आभ्यां घञ् भवति। विक्षावः, विश्रावः। वाविति किम् ? क्षवः, संश्रवः॥११८३।

[समीक्षा]

'विक्षावः, विश्रावः' शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'घञ् ' प्रत्यय का विधान किया है। पाणिनि का सूत्र है—''वौ क्षुश्रुवः'' (अ० ३।३।२५)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-२. विक्षावः। वि + क्षु + घञ् + सि। विश्रावः। वि + श्रु + घञ् + सि। 'वि' उपसर्ग के उपपद में रहने पर 'टु क्षु शब्दे, श्रु श्रवणे' (२।१०;१।२७८) धातुओं से 'घञ्' प्रत्यय, इज्वद्भाव, वृद्धि, 'आव्' आदेश तथा विभक्तिकार्य॥११९३।

## ११८४. स्त्रश्च प्रथनेऽशब्दे [४।५।१२]

[सूत्रार्थ]

शब्दभिन्न के विषय में विस्तार अर्थ विवक्षित होने पर 'स्तृञ् आच्छादने' (८।१०) धातु से 'घञ्' प्रत्यय होता है॥११८४।

[दु० वृ०]

प्रथनं विस्तीर्णता। वावुपपदे स्तृणातेर्घञ् भवति प्रथनेऽभिधेये, तच्चेत् प्रथनं शब्दविषये न स्यात् । पटस्य विस्तारः। अशब्द इति किम् ? वाक्यस्य विस्तरः। प्रथन इति किम् ? तृणस्य विष्टरः॥११८४।

[क० च०]

स्त्रः। ''वेः स्त्रो नाम्नि'' (कात० परि०-ष०१५) इत्यनेन षत्वं सञ्ज्ञायामिति तृणस्य विष्टर इति॥११८४।

[समीक्षा]

'विस्तारः' शब्दरूप के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घञ्' प्रत्यय का विधान

किया गया है। पाणिनि का सूत्र है—"प्रथने वावशब्दे" (अ० ३।३।३३)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. पटस्य विस्तारः। वि + स्तॄ + घञ् + सि। 'वि' उपसर्ग के उपपद में रहने पर 'स्तॄञ् आच्छादने' (८।१०) धातु से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, इज्वद्भाव, वृद्धि तथा विभक्तिकार्य॥११८४।

## ११८५. प्रे चायज्ञे [४।५।१३]

[सूत्रार्थ]

यज्ञभिन्न के विषय में 'प्र' उपसर्ग के उपपद में रहने पर 'स्तॄञ् आच्छादने' (८।१०) धातु से 'घञ्' प्रत्यय होता है॥११८५।

[दु० वृ०]

प्रे चोपपदे स्तृणातेर्घञ् भवति अयज्ञविषये। प्रस्तारः। यज्ञे तु बर्हिःप्रस्तरः॥११८५।

[समीक्षा]

'प्रस्तारः' शब्द के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घञ्' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है—"प्रे स्त्रोऽयज्ञे" (अ०३।३।३२)। अतः उभयत्र समानता है।

[रूपसिद्धि]

१. प्रस्तारः। प्र + स्तॄ + घञ् + सि। 'प्र' उपसर्ग के उपपद में रहने पर 'स्तॄञ् आच्छादने' (८।१०) धातु से 'घञ्' प्रत्यय, इज्वद्भाव, ऋकार की वृद्धि तथा विभक्तिकार्य॥११८५।

## ११८६. छन्दोनाम्नि च [४।५।१४]

[सूत्रार्थ]

छन्दोविषयक सञ्ज्ञा अर्थ में 'स्तॄञ्' धातु से 'घञ्' प्रत्यय होता है॥११८६।

[दु० वृ०]

छन्दसां सञ्ज्ञाविषये स्तृणातेर्घञ् भवति। प्रस्तारपङ्क्तिः । आस्तारपङ्क्तिः। विष्टारपङ्क्तिः॥११८६।

[दु० टी०]

छन्दो०। छन्द इहानुष्टुभादिर्गृह्यते, न तु मन्त्रब्राह्मणो नामग्रहणादन्यथा छन्दसीति विदध्यात् । प्रस्तरणं प्रस्तारस्तस्य पङ्क्तिः प्रस्तारपङ्क्तिः। एवं विष्टारपङ्क्तिः। वेस्तृणातेः संज्ञायां षत्वम्। समुदाय एव छन्दोनाम घञन्तम् । किन्तर्हि घञन्तमवयवः संज्ञायां कथमेतस्मिन् स्तृणादिरादृतः स्यात् । यथा "प्रे चायज्ञे" (४।५।१३) यज्ञविषये चेत् प्रयोगो न भवति बर्हिःप्रस्तरः इति आधारो युज्यते तथा नात्रेति ? सत्यम् , इहापि

समुदायावयवयोरन्यत्वात् । यथा वृक्षे शाखा, शरीरे पाणिपादमिति समुदाये समुदायिनो भवत्याधेयता इत्यदोषः॥११८६।

[वि० प०]

छन्दो०। वृत्तमिह छन्दो गृह्यते, यस्यानुष्टुभादयो भेदाः, न तु मन्त्रब्राह्मणाः नामग्रहणात् । अन्यथा छन्दसीत्येवं ब्रूयात् । एवमपि मन्त्रब्राह्मणस्य ग्रहणं लभ्यते। यथा सहश्छन्दसीति। प्रस्तरणं प्रस्तारस्तस्य पङ्क्तिरिति। एवं विष्टारपङ्क्तिरिति। वेः स्तृणातेः संज्ञायां षत्वं सञ्ज्ञा च न घञ्मात्रम् , अपि तु समुदायः। अत एव छन्दोनाम्नीत्यधिकरणे सप्तमी। तत्र घञन्तोऽवयवः आधेयत्वेन प्रवर्तते। अत उक्तं छन्दसां सञ्ज्ञाविषय इति, न तु गम्यमाने छन्दोनाम्नीति घञन्तमात्रे तस्याप्रतीतेः॥११८६।

[क० च०]

छन्दो०। न तु मन्त्रब्राह्मण इति। अथ मन्त्रब्राह्मणशब्देन वेद उच्यते, यदि रूढ्याश्रयणाच्छन्दसीत्युक्ते वृत्त एव भविष्यति तदा सुखार्थं नामग्रहणम् ॥११८६।

[समीक्षा]

'विष्टारपङ्क्तिः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घञ्' प्रत्यय किया गया है। पाणिनि का सूत्र है-"छन्दोनाम्नि च" (अ० ३।३।३४)। अतः उभयत्र समानता ही है।

[विशेष वचन]

१. छन्द इहानुष्टुभादिर्गृह्यते (दु० टी०)।

२. वृत्तमिह छन्दो गृह्यते (वि० प०)।

३. सुखार्थं नामग्रहणम् (क० च०)।

[रूपसिद्धि]

१-३. प्रस्तारपङ्क्तिः। प्र + स्तृ + घञ् + सि। आस्तारपङ्क्तिः। आ + स्तृ + घञ् + सि। विष्टारपङ्क्तिः। वि + स्तृ + घञ् + सि। 'प्र - आ - वि' उपसर्गों के उपपद में रहने पर 'स्तृ' धातु से 'घञ्' प्रत्यय, इज्वद्भाव, ऋकार को वृद्धि तथा विभक्तिकार्य॥११८६।

## ११८७. प्रे द्रुस्तुस्रुवः [४।५।१५]

[सूत्रार्थ]

'प्र' उपसर्ग के उपपद में रहने पर 'द्रु-स्तु-स्रु' धातुओं से 'घञ्' प्रत्यय होता है॥११८७।

[दु० वृ०]

'प्र' - उपपदे एभ्यो घञ् भवति। प्रद्रावः, प्रस्तावः, प्रस्रावः। कथं द्रावः? अप्यधिकारात् । प्र-इति किम् ? द्रवः, स्तवः, स्रवः॥११८७।

[समीक्षा]

'प्रस्ताव:' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घञ्' प्रत्यय किया गया है। पाणिनि का सूत्र है—"प्रे द्रुस्तुस्रुव:" (अ० ३।३।२७)। अत: उभयत्र पूर्ण समानता है।

[रूपसिद्धि]

१-३. **प्रद्राव:**। प्र + द्रु + घञ् + सि। **प्रस्ताव:**। प्र + स्तु + घञ् + सि। **प्रस्राव:**। प्र + स्रु + घञ् + सि। 'प्र' उपसर्गपूर्वक 'द्रु-स्तु-स्रु' धातुओं से घञ् प्रत्यय, धातुघटित उकार की वृद्धि, आव्-आदेश तथा विभक्तिकार्य।।११८७।

## ११८८. नियोऽवोदो: [४।५।१६]

[सूत्रार्थ]

'अव - उद्' उपसर्गों के उपपद में रहने पर 'णीञ् प्रापणे' (१।६००) धातु से 'घञ्' प्रत्यय होता है।।११८८।

[दु० वृ०]

अवोदोरुपपदयोर्नियो घञ् भवति। अवनाय:, उन्नाय:। कथम् उन्नय:? उद्गतो नय: उन्नय:, अप्यधिकाराद् वा।।११८८।

[क० च०]

निय:। हेमकरमते 'उन्नय:' इति, अप्यधिकाराद् वेति वृत्तौ पाठ:। बहुपुस्तके तु 'उद्गतो नय: उन्नय:' इति वृत्तौ तु पाठो नास्य सम्मत:।।११८८।

[समीक्षा]

'उन्नाय:' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'घञ्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है—"अवोदोर्निय:" (अ० ३।३।२६)। अत: उभयत्र समानता है।।११८८।

[रूपसिद्धि]

१-२. **अवनाय:**। अव + नी + घञ् + सि। **उन्नाय:**। उद् + नी + घञ् + सि। 'अव - उद्' उपसर्गों के उपपद में रहने पर 'णीञ् प्रापणे' (१।६००) धातु से 'घञ्' प्रत्यय, 'घ् - ञ्' अनुबन्धों का प्रयोगाभाव, इज्वद्भाव, धातुघटित ईकार की वृद्धि, ऐकार को 'आय्' आदेश तथा विभक्तिकार्य।।११८८।

## ११८९. निरभ्यो: पूल्वो: [४।५।१७]

[सूत्रार्थ]

'निर् - अभि' उपसर्गों के उपपद में रहने पर 'पूञ् पवने, लूञ् छेदने' (८।८,९) धातुओं से 'घञ्' प्रत्यय होता है।।११८९।

[दु० वृ०]

निरभ्योरुपपदयोर्यथासङ्ख्यं पूल्वोर्घञ् भवति। निष्पावः, अभिलावः॥११८९।

[समीक्षा]

'निष्पावः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घञ्' प्रत्यय किया गया है। पाणिनि का सूत्र है—"निरभ्योः पूल्वोः" (अ० ३।३।२८)। अतः उभयत्र समानता ही है॥११८९।

[रूपसिद्धि]

१-२. **निष्पावः।** निर् + पू + घञ् + सि। **अभिलावः।** अभि + लू + घञ् + सि। 'निर् + अभि' उपसर्गों के उपपद में रहने पर 'पू - लू' धातुओं से 'घञ्' प्रत्यय धातुघटित ऊकार की वृद्धि, औकार को 'आव्' आदेश तथा विभक्तिकार्य॥११८९।

## ११९०. यज्ञे समि स्तुवः [४।५।१८]

[सूत्रार्थ]

यज्ञ के विषय में 'सम्' उपसर्ग के उपपद में रहने पर 'ष्टुञ् स्तुतौ' (२।६५) धातु से 'घञ्' प्रत्यय होता है॥११९०।

[दु० वृ०]

सम्युपपदे स्तौतेर्घञ् भवति यज्ञविषये। समेत्य स्तुवन्ति यस्मिन् संस्तावो देशः। संस्तवोऽन्यः॥११९०।

[समीक्षा]

यज्ञविषयक देशविशेष के अर्थ में 'संस्तावः' शब्द के सिद्ध्यर्थ दोनों ही आचार्यों ने 'घञ्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है—"यज्ञे समि स्तुवः" (अ० ३।३।३१)। अतः यहाँ उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१. **संस्तावो देशः।** सम् + स्तु + घञ् + सि। समेत्य स्तुवन्ति यस्मिन्। 'सम्' उपसर्ग के उपपद में रहने पर 'ष्टुञ् स्तुतौ' (२।६५) धातु से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, इज्वद्भाव, धातुघटित उकार की वृद्धि, आव् - आदेश तथा विभक्तिकार्य॥११९०।

## ११९१. उन्न्योर्ग्रिः [४।५।१९]

[सूत्रार्थ]

'उद्' एवं 'नि' उपसर्ग के उपपद में रहने पर 'गॄ निगरणे' (५।२२) धातु से 'घञ्' प्रत्यय होता है॥११९१।

[दु० वृ०]

उन्न्योरुपपदयोर्गिरतेर्घञ् भवति। उद्गारः, निगारः। उन्न्योरिति किम्? गरः॥११९१।

[क० च०]

उन्यो०। गिर इति। 'गॄ निगरणे' (५।२२) इत्यस्य तिब्लोपं कृत्वा निर्देशः। तेन गृशब्देऽस्य उद्गरः इति भवति॥११९१।

[समीक्षा]

'उद्गारः, निगारः' शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घञ्' प्रत्यय किया गया है। पाणिनि का सूत्र है—"उन्योर्ग्रः" (अ० ३।३।२९)। अतः उभयत्र समानता ही है॥

[रूपसिद्धि]

१-२. उद्गारः। उद् + गॄ + घञ् + सि। निगारः। नि + गॄ + घञ् + सि। 'उद् - नि' के उपपद में रहने पर 'गॄ निगरणे, गॄ शब्दे' (५।२२;८।२२) धातु से 'घञ्' प्रत्यय, इज्वद्भाव, ॠकार की वृद्धि तथा विभक्तिकार्य॥११९१।

# ११९२. किरो धान्ये [४।५।२०]

[सूत्रार्थ]

धान्यविषयक अर्थ की विवक्षा में 'उद् - नि' के उपपद में रहने पर 'कॄ विक्षेपे' (५।२१) धातु से 'घञ्' प्रत्यय होता है॥११९२।

[दु० वृ०]

उन्योरुपपदयोर्धान्यविषये वर्तमानात् किरतेर्घञ् भवति। उत्कारो धान्यस्य, निकारो धान्यस्य। धान्य इति किम् ? पुष्पोत्करः, पुष्पनिकरः। किरतेरिति किम् ? 'कॄञ् हिंसायाम्' (८।११)- धान्यनिकरः॥११९२।

[वि० प०]

किरो०। किर इति। 'कॄ विक्षेपे' (५।२१) इत्यस्य सविकरणस्य तिब्लोपं कृत्वा निर्देशः सूत्रत्वादित्याह—किरतेरिति। उत्कारो धान्यस्येति। विक्षेपो धान्यस्येत्यर्थः। विषयसप्तमीयमुत्तरत्र। अभिधेयसप्तम्येवाभिधीयते॥११९२।

[समीक्षा]

'उत्कारः, निकारः' शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'घञ्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है—"कॄ धान्ये" (अ० ३।३।३०)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. उत्कारो धान्यस्य। उद् + कॄ + घञ् + सि। निकारो धान्यस्य। नि + कॄ + घञ् + सि। 'उद् -नि' के उपपद में रहने पर 'कॄ विक्षेपे' (५।२१) धातु से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, इज्वद्भाव, वृद्धि तथा विभक्तिकार्य॥११९२।

## ११९३. नौ वृञः [४।५।२१]

[सूत्रार्थ]

धान्य - विषय के विवक्षित होने तथा 'नि' उपसर्ग के उपपद में रहने पर 'वृञ् वरणे' (४।८) धातु से 'घञ्' प्रत्यय होता है॥११९३।

[दु० वृ०]

नावुपपदे वृञो धातोर्घञ् भवति धान्यविषये। नीवारा व्रीहयः। ह्रस्वस्य दीर्घता॥११९३।

[दु० टी०]

नौ०। पूर्वसूत्रे विषयसप्तमी इहाभिधेयसप्तमीत्यभिधानादवसीयते। निव्रियन्त इति नीवाराः। केचिद् व्रीहिविशेषा उच्यन्ते न सर्वधान्यानि। धान्याभिधान एव निव्रियतेऽसाविति निवरा कन्या। स्वभावादलन्तमपि स्त्रियां वर्तते॥११९३।

[वि० प०]

नौ०। विशिष्टा एव व्रीहयो नीवारा उच्यन्ते न तु सर्वे। धान्यादन्यत्र न भवति। निव्रियते इति निवरा कन्या। स्वभावादलन्तस्यापि स्त्रियां वृत्तिः॥११९३।

[क० च०]

नौ०। नीवारा उडीति यस्य ख्यातिः॥११९३।

[समीक्षा]

'नीवाराः' शब्द की सिद्धि दोनों ही व्याकरणों में 'घञ्' प्रत्यय द्वारा की गई है। पाणिनि का सूत्र है — "नौ वृ धान्ये" (अ०३।३।४८)। अतः उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१. नीवारा व्रीहयः। नि + वृञ् + घञ् + जस्। निव्रियन्ते। 'नि' उपसर्ग के उपपद में रहने पर 'वृञ् वरणे' (४।८) धातु से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, 'घ् - ञ्' अनुबन्धों का प्रयोगाभाव, इज्वद्भाव, वृद्धि, उपसर्ग को दीर्घ तथा विभक्तिकार्य॥११९३।

## ११९४. उदि श्रिपुवोः [४।५।२२]

[सूत्रार्थ]

'उत्' उपसर्ग के उपपद में रहने पर 'श्रिञ् सेवायाम्' (१।६०४) तथा 'पूङ् पवने' (१।४६५) धातु से 'घञ्' प्रत्यय होता है॥११९४।

[दु० वृ०]

उद्युपपदे श्रिपूङ्भ्यां घञ् भवति। उच्छ्रायः, उत्पावः। कथम् उच्छ्रयः? अप्यधिकाराद् वा॥११९४।

[वि० प०]

उदि०। अप्यधिकाराद् वेति, उद्गतो वा श्रय: उच्छ्रय: इति वाशब्दार्थ:॥११९४।

[समीक्षा]

'उच्छ्राय:, उत्पाव:' शब्दों की सिद्धि दोनों ही आचार्यों ने 'घञ्' प्रत्यय द्वारा की है। पाणिनि का सूत्र है—"उदि श्रयतियौतिपूद्रुव:" (अ० ३।३।४९)। अत: उभयत्र समानता है।

[रूपसिद्धि]

१-२. उच्छ्राय:। उद् + श्रि + घञ् + सि। उत्पाव:। उद् + पू + घञ् + सि। 'उद्' उपसर्गपूर्वक 'श्रि-पू' धातुओं से 'घञ्' प्रत्यय, इज्वद्भाव, वृद्धि, 'आय् - आव्' आदेश तथा विभक्तिकार्य॥११९४।

## ११९५. ग्रहेश्च [४।५।२३]

[सूत्रार्थ]

'उद्' उपसर्ग के उपपद में रहने पर 'ग्रह उपादाने' (८।१४) धातु से 'घञ्' प्रत्यय होता है॥११९५।

[दु० वृ०]

उद्युपपदे ग्रहेश्च घञ् भवति। उद्ग्राह:। भाषायामपीति मतम् ॥११९५।

[दु० टी०]

ग्रह०। उत्पूर्वो ग्रहिर्भाषायां सम्मत इति कात्यायन:। अन्य: पुनराह—उद्ग्राहो निग्राह इति छन्दसि—"उद्ग्राहं च निग्राहं च ब्रह्मवेदानवीवदन्' इति छन्दसि प्रयोगो दृश्यते॥११९५।

[समीक्षा]

'उद्ग्राह:' शब्द के सिद्ध्यर्थ दोनों ही आचार्यों ने 'घञ्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है—"उदि ग्रह:" (अ० ३।३।३५)। अत: उभयत्र समानता ही समझनी चाहिए।

[रूपसिद्धि]

१. उद्ग्राह:। उद् + ग्रह् + घञ् + सि। 'उद्' उपसर्गपूर्वक 'ग्रह उपादाने' (८।१४) धातु से 'घञ्' प्रत्यय, इज्वद्भाव, दीर्घ तथा विभक्तिकार्य॥११९५।

---

१. उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् (का० वृ० ३।३।३५)।

## ११९६. अवन्योराक्रोशे [४।५।२४]

[सूत्रार्थ]

'आक्रोश' अर्थ के गम्यमान होने पर 'अव-नि' उपसर्ग-पूर्वक 'ग्रह उपादाने' (८।१४) धातु से 'घञ्' प्रत्यय होता है॥११९६।

[दु० वृ०]

अवन्योरुपपदयोराक्रोशे गम्यमाने ग्रहेर्घञ् भवति। अवग्राहस्ते वृषल ! भूयात्। निग्राहस्ते वृषल ! भूयात्। आक्रोश इति किम् ? अवग्रहः पदस्य, निग्रहश्चौरस्य॥११९६।

[समीक्षा]

'अवग्राहः, निग्राहः' शब्दों की सिद्धि दोनों ही आचार्यों ने 'घञ्' प्रत्यय द्वारा की है। पाणिनि का सूत्र है—"आक्रोशेऽवन्योर्ग्रहः" (अ० ३।३।४५)।अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-२. **अवग्राहः**। अव + ग्रह् + घञ् + सि। **निग्राहः**। नि + ग्रह + घञ् + सि। 'अव-नि' उपसर्गों के उपपद में रहने पर 'ग्रह' धातु से 'घञ्' प्रत्यय, इज्वद्भाव, धातुघटित उपधा अकार को दीर्घ तथा विभक्तिकार्य॥११९६।

## ११९७. प्रे लिप्सायाम् [४।५।२५]

[सूत्रार्थ]

'लिप्सा' अर्थ के गम्यमान होने पर 'प्र' उपसर्ग-पूर्वक 'ग्रह' धातु से 'घञ्' प्रत्यय होता है॥११९७।

[दु० वृ०]

प्र उपपदे लिप्सायां गम्यमानायां ग्रहेर्घञ् भवति। पात्रप्रग्राहेण चरति भिक्षुः। लिप्सायामिति किम् ? प्रग्रहः॥११९७।

[क० च०]

प्रे०। पात्रप्रग्राहेणेति। तृतीयानिर्देशे सति लिप्सा स्फुटेति कृत्वा तृतीया कृता॥११९७।

[समीक्षा]

'प्रग्राहः' शब्द के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घञ्' प्रत्यय किया गया है। पाणिनि का सूत्र है—"प्रे लिप्सायाम्" (अ० ३।३।४६)। अतः उभयत्र समानता है।

[रूपसिद्धि]

१. **प्रग्राहेण**। प्र + ग्रह + घञ् + टा। 'प्र' उपसर्ग के उपपद में रहने पर 'ग्रह उपादाने' (८।१४) धातु से 'घञ्' प्रत्यय, इज्वद्भाव, धातुघटित उपधा को दीर्घ तथा विभक्तिकार्य॥११९७।

## ११९८. समि मुष्टौ [४।५।२६]

[सूत्रार्थ]

'मुष्टि' अर्थ में 'सम्' उपसर्ग के उपपद में रहने पर 'ग्रह उपादाने' (८।१४) धातु से 'घञ्' प्रत्यय होता है॥११९८।

[दु० टी०]

सम्युपपदे मुष्टावर्थे ग्रहेर्घञ् भवति। संग्राहो मल्लस्य। मुष्टाविति किम् ? संग्रहः। अङ्गुलीनां रचनाविशेषो मुष्टिरिह गृह्यते। एकः शाकसंग्राहः इति "सर्वस्मात् परिमाणे" (४।५।५) इति सिद्धम् ॥११९८।

[दु० टी०]

समि०। मुष्टेरक्रियात्मकत्वात् तत्र ग्रहेर्वृत्तिर्नास्तीत्याह—मुष्टावर्थ इति। अन्य आह—मुष्टिविषयश्च धात्वर्थो भवति। मुष्टिविषयं सामर्थ्यमाख्यायते इत्यर्थः। मुष्टिशब्दो व्रीह्यादीनां परिमाणवाच्योऽस्ति, तत्र न प्रयोजयतीत्याह—अङ्गुलीनामित्यादि॥११९८।

[वि० प०]

समि०। शाकादीनां परिमाणविशेषो मुष्टिरुच्यते। तत्र घञ् सिद्ध एवेत्याह—एक इत्यादि॥११९८।

[समीक्षा]

'संग्राहः' शब्द की सिद्धि दोनों ही आचार्यों ने 'घञ्' प्रत्यय द्वारा की है। पाणिनि का सूत्र है—"समि मुष्टौ" (अ०३।३।३६)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. संग्राहो मल्लस्य। सम् + ग्रह + घञ् + सि। 'सम्' उपसर्ग के उपपद में रहने पर 'ग्रह उपादाने' (८।१४) धातु से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, इज्वद्भाव, उपधादीर्घ तथा विभक्तिकार्य॥११९८।

## ११९९. परौ यज्ञे [४।५।२७]

[सूत्रार्थ]

यज्ञ - विषय के विवक्षित होने तथा 'परि' उपसर्ग के उपपद में रहने पर 'ग्रह' धातु से 'घञ्' प्रत्यय होता है॥११९९।

[दु० वृ०]

परावुपपदे यज्ञविषये ग्रहेर्घञ् भवति। उत्तरपरिग्राहः। यज्ञ इति किम् ? परिग्रहः॥११९९।

[समीक्षा]

'उत्तरपरिग्राहः' आदि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'घञ्' प्रत्यय किया है। पाणिनि का सूत्र है—"परौ यज्ञे" (अ०३।३।४७)। अतः उभयत्र समानता ही कही जा सकती है।

[रूपसिद्धि]

१. उत्तरपरिग्राहः। परि + ग्रह् + घञ् + सि। 'परि' के उपपद में रहने पर 'ग्रह उपादाने' (८।१४) धातु से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, इज्वद्भाव, उपधादीर्घ तथा विभक्तिकार्य॥११९९।

## १२००. वाऽवे वर्षप्रतिबन्धे [४।५।२८]

[सूत्रार्थ]

वृष्टि-प्रतिबन्ध अर्थ में 'अव' उपसर्ग के उपपद में रहने पर 'ग्रह्' धातु से वैकल्पिक 'घञ्' प्रत्यय होता है॥१२००।

[दु० वृ०]

अव उपपदे ग्रहेर्घञ् भवति वा वर्षप्रतिबन्धे गम्यमाने। अवग्राहो वर्षस्य अवग्रहो वा॥१२००।

[समीक्षा]

'अवग्राहः, अवग्रहः' शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने वैकल्पिक 'घञ्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है—"अवे ग्रहो वर्षप्रतिबन्धे" (अ० ३।३।५१)। अतः उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१. अवग्राहो वर्षस्य अवग्रहो वा। अव + ग्रह् + घञ् + सि। 'अव' उपसर्ग के उपपद में रहने पर 'ग्रह उपादाने' (८।१४) धातु से प्रकृत सूत्र द्वारा वैकल्पिक 'घञ्' प्रत्यय, इज्वद्भाव, उपधादीर्घ तथा विभक्तिकार्य। पक्ष में 'अल्' प्रत्यय होने पर 'अवग्रहः' शब्दरूप सिद्ध होता है॥१२००।

## १२०१. प्रे रश्मौ [४।५।२९]

[सूत्रार्थ]

'रश्मि' अर्थ में 'प्र' के उपपद में रहने पर 'ग्रह्' धातु से वैकल्पिक 'घञ्' प्रत्यय होता है॥१२०१।

[दु० वृ०]

प्र उपपदे रश्मावर्थे ग्रहेर्घञ् भवति वा। प्रग्राहः, प्रग्रहः। रश्मिरिह रज्जुरुच्यते॥१२०१।

[क० च०]

प्रे०। अभिधानाद् रश्मिरिह रज्जुरुच्यते न किरण इति॥१२०१।

[समीक्षा]

'प्रग्राहः, प्रग्रहः' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में वैकल्पिक 'घञ्' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है—"रश्मौ च" (अ०३।३।५३)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. प्रग्राहः, प्रग्रहः। प्र + ग्रह् + घञ् + सि। 'प्र' के उपपद में रहने पर 'ग्रह्' धातु से वैकल्पिक 'घञ्' प्रत्यय, इज्वद्भाव, उपधादीर्घ तथा विभक्तिकार्य। पक्ष में अल् प्रत्यय होने पर 'प्रग्रहः' शब्दरूप॥१२०१।

## १२०२. वणिजां च [४।५।३०]

[सूत्रार्थ]

वणिक्सम्बन्धी तुलासूत्र अर्थ में 'प्र' उपसर्ग के उपपद में रहने पर 'ग्रह' धातु से वैकल्पिक 'घञ्' प्रत्यय होता है॥१२०२।

[दु० वृ०]

वणिजां सम्बन्धिनि तुलासूत्रेऽर्थे प्र उपपदे ग्रहेर्घञ् भवति वा। तुलाप्रग्राहेण चरति, तुलाप्रग्रहेण वा चरति वणिक्॥१२०२।

[दु० टी०]

वणि०। वणिजामिति सम्बन्धे षष्ठी सम्बन्धिनामाक्षिपति। तच्च विशिष्टमेवाभिधानादित्याह—तुलासूत्रेऽर्थे इति। प्रगृह्यतेऽनेनेति प्रग्राहः, तुलया प्रग्राहस्तुलाप्रग्राहः, करणे चेयं तृतीया, न चात्र वणिजस्तन्त्रं किन्तर्हि तुलासूत्रस्य प्रायेण वणिजां विषय इति तैरुपलक्षणं क्रियते तेन तुलाप्रग्राहेण चरति। ब्राह्मणस्तुलाभिज्ञतया प्रवर्तते इत्यर्थः। उपलक्षणमप्यभिधानाद् यथा पूर्वसूत्रे रश्मी रज्जुरेवाभिधीयते न चन्द्रादीनां किरण इति॥१२०२।

[वि० प०]

वणिजाम्०। सम्बन्धे षष्ठीयम् । प्रायेण वणिक्सम्बन्धितुलासूत्रमेवान्तरङ्गम् । अतस्तदेव लक्ष्यते वणिजश्चोपलक्षणत्वादतन्त्रम् । अतस्तुलाप्रग्राहेण चरति ब्राह्मणः इत्यपि भवति, तुलाभिज्ञतया वर्तते इत्यर्थः। प्रगृह्यते येन स प्रग्राहः, तुलायाः प्रग्राहस्तुलाप्रग्राहस्तुलाग्रहणसूत्रमित्यर्थः॥१२०२।

[समीक्षा]

'प्रग्राहः, प्रग्रहः' शब्दरूपों की सिद्धि दोनों ही आचार्यों ने वैकल्पिक 'घञ्' प्रत्यय द्वारा की है। पाणिनि का सूत्र है—"प्रे वणिजाम्" (३।३।५२)। अतः उभयत्र पूर्ण समानता है।

[रूपसिद्धि]

१. तुलाप्रग्राहेण चरति तुलाप्रग्रहेण वा। प्र + ग्रह् + घञ् + टा। 'प्र' उपसर्ग के उपपद में रहने पर 'ग्रह उपादाने' (८।१४) धातु से प्रकृत सूत्र द्वारा वैकल्पिक 'घञ्' प्रत्यय, इज्वद्भाव, उपधादीर्घ तथा विभक्तिकार्य। पक्ष में 'अल्' प्रत्यय होने पर 'प्रग्रहेण' शब्दरूप सिद्ध होता है॥१२०२।

## १२०३. वृणोतेराच्छादने [४।५।३१]

[सूत्रार्थ]

आच्छादन अर्थ के विवक्षित होने पर 'प्र' के उपपद में रहने पर 'वृञ् वरणे' (४।८) धातु से वैकल्पिक 'घञ्' प्रत्यय होता है।।१२०३।

[दु० वृ०]

प्र उपपदे वृणोतेराच्छादनेऽर्थे घञ् भवति वा। प्रावारः, प्रावरः। आङ्पूर्वोऽयम् ।।१२०३।

[दु० टी०]

वृणो०। आङ्पूर्वोऽयमिति। यथा प्रेण विना घञ् नाभिधीयते तथाऽऽङापि। तस्माद् "आङि रुप्लुवोः" (४।५।३२), तदनन्तरं वृणोतेराच्छादने इति कर्तुं न युक्तम् , व्यावृत्त्यभावात् ।।१२०३।

[क० च०]

वृणोतेः। आङ्पूर्वोऽयमिति आङा विना केवले प्रे उपपदे घञ् नाभिधीयते इति भावः। प्रकरणमिदमलो बाधकम् ।।१२०३।

[समीक्षा]

'आच्छादन' अर्थ में 'प्रावारः, प्रावरः' शब्दों की सिद्धि दोनों ही व्याकरणों में वैकल्पिक 'घञ्' प्रत्यय द्वारा की गई है। पाणिनि का सूत्र है—"वृणोतेराच्छादने" (अ०३।३।५४)। अतः उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१. प्रावारः, प्रावरः। प्र + आङ् + वृ + घञ् + सि। 'प्र' पूर्वक 'वृञ् वरणे' (४।८) धातु से वैकल्पिक 'घञ्' प्रत्यय, वृद्धि, समानलक्षण दीर्घ तथा विभक्तिकार्य। पक्ष में 'अल्' प्रत्यय होने पर 'प्रावरः' शब्दरूप सिद्ध होता है।।१२०३।

## १२०४. आङि रुप्लुवोः [४।५।३२]

[सूत्रार्थ]

'आङ्' उपसर्ग के उपपद में रहने पर 'रु शब्दे, प्लुङ् गतौ' (२।१०;१।४५९) धातुओं से वैकल्पिक 'घञ्' प्रत्यय होता है।।१२०४।

[दु० वृ०]

आङ्युपपदे रौतेः प्लवतेश्च घञ् भवति वा। आरावः, आरवः। आप्लावः, आप्लवः।।१२०४।

[दु० टी०]

आङि। "उपसर्गे रुवः" (४।५।७) इति रौतेर्घञि प्राप्ते प्लवतेरप्राप्ते विभाषेयम् ।।१२०४।

[समीक्षा]

'आराव:, आप्लाव:' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घञ्' प्रत्यय किया गया है। पाणिनि का सूत्र है—"विभाषा आङि रुप्लुवोः" (अ० ३।३।५०)। अत: उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१-२. आराव:, आरव:। आङ् + रु + घञ् + सि। आप्लाव:, आप्लव:। आङ् + प्लु + घञ् + सि। 'आङ्' उपसर्गपूर्वक 'रु-प्लु' धातुओं से 'घञ्' प्रत्यय, इज्वद्भाव, वृद्धि, आव् - आदेश तथा विभक्तिकार्य। घञ् प्रत्यय के अभाव में अल् प्रत्यय होने पर 'आरव:, आप्लव:' शब्दरूप॥१२०४।

## १२०५. परौ भुवोऽवज्ञाने [४।५।३३]

[सूत्रार्थ]

अवज्ञान अर्थ में 'परि' उपसर्ग के उपपद में रहने पर 'भू' धातु से 'घञ्' प्रत्यय विकल्प से होता है॥१२०५।

[दु० वृ०]

परावुपपदे भवतेर्घञ् भवति वा अवज्ञानेऽर्थे। परिभाव:, परिभव:। पराविति किम्? सम्भव:। अवज्ञान इति किम् ? सर्वतो भवनं परिभव:॥१२०५।

[समीक्षा]

'परिभाव:, परिभव:' शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने वैकल्पिक 'घञ्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है—"परौ भुवोऽवज्ञाने" (अ० ३।३।५५)। अत: उभयत्र समानता ही है।

[रूपसिद्धि]

१. परिभाव:, परिभव:। परि + भू + घञ् + सि। 'परि' उपसर्ग के उपपद में रहने पर 'भू सत्तायाम्' (१।१) धातु से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, इज्वद्भाव, धातुघटित ऊकार की वृद्धि, आव्-आदेश तथा विभक्तिकार्य। 'घञ्' प्रत्यय के अभाव में अल् प्रत्यय होने पर 'परिभव:' शब्दरूप॥१२०५।

## १२०६. चेस्तु हस्तादाने [४।५।३४]

[सूत्रार्थ]

हाथ द्वारा ग्रहण करने के अर्थ में 'चिञ् चयने' (४।५) धातु से 'घञ्' प्रत्यय होता है॥१२०६।

[दु० वृ०]

हस्तादानविषये चिनोतेर्घञ् भवति। पुष्पप्रचाय:। हस्तादानग्रहणं प्रत्यासत्त्योपलक्षणम्,

तेन वृक्षाग्रे फलप्रचयं करोति। अप्यधिकारात् स्तेये न स्यात् - हस्तेन फलप्रचयं करोति चौरः। तुशब्दो वानिवृत्त्यर्थः॥१२०६।

[दु० टी०]

चेस्तु। हस्तेन आदानं हस्तादानम्, ग्राह्यस्य वस्तुन इति सम्बन्धः। चिनोत्यर्थस्य हस्तादानविषयत्वाच्चिनोतिस्तद्विषय उच्यते। प्रत्यासन्नोपलक्षणमिति। प्रत्यासन्नस्य वस्तुन उपलक्षणम्। प्रत्यासत्तिः सामीप्यम् । तेनेत्यादि। केचित् प्रचय इत्युदाहरन्ति, तैः प्रचयनमात्रमेव विवक्षितं न तु दूरासन्न इति। स्तेये न स्यादिति स्तेनस्य भावः कर्म वा स्तेयशब्दवाच्यम् । स्तेय इत्यनेनापि चिनोत्यर्थ एवावशिष्यते, स्तेये न भवतीत्यर्थः। यदि वा फलप्रचयं स्तेये न करोति तदापि न स्यात् । ननु यदा भावस्तदा भाव एव विशेषणं प्रसज्यते, यदा कर्म तदा कथं तेनैव तत् क्रियते ? सत्यम् । अभेदोपचाराद् यदाभीक्ष्ण्येन पाकेन पचति मन्दया गत्या गच्छतीति॥१२०६।

[वि० प०]

चेस्तु। हस्तादानेत्यादि। हस्तेनोपायान्तरनिरपेक्षेणादानं ग्रहणं प्रत्यासन्नस्यैव वस्तुनो भवति, अतस्तस्यैव तदुपलक्षणं युज्यते। वृक्षाग्रे इत्यनेन ग्राह्यस्य प्रत्यासन्नतां सूचयति॥१२०६।

[समीक्षा]

'प्रचायः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घञ्' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है—"हस्तादाने चेरस्तेये" (अ० ३।३।४०)। अतः उभयत्र समानता ही है॥

[रूपसिद्धि]

१. पुष्पप्रचायः। प्र +चिञ् + घञ् + सि। 'प्र' उपसर्ग के उपपद में रहने पर 'चिञ् चयने' (४।५) धातु से 'घञ्' प्रत्यय, इज्वद्भाव, वृद्धि, आय् - आदेश तथा विभक्तिकार्य॥१२०६।

## १२०७. शरीरनिवासयोः कश्चादेः [४।५।३५]

[सूत्रार्थ]

'शरीर' तथा 'निवास' अर्थ में 'चिञ् चयने' (४।५) धातु से 'घञ्' प्रत्यय तथा चकार को ककारादेश भी होता है॥१२०७।

[दु० वृ०]

चिनोतेः शरीरे निवासे चार्थे घञ् भवति आदेश्च को भवति। चीयतेऽसौ कायः शरीरम् । निचीयतेऽस्मिन्निति निकायो निवासः। अप्यधिकाराच्चितिराश्योरपि। आचीयतेऽसौ आकायश्चितिः, गोमयनिकायः। कथं काष्ठनिचयः? बहुत्वमात्रविवक्षयेति॥१२०७।

[दु० टी०]

शरीर०। चीयते सुखदु:खाभ्यामित्यर्थ:। निचीयतेऽस्मिन्निति प्राणिभिरित्यर्थ:। अप्यधिकारादित्यादि। अप्यधिकारादित्यादि। चीयतेऽसाविति चिति:, राशि: समूह:, निचीयतेऽस्मिन्निति। गोमयानां निकाय इति षष्ठीसमास:। कथमित्यादि। उपर्युपरि संनिविष्टानां राशिरिति भाव:। पदान्तरेण तु विशिष्यमाणे बहुत्वे राश्यर्थो गम्यते न वाक्यार्थ:। पदसंस्कारेऽधिक्रियते इति सूत्रकारस्य सम्मतम्। भाषायां चितिराश्योरर्थयोर्न प्रयोग:। कश्चेति सिद्धे आदिग्रहणं वैचित्र्यार्थम्। अथ चेच्यम् इत्यस्य चेक्रीयित-लुगन्तस्यादेर्यथा स्यात् परस्य मा भूदिति। तत्र, छन्दसि प्रयोगात्। अथ 'कि कित ज्ञाने' (२।७६) इत्यस्माद् घञ् विधीयताम्, कश्चादेरित्यनभिधेयं स्यात्, न ज्ञानार्थस्य शरीरादौ वृत्तिरदृष्टकल्पनीया स्यात् ॥१२०७।

[क० च०]

शरीर०। चितिरिति चिता यस्य ख्यातिरिति॥१२०७।

[समीक्षा]

'काय:, निकाय:' आदि शब्दरूपों की सिद्धि दोनों ही व्याकरणों में 'घञ्' प्रत्यय द्वारा की गई है। पाणिनि का सूत्र है-''निवासचितिशरीरोपसमाधानेष्वादेश्च क:'' (अ०३।३।४१)। अत: प्राय: उभयत्र समानता ही है।

[विशेष वचन]

१. पदसंस्कारेऽधिक्रियते इति सूत्रकारस्य संमतम् (दु० टी०)।

२. आदिग्रहणं वैचित्र्यार्थम् (दु० टी०)।

[रूपसिद्धि]

१-२. काय:। चिञ् + घञ् + सि। निकाय:। नि + चिञ् + घञ् + सि। केवल तथा 'नि' उपसर्ग-पूर्वक 'चिञ् चयने' (४।५) धातु से 'घञ्' प्रत्यय, इज्वद्भाव, धातुघटित इकार की वृद्धि, आय् - आदेश तथा विभक्तिकार्य॥१२०७।

## १२०८. संघे चानौत्तराधर्ये [४।५।३६]

[सूत्रार्थ]

औत्तराधर्यभिन्न तथा सङ्घ अर्थ में 'चिञ्' धातु से 'घञ्' प्रत्यय तथा चकार को ककार आदेश होता है॥१२०८।

[दु० वृ०]

प्राणिनां समूह: सङ्घ: उच्यते। अनौत्तराधर्ये संघे चार्थे चिनोतेर्घञ् भवति कश्चादे:। वैयाकरणनिकाय:। अनौत्तराधर्ये इति किम् ? शूकरनिचय:॥१२०८।

[दु० टी०]

''समुदोर्गणप्रशंसयो:'' (४।५।६४) इत्यत्र यद्यपि सामान्यार्थे डप्रत्ययो घनिरादेशश्च,

तथापि काष्ठानां तृणानां च संघः इति न प्रयुज्यते शिष्टैः। अभिधानकाण्डेऽपि यथादर्शनमाश्रित्यासामान्यं निगद्यते, यथा सङ्घसार्थावित्याह—प्राणिनामित्यादि। अन्य आह—वार्तिकसमुच्चयः कृताकृतसमुच्चय इति धात्वर्थमात्रस्य विवक्षितत्वान्न संघातार्थ इत्यदोषः। संघश्च द्वाभ्यां प्रकाराभ्यां भवति — एकधर्मोपदेशेन औत्तराधर्येण च। तत्रौत्तराधर्यप्रतिषेधादिहैककार्यद्वारः संघो गम्यते, न तु भिन्नकार्योपपन्नास्त एव समुदिता इति। यथा भिक्षूणां सङ्घः, ब्राह्मणानां सङ्घ इति॥१२०८।

[वि० प०]

शरीर०। अपीत्यादि। चीयते इति चितिः, अग्न्याधारविशेषः। राशिस्तु विप्रकीर्णानामुपर्युपरिस्थापनमिति॥१२०८।

[समीक्षा]

'वैयाकरणनिकायः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घञ्' प्रत्यय तथा चकार को ककार आदेश किया गया है। पाणिनि का सूत्र है—"संघे चानौत्तराधर्ये" (अ०३।३।४२)। अतः उभयत्र पूर्ण समानता है।

[रूपसिद्धि]

१. **वैयाकरणनिकायः**। नि + चिञ् + घञ् + सि। 'नि' उपसर्ग के उपपद में रहने पर 'चिञ् चयने' (४।५) धातु से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, वृद्धि, आय् आदेश, चकार को ककार तथा विभक्तिकार्य॥१२०८।

## १२०९. परिन्योर्नीणोर्द्यूताभ्रेषयोः [४।५।३७]

[सूत्रार्थ]

द्यूतविषय में 'परि' उपपद - पूर्वक 'णीञ् प्रापणे' (१।६००) धातु से तथा अभ्रेषविषय में 'नि' उपपद-पूर्वक 'इण् गतौ' (२।१३) धातु से 'घञ्' प्रत्यय होता है॥१२०९।

[दु० वृ०]

परिन्योरुपपदयोर्नीणोर्घञ् भवति यथासङ्ख्यं द्यूतविषये अभ्रेषे चार्थे। अभ्रेषोऽचलनम्, यथाप्राप्तकरणमित्यर्थः। परिणायेन शारीनाहन्ति। सर्वतो नयनेनेत्यर्थः। अभ्रेषे-एषोऽत्र न्यायः॥१२०९।

[दु० टी०]

परिन्यो०। द्यूतविषये इत्यादि। द्यूतार्थश्चेन्नयत्यर्थो भवतीत्यर्थः। अभ्रेषे चार्थे इत्येकापि सप्तम्यर्थवशाद् भिद्यते। भ्रेषणं भ्रेषो न भ्रेषोऽभ्रेषः यथाप्राप्तकरणमिति। प्रमाणादागमश्लोकाच्चेति। परिणायेनेति। उपसर्गान्नयतेर्णत्वम् ॥१२०९।

[समीक्षा]

'परिणायः, न्यायः' शब्दों की सिद्धि दोनों ही आचार्यों ने 'घञ्' प्रत्यय द्वारा

की है। पाणिनि का सूत्र है — "परिन्योर्नीणोर्द्यूताभ्रेषयोः" (अ० ३।३।३७)। अतः उभयत्र समानता है।

[रूपसिद्धि]

१. परिणायेन शारीनाहन्ति। परि + नी + घञ् +टा। 'परि' उपसर्ग के उपपद में रहने पर 'णीञ् प्रापणे' (१।६००) धातु से 'घञ्' प्रत्यय, वृद्धि, आय् आदेश, णत्व तथा विभक्तिकार्य।

२. न्यायः। नि + इण् + घञ् + सि। 'नि' उपसर्ग- पूर्वक 'इण् गतौ' (२।१३) धातु से 'घञ्' प्रत्यय, वृद्धि, आय् आदेश, इकार को यकार तथा विभक्तिकार्य।।१२०९।

## १२१०. व्युपयोः शेतेः पर्याये [४।५।३८]

[सूत्रार्थ]

'वि-उप' उपसर्गों के उपपद में रहने पर पर्यायविषय में वर्तमान 'शीङ् शये' (२।५५) धातु से 'घञ्' प्रत्यय होता है।।१२१०।

[दु० वृ०]

व्युपयोरुपपदयोः पर्यायविषये वर्तमानात् शेतेर्घञ् भवति। तव राजविशायः, तव राजोपशायः। तव राजनि शयितुं पर्याय इत्यर्थः। अस्मादेव ज्ञापकात् परिपूर्वादिणः क्रमेऽर्थे घञ् ।।१२१०।

[दु० टी०]

व्युप०। प्रकृत्यर्थस्यैव पर्यायो गम्यते इत्याह—पर्याय इत्यादि। अभिविधि-विवक्षायामिह घञो वाभिधानात् । अस्मादेवेत्यादि। क्रमशब्दसमानार्थोऽयं पर्यायशब्दः, न तु विशिष्टक्रियाविषय इति ज्ञाप्यते। कथमेतत् क्रमपर्याययोरभिन्नार्थतेति। पर्यायो हि नामानुपूर्वं स च क्रमेण प्राप्तस्यानतिपातोऽनतिक्रमः परिपाटिरुच्यते, क्रमस्तु तत्पूर्वकः पर्याय., क्रमो नामानुपूर्वी यौगपद्यप्रतिपक्षः इदं कृत्वेदं कार्यमिति? सत्यम्, नियमानियमाभ्यां भिद्यते, यथा अङ्कुरकाण्डकिसलयादीनां स्नानपानभोजनादीनां च, अतः क्रमपर्याययोर्नास्त्येव भेदः।।१२१०।

[वि० प०]

व्युप०। अस्मादेवेति क्रमादन्यत्र पर्याय इत्यलेव भवति।।१२१०।

[क० च०]

व्युपयोः। पर्यायः क्रमः अस्मादेवेति सूत्रे पर्यायग्रहणादित्यर्थः। ननु परिपूर्वादय्धातोर्घञि पर्याय इति सिध्यति तत् किं ज्ञापकेनेति? सत्यम् , "उपसर्गस्यायतौ" इति लत्वेनाघ्रातत्वात्। अथ यथा अस्मादेव ज्ञापकादिणोऽल् न स्यात्, तथा परिपूर्वस्यायतेरपि न लत्वमिति कथं नोच्यते? सत्यम्, सूत्रे कृतं ज्ञापकं सूत्रविहितकार्यस्य बाधकं न वक्तव्यम्, विहितस्य सादृश्यात्। यद् वा विहितप्रत्ययप्रसङ्गेन ज्ञापकं प्रत्ययस्यैव बाधकं न त्वादेशस्य।।१२१०।

[समीक्षा]

'विशायः, उपशायः' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घञ्' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है — "व्युपयोः शेतेः पर्याये" (अ० ३।३।३९)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. तव राजविशायः। वि + शीङ् + घञ् + सि। 'वि' उपसर्ग के उपपद में रहने पर 'शीङ् शये' (२।५५) धातु से प्रकृत सूत्र द्वारा 'घञ्' प्रत्यय, 'घ् -ञ्' अनुबन्धों का प्रयोगाभाव, इज्वद्भाव, धातुघटित ईकार की वृद्धि, आय् आदेश तथा विभक्तिकार्य।

२. तव राजोपशायः। उप + शीङ् + घञ् + सि। 'उप' उपसर्गपूर्वक 'शीङ् शये' धातु से 'घञ् ' प्रत्यय आदि कार्य पूर्ववत् ।।१२१०।

## १२११. अभिविधौ भाव इनुण् [४।५।३९]

[सूत्रार्थ]

अभिविधि अर्थ में धातु से इनुण् प्रत्यय भाववाच्य में होता है।।१२११।

[दु० वृ०]

अभिविधौ गम्यमाने धातोर्भावे इनुण् भवति। सांकोटिनम् , सांराविणं वर्तते। क्रिययैवाभिव्याप्तिः, इनुणन्तात् स्वार्थेऽण् । युडपि दृश्यते — सङ्कुटनम् ।।१२११।

[दु० टी०]

अभि०। क्रिययैवाभिव्याप्तिरिति, न तु गुणद्रव्याभ्यां क्रियायाः श्रुतत्वाद् वासरूपतया न क्तो युट् च दृश्यते-संकुटनम् । इनुण इकारः उच्चारणार्थः।।१२११।

[वि० प०]

अभि०। अभिविधिरभिव्याप्तिः। साकल्येन क्रियासम्बन्ध इत्याह—क्रिययैवेति। एवकारेण गुणादिनिरासः, तस्य धात्वर्थत्वाभावात् श्रुतत्वाच्च क्रियाया इति। वासरूपतया क्तो न दृश्यते, युट् तु दृश्यते - संकुटनं वर्तते इति।।१२११।

[क० च०]

अभि०। भावे इनुण्णित्येव पाठः। "भावे" (४।५।३) इति सूत्रे विसन्धिनिर्देशो दुष्ट एव, अयादीनामित्यत्र तद्गुणसंविज्ञानो बहुव्रीहिर्ज्ञापकेन कुलचन्द्रदर्शितत्वात् ।।१२११।

[समीक्षा]

'सांकोटिनम् , सांराविणम् ' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'इनुण्' प्रत्यय किया गया है। पाणिनि का सूत्र है — "अभिविधौ भावे इनुण्" (अ० ३।३।४४)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. सांकोटिनम् । सम् + कुट् + इनुण् + अण् + सि। 'सम्' उपसर्ग-पूर्वक 'कुट कौटिल्ये' (५।८३) धातु से प्रकृत सूत्र द्वारा 'इनुण्' प्रत्यय, इज्वद्भाव, उपधादीर्घ, धातुघटित उपधासंज्ञक उकार को गुण, स्वार्थ में अण् प्रत्यय तथा विभक्तिकार्य।

२. सांराविणम् । सम् + रु + इनुण् + अण् + सि। 'सम्' उपसर्गपूर्वक 'रु शब्दे' (२।१०) धातु से 'इनुण्' प्रत्यय आदि कार्य पूर्ववत् ।।१२११।

## १२१२. कर्मव्यतीहारे णच् स्त्रियाम् [४।५।४०]

[सूत्रार्थ]

क्रियाविनिमय अर्थ के गम्यमान होने पर भाववाच्य स्त्रीलिङ्ग में धातु से 'णच्' प्रत्यय होता है।।१२१२।

[दु० वृ०]

क्रियाविनिमये गम्यमाने धातोर्णच् भवति स्त्रियां भावे। व्यावक्रोशी, व्यावभाषी। णजन्तात् स्वार्थेऽण् । तत्र क्वचिदधिकारात् क्रियाव्यतीहारे न वृद्धिरागमः। कथं व्यतीहा, व्यतीक्षा, व्यवक्रुष्टिरिति? अस्त्र्यधिकारत्वाद् वासरूपता।।१२१२।

[दु० टी०]

कर्म०। व्यतीहारो विनिमयः, स च क्रियाया एव संभवति न द्रव्यस्य, तर्हि यत् कर्मग्रहणं तन्मन्दधियां सुखार्थम् । स्त्रियामित्युत्तरत्र न वर्तते, अन्यथा स्त्रीप्रकरण एव सर्वं कृतं स्यात् । पूर्वस्मिन्निति च भावग्रहणं मन्दधियामाविर्भावार्थम्, न हि कारक-संज्ञायां दृश्यते। न च भाव एवेति फलं कर्मण्यधिकरणे चेत्यत एतयोर्योगयोः पठनं युक्तं यदकृतं तद् वैचित्र्यार्थमेव। स्त्रियामिति किमर्थम् - व्यतिपाकः। केचिदिदं सूत्रमिनुणः पूर्वं पठन्ति "अकर्तरि च कारके संज्ञायाम्" (४।५।४) प्रत्ययमिच्छन्ति, तदसद्भाव एवाभिधानाद् भावसम्बन्धोऽयं मन्दमतिसुखप्रतिपत्त्यर्थः।।१२१२।

[वि० प०]

कर्म०। अस्त्र्यधिकारत्वादिति। अत एव "स्त्रियां क्तिः" (४।५।७२) इत्यनन्तरं कर्मव्यतीहारे णजिति न कृतम्, स्त्र्यधिकारविहितत्वान्मा भूद् अस्त्रियामिति प्रतिषेधः।।१२१२।

[क० च०]

कर्म०। ननु व्यतीहारो विनिमयः परिवर्तश्च, स च द्रव्याणामेव सम्भवति। यथा तिलान् गृहीत्वा माषान् ददाति, माषान् गृहीत्वा तिलान् ददातीति तत्कथममूर्तायाः क्रियायास्तस्याः सम्भवः? सत्यम् । द्रव्यविनिमयो यथा देवदत्तेन चिकीर्षितां क्रियां यज्ञदत्तः करोति तथा यज्ञदत्तेन चिकीर्षितां देवदत्त इति, तदा क्रियाव्यतीहार इति। ननु सत्यप्यस्त्र्यधिकारे कथं व्यतीक्षा, व्यतीहा इति सारूप्याद् वासरूपता? सत्यम् । यद्यपि णचश्चकारोऽनुबन्धत्वेऽपि प्रत्ययत्वेन सह वासरूपत्वात् तेन विवक्षेति वासरूपत्वात् सिद्धं व्यतीक्षेति।।१२१२।

[समीक्षा]

'व्यावक्रोशी, व्यावभाषी' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'णच्' प्रत्यय किया गया है। पाणिनि का सूत्र है—"कर्मव्यतिहारे णच् स्त्रियाम्" (अ० ३।३।४३)। अतः प्रत्यय, अर्थ आदि की दृष्टि से उभयत्र समानता है।

[विशेष वचन]

१. भावग्रहणं मन्दधियामाविर्भावार्थम् (दु० टी०)।

२. यदकृतं तद् वैचित्र्यार्थमेव (दु० टी०)।

३. भावसम्बन्धोऽयं मन्दमतिसुखप्रतिपत्त्यर्थः (दु० टी०)।

[रूपसिद्धि]

१-२. व्यावक्रोशी। वि + आ + अव + क्रुश् + णच् + ई + सि। व्यावभाषी। वि + आ + अव + भाष् + णच् + ई + सि। 'वि-आ-अव' उपसर्ग-पूर्वक 'क्रुश् - भाष्' धातुओं से 'णच्' प्रत्यय, गुण-उपधादीर्घ, स्त्रीलिङ्ग में 'ई' प्रत्यय, अकारलोप तथा विभक्तिकार्य॥१२१२।

## १२१३. स्वरवृदृगमिग्रहामल् [४।५।४१]

[सूत्रार्थ]

स्वरान्त धातुओं से तथा 'वृ -दृ-गम्-ग्रह' धातुओं से 'अल्' प्रत्यय होता है॥१२१३।

[दु० वृ०]

स्वरान्ताद् वृदृगमिग्रहिभ्यश्च अल् भवति। घञोऽपवादः। क्षयः, क्रयः, क्षवः, लवः। वृञ् वृङ् वा - वरः। दृङ् - दरः। गमः, ग्रहः। वृद्रोरेवेति नियमाद् अन्येभ्य ऋकारान्तेभ्यो घञेव-कारः, हारः। दीर्घादलेव। कॄ - करः। गॄ - गरः। भीतिर्भयम् इत्यलेव, न युडादयोऽपीति। वशः, रणः इति रूढित्वादलेव॥१२१३।

[दु० टी०]

स्वर०। स्वरान्तत्वादल् सिद्ध एवेत्याह—वृद्रोरेवेत्यादि। वृद्रोरलेवेति न विपरीतनियमः, 'वरणं वृतम् , दरणं दृतम्' इत्यभिधीयते। भीतिरित्यादि। नपुंसके भावादिष्वल् विधीयते, तत्र क्तयुट्खलर्थेषु वासरूपविधिर्नास्तीत्युक्तमेव। वशिरणिभ्यामस्वरान्तत्वादल् वक्तव्य इत्याह—वश इत्यादि। यदि वाऽव्युत्पन्नावेव शब्दावेतौ रूढाविति। 'ग्राहं गतास्तत्र च केचिदेवम्' इति भट्टिवचनाद् ग्रहेर्घञ् सिद्धः। व्याकरणे तु न चिन्तित एव॥१२१३।

[वि० प०]

स्वर०। वृद्रोरेवेति। अन्यथा स्वरान्तत्वादल् सिद्ध इति भावः। अलेवेति न प्रकृतिनियमः, क्तयुटोरप्यभिधानात् — वरणं वृतम् , दरणं दृतमिति। भीतिरित्यादि। नपुंसके भयादिष्वभिधानादलेवेत्यर्थः। एवं वर्षमिति॥१२१३।

[क० च०]

स्वर०। वृदृग्रहणं किमर्थम्, स्वरान्तद्वारेणैवाल्सिद्धेः? सत्यम्, नियमार्थमित्याह—वृद्रोरेवेति। भयमिति। घञ्बाधकोऽयमनपुंसकस्यैव युज्यते कथं भयमित्यत्र नपुंसकेऽलिति। न च वासरूपन्यायादिति वाच्यम्, क्तयुट्तुमुन्खलर्थेषु वासरूपविधिर्नास्तीति उक्तमेवेति पूर्वपक्षार्थ इति हेमः॥१२१३।

[समीक्षा]

'वरः, दरः, गमः, ग्रहः' शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्य अल् प्रत्यय का विधान करते हैं। पाणिनि का सूत्र है- "ग्रहवृदृनिश्चिगमश्च" (अ० ३।३।५८)। परन्तु 'क्षयः, लवः' आदि शब्दों की सिद्धि कातन्त्रकार ने 'अल्' प्रत्यय से की है, जब कि पाणिनि ने तदर्थ 'अच्-अप्' प्रत्ययों का विधान किया है — "एरच्, ॠदोरप्" (अ० ३।३।५६;५७)। इस प्रकार तीन प्रत्ययों के विधान से पाणिनीय गौरव स्पष्ट है।

[विशेष वचन]

१. नियमार्थमित्याह-वृद्रोरेवेति (क० च०)।

२. पूर्वपक्षार्थ इति हेमः (क० च०)।

[रूपसिद्धि]

१-४. क्षयः। क्षि + अल् + सि। क्रयः। क्री + अल् + सि। क्षवः। क्षु + अल् + सि। लवः। लू + अल् + सि। 'क्षि-क्री-क्षु-लू' इन स्वरान्त धातुओं से अल् प्रत्यय, गुण, 'अय् - अव्' आदेश तथा विभक्तिकार्य।

५-६. वरः। वृ + अल् + सि। दरः। दृ + अल् + सि। 'वृ - दृ' धातुओं से 'अल्' प्रत्यय, गुण तथा विभक्तिकार्य।

७-८. गमः। गम् + अल् + सि। ग्रहः। ग्रह + अल् + सि। 'गम् -ग्रह्' धातुओं से 'अल्' प्रत्यय तथा विभक्तिकार्य॥१२१३।

## १२१४. उपसर्गेऽदेः [४।५।४२]

[सूत्रार्थ]

उपसर्ग के उपपद में रहने पर 'अद भक्षणे' (२।१) धातु से 'अल्' प्रत्यय होता है॥१२१४।

[दु० वृ०]

उपसर्ग उपपदेऽदेरल् भवति। प्रघसः, विघसः। "घञलोर्घस्लृः" (४।१।८३)। उपसर्ग इति किम् ? घासः॥१२१४।

[समीक्षा]

'प्रघसः, विघसः' शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'अल्' तथा पाणिनि ने 'अप्' प्रत्यय किया है। पाणिनि का सूत्र है—"उपसर्गेऽदः" (अ० ३।३।५९)। अनुबन्धों की भिन्नता को यदि छोड़ दिया जाय तो उभयत्र प्रायः समानता ही कही जाएगी।

[रूपसिद्धि]

१-२. प्रघसः। प्र + अद् - घस्लृ + अल् + सि। विघसः। वि + अद् — घस्लृ + अल् + सि। 'प्र-वि' उपसर्ग-पूर्वक 'अद भक्षणे' (२।१) धातु से 'अल्' प्रत्यय, 'घस्लृ' आदेश तथा विभक्तिकार्य॥१२१४।

## १२१५. नौ ण च [४।५।४३]

[सूत्रार्थ]

'नि' उपसर्ग के उपपद में रहने पर 'अद्' धातु से 'अल् - ण' प्रत्यय होते हैं॥१२१५।

[दु० वृ०]

नावुपपदेऽदेरल् णश्च भवति। निघसः, न्यादः॥१२१५।

[क० च०]

नौ०। चकारोऽनुक्तसमुच्चयमात्रे, तेनात्रालोऽनुवृत्तिर्न प्रत्ययस्य सम्बन्धात् ॥१२१५।

[समीक्षा]

'न्यादः' प्रयोग के सिद्ध्यर्थ दोनों ही आचार्यों ने 'ण' प्रत्यय किया है, परन्तु 'निघसः' शब्द की सिद्धि के लिए कातन्त्रकार अल् प्रत्यय एवं पाणिनि 'अप्' प्रत्यय करते हैं—"नौ ण च" (अ० ३।३।६०)। अतः 'ल् - प्' अनुबन्धभेद को छोड़कर शेष तो उभयत्र समानता ही है।

[रूपसिद्धि]

१.न्यादः, निघसः। नि + अद् + ण + सि। 'नि' उपसर्ग-पूर्वक 'अद भक्षणे' (२।१) धातु से 'ण' प्रत्यय, उपधासंज्ञक अकार को दीर्घ, इकार को यकारादेश तथा विभक्तिकार्य। 'अल्' प्रत्यय के होने पर घस्लृ आदेश से 'निघसः' शब्दरूप सिद्ध होता है॥१२१५।

## १२१६. मदेः प्रसमोर्हर्षे [४।५।४४]

[सूत्रार्थ]

हर्ष अर्थ में 'प्र-सम्' उपसर्गों के उपपद में रहने पर 'मदी हर्षे' (३।४८) धातु से 'अल्' प्रत्यय होता है॥१२१६।

[दु० वृ०]

प्रसमोरुपपदयोर्मदेरल् भवति हर्षेऽर्थे। प्रमदः कन्यानाम् । सम्मदः कोकिलानाम्। प्रसमोरिति किम् ? उन्मादश्छात्राणाम् ॥१२१६।

[समीक्षा]

हर्ष अर्थ में 'प्रमदः, संमदः' शब्द दोनों ही व्याकरणों में सिद्ध किए गये हैं। अन्तर यह है कि कातन्त्रकार इन्हें 'अल्' प्रत्यय से सिद्ध करते हैं। जबकि पाणिनि

ने निपातनविधि से उन्हें सिद्ध किया है—"प्रमदसंमदौ हर्षे" (अ० ३।३।६८)। अतः अपने अपने व्याकरणों की प्रक्रिया के अनुसार भेद होने पर भी फल की दृष्टि से प्रायः समानता ही है।

[रूपसिद्धि]

१-२. **प्रमदः**। प्र + मदी + अल् + सि। **संमदः**। सम् + मदी + अल् + सि। 'प्र-सम्' उपसर्ग-पूर्वक 'मदी हर्षे' (३।४८) धातु से 'अल्' प्रत्यय तथा विभक्तिकार्य।।१२१६।

## १२१७. व्यधिजपोश्चानुपसर्गे [४।५।४५]

[सूत्रार्थ]

उपसर्ग के उपपद में न रहने पर 'व्यध् - जप् - मद्' धातुओं से 'अल्' प्रत्यय होता है।।१२१७।

[दु० वृ०]

अनुपसर्गे व्यधिजपिभ्यां मदेश्चाल् भवति। व्यधः, जपः, मदः। अनुपसर्ग इति किम् ? आव्याधः, उपजापः, प्रमादः।।१२१७।

[समीक्षा]

'व्यधः, जपः, मदः' शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने एक ही सूत्र द्वारा 'अल्' प्रत्यय किया है, जबकि पाणिनि दो सूत्रों से 'अप्' प्रत्यय द्वारा इन्हें सिद्ध करते हैं — "व्यधजपोरनुपसर्गे, मदोऽनुपसर्गे" (अ० ३।३।६३, ६७)। अतः पाणिनीय गौरव तथा कातन्त्रीय लाघव स्पष्ट है।

[रूपसिद्धि]

१-३. **व्यधः**। व्यध् + अल् + सि। **जपः**। जप् + अल् + सि। **मदः**। मद् + अल् + सि। 'व्यध् - जप् - मद्' धातुओं से अल् प्रत्यय तथा विभक्तिकार्य।।१२१७।

## १२१८. स्वनहसोर्वा [४।५।४६]

[सूत्रार्थ]

उपसर्ग के उपपद में न रहने पर 'स्वन् - हस्' धातुओं से वैकल्पिक 'अल्' प्रत्यय होता है।।१२१८।

[दु० वृ०]

अनुपसर्गे आभ्यामण् भवति वा। स्वनः, स्वानः। हसः, हासः। अनुपसर्ग इति किम् ? प्रस्वानः, प्रहासः।।१२१८।

[समीक्षा]

'स्वनः-स्वानः' इत्यादि दो - दो शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में वैकल्पिक अल् - अप् प्रत्यय किए गए हैं। पाणिनि का सूत्र है— "स्वनहसोर्वा" (अ० ३।३।६२)। अतः उभयत्र प्रायः समानता ही है।

[रूपसिद्धि]

१-२. स्वनः, स्वानः। स्वन् + अल् + सि। हसः, हासः। हस् + अल् + सि। 'स्वन् - हस्' धातुओं से प्रकृत सूत्र द्वारा 'अल्' प्रत्यय तथा विभक्तिकार्य। पक्ष में घञ् प्रत्यय होने पर 'स्वानः, हासः' शब्दरूप साधु माने जाते हैं॥१२१८।

## १२१९. यमः सन्न्युपविषु च [४।५।४७]

[सूत्रार्थ]

किसी के भी उपपद में न रहने पर तथा 'सम् - नि - उप - वि' उपसर्गों के उपपद में रहने पर 'यम उपरमे' (१।१५८) धातु से 'अल्' प्रत्यय विकल्प से होता है॥१२१९।

[दु० वृ०]

अनुपसर्गे सन्न्युपविषु च यमेरल् भवति वा। यमः, यामः। संयमः, संयामः। नियमः, नियामः। उपयमः, उपयामः। वियमः, वियामः॥१२१९।

[समीक्षा]

'संयमः, संयामः' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'अल्' प्रत्यय तथा पाणिनि ने 'अप्' प्रत्यय किया है। पाणिनि का सूत्र है—"यमः समुपनिविषु च" (अ० ३।३।६३)। इस प्रकार प्रत्ययघटित अनुबन्धभेद को छोड़कर अन्य तो उभयत्र समानता ही है।

[रूपसिद्धि]

१-५. यमः, यामः। यम् + अल् + सि। संयमः, संयामः। सम् + यम् + अल् + सि। नियमः, नियामः। नि + यम् + अल् + सि। उपयमः, उपयामः। उप + यम् + अल् + सि। वियमः, वियामः। वि + यम् + अल् + सि। 'यम् उपरमे'(१।१५८) धातु से तथा 'सम् - नि - उप - वि' उपसर्गपूर्वक 'यम' धातु से 'अल्' प्रत्यय एवं विभक्तिकार्य। अल् प्रत्यय न होने पर घञ् प्रत्यय से 'यामः' इत्यादि शब्दरूप होंगे॥१२१९।

## १२२०. नौ गदनदपठस्वनाम् [४।५।४८]

[सूत्रार्थ]

'नि' उपसर्ग के उपपद में रहने पर 'गद् - नद् - पठ् -स्वन्' धातुओं से 'अल्' प्रत्यय विकल्प से होता है॥१२२०।

[दु० वृ०]

नावुपपदे एभ्योऽल् भवति वा। निगदः, निगादः। निनदः, निनादः। निपठः, निपाठः। निस्वनः, निस्वानः। "स्वनहसोर्वा" (४।५।४६) इति वचनाद् अनुपसर्ग इति नानुवर्तते॥१२२०।

[दु० टी०]

नौ गद०। "यमः सन्न्युपविषु च" (४।५।४७) इत्यतश्चकारोऽनुवर्तते नौ चेति। नावुपपदेऽनुपसर्गे चेत्यर्थः। कथमेतत् "स्वनहसोर्वा" (४।५।४६) इत्यत्र स्वनग्रहणसामर्थ्याद् अन्यथा स्वनेरल् प्रसिद्ध इत्याह—स्वनेत्यादि। एवं वदन् किमावेदयति? वक्ष्यमाणे योगे चकारः सम्बध्यते इति भावः॥१२२०।

[वि० प०]

नौ गद०। अत्रापि चकारानुवृत्त्याऽनुपसर्गे चेत्यस्य कथं न सम्बन्ध इत्याह—स्वनेत्यादि। अन्यथाऽनेनैवानुपसर्गेऽल् सिद्ध इति भावः। उत्तरसूत्रे चकारानुवृत्तिरस्त्येवेति। अनुपसर्गे चेति सम्बन्धो न विरुध्यते॥१२२०।

[समीक्षा]

'निनदः, निनादः' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'अल्' प्रत्यय तथा पाणिनि ने 'अप्' प्रत्यय किया है। पाणिनि का सूत्र है — "नौ गदनदपठस्वनः" (अ० ३।३।६४)। इस प्रकार अनुबन्धभेद को छोड़कर शेष तो उभयत्र समानता ही है।

[रूपसिद्धि]

१-४. निगदः, निगादः। नि + गद् + अल् + सि। निनदः, निनादः। नि + नद् + अल् + सि। निपाठः, निपाठः। नि + पठ् + अल् + सि। निस्वनः, निस्वानः। नि + स्वन् + अल् + सि। 'नि' उपसर्ग के उपपद में रहने पर 'गद् - नद् - पठ् - स्वन्' धातुओं से 'अल्' प्रत्यय तथा विभक्तिकार्य। पक्ष में 'घञ्' प्रत्यय होने पर 'निगादः, निनादः, निपाठः, निस्वानः' शब्दरूप साधु माने जाते हैं॥१२२०।

## १२२१. क्वणो वीणायां च [४।५।४९]

[सूत्रार्थ]

किसी के उपपद में न रहने पर तथा 'नि' के उपपद में रहने पर वीणा के विषय में 'क्वण शब्दे' (१।१४६) धातु से 'अल्' प्रत्यय होता है॥१२२१।

[दु० वृ०]

नावुपपदेऽनुपसर्गे च वीणाविषये क्वणतेरल् भवति वा। क्वणः, क्वाणः। निक्वणः, निक्वाणः। चकारे सति वीणाग्रहणं सोपसर्गार्थम् । प्रक्वणः। वीणायां प्रक्वाण इति॥१२२१।

[दु० टी०]

क्वणो०। वीणायां चेति। तत्र चकारो योगविभागार्थ इत्याह—चकारे सतीति॥१२२१।

[वि० प०]

क्वणो०। इह पुनश्चकारो योगविभागार्थ इति। तेन वीणायां चेति द्वितीयसूत्रेऽनुपसर्ग इति न सम्बध्यते, पूर्वेण सिद्धत्वादित्याह—चकार इति॥१२२१।

[समीक्षा]

'निक्वणः, निक्वाणः' इत्यादि शब्दों के सिद्ध्यर्थ कातन्त्रकार ने 'अल्' प्रत्यय तथा पाणिनि ने 'अप्' प्रत्यय किया है। पाणिनि का सूत्र है—"क्वणो वीणायां च" (अ० ३।३।६५)। अतः अनुबन्धभेद के अतिरिक्त तो सभी प्रकार की उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१-२. **क्वणः**, क्वाणः। क्वण् + अल् + सि। **निक्वणः**, निक्वाणः। नि + क्वण् + अल् + सि। उपपदरहित तथा 'नि' उपसर्ग के उपपद में रहने पर 'क्वण शब्दे' (१।१४६) धातु से 'अल्' प्रत्यय तथा विभक्तिकार्य। पक्ष में घञ् प्रत्यय से 'क्वाणः, निक्वाणः' शब्दरूप सिद्ध होते हैं॥१२२१।

## १२२२. पणः परिमाणे नित्यम् [४।५।५०]

[सूत्रार्थ]

परिमाण अर्थ में 'पण व्यवहारे स्तुतौ च' (१।४०१) धातु से नित्य 'अल्' प्रत्यय होता है॥१२२२।

[दु० वृ०]

पणतेरल् भवति नित्यं परिमाणेऽर्थे। पणः शाकादीनामपि परिमिता मुष्टिः **पण** उच्यते। परिमाण इति किम् ? दास्याः पाणः॥१२२२।

[दु० टी०]

पणः। पण्यतेऽनेनेति **पणः** कपर्दिकादीनान्तावद् भवति, शाकमपीत्यर्थः॥१२२२।

[वि० प०]

पणः। शाकादीनामपीति। न केवलं कपर्दिकादीनां विशिष्टेयत्ता **पण** इत्यपेरर्थः॥१२२२।

[समीक्षा]

'पणः' शब्दरूप के सिद्ध्यर्थ कातन्त्रकार ने 'अल्' प्रत्यय तथा पाणिनि ने 'अप्' प्रत्यय किया है। पाणिनि का सूत्र है— "नित्यं पणः परिमाणे" (अ० ३।३।६६)। अतः अनुबन्धभेद को छोड़कर शेष सभी प्रकार की उभयत्र समानता ही है।

[रूपसिद्धि]

१. **पणः**।पण् + अल् +सि । पण्यतेऽनेन । 'पण व्यवहारे स्तुतौ च' (१।४०१) धातु से प्रकृतसूत्र द्वारा 'अल् ' प्रत्यय तथा विभक्तिकार्य ॥१२२२ ।

## १२२३. समुदोरजः पशुषु [४।५।५१]

[सूत्रार्थ]

पशुओं के विषय में 'सम् — उद्' उपसर्गों के उपपद में रहने पर 'अज क्षेपणे च' (१।६४) धातु से 'अल्' प्रत्यय होता है ॥१२२३।

[दु०वृ०]

समुदोरुपपदयोः पशुषु वर्तमानादजेरल् भवति । समजः । पशूनां समूह इत्यर्थः। उदजः। पशूनां प्रेरणमित्यर्थः। पशुरिति किम्? समाजश्छात्राणाम्, उदाजः खगानाम् ॥१२२३।

[दु० टी०]

समुदो०। पशुष्विति। बहुवचनादुदाहृतं पशुष्विति भवति। अन्यथा पशाविति विदध्यात्। भाष्येणैव तच्चिन्तितम्॥१२२३।

[क० च०]

समुदो। पशुष्विति । विषयसप्तमीष्टत्वात् पशुष्विति बहुवचनादित्यन्यः ॥१२२३।

[समीक्षा]

'समजः, उदजः' शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार 'अल् ' प्रत्यय तथा पाणिनि 'अप् ' प्रत्यय करते हैं— "समुदोरजः पशुषु" (अ० ३।३।६९) । इस प्रकार अनुबन्धभेद के अतिरिक्त शेष समानता ही है ।

[रूपसिद्धि]

१-२. **समजः**। सम् +अज् + अल् +सि। **उदजः**। उद् + अज् + अल् + सि। 'सम् -उद् ' उपसर्ग-पूर्वक 'अज क्षेपणे च' (१।६४० धातु से 'अल् ' प्रत्यय तथा विभक्तिकार्य ॥१२२३।

## १२२४. ग्लहोऽक्षेषु [४।५।५२]

[सूत्रार्थ]

अक्षविषय में 'ग्रह उपादाने' (८।१४) धातु से अल् प्रत्यय होने पर रेफ को लकारादेश निपातन से होता हे ॥१२२४।

[दु०वृ०]

अक्षविषये वर्तमानाद् ग्रहेरलि लत्वं निपात्यते । ग्लहोऽक्षाणाम् । ग्लहः प्रकृत्यन्तरम् इत्येके, तदा प्रग्लाह इति घञि प्रत्युदाहरणम् ॥१२२४।

[दु०टी०]

ग्लहो० । ग्रहेरल् सिद्ध एवेत्याह- अलीत्यादि । प्रकृत्यन्तरपक्षेऽजपि निपातनादिति प्रत्युदाहरणं दर्शयति । अक्षशब्दोऽत्राविशेषात् सामान्यार्थो ग्रहीतव्यः । अत एव बहुवचनमुच्यते । भाष्ये तु न चिन्तितमेतत् ॥१२२४।

[वि०प०]

ग्लहो० । ग्रहेरल् सिद्ध एवेत्याह-अलि लत्वमिति ।प्रकृत्यन्तरेति । तेषां मतेऽल् निपात्यते इति घञा प्रत्युदाहरणं युज्यते ॥१२२४।

[क०च०]

ग्लहो० । 'ग्लहः' इति प्रथमान्तं पदं पञ्चम्यन्तग्लहधातोरभावाद् अतो ग्रहधातोरलि रेफस्य लत्वं विधाय सिद्धपदनिर्देश इति स्वमतम् । यन्मते प्रत्ययान्तरं तन्मते पञ्चम्यन्तं पदम् ॥१२२४।

[समीक्षा]

'ग्लहः' शब्दरूप के सिद्ध्यर्थ दोनों ने ही निपातन से लत्व का विधान किया है । पाणिनि का सूत्र है— "अक्षेषु ग्लहः" (अ० ३।३।७०) । अतः उभयत्र समानता ही है ।

(रूपसिद्धि)

१. ग्लहोऽक्षाणाम् । ग्रह् + अल् + सि । 'ग्रह उपादाने' (८।१४) धातु से 'अल्' प्रत्यय, निपातन से रेफ को लत्व तथा विभक्तिकार्य ॥१२२४।

## १२२५. सर्तेः प्रजने [४।५।५३]

[सूत्रार्थ]

गर्भग्रहण अर्थ में 'सृ गतौ' (१।२७४) धातु से 'अल्' प्रत्यय होता है ॥१२२५।

[दु० वृ०]

प्रजने गर्भग्रहणे वर्तमानात् सर्तेरल् भवति । गवामुपसरः । उपसारोऽन्यः ॥१२२५।

[समीक्षा]

'गवामुपसरः' शब्दरूप की सिद्धि कातन्त्रकार ने 'अल्' प्रत्यय से तथा पाणिनि ने 'अप्' प्रत्यय से की है । पाणिनि का सूत्र है— "प्रजने सर्तेः" (अ० ३।३।७१)। अतः प्रायः उभयत्र समानता ही है ।

[रूपसिद्धि]

१. गवामुपसरः। उप+ सृ+ अल् + सि । 'उप' उपसर्गपूर्वक 'सृ गतौ' (१।२७४) धातु से प्रकृत सूत्र द्वारा 'अल्' प्रत्यय, ऋकार को गुणादेश तथा विभक्तिकार्य ॥१२२५।

## १२२६. ह्वो हुश्चाभ्युपनिविषु च [४।५।५४]

[सूत्रार्थ]

'अभि- उप-नि-वि' उपसर्गों के उपपद में रहने पर 'ह्वेञ् स्पर्धायां शब्दे च' (१।६१३) धातु से अल् प्रत्यय तथा ह्वेञ् को 'हु' आदेश होता है ॥१२२६।

[दु० वृ०]

एषूपपदेषु ह्वयतेरल् भवति हुरादेशश्च । अभिहवः, उपहवः, निहवः, विहवः॥१२२६।

[दु०टी०]

ह्वो०। ह्वयतेरिङाभ्यां चेति घञि प्राप्तेऽलो विधानम् ॥१२२६।

[समीक्षा]

'उपहवः, निहवः' इत्यादि शब्दरूपों के सिद्ध्यर्थ प्रत्ययघटित अनुबन्धभेद के अतिरिक्त प्रायः समानता है । पाणिनि का सूत्र है— "ह्वः सम्प्रसारणं च न्यभ्युपविषु" (अ० ३।३।७२) पाणिनीय सम्प्रसारण की अपेक्षा कातन्त्रीय 'हु' आदेश में लाघव कहा जा सकता है ॥१२२६।

[रूपसिद्धि]

१-४. **अभिहवः** । अभि + ह्वेञ् + अल् + सि। **उपहवः** । उप + ह्वेञ् + अल् +सि। **निहवः**। नि+ ह्वेञ् +अल् + सि । **विहवः** । वि+ ह्वेञ् + अल् +सि । 'अभि-उप-नि-वि' उपसर्ग-पूर्वक 'ह्वेञ् स्पधायां शब्दे च' ९१।६१३) धातु से अल् प्रत्यय, ह्वेञ् को 'हु'-आदेश, गुण, अवादेश तथा विभक्तिकार्य ॥१२२६।

## १२२७. आङि युद्धे [४।५।५५]

[सूत्रार्थ]

युद्ध अर्थ में 'आङ्' उपसर्ग के उपपद में रहने पर 'ह्वेञ् स्पर्धायां शब्दे च' (१।६१३) धातु से 'अल् ' प्रत्यय तथा 'ह्वेञ् ' को 'हु' आदेश होता है ॥१२२७।

[दु० वृ०]

आङ्युपपदे ह्वयतेरल् भवति युद्धेऽर्थे हुरादेशश्च । आहूयन्ते यस्मिन् योद्धारः स आहवः संग्रामः । कथम् आहूयन्ते पानाय गावो यस्मिन् स आहावो जलाधारः? अन्यत्रापीति वचनात् ॥१२२७।

[दु० टी०]

आङि०। कथमित्यादि । निपातनमाहाव इति वक्तव्यम् । निपातनं चेद् ह्वयतेर्घञन्तस्य 'आहावः' इति निपात्यते । आहावो निपानम्। संग्रहमाह— अन्यत्रापीति । अपिशब्दो बहुलार्थ इष्टसाधक इति ॥१२२७।

[क०च०]

आङि० । अन्यत्रापीति वचनादिति । अन्यत्रापीति वचनाद् घञि सति तस्मिन् परतो हुरादेशोऽभिधानात् ॥१२२७।

[समीक्षा]

'आहवः' शब्दरूप की सिद्धि कातन्त्रकार ने 'अल्' प्रत्यय से तथा पाणिनि ने 'अप्' प्रत्यय से की है ।पाणिनि का सूत्र है— "आङि युद्धे" (अ० ३।३। ७३)। इस प्रकार अनुबन्धभेद के अतिरिक्त अन्य प्रकार की तो उभयत्र समानता ही है ।

[रूपसिद्धि]

१. आहवः। आङ् + ह्वेञ् - हु + अल् +सि । आहूयन्ते यस्मिन् योद्धारः।'आङ्' उपसर्ग - पूर्वक 'ह्वेञ् ' धातु से 'अल् ' प्रत्यय - 'हु' आदेश, गुण, अवादेश तथा विभक्तिकार्य ॥ १२२७।

## १२२८. भावेऽनुपसर्गस्य [४।५।५६]

[सूत्रार्थ]

भाव अर्थ में उपसर्ग के उपपद में न रहने पर 'ह्वेञ्' धातु से 'अल्' प्रत्यय तथा 'हु' आदेश होता है ॥१२२८।

[दु० वृ०]

अनुपसर्गस्य ह्वयतेरल् भवति भावे हुरादेशश्च । हवः ।अनुपसर्गस्येति किम्? प्रह्वायः ॥१२२८।

[समीक्षा]

भाव अर्थ में 'हवः' शब्द के सिद्ध्यर्थ कातन्त्रकार 'अल् ' प्रत्यय तथा पाणिनि 'अप्' प्रत्यय करते हैं । पाणिनि का सूत्र है— "भावेऽनुपसर्गस्य" (अ० ३।३।७५)। अतः अनुबन्धभेद के अतिरिक्त अन्य प्रकार की उभयत्र समानता है ।

[रूपसिद्धि]

१. हवः। ह्वेञ् -हु+ अल् +सि । 'ह्वेञ् ' धातु से भाव अर्थ में प्रकृत सूत्र द्वारा 'अल् ' प्रत्यय, 'हु' आदेश, गुण, अवादेश तथा विभक्तिकार्य ॥१२२८।

## १२२९. हन्तेर्वधिश्च [४।५।५७]

[सूत्रार्थ]

भाव अर्थ में उपसर्ग के उपपद में न रहने पर 'हन् हिंसागत्योः' (२।४) धातु से 'अल्' प्रत्यय तथा 'हन् ' को 'वध् ' आदेश भी होता है ॥१२२९।

[दु० वृ०]

अनुपसर्गस्य हन्तेरल् भवति भावे वधिरादेशश्च । हननं वधः । अप्यधिकाराच्च घातः । अनुपसर्गस्येति किम् ? विघातः ॥१२२९।

[क० च०]

हन्तेः । अप्यधिकाराच्चेति । चकारो भिन्नक्रमे । न केवलं हननं वधः, अप्यधिकाराद् घातेश्च । न च निमित्तात् परः श्रुतश्चकारो निमित्तमनुकर्षतीति भावः ॥१२२९।

[समीक्षा]

भाव अर्थ में हन् धातु से 'वधः' शब्दरूप के सिद्ध्यर्थ कातन्त्रीय 'अल् ' प्रत्यय के लिए पाणिनि 'अप् ' प्रत्यय करते हैं । उनका सूत्र है— "हनश्च वधः" (अ०

३।३।७६)। इस प्रकार प्रत्ययगत अनुबन्धभेद के अतिरिक्त अन्य प्रकार की तो उभयत्र समानता ही हे ।

[रूपसिद्धि]

१. वधः। हन् -वध् +अल् +सि । हननम् । 'हन् हिंसागत्योः' (२।४) धातु से प्रकृत सूत्र द्वारा 'अल् 'प्रत्यय, 'वध् ' आदेश तथा विभक्तिकार्य ॥१२२९।

## १२३०. मूर्तौ घनिश्च [४।५।५८]

[सूत्रार्थ]

मूर्ति अर्थ में 'हन् ' धातु से अल् प्रत्यय तथा 'हन्' को 'घन् ' आदेश भी होता है ॥१२३०।

[दु० वृ०]

मूर्तिः काठिन्यम् । मूर्तावर्थे हन्तेरल् भवति घनिरादेशश्च। दध्नो घनः, घनं दधीत्यभेदात् ॥१२३०।

[समीक्षा]

द्र०, सूत्र-सं० १२२९ । पाणिनिसूत्र- "मूर्तौ घनः" (अ० ३।३।७७)।

[रूपसिद्धि]

१. घनः, घनम् । हन् + अल् + सि, अम् । 'हन् हिंसागत्योः' (२।४) धातु से प्रकृत सूत्र द्वारा 'अल् ' प्रत्यय, हन् को 'घन् ' आदेश तथा विभक्तिकार्य ॥१२३०।

## १२३१. प्राद् गृहैकदेशे घञ् च [४।५।५९]

[सूत्रार्थ]

'गृहैकदेश' अर्थ में 'प्र' उपसर्ग-पूर्वक 'हन् ' धातु से 'अल् -घञ् 'प्रत्यय तथा 'हन् ' को 'घन्' आदेश भी होता है ॥१२३१।

[दु० वृ०]

प्राद हन्तेरल् भवति घञ् च। घनिरादेशश्च गृहैकदेशेऽर्थे । प्रघणः, प्रघाणः। गृहस्य द्विधाकृतस्य द्वारप्रकोष्ठाभ्यां यो बहिर्भूतः, तत्रापीति वचनाण्णत्वम् ॥१२३१।

[समीक्षा]

कातन्त्रकार 'प्रघणः' शब्द की सिद्धि 'अल् ' प्रत्यय से एवं 'प्रघाणः' शब्द की सिद्धि 'घञ् ' प्रत्यय से करते हैं, जबकि पाणिनि ने इनकी सिद्धि निपातनविधि से की है—"अगारैकदेशे प्रघणः प्रघाणश्च" (अ० ३।३।७९) । यहाँ पाणिनीय निपातनविधि की अपेक्षा कातन्त्रकार द्वारा किए गए स्पष्ट 'प्रत्यय-आदेश' के विधान में सरलता तथा लाघव कहा जा सकता है ।

[रूपसिद्धि]

१-२. प्रघणः । प्र+हन् - घन् + अल् +सि । प्रघाणः । प्र+हन् - घन् + घञ् +सि । 'प्र' पूर्वक 'हन्' धातु से क्रमशः 'अल् -घञ्' प्रत्यय, हन् को 'घन्' आदेश, उपधादीर्घ, नकार को णकार तथा विभक्तिकार्य ॥१२३१।

## १२३२. अन्तर्घणोद्घनौ देशात्याधानयोः [४।५।६०]

[सूत्रार्थ]

देश अर्थ में 'अन्तर्घणः' शब्द तथा अत्याधान अर्थ में 'उद्घनः' शब्द निपातनविधि से सिद्ध होता है ॥१२३२।

[दु० वृ०]

एतावलन्तौ देशात्याधानयोर्यथासङ्ख्यं निपात्येते । अन्तर्हन्यतेऽस्मिन्निति अन्तर्घणो देशः । ऊर्ध्वं हन्यतेऽस्मिन्निति स उद्घनः । यस्योपरि काष्ठानि हन्यन्ते तदत्याधानम् ॥१२३२।

[वि०प०]

अन्तर्घणो० । बाह्लीकस्य देशविशेषस्य संज्ञेयम् अन्तर्घणः इति ॥१२३२।

[समीक्षा]

कातन्त्रकार ने 'अन्तर्घणः, उद्घनः' शब्दों की सिद्धि निपातनविधि से की है, जबकि पाणिनि 'अन्तर्घणः' की सिद्धि अप् प्रत्यय-घन आदेश से तथा 'उद्घनः' की सिद्धि निपातन से करते हैं । वस्तुतः प्रायः समान प्रक्रिया वाले इन दोनों शब्दों की सिद्धि एक ही निपातनविधि से करने के कारण कातन्त्रीय निर्देश में लाघव कहा जा सकता है तथा एतदर्थ दो विधान करने के कारण पाणिनीय निर्देश में गौरव । पाणिनि के सूत्र हैं— "अन्तर्घणो देशे, उद्घनोऽत्याधानम्" (अ० ३।३।७८,८०) ।

[रूपसिद्धि]

१-२. अन्तर्घणः। अन्तर् +हन् -घन् +अल् +सि । उद्घनः। उद् + हन् - घन् + अल् +सि । 'अन्तर् -उद्' पूर्वक 'हन्' धातु से निपातनविधि द्वारा अल् प्रत्यय, हन् को 'घन्' आदेश, पूर्व प्रयोग में णकारादेश तथा विभक्तिकार्य ॥१२३२।

## १२३३. करणेऽयोविद्रुषु [४।५।६१]

[सूत्रार्थ]

करण अर्थ में 'अयस् -वि-द्रु' के उपपद में रहने पर 'हन्' धातु से 'अल्' प्रत्यय तथा 'हन्' को 'घन्' आदेश भी होता है ॥१२३३।

[दु० वृ०]

एषूपपदेषु हन्तेरल् भवति करणे घनिरादेशश्च। अयो हन्यतेऽनेनेति अयोघनः। विहन्यतेऽनेनेति विघनः। एवं द्रुघणः। सञ्ज्ञायां णत्वम्॥१२३३।

[वि०प०]

करणे० । वि -द्रुशब्दौ पक्षिवृक्षयोर्यथाक्रमं वर्तेते ॥१२३३।

[समीक्षा]

'अयोघनः, विघनः, द्रुघणः' शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार 'अल्' प्रत्ययं तथा पाणिनि 'अप्' प्रत्यय करते हैं। पाणिनि का सूत्र हैं— "करणेऽयोविद्रुषु" (अ० ३।३।८२) अतः अनुबन्धभेद को छोड़कर अन्य प्रकार की तो उभयत्र समानता ही है।

[रूपसिद्धि]

१-३. अयोघनः । अयस् +हन् -घन् +अल् +सि । अयो हन्यतेऽनेन । विघनः।वि+ हन् -घन् + अल्+सि । विहन्यतेऽनेन ।द्रुघणः । द्रु +हन् -घन् +अल् + सि। द्रुर्हन्यतेऽनेन । 'अयस् -वि-द्रु' के उपपद में रहने पर 'हन्' धातु से प्रकृत सूत्र द्वारा 'अल्' प्रत्यय — 'घन् ' आदेश, नकार को णकार तथा विभक्तिकार्य ॥१२३३।

## १२३४. परौ डः [४।५।६२]

[सूत्रार्थ]

करण अर्थ में 'परि' के उपपद में रहने पर 'हन् हिंसागत्योः' (२।४) धातु से 'ड' प्रत्यय तथा हन् को 'घन् ' आदेश होता है । १२३४।

[दु०वृ०]

परावुपपदे हन्तेर्डो भवति करणे घनिरादेशश्च। परि हन्यतेऽनेनेति परिघः। लत्वे-पलिघः॥१२३४।

[समीक्षा]

'परिघः' शब्द की सिद्धि कातन्त्रकार 'ड' प्रत्यय-घन् ' आदेश से करते हैं, जब कि पाणिनि ने इसकी सिद्धि 'अप् ' प्रत्यय- 'घ' आदेश से की है । प्रत्यय-आदेश के भिन्न भिन्न होने पर भी फल की दृष्टि से प्रायः उभयत्र समानता ही है । पाणिनि का सूत्र है— "परौ घः" (अ० ३।३।८४) ।

[रूपसिद्धि]

१-२. परिघः। परि+हन्-घन् + ड + सि। पलिघः। परि + हन् -घन् + ड+सि। परि हन्यतेऽनेन। 'परि' उपसर्ग के उपपद में रहने पर 'हन् ' धातु से 'ड' प्रत्यय- 'घन्' आदेश, 'ड्' अनुबन्ध के बल से 'अन् ' का लोप, रेफ को लत्व तथा विभक्तिकार्य।।१२३४।

## १२३५. नौ निमिते [४।५।६३]

[सूत्रार्थ]

तुल्य अर्थ में 'नि' उपसर्ग-पूर्वक 'हन् ' धातु से 'ड' प्रत्यय तथा 'हन् ' को 'घन्' आदेश होता है ॥१२३५।

[दु० वृ०]

नावुपपदे हन्तेर्डो भवति घनिरादेशश्च निमिते वस्तुनि। निर्विशेषेण हन्यन्ते ज्ञायन्ते वा निघा वृक्षाः, निघाः शालयः । सर्वतो निमिता आरोहतः परिणाहतश्च । निमित इति किम् ? निघातः।।१२३५।

[वि० प०]

नौ०। सर्वे गत्यर्था ज्ञानार्था इत्याह— हन्यन्ते ज्ञायन्ते इति। आरोहः उच्छ्रायः, परिणाहो विस्तारः । एवं निर्विशेषेण ज्ञायन्ते यत् परि समन्तादारोहतः परिणाहतश्च निमितास्तुल्या भवन्तीत्यर्थः ।।१२३५।

[समीक्षा]

'निघा वृक्षाः, निघाः शालयः' शब्दरूपों की सिद्धि कातन्त्रकार ने 'ड' प्रत्यय- 'घन्' आदेश से की है, जबकि पाणिनि एतदर्थ निपातनविधि का आश्रय लेते हैं— "निघो निमितम्"। (अ० ३।३।८७) । इस प्रकार प्रक्रियाभेद होने पर भी फल की दृष्टि से प्रायः उभयत्र समानता ही कही जा सकती है।

[रूपसिद्धि]

१-२. निघा वृक्षाः । निघाः शालयः । नि+हन् -घन् +ड+जस् । 'नि' उपसर्ग के उपपद में रहने पर 'हन्' धातु से 'ड' प्रत्यय, 'घन्' आदेश, 'अन्' का लोप तथा विभक्तिकार्य ।।१२३५।

## १२३६. समुदोर्गणप्रशंसयोः [४।५।६४]

[सुत्रार्थ]

समूह अर्थ में 'सम्' के उपपद में रहने पर तथा प्रशंसा अर्थ में 'उद्' के उपपद में रहने पर 'हन्' धातु से 'ड' प्रत्यय एवं 'हन्' को 'घन्' आदेश भी होता है ।।१२३६।

[दु० वृ०]

समुदोरुपपदयोर्हन्तेर्डो भवति घनिरादेशश्च गणे प्रशंसायां च यथासङ्ख्यम्। संहननं संहन्यतेऽस्मिन्नवयवो वा संघः। उत्कृष्टं हन्यते ज्ञायते उद्घो मनुष्यः, प्रशस्त इत्यर्थः।।१२३६।

[समीक्षा]

'संघः, उद्घः' शब्दों की सिद्धि कातन्त्रकार ने 'ड' प्रत्यय- 'घन्' आदेश से तथा पाणिनि ने निपातन से की है— "संघोद्घौ गणप्रशंसयोः" (अ० ३।३।८६) । इस प्रकार प्रक्रियाभेद होने पर भी फल की दृष्टि से प्रायः समानता ही है ।

[रूपसिद्धि]

१-२. संघः। सम् + हन् -घन् + ड+सि। संहननम् , संहन्यतेऽस्मिन्नवयवो वा।

उद्घः। उद् + हन् - घन् + ड + सि। उत्कृष्टं हन्यते ज्ञायते। 'सम्' - 'उद्' के उपपद में रहने पर 'हन्' धातु से 'ड' प्रत्यय, 'घन्' आदेश, 'अन्' भाग का लोप तथा विभक्तिकार्य ॥१२३६।

## १२३७. उपात् क आश्रये [४।५।६५]

[सूत्रार्थ]

आश्रय अर्थ में 'उप' उपसर्ग-पूर्वक 'हन्' धातु से 'क' प्रत्यय तथा 'घन्' आदेश भी होता है ॥१२३७।

[दु० वृ०]

उपाद् हन्तेः को भवति आश्रये गम्यमाने घनिरादेशश्च। कुड्योपघ्नं वसति ॥१२३७।

[समीक्षा]

'उपघ्नः' शब्द की सिद्धि कातन्त्रकार 'क' प्रत्यय- 'घन्' आदेश से तथा पाणिनि निपातनविधि से करते हैं। पाणिनि का सूत्र है— "उपघ्न आश्रये" (अ० ३।३।८५)। इस प्रकार प्रक्रियाभेद होने पर भी फल की दृष्टि से प्रायः समानता ही कही जा सकती है।

[रूपसिद्धि]

१. कुड्योपघ्नं वसति। कुड्य + उप+हन् -घन् +क +सि। 'कुड्य-उप' के उपपद में रहने पर 'हन्' धातु से 'क' प्रत्यय, 'घन्' आदेश, 'हन्' धातुघटित अकार का लोप तथा विभक्तिकार्य ॥१२३७।

## १२३८. स्तम्बेऽच्च [४।५।६६]

[सूत्रार्थ]

'स्तम्ब' शब्द के उपपद में रहने पर 'हन हिंसागत्योः' (२।४) धातु से 'अत्' एवं 'क' प्रत्यय तथा 'हन्' को 'घन्' आदेश भी होता है ॥१२३८।

[दु० वृ०]

स्तम्ब उपपदे हन्तेरद् भवति कप्रत्ययो घनिरादेशश्च। स्तम्बो हन्यतेऽनेनेति स्तम्बघनः, स्तम्बघ्नो दण्डः, स्तम्बघ्नो यष्टिः। **पुंस्त्वमेव स्वभावात्। केचित् स्त्रियामादा-** स्तम्बघ्ना यष्टिरिति। अप्यधिकारात् स्थास्नापिबतिव्यधिहनिभ्यः कः स्यात् — आखूत्थं वर्तते। प्रस्नात्यस्मिन्निति **प्रस्नः**। प्रपिबन्त्यस्यामिति **प्रपा**। आविध्यतेऽनेनेति **आविधः**। विहन्यतेऽनेनेति **विघ्नः**। आयुध्यतेऽनेनेति **आयुधं** शस्त्रम्, ज्ञापकादेव ॥१२३८।

[वि० प०]

स्तम्बे० आखूत्थमिति। आखूनामुत्थानम् आखूत्थम्। उत्पूर्वात् तिष्ठतेर्भावे कप्रत्ययः। वर्णनाशेन सलोपोऽसार्वधातुके भवति। व्यधेर्ग्रह्यादित्वात् सम्प्रसारणम्। हन्तेः "गमहन०" (३।६।४३) इत्यादिनोपधालोपे लुप्तोपधस्य चेति घत्वम् ॥१२३८।

[क० च०]

स्तम्बे० । अच्चेति तकारो वर्णस्वरूपे ।।१२३८।

[समीक्षा]

'स्तम्बघनः, स्तम्बघ्नः' शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'अत् -यक' प्रत्यय तथा घन् आदेश किया है, जबकि पाणिनि एतदर्थ 'घन' आदेश के साथ 'अप् - क' प्रत्यय करते हैं — "स्तम्बे क च" (अ० ३।३।८३) । इस प्रकार अनुबन्धभेद होने पर भी फल की दृष्टि से उभयत्र प्रायः समानता ही है ।

[विशेष वचन]

१. स्तम्बघ्नो यष्टिः । पुंस्त्वमेव स्वभावात् (दु०वृ०) ।

२. अच्चेति तकारो वर्णस्वरूपे (क० च०) ।

[रूपसिद्धि]

१. **स्तम्बघनः।** स्तम्ब + हन् -घन् + अत् +सि । 'स्तम्ब' के उपपद में रहने पर 'हन् ' धातु से 'अत् ' प्रत्यय, 'घन् ' आदेश तथा विभक्तिकार्य ।

२-३. **स्तम्बघ्नो दण्डः।** स्तम्ब+ हन् -घन् +क+सि । **स्तम्बघ्नो यष्टिः** । स्तम्ब +हन् -घन् +क+सि । 'स्तम्ब' के उपपद में रहने पर 'हन् ' धातु से 'क' प्रत्यय, 'क्' अनुबन्ध का प्रयोगाभाव, 'घन् ' आदेश, "गमहनजनखनघसामुपधायाः स्वरादावनण्यगुणे" (३।६।४३) से उपधालोप तथा विभक्तिकार्य ।।१२३८।

## १२३९. ट्वनुबन्धादथुः [४।५।६७]

[सूत्रार्थ]

भाव अर्थ में 'टु' अनुबन्ध वाली धातुओं से 'अथु' प्रत्यय होता है।।१२३९।

[दु० वृ०]

ट्वनुबन्धाद् धातोरथुर्भवति भाव एव। **'टु वेपृ'** (१।३८१) वेपथुः। **'टु ओ श्वि'** (१।६१६)- श्वयथुः। **'टु दु'** (४।१०)- दवथुः। **'टु वम'** (१।५५७)- वमथुः। 'वेपः, दवः' इति वासरूपत्वात् ।।१२३९।

[वि० प०]

ट्वनु०। भाव एवेति। यद्यपि **"अकर्तरि च कारके संज्ञायाम्"** (४।५।४) इत्यपि वर्तते, तथापि न तत्राभिधानमित्यर्थः।।१२३९।

[क० च०]

ट्वनु०। टुरित्यादि हेमः। ननु क्वचित् क्रियायां टुकार इति ट्वनुबन्धादथुरिति विशेषणार्थ इति किं प्रमाणमित्याह—टुरित्यादि। टुकार इति कथन्न स्यादित्याह— वर्णादिव कारः क्रियते, न तु शब्दात् अत्र टुशब्दात् कथं कारप्रत्यय इति भावः।।१२३९।

[समीक्षा]

'वेपथुः, श्वयथुः' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'अथु' प्रत्यय तथा पाणिनि ने 'अथुच्' प्रत्यय किया है— "ट्वितोऽथुच्" (अ० ३।३।८९)। पाणिनि का चकारानुबन्ध वैदिक शब्दों में चित्स्वरार्थ किया गया है। अतः लौकिक शब्दों के साधन की दृष्टि से उभयत्र समानता ही कही जा सकती है।

[विशेष वचन]

१. वर्णादेव कारः क्रियते न तु शब्दात् (क० च०)।

[रूपसिद्धि]

१-४. **वेपथुः**। वेपृ + अथु + सि। **श्वयथुः**। श्वि + अथु + सि। **दवथुः**। दु + अथु + सि। **वमथुः**। वम् + अथु + सि। 'वेपृ -श्वि - दु -वम्' धातुओं से 'अथु' प्रत्यय, 'श्वि-दु' धातुघटित इकार-उकार को गुणादेश एकार-ओकार, 'अय् -अव्' आदेश तथा विभक्तिकार्य।।१२३९।

## १२४०. ड्वनुबन्धात् त्रिमक् तेन निर्वृत्ते [४।५।६८]

[सूत्रार्थ]

निर्वृत्त (निष्पन्न) अर्थ में 'डु' अनुबन्धवाली धातुओं से 'त्रिमक्' प्रत्यय होता है।।१२४०।

[दु० वृ०]

ड्वनुबन्धाद् धातोस्त्रिमग् भवति तेन धात्वर्थेन निर्वृत्तेऽर्थे। 'डु पचष्' (१।६०३) -पाकेन निर्वृत्तं **पक्त्रिमम्**। 'डु कृञ्' (७।७)-करणेन निर्वृत्तं **कृत्रिमम्** । निर्वृत्तमिति कर्तरि कर्मणि वा क्तः। तेनेति यथायोगं तृतीया।।१२४०।

[दु० टी०]

ड्वनु०। तेनेत्यादि । तच्छब्देन धातुः परामृश्यते, धातुना निर्वर्तनं युज्यते। अर्थाद् धात्वर्थो गृह्यते इत्याह—तेनेत्यादि। निर्वृत्तमित्यादि। वृतेरकर्मकत्वात् कर्तरि क्तस्तेनेति करणे हेतौ वा तृतीया। अथवा निर्वृत्तमिति कर्मणि क्तः, अकर्मकोऽपि सोपसर्गः सकर्मकोऽन्तर्भूतेनर्थो वा निवर्तितमिति तदा कर्तरि तृतीया। यथायोगमिति। सम्बन्धानतिक्रमेण विवक्षावशाद् यदि "अकर्तरि च कारके संज्ञायाम्" (४।५।४) इति वर्तते तथापि निर्वृत्तग्रहणसामर्थ्यात् कर्तरि त्रिमक्प्रत्ययः कर्मण्येव वा विवक्षया धातुसञ्ज्ञा पुनर्गम्यत एव कथं धात्वर्थः करणं हेतुः कर्ता वा भवति असिद्धरूपत्वात्? सत्यम् । केवलेन धात्वर्थेनोपलक्षणीभूतेन भावप्रत्ययान्तः करणादिर्लक्ष्यते इत्युक्तम् — पाकेन निर्वृत्तं पक्त्रिममिति । ननु ड्वनुबन्धात् तृग् इत्युच्यताम् , भावे तृग् भविष्यति भाववचनात् तेन निर्वृत्तमित्यर्थे इमस्तद्धितो रूढित्वाद् विद्यते। यथा पाकेन निर्वृत्तं **पक्त्रिममिति**? सत्यम् ।पक्त्रादेस्त्रन्तस्य प्रयोगनिवृत्त्यर्थं वचनं युक्तम् ।।१२४०।

[वि. प०]

ड्वनु० । धातुना निर्वर्तनस्यासम्भवात् तच्छब्देन धात्वर्थो निर्दिश्यते इत्याह— तेनेत्यादि । निर्वृत्तमित्यादि। यदा कर्तरि तदा करणे हेतौ वा तृतीया । यदा कर्मणि तदा कर्तरि युज्यते तृतीयेति। अतस्तदुक्तं यथायोगमिति । न च वक्तव्यं वृतेरकर्मकत्वात् कथं कर्मणि क्त इति? **अकर्मकोऽपि धातुः सोपसर्गः सकर्मको भवति।** अन्तर्भूत-कारितार्थत्वाद् वा सकर्मकः । यथा घटं निर्वर्तते । ननु च साध्यरूपो धात्वर्थः,स कथं करणं हेतुकर्ता वा भवितुमर्हतीति? सिद्धस्यैव प्रसिद्ध्यर्थं करणादिरूपेणोपादानात् ? सत्यम् । न केवलं धात्वर्थः करणादिरूपेणाश्रीयते, किन्तर्हि तेनोपलक्षणेन भावप्रत्ययान्तः पाकादिः करणादिभावेन लक्ष्यते, स च सिद्ध एवेत्युक्तं पाकेन निर्वृत्तमिति ॥ १२४०।

[क०च०]

ड्वनु० । स चेति कृद्विहितस्य सिद्धताख्यभावत्वादित्यर्थः ॥१२४०।

[समीक्षा]

'पक्त्रिमम् , कृत्रिमम् ' इत्यादि शब्दों के सिद्ध्यर्थ कातन्त्रकार 'त्रिमक् ' प्रत्यय करते हैं ,जबकि पाणिनि 'क्त्रि 'प्रत्यय-"ड्वितः क्त्रिः" (अ० ३।३।८८) । अतः उन्हें "क्त्रेर्मम् नित्यम् " (अ० ४।४।२०) से 'मप् 'प्रत्यय भी करना पड़ता है,जिससे पाणिनीय गौरव ही सिद्ध होता है ।

[विशेष वचन]

१. अकर्मकोऽपि धातुः सोपसर्गः सकर्मको भवति (दु०टी०; वि० प०) ।

[रूपसिद्धि]

१-२. **पक्त्रिमम्।** पच् +त्रिमक् +सि । पाकेन निर्वृत्तम् । **कृत्रिमम्** । कृ+ त्रिमक् + सि । करणेन निर्वृत्तम् । 'पच् -कृ' धातुओं से प्रकृत सूत्र द्वारा 'त्रिमक्' प्रत्यय,"चवर्गस्य किरसवर्णे " (३।६।५५) से चकार को ककार, लिङ्गसंज्ञा, सि-प्रत्यय, "आकारादसंबुद्धौ मुश्च" (२।२।७) से 'मु' आगम तथा सि-लोप ॥१२४०।

## १२४१. याचिविच्छिप्रच्छियजिस्वपिरक्षियतां नङ् [४।५।६९]

[सूत्रार्थ]

'याच् ' इत्यादि ७ धातुओं से 'नङ् ' प्रत्यय होता है ॥१२४१।

[दु० वृ०]

एभ्यो नङ् भवति । याच्ञा, विश्नः, प्रश्नः, यज्ञः, स्वप्नः, रक्ष्णः, यत्नः ॥१२४१।

[दु०टी०]

याचि०। ननु **'टु याचृ याच्ञायाम्'** (१।५७४) इति निर्देशाद् याच्ञाशब्दः स्वभावात् स्त्रीलिङ्गो ज्ञायते। **"प्रश्नाख्यानयोरिञ् च वा"** (४।५।९०) इति प्रश्नशब्दोऽकृतसम्प्रसारणः। **"यज्ञे समि स्तुवः"** (४।५।१८) इति यज्ञशब्दः, 'शीङ्

स्वप्ने'(२।५५) इति स्वप्नशब्दो यत्नकथोपयोगेषु इति रुचादौ यत्नशब्दस्तस्माद् विच्छिरक्षिभ्याम् इत्युच्यताम् ? सत्यम् । ज्ञापकाश्रयणं न सुखावबोधनमिति वचनमुच्यते ॥१२४१।

[वि० प०]

याचि० । "**तवर्गश्चटवर्गयोगे चटवर्गात्**" (२।४।४६) इति । "**च्छ्वोः शूटौ पञ्चमे च**" (४।१।५६) इति यथायोगं प्रवर्तते । पक्षे षाट् टवर्गाण्णकारः ॥१२४१।

[समीक्षा]

'प्रश्नः, यत्नः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'नङ्' प्रत्यय किया है । पाणिनि का सूत्र है-- "यजयाचयतविच्छप्रच्छरक्षो नङ्" (अ० ३।३।९०)। पाणिनि ने स्वरविधानार्थ 'स्वप्न' शब्द की सिद्धि के लिए स्वतन्त्र सूत्र बनाकर 'नन्' प्रत्यय किया हैं— "स्वपो नन् " (अ० ३।३।९१) । अतः सामान्यतया उभयत्र समानता कही जा सकती है ।

[रूपसिद्धि]

१-७. **याच्ञा**। याच् +नङ् +आ+सि । **विश्नः**। विच्छ् + नङ् +सि । **प्रश्नः**। प्रच्छ् +नङ् +सि । **यज्ञः**। यज् + नङ् + सि । **स्वप्नः**। स्वप् +नङ् +सि । **रक्ष्णः**। रक्ष् नङ् +सि । **यत्नः**। यत् + नङ् +सि। 'याच्-विच्छ्-प्रच्छ्-यज्-स्वप् -रक्ष् -यत् ' धातुओं से प्रकृत सूत्र द्वारा 'नङ् ' प्रत्यय तथा विभक्तिकार्य॥१२४१।

## १२४२. उपसर्गे दः किः [४।५।७०]

[सूत्रार्थ]

उपसर्ग के उपपद में रहने पर दासंज्ञक धातुओं से 'कि' प्रत्यय होता हे ॥१२४२।

[दु० वृ०]

उपसर्गे उपपदे दासंज्ञकात् किर्भवति । आदिः, निधिः, विधिः,आधिः, सन्धिः। अप्यधिकाराद् अन्तर्द्धिः ॥१२४२।

[दु० टी०]

उप०। एकारादकारलोपे सत्यादिर्न भाव्यतेऽनभिधानात् ।स्वं रूपं शब्दस्याशब्दसंज्ञेति। न च दारूपमित्याह—दासंज्ञकादिति। अन्तर्शब्दस्योपसर्गसंज्ञा नास्ति **अभिधानाद्** वा सिद्धिरिति ॥१२४२।

[क०च०]

उप०। ननु क्यङ्णेष्वन्तर इति परसूत्रम्। अस्यार्थः- किप्रत्यये, अङि प्रत्यये, णप्रत्यये च कर्तव्ये अन्तर्शब्द उपसर्गः स्यात् । भवन्मते तदभावात् कथमित्याह— अप्यधिकारादिति ॥१२४२।

[समीक्षा]

'आदिः,विधिः,सन्धिः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'कि' प्रत्यय का विधान किया गया है।पाणिनि का सूत्र है— "उपसर्गे घोः किः" (अ० ३।३।९२)। कातन्त्रकार 'दा-धा' धातुओं की 'दा' यह सार्थक संज्ञा करते हैं, जबकि पाणिनि ने तदर्थ कृत्रिम 'घु'संज्ञा की है। इसके अतिरिक्त उभयत्र समानता ही है।

[रूपसिद्धि]

१-५. **आदिः**। आङ् + दा + कि + सि। **निधिः**। नि+धा+कि+सि। **विधिः**। वि+धा+कि+सि। **आधिः**। आङ् +धा+कि+सि। **सन्धिः**। सम् +धा+कि+सि। 'आङ्-नि-वि-सम्' उपसर्ग-पूर्वक 'दा-धा' धातुओं से 'कि' प्रत्यय, आकारलोप तथा विभक्तिकार्य ॥१२४२।

## १२४३. कर्मण्यधिकरणे च [४।५।७१]

[सूत्रार्थ]

कर्मकारक के उपपद में रहने पर दासंज्ञक धातुओं से अधिकरण अर्थ में 'कि' प्रत्यय होता है॥१२४३।

[दु० वृ०]

कर्मण्युपपदे दासंज्ञकात् किर्भवति अधिकरणे च। बालधिः, जलधिः। उपसर्गैरव्यवधानतैव- पयोनिधिः ॥ १२४३।

[वि०प०]

कर्मण्य०। उपसर्गैरित्यादि। एतच्च "**आतोऽनुपसर्गात् कः**" (४।३।४) इत्यत्रानुपसर्गग्रहणेन ज्ञापितमिति॥१२४३।

[क०च०]

कर्मणि०। पृथग्विभक्तिनिर्देशान्न द्वयोरभिधेयता, किन्तु एकमुपपदमेकमभिधेयम्, तत्रापि कर्मणीति पूर्वपाठस्तदेवोपपदं प्रागुपपदं ततो धातुस्ततश्च प्रत्यय इति नियमात् ॥१२४३।

[समीक्षा]

'बालधिः, जलधिः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'कि' प्रत्यय किया है ॥पाणिनि का सूत्र है—"कर्मण्यधिकरणे च"(अ० ३।३।९३)। इस प्रकार उभयत्र समानता ही है।

[रूपसिद्धि]

१-२. **बालधिः**। बाल+धा+कि+सि। बालाः धीयन्तेऽस्मिन्। **जलधिः**। जल+धा+कि+सि। जलं धीयतेऽस्मिन्। 'बाल-जल' के उपपद में रहने पर 'डु धाञ् धारणपोषणयोः' (२।८५) धातु से 'कि' प्रत्यय, आकारलोप्र तथा विभक्तिकार्य॥१२४३।

## १२४४. स्त्रियां क्तिः [४।५।७२]

[सूत्रार्थ]

स्त्रीलिङ्ग की विवक्षा में भाव तथा कर्तृभिन्न कारक अर्थ में संज्ञा के गम्यमान होने पर धातु से 'क्ति' प्रत्यय होता है।।१२४४।

[दु० वृ०]

स्त्रीलिङ्गे भावेऽकर्तरि च कारके संज्ञायां क्तिर्भवति। कृतिः, बुद्धिः। इज्यतेऽनेनेति इष्टिः। एवं श्रुतिः, स्तुतिः करणेऽपि।।१२४४।

[क० च०]

स्त्रियाम्०। **धातुर्हि क्रियाभिधायी**, स कथं स्त्रियां वर्तितुमुत्सहते, यत्तु स्त्रियामिति विशेषणं तत् प्रत्ययद्वारकमेव, यतः प्रत्यय एव सन्निहितत्वेन स्त्रीत्वमभिधेयत्वेनोपादत्ते इति। अथ प्रत्ययेनोच्यते इति कृत्वा प्रकृतेः किमायातम् ? सत्यम् । **प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः** इति प्रत्ययत्वाद् वा प्रकृतेरपि वर्तमानताऽस्त्येवेति। ननु स्त्रियां क्तिप्रत्ययस्य विषये 'कारा' इति घञ् कथन्न स्यात् । न च वक्तव्यं क्तिरपवादभूता बाधिकेति वा सरूपत्वात् स्यादित्याह— नायमिति **हेमः**। **अयमर्थः**। नायं घञ्प्रत्ययोऽपवादः किन्तर्हि उत्सर्ग एव कथं वासरूपत्वात् स्त्रियां सोऽपि घञ् स्यात् "वाऽसरूपोऽस्त्रियाम्" (४।२।८) इत्यनेन त्वसरूपोऽपवाद उत्सर्गविषयेऽपि विकल्पेन प्रवर्तते इति।।१२४४।

[समीक्षा]

'कृतिः, बुद्धिः, स्तुतिः' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार 'क्ति' प्रत्यय तथा पाणिनि 'क्तिन्' प्रत्यय करते हैं — "स्त्रियां क्तिन्" (अ० ३।३।९४)। पाणिनि ने नकारानुबन्ध की योजना "ञ्नित्यादिर्नित्यम्" (अ० ६।१।१९७) से आद्युदात्त के विधानार्थ की है। कातन्त्र में स्वरविधान नहीं किया गया है। फलतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-५. कृतिः। कृ + क्ति + सि। बुद्धिः। बुध् + क्ति + सि। इष्टिः। यज् + क्ति + सि। श्रुतिः। श्रु + क्ति + सि। स्तुतिः। स्तु + क्ति + सि। 'कृ - बुध् - यज् - श्रु - स्तु' धातुओं से 'क्ति' प्रत्यय तथा विभक्तिकार्य।।१२४४।

## १२४५. सातिहेतियूतिजूतयश्च [४।५।७३]

[सूत्रार्थ]

स्त्रीलिङ्ग में क्तिप्रत्ययान्त 'साति-हेति-यूति-जूति' शब्द निपातन से सिद्ध होते हैं।।१२४५।

[दु० वृ०]

एते क्तिप्रत्ययान्ता निपात्यन्ते स्त्रियाम्। सिनातेः सनोतेर्वा सातिः। हिनोतेः - हेतिः। यौतेः - यूतिः। जवतेः-जूतिः॥१२४५।

[क० च०]

साति०। सनोतेरिति सूचनमात्रं कृतम्, न त्वनेन निपात्यते, "धुटि खनिसनिजनाम्" (४।१।७१) इत्यनेनैवेत्यर्थः॥१२४५।

[समीक्षा]

'हेतिः, जूतिः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने निपातनविधि का आश्रय लिया है। पाणिनि का सूत्र है — "ऊतियूतिजूतिसातिहेतिकीर्तयश्च" (अ० ३।३।९७)। पाणिनि ने 'ऊति - कीर्ति' इन दो शब्दों का भी पाठ किया है। जो कातन्त्रसूत्र में नहीं हैं। इनमें 'ऊति' शब्द का प्रयोग वैदिक है। 'कीर्ति' शब्द का कातन्त्र में पाठ न होना चिन्तनीय है। इस दृष्टि से पाणिनीय उत्कर्ष तथा कातन्त्रीय अपकर्ष कहा जा सकता है।

[रूपसिद्धि]

१-४. **सातिः**। सि, सन् + क्ति + सि। **हेतिः**। हि + क्ति + सि। **यूतिः**। यु + क्ति + सि। **जूतिः**। जु + क्ति + सि। 'सि - सन् - हि -यु - जु' धातुओं से 'क्ति' प्रत्यय, इकार-नकार को आत्त्व, इकार को गुण, उकार को दीर्घ तथा विभक्तिकार्य ॥१२४५।

## १२४६. भावे पचि-गा-पा-स्थाभ्यः [४।५।७४]

[सूत्रार्थ]

भाव अर्थ में 'पच् -गा-पा-स्था' धातुओं से स्त्रीलिङ्ग में 'क्ति' प्रत्यय होता है॥१२४६।

[दु० वृ०]

एभ्यो भावे स्त्रियां क्तिर्भवति। पचेः षानुबन्धत्वाद् अङि प्राप्ते पक्तिः। तथा "आतश्चोपसर्गे" (४।५।८४)-संगीतिः। प्रपीतिः, संस्थितिः। अप्यधिकारात् संस्था, व्यवस्था॥१२४६।

[वि० प०]

भावे०। अपीत्यादि। "आतश्चोपसर्गे" (४।५।८४) इत्यङपीत्यर्थः॥१२४६।

[समीक्षा]

'संगीतिः, संस्थितिः' इत्यादि शब्दों के सिद्ध्यर्थ मुख्यतः उभयत्र 'क्ति' प्रत्यय किया गया है। पाणिनि की नकारानुबन्धयोजना स्वरार्थ है — "स्थागापापचो भावे" (अ० ३।३।९५)। अतः प्रायः उभयत्र समानता ही है।

[रूपसिद्धि]

१-४. **पक्तिः**। पच् + क्ति + सि। **संगीतिः**। सम् + गा + क्ति + सि। **प्रपीतिः**। प्र + पा + क्ति + सि। **संस्थितिः**। सम् + स्था + क्ति + सि। 'पच् - गा - पा -स्था' धातुओं से 'क्ति' प्रत्यय तथा विभक्तिकार्य॥१२४६।

## १२४७. व्रज्यजोः क्यप् [४।५।७५]

[सूत्रार्थ]

स्त्रीलिङ्ग में भावार्थ में 'व्रज् - यज्' धातुओं से 'क्यप्' प्रत्यय होता है॥१२४७।

[दु० वृ०]

भावे स्त्रियामाभ्यां क्यब् भवति। व्रज्या, इज्या। इष्टिरित्यपि भावे ॥१२४७।

[दु० टी०]

व्रज्०। क्यपः ककार इह यण्वद्भावं प्रयोजयति पकारस्तूत्तरार्थो ह्रस्वात् तोऽन्तो भवतीति॥१२४७।

[वि० प०]

व्रज्यजोः। इष्टिरिति। यजनमिष्टिः। **"भृजादीनां षः"** (३।६।५९)। एतदपि पूर्ववदप्यधिकारादित्यर्थः॥१२४७।

[समीक्षा]

'व्रज्या, इज्या' शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'क्यप्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है— "व्रज्यजोर्भावे क्यप्" (अ० ३।३।९८)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-२. व्रज्या। व्रज् + क्यप् + आ + सि। इज्या। यज् + क्यप् + आ + सि। 'व्रज् -यज्' धातुओं से 'क्यप्' प्रत्यय, 'क् -प्' अनुबन्धों का प्रयोगाभाव, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य॥१२४७।

## १२४८. समजासनिसदनिपतिशीङ्सुविद्यटिचरिमनिभृञिणां सञ्ज्ञायाम् [४।५।७६]

[सूत्रार्थ]

स्त्रीलिङ्ग में सञ्ज्ञा अर्थ के गम्यमान होने पर 'सम्-पूर्वक अज् , आस् , नि-पूर्वक सद् - पत्, शीङ् , सु, विद् , अट् , चर्, मन् , भृञ् ' तथा 'इण्' धातु से 'क्यप्' प्रत्यय होता है॥१२४८।

[दु० वृ०]

एभ्यः संज्ञायां क्यब् भवति भावे स्त्रियाम् । समज्या, आस्या। निषीदन्त्यस्यामिति निषद्या। निपतन्त्यस्यामिति निपत्या। शेरतेऽस्यामिति शय्या, अधिकरणेऽपि। सवनं सुत्या। विद्या, करणेऽपि। अटेश्चेक्रीयितान्तादेवाभिधानात् - अटाट्या। परिपूर्वादेव चरेः- परिचर्या। मन्या, भृत्या, इत्या। अप्यधिकारात् - आसुतिः, भृतिः, समितिः। भाव इति किम् ? भार्या। सञ्ज्ञायामिति किम् ? संवित्तिः॥१२४८।

[दु० टी०]

सम०। अटेरित्यादि। सूत्रकारमतं तु केवलाद् भवितव्यम् , तदेव प्रमाणम् । 'वृथाटया खलु सा तस्याः' इति प्रयोगश्च दृश्यते। केवलादपि चरेरभिधीयते-चर्यया प्रसरति। परमतं तु वृत्तौ दर्शितम् ॥१२४८।

[वि० प०]

समजा०। शय्येति ''अयीर्ये'' (३।६।१९) इत्ययादेशः। अटेरित्यादि। ऋप्रभृतिभ्यश्चेति वचनाद् अटेर्यशब्दः, द्विर्वचनादिकम् , पूर्ववद् अस्य च लोपे कृते ''यस्यानि'' (३।६।४८) इति चेक्रीयितलोपः। एतत्तु वृत्तौ मतान्तरमुक्तम् । सूत्रकारस्य तु मतं वर्णयन्ति केवलादप्यटेः क्यप् प्रमाणमिति। तथा च भट्टिकाव्ये 'वृथाटया खलु सा तस्याः' इति प्रयोगो दृश्यते। परिपूर्वादिवेति। एतदपि मतान्तरेण। केवलादपि दृश्यते - योगी चर्यया भ्रमतीति। मन्येति। ''यपि च'' (४।१।६०) इति पञ्चमलोपो नास्ति क्यपो द्व्यनुबन्धकत्वात् । भृत्येत्यादि। ह्रस्वात् तोऽन्तः। भाव इत्यादि। ''ऋवर्णव्यञ्जनान्ताद् घ्यण्'' (४।२।३५), ''भावे पचिगापास्थाभ्यः'' (४।५।७४) इत्यतो भावाधिकारो वर्तते, यच्चाधिकरणेऽपीत्युक्तम् , तदभिधानमाश्रित्य वेदितव्यम् । अन्ये तु भावाधिकारं नाद्रियन्ते, पूर्वोक्त एवाधिकार एवाहुः, तन्मते कथमुक्तम् — 'स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति' इति? सत्यम् , भावाधिकारो भावव्यापारः, वाच्यत्वेन भृञः क्यपो विवक्षितः, न तु शास्त्रीयाधिकार इति न दोषः॥१२४८।

[क० च०]

समजा०। स्त्रियां भावाधिकारोऽस्तीति ''भृञोऽसंज्ञायाम्'' (४।२।२५) इत्यत्रोक्तम् ॥१२४८।

[समीक्षा]

'समज्या, विद्या, शय्या' इत्यादि शब्दरूपों के सिद्धयर्थ दोनों ही व्याकरणों में 'क्यप्' प्रत्यय किया गया है। पाणिनि का सूत्र है— "संज्ञायां समजनिषदनिपतमनविद्षुञ्शीङ्भृञिणः" (अ०३।३।९९)। पाणिनि की अपेक्षा 'आस्या, अटाट्या, परिचर्या' ये तीन शब्द कातन्त्रकार ने अधिक सिद्ध किए हैं। पाणिनीय व्याकरण में 'परिचर्या-अटाट्या' शब्द वार्तिकसूत्र "परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्" (अ०३।३।१०१-वा०) द्वारा यक् प्रत्यय से सिद्ध किए जाते हैं। इस प्रकार कातन्त्रीय उत्कर्ष कहा जा सकता है।

[विशेष वचन]

१. सूत्रकारमतं तु केवलाद् भवितव्यम् (दु० टी०)।

२. परमतं तु वृत्तौ दर्शितम् (दु० टी०)।

३. सूत्रकारस्य तु मतं वर्णयन्ति (वि० प०)।

४. अन्ये तु भावाधिकारं नाद्रियन्ते (वि० प०)।

[रूपसिद्धि]

१-१२. समज्या। सम् + अज् + क्यप् + आ + सि। समजन्त्यस्याम्। आस्या। आस् + क्यप् + आ + सि। आसतेऽस्याम्। निषद्या। नि + सद् + क्यप् + आ + सि। निषीदन्त्यस्याम्। निपत्या। नि + पत् + क्यप् + आ + सि। निपतन्त्यस्याम्। शय्या। शीङ् + क्यप् + आ + सि। शेरतेऽस्याम्। सुत्या। षुञ् + क्यप् + आ + सि। सवनम्। विद्या। विद् + क्यप् + आ + सि। विदन्त्यनया। अटाट्या। अटाट्य + क्यप् + आ + सि। अटाट्यतेऽनया। परिचर्या। परि + चर् + क्यप् + आ + सि। परिचरन्त्यनया। मन्या। मन् + क्यप् + आ + सि। मन्यतेऽनया। भृत्या। भृञ् + क्यप् + आ + सि। बिभ्रत्यनया। इत्या। इण् + क्यप् + आ + सि। यन्त्यनया। 'समज् - आस् - निषद् - निपत् - शीङ् - षुञ् - विद् - अटाट्य - परिचर् - मन् - भृञ् - इण्' धातुओं से क्यप् प्रत्यय, शीङ्धातुघटित ईकार को अय्, 'भृ - इ' धातुओं के अन्त में तकारागम तथा विभक्तिकार्य॥१२४८।

## १२४९. कृञः श च [४।५।७७]

[सूत्रार्थ]

'डु कृञ् करणे' (७।७) धातु से 'श-क्ति' तथा 'क्यप्' प्रत्यय होता है॥१२४९।

[दु० वृ०]

कृञः शो भवति क्तिः क्यप् च। क्रियते इति क्रिया। भावे च — कृतिः, कृत्या॥१२४९।

[दु० टी०]

कृञः। सूत्रे शप्रत्ययश्चकारस्य सम्बन्धाद् व्यवहितोऽपि क्तिप्रत्ययो भवति। अन्यथा चकारेणानुकर्टुं शक्यत एव क्यबिति मनसि कृत्वाह — क्तिः क्यप् चेति॥१२४९।

[वि० प०]

कृञः। चकारेण सूत्रे शप्रत्ययस्यैव सम्बन्धो न क्यपः। तेन व्यवहितोऽपि क्तिर्वर्तत इत्याह — क्तिः क्यप् चेति। यदि पुनरनन्तरः क्यबेव वर्तते, तदा तेनैव चकारस्य सम्बन्धः कृतः स्यादिति भावः। यस्तु क्यप् चेति चकारः सोऽर्थवशाद् भेदनिबन्धनो वृत्तिकृता प्रयुज्यते, न त्वसौ सौत्र इति। अन्ये तु योगविभागात् क्तिप्रत्ययमिच्छन्ति। 'कृञः' इत्येकयोगोऽन्तरेण क्यपा सम्बध्यते। अतः 'श च' इति चकाराद् यथाप्राप्तं च, क्तिरपि भवति। भावे चेति। न केवलम् "अकर्तरि च कारके संज्ञायाम्" इति। एतेन भावाधिकारो नान्तरो वर्तते, किन्तर्हि पूर्वोक्त एवाधिकार इति दर्शितम्॥१२४९।

[क० च०]

कृञः। तेनेति पञ्जी। अत्र किं कारणम् ईदृशे सम्बन्धेऽप्यनन्तरत्वात् क्यपोऽनुवृत्तिरेव

युक्तिमती ? सत्यम् । गोयूथनाभाधिकारोऽत्र बोध्यः। यदि पुनरत्रेति गोयूथनामाधिकारस्यानादरत्वाद् इति बोध्यम् ।।१२४९।

[समीक्षा]

'क्रिया, कृत्या, कृतिः' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'श, क्यप्, क्ति' (पाणिनीय क्तिन् ) प्रत्यय किए गए हैं। पाणिनि का सूत्र है — "कृञः श च" (अ० ३।३।१००)। अतः पाणिनीय नकारानुबन्ध के अतिरिक्त तो उभयत्र समानता ही है।

[रूपसिद्धि]

१-३. **क्रिया**। कृ + श + आ + सि। **कृतिः**। कृ + क्ति + सि। **कृत्या**। कृ + क्यप् + आ + सि। 'डु कृञ् करणे' (७।७) धातु से 'श, क्ति, क्यप् ' प्रत्यय, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य।।१२४९।

## १२५०. सर्तेर्यश्च [४।५।७८]

[सूत्रार्थ]

'परि' उपसर्गपूर्वक 'सृ' धातु से 'य' प्रत्यय होता है।।१२५०।

[दु० वृ०]

अभिधानात् परिपूर्वात् सर्तेर्यो भवति। परिसर्या। चकाराज्जागर्तेश्च-जागर्या।।१२५०।

[दु० टी०]

सर्ते०। परिसृतिरपि दृश्यते।।१२५०।

[समीक्षा]

'परिसर्या' शब्दरूप की सिद्धि कातन्त्रकार द्वारा 'य' प्रत्यय से तथा पाणिनीय व्याकरण में वार्त्तिक सूत्र द्वारा 'यक्' प्रत्यय से की गई है — "परिचर्यापरिसर्यामृगयाऽटाट्यानामुपसंख्यानम् " (अ० ३।३।१०१—वा०)।

[रूपसिद्धि]

१. **परिसर्या**। परि + सृ + य + आ + सि। 'परि' पूर्वक 'सृ गतौ' (१।२७४) धातु से प्रकृत सूत्र द्वारा 'य' प्रत्यय, ऋकार को गुण, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य।।१२५०।

## १२५१. इच्छा [४।५।७९]

[सूत्रार्थ]

'इष्' धातु से इच्छा' शब्द निपातनविधि द्वारा सिद्ध होता है।।१२५१।

[दु० वृ०]

इषेरिच्छेति निपात्यते। इच्छा।।१२५१।

[दु० टी०]

इच्छा। इषेरिति। **'इषु इच्छायाम्'** (५।७०) इत्यस्य ग्रहणं प्रतिपदोक्तस्य **''कीर्तीषोः क्तिश्च''** (४।५।८६) इत्यनेनाघ्रातत्वात् । न निपातनेन क्तिर्बाध्यते इतीष्टिरिति युविधाने वक्ष्यति। ननु अप्रत्यय-छत्वमात्रं निपात्यते तर्हि **''शंसिप्रत्ययादः''** (४।५।८०) इत्यनन्तरं कथन्न विदध्यात् ? सत्यम् । सोऽपि निपातनश्चेत् को दोष इति॥१२५१।

[क० च०]

इच्छा। अथेच्छा कस्मिन् प्रत्यये परे निपातिता, निपातनेन वा किं साध्यमित्याह— अप्रत्यय इति। हेमः। सोऽपि अप्रत्ययोऽपीत्यर्थः॥१२५१।

[समीक्षा]

'इष्' धातु से 'इच्छा' शब्द की सिद्धि कातन्त्रकार 'अ' प्रत्यय से करते हैं, जबकि पाणिनि ने एतदर्थ 'श' प्रत्यय किया है। पाणिनि का सूत्र है — ''इच्छा'' (अ० ३।३।१०१)। पाणिनीय अनुबन्धयोजना के अतिरिक्त अन्य प्रकार की तो उभयत्र समानता ही है।

[रूपसिद्धि]

१. **इच्छा**। इष् + अ + आ + सि। 'इषु इच्छायाम् ' (५।७०) धातु से प्रकृत सूत्र द्वारा 'अ' प्रत्यय, षकार को छकार, छकार को द्वित्व, पूर्व छकार को चकार, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य॥१२५१।

## १२५२. शंसिप्रत्ययादः [४।५।८०]

[सूत्रार्थ]

'शन्स्' तथा प्रत्ययान्त धातु से स्त्रीलिङ्ग में भाव अर्थ की विवक्षा होने पर 'अ' प्रत्यय होता है॥१२५२।

[दु० वृ०]

शन्सुर्निष्ठायामनिडिति वचनम् । शन्सेः प्रत्ययान्ताच्च धातोरप्रत्ययो भवति स्त्रियाम् । प्रशंसा, पिपतिषा, पिपासा। दृशदो यिन् — दृशदा, अटाटा, कण्डूया। कण्डूतिरपीत्येके॥१२५२।

[दु० टी०]

शंसि०। प्रशस्तिरित्यपि दृश्यते॥१२५२।

[वि० प०]

शंसि०। **''उदनुबन्धपूक्लिशां क्त्वि''** (४।६।८४) इति वचनाद् वेटः **''न डीश्वीदनुबन्ध०''** (४।६।९०) इत्यादिना शंसेरनिट्त्वम्। अतो **''गुरोश्च निष्ठा सेटः''** (४।५।८१) इत्यनेन न सिध्यतीत्याह — शन्सुरित्यादि। 'दृशदा, अटाटा' इति यिन्चेक्रीयितयोः **''यस्यानानि''** (३।६।४८) इति यलोपः। कथं कण्डूया ? न हीह

कण्डूयादिभ्यो यणित्यादृतमिति, अपि तु एवम्भूता अमी धातवः इति न प्रत्ययान्तत्वम्? सत्यम् , मतान्तरेणेदमुदाहरणम् । इह तु "गुरोश्च निष्ठा सेटः" (४।५।८१) इत्यनेनैव सिध्यतीति। कण्डूतिरिति। "य्वोर्व्यञ्जनेऽये" (४।१।३५) इति यलोपः। शन्सोः क्तिरपि दृश्यते प्रशस्तिरिति॥१२५२।

[समीक्षा]

'प्रशंसा, पिपासा' इत्यादि शब्दों की सिद्धि दोनों ही व्याकरणों में 'अ' प्रत्यय से की गई है। पाणिनि के एतदर्थ दो सूत्र हैं — "अ प्रत्ययात्, गुरोश्च हलः" (अ० ३।३।१०२, १०३)। सूत्रद्वयजन्य पाणिनीय गौरव को छोड़कर अन्य प्रकार की तो उभयत्र समानता ही है।

[रूपसिद्धि]

१-३. **प्रशंसा।** प्र + शंस् + अ + आ + सि। **पिपतिषा।** पत् + सन् + अ + आ + सि। **पिपासा।** पा + सन् + अ + आ + सि। प्रपूर्वक 'शंस् - पिपतिष - पिपास' धातुओं से प्रकृत सूत्र द्वारा 'अ' प्रत्यय, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य॥१२५२।

## १२५३. गुरोश्च निष्ठासेटः [४।५।८१]

[सूत्रार्थ]

निष्ठासंज्ञक प्रत्यय के परे रहते इडागम वाली गुरुमान् धातु से 'अ' प्रत्यय होता है॥१२५३।

**[दु० वृ०]**

गुरुमतो धातोर्निष्ठायां सेटोऽप्रत्ययो भवति। ईहा, ईक्षा, जागरा। गुरोरिति किम्? निगृहीतिः। निष्ठासेट इति किम् ? नीतिः, राद्धिः॥१२५३।

**[दु० टी०]**

गुरोः। गुरुयोगाद् गुरुर्धातुः, यथा दण्डयोगाद् दण्डः पुरुषः। कुन्ता स्त्रीति। निष्ठायां सेडिति सप्तमीतत्पुरुषो न तु निष्ठासेट् परो यस्माद् धातोरिति बहुव्रीहिः। सेडित्यस्य विशेषणत्वात् पूर्वनिपातः सम्भाव्यते इत्याह — गुरुमत इत्यादि। शीङोऽपि तर्हि स्यात् नित्यं गुरुयोगो यस्येति कथमेतन्निष्ठासेटो गुरोश्चेति सन्नियोगशिष्टोऽयं चकारः। सेडवस्थायां यो गुरुमानित्यर्थः। केचिन्निष्ठायां सेट इत्यसमस्तं पठन्ति। निष्ठायां सेटो निष्ठायां गुरोश्चेति सम्बन्धः। चकारस्तूक्तसमुच्चयमात्रे "शीङ्पूञ्०" (४।१।१५) इत्यादिना गुणे कृते गुरुमतो नास्तीत्यर्थः। राद्धिरिति। एवम् आप्तिः, दीप्तिः। परस्त्वाह— गुरोश्च व्यञ्जनादिति स्वरादिभ्यस्त्रिभ्यो न स्यादिति परिगणनम् , तेन स्वंसा, ध्वंसा, स्वस्ति, ध्वस्तिरिति न्याय्यः पक्षः॥१२५३।

**[वि० प०]**

गुरोश्च। गुरुयोगाद् गुरुर्धातुः। यथा दण्डयोगाद् दण्डः पुरुषः इत्याह—गुरुमत

इत्यादि। निष्ठासेटो गुरोश्चेति संनियोगशिष्टोऽयं चकारः। तेन सेडवस्थायामेव गुरुमान् धातुस्तत इत्यर्थः। तेन शीङोऽप्रत्ययो न भवति। तस्य निष्ठायामिति कृते "शीङ्पूङ्धृषि०" (४।१।१५) इत्यादिना गुणे सति न सेडवस्थायां गुरुमत्तास्ति। यथा शयितमिति॥१२५३।

[समीक्षा]

'ईहा, ऊहा' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'अ' प्रत्यय किया है। पाणिनि का सूत्र है — "गुरोश्च हलः" (अ० ३।३।१०३)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-३. ईहा। ईह् + अ + आ + सि। ईक्षा। ईक्ष् + अ + आ + सि। जागरा। जागृ + अ + आ + सि। 'ईह् — ईक्ष् — जागृ' धातुओं से प्रकृत सूत्र द्वारा 'अ' प्रत्यय, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य॥१२५३।

## १२५४. षानुबन्धभिदादिभ्यस्त्वङ् [४।५।८२]

[सूत्रार्थ]

षकारानुबन्ध वाली तथा 'भिद्' इत्यादि धातुओं से 'अङ्' प्रत्यय होता है॥१२५४।

[दु० वृ०]

षानुबन्धेभ्यो भिदादिभ्यस्त्वङ् भवति। जृष् - जरा। डु पचष् - पचा। क्षिष् - क्षिया। घटादयः षानुबन्धाः-घटा, व्यथा। 'क्रप कृपायाम्' (१।४९७) इति निर्देशात् - कृपा। उपलब्धिरिति ज्ञापकात् क्षान्तिरित्यपि स्यात् । भिदादिभ्यो नदादिगणनिर्दिष्टेभ्य एव - भिदा विदारणे, भित्तिरन्या। गुहा पर्वतैकदेशे, गूढिरन्या। छिदा द्विधाकरणे, छित्तिरन्या। आङ्पूर्वादर्तेः- आरा शस्त्री, अर्त्तिरन्या। धृङ् प्रपाते - धारा, धृतिरन्या। विद-विदा। क्षिप-क्षिपा। गुध-गोधा। हृञ् - हारा। कृञ् - कारा। लिख् -लेखा। रलं रादेः-रेखा। ऊन-चुद-पीड-(रुज-मृगवस) मृगयतिभ्य इनन्तेभ्यो यौ प्राप्ते वचनम् - ऊना, चूडा। दीर्घत्वं दस्य डत्वं च निपातनात् । पीडा, मृगया (रुजा, मृगा, वसा)। गुणवृद्ध्यादिकमर्थविशेषश्च गणपाठसामर्थ्यात् ॥१२५४।

[दु० टी०]

षानु०। आतिदेशिका गृह्यन्ते इति घटादयः षानुबन्धा इति वचनबलात् । पूर्वाचार्यास्तु घटादीनां षानुबन्धत्वं प्रतिपदमेव पठितवन्तः॥१२५४।

[वि० प०]

षानुबन्ध०। जरेत्यङ्प्रत्ययेऽपि "जरा जरस् स्वरे वा" (२।३।२४) इति दर्शनाद् गुणः। अथवा गुणवृद्ध्यादिकमर्थविशेषश्च गणपाठसामर्थ्यादिति यद् वक्ष्यति तत् षानुबन्धेऽपि लक्ष्यानुरोधेन वेदितव्यम् । क्षियेति इयादेशः। घटादयः षानुबन्धा

इति। एतद् लाघवार्थं धातुगणे परिभाषितमर्वाचीनैः। प्राचीनैस्तु षानुबन्धाः प्रत्येकं मानुबन्धा इव कृता इति। ज्ञापकादिति। पूर्वपरयोरर्थोपलब्धाविति ज्ञापकादित्यर्थः। क्षान्तिरिति। एतदपि "गमिन् क्षान्तौ" (३।२।४२-५) इति रुचादिगणवचनादिति कश्चित्। तदयुक्तम्, इह दैवादिकस्य क्षमेरषानुबन्धत्वादिदमपि स्यादित्यपेरर्थः। **'डु लभष् प्राप्तौ'** (१।४७२), **'क्षमूष् सहने'** (१।४०४)। अङि तु 'उपलभा, क्षमा' इति स्यादेव। इह भिदादिः **'भिदिर् विदारणे'** (६।२) इत्यादिस्तु धातुगणो न गृह्यते। अन्यतोऽप्यङो दर्शनाद् अपि तु 'भिदा, छिदा, गुहा' इत्यादिर्नामगण एव। न च नाम्नः प्रत्ययः, धात्वधिकारात् । अतस्तत्रापोद्धारणद्वारेण ये धातवो दृश्यन्ते - **'भिदिर् विदारणे, छिदिर् द्विधाकरणे, गुहू संवरणे'** (६।२,३;१।५९५) इत्यादयः, तेभ्यः प्रत्यय इत्याह-भिदादिभ्य इत्यादि। आरेति। "**रम् ऋवर्णः**" (१।२।१०) इति रेफः। अर्त्तिरिति। "**ऋवर्णे अर्**" (१।२।४) इत्याङोऽर् परलोपश्च। ऊनेत्यादि। चत्वारोऽप्यमी चुरादौ पठ्यन्ते। यौ प्राप्त इति "**ईषिश्रन्थ्यासि०**" (४।५।८५) इत्यादिनेत्यर्थः। मृगयेति। **'मृग अन्वेषणे'** (३।२४) अदन्तगणनिपातनात् कारितलोपं बाधित्वा गुण एव भवति॥१२५४।

[क० च०]

षानु०। आरा शस्त्री, अर्त्तिरन्येति। आङ्पूर्वादर्तेः क्तिरिति कथमुक्तम्, "**ऋति धातोरुपसर्गस्य**" (कात० परि०- सं०५) इति दीर्घे आर्तिरिव स्यात् । अत एव **श्रीपतिः** - आङ्पूर्वादर्त्तेरार्तिरित्येव, अर्त्तिरिति गुरोरप्यर्देः क्तौ रूपं ततो 'विश्वार्तिः,सार्त्तिः' इति भवति, अन्यथा आङादेशाद् आङ्यादिष्ट इति पूर्वलोपे विश्वर्त्तिरिव स्यादित्याचष्टे। तथा च प्रयोगः—**'देवि ! प्रपन्नार्तिहरे ! प्रसीद'** (दु० स०) इति। अत्र **सम्प्रदायविदः**- क्वचिदधिकारस्य बहुलत्वाद् "**ऋति धातोरुपसर्गस्य**" (कात० परि०-सं०५) इति दीर्घो न भवति अर्तेरप्यर्तिरिति स्वीकर्तव्यम् । तथा च "**रोगाख्यां वुञ्**" (४।५।८७) इति वक्ष्यति। अप्यधिकाराच्छिरसोऽर्दनं शिरोऽर्त्तिरिति। **सागरस्तु** आङ्पूर्वादर्त्तेरित्यत्राङुपसर्ग इति नियमो नास्ति। यदाङुपसर्गेण धातुयोगस्तदा दीर्घत्वं **दुर्गस्यापि** सम्मतम् , यदा तु क्त्यन्तस्यापि विशेषणमाङ्शब्दस्तदा नोपसर्ग इति दीर्घत्वाभावादर्त्तिरिति भवत्येव। इदं तु **पाणिनेरपि** सम्मतम् । अत एव 'विश्वार्त्तिः, सार्त्तिः' इत्याङ्यादिष्ट इति पूर्वलोपे एकतकारपाठश्च युक्तिसिद्धत्वाद् दुर्निवार इति। नन्वेवमर्देरर्त्तिपदसाधनं व्यर्थम् , एवं च तकारत्रयश्रुतेः प्रयोजनत्वात् । एवं च सति आरेति रेफ इति "**रम् ऋवर्णः**" (१।२।१०) इति कथं **त्रिलोचनेनोक्तम्**। अन्तरङ्गत्वादरादेशे सति धातोरुपसर्गस्येति दीर्घत्वमेव युज्यते इति देश्यमपास्तम् , आङ्पूर्वत्वाभावात् कुतोऽन्तरङ्गविचारः। तथा च यथाश्रुतकाशिकादर्शनात् **श्रीपतिनोक्तम्** , तदुन्मत्तप्रलपितम् । यच्च **साम्प्रदायिकैरुक्तं** क्वचिदधिकारात्र दीर्घस्तदपि **हास्यास्पदमिति**। वयं तु आरेति "**रमृवर्णः**" (१।२।१०)

इति यदुक्तं पञ्जीकृता तत्तु 'धातुः सम्बन्धमायाति पूर्वं कर्त्रादिकारकैः' इति प्रथममुपसर्गेण सह सम्बन्धाभावात् कथमन्तरङ्गत्वादरादेश इति पक्षावसरः। 'आरा' इत्याङुपसर्गत्वेऽपि न दोष इति ब्रूमः॥१२५४।

[समीक्षा]

'जरा, त्रपा, पचा, घटा' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'अङ्' प्रत्यय किया गया है। पाणिनि का सूत्र है — "षिद्भिदादिभ्योऽङ्" (अ० ३।३।१०४)। पाणिनीय 'इत्' संज्ञा के लिए कातन्त्र में अनुबन्धसंज्ञा की गई है। अत: इन शब्दों के अतिरिक्त अन्य सभी प्रकार की उभयत्र समानता ही है।

[रूपसिद्धि]

१-१८. जरा। जॄष् + अङ् + आ + सि। पचा । डु पचष् + अङ् + आ + सि। क्षिया। क्षिष् + अङ् + आ + सि। घटा। घट् + अङ् + आ + सि। व्यथा। व्यथ् + अङ् + आ + सि। कृपा। क्रप् + अङ् + आ + सि। भिदा। भिद् + अङ् + आ + सि। गुहा। गुह् + अङ् + आ + सि। छिदा। छिद् + अङ् + आ + सि। आरा। आङ् + ऋ + अङ् + आ + सि। धारा। धृङ् + अङ् + आ + सि। विदा। विद् + अङ् + आ + सि। क्षिपा। क्षिप् + अङ् + आ + सि। गोधा। गुध् + अङ् + आ + सि। हारा। हञ् + अङ् + आ + सि। कारा। कृञ् + अङ् + आ + सि। लेखा। लिख् + अङ् + आ + सि। रेखा। लिख + अङ् + आ + सि। 'जॄष्' इत्यादि धातुओं से 'अङ्' प्रत्यय, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य॥१२५४।

## १२५५. भीषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलि-दोलिभ्यश्च [४।५।८३]

[सूत्रार्थ]

इन्प्रत्ययान्त 'भीषि-चिन्ति' इत्यादि ९ धातुओं से 'अङ्' प्रत्यय होता है॥१२५५।

[दु० वृ०]

एभ्य इनन्तेभ्योऽङ् भवति। भियो हेतुभये यश्चान्तः। भीषणं भीषा। 'चिति स्मृत्याम्' (८।२)- चिन्ता। 'पूज पूजायाम्' (९।६५)- पूजा। 'कथ वाक्यप्रबन्धे' (९।१७४)- कथा। 'कुबि छादने' (१।१४३)- कुम्बा। 'चर्च अध्ययने' (५।२४)- चर्चा। 'स्पृह ईप्सायाम्' (९।१८९)- स्पृहा। 'तुल उन्माने' (९।३७)- तोला। 'दुल उत्क्षेपे' (९।३८)- दोला। कथं तुला? 'तुलया सम्मिते' इति ज्ञापकात् ॥१२५५।

[दु० टी०]

भीषि०। भीषिधात्वन्तरं वा हेतुभये स्वभावादिति कारितान्ताद् युप्राप्ते वचनम् । ननु च 'ऊनचुदपीडमृगयतिभ्यः' इत्यत्र भिदादौ कथमेते न पठिताः, किञ्चाकृतिगणोऽपि द्रष्टव्यः। यथा पृच्छा? सत्यम् , प्रतिपत्तिरियं गरीयसीति॥१२५५।

[वि० प०]

भीषि०। भियो हेताविन् । इतरेभ्यश्चौरादिकत्वात् स्वार्थ एवेति। एतदपि "ईषिश्रन्थ्यासि०" (४।५।८५) इत्यादिना यौ प्राप्ते वचनम् ॥१२५५।

[क० च०]

भीषि०। अथ भीषेर्हेत्विनन्तस्य साहचर्याद् हेत्विनन्तात् कथन्न गृह्यते इत्याह—चुरादय इति हेमः॥१२५५।

[समीक्षा]

'चिन्ता, पूजा, चर्चा' इत्यादि शब्दरूपों की सिद्धि दोनों ही शाब्दिक आचार्यों ने 'अङ्' प्रत्यय से की है, परन्तु कातन्त्रकार ने 'भीषि-स्पृहि-तोलि-दोलि' ये चार धातुएँ अधिक पढ़कर 'भीषा, स्पृहा, तोला, दोला' शब्द भी अङ्प्रत्ययान्त ही सिद्ध किए हैं, जबकि पाणिनि केवल ५ ही धातुएँ पढ़ते हैं — "चिन्तिपूजिकथिकुम्बिचर्चश्च" (अ०३।३।१०५)। इस प्रकार यहाँ कातन्त्रीय उत्कर्ष ही सिद्ध होता है।

[रूपसिद्धि]

१-९. भीषा। भीषि + अङ् + आ + सि। चिन्ता। चिन्ति + अङ् + आ + सि। पूजा। पूजि + अङ् आ + सि। कथा। कथि + अङ् + आ + सि। कुम्बा। कुम्बि + अङ् + आ + सि। चर्चा। चर्चि + अङ् + आ + सि। स्पृहा। स्पृहि + अङ् + आ + सि। तोला + अङ् + आ + सि। दोला। दोलि + अङ् + आ + सि। 'भीषि' इत्यादि इन्प्रत्ययान्त ९ धातुओं से प्रकृत सूत्र द्वारा 'अङ्' प्रत्यय, इकारलोप, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य॥१२५५।

## १२५६. आतश्चोपसर्गे [४।५।८४]

[सूत्रार्थ]

उपसर्ग के उपपद में रहने पर आकारान्त धातुओं से 'अङ्' प्रत्यय होता है॥१२५६।

[दु० वृ०]

उपसर्ग उपपदे आकारान्ताद् धातोरङ् भवति। सन्धा, संस्था, व्यवस्था, उपदा, उपधा। अन्तर्पूर्वाच्च वक्तव्यम् - अन्तर्धा। कथं श्रद्धा? "आ श्रद्धा" (२।१।१०) इति ज्ञापकात् । अप्यधिकारात् प्रमितिः॥१२५६।

[क० च०]

आतः। क्यङणेष्वन्तर इति परः। भवन्मते कथमित्याह-अन्तरिति॥१२५६।

[समीक्षा]

'संस्था, उपधा' इत्यादि शब्दों की सिद्धि दोनों ही शाब्दिक आचार्यों ने 'अङ्'

प्रत्यय द्वारा की है। पाणिनि का सूत्र है — "आतश्चोपसर्गे" (अ० ३।३।१०६)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-५. **सन्धा।** सम् + धा + अङ् + आ + सि। **संस्था।** सम् + स्था + अङ् + आ + सि। **व्यवस्था।** वि + अव + स्था + अङ् + आ + सि। **उपदा।** उप + दा + अङ् + आ + सि। **उपधा।** उप + धा + अङ् + आ + सि॥१२५६।

## १२५७. ईषिश्रन्थ्यासिवन्दिविदिकारितान्तेभ्यो युः [४।५।८५]

[सूत्रार्थ]

भाव अर्थ में 'ईष् - श्रन्थ् - आस् - वन्द् - विद् - कारितप्रत्ययान्त' धातुओं से स्त्रीलिङ्ग में 'यु' प्रत्यय होता है॥१२५७।

[दु० वृ०]

एभ्यो युर्भवति। **'ईषगतिहिंसादानेषु'** (१।४३३) ईषणा। श्रन्थना, उपासना, वन्दना, आसिसहचरितो वेत्तिः-वेदना, कारणा। चुरादौ **'घट्ट चलने'** (१।३५१)-घट्टना। भौवादिकस्य घट्टतेः क्तेरनभिधानात् ॥१२५७।

[वि० प०]

ईषि०। भौवादिकस्येति। क्तिप्रत्ययापवादो युर्विधीयमानक्तेरेव विषये युज्यते। न च भौवादिकस्य घट्टतेः क्तिरभिधीयते। अतो न युप्रत्यय इति भावः॥१२५७।

[क० च०]

ईषि०। क्तिप्रत्ययापवाद इति। ननु कथमेतत् कारितान्तस्य घटेः प्रत्ययान्तत्वात् "शंसिप्रत्ययादः" (४।५।८०) इति अप्रत्ययस्यैव बाधको युक्तः? सत्यम् । **'येन नाप्राप्तौ यो विधिरारभ्यते स तस्य बाधकः'** (व्या० परि० ४२) - अप्रत्यये प्राप्ते कारितान्तत्वाद् युर्नाभिधीयते, अपि तु क्तौ। तथापि कारितान्तग्रहणाभावे भीषिचिन्तीतिवचनं किमर्थम् , प्रत्ययान्तत्वादप्रत्ययेनैव सिद्धेः। न चाङ्प्रत्यये वा विशेषोऽस्ति, तस्माद् वचनं भीषिचिन्तीति **नियमार्थम्,** अन्येषां कारितान्तानामप्रत्ययो नास्तीति नियमयति। अथ स्त्रियां क्तिप्रत्ययस्य बाधक इति यश्च भीषिचिन्तीत्यत्र यौ प्राप्ते वचनमित्युक्तम् , तत्तु कारितान्तग्रहणस्थिताविति **हेमः**॥१२५७।

[समीक्षा]

'कारणा, आसना' इत्यादि शब्दों की सिद्धि कातन्त्रकार ने 'यु' प्रत्यय तथा पाणिनि ने 'युच्' प्रत्यय से की है — "ण्यासश्रन्थो युच्" (अ० ३।३।१०७)। ज्ञातव्य है कि पाणिनि का चकारानुबन्ध चित्स्वरार्थ किया गया है। कातन्त्र में स्वर-प्रकरण के

न होने से उसकी कोई आवश्यकता नहीं रह जाती। इस दृष्टि से समानता होने पर भी 'वन्दना, वेदना, घट्टना' की सिद्धि कातन्त्रकार ने साक्षात् की है, जबकि पाणिनीय व्याकरण में उनकी सिद्धि के लिए वार्त्तिकसूत्र बनाया गया है — "घट्टिवन्दिविदिभ्य उपसंख्यानम्" (अ० ३।३।१०७ - वा०)। अतः यहाँ कातन्त्रीय उत्कर्ष सिद्ध है।

[रूपसिद्धि]

१-७. **ईषणा**। ईष् + यु - अन + आ + सि। **श्रन्थना**। श्रन्थ् + यु - अन + आ + सि। **उपासना**। उप + आस् + यु - अन + आ + सि। **वन्दना**। वन्द् + यु - अन + आ + सि। **वेदना**। विद् + यु - अन + आ + सि। **कारणा**। कृ + इन् + यु - अन + आ + सि। **घट्टना**। घट्ट + इन् + यु - अन + आ + सि। 'ईष् - श्रन्थ्' इत्यादि धातुओं से प्रकृत सूत्र द्वारा 'यु' प्रत्यय, 'अन' आदेश, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य ॥१२५७।

## १२५८. कीर्तीषोः क्तिश्च [४।५।८६]

[सूत्रार्थ]

स्त्रीलिङ्ग तथा भाव अर्थ में 'कीर्ति - इष् ' धातुओं से 'क्ति-यु' प्रत्यय होते हैं॥१२५८।

[दु० वृ०]

कीर्तयतेरिषेश्च क्तिर्भवति युश्च। कीर्त्तिः, संकीर्तना । **'इष गतौ'** (३।१६), **'इष आभीक्ष्ण्ये'** (८।४५) वा - अन्विष्टिः, अन्वेषणा। परीष्टिः, पर्येषणा। **'इषु इच्छायाम्'** (५।७०) इति मानुबन्धः - इष्टिः ॥१२५८।

[क० च०]

कीर्ती०। **'इषु इच्छायाम्'** (५।७०) इति यद्यप्यनुबन्धकृल्लाक्षणिकत्वं नास्तीति तथाप्यत्राङ्गीक्रियते। यथा **'क्षिष् हिंसायाम्'** (८।३०) इति लाक्षणिकत्वादित्युक्तम् ॥१२५८।

[समीक्षा]

'कीर्त्तिः, संकीर्तना' इत्यादि शब्दरूपों की सिद्धि कातन्त्रकार ने 'क्ति-यु' प्रत्ययों से की है, जबकि पाणिनि ने एतदर्थ 'क्तिन् - युच्' प्रत्यय किए हैं—"ण्यासश्रन्थो युच्" (अ० ३।३।१०७)। 'अन्वेषणा - अन्विष्टिः' शब्द वार्तिककार ने सिद्ध किए हैं — "इषेरनिच्छार्थस्य युज् वक्तव्यः" (अ० ३।३।१०७-वा०)। इस प्रकार कातन्त्रीय उत्कर्ष सिद्ध होता है।

[रूपसिद्धि]

१-६. **कीर्त्तिः**। कृत् + इन् + क्ति + सि। **संकीर्तना**। सम् + कृत् + इन् + यु - अन + आ + सि। **अन्विष्टिः**। अनु + इष् + क्ति + सि। **अन्वेषणा**। अनु + इष् +

यु - अन + आ + सि। **परीष्टिः**। परि + इष् + क्ति + सि। **पर्येषणा**। परि + इष् + यु -अन + आ + सि। 'कीर्ति' इत्यादि धातुओं से 'क्ति-यु' प्रत्यय, 'यु' को 'अन' आदेश, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य॥१२५८।

## १२५९. रोगाख्यायां वुञ् [४।५।८७]

[सूत्रार्थ]

रोगविशेष की संज्ञा के प्रतीयमान होने पर धातु से 'वुञ्' प्रत्यय होता है॥१२५९।

[दु० वृ०]

व्याधेराख्यायां धातोर्वुञ् भवति। प्रवाहिका, प्रच्छर्दिका, विचर्चिका। अप्यधिकारात् शिरसोऽर्दनं शिरोऽर्त्तिः॥१२५९।

[समीक्षा]

'प्रच्छर्दिका, प्रवाहिका' इत्यादि शब्दों की सिद्धि कातन्त्रकार ने 'वुञ्' प्रत्यय से तथा पाणिनि ने 'ण्वुल्' प्रत्यय से की है — "रोगाख्यायां ण्वुल् बहुलम्" (अ० ३।३।१०८)। अनुबन्धयोजना अपने अपने व्याकरण की प्रक्रिया के अनुसार की गई है। अत: सामान्यतया उभयत्र समानता है।

[रूपसिद्धि]

१-३. **प्रवाहिका**। प्र + वह् + वुञ् - अक + आ + सि। **प्रच्छर्दिका**। प्र + छर्द् + वुञ् - अक + आ + सि। **विचर्चिका**। वि + चर्च + वुञ् - अक + आ + सि। 'वह्' इत्यादि धातुओं से 'वुञ्' प्रत्यय, 'अक' आदेश, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य॥१२५९।

## १२६०. संज्ञायां च [४।५।८८]

[सूत्रार्थ]

संज्ञा के विषय में धातु से 'वुञ्' प्रत्यय होता है॥१२६०।

[दु० वृ०]

संज्ञायां च विषये धातोर्वुञ् भवति। उद्यानपुष्पाणि भज्यन्ते यस्यां क्रीडायां सा **उद्यानपुष्पभञ्जिका क्रीडा। क्रीडायां नित्यसमास एव।** 'पुष्पभञ्जिका' इत्येतावती सञ्ज्ञा। एवं वीरणपुष्पप्रचायिका॥१२६०।

[क० च०]

सञ्ज्ञायाम् । अथ पूर्ववचनमनर्थकमनेनैव सामान्येन सिद्धेः? सत्यम्, पूर्वत्राभिधेयसप्तमी अत्र विषयसप्तमी कथमनेन सिध्यति, अथैका एव सप्तमी द्विविधा वाश्रीयतां चेत् तथापि गौरवं स्यात् ॥१२६०।

[समीक्षा]

'उद्यानपुष्पभञ्जिका, शालभञ्जिका' आदि संज्ञापरक शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'वुञ्' प्रत्यय तथा पाणिनि ने 'ण्वुल्' प्रत्यय किया है — "सञ्ज्ञायाम्" (अ० ३।३।१०९)। अनुबन्धयोजना अपने अपने व्याकरण की प्रक्रिया के अनुरूप की गई है। अतः अनुबन्ध-योजना के अतिरिक्त अन्य प्रकार की तो उभयत्र समानता ही कही जा सकती है।

[रूपसिद्धि]

१-२. **उद्यानपुष्पभञ्जिका।** उद्यानपुष्प + भन्ज् + वुञ् - अक + आ + सि। उद्यानपुष्पाणि भज्यन्ते यस्यां क्रीडायां सा। **वीरणपुष्पप्रचायिका।** वीरणपुष्प + प्र + चि + वुञ् - अक + आ + सि। वीरणपुष्पाणि प्रचीयन्ते यस्यां क्रीडायां सा। 'उद्यानपुष्प-वीरणपुष्प' के उपपद में रहने पर 'भन्ज् - चि' धातुओं से 'वुञ्' प्रत्यय, अक आदेश, इकार को वृद्धि, आय् आदेश, इत्त्व, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य।।१२६०।

## १२६१. पर्यायार्हर्णेषु च [४।५।८९]

[सूत्रार्थ]

'पर्याय - अर्ह - ऋण' अर्थों में वर्तमान धातु से 'वुञ्' प्रत्यय होता है।।१२६१।

[दु० वृ०]

एषु वर्तमानाद् धातोर्वुञ् भवति। अद्य भवतः शायिका। अर्हति भवान् इक्षुभक्षिकाम्, ऋणे-पायसभोजिकां मे धारयसि। चकारादुत्पत्तौ च — इक्षुभक्षिका मे उदपादि। -न भवति च - चिकीर्षा जिहीर्षा मे उपपद्यते। भावमात्रे च दृश्यते - का नाम शायिका अन्येष्वधीयमानेषु, का नाम आसिका अन्येषु गच्छत्सु इति।।१२६१।

[समीक्षा]

'शायिका, इक्षुभक्षिकाम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'वुञ्' प्रत्यय तथा पाणिनि ने 'ण्वुच्' प्रत्यय किया है — "पर्यायार्हर्णोत्पत्तिषु ण्वुच्" (अ० ३।३।१११)। अनुबन्धयोजना को छोड़कर अन्य प्रकार की तो प्रायः उभयत्र समानता ही है।

[रूपसिद्धि]

१-३. **शायिका।** शीङ् + वुञ् - अक + आ + सि। **इक्षुभक्षिकाम्।** इक्षु + भक्ष् + वुञ् - अक + आ + अम्। **पायसभोजिकाम्।** पायस + भुज् + वुञ् - अक + आ + अम्। 'शीङ् - भक्ष् - भुज्' धातुओं से 'वुञ्' प्रत्यय, 'अक' आदेश, इत्त्व, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य।।१२६१।

## १२६२. प्रश्नाख्यानयोरिञ् च वा [४।५।९०]

[सूत्रार्थ]

प्रश्न तथा आख्यान अर्थ के गम्यमान होने पर धातु से 'इञ्' तथा 'वुञ्' प्रत्यय यथाप्राप्त रूप में होते हैं।।१२६२।

[दु० वृ०]

प्रश्ने आख्याने च गम्यमाने धातोरिञ् भवति वुञ् च। वाग्रहणाद् यथाप्राप्तं च। कां त्वं कारिमकार्षीः? कां कारिकाम् ? कां कृतिम् ? कां क्रियाम् ? कां कृत्याम् ? सर्वां कारिमकार्षम् । सर्वां कारिकाम् , सर्वां कृतिम् , सर्वां क्रियाम् , सर्वां कृत्याम् ।।१२६२।

[क० च०]

प्रश्ना०। प्रश्नाख्यानयोरित्येकं सूत्रम् , इञ् चेति द्वितीयम् । प्रश्नाख्यानयोरिञ् भवति। चकाराद् यथाप्राप्तं चेति सिद्धम् , किं वाग्रहणेनेत्याह - योग इति हेमः। **वरमक्षराधिक्यं न पुनर्योगविभागः** इत्यतो गौरवमिति भावः।।१२६२।

[समीक्षा]

'कारिम् , कारिकाम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'इञ् - वुञ्' प्रत्यय तथा पाणिनि ने 'इञ् - ण्वुल् ' प्रत्यय किए हैं — "विभाषाख्यानपरिप्रश्नयोरिञ् च" (अ०३।३।११०)। भिन्न-भिन्न अनुबन्धयोजना को छोड़कर अन्य प्रकार की तो उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१-५. **कारिम्** । कृ + इञ् + अम् । **कारिकाम्** । कृ + वुञ् - अक + अम्। **कृतिम्** । कृ + क्ति + अम् । **क्रियाम्** । कृ + श + आ + अम् । **कृत्याम्** । कृ + क्यप् + आ + अम् । 'डु कृञ् करणे' (७।७) धातु से 'इञ् - वुञ् - क्ति - श-क्यप्' प्रत्यय, 'वु' को 'अक' आदेश, ऋकार को वृद्धि, इत्त्व, तकारागम तथा विभक्तिकार्य।।१२६२।

## १२६३. नञ्यन्याक्रोशे [४।५।९१]

[सूत्रार्थ]

आक्रोश अर्थ के गम्यमान होने पर तथा 'नञ् ' के उपपद में रहने पर धातु से 'अनि' प्रत्यय होता है।।१२६३।

[दु० वृ०]

नञ्युपपदे आक्रोशे गम्यमाने धातोरनिर्भवति। अकरणिस्ते वृषल ! भूयात् । एवम् अजीवनिः। नञीति किम् ? मृतिस्ते वृषल ! भूयात् । सम्पदादिभ्यः क्विप् भावे

कारके च। अन्यत्रापीति। बहुलत्वात् स एव - सम्पत् , विपत् , प्रतिपत् , आपत् । सम्पत्तिरित्यपि स्यात्। सम्पदादिराकृतिगणोऽयम् । इकिश्तिपो धातुस्वरूपेऽर्थे ज्ञापकादेव सिद्धाः। अकारः, ककारः इत्यौणादिकः, कारशब्देन वा समासः। यथा - एवंकारः, ॐकारः, स्फीत्कारः, स्फुत्कारः, शीत्कारः, चीत्कारः, वषट्कारः, स्वाहाकारः। रेफ इति, औणादिको रादिफः॥१२६३।

[वि० प०]

नञ्यन्या०। स एवेति। "क्विप् च" (४।३।६८) इत्यनेन यो विहित इत्यर्थः। इकिश्तिपो धातुस्वरूपेऽर्थे ज्ञापकादेव सिद्धा इति। तत्र "परोक्षायामिन्धिश्रन्थिग्रन्थि०" (३।६।३) इत्यादिनिर्देशाद् इप्रत्ययः, "राधिरुधिक्रुधि०" (३।७।२२) इत्यादिनिर्देशात् किप्रत्ययः कानुबन्धबलादगुणत्वम् , "करोतेः, हनिमन्यतेर्नात्" (३।५।४०, ३।२३) इत्यादिनिर्देशात् शितप्प्रत्ययः। शानुबन्धबलादस्य सार्वधातुके विकरणः, पानुबन्धोऽपीह सुखार्थः। परप्रसिद्ध्यर्थमुपादीयते, परो हि किल सार्वधातुकवदिति प्रयोजनमाह। अन्ये तु "इक्श्तिपौ" इति मन्यमानाः द्वौ प्रत्ययावित्याहुः। तदसत् , "इन्धिश्रन्थिग्रन्थि०" इत्यादिनिर्देशानुपपत्तिप्रसङ्गात् । इह हीक्प्रत्ययेऽनुषङ्गलोपः स्यादिति तस्माद् इप्रत्ययोऽपि विधेयः। तथा च चान्द्रसूत्रम् - "इकिश्तिपः स्वरूपे" इति। अकार इत्यादि। एतेन "वर्णात् स्वरूपे कारतौ" इत्युणादिष्वपि निष्फलमिति दर्शितम् । तदेवान्यथाकारं दर्शयन्नाह — यथेति। अन्यथा वर्णादित्युक्ते कथं शब्दात् कारः स्यादिति भावः॥१२६३।

[क० च०]

नञ्यन्या०। भावे कारके चेति। सम्पदिति भावे, प्रतिपदिति कर्मणि कारके। तथा क्रियते इति कृत्। न च सम्पदादित्वात् कारकेऽपि क्विपि स्त्रियामित्यधिकारात् स्त्रीलिङ्गे सति कृदिति स्त्रीलिङ्गतया दूषणमिति कर्तर्येव क्विबिति वाच्यम् । अत्र तु वक्तव्ये स्त्र्यधिकारस्यानादराद् अत एव सम्पत्तिरिति वासरूपविधिनेति हेमोक्तं सङ्गच्छते। यच्च सम्पदादेः स्त्रीलिङ्गता तच्च भावे क्विपि स्वभावादेव, कारके तु वाच्यलिङ्गता। सार्वधातुकमपिदित्यादि अगुणविधायकं सूत्रम् । अस्यार्थः — अपिद् अपानुबन्धं सार्वधातुकमगुणं भवति। यथा तुदति। अत्र परेण मध्ये शः क्रियते। अपिदिति किं भवति। अत्र मध्ये शप् क्रियते "कर्तरि शप्" ((अ० ३।१।६८) इति परसूत्रम्। इदनुबन्धः। पकारोऽनुबन्धो यस्य तत् पित् , न पित् अपित् । यद् वा न विद्यते पकारोऽनुबन्धो यस्यापित् "वर्णात् स्वरूपे कारतौ" इति परसूत्रम् । तत्र कारप्रत्ययो दूषितः, तकारस्तूणादौ स्वीकर्तव्यः॥१२६३।

[समीक्षा]

'अकरणिः, अजीवनिः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'अनि' प्रत्यय किया गया है। पाणिनि का सूत्र है — "आक्रोशे नञ्यनिः" (अ० ३।३।११२)। इस प्रकार उभयत्र समानता ही है।

[रूपसिद्धि]

१-२. **अकरणिः**। नञ् + कृ + अनि + सि। **अजीवनिः**। नञ् + जीव् + अनि + सि। 'नञ्' के उपपद में रहने पर 'कृ-जीव्' धातुओं से प्रकृत सूत्र द्वारा 'अनि' प्रत्यय, ऋकार को गुण, नञ्घटित नकार का लोप तथा विभक्तिकार्य॥१२६३।

## १२६४. कृत्ययुटोऽन्यत्रापि [४।५।९२]

[सूत्रार्थ]

कृत्यसंज्ञक 'तव्य - अनीय् - क्यप् - घ्यण्-य' तथा युट् प्रत्यय विहित अर्थों से भिन्न अर्थों में भी प्रयोगानुसार उपपन्न होते हैं॥१२६४।

[दु० वृ०]

कृत्याः युट् च यस्मिन्नर्थे विहितास्ततोऽन्यत्रापि भवन्ति लक्ष्यतः। स्नानीयं चूर्णम्, दानीयो ब्राह्मणः, समावर्तनीयो गुरुः, प्रवचनीय उपाध्यायः। करणादिषु भवन्त्यमी। भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्याः कर्तर्यपि भवन्ति। आङ्पूर्वयोः प्लुङ्पद्योर्घ्यणपि। राजभिर्भुज्यन्ते **राजभोजनाः** शालयः। एवं राजाच्छादनानि वासांसि। 'अवसेवनम्, अवसेचनम्, अवश्रवणम् , दानम् , मोचनम् ' एते कर्मणि च। 'प्रस्कन्दनम्, प्रपतनम् ' इत्यपादाने। अपिशब्दो बहुलार्थ इति 'ष्ठिवुसिव्योर्दीर्घश्च वा' — निष्ठीवनम्, निष्ठेवनम् । निषीवणम् , निषेवणम् । चकारात् — करोतीति **कारणम्** ॥१२६४।

[वि० प०]

कृत्य०। करणादिष्विति। स्नात्यनेन, दीयतेऽस्मै। समावर्ततेऽस्मात् , प्रवक्त्यस्मिन्निति यथाक्रमं चत्वार्युदाहरणानि। तव्येत्यादि। भवति गायतीत्यादि वाक्यम् । कर्तर्यपीति। न केवलं भावकर्मणोरित्यपेरर्थः॥१२६४।

[क० च०]

कृत्य०। प्लुङ्पद्योरिति। **'पद गतौ'** (३।१०७)॥१२६४।

[समीक्षा]

कातन्त्रकार ने 'तव्य, अनीय, क्यप्,घ्यण् , य' इन पाँच प्रत्ययों की 'कृत्य' संज्ञा की है। पाणिनीय व्याकरण में 'तव्यत् , तव्य, अनीयर्, यत् , क्यप् , ण्यत्, केलिमर्' ये सात प्रत्यय कृत्यसंज्ञक माने गए हैं। पाणिनीय ल्युट् के लिए कातन्त्र में युट् प्रत्यय है। ये सभी प्रत्यय दोनों ही व्याकरणों में विहित अर्थों से भिन्न अर्थों में भी किए जाते हैं। पाणिनि का सूत्र है — "कृत्यल्युटो बहुलम् " (अ०३।३।११३)। 'बहुल' के चार अर्थ माने गए हैं — १. क्वचित् प्रवृत्ति, २. क्वचित् अप्रवृत्ति, ३. क्वचिद् विभाषा, ४. क्वचिद् अन्यदेव। चतुर्थ अर्थ यहाँ ग्राह्य है। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-६. स्नानीयं चूर्णम् । स्ना + अनीय + सि। स्नात्यनेन। दानीयो ब्राह्मणः। दा + अनीय + सि। दीयतेऽस्मै। समावर्तनीयो गुरुः। सम् + आङ् + वृत् + अनीय + सि। समावर्ततेऽस्मात् । प्रवचनीयः उपाध्यायः। प्र + वच् + अनीय + सि। प्रवक्त्यस्मिन् । राजभोजनाः शालयः। राजन् + भुज् + युट् - अन + जस् । राजभिर्भुज्यन्ते। राजाच्छादनानि वासांसि। राजन् + आङ् + छद् + युट् - अन + जस् । राजभिराच्छाद्यन्ते। 'स्ना - दा-वृत् - वच् ' धातुओं से 'अनीय' प्रत्यय, 'छद् - भुज्' धातुओं से 'युट्' प्रत्यय तथा विभक्तिकार्य।।१२६४।

## १२६५. नपुंसके भावे क्तः [४।५।९३]

[सूत्रार्थ]

नपुंसकलिङ्ग में भाव अर्थ के विवक्षित होने पर धातु से 'क्त' प्रत्यय होता है।।१२६५।

[दु० वृ०]

भावेऽर्थे नपुंसके क्तो भवति। शयितम् , स्थितम् , भवता कृतम् , प्राप्तमनेनेत्यविवक्षितकर्मत्वात् । युटा बाधितो नपुंसके क्तो यथा स्यादिति वचनम् । वासरूपत्वाच्चेत् तर्हि घञादयोऽपि स्युरिति।।१२६५।

[वि० प०]

नपुंसके०। "भावकर्मणोः कृत्यक्तखलर्थाः" (४।६।४७) इति सामान्येन नपुंसकेऽपि सिद्धमित्याह—युटेत्यादि।।१२६५।

[क० च०]

नपुंसके०। वासरूपत्वादिति। अथ कथमिदमुक्तम् , क्तयुट्तुम्खलर्थेषु वासरूपविधिर्नास्तीति निश्चयात् कथं घञादीनां प्रसङ्गः? सत्यम् , सूत्रस्थितौ क्तयुट्तुमित्यादीति निश्चयः कृतः। इदानीं तस्यानादरेण यदि सूत्रमनादरणीयं स्यादित्युच्यते तदा युड्विषये क्तः स्याद् वासरूपत्वात् , तथा घञादयोऽपीति। किञ्च सामान्यत्वात् स्त्रीपुंसयोरपि भावे क्तः स्यादिति सूत्रमवश्यं विधातव्यमिति। अथ हेमकरेण कथमुक्तं घञादीनामित्यादिसूत्राभावे क्तयुट्तुम्खलर्थेष्वित्युक्ते युटो विषयेऽपि क्तो नास्ति, अत उदाहरणसिद्धिरेव न स्यात् तत् कथं सूत्रमविषयम् ? सत्यम् , क्तयुटोरन्योऽन्यं वासरूपविधिरस्ति, किन्त्वस्य विषये नास्ति क्तयुडित्यत्र क्तस्योपादानात् , अन्यथा तत्र पाठो व्यर्थः स्यात् क्तस्योत्सर्गत्वात् ।।१२६५।

[समीक्षा]

'हसितम् , शयितम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही शाब्दिक आचार्यों ने 'क्त' प्रत्यय का विधान किया है। पाणिनि का सूत्र है — "नपुंसके भावे क्तः" (अ० ३।३।११४)। अतः उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१-३. शयितम् । शीङ् + इट् + क्त + सि। स्थितम् । स्था + क्त + सि। भवता कृतम्। कृ + क्त + सि। 'शीङ् - स्था - कृ' धातुओं से 'क्त' प्रत्यय तथा विभक्तिकार्य।।१२६५।

## १२६६. युट् च [४।५।९४]

[सूत्रार्थ]

नपुंसकलिङ्ग में तथा भाव अर्थ में धातु से 'युट्' प्रत्यय होता है।।१२६६।

[दु० वृ०]

नपुंसके भावे युट् च भवति। स्थानम्, गमनम् ।।१२६६।

[समीक्षा]

'हसनम् , शयनम् , गमनम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'युट्' प्रत्यय तथा पाणिनि ने 'ल्युट्' प्रत्यय किया है। पाणिनि का सूत्र है — "ल्युट् च" (अ०३।३।११५)। अत: अनुबन्धभिन्नता के अतिरिक्त अन्य प्रकार की तो समानता ही है।

[रूपसिद्धि]

१-२. स्थानम् । स्था + युट् - अन + सि। गमनम् । गम् + युट् - अन + सि। 'स्था-गम्' धातुओं से 'युट्' प्रत्यय, 'यु' को 'अन' आदेश तथा विभक्तिलोप।।१२६६।

## १२६७. करणाधिकरणयोश्च [४।५।९५]

[सूत्रार्थ]

करण तथा अधिकरण अर्थ में धातु से 'युट्' प्रत्यय होता है।।१२६७।

[दु० वृ०]

करणेऽधिकरणे च युट् भवति। इध्मव्रश्चनम् , पलाशशातनम् । अधिकरणे च - गोदोहनी घटी, सक्तुधानी स्थाली।।१२६७।

[क० च०]

कर०। "नपुंसके च" इत्यधिकारो नास्ति टनुबन्धबलात् , अन्यथा टनुबन्धो निरर्थक:, स हि नदाद्यर्थक:। यदि पुनर्नपुंसके एव युट्प्रत्ययनियमस्तदा स्त्रीलिङ्गत्वाभावात् किं टकारेण साधितमिति कश्चित्, तन्न । नपुंसकाधिकारोऽस्त्येव किन्तु टनुबन्धबलात् स्त्रीलिङ्गतापि स्यात् । यथा "उदङ्कोऽनुदके" (४।५।१००) इत्यत्र हेमकर: उदकोदञ्चन: इति करणाधिकरणयो: पुंसि युट् अन्यत्रापीति वचनादिति प्राह। अन्यथा नपुंसकाधिकारस्याभावात् सामान्येन युट् भवन् पुंस्यपि भविष्यति किमन्यत्रापीति वचनाश्रयणेन।।१२६७।

[समीक्षा]

'गोदोहनी, सक्तुधानी' इत्यादि शब्दरूपों की सिद्धि कातन्त्रकार ने 'युट्' प्रत्यय से तथा पाणिनि ने 'ल्युट्' प्रत्यय से की है — "करणाधिकरणयोश्च" (अ० ३।३।११७)। इस प्रकार अनुबन्धयोजना को छोड़कर अन्य प्रकार की तो उभयत्र समानता ही है।

[रूपसिद्धि]

१-४. **इध्मव्रश्चनम्**। इध्म + व्रश्च + युट् - अन + सि। वृश्च्यतेऽनेन। **पलाशशातनम्**। पलाश + शद्लृ + इन् + युट् - अन + सि। शात्यतेऽनेन। **गोदोहनी घटी**। गो + दुह् + युट् - अन + ई + सि। दुह्यन्तेऽस्याम्। **सक्तुधानी**। सक्तु + धा + युट् - अन + ई + सि। धीयन्तेऽस्याम्। 'व्रश्च् - शाति + दुह् + धा' धातुओं से 'युट्' प्रत्यय, 'अन' आदेश, स्त्रीलिङ्ग में 'ई' प्रत्यय तथा विभक्तिकार्य॥१२६७।

## १२६८. पुंसि संज्ञायां घः [४।५।९६]

[सूत्रार्थ]

करण तथा अधिकरण अर्थ में पुंल्लिङ्ग में संज्ञा के गम्यमान होने पर धातु से 'घ' प्रत्यय होता है॥१२६८।

[दु० वृ०]

करणाधिकरणयोः पुंसि संज्ञायां घो भवति। स्वरान्तात् - उरश्छाद्यतेऽनेनेति **उरश्छदः**। कुर्वन्त्यनेनेति **करः**। शृण्वन्त्यनेनेति **श्रवः**, करणे। अधिकरणे च — नीयन्तेऽस्मिन्निति **नयः**। एवं विनयः। लीयन्तेऽस्मिन्निति **लयः**। एवं निलयः। विषिण्वन्त्यस्मिन्निति **विषयः**॥१२६८।

[वि० प०]

पुंसि०। स्वरान्तादिति। व्यञ्जनान्ताद् घापवादं घञं वक्ष्यतीति भावः। **"छादेर्घेस्मन्त्रन्क्विप्सु च"** (४।१।१९) इति छादयतेश्छुरादाविनन्तस्य ह्रस्वः॥१२६८।

[क० च०]

पुंसि०। यद्यपि विशेषस्यानिर्देशात् सामान्यादेव घञ्प्रत्ययस्तथापि **"व्यञ्जनाच्च"** (४।५।९९) इत्यनेन व्यञ्जनान्तस्याघ्रातत्वात् स्वरादस्य विषय इत्याह — स्वरान्तादिति॥१२६८।

[समीक्षा]

'दन्तच्छदः, उरश्छदः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'घ' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है — "पुंसि संज्ञायां घः प्रायेण" (अ० ३।३।११८)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-८. **उरश्छदः**। उरस् + छादि + घ + सि। उरश्छाद्यतेऽनेन। **करः**। कृ + घ +

सि। कुर्वन्त्यनेन। श्रवः। श्रु + घ + सि। शृण्वन्त्यनेन। नयः। नी + घ + सि। नीयन्तेऽस्मिन्। विनयः। वि + नी + घ + सि। विनीयन्तेऽस्मिन्। लयः। लीं + घ + सि। लीयन्तेऽस्मिन्। निलयः। नि + ली + घ + सि। निलीयन्तेऽस्मिन्। विषयः। वि + सि + घ + सि। विषिण्वन्त्यस्मिन्। 'छादि - कृ + श्रु' इत्यादि धातुओं से प्रकृत सूत्र द्वारा 'घ' प्रत्यय, ह्रस्व - गुण - अवादेश इत्यादि तथा विभक्तिकार्य॥१२६८।

## १२६९. गोचरसञ्चरवहव्रजव्यजक्रमापण-निगमाश्च [४।५।९७]

[सूत्रार्थ]

'गोचर-सञ्चर - वह - व्रज - व्यज - क्रम -आपण - निगम' ये आठ शब्द घप्रत्ययान्त निपातन से सिद्ध होते हैं॥१२६९।

[दु० वृ०]

एते घप्रत्ययान्ता निपात्यन्ते। गावश्चरन्त्यस्मिन् गोचरः। प्रत्यासत्तिरुपलक्ष्यते। एवं सञ्चरः। वहन्त्यनेनेति वहो वृषभस्य। व्रजन्त्यस्मिन्निति व्रजः। विपूर्वोऽज् — व्यजन्त्यनेनेति व्यजः। क्रामन्त्यनेनेति क्रमः। आपणायन्तेऽस्मिन्निति आपणः। निगच्छन्त्यनेनेति निगमः। चकारात् - भजन्त्यस्मिन्निति भगः। निकषन्त्यस्मिन्निति निकषः॥१२६९।

[क० च०]

गोचर०। ननु गोशब्देनात्र चक्षुरिन्द्रियमुच्यते, तेन चक्षुरत्र विषयं करोति तदेव गोचरशब्दवाच्यमुच्यते, यत्र कालादीनां विषयस्तत्र कथं गोचरशब्दप्रयोग इत्याह — प्रत्यासत्तिरिति। एतेन लोचनगोचर इत्याद्यपि सिद्धम्, अन्यथा लोचनशब्दप्रयोगो व्यर्थः स्याद् गोचरशब्दस्य चक्षुर्विषयत्वात्। भग इति। ननु कथमयं पुंल्लिङ्गः। तथाहि— 'भगं श्रीकाममाहात्म्ये' इत्यमरेण नपुंसकत्वमस्य दर्शनात्? सत्यम्, पुंल्लिङ्गोऽपि दृश्यते। तथा च विष्णुपुराणे—

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इति स्मृतः॥इति।
भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्त्तिषु।
माहात्म्यैश्वर्यमन्त्रेषु धर्मे मोक्षे च ना रवौ॥इति मेदिनी।
गभस्तिहस्तोंऽशुधरः खरांशुर्भा रविर्भगः॥इति त्रिकाण्डशेषः॥१२६९।

[समीक्षा]

'गोचर - व्रज' इत्यादि शब्दों की सिद्धि घप्रत्ययान्त निपातनप्रक्रिया द्वारा दोनों ही व्याकरणों में की गई है। पाणिनि का सूत्र है — "गोचरसंचरवहव्रजव्यजापणनिगमाश्च"

(अ०३।३।११९)। अतः उभयत्र समानता ही कही जाएगी।

[रूपसिद्धि]

१-८. **गोचरः**। गो + चर् + घ + सि। गावश्चरन्त्यस्मिन्। **सञ्चरः**। सम् + चर् + घ + सि। सञ्चरन्त्यस्मिन्। **वहः**। वह् + घ + सि। वहन्त्यनेन। **व्रजः**। व्रज् + घ + सि। व्रजन्त्यस्मिन्। **व्यजः**। वि + अज् + घ + सि। व्यजन्त्यनेन। **क्रमः**। क्रम् + घ + सि। क्रामन्त्यनेन। **आपणः**। आङ् + पण् + घ + सि। आपणायन्तेऽस्मिन्। **निगमः**। नि + गम् + घ + सि। निगच्छन्त्यनेन। 'चर् - व्रज्' इत्यादि धातुओं से 'घ' प्रत्यय तथा विभक्तिकार्य।।१२६९।

## १२७०. अवे तृस्त्रोर्घञ् [४।५।९८]

[सूत्रार्थ]

'अव' उपसर्ग के उपपद में रहने पर 'तृ - स्तृ' धातुओं से 'घञ्' प्रत्यय होता है।।१२७०।

[दु० वृ०].

'अव' -उपपदे तृ - स्तृभ्यां घञ् भवति। घापवादः। अवतरन्त्यनेनास्मिन्निति वा **अवतारः**। अवस्तृणन्त्यनेनास्मिन्निति वा **अवस्तारः**।।१२७०।

[वि० प०]

अवे०। **"अकर्तरि च कारके संज्ञायाम्"** (४।५।४) इति सामान्येन घञ् सिद्ध एव किमनेनेति ? न देश्यम्। इह हि स्वरान्तादल् स्यात्। तदुक्तं दीर्घादलेवेति। तमपि बाधित्वा करणाधिकरणयोर्विशेषविहितः पुंसि संज्ञायां घप्रत्ययः स्यात्। अतस्तदपवादोऽयमारभ्यते इत्याह — घापवादः। एवमुत्तरत्रापीत्यादि।।१२७०।

[समीक्षा]

'अवतारः, अवस्तारः' शब्दरूपों की सिद्धि दोनों ही व्याकरणों में 'घञ्' प्रत्यय से की गई है। पाणिनि का सूत्र है — "अवे तृस्त्रोर्घञ्" (अ०३।३।१२०)। इस प्रकार उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१-२. **अवतारः**। अव + तृ + घञ् + सि। अवतरन्त्यनेनास्मिन्निति वा। **अवस्तारः**। अव + स्तृ + घञ् + सि। अवस्तृणन्त्यनेनास्मिन्निति वा। 'अव' पूर्वक 'तृ - स्तृ' धातुओं से 'घञ्' प्रत्यय, 'घ् - ञ्' अनुबन्धों का प्रयोगाभाव, 'ॠ' की वृद्धि तथा विभक्तिकार्य।।१२७०।

## १२७१. व्यञ्जनाच्च [४।५।९९]

[सूत्रार्थ]

व्यञ्जनान्त धातुओं से 'घञ्' प्रत्यय होता है।।१२७१।

[दु० वृ०]

व्यञ्जनान्ताच्च धातोर्घापवादो घञ् भवति। लिखन्त्यस्मिन्निति लेखः। विदन्त्यस्मिन्निति वेदः। अपमृजन्त्यनेनेति अपामार्गः। ह्रस्वस्य दीर्घता। आचरन्त्यस्मिन्निति आचारः। एवम् आचामः। चकाराद् अध्यायः, न्यायः, उद्यावः, संहारः, आधारः। आहरन्त्यस्मिन्निति आहारः, आधाय इति च॥१२७१।

[वि० प०]

व्यञ्जना०। ह्रस्वस्य दीर्घता इति। उपसर्गस्येत्यर्थः। मृजेस्तु "मर्जो मार्जिः" (३।८।२३) इत्यस्त्येव। चकारादिति। करणाधिकरणयोरेवेति न सिध्यतीति चकार उच्यते॥१२७१।

[समीक्षा]

'वेदः, अपामार्गः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने 'घञ्' प्रत्यय का विधान किया है। पाणिनि का सूत्र है — "हलश्च" (अ० ३।३।१२१)। इस प्रकार उभयत्र पूर्ण समानता ही है। यह ज्ञातव्य है कि प्रत्याहार-प्रक्रिया तथा कृत्रिमता के पक्षधर पाणिनि ने व्यञ्जन वर्णों का बोध 'हल्' प्रत्याहार से कराया है, परन्तु लोकव्यवहार एवं स्वाभाविकता के संपोषक कातन्त्रकार ने 'व्यञ्जन' संज्ञाशब्द का ही व्यवहार किया है।

[रूपसिद्धि]

१-१२. **लेखः**। लिख् + घञ् + सि। लिखन्त्यस्मिन्। **वेदः**। विद् + घञ् + सि। विदन्त्यस्मिन्। **अपामार्गः**। अप + मृज् + घञ् + सि। अपमृजन्त्यनेन। **आचारः**। आङ् + चर् + घञ् + सि। आचरन्त्यस्मिन्। **आचामः**। आङ् + चम् + घञ् + सि। **अध्यायः**। अधि + इङ् + घञ् + सि। **न्यायः**। नि + इण् + घञ् + सि। **उद्यावः**। उद् + यु + घञ् + सि। **संहारः**। सम् + हृ + घञ् + सि। **आधारः**। आङ् + धृ + घञ् + सि। **आहारः**। आङ् + हृ + घञ् + सि। आहरन्त्यस्मिन्। **आधायः**। आङ् + धा + घञ् + सि। 'लिख्' इत्यादि धातुओं से 'करण - अधिकरण' अर्थों में 'घञ्' प्रत्यय, लघूपध गुण, वृद्धि, उपसर्ग को दीर्घ तथा विभक्तिकार्य॥१२७१।

## १२७२. उदङ्कोऽनुदके [४।५।१००]

[सूत्रार्थ]

अनुदक के विषय में उत् - पूर्वक 'अन्च्' धातु से घञ्प्रत्ययान्त 'उदङ्क' शब्द निपातन से सिद्ध होता है॥१२७२।

[दु० वृ०]

उदञ्चतेर्घञि 'उदङ्क' इति निपात्यतेऽनुदकविषये। ऊर्ध्वमञ्चन्त्यनेनेति उदङ्कः, घृतोदङ्कः। अनुदक इति किम्? उदकोदञ्चनः। घे तु अविशेषाद् युट्॥१२७२।

[क० च०]

उद०। ननु घापवादोऽयं घञ्। ततश्चास्याभावपक्षे घेनैव प्रत्युदाहरणं योग्यमिति चेत्, न। घञि घे वा विशेषो नास्ति इत्युदकवर्जनं व्यर्थमित्याहघे त्विति॥१२७२।

[समीक्षा]

'उदङ्क' शब्द की सिद्धि दोनों ही व्याकरणों में घञ्-प्रत्ययान्त निपातन से की गई है। पाणिनि का सूत्र है— "उदङ्कोऽनुदके" (अ०३।३।१२३)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-२. **उदङ्कः**। उद् + अन्च् + घञ् + सि। ऊर्ध्वमञ्चन्त्यनेन। **घृतोदङ्कः**। घृत + उद् + अन्च् + घञ् + सि। 'उद्' उपसर्ग-पूर्वक 'अन्च्' धातु से 'घञ्' प्रत्यय, चकार को ककार, नकार को अनुस्वार, अनुस्वार को ङकार तथा विभक्तिकार्य॥१२७२।

## १२७३. जालमानायः [४।५।१०१]

[सूत्रार्थ]

जाल अर्थ में 'आनायः' शब्द निपातन से सिद्ध होता है॥१२७३।

[दु० वृ०]

'आनायः' इति निपात्यते जालश्चेत्। आनीयन्तेऽनेनेति **आनायो** मत्स्यानाम्। आखन्यतेऽनेनेति **आखनः**, घोऽपि दृश्यते। आखान इति घञपि। आख इति "**अन्यतोऽपि च**" (४।३।४९) इति डः। करणेऽपि आखरः, आखनिकः, आखनिकवकः इति। डर - इक - इकवका औणादिका इति॥१२७३।

[समीक्षा]

जाल के अर्थ में 'आनायः' शब्द घञ्-प्रत्ययान्त निपातन से दोनों ही आचार्यों ने सिद्ध किया है। पाणिनि का सूत्र है — "जालमानायः" (अ० ३।३।१२४)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. **आनायः**। आङ् + नी + घञ् + सि। आनीयन्तेऽनेन। 'आङ्' पूर्वक 'नीञ्' धातु से 'घञ्' प्रत्यय, ईकार को गुण, आय् आदेश तथा विभक्तिकार्य॥१२७३।

## १२७४. ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् [४।५।१०२]

[सूत्रार्थ]

भाव - कर्मवाच्य में दुःख-सुख अर्थों में 'ईषद् - दुस् - सु' के उपपद में रहने पर धातु से 'खल्' प्रत्यय होता है॥१२७४।

[दु० वृ०]

कृच्छ्रं दुःखं दुसोऽर्थः। अकृच्छ्रं सुखमितरयोरर्थः। एषूपपदेषु कृच्छ्राकृच्छ्रार्थेषु

धातोः खल् भवति भावे कर्मणि च। ईषदनायासेन क्रियते - **ईषत्करः** कटो भवता। दुःखेनानायासेन क्रियते-**दुष्करः**। सुखेनानायासेन क्रियते **सुकरः**। कृच्छ्राकृच्छ्रार्थेष्विति किम् ? ईषल्लभ्यं धनम् , कृपणान्मनागित्यर्थः।।१२७४।

[वि० प०]

ईषत्०। करणाधिकरणयोरिति निवृत्तम् । **"भावकर्मणोः कृत्यक्तखलर्थाः"** (४।६।४७) इति। खलोऽर्थान्तरे विधानात् । ईषद् इत्यस्य विवरणं यत्नेनानायासेन सुखेनेत्यर्थः।।१२७४।

[समीक्षा]

'ईषत्करः, सुकरः' इत्यादि शब्दों को दोनों ही व्याकरणों में 'खल्' प्रत्यय से सिद्ध किया गया है। पाणिनि का सूत्र है— "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" (अ०३।३।१२६)। अतः उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१-३. **ईषत्करः** कटो भवता। ईषत् + कृ + खल् + सि। ईषदनायासेन क्रियते। **दुष्करः**। दुस् + कृ + खल् + सि। दुःखेनानायासेन क्रियते। **सुकरः**। सु + कृ + खल् + सि। सुखेनानायासेन क्रियते। 'ईषद् - दुस् - सु' के उपपद में रहने पर 'कृ' धातु से 'खल्' प्रत्यय, 'ख् - ल् ' अनुबन्धों का प्रयोगाभाव, ऋ को गुण तथा विभक्तिकार्य।।१२७४।

## १२७५. कर्तृकर्मणोश्च भूकृञोः [४।५।१०३]

[सूत्रार्थ]

कर्तृ - कर्म-वाच्य में 'कृच्छ्र - अकृच्छ्र' अर्थों में 'ईषद् - दुस् - सु' के उपपद में रहने पर 'भू - कृञ्' धातुओं से 'खल्' प्रत्यय होता है।।१२७५।

[दु० वृ०]

ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु कर्तृकर्मणोश्च भूकृञोः खल् भवति यथासङ्ख्यम्। खानुबन्धबलात् कर्तृकर्मणोरेवानन्तर्यम् । ईषदाढ्येन भूयते **ईषदाढ्यम्भवं** भवता, दुराढ्यम्भवम् । ईषदनायासेनाढ्यं क्रियते इति **ईषदाढ्यम्भवो** भवान् । यदा तु ईषदाढ्य एव सन् किञ्चित् क्रियते तदा न भवति। करोतेरिहाभूतप्रादुर्भावार्थत्वात् । यथासङ्ख्यात्- ईषदाढ्योऽनुभूयते इत्यत्र न स्यात् ।।१२७५।

[दु० टी०]

कर्तृ०। यदेत्यादि। किञ्चिदित्यनेन बहिरङ्गता कथ्यते, अभूतप्रादुर्भावस्यान्तरङ्गतेति। अन्य आह - अभूततद्भाव एवाभिधानाद् अभूततद्भावप्रादुर्भावयोश्च भेदः कथित एव।।१२७५।

[वि० प०]

कर्तृ०। इह चकारादीषदादयः कर्तृकर्मणी च युगपदेवोपपदम्, तत्र च

धातोरनन्तरभावः कस्येत्याह — खानुबन्धेत्यादि। यदि पुनरीषदादयोऽनन्तरा भवेयुस्तदा तेषामव्ययत्वान्न "ह्रस्वारुषोर्मोऽन्तः" (४।१।२२) इत्यनेन मकारागमः खानुबन्धस्य प्रयोजनं नास्तीति खलः खकारो व्यर्थः स्यात्। न च कर्तृकर्मणोर्विहितयोर्मोऽन्तोऽस्तीति, ईषदादीनां व्यवहितत्वात्। तत्र हि खानुबन्धप्रत्ययान्तधातोरिति निमित्तसप्तमी दर्शितेति। यदेत्यादि। अनाढ्यस्याढ्यङ्करणमभूतप्रादुर्भावः। इहाढ्यस्य सतः किञ्चित् करणमिति नास्त्यभूतप्रादुर्भावः। ननु किञ्चिदपि अभूतप्रादुर्भाव एव क्रियते, तत् कथमसौ न नास्तीति? तदयुक्तम्, अन्तरङ्गत्वादुपपदस्यैवाभूतप्रादुर्भावश्चिन्त्यते, न चाढ्योपपदस्य तदर्थस्य। अत एव बहिरङ्गमन्यत् किञ्चित् क्रियते। यथासङ्ख्यादिति। भवतेः कर्तर्युपपदे भवति, अत्र च कर्मोपपदं तत्रानुपूर्वस्य सकर्मकत्वादिति॥१२७५।

[क० च०]

कर्तृ०। चकारादिति। अन्यथा यदि पृथगुपपदं स्याद् ईषदाद्युपपदे पूर्वेणैव सिद्ध इति। व्यर्थोऽयं चकार इति यद्यपीषदादिविशेषणं क्रियाया उपपदस्य च सम्भवति तथाप्युपपदस्यैव गृह्यते, क्रियायाः सन्निहितत्वादिति भावः। उपपदस्याभूतप्रादुर्भावार्थतेति कश्चित्। वस्तुतस्तु अभिधानादत्राभूतप्रादुर्भावो गृह्यते, स च द्वयोरेव सम्भवति, उपपदस्येषदाढ्यस्य तदतिरिक्तस्य च। तत्रेषदाढ्योपपदमन्तरङ्गं तदतिरिक्तं यत्तद् बहिरङ्गम्। अतोऽन्तरङ्गत्वादुपपदस्यैवाभूतप्रादुर्भावार्थता॥१२७५।

[समीक्षा]

'ईषदाढ्यम्भवं भवता, दुराढ्यम्भवम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'खल्' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है — "कर्तृकर्मणोश्च भूकृञोः" (अ० ३।३।१२७)। अतः उभयत्र पूर्ण समानता ही है।

[विशेष वचन]

१. करोतेरिहाभूतप्रादुर्भावार्थत्वात् (दु० वृ०)।

२. वस्तुतस्तु अभिधानादत्राभूतप्रादुर्भावो गृह्यते (क० च०)।

३. अन्तरङ्गत्वादुपपदस्यैवाभूतप्रादुर्भावार्थता (क० च०)।

[रूपसिद्धि]

१-३. **ईषदाढ्यम्भवम्**। ईषद् + आढ्य + भू + खल् + सि। ईषदाढ्येन भूयते। **दुराढ्यम्भवम्**। दुर् + आढ्य + भू + खल् + सि। **ईषदाढ्यङ्करो भवान्**। ईषद् + आढ्य + कृ + खल् + सि। ईषदनायासेनाढ्यं क्रियते। 'ईषद् - दुर् - आढ्य' के उपपद में रहने पर 'भू-कृ' धातुओं से प्रकृत सूत्र द्वारा 'खल्' प्रत्यय, 'ख् - ल्' अनुबन्धों का प्रयोगाभाव, 'ऊ - ऋ' को गुण, "ह्रस्वारुषोर्मोऽन्तः" (४।१।२२) से मकारागम तथा विभक्तिकार्य॥१२७५।

## १२७६. आद्भ्यो य्वदरिद्रातेः [४।५।१०४]

[सूत्रार्थ]

कृच्छ्राकृच्छ्रार्थक 'ईषद्' आदि शब्दों के उपपद में रहने पर आकारान्त धातुओं से 'यु' प्रत्यय होता है, दरिद्रा धातुको छोड़कर॥१२७६।

[दु० वृ०]

ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु आकारान्तेभ्यो युर्भवति अदरिद्रातेः। ईषत्पानः, दुष्पानः, सुपानः। अदरिद्रातेरिति किम्? ईषद्दरिद्रः॥१२७६।

[समीक्षा]

'ईषत्पानः' इत्यादि शब्दों की सिद्धि कातन्त्रकार ने 'यु' प्रत्यय से तथा पाणिनि ने 'युच्' प्रत्यय से की है — "आतो युच्" (अ०३।३।१२८)। पाणिनि का 'च्' अनुबन्ध चित्स्वर के विधानार्थ है, कातन्त्र में स्वरविधान नहीं है। अतः सामान्यतया उभयत्र समानता ही कही जाएगी।

[रूपसिद्धि]

१-३. **ईषत्पानः**। ईषद् + पा + यु - अन + सि। **दुष्पानः**। दुस् + पा - यु - अन + सि। **सुपानः**। सु + पा + यु - अन + सि। 'ईषद् - दुस् - सु' के उपपद में रहने पर 'पा' धातु से 'यु' प्रत्यय, 'अन' आदेश तथा विभक्तिकार्य॥१२७६।

## १२७७. शासुयुधिदृशिधृषिमृषां वा [४।५।१०५]

[सूत्रार्थ]

कृच्छ्राकृच्छ्रार्थक 'ईषद्' इत्यादि के उपपद में रहने पर 'शास् - युध् - दृश् - धृष् - मृष्' धातुओं से 'यु' प्रत्यय विकल्प से होता है॥१२७७।

[दु० वृ०]

ईषदादिषूपपदेषु कृच्छ्राकृच्छ्रार्थेषु एषां युर्भवति वा। ईषच्छासनः, ईषच्छासः। दुःशासनः, दुःशासः। सुशासनः, सुशासः। एवम् ईषद्योधनः, ईषद्योधः। दुर्योधनः, दुर्योधः। सुयोधनः, सुयोधः। ईषद्दर्शनः, ईषद्दर्शः। दुर्दर्शनः, दुर्दर्शः। सुदर्शनः, सुदर्शः। ईषद्धर्षणः, ईषद्धर्षः। दुर्धर्षणः, दुर्धर्षः। सुधर्षणः, सुधर्षः। ईषन्मर्षणः, ईषन्मर्षः। दुर्मर्षणः, दुर्मर्षः। सुमर्षणः, सुमर्षः। वा-ग्रहणात् स्त्र्यधिकारात् परेषु न वाऽसरूपविधिरिति॥१२७७।

[वि० प०]

शासु०। अथ किमर्थं वाग्रहणम् ? युरेव विधीयताम्। पक्षे "वाऽसरूपोऽस्त्रियाम्" (४।२।८) इति खल् भविष्यतीत्याह — वाग्रहणादिति। अन्यथा आकारान्तेभ्योऽपि खल् स्यादिति भावः॥१२७७।

[क०. च०]

शासु०। वाग्रहणादिति। वासरूपभावे इदमपि कारणान्तरमिति॥१२७७।

[समीक्षा]

'दुःशासनः, दुर्योधनः' इत्यादि शब्दों को कातन्त्रकार ने 'यु' प्रत्यय से तथा पाणिनीय व्याकरण में वार्त्तिककार ने "भाषायां शासियुधिदृशिधृषिभ्यो युज् वक्तव्यः" (अ०३।३।१३०-वा०) यह वार्त्तिक बनाकर 'युच् ' प्रत्यय से सिद्ध किया है। इस प्रकार कातन्त्रव्याकरण का उत्कर्ष सिद्ध होता है।

[रूपसिद्धि]

१-१५. **ईषच्छासनः**, ईषच्छासः। ईषद् + शास् + यु - अन + सि। **दुःशासनः**, दुःशासः। दुस् + शास् + यु - अन + सि। **सुशासनः**, सुशासः। सु + शास् + यु - अन + सि। **ईषद्योधनः**, ईषद्योधः। ईषद् + युध् + यु-अन+सि। **दुर्योधनः**, दुर्योधः। दुर् + युध् + यु - अन + सि। **सुयोधनः**, सुयोधः। सु + युध् + यु - अन + सि। **ईषद्दर्शनः**, ईषद्दर्शः। ईषद् + दृश् + यु - अन + सि। **दुर्दर्शनः**, दुर्दर्शः। दुर् + दृश् + यु - अन + सि। **सुदर्शनः**, सुदर्शः। सु + दृश् + यु - अन + सि। **ईषद्धर्षणः**, ईषद्धर्षः। ईषद् + धृष् + यु - अन + सि। **दुर्धर्षणः**, दुर्धर्षः। दुर् + धृष् + सु - अन + सि। **सुधर्षणः**, सुधर्षः। सु + धृष् + यु - अन + सि। **ईषन्मर्षणः**, ईषन्मर्षः। ईषद् + मृष् + यु - अन + सि। **दुर्मर्षणः**, दुर्मर्षः। दुर् + मृष् + यु - अन + सि। **सुमर्षणः**, सुमर्षः। सु + मृष् + यु - अन + सि। ईषद् आदि के उपपद में रहने पर 'शास् ' आदि धातुओं से प्रकृत सूत्र द्वारा 'यु' प्रत्यय, 'अन' आदेश तथा विभक्तिकार्य। पक्ष में 'खल्' प्रत्यय होने पर 'ईषच्छासः, दुर्द्धर्षः' इत्यादि शब्दरूप॥१२७७।

## १२७८. इच्छार्थेष्वेककर्तृकेषु तुम् [४।५।१०६]

[सूत्रार्थ]

समान कर्ता वाली इच्छार्थक धातुओं के उपपद में रहने पर धातु से 'तुम् ' प्रत्यय होता है॥१२७८।

[दु० वृ०]

इच्छार्थेष्वेककर्तृकेषु धातुषूपपदेषु धातोस्तुमेव भवति, न तु वुण् "**वुण्तुमौ क्रियायां क्रियार्थायाम्** " (४।४।६९) इति वचनात् । इच्छति भोक्तुम् , कामयते भोक्तुम् । एककर्तृकेष्विति किम् ? भिन्नकर्तृके विधिर्मा भूत् । राज्ञो भोजनमिच्छति, इच्छन् करोतीत्यपि स्यात्। इच्छार्थेष्विति किम् ? पाचको व्रजति॥१२७८।

[दु० टी०]

इच्छार्थे०। "**वुण्तुमौ क्रियायां क्रियार्थायाम्**" (४।४।६९) इति सिद्धे पुनर्वचनं नियमार्थमित्याह — तुमेवेत्यादि। वुणन्तवचनात् क्रियार्थता प्रतीयते - पक्ष्यामीति

व्रजतीति। यत्र तु क्रियार्थोपपदं न भवति तत्र पाचको व्रजति, सूपकारो व्रजतीत्यर्थः। ओदनं पाचक इच्छतीति मा भूत् । साहचर्याद् वुणेव नियमेन व्यावर्त्यते भाववाचिनस्तु भवन्त्येव - पाकायेच्छति, पक्तये इच्छति। ननु कथं नियमः इच्छार्थेष्वेककर्तृकेषु सप्तमी विद्यते-इच्छामि भुञ्जाव, कामयते भुञ्जीयेति? सत्यम् , स्वभावाद् भावाभिधायिनस्तुमः कथं कर्तृकर्माभिधायिनी सप्तमी बाधिका स्यात् । न च प्रतिपदं सूत्रमुक्तं "प्रयोगतश्च" (३।१।१७) इति सा यथा भवति तुमपि कथन्न भवेत् । एकेत्यादि। एककर्तृकमन्तरेण भिन्नकर्तृकेष्वप्राप्तेस्तुम् स्यात् । ततश्च राज्ञा भोक्तुमिच्छतीति प्रसज्येत। इच्छन्नित्यादि। इच्छति भोक्तुं तावद् भवति, इच्छन् कर्तुमित्यपि स्यादित्यर्थः। कर्तृत्वमिह विवक्षितं भावे तुम् , किं च कामप्रकाशने तुमभिधीयते, अन्यत्र यथाप्राप्तमिति न दोषः।।१२७८।

[वि० प०]

इच्छार्थेषु०। "वुण्तुमौ क्रियायां क्रियार्थायाम्" (४।४।६९) इति सिद्धे नियमार्थोऽयमित्याह — तुमेवेति। एकेत्यादि। एककर्तृकेषु हि पूर्वेण तुमि सिद्धे पुनरत्र तुम्विधानं नियमार्थं स्यात् । अन्तरेण तु एककर्तृकग्रहणं भिन्नकर्तृकेष्वप्राप्तस्यैव तुमो विधानमिति विधिरेव स्यात् । ततो राज्ञो भोक्तुमिच्छतीत्यपि प्रयोगः प्रसज्येत। इच्छन्नित्यादि। न केवलम् इच्छन् कर्तुमिति स्यादिति भावः। विशेषविहितत्वात् तुमेव स्यादिति न देश्यम् । अयं हि भावे भवति कर्तरि च तिप्रत्ययः कथं तस्य बाधकः स्यादिति।।१२७८।

[क० च०]

इच्छा०। तुमेवेति। ननु कथमिदं वुण्तुमावित्यनेन हि क्रियायां क्रियार्थायामुपपदे तुम् विधीयते, अत्र क्रियार्थग्रहणाभावात् तदभावेऽपि विषयः सम्भवति, अस्य सूत्रस्य यथेच्छतस्तव स्खलनम् । किञ्च भविष्यत्काल एव तस्य विषयः, अस्यापि विषयस्त्रिष्वपि कालेषु स्यात् । अत्राहुः सागराः—इच्छार्थेष्विति। "सप्तम्युक्तमुपपदम्" (४।२।२), तच्चोपकारि पदमेव गृह्यते न तु पाठकृतप्रत्यासत्तिमात्रम् — "कर्तुं वा कश्चिदन्तर्वसति वसुमती" इत्यादिप्रयोगानुपपत्तेः। तस्य चानभिसम्बन्धे उपकारित्वं नास्तीति आदरणीयोऽत्र सम्बन्धविशेषः, स च भावे क्रियार्थकत्वरूप एव कल्प्यते अस्य तुमो विधावुपपदस्य तथेष्टत्वात् को हि नाम दृष्टपरिकल्पनां विहायादृष्टं कल्पयति।

ऋजवस्तु तुमस्तथैवाभिधानमिति मत्वा समादधते-तुमेवेति नियमः समानविषयकमेव वुणं व्यावर्तयति, न तु "वुण्तृचौ" (४।२।४७) इत्यनेन विहितं भिन्नविषयत्वात् । तथा पाचकः इच्छति,पक्ता सूपकारः इच्छतीत्यर्थः। क्रियायां क्रियार्थायां तु न भवत्येव। अस्य व्यावृत्तिबलाद् इच्छार्थेष्वेवेति न विपरीतनियमः वुण्तुमावित्यत्र वुण्तुमोर्वैयर्थ्यात्। ननु यदि वुण्तुमावित्यनेनापि प्रत्यासत्तिन्यायाद् एककर्तृकायां क्रियायामुपपद एव तुम्, तत् कथं होमकर्म कर्तुं भवन्तमहं वृणे इति कंसं हन्तुं नारायणं कथकः प्रयुङ्क्ते इति प्रभुणा भोक्तुं मांसं क्रीणातीति भिन्नकर्तृके तुम् । अत्र कश्चित् स्थितिपदाध्याहारेणान्वयादित्याह—वरणमनुमननं प्रयोजनम् अनुमतिकरणम्। ततश्च होमकर्म करिष्यामीति कृत्वानुमतिं करोति तथा सम्प्रति पातयिष्यामीति कृत्वा कंसं हन्तुं नारायणं नियुङ्क्ते

करोतीत्यर्थः। प्रभुणा भोक्तुमित्यपप्रयोग एव। प्रभोर्भोजनाय मांसं क्रीणातीत्यादौ न भाववाचिनश्चेत्यनेन युट् "युट् च" (४।५।९४) इत्यनेनैव, किन्तर्हि तदन्ताच्च "तादर्थ्ये" (२।४।२७) इत्यनेन चतुर्थी, न तु "तुमर्थाच्च भाववाचिनश्च" (२।४।२८) इत्यनेनेत्याहुः। सागरोक्तिस्तु विलोकनीया।

एककर्तृकेष्विति पञ्जी। एतत्तु तत्रैककर्तृकग्रहणाभावेऽपि प्रत्यासत्तिन्यायादिति बोध्यम् । सागरस्तु "वुण्तुमौ" (४।४।६९) इत्यनेन भिन्नकर्तृकायामपि तुम् स्याद् अभिधानात् । समानकर्तृके "वुण्तुमौ" (४।४।६९) इत्यस्य विषयो भिन्नकर्तृकत्वापेक्षया एककर्तृकत्वस्य प्रत्यासन्नत्वाच्चेति मतमसङ्गतम् , 'धावतस्ते पतिष्यति दण्डः' इति प्रत्युदाहरणासङ्गतेः। इच्छार्थेष्विति किम् ? 'पाचको व्रजति' इत्यस्यासङ्गतेश्च। अन्यथा इच्छार्थग्रहणाभावे एककर्तृकेषु तुमेवेति नियमे "वुण्तुमौ" (४।४।६९) इत्यत्र वुण्ग्रहणं व्यर्थम् । यदि तु भिन्नकर्तृकेऽपि तस्य विषयः स्यात् तदैव तस्य चरितार्थता नान्यथेति। तथा "कालसमयवेला०" (४।५।१०७) इत्यादिसूत्रे कालो भोक्तुमित्यादयो भवतीत्यध्याहृतक्रियासम्बन्धे वुण् - तुमावित्यनेनैव सिद्धा इति नियम उक्तः, तत्र भोजनस्य कर्ता देवदत्तादिः कालश्च भवनस्य कर्तेति कथं वुण्तुमावित्यनेन सिद्धम् , येन नियमस्तस्माद् भोक्तुं प्रभुणा मांसं क्रीणातीति सर्वतान्त्रिकसिद्धस्य वाक्यस्य वाङ्मात्रेण निराकरणमयुक्तम् । तदुक्तं तन्त्रप्रदीपकृता — यथा धावतस्ते पतिष्यतीति प्रत्युदाहरणम्, तेन कर्तृभेदेऽपि तुमा भाव्यमिति निश्चीयते इति।

महाकविनिबन्धप्रयोगश्च दृश्यते — तथा च मुरारौ 'कर्तुं वा कश्चिदन्तर्वसति वसुमतीदक्षिणः सप्ततन्तुः'। अथ यदि भिन्नकर्तृकेषु वुण्तुमौ तदा एककर्तृकेष्वपि हि पूर्वेण तुमि सिद्धे इति पञ्जिकाग्रन्थः कथं संगच्छते, तदा एककर्तृकग्रहणमन्तरेण भिन्नकर्तृकेष्वप्राप्तस्यैव तुमो विधानमिति च। तथा चैककर्तृकग्रहणमन्तरेण भिन्नकर्तृकेष्वप्राप्तस्तुम् स्यादिति टीकाग्रन्थो न संगच्छते। अत्र सागरः — सूत्रे ह्यस्मिन्नियमद्वयमाश्रीयते इच्छार्थेष्वेककर्तृकेषु तुमेव भवति। इच्छार्थेषु तुम् एककर्तृकेष्वेवेति टीकापञ्जिकयोस्तु पूर्वेणैव तुमि सिद्धे पुनस्तुमो विधानं नियमार्थमिति सामान्यवचनेन द्वितीयनियम उक्तः वृत्तौ त्वेक एव दर्शितः, अन्योऽपि बोध्यः। प्रथमनियमस्तु भिन्नकर्तृकेषु वुण्तुमावित्यनेन प्राप्तस्यापि बाधनार्थः। तथा चैककर्तृकग्रहणास्थितौ एककर्तृकेष्वेवेति नियमाद् भिन्नकर्तृके तुमोऽप्राप्तिरेव तदभावे इच्छार्थेषु तुमेवेति नियमबलादन्यं बाधित्वापि भिन्नकर्तृके तुमो विधिः स्याद् बाधकाभावादिति पूर्वेण तुमि सिद्ध इति यदुक्तं तत् पूर्वेण सामान्येन विधानादेककर्तृकेऽपि बोध्यम् । एककर्तृकग्रहणमन्तरेणेत्यादि यदुक्तं तस्यायमर्थः एककर्तृकग्रहणं विनाप्ययं योगो नियमार्थः, वुण्तुमावित्यनेन सामान्येनापि तुम्विषयत्वात् सिद्धे सति नियमस्य सम्भवात् । अन्यथा पूर्वसूत्रे प्रत्यासत्तिन्यायादेककर्तृग्रहणाभावेऽपि एककर्तृत्वलाभः। तथात्रापीत्युक्ते कुतो भिन्नकर्तृकेषु प्रसङ्गः, येनैककर्तृकग्रहणाभावे

भिन्नकर्तृके विधिरिति तस्मान्नानयोः सूत्रयोः प्रत्यासत्तिविचारः। ततश्च यद्येककर्तृकग्रहणं नास्ति तदा भिन्नकर्तृकेष्वप्यप्राप्तस्यास्य कोऽर्थः, एककर्तृकग्रहणस्थितौ भिन्नकर्तृकेष्वप्राप्तस्येत्यर्थः। तुमो विधानमित्यस्य कोऽयमर्थोऽप्राप्तस्य तुमः सम्बन्धिविधानं सूत्रमित्यर्थ इति हेतोर्विधिस्तुमो विधिः स्यादित्यर्थः, न तु विधिसूत्रं विधानमिति। विधीयतेऽनेनेति विधानं सूत्रमिति करणे युट् । अत एवाप्राप्तस्यैवेति यदुक्तं टीकापञ्जिकयोस्तदेककर्तृकग्रहणस्थितावेव बोध्यम् , कुतो दोषावसरः। तथा एककर्तृकेष्विति वृत्तिग्रन्थोऽप्यनया रीत्या व्याख्यातव्यः- भिन्नकर्तृकेषु विधिर्मा भूदित्यर्थः, न तु विधिसूत्रमित्यर्थः।

नन्विच्छार्थेषूपपदेषु तुमोऽपवादत्वात् तेषूपपदेषु कथं त्यादयः स्युः, अपवादेन तुमा बाधितत्वादित्याह — इच्छन् करोतीति वृत्तिः। अयं हीति पञ्जी। अथ तथापि कथं क्रियार्थोपपदे भविष्यति च तुमो विधानाद् अत्र क्रियोपपदं नास्ति क्रियार्थोपपदे भविष्यति च बीजमुक्तमेव? सत्यम् । करोतीति बुद्ध्या इच्छन् प्रवर्तते तर्हीच्छाकरणक्रियोपपदार्थो भविष्यतीति क्रियार्था क्रियाऽस्त्येव, किन्तु भविष्यत्ता नास्ति, अनेन किं सिद्धान्तान्तरं भविष्यति। अथ साहचर्याद् वुणेव नियमेन व्यावर्त्यते इति टीकायामुक्तं तत् कथमयं पक्षः सङ्गच्छते ? सत्यम् । साहचर्यमनादृत्येदमुक्तं सिद्धान्तान्तरम् । वस्तुतस्तु अनेनैव भावेन टीकायामाह-किञ्च कामप्रकाशन इतीच्छाप्रकाशने, यत्रेच्छा प्रतिपाद्येत्यर्थः। एतेनात्रेच्छा क्रियार्था न भवतीति प्रतिपादितम् ॥१२७८।

[समीक्षा]

'इच्छति भोक्तुम्, कामयते भोक्तुम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'तुम्' प्रत्यय तथा पाणिनि ने 'तुमुन्' प्रत्यय किया है — "समानकर्तृकेषु तुमुन्" (अ० ३।३।१५८)। यहाँ अनुबन्धभेद के अतिरिक्त अन्य प्रकार की उभयत्र समानता ही है।

[विशेष वचन]

१. पुनर्वचनं (तुम्विधानम्) नियमार्थम् (दु० टी०)।

२. को हि नाम दृष्टपरिकल्पनां विहायादृष्टं कल्पयति (क० च०)।

३. साहचर्यमनादृत्येदमुक्तं सिद्धान्तान्तरम् (क० च०)।

[रूपसिद्धि]

१-२. इच्छति भोक्तुम् । भुज् + तुम् + सि। कामयते भोक्तुम् । भुज् + तुम् + सि। 'भुज्' धातु से प्रकृत सूत्र द्वारा 'तुम्' प्रत्यय, उपधागुण, ज् को ग्, ग् को क् तथा विभक्तिकार्य॥१२७८।

## १२७९. कालसमयवेलाशक्त्यर्थेषु च [४।५।१०७]

[सूत्रार्थ]

'काल-समय-वेला' तथा 'शक्त्यर्थ' के उपपद में रहने पर धातु से 'तुम्' प्रत्यय होता है॥१२७९।

[दु० वृ०]

एषूपोच्चारिपदेषु धातोस्तुमेव भवति। भोक्तुं कालः, कालो भोक्तुम्, भोक्तुं समयः, समयो भोक्तुम्, भोक्तुं वेला, वेला भोक्तुम्, शक्तो भोक्तुम् , समर्थो भोक्तुम्, पर्याप्तो भोक्तुम् , प्रभुर्भोक्तुम् , अलं भोक्तुम्। भवतेर्वृतेर्वा तादर्थ्यस्य प्रतीयमानत्वात्। यथा भोक्तुं मनः, गन्तुकामः, श्रोतुं श्रोत्रम्, द्रष्टुं चक्षुः, योद्धुं धनुः, वक्तुं जडः। उच्चारणं तु वक्तुरायत्तमिति। तथा शक्त्यर्थात् — शक्नोति भोक्तुम् , पारयति भोक्तुम्, धृष्णोति भोक्तुम्, जानाति भोक्तुम्, ग्लायति भोक्तुम्, घटते भोक्तुम्, आरभते भोक्तुम्, आलभते भोक्तुम्, प्रक्रमते भोक्तुम्, उत्सहते भोक्तुम्, अर्हति भोक्तुम्, अस्ति भोक्तुम्, विद्यते भोक्तुम् । क्रियायां क्रियार्थायामिति तुम् सिद्ध एव। वुणप्यभिधानाद् द्रष्टव्यः॥१२७९।

[दु० टी०]

काल०। एष्वित्यादि। कालादयः क्रियाया उपकारि पदं भवति। नन्वेतेषां प्राग् भावनियमो नाव्ययेनाणमेत्यत्र व्याख्यात एवेति। तुमेवेति कथमत्र नियमः क्रियार्थक्रियोपपदं न श्रूयते इत्याह — भवतेर्वृतेर्वेति। तादर्थ्यस्य क्रियार्थस्य प्रतीयमानत्वाद् गम्यमानत्वादिति। उच्चारणं त्वित्यादि। भवतेर्वृतेर्वेति सम्बन्धो यथा भोक्तुं कालो वर्तते। तथेत्यादि। शकपृधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमिति सूत्रं नाद्रियते इत्यर्थः। वुणपीत्यादि। धृषादीनामिति सम्बन्धः शक्यार्थानां नियमः पूर्वेणास्तीति॥१२७९।

[वि० प०]

काल०। एषूपोच्चारिपदेष्विति। उपशब्दः सामीप्ये, तेन समीपोच्चारीणि क्रियाया उपकारीणि यदा कालादीनि पदानि भवन्ति तदेत्यर्थः। न त्वेषां प्राग्भावसमासौ स्तः। नाव्ययेनाणमेति वचनादित्यर्थः। तुमेवेति। अथ कथमत्र नियमः ? न ह्यत्र क्रिया क्रियार्थोपपदं दृश्यते, येन सिद्धे सति नियमायेत्याह -- भवतेरित्यादि। कालो भोक्तुं भवति वर्तते वेति क्रियोपपदं गम्यते, तस्याश्च तदर्थस्य भोजनार्थस्य प्रतीयमानत्वान्न कथं क्रियोपपदमस्तीति भावः। गम्यमानक्रियोपपदहेतुकमेव तुमो दर्शयन्नुक्तस्य पक्षस्य प्रमाणमाह—यथेति। इहापि खलु भोक्तुं मनो भवति, वर्तते वेति क्रिया क्रियार्थोपपदम्। गम्यते इति। यथा चात्र तथा कालादिष्वपि सिध्यतीति नियम उच्यते। ननु गम्यमानमवश्योच्चारणीयमित्याह — उच्चारणं त्विति। तथेति। कथन्तर्हि धृषादिधातुप्रयोग इत्याह—क्रियायामित्यादि। तुमेवेति नियमार्थं शकपृधृषज्ञाग्लाघटरभलभक्रम-सहार्हास्त्यर्थेष्विति न वक्तव्यमित्याह-वुणपीति। नियमोऽत्र नेष्यते इति भावः॥१२७९।

[क० च०]

काल०। अस्ति भोक्तुमिति, ओदनस्येति शेषः। एवमोदनो नास्ति भोक्तुमित्यपि भवति। एतेन वुंण्तुमाविति भिन्नकर्तर्यपि विधानम् । तथा च — 'अहो दैन्यं लोकानां यत् किमपि नास्ति भोक्तुम् ' इति। न च भोजनक्रियाया व्याप्यत्वाद् द्वितीया स्यात्, अस्तिक्रियायाः प्राधान्यात् । यथा 'ओदनः पक्त्वा भुज्यते' इति। अद्यैकादशी, ततश्च

ओदनं भोक्तुं नास्ति। दुर्भिक्षोऽयं काल:, ततश्च ओदनं भोक्तुं नास्तीति। एवंविषये कर्मतैव ओदनस्य न कर्तृता। यदोदनस्य भोजनासद्भाव एव प्रतिपाद्यो न पुनरोदनासम्भव इति। उपोच्चारीति पञ्जी। एवम्भूतानि भोजनकारणानीत्यर्थ:।।१२७९।

[समीक्षा]

'कालो भोक्तुम् , वेला भोक्तुम् ' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'तुम् ' प्रत्यय तथा पाणिनि ने 'तुमुन् ' प्रत्यय किया है — "कालसमयवेलासु तुमुन्" (३।३।१६७)। अत: अनुबन्धभेद को छोड़कर अन्य प्रकार की उभयत्र समानता ही है।

[विशेष वचन]

१. उच्चारणं तु वक्तुरायत्तम् (दु० वृ०)।

[रूपसिद्धि]

१-८. भोक्तुं काल:। भोक्तुं समय:। भोक्तुं वेला। शक्तो भोक्तुम् । समर्थो भोक्तुम्। पर्याप्तो भोक्तुम् । प्रभुर्भोक्तुम् । अलं भोक्तुम् । 'भुज् ' धातु से 'तुम् ' प्रत्यय, उपधागुण तथा विभक्तिकार्य।।१२७९।

## १२८०. अर्हतौ तृच् [४।५।१०८]

[सूत्रार्थ]

योग्यतार्थक धातु से 'तृच् ' प्रत्यय होता है।।१२८०।

[दु० वृ०]

अर्हत्यर्थविशिष्टाद् धातोस्तृज् भवति। कन्याया: खलु भवान् वोढा, अध्येता खलु भवान् शास्त्रस्य। प्रयोगतश्चेति अर्हे शक्तौ च सप्तमी, सा बाधिका यथा स्यादिति वचनम् । भवान् खलु कन्यामुद्वहेत। अर्ह: शक्त इत्यर्थ:।।१२८०।

[वि० प०]

अर्हतौ। अथ किमर्थमिदम् ? सामान्येन तृच् सिद्ध एवेत्याह — प्रयोगतश्चेति। सप्तम्यर्थमाह — अर्ह: शक्त इति। भवानर्ह:, योग्यो भवान् । शक्त: समर्थो वेति भाव:।।१२८०।

[क० च०]

अर्ह०। अर्हे शक्तौ चेति शक्तौ परसूत्रे कृत्या विधीयन्ते सप्तमीबाधनार्थमिह प्रसङ्गादुक्तम् । अर्ह: शक्त इत्यर्थद्वयनिर्देशाद् वाशब्दोऽत्राध्याहार्य:।।१२८०।

[समीक्षा]

'कन्याया: खलु भवान् वोढा' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'तृच् ' प्रत्यय किया गया है। पाणिनि का सूत्र है — "अर्हे कृत्यतृचश्च" (अ०३।३।१६९)। अत: उभयत्र समानता ही है।

[रूपसिद्धि]

१-२. कन्यायाः खलु भवान् वोढा । वह् + तृच् + सि। अध्येता खलु भवान् शास्त्रस्य। अधि + इङ् + तृच् + सि। 'वह्, अधि - इङ्' धातुओं से प्रकृत सूत्र द्वारा 'तृच्' प्रत्यय, ओकार, इकार को गुण तथा विभक्तिकार्य॥१२८०।

## १२८१. शकि च कृत्याः [४।५।१०९]

[सूत्रार्थ]

शक्ति तथा अर्हता अर्थ वाली धातु से कृत्यसंज्ञक 'यत्' इत्यादि प्रत्यय होते हैं॥१२८१।

[दु० वृ०]

शकनं शक्। शक्त्यर्थविशिष्टाद् धातोरर्हत्यर्थविशिष्टाच्च कृत्या भवन्ति। भवता खलु कन्या वोढव्या, वहनीया, वाह्या, उह्येतेति च॥१२८१।

[वि० प०]

शकि च०। इदमपि पूर्ववदेवाधिकर्तव्यमिति। बाधिकां सप्तमीं दर्शयन्नाह - उह्येतेति च। अन्यथा एतदेव स्याद् इति भावः॥१२८१।

[समीक्षा]

'भवता खलु कन्या वोढव्या' इत्यादि शब्दों की सिद्धि दोनों ही आचार्यों ने 'कृत्य' प्रत्ययों से की है। पाणिनि का सूत्र है — "शकि लिङ् च" (अ० ३।३।१७२)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-४. भवता खलु कन्या वोढव्या, वहनीया, वाह्या, उह्येत। 'वह्' धातु से 'तव्य, अनीय, यण्' प्रत्यय, सप्तमी विभक्ति (पाणिनि-लिङ् लकार) तथा विभक्तिकार्य॥१२८१।

## १२८२. प्रैष्यातिसर्गप्राप्तकालेषु [४।५।११०]

[सूत्रार्थ]

'प्रैष्य - अतिसर्ग - प्राप्तकाल' अर्थों के गम्यमान होने पर धातु से कृत्यसंज्ञक प्रत्यय होते हैं॥१२८२।

[दु० वृ०]

प्रैष्यादिषु गम्यमानेषु धातोः कृत्या भवन्ति। प्रेषितस्त्वम् — भवता ग्रामो गन्तव्यः, गमनीयः, गम्यः। अतिसर्गोऽनुमतिः। गुरुणाऽनुज्ञातस्त्वम् । भवता कटः कर्तव्यः, करणीयः, कृत्यः, कार्यः। प्राप्तस्ते कालः कटकरणे। कर्तव्यः, करणीयः, कृत्यः, कार्यः कटो भवता। ऊर्ध्वं मुहूर्तात् कर्तव्यः इत्यपि वक्तव्यम् । प्रैष्यादिषु पञ्चमी सप्तम्युक्ता सा बाधिका स्याद् इति वचनम् ॥१२८२।

[वि० प०]

प्रैष्याति०। ऊर्ध्वं मुहूर्तादिति। प्रैष्यादिषु गम्यमानेषूर्ध्वं मुहूर्ताद् उपरि मुहूर्तस्येत्यर्थः। प्रैष्यादिष्वित्यादि। प्रैष्यप्राप्तकालयोरपि सप्तमी पञ्चमी स्यादिति दर्शितम् । तथाहि "पञ्चम्यनुमतौ" (३।१।१८) इति। एवमूर्ध्वं मुहूर्तादपि सप्तमीपञ्चम्यौ प्रयोगतश्चेति वचनात् प्रतिपत्तव्ये। यथा ऊर्ध्वमुहूतात् प्रेषितो भवान् कटं कुर्यात्, कटं करोतु भवान्, भवता कटः क्रियते क्रियतां वा। तस्मादेते बाधिके स्तः इति वक्तव्यमुक्तम् ॥१२८२।

[क० च०]

प्रैष्याति०। प्रैष्यप्राप्तकालयोः पञ्चम्येव विहिता न तु सप्तमी, तथा च परसूत्रं "प्रैष्यातिसर्गप्राप्तकालेषु पञ्चमी, सप्तमी चोर्ध्वमौहूर्त्तिके" (अ०३।३।१६३,१६४) इति चकारात् पञ्चमी च। अत एव पञ्जिकायां प्रैष्यप्राप्तकालयोरपि पञ्चमीत्युक्तम्, यच्च विध्यादिषु सप्तमी चेत्यत्र वृत्तावुक्तं प्रैष्यप्राप्तकालयोरपि सप्तमी पञ्चमी स्यादेवेत्युक्तम्, तच्च प्रैष्यप्राप्तयोः पञ्चमी और्ध्वमौहूर्तिके सप्तमीत्यप्यध्याहार्यम्, व्यस्तेनान्वय इति व्याख्यातं कुलचन्द्रेण। अपिशब्दात् पञ्चमीत्यर्थः, तस्मात् प्रैष्यप्राप्तकालयोरिति सप्तमीपञ्चम्याविति हेमोक्तिर्न सङ्गच्छते॥१२८२।

[समीक्षा]

'भवता ग्रामो गन्तव्यः, गमनीयः गम्यः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही आचार्यों ने कृत्यसंज्ञक प्रत्ययों का विधान किया है। पाणिनि का सूत्र है — "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" (अ०३।३।१६३)। अतः उभयत्र समानता ही है।

[विशेष वचन]

१. हेमोक्तिर्न सङ्गच्छते (क० च०)।

[रूपसिद्धि]

१-७. भवता ग्रामो **गन्तव्यः, गमनीयः, गम्यः**। गम् + तव्य, अनीय, यत् + सि। भवता कटः **कर्तव्यः, करणीयः, कृत्यः, कार्यः**। कृ + तव्य, अनीय, यत्, यण् + सि। कर्तव्यः, करणीयः, कृत्यः, कार्यः कटो भवता। 'गम् - कृ' धातुओं से 'तव्य, अनीय, यत् , यण् ' प्रत्यय, गुण-वृद्धि तथा विभक्तिकार्य॥१२८२।

## १२८३. आवश्यकाधमर्ण्योर्णिन् [४।५।१११]

[सूत्रार्थ]

अवश्यम्भाव तथा अधमर्ण अर्थ के गम्यमान होने पर धातु से कर्ता अर्थ में 'णिन्' प्रत्यय होता है॥१२८३।

[दु० वृ०]

अवश्यम्भावे गम्यमानेऽधमर्णे च कर्तरि धातोर्णिन् भवति। अवश्यंदायी, अवश्यंकारी। अधमर्णे च-शतंदायी, सहस्रंदायी मे भवान् ॥१२८३।

[समीक्षा]

'अवश्यंदायी, अवश्यंकारी' शब्दों की सिद्धि दोनों ही आचार्यों ने 'णिन्' प्रत्यय से की है। पाणिनि का सूत्र है — "आवश्यकाधमर्ण्ययोर्णिनिः" (अ० ३।३।१७०)। पाणिनीय इकारानुबन्ध की अधिकता को छोड़कर अन्य प्रकार की तो उभयत्र समानता ही है।

[रूपसिद्धि]

१-४. **अवश्यंदायी**। अवश्यम् + दा + णिन् + सि। **अवश्यंकारी**। अवश्यम् + कृ + णिन् + सि। **शतंदायी**। शत + दा + णिन् + सि। **सहस्रंदायी**। सहस्र + दा + णिन् + सि। 'दा - कृ' धातुओं से णिन् प्रत्यय, यकारागम तथा विभक्तिकार्य।।१२८३।

## १२८४. तिक्कृतौ सञ्ज्ञायामाशिषि [४।५।११२]

[सूत्रार्थ]

संज्ञा तथा आशीर्वाद के विषय में धातु से 'तिक्' तथा कृत्संज्ञक प्रत्यय होते हैं।।१२८४।

[दु० वृ०]

आशीर्विषये सञ्ज्ञायां गम्यमानायां धातोस्तिक्कृतौ भवतः। तनुतात् तन्तिः, सनुतात् सन्तिः, वध्यात् हन्तिः। देवाय एनं देयात् देवदत्तः। यज्ञे एनं देयाद् **यज्ञदत्तः**। वीरोऽस्य भूयाद् इति **वीरभूः**। मित्रभूः। अग्निरस्य भूयाद् **अग्निभूतिः**। **देवभूतिः**। **सञ्ज्ञाशब्दा एते यथाकथंचिद् व्युत्पाद्या** इति।।१२८४।

[समीक्षा]

'हन्तिः, देवदत्तः' इत्यादि शब्दों के सिद्ध्यर्थ कातन्त्रकार ने 'तिक् - कृत्' प्रत्यय किए हैं, जबकि पाणिनि 'क्तिच् - क्त' प्रत्यय करते हैं — "क्तिच्क्तौ च संज्ञायाम्" (अ० ३।३।१७४)। तदनुसार कातन्त्र में 'क्विप्' प्रत्यय होकर 'वीरभूः, मित्रभूः' आदि शब्द भी सिद्ध होते हैं। इस प्रकार कातन्त्रकार का उत्कर्ष कहा जाएगा।

[रूपसिद्धि]

१-९. **तन्तिः**। तन् + तिक् + सि। **सन्तिः**। सन् + तिक् + सि। **हन्तिः**। हन् + तिक् + सि। **देवदत्तः**। देव + दा - दथ् + क्त + सि। देवाय एनं देयात्। **यज्ञदत्तः**। यज्ञ + दा - दथ् + क्त + सि। यज्ञे देयात्। **वीरभूः**। वीर + भू + क्विप् + सि। वीरोऽस्य भूयात्। **मित्रभूः**। मित्र + भू + क्विप् + सि। **अग्निभूतिः**। अग्नि + भू + तिक् + सि। अग्निरस्य भूयात्। **देवभूतिः**। देव + भू + तिक् + सि। 'तन् - सन् - हन् - भू' धातुओं से तिक् प्रत्यय, 'दा' धातु से 'क्त' प्रत्यय, 'भू' धातु से क्विप् प्रत्यय तथा विभक्तिकार्य।।१२८४।

## १२८५. धातुसम्बन्धे प्रत्ययाः [४।५।११३]

[सूत्रार्थ]

विशेषणविशेष्यभावापन्न धात्वर्थसम्बन्ध के विषय में कृत्संज्ञक प्रत्यय अपने काल को छोड़कर विशेष्यरूप धात्वर्थ के काल में साधु होते हैं, परन्तु त्यादि प्रत्यय साधु नहीं होते।।१२८५।

[दु० वृ०]

धात्वर्थानां सम्बन्धे विशेषणविशेष्यभावलक्षणे स्वं कालं त्यक्त्वा विशेष्यस्य धात्वर्थस्य काले कृत्सञ्ज्ञकाः प्रत्ययाः साधवो भवन्ति, न तु त्यादयः, साध्यविहितत्वात्। सूत्रं त्विदं सुखार्थमेवेति। अग्निष्टोमयाजी पुत्रोऽस्य जनितेति अग्निष्टोमयाजी । भूते णिनिः। जनितेत्यनेन सम्बन्धे भविष्यति काले साधुर्भवति। एवं कृतः कटः श्वो भविता, भावि कृत्यमासीत् । भविष्यति विहितो णिनिरतीते सिद्धः। प्रकरणबलात् कृतो लब्धाः, प्रत्ययग्रहणं सामान्यार्थम् । गोमानासीत् , गोमान् भविता। गोमानिति वर्तमाने मन्तुरासीदित्यनेन सम्बन्धेऽतीते सिद्धः, भवितेत्यनेन च भविष्यतीति।।१२८५।

।।इत्याचार्यदुर्गसिंहप्रणीतायां वृत्तौ चतुर्थे कृदध्याये पञ्चमो घञादिपादः समाप्तः।।



[दु० टी०]

धातु०। शब्दानां स्वार्थेन सह सम्बन्धो न शब्दान्तरैः। सम्बन्धो हि नाम विशेषणविशेष्यलक्षणः। स चार्थानामेव सम्भवति न धातूनामित्याह — धात्वर्थानामित्यादि। त्यादयस्तु स्वं कालं त्यक्त्वा विशेषणधात्वर्थस्य काले साधवो न भवन्ति साध्यत्वाद् धात्वर्थविहितास्त्यादयो हि प्रधानं प्रधानानुयायिनश्चेति गुणा भवन्तीति। सूत्रमित्यादि। ननु अग्निष्टोमेन य इष्टवान् स कथं जनितेति सूत्रमन्तरेण भूतभविष्यतोः सामानाधिकरण्यसम्बन्धं प्रतिपद्येत यजनादयं भविष्यत्कालव्यपदेशो न तु जन्मतोऽभिधीयते इति। परमार्थतः पुनरखण्डमेवेदं वाक्यं न कोऽपि स्वं कालं त्यक्त्वा कालान्तरं याति, पदवाच्यो हि कालोऽन्तरङ्गो वाक्यगम्यश्च बहिरङ्ग इति निवृत्तिरपि स्यात् । स्याद्यन्तस्त्याद्यन्तमर्थं प्रविशतीत्युपलक्षणं त्याद्यन्तोऽपि दृश्यते।

साटोपमुर्वीमनिशं नदन्तो यैः प्लावयिष्यन्ति समन्ततोऽमी।<br>
तान्येकदेशान्निभृतं पयोधेः सोऽम्भांसि मेघान् पिबतो ददर्श।।

अत्र यैः प्लावयिष्यन्ति तान्यम्भांसि पिबतो मेघान् ददर्शेति त्याद्यन्तस्याभविष्यदर्थावगमः कवेरभिप्राय इति।।१२८५।

।।इत्याचार्यदुर्गसिंहकृतायां कातन्त्रवृत्तिटीकायां चतुर्थे कृदध्याये पञ्चमो घञादिपादः समाप्तः।।



[वि० प०]

धातु०। अर्थद्वारको हि शब्दानां शब्दान्तरैः सह सम्बन्धः, न तु स्वाभाविकः इत्याह — धात्वर्थानामिति। सम्बन्धो विशेषणविशेष्यभावलक्षणः, तत्र विशेषणं कृदन्तो विशेष्यश्च त्याद्यन्तः, वाक्यस्य तत्प्रधानत्वादित्याह — न त्वित्यादि। त्यादयः पुनर्विशेषणस्य कृदन्तस्य काले साधवो न भवन्ति, ते हि साध्यधात्वर्थे विधीयमानाः प्राधान्यभाजः, न च प्रधानानामप्रधानानुयायित्वमुचितम् । प्रधानभावस्यैवाभावप्रसङ्गादिति। सूत्रं त्वित्यादि। ननु कथं सुखार्थम् ? न ह्यन्तरेणैतद्वचनमतीतविहितो णिनिर्भविष्यति विहितायाः श्वस्तन्याः काले भविष्यन् लक्षणेन साधुर्भवितुमर्हतीति। तथाहि यद्यग्निष्टोमेनेष्टवान् तर्हि न जनिता अथ जनिता न तर्हि इष्टवान् । एवं यदि कृतः कटस्तर्हि न श्वो भविता, अथ यदि श्वो भविता न तर्हि कृतः कटः। एवं हि यदि भाविकृतं न तर्हि आसीदिति, अथासीन्न तर्हि भावि कृतम् । परस्परविरुद्धयोः सामानाधिकरण्यस्यानुपपत्तेरिति? सत्यम् । एवं मन्यते अग्निष्टोमयाजी पुत्रोऽस्य जनितेत्यखण्डमेवेदं वाक्यम् । अस्मिंश्च पदानि यथास्वं कालमेव व्युत्पाद्यन्ते तत्र च समुदायार्थप्रतीत्यनुरोधेन विशेष्यस्य प्रधानस्य सम्बन्धे तदनुयायित्वाद् विशेषणस्योपपदस्य कालान्यत्वं गम्यते, न ह्यन्यथा वाक्यार्थसङ्गतिः स्यादिति युक्तमुक्तमुपपदस्य कालान्यत्वमिति। तस्मात् पदान्तरसम्बन्धोपस्थितत्वाद् वाक्यार्थ एवायं बहिरङ्गः, न च वाक्यार्थः पदार्थमन्तरङ्गसम्बन्धं बाधते, येन यथास्वमसिद्धिः प्रत्ययानां स्यात् , अतो न कस्यचित् कालान्तरवृत्तिः स्वकालपरित्यागो वाऽस्ति, अपि तु वाक्यार्थापेक्षयैव भविष्यत्कालप्रतीतिरित्यनर्थकमेवेदम् उदाहरणमात्रं चेदं स्याद्यन्तं त्याद्यन्तस्य कालमनुयातीति। यदा त्याद्यन्तमपरस्य त्याद्यन्तस्य विशेषणं स्यात् तदा तस्यापि वाक्यार्थापेक्षया विशेष्यस्य कालानुप्रवेशो भवत्येव। यथा—

साटोपमुर्वीमनिशं नदन्तो यैः प्लावयिष्यन्ति समन्ततोऽमी।
तान्येकदेशान्निभृतं पयोधेः सोऽम्भांसि मेघान् पिबतो ददर्श।।

**अस्यार्थः**- साटोपं यथा स्याद् अनिशं नदन्तो यैरम्भोभिरमी मेघाः समन्तादुर्वीं प्लावयिष्यन्ति तानि पयोधेरेकदेशान्निभृतं पिबतो मेघान् ददर्श। अत्र यैः प्लावयिष्यन्ति अस्य भविष्यदर्थस्य ददर्शेति सम्बन्धाद् भूतार्थानुगमः कवेरभिप्रेत इति प्लावितवन्त इत्यर्थः।।१२८५।

।।इत्याचार्यश्रीमत्त्रिलोचनदासकृतायां कातन्त्रवृत्तिपञ्जिकायां चतुर्थे कृदध्याये पञ्चमो घञादिपादः समाप्तः।।



[क० च०]

धातु०। ननु धातोः प्रत्ययाः भवन्तस्तदर्थसम्बन्धेनैव भवन्ति प्रत्ययवाच्यानां

कर्त्रादीनां प्रतीयमानत्वात् , तत् किमनेन सूत्रेण चेद् अभिप्रायापरिज्ञानाद् यस्माद् धातोः प्रत्ययान्तस्य सम्बन्धे प्रत्ययाः साधवः इति नार्थः, किन्तु अन्येषां धात्वर्थानां सम्बन्धेऽन्येभ्यः प्रत्ययेन भवता कथमन्येषां धातूनामर्थे सम्बध्यते चेद् उच्यते, शृणु । यदैकस्मिन् वाक्ये क्रियाद्वयमुक्तम् - एकं विशेषणमन्या विशेष्या एका अतीता अन्या भविष्यन्ती। यथा अग्निष्टोमयाजी पुत्रोऽस्य जनितेति विशेषणाज्जातप्रत्ययो विशेषार्थसम्बन्धे तस्य काले साधुरिति, न तु त्यादयः कृदन्तकाले साधवो न भवन्ति, किन्तु त्यादयः स्याद्यन्तानां काले भविष्यन्त्येव। तथा च वक्ष्यति — तत्साधनत्वादिति पञ्जी, तत्प्रत्ययाद्यन्तं प्रमाणं प्रधानं यत्र वाक्येऽखण्डमिति, एतेन वाक्याच्चोपोद्धृत्य पदानि संस्क्रियन्ते इति समर्थितम्, उपपदस्य समीपोच्चारिपदस्य विशेषणीभूतस्येत्यर्थः। पदेति वाक्यार्थ एवायं बहिरङ्गः कुत इत्याह — पदान्तरेति। पदान्तरस्य यः सम्बन्धस्तेनोपस्थितोऽर्पितो यत इत्यर्थः। उदाहरणं स्याद्यन्तम् । अग्निष्टोमयाजीत्यादि पञ्जी इत्याद्यन्तस्य जनितेत्यादेः कालमनुप्रविशतीति यदुक्तं तदुदाहरणमात्रं किन्त्वन्यदपि बोध्यमित्यर्थः। यदा कृदन्तमपरकृदन्तस्य विशेषणं स्यात् तदापि कालान्यत्वं भविष्यति। यथा कुर्वन् देवदत्तः स्थितवान् इत्यादि। ननु ये प्लावयिष्यन्ति प्लावनं करिष्यन्ति तान् ददर्शेत्यर्थोऽपि घटते, तत्कथमस्य विषय इत्याह—यैरिति। एतेन भविष्यत्यपि अर्थसङ्गतिरस्त्येव किन्तु कवेरभिप्रायो न भवति? सत्यम् , सङ्गत्या भूत एवार्थो घटते यतः इति भावः।।१२८५।

।।इति श्रीविद्याभूषणाचार्यसुषेणशर्मकविराजकृते कलापचन्द्रे चतुर्थे कृदध्याये पञ्चमो घञादिपादः समाप्तः।।

●

[समीक्षा]

भूतकाल आदि में किए गए प्रत्ययों से सिद्ध होने वाले शब्दों का उनसे भिन्न वर्तमान आदि काल के साथ सम्बन्ध बताने के लिए दोनों ही आचार्यों ने सूत्र बनाए हैं। पाणिनि का सूत्र है — "धातुसम्बन्धे प्रत्ययाः" (अ० ३।४।१)। इस प्रकार उभयत्र सर्वविध समानता है।

[विशेष वचन]

१. सूत्रं त्विदं सुखार्थमेव (दु० वृ०)।

२. प्रत्ययग्रहणं सामान्यार्थम् (दु० वृ०)।

३. परमार्थतः पुनरखण्डमेवेदं वाक्यम् (दु० टी०)।

४. परस्परविरुद्धयोः सामानाधिकरण्यस्यानुपपत्तेः (वि० प०)।

५. सङ्गत्या भूत एवार्थो घटते यतः इति भावः (क० च०)।

[रूपसिद्धि]

१. **अग्निष्टोमयाजी पुत्रोऽस्य जनिता।** 'अग्निष्टोमेनेष्टवान्' इस व्युत्पत्ति के अनुसार "करणेऽतीते यजः" (४।३।८१) सूत्र से भूतकाल में विहित णिनि प्रत्यय द्वारा 'अग्निष्टोमयाजी' शब्द सिद्ध होता है, परन्तु यहाँ उसका सम्बन्ध भविष्यत्काल से जोड़ा गया है।

२-३. **गोमान् आसीत् । गोमान् भविता।** 'गावः सन्त्यस्य' इस व्युत्पत्ति के अनुसार वर्तमान में विहित मन्तु प्रत्यय से सिद्ध गोमान् का भूतकाल - भविष्यत्काल से सम्बन्ध बताया गया है।

४. **कृतः कटः श्वो भविता।** 'कृतः' शब्द में विहित भूतार्थक 'क्त' प्रत्यय का सम्बन्ध यहाँ भविष्यत्काल से बताया गया है।

५. **भावि कृत्यमासीत् ।** भविष्यदर्थक णिनि प्रत्यय अपने अर्थ को छोड़कर यहाँ भूतार्थ में साधु माना जाता है॥१२८५।

**।।इति सम्पादकीयसमीक्षायां चतुर्थे कृदध्याये पञ्चमो घञादिपादः समाप्तः।।**



# अथ चतुर्थे कृदध्याये षष्ठः क्त्वादिपादः

## १२८६. अलंखल्वोः प्रतिषेधयोः क्त्वा वा [४।६।१]

[सूत्रार्थ]

प्रतिषेधार्थक 'अलम्-खलु' शब्दों के उपपद में रहने पर धातु से वैकल्पिक 'क्त्वा'प्रत्यय होता है॥१२८६।

[दु०वृ०]

अलंखलुशब्दयोः प्रतिषेधार्थयोरुपपदयोर्धातोः क्त्वा भवति वा। अलं कृत्वा, खलु कृत्वा। अलं भोजनेन, खलु भोजनेन। अलंखल्वोरिति किम्? मा कार्षीः। प्रतिषेधार्थयोरिति- किम्? अलंकारो निष्कस्य, खलु दानं कन्यायाः। निश्चयेऽत्र खलुशब्दः॥१२८६।

[दु०टी०]

अलम्०। प्रतिषेधवाचित्वात् प्रतिषेधौ। कारणे कार्योपचार इत्याह— प्रतिषेधार्थयोरिति। प्रतिषिध्यते आभ्यां वा प्रतिषेधोऽसंज्ञायामपि करणे घञ्। प्रतिषेधेऽलंखल्वोरिति न कृतं प्रतिषेधे वर्तमानयोरिति विचित्रा हि सूत्रस्य कृतिरिति भावः। कृदव्ययो हि भावेऽभिधानात्। अलं कृत्वा, न कर्तव्यमित्यर्थः। अलं भोजनेन, खलु भोजनेन,- किम्भोजनेनेत्यर्थः। वस्तुतो भोजनमेव प्रतिषेध्यमिति युक्तं करणे चेयं तृतीयेति अलं भोजनम्, खलु भोजनमिति नोदाहृतं सुबोधत्वात्। एवमुपसर्गसमासश्च- अलं प्रकृत्य, खलु प्रकृत्य। यद्यप्येवं भावे धात्वर्थव्याप्तिरस्तीति कर्मविभक्तिर्युज्यते, निष्ठादित्वात् षष्ठी प्रतिषिध्यते। 'तदलं प्रतिपक्षमुन्नतेरवलम्ब्य व्यवसायबन्ध्यताम्' इति। सत्यप्युपपदत्वे धातोः प्राग्भावो न भवतीत्युक्तमेव। ननु मा कार्षीरिति द्व्यङ्गविकलं कर्तरि विहितत्वात्, इदं तु युक्तं मा कारि देवदत्तेनेति? सत्यम्, भावेऽपि पदान्तरकर्तृकसम्बन्धोऽत्र वरं पदार्थे एककर्तृकत्वविवक्षेति नास्ति द्व्यङ्गविकलता॥१२८६।

[वि०प०]

अलं०। प्रतिषेधवाचित्वादलंखलुशब्दावुपचारात्. प्रतिषेधावित्याह-प्रतिषेधार्थयोरिति। मा कार्षीरिति। ननु कथमिदं प्रत्युदाहरणम्? द्व्यङ्गविकलत्वात्, इदं कर्तरि, क्त्वा च भावे, कृदव्ययस्य भावेऽभिधानात् क्त्वाप्रत्ययार्थो भावोऽपि नास्त्येव। इदं तु युक्तम्-मा कारि देवदत्तेन? सत्यम्, भावेऽपि कर्तृत्वमस्ति केवलं पदान्तरसम्बन्धाद् गम्यते, अन्तरेण हि भवितारं न भाव इति। अत्र तु पदार्थ एव कर्तेति नास्ति द्व्यङ्गविकलभावः॥१२८६।

[क०त०]

ननु विकल्पेनोदाहरणं कृधातोरेव दर्शयितुमुचितम्, तत् कथं भुजधातोर्दर्शितमिति? सत्यम्, अलंपूर्वः कृञ् प्रायेण भूषण एव वर्तते, अतो धात्वन्तरेण दर्शितम्, तर्हि 'अलं कृत्वा' इत्यत्र कथं प्रतिषेधार्थो गम्यते इति चेत्, न। समासाभावस्तत्र प्रतिषेधार्थस्य गम्यमानत्वात्। अन्यथा भूषणार्थे भूषणादेरनादरेष्विति वचनाद् यत्र समासः क्रियते तत्रैव भूषणं गम्यते इति अलंकृत्येति सिद्धम्। अन्य आह— अव्ययत्वाद् वाशब्दस्य व्यवस्थावाचित्वमभ्युपगम्य कृधातोर्न दर्शितमिति। अपरस्त्वाह-वाग्रहणसामर्थ्यादेव न दर्शितमिति, अन्यथा वासरूपत्वादन्ये प्रत्ययाः सिध्यन्त्येव। न च शासुयुधीत्यादौ वाग्रहणसामर्थ्यात् स्त्र्यधिकारात् परेषु न वासरूपविधिरिति वाच्यम्, तस्य प्रकरणान्तरितत्वादिति। तर्हि (तत्र) विभाषाग्रे इत्यत्र टीकायां क्त्वा-णम्विधानेन वासरूपविधिर्नास्तीत्युक्तम्, तस्मात् सार्थकमेव वाग्रहणम्, कथं तस्य सामर्थ्यं वक्तव्यमिति भावः। अलंखल्वोरिति-किमिति प्रतिषेधार्थ इत्यास्ताम् इत्याशङ्कार्थः। प्रतिषेधोऽर्थो यस्यासौ प्रतिषेधार्थः शब्दस्तस्मिन्नित्यर्थः।

निश्चयोऽत्रेति। अलंशब्दस्याभिधानकारेण प्रयुक्तत्वात् प्रसिद्धत्वम्, अतो नात्र तस्योक्तिः। पञ्ज्यां द्व्यङ्गविकलत्वाद् इति विकलो दरिद्रः, शून्य उपलक्ष्यते एकाङ्गशून्येनैव प्रत्युदाहरणं युक्तमित्यर्थः। भावेऽपि कर्तृत्वमस्तीति तर्हि कथं वुण्-तुमावित्यत्र वुण्ग्रहणं तृजादिनिवृत्त्यर्थं तुमभावमेवाभिधत्ते इति तुमो बाध्यबाधकभावः इत्युक्तम्? सत्यम्, आख्यातं क्रियाप्रधानं क्त्वाप्रत्ययवाच्योऽपि भावः प्रधानमिति समानविषयतया युज्यते। अत्र कृदन्तद्वये वुणः कर्तृत्वं तुमश्च भाव इति कुतः समानविषयता। तर्हि कथम् इच्छार्थेष्वेककर्तृकेषु तुमित्यत्र तुम् भावे भवतीति प्रत्ययश्च कर्तरीति कथं तस्य बाधकः स्यादित्युक्तम्। आख्यातस्य क्रियाप्रधानत्वेन समानविषयत्वात्? सत्यम्, कर्तृत्वमात्रमाश्रित्य तत्रोक्तम्। अत्र तु तस्याश्रयणं नास्तीति बोध्यं टीकायाम्।

[पाठान्तरम्—

प्रतिषेधार्थत्वादिति शक्यसम्बन्धः प्रतिपादितः। कारण इति कारणे शब्दे कार्यस्यार्थस्योपचारादित्यर्थः। विचित्रा हीति। केचित्तु प्रतिषेध इत्युक्ते निषेधविषयेऽलंखल्वोरित्यर्थोऽपि स्यात्। ततश्च नञादियोगेऽपि विषयतया नालं करोमि लिङ्गस्येत्यत्र, मा खलु दानं कन्याया इत्यत्र च स्यादिति वदन्ति। कृदव्ययो भाव इत्यादि यदि कर्तरि स्यात् तदा कृत्वा देवदत्तेनेत्यादिषु तृतीया न स्यात्। वस्तुत इति। भोजनं न किञ्चित् प्रयोजनम्, तस्मादिदं न विधेयमित्यर्थः]॥१२८६।

[समीक्षा]

'अलं कृत्वा, खलु कृत्वा' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क्त्वा' प्रत्यय का वैकल्पिक विधान किया गया है। पाणिनि का सूत्र है— "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा"(अ० ३।४।१८)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१.२. अलं कृत्वा। अलम्+कृ+क्त्वा+सि। खलु कृत्वा। खलु+कृ+क्त्वा+सि। 'अलम् -खलु' शब्दों के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से 'क्त्वा' प्रत्यय, 'क्' अनुबन्ध का प्रयोगाभाव, लिङ्गसञ्ज्ञा, सि-प्रत्यय, अव्ययसंज्ञा तथा 'सि' प्रत्यय का लुक्॥१२८६।

## १२८७. मेङः [४।६।२]

[सूत्रार्थ]

'मेङ् प्रतिदाने' (१।४६२) धातु से 'क्त्वा' प्रत्यय विकल्प से होता है॥१२८७।

[दु०वृ०]

मयतेः क्त्वा वा भवति। अपूर्वकालार्थं वक्तव्यम्। अपमाय, अपमित्य याचते। यपीत्वं नेष्यते। न याचेः क्त्वा, अनभिधानाच्च। अपमातुं याचते। याचित्वा अपमयते इति वक्तव्यम्॥१२८७।

[दु०टी०]

मेङः। इह यद्यपि परमार्थतोऽनुबन्धा न सन्ति कार्यार्थं भाव्यन्ते, तथाप्यात्वं सन्ध्यक्षरान्तलक्षणं न कृतम्। 'माङ् माने' (२।२६) इत्यपि सम्भाव्येत। 'मेङ् प्रतिदाने' (१।४६२) इति स्वभावादयं व्यतीहारे वर्तते। वक्तव्यं व्याख्येयम्। माषान् गृहीत्वा तिलान् ददातीतिवत् पूर्वकालस्य विवक्षास्तीति सिद्धम्। 'अपमाय याचते' इति अपपूर्वमिनोतिरपि व्यतीहारे वर्तते अपमित्य याचते। न याचेरित्यादि। याचतेः पूर्वकाले क्त्वाप्रत्ययो नास्ति उक्तिबाधायाः सामर्थ्यलब्धत्वात् पूर्वकालस्यानभिधानाच्चेति चकारेण सूच्यते **वक्तव्यपक्षे, संग्रहपक्षे** परकालतैव॥१२८७।

[वि०प०]

मेङः। अथ किमर्थमिदम् "एककर्तृकयोः पूर्वकाले" (४।६।३) इत्यादिना सिध्यत्येव? तथाहि य एवापमयते स एव याचते इत्येककर्तृकतास्तीत्याह- अपूर्वकालार्थमिति। पूर्वमसौ याचते। पश्चादपमयते इति नास्ति पूर्वकालत्वम् अतो वक्तव्यमिति भावः। अपमायेति। मीनातीत्यादिना आकारः। अपमित्येति। अपपूर्वो मिनोतिरपि व्यतीहारे वर्तते। अत्र पक्षे मेङो यपीत्त्वं न वक्तव्यमित्याह— यपीत्त्वं नेष्यते इति। ननु यदैवापमयतेरनेन क्त्वाप्रत्ययस्तदैव वक्ष्यमाणेन पूर्वकाले याचतेः कथन्न स्यादित्याह— याचेः क्त्वेति। परकाले हि मयतेः क्त्वाप्रत्ययः परकालमन्तरेण पूर्वकालो न लभ्यते इत्यनभिधानाच्चेति चकारेण सूच्यते। अपूर्वकाल एवायं क्त्वेति शब्दान्तरेणार्थं कथयन्नभिधानाद् यथाप्राप्तमपि प्रत्ययविकल्पं दर्शयितुमाह— अपमातुमित्यादि। वक्तव्यं व्याख्येयम्, तत्रैषा व्याख्या— 'मेङ् प्रतिदाने' (१।४६२)। स्वभावादयं व्यतीहारे वर्तते। तद् यथा तिलान् गृहीत्वा माषान् ददातीति व्यतीहारे

पूर्वकालविवक्षायां क्त्वाप्रत्ययस्तथात्रापीत्यर्थः। ननु व्यतीहारेऽपि यदापमायस्य पूर्वकालता, तदात्र क्त्वां सिद्ध एवेति नायमस्य विषयः, यदा तु न तस्य पूर्वकालता, किन्तर्हि याच्ञाया एव तदा कथं मेङः क्त्वाप्रत्ययोऽपूर्वकालार्थमेव हि वक्तव्यमित्युक्तम्? सत्यम्। एवं सति मेङोऽपूर्वकालेऽभिधानात् क्त्वेति वक्तव्यं भवतीत्यदोषः॥१२८७।

[क०त०]

मेङः। ननु पूर्वसूत्रात् कथम् अलंखलुशब्दौ नानुवर्तेते इति चेत्, न, पूर्वेणैव सिद्धत्वात्। न च मकारादीनां मध्ये मेङ एवेति नियमार्थं वाच्यम्, विधिनियमसम्भवे विधिरेव ज्यायान्, अलंखलुशब्दयोरनुवृत्तौ च नियमः, विधिस्तु अन्यथा तत् कथम् अनुवृत्तिः स्यादिति। अथ प्रतिषेधार्थव्यतिरेकेणालंखल्वोरिति केवलमनुवर्ततामिति चेत्, न। विशेष्यानुवर्तने विशेषणानुवर्तनस्य युक्तत्वात्। यथा देवदत्तादेरानयनेऽलंकारविशिष्टस्यानयनम्। न च वचनबलादेव केवलयोरलंखल्वोरनुवृत्तिः कथन्न स्यादिति वाच्यम्, अनुवर्तनेऽपि वचनस्य चरितार्थत्वात्। अपपूर्व एव मेङ् मिनोतिश्च प्रतिदान इति अपपूर्वस्योदाहरणमिति बोध्यम्। वृत्तावपूर्वकालार्थमिति सूत्रमिदं केनचित् कृतमित्यर्थः, न तु वाररुचिकम्। किन्तु तदेव प्रस्तावाद् वक्तव्यरूपेण दुर्गसिंहेन लिखितम् 'तादर्थ्ये'- वदिति लोकप्रसिद्धिः।

नन्वेकर्तृकयोरित्यादिना कृते नित्यं स्यात्, अनेन तु विकल्पेन स्यात्। तत् कथमपूर्वकालार्थमेवेत्युक्तम्? सत्यम्, अपूर्वकालार्थमित्यनेनैककर्तृकयोरित्यस्याविषय इत्येव प्रतिपादितम्। ततश्च कुतो विकल्पविचारावसरः। वक्तव्यमिति भिन्नोऽयं ग्रन्थः। अन्यथा वक्तव्यमिति व्याख्येयमिति टीकाकारवचनासङ्गतिः स्यात्। सूत्रेऽङ्गीकृते सति सूत्रादेवाभिधानाद् यपीत्त्वं नेष्यते इति मिनोते रूपमिदम्। इत्त्वमत्र स्वाभाविकम् इति नेष्यत इति मीनातीत्यादिना नाकार इत्यर्थः। एतावांस्तु भेदः परमते मेङोऽसिद्धस्य इकारस्य विधानमिह पुनः सिद्धस्येकारस्य मीनात्यादिना आकारो न क्रियते इति। अन्य आह— परैरित्त्वं पक्षे मेङो यपि क्रियते। नेष्यते इति। तन्न क्रियते इत्यर्थो धात्वन्तरेणैव सिद्धत्वात्। आकाराभावश्च व्यवस्थितवाग्रहणादिति। 'याचित्वा अपमयते' इत्यनेन वर्तमानेनापि भवतीति प्रतिपादितम्। पञ्ज्यां तथा हीति।

ननु याचते इति कुतो लब्धम्, नहि मेङो धातोरेवायमर्थः? सत्यम्, परिवर्तनस्य याचनपूर्वकत्वात्। याचनं चात्र प्रार्थनारूपम्। यथा 'मया सह परिवर्तनं कुरु' इति। एतादृशप्रार्थनव्यतिरेकेण परिवर्तनस्याभावात्, न तु याच्ञारूपम्, तस्यानावश्यकत्वात्। एककर्तृकतेति। ननु भिन्नकर्तृकतापि दृश्यते। यथा देवदत्तसम्बन्धि परिवर्तनम्, यज्ञदत्तो याचते इति? सत्यम्, सिंहावलोकनन्यायादेककर्तृकान्मेङ इह बोध्यम्। स्वमतमाह— अत्रेति। अतो व्याख्यानं कर्तव्यम्, न तु सूत्रं कर्तव्यमित्यर्थः।

अपपूर्व इति। ननु व्यतीहारो वर्तताम्, केन नाम सूत्रेणास्मान् मिनोते: क्त्वेति चेद् अनभिज्ञोऽसि, मेङ्धातो: केन सूत्रेण पूर्वकालविवक्षेति चेत्, सैवांस्तु किमतिदूरगमनेनेति। नन्विति। अयं पूर्वपक्षस्तु सूत्रं यन्मते तन्मते भद्रं संगच्छते। अस्माकं तु मते पूर्वकालविवक्षया क्त्वाप्रत्ययविधानाद् भवतु वाऽभिधानादपूर्वकालेऽपि, तथापि सूत्रं न विद्यते।

अनेनेति कस्य परामर्श:। स्वभावादयमित्यादि। ननु प्रतिदानमपि व्यतीहारस्तत: किं स्वभावोपन्यासेन? सत्यम्, परिवर्तनस्वरूपे व्यतीहारे वर्तते न क्रियासमुच्चयादिव्यतीहार इति बोधयितुमिति कश्चित्। धातूनामनेकार्थत्वादन्यत्र वृत्तिनिरासार्थमित्यन्य:। क्रमभाविदानग्रहणामेकव्यतीहारप्रवृत्तिं प्रति स्वभावोपन्यास:। अन्यथा मयते इत्युक्ते पिण्डीभूते एव परिवर्त: प्रतीयते, न गृहीत्वा इत्यादिवत् क्रमरूप इत्याह— पत्राङ्कुर:। तद् यथेत्यादि। व्यतीहारस्वरूपनिरूपणाज्ज्ञानं ग्रहणं च लब्धं तत्रैकस्मिन् व्यतीहारे यथावयवगतपूर्वकालविवक्षायां तथात्रापि। अथ सैव विवक्षा कीदृशीति स्फुटीकृत्य किन्न निगद्यते चेद् अवधीयताम्, याचनानन्तरं परिवर्तने वर्तमानेऽपि भूतभविष्यत्क्रियाक्षणोऽस्तीतिभूतपरिवर्तनस्य पूर्वकालतेति क्त्वाप्रत्ययस्य वर्तमानभविष्यत्परिवर्तने याच्ञापि विद्यते इति वर्तमानेति सर्वमनवद्यम्। नन्वित्यादि। नन्वयं ग्रन्थ: कथं संगच्छते सिद्धान्तस्योक्तत्वात्? सत्यम्, स एव सिद्धान्तो दूरीक्रियते। तथाहि ननु पूर्वकालविवक्षायां क्त्वाप्रत्यय: कृत:। परमते तु परकालविवक्षायां तत् कथमित्याह— नन्विति। अपमायस्येति। परिवर्तनस्येत्यर्थ:। वक्तव्यमित्युक्तमिति वक्तव्यपदेनात्र "मेङ:" इति सूत्रमुक्तम्, परमतमवलम्ब्य पूर्वपक्षस्योक्तत्वात्। अभिधानादिति। अभिधानमेवेदृशं यत् पूर्वकालेऽपि क्त्वाप्रत्यय इति। कश्चिदभिधानादिति प्रतिपादनादर्थात् पूर्वकालस्येति। यथा अक्षिणी निमील्येत्यादौ तथात्रापीत्याह। न तु पूर्वकालविवक्षायां क्त्वाप्रत्यय इति पूर्वेणैवोक्तत्वादिति।

केचित् नन्वित्यादि सिद्धान्तग्रन्थोऽयमित्याहु:। तत्तु त एव ध्यायन्ति न तु मादृशा इति स्थितम्। [पाठान्तरम्– टीकायामुक्तिबाधाया इति। उक्तिबाधा च भिन्नविषयेऽपि यथा "शिट्परोऽघोष:" (३।३।१०) इत्यादौ। अनेन मतेन मयतेरपूर्वकाले क्त्वा। एककर्तृकयोरित्यादिना न याचते: पूर्वकाले इति भिन्नविषयता वक्तव्येति। वक्तव्यस्वरूपं सूत्रं यन्मते तन्मते इत्यर्थ:। संग्रह इति। अपमायस्य पूर्वकालविवक्षायामिति मते स्वमते इति यावत्। परकालतैवेति याच्ञाया इति शेष:। केचित्तु संग्रहपक्षेऽभिधानाश्रयणमन्तरेण सूत्रकरणपक्षे परकालतैवापमायस्य न स्यादिति वदन्ति। तदा याचनस्य पूर्वकालतायां याचेरपि क्त्वाप्रत्यय: स्यादिति]॥१२८७।

[समीक्षा]

'अपमित्य, अपमाय याचते' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में क्त्वा प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है— "उदीचां माङो व्यतीहारे" (अ० ३।४।१९)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-२. अपमाय। अप+मेङ्+क्त्वा-यप्+सि। अपमित्य। अप+मेङ्+क्त्वा-यप्+सि। 'अप' उपसर्गपूर्वक 'मेङ् प्रतिदाने' (१।४६२) धातु से प्रकृत सूत्र द्वारा क्त्वा प्रत्यय, "समासे भाविन्यनञः क्त्वो यप्" (४।६।५५) से 'यप्' आदेश, "आदातामाथामादेरिः" (३।६।६२) से आकार को इकार, तकारागम तथा विभक्तिकार्य।।१२८७।

## १२८८. एककर्तृकयोः पूर्वकाले [४।६।३]

[सूत्रार्थ]

समान कर्ता वाले दो धात्वर्थों में से पूर्वकालवर्ती धात्वर्थ-वाचक धातु से क्त्वा प्रत्यय होता है।।१२८८।

[दु०वृ०]

एककर्तृकयोर्धात्वर्थयोर्मध्ये यः पूर्वक्रियाकालस्तस्मिन् वर्तमानाद् धातोः क्त्वा भवति। शक्तिशक्तिमतोरभेदविवक्षयैककर्तृकता। भुक्त्वा व्रजति। द्विवचनस्यातन्त्रत्वात् परापेक्षया वा-भुक्त्वा पीत्वा व्रजति। एककर्तृकयोरिति किम्? भुक्तवति गुरौ शिष्यो व्रजति। पूर्वकाल इति किम्? पचति च पठति च। कथम् अक्षिणी निमील्य हसति, मुखं व्यादाय स्वपितीति? मुहूर्तादिकालस्य विवक्षितत्वात्। कथं मृतं दृष्ट्वा दुःखं भवति, प्रियं दृष्ट्वा सुखं स्यात्? भिन्नकर्तृकत्वाच्चिन्त्यमेतत्।।१२८८।

[दु०टी०]

एककर्तृ०। कथं पुनर्द्वयोः क्रिययोरेकः कर्तेत्याह-शक्तीत्यादि। तथाहि लोके य एव देवदत्तो भुक्तवान् स एव व्रजतीति व्यवहारः। परापेक्षया वेति। पानक्रियामपेक्ष्य भुजिक्रिया पूर्वेति कथमिति चोद्यम्। यदैवाक्षिणी निमीलयति तदैव हसतीति तुल्यकालत्वात्। मुहूर्तेत्यादि। तदपेक्षया पूर्वकालो मुहूर्त इत्यर्थः। यद्यपि निमीलनमक्ष्णोरेव सम्भवति, तथापि स्वरूपोक्तिर्लोके दृश्यते। एककर्तृकयोः पूर्वादिति सिद्धे कालग्रहणं मन्दधियां सुखार्थम्। कथमित्यादि। दर्शनक्रियायाः पुरुषः कर्ता भवनक्रियाया दुःखमिति, एवं परत्रापि? सत्यम्। दुःखस्योत्पादकः पुरुषो दुःखमुद्भावयन् यथैककर्तृकता दृश्यते। चिन्त्यमेतदिति। शास्त्रकारै— रुदाहृतत्वादित्यर्थः। एककर्तृकयोरिति पूर्वकाल इति चाधिकारो वेदितव्यः।।१२८८।

[वि०प०]

एक०। ननु शक्तिः कारकमुच्यते, शक्तयश्च प्रतिधात्वर्थं भिन्ना एव। न हि या भोजनशक्तिः सैव गमनशक्तिरिति। कथं द्वयोर्धात्वर्थयोरेकः कर्त्तेत्याह— शक्तीत्यादि। तथाहि लोके य एव भुक्तवान् स एव देवदत्तो व्रजतीति व्यवहारो दृश्यते। 'सूत्रे लिङ्गं संख्या कालश्चातन्त्राणि' (का० परि० ६१) इत्याह— द्विवचनस्येति। तेन बहुष्वपि धात्वर्थेषु भवति। परापेक्षया वेति। पानापेक्षया भोजनं पूर्वम्, व्रजनापेक्षया च पानमिति। अतो द्वयोरपि धात्वर्थयोः पूर्वकाले क्त्वेति भावः। कथमिति। यदैवाक्षिणी निमीलयति तदैव हसतीति तुल्यकालत्वान्न प्राप्नोति तथा यदैव मुखं व्याददाति तदैव स्वपितीति। परिहारमाह-मुहूर्तेति। ननु स्वापो हि निद्रालाभः उच्यते, स च मुखव्यादानात् पूर्व एव निद्रां लब्ध्वा मुखं व्याददातीति कथं व्यादानस्य पूर्वकालविवक्षेति? सत्यम्। व्यादानकाले स्वापस्यानुवर्तनमस्तीति स्वापव्यादानयोरेककालत्वे सति व्यादानस्य लौकिकी पूर्वकालविवक्षाऽस्तीति न दुष्यति। कथमिति। दर्शनक्रियायाः पुरुषः कर्ता स हि तत् पश्यतीति। भवनक्रियायाश्च दुःखं कर्तृ, 'तद्धि भवति, उत्पद्यते' इति भिन्नकर्तृकता, एवमितरत्रापि। चिन्त्यमेतदिति। शास्त्रकारैरुदाहृतम्, तदस्माभिरिदं चिन्तनीयमालोचनीयम्। तत्रेदं चिन्त्यते दुःखस्योत्पादकः पुरुषः स हि मृतं पश्यन्नात्मनो दुःखमुत्पादयतीति विवक्षया एककर्तृकतेति भावः॥१२८८।

[क० त०]

एककर्तृ०। एककर्तृकयोरिति निर्धारणे षष्ठी, पूर्वकालश्च निर्धार्यस्तस्मिन् वर्तमानादित्यत्र या वर्तमानक्रिया, तया पृथक् क्रियते। ननु भावलक्षणा सप्तमी कथं न स्यात्, एककर्तृकयोर्धात्वर्थयोः सतोः पूर्वकाले वर्तमानादित्यर्थः स्यात्, नैवम्, द्वयोर्धात्वर्थयोः सत्त्वे स्याद् एकस्य सत्त्वेऽन्यस्याध्याहारे न स्यात्। न चैवं भवत्विति वाच्यम् 'मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा' इति रघुप्रयोगदर्शनाद् अत्रानाराध्येत्यस्मादनन्तरं स्थितस्येत्यध्याहारः। ननु पक्त्वा पचतीत्यादौ एकधात्वर्थे कथं स्यादिति चेत्, न। तण्डुलादिकारकभेदेन क्रियाभेदस्य स्वीकारात्। अथ विकल्पः कथं नानुवर्तते इति चेत्, न। "विभाषाग्रे०" (४।६।६) इत्यादिसूत्रे विभाषाग्रहणादुभयोर्विभाषयोर्मध्ये यो विधिः स नित्यः इति न्यायस्य लक्ष्यानुसारित्वान्नात्र विकल्पानुवृत्तिरिति। पूर्वस्मिंश्चानुवृत्तिरस्त्येव।

अथ पूर्वकाले वर्तमानयोर्धात्वर्थयोर्वर्तमानाभ्यां धातुभ्यां क्त्वेति न कथं सूत्रार्थः। अतो भुक्त्वा पीत्वा व्रजतीत्यादावेव न स्यात्। सूत्रे लिङ्गं संख्या कालश्चातन्त्राणीत्येकस्मादपि भवतीति फलशून्यमिदं देश्यम्। अथैककर्तृकत्वं किम् अद्वितीयकर्तृकत्वम् अभिन्नकर्तृकत्वं वा। तत्राद्यपक्षे देवदत्तयज्ञदत्तौ पक्त्वा व्रजेताम् इति न स्याद् अद्वितीयकत्वाभावात्, तस्मादभिन्नकर्तृकत्वं समानकर्तृकत्वमिति न्याय्यम्।

वृत्तौ तस्मिन् वर्तमानादित्यनेन भावाभिधायकः क्त्वा पूर्वकालस्यापि द्योतक इति दर्शितम्। भुक्तवतीति। अथैवंविधे भिन्नकर्तृके यदि क्त्वा भवेत् तदा कालभावयोः सप्तमीत्यत्र भावग्रहणमनर्थकं स्यात्? सत्यम्। पूर्वकाल इति वचनाद् यत्र पूर्वकालोऽतीतस्तत्रैवास्य विषयो न वर्तमानादौ। अतो दुह्यमानास्वित्यादौ सप्तम्युत्पद्यमाना भावग्रहणं प्रत्युज्जीवयिष्यतीति दुर्गादित्यः।

अन्य आह— भिन्नविषयत्वेन क्तवन्तुबाधा न स्यात्, किन्त्वेवंविधेऽर्थे गुरुणा भुक्त्वा शिष्यो व्रजतीति स्यादिति प्रतिपादितमिति। मुहूर्तादिति। मुहूर्तादिकाल-स्यावयवभूतस्य निमीलनस्य पूर्वत्वात् समुदायोऽपि पूर्वत्वोपचार इति भावः। यदा तु नैवं विवक्ष्यते तदा क्त्वापि न स्यात्। अक्षिणी निमीलयति हसति चेति स्वापस्यापि परावयवमपेक्ष्य व्यादानस्य पूर्वावयवस्य पूर्वतया क्त्वा इत्येषैव लौकिकी विवक्षेति त्रिलोचनहृदयम्। दुःखं भवतीति। यद्यपि दुःखं प्राप्नोतीति भवतेः प्राप्त्यर्थत्वाद् एककर्तृकता विद्यते तथापि सत्तार्थे दुष्यति। अत एव सुखं स्यादित्यपि दर्शितमिति कश्चित्। पञ्ज्यां पुरुष आत्मेत्यर्थः।

[पाठान्तरम्-टीकायां पूर्वादिति सिद्धे इति पूर्वार्थादित्यर्थः। तत्र चार्थे कार्यासम्भवाद् धातोरेव कार्यम्। अत एव धातुद्वयमध्ये पूर्वादिति नार्थः इति भावः]।।१२८८।

[समीक्षा]

'भुक्त्वा व्रजति, स्नात्वा पीत्वा व्रजति' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क्त्वा' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है— "समानकर्तृकयोः पूर्वकाले" (अ० ३।४।२९)। अतः उभयत्र समानता है।

[रूपसिद्धि]

१-२. भुक्त्वा व्रजति। भुज्+क्त्वा+सि। भुक्त्वा पीत्वा व्रजति। भुज्-पा+क्त्वा+सि। 'भुज्-पा' धातुओं से 'क्त्वा' प्रत्यय, ज् को ग्, ग् को क्, आ को ई, लिङ्गसंज्ञा, सि-प्रत्यय, अव्ययसंज्ञा तथा सि-प्रत्यय का लुक्।।१२८८।

## १२८९. परावरयोगे च [४।६।४]

[सूत्रार्थ]

पर=दूरस्थ का अवर=समीपस्थ के साथ तथा समीपस्थ का दूरस्थ के साथ योग होने पर धातु से क्त्वा प्रत्यय होता है।।१२८९।

[दु० वृ०]

परस्यावरेण योगेऽवरस्य च परेण योगे सति धातोः क्त्वा भवति। अप्राप्य नदीं पर्वतः। परनदीयोगेनावरदेशस्थः पर्वतो विशिष्यते। अतिक्रम्य पर्वतं नदी। अवरपर्वतयोगेन परदेशस्था नदी विशिष्यते। भवतेः सर्वत्र सम्भवाद् एककर्तृकता पूर्वकालता च दुःखप्रतिपत्तिगम्येति वचनम्।।१२८९।

[क०त०]

परावर०। पूर्वेण सिद्धे वचनमिदमपूर्वकालार्थम्, परशब्देन परदेशस्थ उच्यते, अवरशब्देन पूर्वदेशस्थ इति प्रयोगे तथैव सिद्धेः। योगोऽत्र विशेषणविशेष्यभावलक्षणः सम्बन्धः। अप्राप्येत्यादि। नदीमप्राप्नुवन् पर्वतस्तिष्ठतीत्यर्थः। अतिक्रम्येत्यादि। पर्वतमतिक्रम्य नदी तिष्ठतीत्यर्थः। अथ सूत्रेण किं पूर्वेणैव सिद्धत्वात् तदेवाह- भवतेरित्यादि। अथ पूर्वकालाभावे न स्यादित्याह— पूर्वेति। पर्वतानां नित्ययोगोऽत्रं, अतो वर्तमानतैव युक्ता। अत्रापि पूर्वकालविवक्षेति चेद् आह— दुःखेत्यादि॥१२८९।

[समीक्षा]

'अप्राप्य नदीं पर्वतः, अतिक्रम्य तु पर्वतं नदी' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'क्त्वा' प्रत्यय का विधान किया गया है। पाणिनि का सूत्र है— "परावरयोगे च" (अ०३।४।२०)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-२. **अप्राप्य नदीं पर्वतः स्थितः।** नञ्+प्र+आप्+क्त्वा-यप्+सि। **अतिक्रम्य पर्वतं नदी स्थिता।** अति+क्रम्+क्त्वा-यप्+ सि। 'नञ्-प्र' पूर्वक 'आप्लृ' धातु से तथा 'अति' पूर्वक 'क्रम्' धातु से 'क्त्वा' प्रत्यय, यप् आदेश तथा विभक्तिकार्य॥१२८९।

## १२९०. णम् चाभीक्ष्ण्ये द्विश्च पदम् [४।६।५]

[सूत्रार्थ]

आभीक्ष्ण्य=पौनःपुन्य अर्थ में समानकर्ता वाली दो धातुओं के अन्तर्गत पूर्वकाल में वर्तमान धातु से णम्-क्त्वा प्रत्यय होते हैं तथा णम्-क्त्वाप्रत्ययान्त पदों का द्वित्व भी होता है॥१२९०।

[दु०वृ०]

एककर्तृकयोर्धात्वर्थयोः पूर्वकाले वर्तमानाद् धातोर्णम् भवति क्त्वा चाभीक्ष्ण्ये पदं च द्विर्भवति। भोजं भोजं व्रजति, भुक्त्वा भुक्त्वा व्रजति। द्विश्च पदमिति सुखार्थमेव। लुनीहि लुनीहीति लोकतो दर्शनात्। यदयं भुङ्क्ते ततो व्रजति। यच्छब्दप्रयोगे ततःशब्देनैव क्रमस्याभिधानात् क्त्वा न भवति, आभीक्ष्ण्याभावाच्च णम् न स्यात्। यदयं पुनः पुनर्भुङ्क्ते ततो व्रजति। पुनःपुनःशब्देनाभीक्ष्ण्यस्याभिधानात्। यदयं भुक्त्वा व्रजति ततोऽधीत इति भोजनगमनयोः क्रमे क्त्वा गमनाध्ययनयोस्तु क्रमस्य ततःशब्देनाभिधानात्॥१२९०।

[दु०टी०]

णम्०। द्विरित्यादि। यथा त्यादिषु द्विर्भावस्तथाव्ययकृत्स्वपि सिध्यतीति भावः। "न यद्यनाकाङ्क्षे" (अ०३।४।२३) इति न वक्तव्यम्। अनाकाङ्क्षे वाक्ये क्त्वाणमौ न भवतः इति मनसि कृत्वाह— यदयमित्यादि॥१२९०।

[वि० प०]

णम्०। द्विरित्यादि। न ह्यन्यथा आभीक्ष्ण्यं लोके गम्यते इति। यद्यनाकाङ्क्षे इति न वक्तव्यम्। यच्छब्दप्रयोगे अनाकाङ्क्षे वाक्ये क्त्वाणमौ न भवतः इत्यस्यार्थस्य युक्तिसिद्धत्वादित्याह— यदयमित्यादि। यदप्युक्तम् अनाकाङ्क्षे इति किम्? यदयं भुक्त्वा गच्छति ततोऽधीते इत्यत्र किल यदयं भुक्त्वा गच्छतीत्यनेन वाक्येन ततोऽधीते इत्येतदपेक्ष्यते इत्यत्रापि भोजनगमनयोः क्रमस्यानुक्तत्वात् कथं क्त्वा न भवतीत्याह— यदयं भुङ्क्ते इत्यादि ॥१२९०।

[क० त०]

णम्०। चकारोऽत्राभीक्ष्ण्ये क्त्वार्थः, अन्यथा णम्-प्रत्ययो बाधकः स्यात्। अथ चकारः किमर्थो वाशब्दः क्रियताम्, वक्ष्यमाणे च विभाषाग्रहणं न कृतं स्याद् वाधिकारात्। नैवम्, अनेन क्त्वाविधानेन पदस्य द्विरुक्तिः स्यादिति। लुनीहि लुनीहीतिवत् यल्लोकतो द्विर्वचनमिति, तत् कष्टमिति कश्चित्। आभीक्ष्ण्ये इति विषयसप्तमी। यत्राभीक्ष्ण्यं द्विर्वचनप्रतिपाद्यं तद्विषये णमिति, एतेनोक्तार्थत्वाद् द्विर्वचनं न स्याद् इति निरस्तम्। वृत्तौ क्त्वा न भवतीति पूर्वेणेति शेषः। आभीक्ष्ण्याभावाच्च णम् न स्यादिति क्रमस्याभिधानाच्चेति चार्थः।

यद् वा चकारो भिन्नक्रमे णम् च न स्यादिति। न केवलमनेन क्त्वा न स्यात् णम् चेति चार्थः। यदयमित्यादि। अथात्र ततःशब्देन क्रमस्याभिधानमेव किं नोच्यते, कथं वा पुनःपुनःशब्देनैवाभीक्ष्ण्यस्याभिधानादित्युच्यते? सत्यम्, णमो विधानं तावदनभिहितक्रमेऽनभिहिताभीक्ष्ण्ये च, तत्र यदाऽनभिहितः क्रमोऽनभिहितमाभीक्ष्ण्यं च तदा भवति तत्राह— पुनःपुनरित्यादि। नन्वभिहिताभीक्ष्ण्ययोरुभयोः सत्त्वे णमो विधानं ततश्च ततःशब्देनैव क्रमस्याभिधानादेव न भविष्यति किं पुनःपुनः-शब्देनैवाभीक्ष्ण्याभिधानादित्यनेन? सत्यम्, एकस्यासत्त्वेऽपि सत्यन्यदाश्रित्य भवितुं पार्यते इति सिद्धान्तः समर्थयितव्यः। अन्यथा एकमित्यादौ कर्मप्रत्ययानुपपत्तिः स्यात्। तथाहि एकत्वविशिष्टे कर्मणि णम् विधीयते। तत्र च प्रकृत्या एकत्वस्योक्तार्थत्वात् कथं णम् स्यादिति कर्ममात्रमवलम्ब्यापि स्यादित्युच्यते चेत्, तथात्रापि पौनःपुन्ये यत्ततःशब्दाभ्यां क्रमस्योक्तत्वेऽपि यदा पुनःपुनःशब्दो नास्ति तदा यदयं भुक्त्वा भुक्त्वा ततो व्रजतीति स्यादेव नियामकाभावात्। अतः पुनःपुनःशब्देनाभीक्ष्ण्याभिधानादित्युच्यते। कश्चिद् आह— यत्ततःशब्दौ न क्रमस्याभिधायकौ। अतः पुनःपुनःशब्देनेति सिद्धान्तः प्रतीयते, अन्यथा द्व्यङ्गविकलं स्यादिति। तत्र, यच्छब्दप्रयोगे ततःशब्देन क्रमस्याभिधानादित्युक्तत्वात्॥१२९०।

[समीक्षा]

'भोजं भोजं व्रजति, भुक्त्वा भुक्त्वा व्रजति' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में णम् (णमुल्) -क्त्वा प्रत्यय तथा पद को द्वित्वविधान किया गया है। पाणिनि का सूत्र है— "आभीक्ष्ण्ये णमुल् च" (अ०३।४।२२)। अतः पाणिनीय 'उ-ल्' अनुबन्धों के अतिरिक्त अन्य प्रकार की समानता है।

[रूपसिद्धि]

१. भोजं भोजं व्रजति। भुज्+णम्+सिं। "भुज्' धातु से 'णम्' प्रत्यय, उपधागुण, पद को द्वित्व तथा विभंक्तिकार्य।

२. भुक्त्वा भुक्त्वा व्रजति। भुज् + क्त्वा + सि।'भुज' धातु से क्त्वा प्रत्यय, पद को द्वित्व तथा विभक्तिकार्य॥१२९०।

## १२९१. विभाषाग्रेप्रथमपूर्वेषु [४।६।६]

[सूत्रार्थ]

'अग्रे-प्रथम-पूर्व' शब्दों के उपपद में रहने पर धातु से वैकल्पिक 'णम्' प्रत्यय होता है॥१२९१।

[दु०वृ०]

एषूपपदेषु विभाषया धातोर्णम् भवति। अग्रेभोजं व्रजति, अग्रे भुक्त्वा व्रजति। प्रथमं भोजं व्रजति, प्रथमं भुक्त्वा व्रजति। पूर्वं भोजं व्रजति, पूर्वं भुक्त्वा व्रंजति। पूर्वं भुङ्क्ते ततो व्रजतीति ततःशब्देन क्रमस्याभिधानात्॥१२९१।

[दु०टी०]

विभाषा०। आभीक्ष्ण्य इति न वर्तते इष्टत्वात्। आभीक्ष्ण्ये प्राप्ते 'क्त्वा-णम्'-विधाने वासरूपविधिर्नास्तीति विभाषाग्रहणम्, पक्षे वर्तमानादयोऽपि भवन्तीति अग्रे भुङ्क्ते, व्रजति अग्रेभोजंभोजं व्रजति तथा अग्रे भुङ्क्ते व्रजति। यदि पुनः कर्तृविवक्षया वर्तमानादय उच्यन्ते, तदात्र विभाषाग्रहणं प्रयोजयति। अग्रआदिभिर्विना भुङ्क्ते भुङ्क्ते व्रजतीति कर्तृविवक्षया न वर्तमानादयोऽभिधानादिति वक्तव्यं स्यात्। एवं सत्यप्राप्ते विभाषेयमिति वृत्तावाभीक्ष्ण्येनोदाहृतम्।

यद्येवमग्रेआदिभिः पूर्वकालस्योक्तत्वात् क्त्वाप्रत्ययो न विधातव्यः स्यात् पूर्वं भुङ्क्ते व्रजतीति? सत्यम्। साधनपौर्वकाल्यमेतदिति भुजिव्रज्योः कर्तुर्भुजिव्रज्योरेव कर्त्रन्तरात् पूर्वकालता पूर्वं भुङ्क्तेऽन्येभ्यो भुजिभ्य इति विशेषणत्त्वमपि न हीयते कथं द्वितीयेति न देश्यम्। एवं सति वचनाण्णम् स्यान्न भुङ्क्ते इति देश्यं निरस्तम्। भाष्यकारमतमेतत्, सूत्रकारमतं तु उक्तानामपि स्वरूपानुवादकतया प्रयोगो दृश्यते। यथा अन्यथाभुङ्.क्ते अन्यथाकारं भुङ्.क्ते इति प्राप्तत्वाद् व्रजतीति साधनपौर्वकाल्ये क्रियापौर्वकाल्ये च विवक्ष्यते को विशेष इति विभाषाग्रहणं क्त्वार्थं न स्यात्॥१२९१।

[वि०प०]

विभाषा०। आभीक्ष्ण्य इति न स्मर्यतेऽनिष्टत्वात्, अतोऽप्राप्ते विभाषेयम्। कथम् अग्रे भुङ्क्ते व्रजतीति? सत्यम्, क्त्वाणमौ भावे कर्तृत्वविवक्षायां च वर्तमानादय इति भिन्नार्थतया नैतौ तेषां बाधकाविति। आभीक्ष्ण्ये तु भुङ्क्ते भुङ्क्ते व्रजतीति नाभिधीयते। इहाग्रादीनां णमन्तेनोपपदसमासो नास्ति, अनभिधानात्॥१२९१।

[क०त०]

विभाषा०। विभाषाशब्दोऽयमव्ययो विकल्पप्रतिपादकः। ननूपपदम् अग्रेप्रथमपूर्व-विभाषास्वित्यकरणात्। क्त्वा नानुवर्तते चानुकृष्टत्वात्, अनुवर्तने चाग्रे भुक्त्वा अग्रे भुङ्क्ते व्रजतीत्याद्येव स्यात्; न तु अग्रेभोजं व्रजतीति, एतच्चैतत्सूत्रमन्तरेणापि सिद्धमिति पञ्ज्याम् अनिष्टत्वादिति। ननु सूत्रबलादेव नानुवर्तिष्यते, तत् किमेवमुच्यते? सत्यम्, सूत्रसामर्थ्यान्नियमः स्यात्, उपपदेषु मध्ये-अग्रेप्रथमपूर्वेष्वेवेति न प्राक्प्रभृतिष्विति। आभीक्ष्ण्यनिवृत्तौ द्विश्च पदमित्यपि निवर्तते। अनभिधानादिति। ननु किमर्थमिदमुच्यते, अग्रे इति सप्तम्यन्तानुकरणादेव समासो न भविष्यति? सत्यम्, प्रथमपूर्वयोः समासस्याभिधानमवश्यमाश्रयणीयम्। तत् प्रस्तावेनोक्तम्।

[पाठान्तरम् – टीकायाम् आभीक्ष्ण्ये प्राप्ते इत्याभीक्ष्ण्यनिवृत्तौ सामान्येनाभीक्ष्ण्ये च तत्राभीक्ष्ण्ये प्राप्ते विभाषेत्यर्थः। एतच्च मतान्तरम् अग्रेभोजं व्रजतीत्युदाहरणमपि मतान्तरे बोध्यम्। अत्र कश्चिद् अप्राप्तिपक्षे सचकारमनुवर्त्य पक्षे वर्तमानामाह, अन्यथा णम्मात्रे विकल्पिते बाधकत्वात् क्त्वैव स्यात् न वर्तमाना, तेनाह अग्रे भुङ्क्ते अग्रेभोजमिति भवति, प्राप्तिपक्षे तु पूर्वेण क्त्वाणमौ सिद्धाविति पुनर्णम् विकल्पो वर्तमानार्थः, तेन अग्रे भुङ्क्ते व्रजतीति। तदसदित्याह— यदीति। तेन प्राप्तावेवायं विकल्पो वासरूपन्यायाभावात् तर्हि भुङ्क्ते भुङ्क्ते व्रजतीत्यपि स्यादित्याह— अग्रआदिभिरिति। एवं सतीति। अभिधानाश्रयणे सतीत्यर्थः। एतच्च स्वमते बोध्यम् । यद्येवमिति।

अयमभिप्रायः- अग्राद्यैः पूर्वकालस्योक्तत्वात् पूर्वेण सिध्यतीति भावः। णम् पुनर्विधानबलादेव स्यादिति। अतो विभाषाबलादुक्तार्थेऽपि भवतीति केचिदाहुः। तदसदिति भाष्यकारसम्मतम्। सिद्धान्तमाह— सत्यमिति। क्रियापौर्वकाल्यानुक्तत्वात् क्त्वाप्रत्यय इति हृदयम्। अथ साधनविशेषणत्वे कथं द्वितीयेत्याह क्रियाद्वारैव साधनविशेषणमिति भावः। तथाहि भोजनव्रजनापूर्वेण क्त्वा। अथ पूर्वशब्देन भोजनव्रजनापेक्षया न पूर्वमित्युच्यते— किन्त्वन्यापेक्षयेति देश्यम् भवतीति। अथ यदि साधारणपौर्वकाल्यमेवैतत् तदा क्रियापौर्वकाल्याभावात् क्त्वाप्रत्यये तु न स्यात्। यदि च क्रियापौर्वकाल्याभावात् क्त्वाप्रत्यये तु न स्यात्। यदि च क्रियापौर्वकाल्यमप्यस्ति तदा शपथं विना कप्रत्यये तु पूर्वादिशब्देन साधनपौर्वकाल्यमेवोक्तम्, न क्रियापौर्व-काल्यमिति। तस्मादुक्तार्थानामित्यादि सूत्रकारमतमेव साध्विति बोधयितुमाह— सूत्रकारमतं त्विति कोऽत्र विशेष इत्यनेन भाष्यमतमपास्तम्। न स्यादिति। णम्प्रत्यये बाधा न स्यादित्यर्थः स्यादिति पाठे सुगमम्]॥१२९१।

[समीक्षा]

'अग्रेभोजं व्रजति, अग्रे भुक्त्वा व्रजति' इत्यादि शब्दों के सिद्ध्यर्थ कातन्त्रकार न 'णम्-क्त्वा' प्रत्यय तथा पाणिनि ने 'णमुल्-क्त्वा' प्रत्यय किए हैं। पाणिनि का सूत्र है— "विभाषाग्रेप्रथमपूर्वेषु" (अ० . ३।४।२४)। अतः पाणिनीय 'उ-ल्' अनुबन्धों को छोड़कर अन्य प्रकार की उभयत्र समानता ही है।

[रूपसिद्धि]

१. **अग्रेभोजं** व्रजति। अग्रे+भुज्+णम्+सि। 'अग्रे' शब्द के उपपद में रहने पर 'भुज पालनाभ्यवहारयो:'' (६।१४) धातु से 'णम्' प्रत्यय, उपधागुण तथा विभक्तिकार्य।

२. **अग्रे भुक्त्वा** व्रजति। अग्रे+ भुज्+क्त्वा+सि। 'अग्रे' शब्द के उपपद में रहने पर 'भुज् ' धातु से ''एककर्तृकयो: पूर्वकाले'' (४।६।३) सूत्र द्वारा क्त्वा प्रत्यय तथा विभक्तिकार्य।

३-६. **प्रथमं भोजं** व्रजति। प्रथम्+भुज्+णम् +सि। **प्रथमं भुक्त्वा** व्रजति। प्रथम+ भुज्+क्त्वा+सि। **पूर्वं भोजं** व्रजति। पूर्व+भुज्+णम्+सि। **पूर्वं भुक्त्वा** व्रजति। पूर्व+भुज्+ क्त्वा+सि। 'प्रथम-पूर्व' शब्दों के उपपद में रहने पर 'भुज्' धातु से 'णम्-क्त्वा' प्रत्यय, उपधागुण तथा विभक्तिकार्य।।१२९१।

## १२९२. कर्मण्याक्रोशे कृञः खमिञ् [४।६।७]

[सूत्रार्थ]

कर्म कारक के उपपद में रहने पर 'कृञ्' धातु से 'खमिञ्' प्रत्यय होता है आक्रोश अर्थ के गम्यमान होने पर।।१२९२।

[दु०वृ०]

कर्मण्युपपदे कृञः खमिञ् भवति आक्रोशे गम्यमाने। चौरंकारमाक्रोशति। करोतिरिहोच्चारणे। आक्रोशनक्रियया्यैव कर्म। आक्रोश इति किम्? साधु कृत्वा स्तौति। खानुबन्धो मागमार्थ:।।१२९२।

[दु०टी०]

कर्मण्या०। आक्रोशविषये यदा करोति:, करोत्यर्थ इति यावत्। अथवा आक्रोशे गम्यमाने इत्युभयथा पक्षेऽप्याक्रोशे इत्यवश्यं प्रयोक्तव्यं पूर्वकालावधारणायेति चौरोऽसीत्याक्रोशवाक्येऽपि भावशब्दस्य यत् करणं तदाक्रोशस्यैव संप्रदानार्थमित्या-क्रोशक्रियया कर्म भवति, न हि तेन विनाक्रोश: सम्पादयितुं शक्य:। अथवा करोतिरभूतप्रादुर्भावार्थ:, पूर्वमसौ चौर: क्रियते पश्चादाक्रुश्यते इति चौरत्वमध्यारोप्याक्रुश्यते इत्यर्थ:। यथा यथा वाहिको गौ: क्रियते। अन्य आह— इतिशब्दस्यार्थे करोतिश्चौर: इत्याक्रोशतीत्यर्थस्तदा कथं चौरस्य कर्मत्वम्? सत्यम्। करोतिप्रयोगात् प्रतीयते स्वभावादिति।।१२९२।

[वि०प०]

कर्म०। खमिञ इकार उच्चारणार्थ:। खानुबन्धे ''ह्रस्वारुषोर्मोऽन्त:'' (४।१।२२) धातूनामनेकार्थत्वादाह— करोतिरिहेति। चौरोऽसीत्याक्रोशतीति, चौरोऽसीत्याक्रोशतीत्यर्थ:।

तत्र चौरोऽसीत्याक्रोशनवाक्ये चौरस्य यत् करणमुच्चारणं तदाक्रोशनस्यैव सम्पादनार्थम्। न हि तेन विना आक्रोशः शक्यते सम्पादयितुम्, न पुनर्युक्तिभिरसौ चौरः क्रियते इति। अतश्चौरस्य कर्मत्वमाक्रोशनक्रिययैव न करोतिक्रिययेति॥१२९२।

[क० त०]

कर्म०। वृत्तौ आक्रोशने गम्यमाने इति। ननु साक्षादेव श्रूयते तत् कथं गम्यमान इति? सत्यम्, आक्रोशतीति पदाद् गम्यते, न तु धातोः सकाशादिति। चौरंकारमिति। ननु करणस्य कथमाक्रोशनमित्याह— करोतिरिहोच्चारण इति। आक्रोशनक्रिययैवेति। यत्राक्रोशतिर्विद्यते तत्रैव स्यादिति भावः। ननु यद्याक्रोशनक्रियया चौरः कर्म तदा कथं कृञ उपपदं स्यात्। नैवम्, चौरस्य यत् करणमुच्चारणं तदाक्रोशनस्यैव सम्पादनार्थमिति कृत्वा क्रोशनकर्मोच्यते। किन्तूपकारित्वमुच्चारणेऽप्यस्तीति। पञ्ज्यां न पुनरुपपत्तिभिरिति युक्तिभिरित्यर्थः।

[पाठान्तरम्– टीकायाम् आक्रोशविषये इत्यनेनाक्रोशविषय इति प्रकृतिविशेषणमित्युक्तम्। आक्रोशे गम्यमान इत्यनेन प्रत्ययविशेषणमित्युक्तं पूर्वकालावधारणविषयेति। **अयमभिप्रायः–** परक्रियापेक्षयैव पूर्वकालता। परक्रिया चात्राङ्पूर्वक्रुशधातुवाच्यैव श्रुतत्वादिति चौरङ्कारमित्युक्ते कथमाक्रोशप्रतीतिरित्याह— वृत्तौ करोतिरिहोच्चारण इति तथापि कथमित्याह— चौरोऽसीत्यादि। आक्रोशक्रियया कर्मेति आक्रोशक्रियया हेतुभूतया, चौरशब्दोच्चारणानुकरोतिः कर्मेत्यर्थः। यस्मादाक्रोशनं चौरादिशब्दमन्तरेण न स्यादित्यर्थः]॥१२९२।

[समीक्षा]

'चौरङ्कारमाक्रोशति' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार 'खमिञ्' प्रत्यय तथा पाणिनि 'खमुञ्' प्रत्यय करते हैं। पाणिनि का सूत्र है—"कर्मण्याक्रोशे कृञः खमुञ्" (अ० ३।४।२५)। अतः पाणिनीय उकारानुबन्ध के अतिरिक्त अन्य प्रकार की उभयत्र समानता है।

[विशेष वचन]

१. करोतिरिहोच्चारणे (दु०वृ०)।

२. करोतिरभूतप्रादुर्भावार्थः (दु०टी०)।

३. खमिञ इकार उच्चारणार्थः (वि०प०)।

[रूपसिद्धि]

१. चौरङ्कारमाक्रोशति। चौर+कृ+खमिञ्+अम्। 'चौर' शब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा खमिञ् प्रत्यय, 'ख्-इ-ञ्' अनुबन्धों का प्रयोगाभाव, ऋकार को वृद्धि, "ह्रस्वारुषोर्मोऽन्तः" (४।१।२२) से मकारागम तथा विभक्तिकार्य॥१२९२।

# १२९३. स्वादौ च [४।६।८]

[सूत्रार्थ]

'स्वादु' शब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से 'खमिञ्' प्रत्यय होता है।।१२९३।

[दु० वृ०]

स्वाद्वर्थे स्वादुः। तस्मिन्नुपपदे कृञः खमिञ् भवति। स्वादुङ्कारं भुङ्क्ते, लवणङ्कारं भुङ्क्ते, सम्पन्नङ्कारं भुङ्क्ते। स्वादाविति किम्? रूपमिदमदीर्घान्ततां गमयति। तेन स्वादूकृत्य, स्वाद्वीकृत्वा यवागूं भुङ्क्ते।।१२९३।

[दु०टी०]

स्वादौ०। स्वाद्वर्थे स्वादुरित्यर्थपरोऽयं निर्देशो न शब्दपरः इति व्याख्यानतो विशेषार्थप्रतिपत्तेः। स्वादाविति। "ङिरौ सपूर्वः" (२।१।६०) इति ह्रस्वान्तस्य सम्भवति, तदाऽर्थाद् ह्रस्वान्ता गृह्यन्ते साहचर्यात्, एतेन सम्पन्नीकृत्य, सम्पन्नं कृत्वा, लवणं दत्त्वा भुङ्क्ते इति लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणं वा एतेन स्वाद्वर्थे दीर्घान्त इति स्थितम्।।१२९३।

[वि०प०]

स्वादौ। स्वाद्वर्थे स्वादुरित्यनेनार्थपरो निर्देशोऽयं न शब्दपर इति दर्शितम्, अतः पर्यायेणापि दर्शयतीत्यर्थः। स्वादूकृत्येति। च्विप्रत्यये "नाम्यन्तानां यणायि०" (३।४।७०) इत्यादिना दीर्घः। एवं 'सम्पन्नीकृत्य, सम्पन्नं कृत्वा' इत्यादावपि न भवति।।१२९३।

[क०त०]

स्वादौ०। टीकायां व्याख्यानत इति व्याप्तिन्यायादित्यर्थः। यद् वा पूर्वस्मिन् कर्मणीत्यर्थः। परनिर्देशादत्रापि तथा व्याख्यानादिति रूपप्रधाननिर्देशेऽपि नपुंसकता स्यात्। तस्मादर्थपरोऽयं निर्देश इति कश्चित्, तन्न, पुंवद्भावविषयत्वात्। साहचर्यादिति स्वादुशब्दस्य रूपप्रधाननिर्देशस्तदर्था अपि ह्रस्वा एव गृह्यन्ते। साहचर्यमत्र कल्पनया पर्यवसितमिति।।१२९३।

[समीक्षा]

'स्वादुङ्कारम्, लवणङ्कारम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार खमिञ् प्रत्यय तथा पाणिनि णमुल् प्रत्यय करते हैं। यहाँ अनुबन्धभेद के अतिरिक्त तो उभयत्र समानता ही है। पाणिनि का सूत्र है— "स्वादुमि णमुल्" (अ० ३।४।२६)।

[विशेष वचन]

१. स्वाद्वर्थे स्वादुरित्यर्थपरोऽयं निर्देशो न शब्दपरः (दु० टी०)।

२. स्वादुशब्दस्य रूपप्रधाननिर्देशः (क० त०)।

[रूपसिद्धि]

१. स्वादुङ्कारं भुङ्क्ते। स्वादु+कृ+खमिञ्+अम्। 'स्वादु' शब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से खमिञ् प्रत्यय, इज्वद्भाव, 'ऋ' को वृद्धि, "ह्रस्वारुषोर्मोऽन्तः" (४।१।२२) से मकारागम तथा विभक्तिकार्य।

२-३. लवणङ्कारं भुङ्क्ते। लवण+कृ+खमिञ्+अम्। सम्पन्नङ्कारं भुङ्क्ते। सम्पन्न+कृ+खमिञ्+अम्। 'लवण-सम्पन्न' शब्दों के उपपद में रहने पर 'कृ' धातु से खमिञ् प्रत्यय तथा विभक्तिकार्य।।१२९३।

## १२९४. अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् [४।६।९]

[सूत्रार्थ]

'अन्यथा-एवम्-कथम्-इत्थम्' शब्दों के उपपद में रहने पर 'कृ' धातु से अनावश्यक प्रयोग होने की स्थिति में खमिञ् प्रत्यय होता है।।१२९४।

[दु० वृ०]

एषूपपदेषु कृञः खमिञ् भवति सिद्धाप्रयोगश्चेत् करोतिर्वर्तते। यस्मादन्यथादयः शब्दाः प्रकारमाचक्षते, उक्तार्थेऽपि प्रयोगाविर्भावाय करोतिः प्रयुज्यते। अन्यथाकारं भुङ्क्ते, एवङ्कारं भुङ्क्ते, कथङ्कारं भुङ्क्ते, इत्थङ्कारं भुङ्क्ते। सिद्धप्रयोगश्चेदिति किम्? अन्यथा कृत्वा शिरो भुङ्क्ते।।१२९४।

[दु० टी०]

अन्यथैवम्०। सिद्धोऽप्रयोगोऽस्येति विग्रहः। यस्मादित्यादिनाऽन्वर्थतां दर्शयति- 'अन्यथा भुङ्क्ते' इति यावानर्थः करोतावप्रयुज्यमाने गम्यते तावानेव 'अन्यथाकारं भुङ्क्ते' इति प्रयुज्यमानेऽपि कथमुक्तार्थस्य प्रयोग इत्याह— उक्तेष्वपीत्यादि।।१२९४।

[वि० प०]

अन्यथैवम्०। सिद्धोऽप्रयोगोऽस्येति विग्रहः। एतस्मिन्नर्थे हेतुमाह— यस्मादिति। अन्यथादयो हि शब्दाः प्रयोगे धात्वर्थस्य प्रकारमाचक्षते, यदा तु तैर्विशिष्यमाणः करोतिरपि तमेव प्रकारमाहेत्यस्य तदा सिद्धाप्रयोगत्वमनर्थकत्वमुच्यते। तथाहि यावानेवार्थोऽन्यथा भुङ्क्ते तावानेवान्यथाकारं भुङ्क्त इति। यद्येवमुक्तार्थस्य कथं प्रयोग इत्याह-उक्तेष्वपीति। अन्यथादिभिः सम्बन्धः। प्रयोगाविर्भावायेति इतिशब्दो वाक्यसमाप्तौ प्रयुज्यते इत्यस्यानन्तरं द्रष्टव्यः। अन्यथा कृत्वा शिरो भुङ्क्ते इति। अन्यथाशब्देन शिरसः प्रकार उच्यते, न तु भुजेरर्थस्येति। नासौ करोतिमन्तरेण गम्यते इति करोतेरर्थवत्त्वम्।।१२९४।

[क० त०]

अन्यथैवम्०। अन्यथैवंकथंस्विति कृते कथमित्थमौ अवगम्येते। केवलथमित्यस्याभावात् थमन्तो लभ्यते यथातथमिति न गृह्यते तत्र सिद्धाप्रयोगत्वं घटते, किन्तु

प्रतिपत्तिगौरवं स्यादिति। ननु अनाम्न्यथैवंकथमित्थंस्विति कृते सिद्धाप्रयोगश्चेदिति किमर्थम् अन्यथादयः प्रकारार्था अनामविषयाश्चेद् भवन्तीत्यर्थः। अनाम्नीति किम्? अन्यथा कृत्वा शिरो भुङ्क्ते। शिरोऽत्र नाम? सत्यम्, सुखार्थमिति। वृत्तावुक्तेष्वपीति यद्यप्युक्तत्वम्, तथापि खमिञ्विधानात् कृञ्प्रयोगः।।१२९४।

[समीक्षा]

'अन्यथाकारं भुङ्क्ते' इत्यादि शब्दों के सिद्ध्यर्थ कातन्त्रकार ने 'खमिञ्' प्रत्यय तथा पाणिनि ने 'णमुल्' प्रत्यय किया है। यहाँ अनुबन्धभेद के अतिरिक्त तो उभयत्र समानता ही है। पाणिनि का सूत्र है— ''अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्'' (अ० ३।४।२७)।

[विशेष वचन]

१. इतिशब्दो वाक्यसमाप्तौ प्रयुज्यते (वि०प०)।

२. अनाम्नीति किम्?............सत्यं सुखार्थम् (क०त०)।

[रूपसिद्धि]

१. **अन्यथाकारं भुङ्क्ते**। अन्यथा+कृ+खमिञ्। 'अन्यथा' शब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७।) धातु से प्रकृत सूत्र द्वारा 'खमिञ्' प्रत्यय, ऋकार को वृद्धि तथा विभक्तिकार्य।

२.४. **एवङ्कारं भुङ्क्ते**। एवम्+कृ+खमिञ्+सि। **कथङ्कारं भुङ्क्ते**। कथम्+कृ+खमिञ्+सि। **इत्थङ्कारं भुङ्क्ते**। इत्थम्+कृ+खमिञ्+सि। 'एवम्-कथम्-इत्थम्' शब्दों के उपपद में रहने पर 'कृ' धातु से 'खमिञ् ' प्रत्यय, वृद्धि तथा विभक्तिकार्य।।१२९४।

## १२९५. यथातथयोरसूयाप्रतिवचने [४।६।१०]

[सूत्रार्थ]

असूयाप्रतिवचन अर्थ के गम्यमान होने एवं 'यथा-तथा' शब्दों के उपपद में रहने पर अनावश्यक प्रयोग होने की स्थिति में 'कृ' धातु से 'खमिञ्' प्रत्यय होता है।।१२९५।

[दु०वृ०]

ओस्येत्त्वं सूत्रत्वात्। असूया अक्षमा, तदर्थं प्रतिवचनम्। यथातथयोरुपपदयोः कृञः खमिञ् भवति असूयाप्रतिवचने गम्यमाने सिद्धाप्रयोगश्चेत् करोतिर्भवति। यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किं तवानेन? असूयाप्रतिवचन इति किम्? यथा कृत्वा अहं भोक्ष्ये तथा त्वं द्रक्ष्यसि। सिद्धाप्रयोग इति किम्? यथा कृत्वा शिरो भोक्ष्ये किं तवानेन?।।१२९५।

[दु०टी०]

यथा०। श्रद्धाया आकारस्यैत्वमुक्तं कथं यथातथयोरित्याह— ओसीत्यादीति। एष बालावबोधार्थो निर्देशः। असावसूयन् पृच्छति प्रतिवचनमपि तस्यासूयार्थमेव ददाति। असूयाभवं वा प्रतिवचनम् असूयाप्रतिवचनम्।।१२९५।

[वि०प०]

यथा०। तदर्थमिति। स एवार्थो यस्येति विग्रहः। कश्चेदमसूयन् वक्ति— कथं भवान् भोक्ष्यते इति, इतरोऽप्यसूयन्नेव प्रतिवचनं ददाति यथाकारमित्यादि॥१२९५।

[क०त०]

यथा०। यद्यपि गुणे दोषाविष्करणम् असूया, तथापि साऽत्र न गृह्यते, अनभिधानात्। किन्तु प्रतिपाद्यप्रतिपादकविशिष्टतया अक्षमा आश्रीयते प्रष्टुरसूयापूर्वकमेव पृच्छा अन्यथा प्रतिवचनमपि असूयापूर्वकं न स्यात्। यदि प्रष्टा असूयन् पृच्छति तदैव प्रतिवक्ताप्यसूयतीति। एतेनासूयया प्रतिवचनमिति तृतीयासमासोऽपि भवति।

[पाठान्तरम्— टीकायामसूयार्थमेवेति। असूयाबोधकमित्यर्थः। असूयाभवं वेति। प्रष्टा असूयापूर्वकं पृच्छति तज्जन्यं प्रतिवचनमित्यर्थः। तदा पञ्चमीसमासः। तदा प्रतिवचनमपि असूयापूर्वकम् अर्थात् प्रतीयते]॥१२९५।

[समीक्षा]

'यथाकारम्, तथाकारम्' शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'खमिञ्' प्रत्यय तथा पाणिनि ने 'णमुल्' प्रत्यय किया है— "यथातथयोरसूयाप्रतिवचने" (अ० ३।४।२८)। यहाँ अनुबन्धभेद को छोड़कर अन्य तो समानता ही है।

[विशिष्ट वचन]

१. असूया अक्षमा, तदर्थं प्रतिवचनम् (दु० वृ०)।

२. एष बालावबोधार्थो निर्देशः (दु०टी०)।

३. असूयाभवं वा प्रतिवचनम् असूयाप्रतिवचनम् (दु०टी०)।

[रूपसिद्धि]

१.२ **यथाकारम्।** यथा+कृ+खमिञ्+सि। **तथाकारम्।** तथा+कृ+खमिञ्+सि। 'यथा-तथा' शब्दों के उपपद में रहने पर 'कृ' धातु से 'खमिञ्' प्रत्यय, 'ख्-इ-ञ्' अनुबन्धों का प्रयोगाभाव, ऋकार को वृद्धि तथा विभक्तिकार्य॥१२९५।

## १२९६. दृशो णम् साकल्ये [४।६।११]

[सूत्रार्थ]

साकल्यविशिष्ट कर्म के उपपद में रहने पर 'दृशिर् प्रेक्षणे' (१।२८९) धातु से 'णम्' प्रत्यय होता है॥१२९६।

[दु०वृ०]

साकल्यविशिष्टे कर्मण्युपपदे दृशो णम् भवति। कन्यादर्शं वरयति। यां यां कन्यां पश्यति तां तां सर्वां वरयतीत्यर्थः। विदेर्वक्तव्यम्— ब्राह्मणवेदं भोजयति। यं यं ब्राह्मणं जानाति लभते विचारयति वा तं तं सर्वं भोजयतीत्यर्थः। साकल्य इति किम्? कञ्चिद् ब्राह्मणं दृष्ट्वा भोजयति॥१२९६।

[वि०प०]

दृशो०। विदेरिति 'विद सत्तायाम्' (३।१०९) इत्यस्याकर्मकत्वान्न ग्रहणम्, अत: 'विद ज्ञाने' (२।२७) इत्यादयस्त्रयो[1] गृह्यन्ते। अर्थं कथयन्नाह— यं तमित्यादि। वक्तव्यं व्याख्येयम्। इदमभिधानात् सिद्धमिति॥१२९६।

[क०त०]

दृशो णम्०। ननु साकल्य इति सप्तमी न तु विशेषणे तृतीया, तत् कथं साकल्यविशिष्ट इत्युक्तम्? सत्यम्। साकल्यविशेषणपरिच्छिन्नत्वाद् विशिष्ट इत्युक्तम्। ननु कथं 'कन्यादर्शं वरयति' इत्यत्राभीक्ष्ण्यमस्तीति द्विर्वचनं स्यात्, नैवम्, कन्यापदेनैवावगतत्वात्। तथाहि कन्यापदेनैव यावत् कन्यैवोच्यते साकल्यलक्षण-प्रत्ययो गम्यते॥१२९६।

[समीक्षा]

'कन्यादर्शम्' शब्दरूप को सिद्ध करने के लिए जो 'खमिञ्-णमुल्' प्रत्यय किए गए हैं, उनमें अनुबन्धभेद के अतिरिक्त समानता है, परन्तु कातन्त्रीय सूत्र में केवल 'दृश' धातु पठित है, जबकि 'विद्' धातु से 'णम्' प्रत्यय का निर्देश वृत्तिकार दुर्गसिंह ने किया है। पाणिनि ने 'विद्' धातु का सूत्र में ही पाठ करके यद्यपि उत्कर्ष सूचित किया है, तथापि कातन्त्र में संक्षेप अभीष्ट होने के कारण उभयत्र प्राय: समानता ही कही जा सकती है। पाणिनि का सूत्र है— "कर्मणि दृशिविदो: साकल्ये" (अ० ३।४।२९)।

[विशिष्ट वचन]

१. इदमभिधानात् सिद्धम् (वि० प०)।

[रूपसिद्धि]

१. **कन्यादर्शं वरयति**। कन्या+दृश्+खमिञ्+अम्। यां यां कन्यां पश्यति तां तां सर्वां वरयति। 'कन्या' के उपपद में रहने पर 'दृशिर् प्रेक्षणे' (१।२८९) धातु से प्रकृत सूत्र द्वारा 'खमिञ्' प्रत्यय, ऋकार को गुण तथा विभक्तिकार्य॥१२९६।

# १२९७. यावति बिन्दजीवो: [४।६।१२]

[सूत्रार्थ]

'यावन्त्' शब्द के उपपद में रहने पर 'विन्द्-जीव्' (५।९;१।१९२) धातुओं से 'णम्' प्रत्यय होता है॥१२९७।

[दु०वृ०]

यावदित्यनिर्दिष्टार्थवाची। यावदित्युपपदे विन्दतेर्जीवतेश्च णम् भवति। यावद्वेदं भुङ्क्ते। यावद् यावन्तं वा लभते तावत् तावन्तं भुङ्क्ते इत्यर्थ:। यावज्जीवमधीते। यावज्जीवति तावदधीते इत्यर्थ:॥१२९७।

१. विद विचारे (६।२४)। विद वेदनाख्याननिवासेषु (९।१२८)।

[वि०प०]

यावति०। विन्देति। 'विद्लृ लाभे' (५।९) इत्यस्यान्विकरणे मुचादित्वान्नकारागमे सति तिब्लोपं कृत्वा निर्देशः। अव्ययावपि यावत्तावच्छब्दौ स्त इत्याह-यावद् यावन्तं वेति॥१२९७।

[क०त०]

यावति०। यावतीत्यविशेषनिर्देशादव्ययानव्यययोर्ग्रहणम्॥१२९७।

[समीक्षा]

'यावद्वेदम्, यावज्जीवम्' शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'णम्' प्रत्यय तथा पाणिनि ने 'णमुल्' प्रत्यय किया है— "यावति विन्दजीवोः" (अ० ३।४।३०)। इस प्रकार पाणिनीय 'उ-ल्' अनुबन्धों के अतिरिक्त तो उभयत्र समानता ही है।

[रूपसिद्धि]

१. **यावद्वेदं** भुङ्क्ते। यावत्+विद्+णम्+अम्। यावद् यावन्तं वा लभते तावत् तावन्तं वा भुङ्क्ते। 'यावत्' शब्द के उपपद में रहने पर 'विद्लृ लाभे' (५।९) धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय, 'ण्' अनुबन्ध का प्रयोगाभाव, धातुगत उपधा को गुण तथा विभक्तिकार्य।

२. **यावज्जीवमधीते**। यावत्+जीव्+णम्+सि। यावज्जीवति तावद् अधीते। 'यावत्' शब्द के उपपद में रहने पर 'जीव प्राणधारणे' (१।१९२) धातु से 'णम्' प्रत्यय तथा विभक्तिकार्य॥१२९७।

## १२९८. चर्मोदरयोः पूरेः [४।६।१३]

[सूत्रार्थ]

कर्मकारकान्त 'चर्म-उदर' शब्दों के उपपद में रहने पर 'पूरि' धातु से 'णम्' प्रत्यय होता है॥१२९८।

[दु०वृ०]

पूरिरिनन्तः सकर्मकः। चर्मोदरयोः कर्मणोरुपपदयोः पूरयतेर्णम् भवति। चर्मपूरं ददाति, उदरपूरं भुङ्क्ते॥१२९८।

[दु०टी०]

चर्मो०। पूरिरिति इनन्तस्येदं ग्रहणम्, कथमनिनन्तस्याकर्मकत्वादित्याह— पूरयतेरित्यादि॥१२९८।

[क०त०]

चर्म०। भुक्त्वा उदरं पूरयति तथापि परकालविवक्षा भुजेर्लौकिकीति कश्चित्। वस्तुतस्तु उदरैकदेशपूरणानन्तरमपि भोजनं प्रवर्तते, तदपेक्षया पूर्वकालता॥१२९८।

[समीक्षा]

'चर्मपूरम्, उदरपूरम्' शब्दरूपों के सिद्ध्यर्थ पाणिनि ने णमुल् प्रत्यय किया है— "चर्मोदरयोः पूरेः" (अ० ३।४।३१)। इस प्रकार पाणिनीय 'उ-ल्' अनुबन्धों के अतिरिक्त तो उभयत्र समानता ही है।

[विशिष्ट वचन]

१. वस्तुतस्तु उदरैकदेशपूरणानन्तरमपि भोजनं प्रवर्तते, तदपेक्षया पूर्वकालता (क०त०)।

[रूपसिद्धि]

१. **चर्मपूरं ददाति।** चर्म+पृ+इन्+णम्+अम्। 'चर्म' शब्द के उपपद में रहने पर 'पूरि' धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय, इकारलोप तथा विभक्तिकार्य।

२. **उदरपूरं भुङ्क्ते।** उदर+पृ+इन्+णम्+अम्। 'उदर' शब्द के उपपद में रहने पर इन्प्रत्ययान्त 'पृ' धातु से 'णम्' प्रत्यय आदि कार्य पूर्ववत्॥१२९८।

## १२९९. वर्षप्रमाण ऊलोपश्च वा [४।६।१४]

[सूत्रार्थ]

वृष्टिविषयक परिमाण अर्थ के गम्यमान होने पर तथा कर्म के उपपद में रहने पर 'पूरि' धातु से 'णम्' प्रत्यय एवं ऊकार-लोप होता है॥१२९९।

[दु०वृ०]

कर्मण्युपपदे वर्षप्रमाणे गम्यमाने पूरयतेर्णम् भवति पूरयतेरूलोपश्च वा भवति। गोष्पदपूरं वृष्टो देवः, गोष्पदप्रं वृष्टो देवः॥१२९९।

[दु०टी०]

वर्ष०। सूत्रे एकारस्याय् न क्रियते मन्दधियां सुखार्थम्। पूरयतेः प्रकृतत्वात् पूरयतेरेव णम्प्रत्ययान्तस्य ऊलोपो विज्ञायते न तूपपदस्येत्याह— पूरयतेरूलोपश्चेति॥१२९९।

[क०त०]

वर्ष०। वृष्टिर्वर्षं न तु वत्सरस्तदर्थस्याघटनादिति कश्चित्। वस्तुतस्तु तदा निःसन्देहार्थं वत्सरप्रमाण इति विदध्यात्। वृष्टेः प्रमाणं तु महत्त्वाल्पत्वभेदाद् बोध्यम्। ननु संख्ययापि प्रमीयते इति प्रमाणशब्देन संख्यानमेवोच्यताम्, तदा च तेन सह वत्सरशब्दस्यान्वयोऽस्तु वत्सरस्य प्रमाणे संख्याने गम्यमाने इति, नैवम्, तदापि वत्सरसंख्यान इति कुर्यात्। गोष्पदपूरमिति। गवां पदाङ्कितस्थानं पूरयित्वेत्यर्थः। एतेनाल्पत्वं प्रतिपादितमिति॥१२९९।

[समीक्षा]

'गोष्पदपूरं वृष्टो देवः, गोष्पदप्रं वृष्टो देवः' शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार 'णम्' प्रत्यय तथा पाणिनि 'णमुल्' प्रत्यय करते हैं। पाणिनि का सूत्र है— "वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्" (अ० ३।४।३२)। 'उ-ल' अनुबन्धों के अतिरिक्त उभयत्र समानता ही हैं।

[विशेष वचन]

१. सूत्रे एकारस्याय् न क्रियते मन्दधियां सुखार्थम् (दु० टी०)।

२. निःसन्देहार्थं त्वत्सरप्रमाण इति विदध्यात् (क० त०)।

[रूपसिद्धि]

१. **गोष्पदपूरं वृष्टो देवः**। गोष्पद+पूरि+णम्+सि। 'गोष्पद' शब्द के उपपद में रहने पर 'पूरि' धातु से प्रकृत सूत्र द्वारा 'णम् 'प्रत्यय, 'ण् ' अनुबन्ध का प्रयोगाभाव तथा विभक्तिकार्य।

२. **गोष्पदप्रं वृष्टो देवः**। उक्त प्रक्रिया में ऊकार का लोप होने पर यह पाक्षिक (वैकल्पिक) रूप साधु माना जाता है॥१२९९।

## १३००. चेलार्थे क्नोपेः [४।६।१५]

[सूत्रार्थ]

वस्त्रार्थक शब्द के उपपद में रहने पर 'क्नोपि' धातु से वर्षप्रमाण अर्थ के गम्यमान होने पर 'णम्' प्रत्यय होता है।।१३००।

**[दु०वृ०]**

चेलार्थे कर्मण्युपपदे क्नोपयतेर्णम् भवति वर्षप्रमाणे गम्यमाने। चेलक्नोपं वृष्टो देवः, वस्त्रक्नोपं वृष्टो देवः, वसनक्नोपं वृष्टो देवः॥१३००।

**[वि०प०]**

चेलार्थे०। न हि क्नोपिरूपो धातुरस्ति क्नूयी शब्द इत्यस्य इन्प्रत्यये "अर्त्तिह्री०" (३।६।२२) इत्यादिना पकारागमे यलोपे गुणे च निर्देशः॥१३००।

**[क०त०]**

चेलार्थे०। 'चेलं वसनमंशुकम्' इत्यमरः। चेलक्नोपमिति। यद्यपि 'क्नूयी शब्दे' (१।४११) अकर्मकस्तथापीनन्तत्वात् सकर्मत्वं चेलं शब्दीकृत्य वृष्टः इत्यर्थः॥१३००।

[समीक्षा]

'चेलक्नोपम्, वस्त्रक्नोपम्, वसनक्नोपम्' शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'णम्' प्रत्यय तथा पाणिनि ने 'णमुल्' प्रत्यय किया है— "चेले क्नोपेः" (अ० ३।४।३३)। यहाँ पाणिनीय 'उ-ल्' अनुबन्धों के अतिरिक्त उभयत्र समानता ही है। पाणिनीय सूत्र-पठित 'चेल' शब्द की व्याख्या 'चेलार्थः' की जाती है। अतः कातन्त्रीय 'चेलार्थे' शब्द का पाठ स्पष्टार्थावबोधक कहा जा सकता है।

[विशेष वचन]

१. यद्यपि 'क्नूयी' शब्देअकर्मकस्तथापि इनन्तत्वात् सकर्मत्वम् (क० त०)।

[रूपसिद्धि]

१. **चेलक्नोपं वृष्टो देवः।** चेल+क्नूयी+इन्+णम्+सि। 'चेल ' के उपपद में रहने पर 'क्नोपि' धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय तथा विभक्तिकार्य।

२-३. **वस्त्रक्नोपं वृष्टो देवः।** वस्त्र+क्नूयी+इन्+णम्+सि। **वसनक्नोपं वृष्टो देवः।** वसन+क्नूयी+इन्+णम्+सि। 'वस्त्र' तथा 'वसन' शब्द के उपपद में रहने पर 'क्नोपि' धातु से 'णम्' प्रत्यय आदि कार्य पूर्ववत्।।१३००।

## १३०१. निमूलसमूलयोः कषः [४।६।१६]

[सूत्रार्थ]

'निमूल-समूल' शब्दों के उपपद में रहने पर 'कष हिंसार्थः' धातु से 'णम्' प्रत्यय होता है।।१३०१।

[दु० वृ०]

निमूलसमूलयोः कर्मणोरुपपदयोः कषतेर्णम् भवति। निमूलकाषं कषति, समूलकाषं कषति। निमूलं समूलं कषतीत्यर्थः।।१३०१।

[क० त०]

निमूल०। निश्चितं मूलं निमूलम्। मूलेन सह वर्तमानं समूलम्। तयोः कषणं हिंसा, कषतीत्यनुप्रयोगे वर्तमानादयः प्रतिपाद्यन्ते, नात्र द्वयोर्धात्वोरर्थः प्रतिपाद्यः, किन्त्वेकस्यैव।।१३०१।

[समीक्षा]

'निमूलकाषम्, समूलकाषम्' शब्दों के सिद्ध्यर्थ कातन्त्रकार ने 'णम्' प्रत्यय तथा पाणिनि ने 'णमुल्' प्रत्यय किया है ।पाणिनि का सूत्र है— "निमूलसमूलयोः कषः" (अ० ३।४।३४) । पाणिनीय अनुबन्धयोजना को छोड़कर अन्य प्रकार की तो उभयत्र समानता ही है।

[रूपसिद्धि]

१. **निमूलकाषं कषति।** निमूल+कष्+णम् +सि। निश्चितं मूलं निमूलम्, निमूलं कषति । 'निमूल' शब्द के उपपद में रहने पर 'कष हिंसार्थः' (१।२२४) धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय, इज्वद्भाव, "अस्योपधाया दीर्घो०" (३।६।५) इत्यादि से उपधादीर्घ, लिङ्गसञ्ज्ञा, सि-प्रत्यय, अव्ययसंज्ञा तथा 'सि' प्रत्यय का लुक्।

२. समूलकाषं कषति। समूल+कष्+णम्+सि। मूलेन सह वर्तमानं समूलम्, समूलं कषति। 'समूल' शब्द के उपपद में रहने पर 'कष्' धातु से 'णम्' प्रत्यय आदि कार्य पूर्ववत्॥१३०१।

## १३०२. शुष्कचूर्णरूक्षेषु पिषः [४।६।१७]

[सूत्रार्थ]

'शुष्क, चूर्ण, रूक्ष' शब्दों के उपपद में रहने पर 'पिष्लृ संचूर्णने' (६।१२) धातु से 'णम्' प्रत्यय होता है॥१३०२।

[दु० वृ०]

एषु कर्मसूपपदेषु पिषतेर्णम् भवति। शुष्कपेषं पिनष्टि। एवं चूर्णपेषं पिनष्टि, रूक्षपेषं पिनष्टि। शुष्कं पिनष्टीत्यर्थः॥१३०२।

[समीक्षा]

समीक्षा द्रष्टव्य सूत्र— १३०१। पाणिनि का सूत्र है— "शुष्कचूर्णरूक्षेषु पिषः" (अ० ३।४।३५)।

[रूपसिद्धि]

१. शुष्कपेषं पिनष्टि। शुष्क+पिष्+णम्+अम्। शुष्कं पिनष्टि। 'शुष्क' शब्द के उपपद में रहने पर 'पिष्लृ संचूर्णने' (६।१२) धातु से प्रकृते सूत्र द्वारा' 'णम्' प्रत्यय, उपधागुण तथा विभक्तिकार्य।

२-३. चूर्णपेषं पिनष्टि। चूर्ण+पिष्+णम्+अम्। चूर्णं पिनष्टि। रूक्षपेषं पिनष्टि। रूक्ष+ पिष्+णम्+सि। रूक्षं पिनष्टि। 'चूर्ण-रूक्ष' शब्दों के उपपद में रहने पर 'पिष्लृ' धातु से 'णम्' प्रत्यय आदि कार्य पूर्ववत्॥१३०२।

## १३०३. जीवे ग्रहेः [४।६।१८]

[सूत्रार्थ]

'जीव' शब्द के उपपद में रहने पर 'ग्रह उपादाने' (८।१४) धातु से 'णम्' प्रत्यय होता है॥१३०३।

[दु०वृ०]

जीवे कर्मण्युपपदे ग्रहेर्णम् भवति। जीवग्राहं गृह्णाति। जीवं गृह्णातीत्यर्थः॥१३०३।

[समीक्षा]

'जीवग्राहम्, अकृतकारम्, समूलघातम्' इन तीन शब्दों के सिद्ध्यर्थ कातन्त्रकार ने तीन सूत्र बनाए हैं, जबकि पाणिनि का एतदर्थ एक ही सूत्र है— "समूलाकृतजीवेषु हन्कृञ्ग्रहः". (अ० ३।४।३६)। कातन्त्रकार ने तीन पृथक् सूत्रों की रचना मन्दमति वाले अध्येताओं को सरलता से बोध हो— इस उद्देश्य से की है। अतः उसमें गौरव न मानकर प्रायः समानता ही माननी चाहिए।

[रूपसिद्धि]

१. जीवग्राहं गृह्णाति। जीव+ग्रह+णम्+सि। जीवं गृह्णाति। 'जीव' शब्द के उपपद में रहने पर 'ग्रह्' धातु से णम् प्रत्यय, उपधादीर्घ तथा विभक्तिकार्य।।१३०३।

## १३०४. अकृते कृञः [४।६।१९]

[सूत्रार्थ]

'अकृत' शब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से णम् प्रत्यय होता है।।१३०४।

[दु०वृ०]

अकृते कर्मण्युपपदे कृञो णम् भवति। अकृतकारं करोति। अकृतं करोतीत्यर्थः।।१३०४।

[समीक्षा]

द्रष्टव्य सूत्र १३०३ की समीक्षा।

[रूपसिद्धि]

१. अकृतकारं करोति। अकृत+कृ+णम्+सि। अकृतं करोति। 'अकृत' शब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७।) धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय, ऋकार को वृद्धि-आर् तथा विभक्तिकार्य।।१३०४।

## १३०५. समूले हन्तेः [४।६।२०]

[सूत्रार्थ]

'समूल' शब्द के उपपद में रहने पर 'हन् हिंसागत्योः' (२।४) धातु से 'णम्' प्रत्यय होता है।।१३०५।

[दु०वृ०]

समूले कर्मण्युपपदे हन्तेर्णम् भवति। समूलघातं हन्ति। समूलं हन्तीत्यर्थः।।१३०५।

[समीक्षा]

द्रष्टव्य सूत्र- १३०३ की समीक्षा।

[रूपसिद्धि]

१. समूलघातं हन्ति। समूल+हन्+णम्+अम्। समूलं हन्ति।

'समूल' शब्द के उपपद में रहने पर 'हन् हिंसागत्योः' (२।४) धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय, हकार को घकार, नकार को तकार तथा विभक्तिकार्य।।१३०५।

# १३०६. करणे [४।६।२१]

[सूत्रार्थ]

करणवाचक के उपपद में रहने पर 'हन्' धातु से 'णम्' प्रत्यय होता है॥१३०६।

[दु०वृ०]

करणवाचिन्युपपदे हन्तेर्णम् भवति। पादघातं भूमिं हन्ति। पादेन हन्तीत्यर्थः। मुष्टिघातं चौरं हन्ति। मुष्ट्या हन्तीत्यर्थः। परमपि हिंसार्थाच्चैककर्मकादिति वचनं बाधते करणस्य व्यक्तित्वात्॥१३०६।

[दु०टी०]

करणे। मुष्टिघातमित्यादि। यदि हिंसार्थाच्चैककर्मकादित्यनेन णम् स्यात्, ततश्चानित्यसमासश्च कषादिषु तैरेवानुप्रयोगश्च न स्यात् करणवाच्युपपदं व्यक्त्या प्रतिपत्तव्यम्। एकवचनमतन्त्रं 'पूर्वपरयोः परविधिर्बलवान्' (कलाप० ७०, पृ० २२८) इति पूर्वशब्दस्येष्टवाचित्वाद् इत्यन्ये पूर्वोऽपि भवतीति वर्णयन्ति॥ १३०६।

[वि०प०]

करणे। मुष्टिघातमिति। यदि पुनरिह हिंसार्थाच्चैककर्मकादित्यनेन णम् भवेत् तदा तृतीयादित्वमस्तीति तृतीयादीनां वेत्यनेनोपपदसमासः पाक्षिकः स्यात्, कषादिषु तैरेवानुप्रयोगश्च न स्यात्। करणमिह व्यक्त्या निर्दिश्यते॥१३०६।

[क०त०]

करणे। करण इति न प्रत्ययविशेषणम्, उपपदप्रस्तावात् कृदव्ययो हि भावेऽभिधानादित्यन्यः। वृत्तौ परमपीति हन्धातोर्हिंसा गतिश्चार्थः, तत्र गत्यर्थेऽस्य विषयः हन्-धातुव्यतिरिक्ते हिंसार्थधातौ हिंसार्थाच्चैककर्मकादित्यस्य विषयः, ततश्च हिंसार्थे हन्-धातोः परत्वं युज्यते। यद् वा भिन्नक्रियानुप्रयोगविषये तस्य विषयः कषादित्वाभावात्। पादघातं भूमिं हन्तीत्यत्रास्य विषयः। एकधात्वर्थप्रयोगाद् हिंसार्थत्वाभावाच्च। अतः परत्वं युज्यते इति। करणस्य व्यक्तित्वादिति। ननु सूत्रसामर्थ्यादेवानेन भविष्यति किमर्थं व्यक्तित्वमाश्रीयते? सत्यम्। अयमपि सिद्धान्तविशेषः इति कश्चित्, तन्न। गत्यर्थादौ चरितार्थत्वेन सूत्रसामर्थ्यस्य वक्तुमयोग्यत्वात्। ननु व्यक्तिनिर्देशश्चेद् व्यक्तीनां बहुवचनत्वाद् बहुवचनमेव युज्यते इत्याह-टीकायामेकवचनमतन्त्रमिति॥१३०६।

[समीक्षा]

'पादघातम्, मुष्टिघातम्' इत्यादि शब्दरूपों के साधनार्थ कातन्त्रकार ने 'णम्' प्रत्यय तथा पाणिनि ने 'णमुल्' प्रत्यय किया है। पाणिनि का सूत्र है— "करणे हनः" (अ० ३।४।३७)। इस प्रकार पाणिनीय 'उ-ल्' अनुबन्धों को छोड़कर शेष तो उभयत्र समानता ही है।

[रूपसिद्धि]

१. **पादघातं भूमिं हन्ति।** पाद+हन्+णम्+टा। पादेन हन्ति। 'पाद' के उपपद में रहने पर 'हन् हिंसागत्योः' (२।४) धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय, हकार को घकार, नकार को तकार तथा विभक्तिकार्य।

२. **मुष्टिघातं चौरं हन्ति।** मुष्टि+हन्+णम्+टा। मुष्ट्या हन्ति। 'मुष्टि' पूर्वक 'हन्' धातु से णम् प्रत्यय आदि कार्य पूर्ववत्॥१३०६।

## १३०७. हस्तार्थे ग्रहवर्तिवृताम् [४।६।२२]

[सूत्रार्थ]

करण कारक में हस्त के उपपद में रहने पर 'ग्रह्-वर्ति-वृत्' धातुओं से 'णम्' प्रत्यय होता है॥१३०७।

[दु० वृ०]

हस्तार्थे करणवाचिन्युपपदे एषां णम् भवति। हस्तग्राहं गृह्णाति। हस्तेन गृह्णातीत्यर्थः। एवं करग्राहं गृह्णाति। हस्तेन वर्तयति हस्तवर्तं वर्तयति। हस्तेन वर्तते हस्तवर्तं वर्तते॥१३०७।

[वि० प०]

हस्तार्थे। वर्तीति। वृतेरेवायमिनन्तो निर्देशः॥१३०७।

[समीक्षा]

'हस्तग्राहम्, हस्तवर्तम्' शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार 'णम्' प्रत्यय तथा पाणिनि 'णमुल्' प्रत्यय करते हैं। पाणिनि का सूत्र है— "हस्ते वर्तिग्रहोः" (अ० ३।४।३९)। पाणिनि ने 'हस्तवर्तम्' शब्दरूप की सिद्धि केवल णिजन्त वृत् धातु से की है, जबकि कातन्त्रकार 'वृत् -वर्ति' दोनों ही धातुओं से करते हैं। इस प्रकार कातन्त्र में उत्कर्ष सिद्ध होता है।

[रूपसिद्धि]

१. **हस्तग्राहं गृह्णाति।** हस्त+ग्रह+णम्+सि। हस्तेन गृह्णाति। 'हस्त' पूर्वक 'ग्रह उपादाने' (८।१४) धातु से णम् प्रत्यय, उपधादीर्घ तथा विभक्तिकार्य।

२-३. **हस्तवर्तं वर्तयति।** हस्त+वर्ति+णम्+सि। हस्तेन वर्तयति। **हस्तवर्तं वर्तते।** हस्तपूर्वक 'वर्ति-वृत्' धातुओं से णम् प्रत्यय आदि कार्य पूर्ववत्॥१३०७।

## १३०८. स्वार्थे पुषः [४।६।२३]

[सूत्रार्थ]

स्वार्थवाचक करण के उपपद में रहने पर 'पुष' धातु से णम् प्रत्यय होता है॥१३०८।

[दु०वृ०]

स्वान्यात्मीयज्ञातिवित्तानि। स्वार्थाभिधेयेषु करणेषूपपदेषु पुषो णम् भवति। स्वेन पोषति, पुष्यति, पुष्णाति वा। स्वपोषं पोषति, एवम् आत्मपोषम्, आत्मीयपोषम्, गोपोषम्, महिषीपोषम्, पितृपोषम्, मातृपोषम्, वित्तपोषम्, रैपोषम्।।१३०८।

[क०त०]

स्वार्थे०। स्वार्थस्य सामान्यतया ग्रहणमविशेषाज्जीवात्मा परमात्मा च तयोर्भेदात् स्वेनेत्यत्र करणत्वम् अर्थापत्त्या आत्मानं पोषयतीति कर्मत्वम्। आत्मीयस्योदाहरणं दर्शयति— गोपोषम्, महिषीपोषमिति।।१३०८।

[समीक्षा]

'स्वपोषम्, धनपोषम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने णम् प्रत्यय तथा पाणिनि ने णमुल् प्रत्यय किया है। पाणिनि का सूत्र है— "स्वे पुषः" (अ० ३।४।४०)। अतः प्रायः उभयत्र समानता ही है।

[रूपसिद्धि]

१. स्वपोषम्। स्व+पुष्+णम्+अम्। स्वेन पोषति, पुष्यति, पुष्णाति वा। 'स्व' शब्द के उपपद में रहने पर 'पुष्' धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय, लघूपधगुण तथा विभक्तिकार्य।

२.९. आत्मपोषम्। आत्म+पुष्+णम्+अम्। आत्मीयपोषम्। आत्मीय+पुष्+णम्+अम्। गोपोषम्। गो+पुष्+णम्+अम्। महिषीपोषम्। महिषी+पुष्+णम्+अम्। पितृपोषम्। पितृ+पुष्+णम्+अम्। मातृपोषम्। मातृ+पुष्+णम्+अम्। वित्तपोषम्। वित्त+पुष्+णम्+अम्। रैपोषम्। रै+पुष्+णम्+अम्। 'आत्म' आदि शब्दों के उपपद में रहने पर 'पुष्' धातु से णम् प्रत्यय आदि कार्य पूर्ववत्।।१३०८।

## १३०९. स्नेहने पिषः [४।६।२४]

[सूत्रार्थ]

स्नेहनवाचक करण के उपपद में रहने पर 'पिष्' धातु से 'णम्' प्रत्यय होता है।।१३०९।

[दु०वृ०]

स्निह्यते सिच्यतेऽनेनेति स्नेहनमुदकादि। स्नेहनवाचिनि करणे उपपदे पिषो णम् भवति। उदपेषं पिनष्टि। उदकेन पिनष्टि। एवं तैलपेषम्, घृतपेषम्। उदकस्योदः पेषवासवाहनधिषु निपात्यते।।१३०९।

[वि०प०]

स्नेहने०। कथम् उदपेषम् उदकपेषमिति स्यादित्याह— उदकस्योद इत्यादि। एवम् उदवासः, उदवाहनः, उदधिरिति। तत् पुनर्लोकोपचाराद् वेदितव्यम्।।१३०९।

[समीक्षा]

'उदपेषम्, तैलपेषम्' इत्यादि शब्दरूपों के साधनार्थ कातन्त्रकार ने 'णम्' प्रत्यय तथा पाणिनि ने 'णमुल्' प्रत्यय किया है। पाणिनि का सूत्र है— "स्नेहने पिषः" (अ० ३।४।३८)। अतः प्रायः उभयत्र समानता ही है।

[रूपसिद्धि]

१. उदपेषं पिनष्टि। उदक-उद+पिष्+णम्+अम्। उदकेन पिनष्टि। 'उदक' शब्द के उपपद में रहने पर 'पिष्' धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय, लघूपधगुण तथा विभक्तिकार्य।

२-३. तैलपेषम्। तैल+पिष्+णम्+अम्। घृतपेषम्। घृत+पिष्+णम्+सि। 'तैल-घृत' शब्दों के उपपद में रहने पर 'पिष्' धातु से 'णम्' प्रत्यय आदि कार्य पूर्ववत्॥१३०९।

## १३१०. बन्धोऽधिकरणे च [४।६।२५]

[सूत्रार्थ]

अधिकरण के उपपद में रहने पर 'बन्ध बन्धने' (८।३२) धातु से 'णम्' प्रत्यय होता है॥१३१०।

[दु०वृ०]

अधिकरणे उपपदे बध्नातेर्णम् भवति। चक्रे बन्धः चक्रबन्धं बन्धः, गुप्तिबन्धं बन्धः, हस्तबन्धं बन्धः॥१३१०।

[समीक्षा]

'चक्रबन्धम्, मुष्टिबन्धम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने णम् तथा पाणिनि ने 'णमुल्' प्रत्यय किया है। पाणिनि का सूत्र है— "अधिकरणे बन्धः" (अ० ३।४।४१)। अतः प्रायः उभयत्र समानता ही है।

[रूपसिद्धि]

१. चक्रबन्धं बन्धः। चक्र+बन्ध्+णम्+सि। 'चक्र' शब्द के उपपद में रहने पर 'बन्ध बन्धने' (८।३२) धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय तथा विभक्तिकार्य।

२-३. गुप्तिबन्धम्। गुप्ति+बन्ध्+णम्+सि। हस्तबन्धम्। हस्त+बन्ध+णम्+सि। 'गुप्ति -हस्त' शब्दों के उपपद में रहने पर 'बन्ध' धातु से णम् प्रत्यय आदि कार्य पूर्ववत्॥१३१०।

## १३११. सञ्ज्ञायां च [४।६।२६]

[सूत्रार्थ]

अधिकरण तथा अनधिकरण कारक के उपपद में रहने पर 'बन्ध्' धातु से 'णम्' प्रत्यय होता है॥ १३११।

[दु०वृ०]

अधिकरणेऽनधिकरणे च नाम्न्युपपदे बध्नातेर्णम् भवति संज्ञायां गम्यमानायाम्। क्रौञ्चे क्रौञ्चेन वा बन्धः क्रौञ्चबन्धं बन्धः। एवं मयूरिकाबन्धं बन्धः। अट्टालिकाबन्धं बन्धः। बन्धविशेषाणामियं सञ्ज्ञा॥१३११।

[क०त०]

सं०। अधिकृतेनाधिकरणेन चकारः सम्बध्यते। ततोऽनधिकरणे चेति वृत्तौ युक्तम्। अन्यथा सूत्रमपि व्यर्थं स्यात्, सामान्यत्वाद् वा तेनैव सिद्धत्वात्। बन्धविशेषाणामिति। भारतादिप्रणीतशास्त्रविहितानामिति बोध्यम्॥१३११।

[समीक्षा]

'क्रौञ्चबन्धम्, मयूरिकाबन्धम्' इन्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार 'णम्' प्रत्यय और पाणिनि 'णमुल्' प्रत्यय करते हैं। पाणिनि का सूत्र है— "सञ्ज्ञायाम्" (अ० ३।४।४२)। अतः उभयत्र समानता है।

[रूपसिद्धि]

१. क्रौञ्चबन्धं बन्धः। क्रौञ्च+बन्ध्+णम्+सि। क्रौञ्चे क्रौञ्चेन वा बन्धः। 'क्रौञ्च' शब्द के उपपद में रहने पर 'बन्ध्' धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय तथा विभक्तिकार्य।

२-३. मयूरिकाबन्धम्। मयूरिका+बन्ध्+णम्+सि। अट्टालिकाबन्धम्। अट्टालिका+बन्ध्+णम्+सि। 'मयूरिका-अट्टालिका' शब्दों के उपपद में रहने पर 'बन्ध' धातु से 'णम्' प्रत्यय आदि कार्य पूर्ववत्॥१३११।

## १३१२. कर्त्रोर्जीवपुरुषयोर्नशिवहिभ्याम् [४।६।२७]

[सूत्रार्थ]

कर्ता कारक वाले 'जीव-पुरुष' शब्दों के उपपद में रहने पर नश् और वह् धातु से 'णम्' प्रत्यय होता है॥१३१२।

[दु०वृ०]

जीवपुरुषयोः कर्त्रोरुपपदयोर्नशिवहिभ्यां णम् भवति यथासङ्ख्यम्। जीवनाशं नष्टः। जीवो नष्ट इत्यर्थः। पुरुषवाहं वहति। पुरुषो वहतीत्यर्थः। कर्त्रोरिति किम्? जीवेन नष्टः, पुरुषेणोढः॥१३१२।

[समीक्षा]

'जीवनाशम्, पुरुषवाहम्' शब्दों के साधनार्थ कातन्त्रकार वे णम् प्रत्यय तथा पाणिनि ने णमुल् प्रत्यय किया है। पाणिनि का सूत्र है— "कर्त्रोर्जीवपुरुषयोर्नशिवहोः" (अ० ३।४।४३)। अतः उभयत्र प्रायः समानता ही है।

[रूपसिद्धि]

१. जीवनाशं नष्टः। जीव+नश्+णम्+सि। जीवो नष्टः। 'जीव' शब्द के उपपद में रहने पर 'णश अदर्शने' (३।४१) धातु से प्रकृत सूत्र द्वारा णम् प्रत्यय, उपधादीर्घ तथा विभक्तिकार्य।

२. पुरुषवाहं वहति। पुरुष+वह+णम्+सि। पुरुषो वहति। 'पुरुष' शब्द के उपपद में रहने पर 'वह प्रापणे' (१।६१०) धातु से प्रकृत सूत्र द्वारा णम् प्रत्यय, उपधादीर्घ तथा विभक्तिकार्य।।१३१२।

## १३१३. ऊर्ध्वे शुषिपूरोः [४।६।२८]

[सूत्रार्थ]

कर्तृवाची 'ऊर्ध्व' शब्द के उपपद में रहने पर 'शुष्-पूर्' धातुओं से 'णम्' प्रत्यय होता है।।१३१३।

[दु०वृ०]

ऊर्ध्वे कर्तृवाचिन्युपपदे शुषेः पूरेश्च णम् भवति। ऊर्ध्वशोषं शुष्कः। ऊर्ध्वपूरं पूर्णः। ऊर्ध्वः सन् शुष्क इत्यर्थः। अन्यथाकारं भुङ्क्ते इत्यादिषु किमर्थं णमो विधानम्? व्याप्यत्वाद् द्वितीया भविष्यति। यथा ओदनपाकं शेते। ग्रहेर्न घञ् इति कर्तव्यमेव। गोष्पदं प्रातीति गोष्पदप्रमिति क्रियाविशेषणत्वात्, तदयुक्तम्, तरां तमां चेष्यते अव्ययत्वात्। पूर्वकालोऽपि यथाभिधानं प्रतिपाद्य एव। तथा च विकल्पाधिकारे क्त्वापि दृश्यते। अन्यथाकारं भुज्यते ओदनः इति द्वितीया न स्याद् उक्तार्थत्वात्। यथा ओदनः पक्त्वा भुज्यते इति कृदव्ययो हि भावेऽभिधानात्। प्राणिशक्त्यभिधाने गुणशक्तिरभिहितवत् प्रकाशते।।१३१३।

[वि०प०]

ऊर्ध्वे०। अन्यथाकारमित्यादि। अन्यथाकरणम् **अन्यथाकारम्** इति भावे घञन्ताद् द्वितीयया सिध्यतीति भावः। ग्रहेर्न घञिति। "स्वरवृदृगमिग्रहामल्" (४।५।४१) इत्यलेवास्ति। ततो जीवे ग्रहः, हस्तार्थे ग्रहः इति च विधीयतामिति भावः। गोष्पदं प्रातीति। "आतोऽनुपसर्गात् कः" (४।३।४)। एतेन "वर्षप्रमाणे ऊलोपश्च वा" (४।६।१४) इत्यपि न वक्तव्यमित्युक्तम्, 'प्रा पूरणे' (२।५) इत्यनेनैव सिद्धत्वात्। पक्षे पूरयतिनालन्तेन सिद्धमिति। परिहारमाह- तदयुक्तमिति। क्त्वा मकारान्तश्च 'कृत् स्वभावादसंख्यम् इत्यव्ययमेवेत्युक्तम् "आख्यातकिमेकारान्ताव्ययेभ्यः क्रियागुणे" इत्यादिना अन्यथाकारंतराम्, अन्यथाकारंतमाम्' इति यथा स्यादिति भावः। पूर्वकालोऽपीति। घञा तु न पूर्वकालः प्रतिपादयितुं शक्यते, घञः पूर्वकालेऽनभिधानात्। यथाभिधानमिति। 'यावज्जीवमधीते' इत्यादौ क्वचित् पूर्वकालस्याप्रतीतेरिति भावः।. पूर्वकालसद्भावमेव ज्ञापयति- तथा चेति। तद् यथा 'अन्यथाकृत्वा भुङ्क्ते' इत्यादि।

अन्ये तु तथेति पाठं मन्यमानाः प्रयोजनान्तरमाहुः, तदयुक्तम्। **परपक्षेऽपि** पूर्वकाले क्त्वा केन निषिध्यते। तृतीयं प्रयोजनमाह— अन्यथेति। ननु कथमुक्तार्थता? क्रियाविशेषणं हि **परो** मन्यते, यदाहुश्चान्द्राः— घञन्तेन क्रियाविशेषणेन सिद्धत्वात्, न च क्रियाविशेषणस्य कर्मत्वमुक्तार्थं संभवति— स्तोकमोदनः पच्यते इति दर्शनात्? सत्यम्। यदा तु भुजिक्रियाव्याप्यत्वाद् द्वितीया भविष्यतीति पूर्वपक्षः, तदेदं दूषणम्। तदिदमुक्तं व्याप्यत्वाद् द्वितीया भविष्यतीति। क्रियाविशेषणे तु पूर्वपक्षे दूषणद्वयमुक्तमेव द्रष्टव्यमिति प्रकृतानुरूपमेव दृष्टान्तमाह— यथा ओदन इति। ननु कथमुक्तार्थता? तथाहि अत्र द्वे क्रिये भुजेः पचेश्च सन्निहितत्वात्। तत्र भुज्यते इति कर्मण्यात्मनेपदम् भुजिक्रियानिबन्धनमोदनस्य कर्मत्वमुक्तम्, पचिक्रियानिबन्धनं पुनरनुक्तकर्मत्वमस्त्येव, नहि पचेः कर्मणि प्रत्ययः, अपि तु भावे। तदेवाह— कृदव्ययो हि भावेऽभिधानादिति। न च वक्तव्यम् अविवक्षितकर्मत्वाद् भावे प्रत्ययः इति कथन्तद्योगे कर्मत्वमिति वाच्यम्, भावेऽपि धात्वर्थकृता व्याप्तिरस्तीति कर्मविभक्तिर्युज्यते। यथा कटं कृत्वा घटं कर्तुं गतः इति? सत्यम्, इह क्रियाद्वये गुणप्रधानभावोऽस्तीति, यत् परार्थं स गुणः, अपरार्थं च प्रधानम्।

एवं च स्थिते प्रधानक्रियानिमित्तमपि कर्माभिधाने गुणक्रियानिमित्तमपि कर्म अभिहितमिव भासते, गुणानां प्रधानानुयायित्वादित्याह— प्रधानेत्यादि। प्रधान-क्रियानिमित्ता शक्तिः कर्मलक्षणा प्रधानशक्तिः शाकपार्थिवादिदर्शनान्मध्यपदलोपी समासः। एवं गुणशक्तिरिति। अथवा क्रियायाः प्रधानगुणत्वात् तन्निबन्धनायाः शक्तेरपि तथेति। तदा प्रधाना चासौ शक्तिश्चेति, गुणा चासौ शक्तिश्चेति विग्रहार्थो वेदितव्यः। एतेनेदमपि चोद्यमपास्तम्। ओदनं पक्त्वा भुङ्क्ते देवदत्त इति। भुजिक्रियानिमित्तं नाम देवदत्तस्य कर्तृत्वं वर्तमानयाऽभिहितं पचिक्रियानिमित्तत्वं तु न केनाप्युक्तमिति कर्तरि तृतीया प्राप्नोतीति देश्यमपास्तम्, तेन सहास्य समानरीतित्वात्॥१३१३।

[क०त०]

ऊर्ध्वे०। वृत्तौ णमो विधानमिति। ननु कथमिदमुच्यते, अन्यथाकारमित्यादौ हि खमिञो विधानमिति? सत्यम्, अनेन वृत्तिकृता णम्खमिञोरेकविषयत्वं प्रति-पादितमिति णम् खण्डने तस्यापि खण्डनमिति बोध्यम्। यद् वा उपलक्षणमेतदिति। यद् वा किमर्थम् अन्यथैवमित्यादिसूत्रमित्यर्थः। णमो विधानं च किमर्थमिति योज्यं व्याप्यत्वादिति। एतेन करणपूर्वकं भोजनमिह भुजेरर्थः। अतोऽन्यथाकारमिति। न गम्यमानक्रियाकर्मद्वितीया न स्याद् उक्तार्थत्वादिति वक्ष्यमाणत्वात्। यथेति अन्तर्भूतप्रापणपूर्वकं शयनं शीङ्धातोरर्थः।

तरां तमामिति। अव्ययत्वादक्प्रत्ययोऽपि प्रयोजनमिति उक्तार्थत्वादिति। ननु यद्येते दोषाः सन्ति तदा कथमन्यथैवमित्यादि वचनम् उक्तार्थानामप्रयोग इत्यस्य

ज्ञापकम्? सत्यम्, अग्रिमदूषणद्वयं यथाभिधानमवलम्ब्य दूरीकर्तव्यम् अन्यस्मिन् दूषणे वस्तुगत्या ज्ञापकमाह— तदिति। तत्रापि ज्ञापकविषयप्रदर्शनेनेदं ज्ञापकमपि दर्शितम्, प्रायमिति नोक्तं यथौदनमिति। उक्तार्थत्वमाश्रित्य दृष्टान्तितमिति। अन्यथात्र धातुद्वयावलम्बने दृष्टान्तः कथं सङ्गच्छते। प्रधानेत्यादि। एवं न्यायश्च एककारकविषय एव बोध्यः। अन्यथा ग्रामाय दत्त्वा तीर्थं गतः, मूलकेनोपदंशं भुङ्क्ते इत्याद्यसङ्गतिः स्यात् प्रधानगतादिक्रियासम्बन्धेनापादानादेरेव विषयत्वात् "तेषां परमुभयप्राप्तौ" (२।४।१६) इत्यस्य चैकक्रियासम्बन्धे उभयप्राप्तौ चरितार्थत्वात् प्रकाशते इति दैवादिको यन्विषयः उभयगणपाठादन्विकरणोऽपीति कश्चित्। पञ्च्यां जीवे ग्रह इत्यादि। न चोभयत्र ग्रहेरुपादानं व्यर्थम् उपपदमादाय भिन्नविषयत्वात् परपक्षेऽपीत्यन्यमतेऽपीत्यर्थः।।१३१३।

[समीक्षा]

'ऊर्ध्वशोषम्, ऊर्ध्वपूरम्' शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार ने 'णम्' प्रत्यय तथा पाणिनि ने णमुल् प्रत्यय किया है। पाणिनि का सूत्र है— "ऊद्ध्र्वे शुषिपूरोः" (अ० ३।४।४४)। अतः अनुबन्धयोजना को छोड़कर अन्य प्रकार की तो उभयत्र समानता ही है।

[विशेष वचन]

१. यत् परार्थं स गुणः, अपरार्थं च प्रधानम् (वि० प०)।

[रूपसिद्धि]

१. ऊद्ध्र्वशोषं शुष्कः। ऊर्ध्व+शुष्+णम्+सि। ऊर्ध्वः सन् शुष्कः। 'ऊद्ध्र्व' शब्द के उपपद में रहने पर 'शुष शोषणे' (३।२७) धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय,लघूपध गुण तथा विभक्तिकार्य।

२. ऊर्ध्वपूरं पूर्णः। ऊर्ध्व+पूरि+णम्+सि। ऊर्ध्वः सन् पूर्णः। 'ऊर्ध्व' शब्द के उपपद में रहने पर 'पूरि' धातु से णम् प्रत्यय आदि पूर्ववत्।।१३१३।

## १३१४. कर्मणि चोपमाने [४।६।२९]

[सूत्रार्थ]

उपमानवाचक कर्ता तथा कर्म के उपपद में रहने पर धातु से उत्तर 'णम्' प्रत्यय होता है।।१३१४।

[दु० वृ०]

कर्तरि कर्मणि चोपमानवाचिन्युपपदे धातोर्णम् भवति। चूडक इव नष्टः चूडकनाशं नष्टः। कर्मणि च-सुवर्णमिव निहितं सुवर्णनिधायं निहितम्। एवम् ओदनपाचं पक्वः। उपमान इति किम्? चूडको नष्टः, सुवर्णं निहितम्।।१३१४।

[वि०प०]

कर्म०। सुवर्णनिधायमिति। दधातेरायिसदेशः॥१३१४।

[क०त०]

कर्म०। ऊर्ध्वे कर्तृकर्मवाचिन्युपपदे शुषेः पूरेश्च णमिति नायं सूत्रार्थः। कर्तर्युपमानवाचिनि पूर्वेणैव सिद्धत्वाच्चकार इह व्यर्थः स्यात्। नापि शुषिपूरी वर्तेयातामिति देश्यम्, शुषेरकर्मकत्वात्, ओदनपाचं पक्व इति। नु कर्तरि कर्मणि चोपपदे तत्रोदाहरणद्वयम्, तत् कथमिदम्? सत्यम्, यथा पचधातुर्विक्लित्तिमात्रार्थस्तदा कर्तरि। यदा विक्लेदनार्थस्तदा कर्मणीति विशेषप्रतिपत्त्यर्थमेकस्यैव धातोर्दर्शनम्॥१३१४।

[समीक्षा]

'चूडकनाशम्, सुवर्णनिधायम्' इत्यादि शब्दरूपों के साधनार्थ कातन्त्रकार ने 'णम्' तथा पाणिनि ने 'णमुल्' प्रत्यय किया है। पाणिनि का सूत्र है– "उपमाने कर्मणि च" (अ० ३।४।४५)। इस प्रकार अनुबन्धभेद को छोड़कर अन्य प्रकार की तो उभयत्र समानता ही है।

[रूपसिद्धि]

१. चूडकनाशं नष्टः। चूडक+णश्+णम्+सि। चूडक इव नष्टः। 'चूडक' शब्द के उपपद में रहने पर 'णश अदर्शने' (३।४१) धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय, उपधादीर्घ तथा विभक्तिकार्य।

२. सुवर्णनिधायं निहितम्। सुवर्ण+नि+धा+णम्+सि। सुवर्णमिव निहितम्। 'सुवर्ण-नि' के उपपद में रहने पर 'डु धाञ् धारणपोषणयोः' (२।८५) धातु से प्रकृत सूत्र द्वारा णम् प्रत्यय आदि कार्य पूर्ववत्॥१३१४।

## १३१५. कषादिषु तैरेवानुप्रयोगः [४।६।३०]

[सूत्रार्थ]

कषादि धातुओं के अन्तर्गत जिस धातु से उत्तर में णम् प्रत्यय होता है, उसी धातु का अनुप्रयोग भी होता है, अन्य धातु का नहीं॥१३१५।

[दु०वृ०]

कषादिषु णमो विषयभूतेषु तैरेव कषादिभिरनुप्रयोगः कर्तव्यो नान्यैरिति। अनुप्रयोगश्च पूर्वकालतामभिदधात्येव। निमूलकाषं कषति। निमूलं कषतीत्यर्थः। कषादिष्विति किम्? चेलक्नोपं वृष्टो देवः॥१३१५।

[वि०प०]

कषा०। धातुसम्बन्धे प्रत्ययानां विधानादनुप्रयोगः सिद्ध एव, किन्तु धात्वन्तरेणापि स्यादिति वचनमुच्यते। अनुप्रयोगश्चेत्युक्तसमुच्चये चकारः।

इदमसङ्गतमेव लक्ष्यते। क्रियाभेदेऽपि पूर्वकालत्वं समानकर्तृकत्वं च प्रतीयते। एतेषु कषादिषु यैव क्रिया प्रयोगस्य सैवानुप्रयोगस्येति नास्ति क्रियाभेद इति क्रियाभेदाभावे कथं पूर्वकालता? तदेवाह **जिनेन्द्रबुद्धिः**-"एतच्चोभयं क्रियाभेदे सति भवति" इति उभयं पूर्वकालत्वं समानकर्तृकत्वं चेत्यर्थः। **शाकटायनोऽप्याह**— "प्रयोगानुप्रयोगयोः (प्रकृत्युपपदयोः) क्रियाभेदाभावात् पूर्वकालताऽस्य नास्तीति क्त्वाप्रसङ्ग एव तस्मिन् विधिः" इति तस्मिन्निति कषादावुपपदे णमो विधिरस्त्येव क्त्वाप्रसङ्ग इति भावः। न हि निमूलकाषं कषतीत्यादावर्थे पूर्वकालत्वमुपपद्यते इति भावः। **उपदेशविदस्तु** मन्यन्ते— विवक्षयात्राप्यनुप्रयोगः पूर्वकालतामभिदधात्येवेति।।१३१५।

[क०त०]

कषा०। कषादिभ्यो निमूलसमूलयोरित्यादिना णम् विहितः,स च पूर्वकाले पूर्वश्च परापेक्षयेति सामान्यक्रियापेक्षया पूर्वत्वं स्यादिति कषादिषूपपदेषु पौर्वापर्यमन्तरेण भवत्वित्यर्थं वचनम्। नन्वेवकारेण किं प्रयोजनम्, तैरित्युक्तेऽपि अन्यैरनुप्रयोगो न भविष्यति? सत्यम्। 'कन्यादर्शं वरयति' इत्यादौ धात्वन्तरेणापि भवतीति सूच्यते। अथ वचनबलादेवैतत् सिध्यति, अन्यथा श्रुतत्वात् तैरेव भविष्यति किमनेन सूत्रेण? सत्यम्, **सुखार्थमेव** तदेव ग्रहणमिति। अथ कषादिषु तेभ्यो णमिति क्रियताम्, कषादिषूपपदेषु तेभ्यः कषादिभ्यो णम् भवतीत्येतदर्थो भविष्यति ततश्च तैरेवानुप्रयोग इति व्यर्थमुपपदत्वेनैवानुप्रयोगस्य लब्धत्वात्? सत्यम्, अनुप्रयोगग्रहणस्थितौ यस्यानुप्रयोगस्तत्समानार्थता प्रतीयते, प्रयोगसमानार्थस्यैवानुप्रयोगव्यवहारात्। ततश्च प्रयोगे समानार्थकयोर्द्वयोरेकस्यार्थतिरस्कारः। निमूलकाषं कषतीति। निमूलं कषतीत्यर्थः। पौर्वापर्यमन्तरेणापि भवति, यदि च तैरेवानुप्रयोग इति नास्ति तदा पूर्व-काल इत्यधिकारे किञ्चिन्निमूलं कषित्वाऽपरं कषतीति व्यक्त्या भिन्नमेव कषणं प्रतिपाद्यं स्यादिति।

इदानीं तु **व्यक्त्या जात्या चैकमिति**। कर्मणीति न वर्तते, व्याप्तिन्यायात्। अन्यथा कर्त्राद्युपपदे यदा णम् क्रियते तदानुप्रयोगो न स्यादिति। कषादिष्विति। विषयसप्तमीयम्। अत एव वृत्तौ विवृणोति— णमो विषयभूतेष्विति। येभ्यो णम् क्रियते, तेषु प्रकृतिस्वरूपेष्वित्यर्थः। तद्विषयेष्वनुप्रयोगस्तैरेव एतस्यैव विवरणं वृत्तौ कषादिभिरेवेति यन्मते **लौकिकी पूर्वकालविवक्षा** अत्रापि विद्यते तन्मतमाह— अनुप्रयोगश्चेति। पञ्ज्यां धातुसम्बन्ध इति धातोरेव प्रत्ययो विधीयते न त्वर्थविशेषे। अतो वर्तमानादिकालप्रकाशनार्थमनुप्रयोगः सिद्ध एव, किन्तु धात्वन्तरेणापि स्यादिति। ननु कथमिदमुच्यते यावता प्रत्यासत्त्या तेनैव धातुना भविष्यति? सत्यम्, श्रुतव्याख्यानमनादृत्योक्तमिदम्। यदि पुनः, श्रुतव्याख्यानमनादृत्योक्तमिदम्। यदि पुनः श्रुतव्याख्यानमङ्गीक्रियते, तदा **नियमार्थं** सूत्रमिदम्। 'कन्यादर्शं वरयति' इत्यादौ धात्वन्तरेणाप्यनुप्रयोगः स्यादिति। उक्तसमुच्चये चशब्दः इति न केवलं प्रयोगः

पूर्वकालतामभिदधातीत्यर्थः। एतेन समानार्थत्वमेव धातुद्वयस्येति दर्शितम्। केचित्तु अनुप्रयोगः पूर्वकालतां चाभिदधात्येवेति भिन्नक्रमेण योजयन्ति। तदा न केवलमेककर्तृकत्वं पूर्वकालतां चेति चार्थो विवक्षणीय इति। विवक्षयेति कषादिधातुः प्रारम्भेऽपि वर्तते तस्यान्तमपेक्ष्य पूर्वता युज्यते। एवमनुप्रयोगस्यादीति॥१३१५।

[समीक्षा]

'निमूलकाषं कषति' इत्यादि शब्दों के सिद्ध्यर्थ अनुप्रयोग का विधान समानरूप में दोनों ही आचार्यों ने किया है। पाणिनि का सूत्र है— "कषादिषु यथाविध्यनुप्रयोगः" (अ० ३।४।४६)। अतः उभयत्र सभी प्रकार की समानता ही है।

[रूपसिद्धि]

१. निमूलकाषं कषति। निमूल +कष्+णम् +सि। 'निमूल' शब्द के उपपद में रहने पर 'कष हिंसार्थः' (१।२२४) धातु से "निमूलसमूलयोः कषः" (४।६।१६) सूत्र द्वारा 'णम्' प्रत्यय, उपधादीर्घ तथा विभक्तिकार्य। इसके बाद प्रकृत सूत्र के नियमानुसार 'कष्' धातु का अनुप्रयोग॥१३१५।

## १३१६. तृतीयायामुपदंशेः [४।६।३१]

[सूत्रार्थ]

तृतीयान्त के उपपद में रहने पर 'उप' पूर्वक 'दंश्' धातु से णम् प्रत्यय होता है॥१३१६।

[दु०वृ०]

तृतीयान्ते उपपदे उपपूर्वाद् दंशेर्णम् भवति। मूलकेनोपदंशं भुङ्क्ते, मूलकोपदंशं भुङ्क्ते। मूलकादिकरणतया भुजिना युक्तमपि उपदंशिना व्याप्तमित्युपपदं स्यात्। वाऽधिकाराद् मूलकेनोपदश्य भुङ्क्ते॥१३१६।

[दु०टी०]

तृतीया०। नहि भुजिना सम्बन्धे सति उपदंशिना संबन्धो निवर्तते विरोधाभावात्। यद्युपपदानां धात्वर्थमात्रस्य सम्बन्धो गृह्यते न यथाव्यपदिष्टक्रमेण, अन्यथा "स्वार्थे पुषः" (४।६।२३) इत्यत्र स्वार्थवाचिन उपपदस्य धातुं प्रत्यात्मीयादिक्रमतया नोपपदत्वं स्यात्, यदि तर्हि दंशिं प्रति मूलकादेः कर्मतैवोपपद्यते न करणता ह्युपदंशेरित्यास्तां कर्मणीति वर्तिष्यते लघुस्वभावं प्रति भवति, तृतीयादिग्रहणं तु उत्तरत्र क्रियताम्, नैवम्। प्रधानक्रियां प्रति करणत्वाभावे तृतीयां प्रति करणत्वम् इष्यते वाक्यसमासपक्षे॥१३१६।

[वि०प०]

तृतीया०। अथ मूलकादेः करणत्वाद् भुजिना सह योगो नोपदंशिनेति कथं तस्य तत् प्रति तस्योपपदत्वं येनोपपदसमासः पाक्षिकः स्यादित्याह— मूलकादीति। नहि

भुजिना योगः उपदंशिना सम्बन्धं व्याहन्तीति विरोधाभावात्। तेन हि करणतया सम्बन्धः, उपदंशिना च कर्मतयेति कथमेकस्यैकदैव कर्मकरणभावः इति चेत्? अर्थस्य तथाभावात्, स हि मूलकेन भुञ्जानो मूलकमेवोपदश्य भुङ्क्ते इति यदा तृतीया तदा णम्विधिः, यदा द्वितीया तदा क्त्वेति।।१३१६।

[क०त०]

तृतीया०। तृतीयायामिति किमिति नाम्नीत्यास्तामित्याशङ्कार्थः।

[पाठान्तरम्–

टीकायां न हीत्यादि। कर्मत्वे दंशिना सम्बन्धः केन निवार्यते इति भावः। न यथा व्यपदिष्टक्रमेणेति। न तृतीयार्थविशिष्टत्वेनेत्यर्थः। अन्यथेत्यादि। यदि च यथाश्रूयमाणमुपपदं स्यात् तदा स्वार्थे पुष इत्यत्र स्ववाचकत्वेन श्रूयमाणत्वात् कथमात्मीयवाचकस्यान्यवाचकस्योपपदमिति "तेषां परमुभयप्राप्तौ" (२।४।१६) इत्यस्यैकक्रियासम्बन्धेन कारकद्वयप्राप्तौ विषयः, अत एव ज्ञापकाद् 'ग्रामाय दत्त्वा तीर्थं गतः' इति च तत्रोदाहरणम् मतान्तरेणेत्यवधेयम्]।।१३१६।

[समीक्षा]

'मूलकेनोपदंशं भुङ्क्ते, मूलकोपदंशं भुङ्क्ते' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्रकार 'णम्' प्रत्यय तथा पाणिनि 'णमुल्' प्रत्यय करते हैं। पाणिनि का सूत्र है— "उपदंशस्तृतीयायाम्" (अ० ३।४।४७)। पाणिनीय अनुबन्धभेद को छोड़कर अन्य प्रकार की तो उभयत्र समानता है।

[रूपसिद्धि]

१. **मूलकेनोपदंशम्, मूलकोपदंशं** भुङ्क्ते। मूलकेन+उप+दन्श्+णम्+सि। 'मूलकेन' के उपपद में रहने पर उपपूर्वक 'दन्श् दशने' (१।२९०) धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय, नकार को अनुस्वार, वैकल्पिक समास तथा विभक्तिकार्य।।१३१६।

## १३१७. हिंसार्थाच्चैककर्मकात् [४।६।३२]

[सूत्रार्थ]

तृतीयान्त के उपपद में रहने पर अनुप्रयोग के साथ समान कर्म वाली तथा हिंसार्थक धातु के बाद 'णम्' प्रत्यय होता है।।१३१७।

[दु०वृ०]

तृतीयान्त उपपदे हिंसार्थाद् धातोरनुप्रयोगेण समानकर्मकाण्णम् भवति। दण्डेनोपघातम्, दण्डोपघातं गाश्चालयति। एककर्मकादिति किम्? दण्डेनाहत्य भूमिं गोपालको गाः सादयति।।१३१७।

[क०त०]

हिंसा०। चकार उक्तसमुच्चयमात्रे। अथ समानकर्मकार्थमुपदंशेरनुवृत्त्यर्थं कथन्न स्यादिति चेत् न। तदा हि एकयोगः पूर्वेण सह कृतः स्यात्। चालयतीत्यत्र कालयतीति पाठे 'कल पिल डिप क्षेपे' इत्यस्य रूपम्, 'कल गतौ, कल संख्याने च' (९,४९,१८५;१।४१९) इत्यस्यादन्तत्वात्। दण्डेनेत्यादि। ननु द्व्यङ्गविकलमिदं यथैककर्मको न स्यात् तथा हिंसार्थोऽपि न भवति, न हि भूमेर्हिंसा सम्भवति, हिंसाय जीवोपघातरूपत्वात्? न चैवं भूमिपदेन भूमिष्ठस्याभिधानात्।।१३१७।

[समीक्षा]

'दण्डेनोपघातम्, दण्डोपघातम्' इत्यादि शब्दरूपों के साधनार्थ कातन्त्रीय णम् प्रत्यय की अपेक्षा पाणिनीय व्याकरण में 'उ-ल्' ये दो अन्य अनुबन्ध भी पढ़े गए हैं। उनका सूत्र है— "हिंसार्थानां च समानकर्मकाणाम्" (अ० ३।४।४८)। फलतः पाणिनीय उक्त दो अनुबन्धों के अतिरिक्त तो उभयत्र समानता ही है।

[विशेष वचन]

१. न हि भूमेर्हिंसा सम्भवति, हिंसाया जीवोपघातरूपत्वात् (क०त०)।

[रूपसिद्धि]

१. दण्डेनोपघातम्, दण्डोपघातं गाश्चालयति। दण्डेन+उप+हन्+णम्+सि। 'दण्डेन' के उपपद में रहने पर उपपूर्वक 'हन हिंसागत्योः' (२।४) धातु से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय, हकार को घकार, नकार को तकार, वैकल्पिक समास तथा विभक्तिकार्य।।१३१७।

## १३१८. सप्तम्यां च प्रमाणासत्त्योः [४।६।३३]

[सूत्रार्थ]

सप्तम्यन्त तथा तृतीयान्त के उपपद में रहने पर एवं प्रमाण-आसत्ति अर्थों के गम्यमान होने पर धातु से उत्तर 'णम्' प्रत्यय होता है।।१३१८।

[दु०वृ०]

तृतीयान्ते सप्तम्यन्ते चोपपदे धातोर्णम् भवति। प्रमाणविषये आसत्तौ च। सम्बन्धविवक्षायां न यथासङ्ख्यम्। द्व्यङ्गुलेनोत्कर्षम्, द्व्यङ्गुले उत्कर्षम्, द्व्यङ्गुलोत्कर्षं गुण्टिकां छिनत्ति। केशैर्ग्राहम्, केशेषु ग्राहम्, केशग्राहं युध्यन्ते।।१३१८।

[वि०प०]

सप्त०। द्व्यङ्गुलेनोत्कर्षमिति वाक्ये विभक्तिभेदेऽपि समासे सत्यभेदादेकमुदाहरणमुक्तम्। एवमन्येऽपि।।१३१८।

[समीक्षा]

'द्व्यङ्गुलेनोत्कर्षम्, केशेषु ग्राहम्' इत्यादि शब्दों के साधनार्थं 'णम्-णमुल्' प्रत्ययों के अन्तर्गत पाणिनीय 'उ-ल्' अनुबन्धों के अतिरिक्त उभयत्र समानता ही है।

[रूपसिद्धि]

१. **द्व्यङ्गुलेनोत्कर्षम्, द्व्यङ्गुले उत्कर्षम्, द्व्यङ्गुलोत्कर्षम्।** द्व्यङ्गुलेन, द्व्यङ्गुले+ उत्+कृष्+णम्+सि। 'द्व्यङ्गुलेन' तथा 'द्व्यङ्गुले' के उपपद में रहने पर उद्पूर्वक 'कृष विलेखने' (१।२२३) धातु से 'णम्' प्रत्यय, लघूपधगुण तथा विभक्तिकार्य।

२. **केशैर्ग्राहम्, केशेषु ग्राहम्, केशग्राहम्।** केशैः, केशेषु +ग्रह+णम्+सि। 'केशैः- केशेषु' के उपपद में रहने पर 'ग्रह उपादाने' (८।१४) धातु से णम् प्रत्यय, उपधादीर्घ तथा विभक्तिकार्य॥१३१८।

## १३१९. उपपीडरुधकर्षश्च [४।६।३४]

[सूत्रार्थ]

'तृतीयान्त-सप्तम्यन्त' के उपपद में रहने पर 'उप उपसर्ग-पूर्वक 'पीड-रुध-कृष' धातुओं से 'णम्' प्रत्यय होता है॥१३१९।

[दु०वृ०]

तृतीयान्ते सप्तम्यन्ते चोपपदे धातोर्णम् भवति। पार्श्वाभ्याम् उपपीडम्, पार्श्वयोरुपपीडम्, पार्श्वोपपीडं शेते। व्रजेनोपरोधम्, व्रजे उपरोधम्, व्रजोपरोधं गाः सादयति। पाणिनोपकर्षम्, पाणावुपकर्षम्, पाण्युपकर्षं धाना भक्षयति॥१३१९।

[दु०टी०]

उप०। उपात् पीडरुधकर्ष इत्ययं समासो व्याख्यानात्, न तूपात् पीड इति। कृषिर्विलेखनार्थो भ्वादौ तुदादौ च तत्रान्विकरणे गुणहेतुना भौवादिकोऽयम्, तदेतत् साध्यशून्यं कृत्वा 'कृष' इति पठित्वा आद्रियन्ते॥१३१९।

[वि०प०]

उप०। कृष विलेखने इति भ्वादौ तुदादौ च पठ्यते। अत्र च कर्ष इति अन्-विकरणोपलक्षितस्य गुणस्य निर्देशात् कर्षतेर्ग्रहणं न कषतेरिति। एतच्च फलशून्यम्। यद् वा कश्चित् कृष इति पठति। सामान्यग्रहणेऽप्यदोष इत्यर्थः॥१३१९।

[क०त०]

उप०। पीडेति विकल्पेनन्तस्य इनोऽभावपक्षे निर्देशः। टीकायां व्याख्यानादिति साहचर्यादित्यर्थः। रुधपीडोपकर्षश्चेत्यकरणाद् वा॥१३१९।

[समीक्षा]

'पार्श्वोपपीडम्, पाण्युपकर्षम्' इत्यादि शब्दरूपों की सिद्धि कातन्त्रकार ने 'णम्' प्रत्यय तथा पाणिनि ने 'णमुल्' प्रत्यय से की है। पाणिनि का सूत्र है- "सप्तम्यां चोपपीडरुधकर्षः" (अ० ३।४।४९)। इस प्रकार पाणिनीय 'उ-ल्' अनुबन्धों को छोड़कर अन्य तो उभयत्र समानता ही है।

[रूपसिद्धि]

१. **पार्श्वाभ्यामुपपीडम्, पार्श्वयोरुपपीडम्, पार्श्वोपपीडं** शेते। 'पार्श्वाभ्याम्-पार्श्वयोः' के उपपद में रहने पर उपपूर्वक 'पीड' धातु से णम् प्रत्यय तथा विभक्तिकार्य।

२-३. **व्रजेनोपरोधम्, व्रजे उपरोधम्, व्रजोपरोधं** गाः सादयति। **पाणिनोपकर्षम्, पाणावुपकर्षम्, पाण्युपकर्षं** धानाः भक्षयति। प्रक्रिया पूर्ववत्॥१३१९।

## १३२०. अपादाने परीप्सायाम् [४।६।३५]

[सूत्रार्थ]

परीप्सा=त्वरा अर्थ के गम्यमान होने पर अपादान के उपपद में रहने की स्थिति में धातु से णम् प्रत्यय होता है॥१३२०।

[दु० वृ०]

परि समन्ताद् आप्तुमिच्छा परीप्सा त्वरेत्यर्थः। अपादाने उपपदे धातोर्णम् भवति परीप्सायां गम्यमानायाम्। शय्याया उत्त्थायं शय्योत्त्थायं धावति। रन्ध्रापकर्षं रन्ध्रादपकर्षं पयः पिबति। परीप्सायाम् इति किम्? आ समन्ताद् गच्छति॥१३२०।

[समीक्षा]

'शय्योत्त्थायं धावति' इत्यादि शब्दरूपों की सिद्धि कातन्त्रकार ने 'णम्' प्रत्यय तथा पाणिनि ने 'णमुल्' प्रत्यय से की है। पाणिनि का सूत्र है- "अपादाने परीप्सायाम्" (अ० ३।४।५२)। इस प्रकार पाणिनीय 'उ-ल्' अनुबन्धों के अतिरिक्त तो उभयत्र समानता ही है।

[रूपसिद्धि]

१-२. **शय्याया उत्त्थायम्, शय्योत्त्थायं** धावति। **रन्ध्रादपकर्षम्, रन्ध्रापकर्षं** पयः पिबति। 'शय्यायाः- रन्ध्रात्' के उपपद में रहने पर 'उत्' पूर्वक 'स्था- कृष्' धातुओं से णम् प्रत्यय, यकारागम, लघूपधगुण तथा विभक्तिकार्य॥१३२०।

## १३२१. द्वितीयायां च [४।६।३६]

[सूत्रार्थ]

द्वितीयान्त के उपपद में रहने पर परीप्सा=त्वरा अर्थ के गम्यमान होने की स्थिति में धातु से णम् प्रत्यय होता है।।१३२१।

[दु०वृ०]

द्वितीयान्ते चोपपदे धातोर्णम् भवति परीप्सायां गम्यमानायाम्। लोष्टाणि ग्राहं लोष्टग्राहं युध्यन्ते, एवं नाम त्वरन्ते यदायुधमपि नाद्रियन्ते।।१३२१।

[क०त०]

द्विती०। चकार उक्तसमुच्चयमात्रे न तूपपदानामनुवर्तनार्थः प्रयोजनाभावात्। अथोत्तरार्थं तर्ह्येकयोगमेव कुर्वीत। अथ भिन्नयोगादपादानमेव परत्रानुवर्तताम्, नैवम्। तदा परसूत्राण्यपि अपादानमित्यस्यानन्तरं पठ्यन्ताम्। द्वितीयायां चेति चकारोऽपि न कृतः स्यात्।।१३२१।

[समीक्षा]

'यष्टिग्राहम्, लोष्टग्राहम्' इत्यादि शब्दरूपों की सिद्धि उक्त की तरह 'णम्-णमुल्' प्रत्ययों से की गई है। पाणिनि का सूत्र है— "द्वितीयायां च" (अ० ३।४।५३)। इस प्रकार पाणिनीय 'उ-ल्' अनुबन्धों को छोड़कर अन्य प्रकार की उभयत्र समानता ही है।

[रूपसिद्धि]

१. लोष्टाणि ग्राहम्, लोष्टग्राहं युध्यन्ते। लोष्टाणि+ग्रह+सि। 'लोष्टाणि' के उपपद में रहने पर 'ग्रह' धातु से णम् प्रत्यय, उपधादीर्घ तथा विभक्तिकार्य।।१३२१।

## १३२२. स्वाङ्गेऽध्रुवे [४।६।३७]

[सूत्रार्थ]

अध्रुव स्वाङ्गवाची द्वितीयान्त शब्द के उपपद में रहने पर धातु से णम् प्रत्यय होता है।।१३२२।

[दु०वृ०]

स्वमङ्गं स्वाङ्गम्। स्वाङ्गसञ्ज्ञकेऽध्रुवे द्वितीयान्ते चोपपदे धातोर्णम् भवति। भ्रुवौ विक्षेपम्, भ्रूविक्षेपं जल्पति। अक्षिणी काणम् ,अक्षिकाणं हसति। अध्रुव इति किम्? उत्क्षिप्य शिरः कथयति। यस्मिन्नङ्गे छिन्ने प्राणी न म्रियते तद् अध्रुवम्।।१३२२।

[वि०प०]

स्वाङ्गे०। स्वाङ्गेत्यादि। अद्रवं मूर्तिमत् स्वाङ्गम् इत्यादि परिभाषितमिह स्वाङ्गं गृह्यते।।१३२२।

[क०त०]

अक्षिणी काणमिति 'कण निमीलने' (१।१४६,५४०) इत्यस्य रूपम्, अक्षिणी निमील्येत्यर्थः।।१३२२।

[समीक्षा]

समानता-विषमता उपर्युक्त की तरह समझनी चाहिए। पाणिनि का सूत्र है— "स्वाङ्गेऽध्रुवे" (अ० ३।४।५४)।

[रूपसिद्धि]

१-२. भ्रुवौ विक्षेपम्, भ्रूविक्षेपं जल्पति। अक्षिणी काणम्, अक्षिकाणं हसति। "भ्रुवौ-अक्षिणी' के उपपद में रहने पर विपूर्वक 'क्षिप' तथा 'कण' धातु से 'णम्' प्रत्यय, लघूपध गुण, उपधादीर्घ तथा विभक्तिकार्य।।१३२२।

## १३२३. परिक्लिश्यमाने च [४।६।३८]

[सूत्रार्थ]

सर्वतोभावेन क्लेशयुक्त द्वितीयान्त स्वाङ्गवाचक शब्द के उपपद में रहने पर धातु के पश्चात् 'णम्' प्रत्यय होता है।।१३२३।

[दु०वृ०]

परि समन्तात् क्लिश्यमाने स्वाङ्गे च द्वितीयान्ते उपपदे धातोर्णम् भवति। उरांसि प्रतिपेषम्, उरःप्रतिपेषं युध्यन्ते। कृत्स्नमुरः पीडयित्वा युध्यन्ते इत्यर्थः।।१३२३।

[समीक्षा]

उक्त सूत्र (१३२१) की समीक्षा द्रष्टव्य। पाणिनि का सूत्र है—"परिक्लिश्यमाने च" (अ० ३।४।५५)।

[रूपसिद्धि]

१. उरांसि प्रतिपेषम्, उरःप्रतिपेषं युध्यन्ते। 'उरांसि' इस द्वितीयान्त शब्द के उपपद में रहने पर प्रतिपूर्वक 'पिष्लृ संचूर्णने' (६।१२) धातु से णम् प्रत्यय, लघूपध गुण तथा विभक्तिकार्य।।१३२३।

## १३२४. विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः [४।६।३९]

[सूत्रार्थ]

व्याप्यमान तथा आसेव्यमान अर्थों में द्वितीयान्त शब्दों के उपपद में रहने पर 'विश्-पत्-पद्-स्कन्द्' धातुओं से 'णम्' प्रत्यय होता है।।१३२४।

[दु०वृ०]

व्याप्यमाने आसेव्यमाने च द्वितीयान्त उपपदे एभ्यो धातुभ्यो णम् भवति। श्रुतत्वाद् विश्यादिक्रियाभिः साकल्येन द्रव्याणामेव सम्बन्धः। व्याप्तिर्वीप्सा। अतो

द्रव्यस्यैव द्विर्वचनम्। आसेवा तात्पर्यम् आभीक्ष्ण्यम्, तच्च क्रियाया एवेति विश्यादीनां णमन्तानां द्विर्वचनं भवति। गेहं गेहमनुप्रवेशमास्ते। गेहमनुप्रवेशमनु-प्रवेशमास्ते। गेहं गेहमनुप्रपातमास्ते, गेहमनुप्रपातमनुप्रपातमास्ते। गेहं गेहमनुप्रपादमास्ते। गेहमनुप्रपादमनुप्रपादमास्ते। गेहं गेहमवस्कन्दमास्ते, गेहमवस्कन्दमवस्कन्दमास्ते। समासे एव वीप्सा आभीक्ष्ण्यार्थमभिधत्ते, शब्दशक्तित्वात्। गेहानुप्रवेशं गेहानुप्रपातं गेहानुप्रपादं गेहावस्कन्दमास्ते इति। व्याप्यमानासेव्यमानयोरिति किम्? गेहमनुप्रविश्य भुङ्क्ते। आभीक्ष्ण्ये णम् सिद्धः। उपपदसमासविभाषार्थमिदम्॥१३२४।

[वि०प०]

विशि०। व्याप्तियोगाद् व्याप्यमानं द्रव्यम्, आसेवायोगाच्चासेव्यमाना क्रिया, तत्र द्रव्ये व्याप्तिः, क्रियायामासेवेति। विषयविभागमाह-यद्यांश्रुतत्वादित्यादि। न ह्यन्यथा व्याप्त्यासेवयोः प्रतीतिरिति द्विर्वचनं तत् पुनर्लोकोपचारादित्युक्तम्। ननु यद्यासेवा क्रियाया एव धर्मस्तदा आसेव्यमानमिति यदा कर्मणि प्रत्ययस्तदा क्रियैव आसेव्यमानेति कथमुक्तम् आसेव्यमाने द्वितीयान्ते उपपदे इति? अथ भावे तथापि कथमासेवाया उपपदत्वम्, केवलम् आसेव्यमाने गम्यमाने इति स्यात्। यदाह जयादित्यः– व्याप्यमाने आसेव्यमाने गम्यमाने इति? सत्यम्, कर्मण्येव प्रत्ययस्तथाप्यासेव्यमानक्रियासाधनत्वाद् गेहादिकमप्यासेव्यमानमिति। अथ भाव एवोभयत्र प्रत्ययो गम्यमानार्थोऽपि वृत्तावन्तर्भूतः, ततो द्वितीयान्ते उपपदे व्याप्यमाने आसेव्यमाने गम्यमाने इति सूत्रार्थः। समास एवेति। एतेन समासे द्विर्वचनं न भवतीति उक्तं भवतीति॥१३२४।

[क०त०]

विशि०। वृत्तौ आसेव्यमाने इत्यनन्तरं गम्यमाने इति बोद्धव्यम्, श्रुतत्वादिति। अन्यथा सूत्रे षष्ठीनिर्देशोऽनर्थकः स्यादिति भावः। द्रव्याणामेवेति। न तु गुणादीनां पतनादेरभावाद् इति कश्चित्, अभिधानादित्यन्यः। आसेवेत्यादि। आभीक्ष्ण्य-पदेनासत्तिरुच्यते न तु पौनःपुन्यम् आसेवा वेत्युक्तमिति। णम् सिद्ध एवेति। ननु क्त्वापि स्यादिति दूषणं कथन्न स्यादिति चेत्, सत्यम्। एतदपि दूषणमिति कश्चित्। तत्र व्यवस्थितविभाषया एतेभ्यो णम् भविष्यतीत्यन्यः॥१३२४।

[समीक्षा]

'गेहानुप्रवेशम्' आदि शब्दरूपों की सिद्धि उक्त की तरह कातन्त्र में णम् तथा पाणिनीय में णमुल् प्रत्यय से की गई है। पाणिनि का सूत्र है— "विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः" (अ० ३।४।५६)। इस प्रकार पाणिनीय 'उ-ल्' अनुबन्धों के अतिरिक्त तो उभयत्र समानता ही है।

[रूपसिद्धि]

१-८. गेहं गेहमनुप्रवेशमास्ते। गेहमनुप्रवेशमनुप्रवेशमास्ते। गेहं गेहमनुप्रपातमास्ते। गेहमनुप्रपातमनुप्रपातमास्ते। गेहं गेहमनुप्रपादमास्ते। गेहमनुप्रपादमनुप्रपादमास्ते। गेहं गेहमवस्कन्दमास्ते। गेहमवस्कन्दमवस्कन्दमास्ते। अनु+प्र-पूर्वक 'विश-पत-पद' धातु तथा अवपूर्वक 'स्कन्द' धातु से णम् प्रत्यय, द्वित्व तथा विभक्तिकार्य॥१३२४।

## १३२५. तृष्यस्वोः क्रियान्तरे कालेषु [४।६।४०]

[सूत्रार्थ]

क्रिया का व्यवधान होने पर एवं द्वितीयान्त कालवाचक शब्द के उपपद में रहने पर 'तृष्-अस्' धातुओं से 'णम्' प्रत्यय होता है॥१३२५।

[दु०वृ०]

कालेषु द्वितीयान्तेषूपपदेषु क्रियान्तरे गम्यमाने तृष्यस्वोर्णम् भवति। द्व्यहं तर्षं द्व्यहतर्षं गाः पाययति। द्व्यहमभ्यासं द्व्यहमभ्यासं गाः पाययति। अद्य यत् पानं यच्च द्व्यहेऽतीते भविष्यति, तन्मध्यवर्तिना तर्षणेनाभ्यसनेन गवां पानक्रिया व्यवधीयते। तृष्यस्वोरिति किम्? द्व्यहमुपोष्य भुङ्क्ते। क्रियान्तरे इति किम्? अहरभ्यस्य इषून् गतः। अभ्यसनेन इषवः कालाश्च - व्याप्यन्ते न गतिर्व्यवधीयते। कालेष्विति किम्? योजनमभ्यस्य गाः पाययति। क्रियाग्रहणं सुखार्थम्॥१३२५।

[दु०टी०]

तृष्यस्वोः। केचित् क्रियान्तरे काल इति समानाधिकरणं न पठन्ति। क्रियामन्तरयतीति कर्मण्यण्। अन्तरशब्दश्च व्यवधानवचन एव। क्रियान्तरव्यवधायकः काल इत्यर्थः॥१३२५।

[वि०प०]

तृष्यस्वोः। 'ञि तृष पिपासायाम्, असु क्षेपणे' (३।६६,४९)। क्रियाया अन्तरं व्यवधानं क्रियान्तरम्। अद्येत्यादिना तदेवाचष्टे। उपोष्येति। उपपूर्वो 'वस निवासे' (१।६१४) "क्त्वो यप्" (४।६।५५) इति यप्। यजादित्वात् सम्प्रसारणम्। "शासिवसिघसीनां च" (३।८।२७) इति षत्वम्। इह सान्निध्यात् तृष्यस्वोरेवार्थेन तर्षणेनाभ्यसनेन चान्तरं व्यवधानं गम्यते तच्च क्रियाया एव सम्भवति नेतरस्येत्याह— क्रियेति॥१३२५।

[क०त०]

तृष्यस्वोः। द्व्यहमित्यादि। द्व्यहं तृषां प्रपर्यान्तर्भूतेनार्थत्वात् तृषधातोरेवमर्थः करिष्यते। योजनमिह प्रहरावच्छिन्न एवाध्वा उच्यते, न तु कालः॥१३२५।

[समीक्षा]

'द्व्यहं तर्षम्, द्व्यहतर्षम्' इत्यादि शब्दों की सिद्धि कातन्त्रकार ने णम् प्रत्यय तथा पाणिनि ने णमुल् प्रत्यय से की है। पाणिनि का सूत्र है— "अस्यतितृषोः क्रियान्तरे कालेषु" (अ० ३।४।५७)। इस प्रकार पाणिनीय 'उ-ल्' अनुबन्धों के अतिरिक्त उभयत्र साम्य ही है।

[रूपसिद्धि]

१-२. **द्व्यहं तर्षम्, द्व्यहतर्षं** गाः पाययति। **द्व्यहमभ्यासम्, द्व्यहाभ्यासं** गाः पाययति। 'द्व्यहम्' शब्द के उपपद में रहने पर 'तृष- अस' धातुओं से प्रकृत सूत्र द्वारा 'णम्' प्रत्यय, समास तथा विभक्तिकार्य।।१३२५।

## १३२६. नाम्न्यादिशिग्रहोः [४।६।४१]

[सूत्रार्थ]

द्वितीयान्त 'नाम' शब्द के उपपद में रहने पर आङ्-पूर्वक 'दिश' धातु तथा ग्रह धातु से णम् प्रत्यय होता है।।१३२६।

[दु०वृ०]

नाम्नि स्वरूपे द्वितीयान्ते उपपदे आदिशेर्ग्रहेश्च णम् भवति। नामान्यादेशं नामादेशं ददाति। नामानि ग्राहं नामग्राहमाह्वयति।।१३२६।

[वि०प०]

स्वं रूपं शब्दस्याशब्दसंज्ञेत्याह-नाम्नि स्वरूप इति।।१३२६।

[क०त०]

नाम्न्या०। पञ्ज्यां स्वरूपमित्यादि। ननु नाम्न्यादि संज्ञा गम्यते। यथा "नाम्नि स्थश्च" (४।३।५) इत्यादौ। अन्यथा तत्र कथं स्वरूपस्य न ग्रहणम्? सत्यम्, शास्त्रीयसंज्ञा नास्तीति कृत्वा अत्र स्वरूपमिति न्यायस्यावतारः कृतः। तत्र लक्ष्यदृष्ट्या व्याप्तिन्यायाल्लौकिकसञ्ज्ञाया अपि ग्रहणमिति न दोषः।।१३२६।

[समीक्षा]

'नामादेशम्, नामग्राहम्' शब्दरूपों के सिद्ध्यर्थ उक्त की तरह पाणिनीय 'उ-ल्' अनुबन्धों के अतिरिक्त उभयत्र समानता ही है। पाणिनि का सूत्र है— "नाम्न्यादिशिग्रहोः" (अ० ३।४।५८)।

[रूपसिद्धि]

१-२. **नामादेशं ददाति। नामग्राहमाह्वयति।** 'नाम' शब्द के उपपद में रहने पर आङ्पूर्वक 'दिश्' धातु तथा ग्रह् धातु से णम् प्रत्यय, लघूपध गुण, उपधादीर्घ तथा विभक्तिकार्य।।१३२६।

## १३२७. कृञोऽव्ययेऽयथेष्टाख्याने क्त्वा च [४।६।४२]

[सूत्रार्थ]

अनभिप्रेत के कथन में अव्यय के उपपद में रहने पर 'कृञ्' धातु से 'णम्' तथा 'क्त्वा' प्रत्यय होते हैं॥१३२७।

[दु०वृ०]

यथेष्टमिति वीप्सायामव्ययीभावः। अव्यये उपपदे कृञो णम् भवति क्त्वा च अयथेष्टाख्याने गम्यमाने। ब्राह्मण! पुत्रस्ते जातः नीचैःकारम्, नीचैःकृत्य, नीचैः कृत्वाचष्टे। ब्राह्मण! कन्या ते गर्भिणी किन्तर्हि वृषली। उच्चैःकारम् , उच्चैःकृत्य, उच्चैः कृत्वाचष्टे। नीचैर्नामाप्रियमाख्येयम्। उच्चैर्नाम प्रियमाख्येयम्। अयथेष्टाख्याने इति किम्? ब्राह्मण! पुत्रस्ते जातः, उच्चैः कृत्वा आचष्टे। समासविकल्पार्थं क्त्वाग्रहणम्॥१३२७।

[दु०टी०]

कृञः। यथेष्टमित्यादि। यथेष्टं यदभिप्रेतं न यथेष्टमनभिप्रेतम् अयथेष्टं तस्याख्यान इति केचित्। पदार्थानतिवृत्तावव्ययीभावमाहुः। इष्टातिक्रमेणाख्याने प्रतिकूलाख्याने इत्यर्थः। क्त्वा चेति। ननु चकारेण क्त्वाप्रत्ययस्य सम्बन्धाण्णमः प्रधानस्यानुवृत्तिरुत्तरत्र युक्ता, क्त्वाप्रत्ययस्याव्यवधानस्य कथमिति? सत्यम्, चकारसम्बन्ध एव क्त्वाऽनुवर्तते अनन्तरत्वात्, णमोऽप्यनुवृत्तिरव्याहतैवेत्यदोषः॥१३२७।

[वि०प०]

कृञः। वीप्सायामिति। अयथेष्टमिति। यद् यद् इष्टमभिप्रेतम्, तद् यथेष्टम्, ततोऽन्यदयथेष्टम्, तस्याख्यान इति। ननु णमेव विधीयताम्, विकल्पाधिकारात् पक्षे पूर्वकाले पूर्वेणैव क्त्वा भविष्यतीत्याह— समासेत्यादि। अनेन क्त्वाविधानेन तृतीयादित्वमस्ति, तृतीयादीनां वेति पक्षे उपपदसमासः स्यान्नान्यथेति भावः। यद्येवं क्त्वा चेति चकारसम्बन्धादस्य प्रधानत्वात् कथमुत्तरत्रानुवृत्तिः प्रधानस्य णमेव स्यात्? सत्यम्, अनन्तरत्वादुत्तरत्रापि चकारसम्बन्ध एव क्त्वानुवर्तिष्यते, णमोऽपि दृष्टाधिकारस्यानुवृत्तिरव्याहतेति॥१३२७।

[समीक्षा]

'उच्चैःकारम्, उच्चैःकृत्य, उच्चैः कृत्वा' आदि शब्द उक्त की तरह णम्-णमुल् प्रत्यय करके तथा क्त्वा प्रत्यय से सिद्ध किए गए हैं। पाणिनि का सूत्र है– "अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ" (अ० ३।४।५९)। अतः उभयत्र समानता ही है।

[विशेष वचन]

१. उच्चैर्नाम प्रियमाख्येयम् (दु०वृ०)।

२. नीचैर्नामाप्रियमाख्येयम् (दु०वृ०)।

[रूपसिद्धि]

१. ब्राह्मण! पुत्रस्ते जातः, **नीचैःकारम्, नीचैःकृत्य,** नीचैः कृत्वा आचष्टे। ब्राह्मण! कन्या ते गर्भिणी किन्तर्हि वृषली। **उच्चैःकारम्, उच्चैःकृत्य, उच्चैः** कृत्वा आचष्टे। 'नीचैः- उच्चैः' के उपपद में रहने पर 'कृ' धातु से 'णम्-क्त्वा' प्रत्यय, वृद्धि, यबादेश तथा विभक्तिकार्य॥१३२७।

## १३२८. तिर्यच्यपवर्गे [४।६।४३]

[सूत्रार्थ]

अपवर्ग=समाप्ति अर्थ के गम्यमान होने पर 'तिर्यक्' शब्द के उपपद में रहते 'कृ' धातु से 'क्त्वा-णम्' प्रत्यय होते हैं॥१३२८।

[दु०वृ०]

तिर्यक्शब्दे उपपदे कृञो णम् भवति क्त्वा चापवर्गे गम्यमाने तिर्यक्कारम्, तिर्यक्कृत्य, तिर्यक् कृत्वा काष्ठं गतः। समाप्य गत इत्यर्थः। अपवर्ग इति किम्? तिर्यक् कृत्वा काष्ठं गतः॥१३२८।

[दु०टी०]

तिर्यचि०। ननु तिर्यचीति कथं निर्देशः तिर्यङ् तिरश्चिर्भवत्यघुट्स्वरे? सत्यम्, शब्दपदार्थकस्येदमनुकरणम्, तेन शब्दान्तरत्वान्न भवति। अथ प्रकृतिवदनुकरणं भवति इति प्रकृतिकार्येण तिरश्च्यादेशेन भवितव्यमिति। नैवम्, अनुक्रियमाणान्तपरिणामाप्रसङ्गात्। यद्यत्र प्रकृतिकार्यं च स्यात्, यादृशमनुक्रियमाणं तिर्यक्शब्दस्य रूपं तादृशं न प्रतीयते प्रकृतिवदनुकरणं भवतीत्यस्य तु यदर्थकस्यानुकरणं सोऽस्यावकाशः सर्व एव ह्यनुकरणभूतः शब्दस्वरूपस्यानुकरणम्, एतावांस्तु विशेषः क्वचिच्छब्दपदार्थस्य शब्दरूपस्यानुकरणम्, क्वचिदर्थपदार्थकस्येति॥१३२८।

[वि०प०]

तिर्यचि०। अपवर्गः समाप्तिः। तिर्यक् कृत्वेति। अनृजु=वक्रं कृत्वेत्यर्थः॥१३२८।

[क०त०]

तिर्यचि०। ननु **टीकायां** तिर्यचीति। ननु कथमिदं देश्यम् 'तिर्यङ् तिरश्चिः' इत्यत्रानव्ययस्य ग्रहणात्? सत्यम्। तिर्यन्च्शब्दात् सद्यआद्यत्वादस्तातिस्तस्य लुक्यनुषङ्गलोपे चाव्ययत्वेऽपि एकदेशविकृतमनन्यवद् इत्यतिदेश्यम्। ननु तिर्यक्शब्दोऽयमव्ययमिति कथं निश्चितम्? सत्यम्, अव्ययाधिकारात्॥१३२८।

[समीक्षा]

'तिर्यक्कारम्, तिर्यक्कृत्य, तिर्यक् कृत्वा' इत्यादि शब्दरूपों की सिद्धि उक्त की तरह समझनी चाहिए। पाणिनि का सूत्र है— "तिर्यच्यपवर्गे" (अ० ३।४।६०)। इस प्रकार उभयत्र अधिकांश समानता ही स्वीकार करनी चाहिए।

[रूपसिद्धि]

१-३. तिर्यक्कारम्, तिर्यक्कृत्य, तिर्यक् कृत्वा गतः। 'तिर्यक्' शब्द के उपपद में रहने पर 'डु कृञ् करणे' (७।७) धातु से प्रकृत सूत्र द्वारा 'णम्-क्त्वा' प्रत्यय, ऋकार को वृद्धि, समासपक्ष में क्त्वा को यप् आदेश तथा विभक्तिकार्य॥१३२८।

# १३२९. स्वाङ्गे तसि [४।६।४४]

[सूत्रार्थ]

स्वाङ्गवाची तस्-प्रत्ययान्त शब्द के उपपद में रहने पर 'कृ' धातु से 'णम्' तथा 'क्त्वा' प्रत्यय होते हैं॥१३२९।

[दु०वृ०]

स्वाङ्गसञ्ज्ञके तसप्रत्ययान्ते उपपदे कृञो णम् भवति क्त्वा च। मुखतःकारम्, मुखतःकृत्य, मुखतः कृत्वा आस्ते। स्वाङ्ग इति किम्? सर्वतः कृत्वा आस्ते। अव्ययाधिकाराद् मुखे तस्यतीति मुखतः कृत्वा गतः॥१३२९।

[क०त०]

स्वाङ्गे०। अर्थे मुखे तस्यतीति 'तसु दसु उत्क्षेपे' (३।५२) क्विप्। अर्थतः=मुखतः॥१३२९।

[समीक्षा]

'मुखतःकारम्, मुखतः कृत्वा' आदि शब्दों की सिद्धि उपर्युक्त की ही तरह की गई है। पाणिनि का सूत्र है— "स्वाङ्गे तस्प्रत्यये कृभ्वोः; तूष्णीमि भुवः" (अ०३।४।६१,६३)। इस प्रकार सामान्यतया उभयत्र समानता ही परिलक्षित होती है।

[रूपसिद्धि]

१-३. मुखतःकारम्, मुखतःकृत्य, मुखतः कृत्वा आस्ते। 'मुखतः' शब्द के उपपद में रहने पर 'कृ' धातु से प्रकृत सूत्र द्वारा 'णम्-क्त्वा' प्रत्यय, ऋकार को वृद्धि, समास में क्त्वा को यप् तथा विभक्तिकार्य॥१३२९।

# १३३०. भुवस्तूष्णीमि च [४।६।४५]

[सूत्रार्थ]

स्वाङ्गवाची तसप्रत्ययान्त शब्द के तथा 'तूष्णीम्' शब्द के उपपद में रहने पर 'भू' धातु से 'णम्' तथा 'क्त्वा' प्रत्यय होते हैं॥१३३०।

[दु०वृ०]

स्वाङ्गसञ्ज्ञके तसप्रत्ययान्ते 'तूष्णीम्' शब्दे चोपपदे भुवो णम् भवति क्त्वा च। मुखतोभावम्, मुखतो भूय, मुखतो भूत्वा आस्ते। तूष्णीम्भावम्, तूष्णीम्भूय, तूष्णीम्भूत्वा आस्ते। कथं नानाकारम्, नानाकृत्य, नाना कृत्वा भुङ्क्ते। विनाकारम्,

विनाकृत्य, विनाकृत्वा गत इति? क्रियाविशेषणमेव। नाम्नां युक्तार्थत्वात्। समासोऽपि सिद्ध एव। 'नाना कृत्वा काष्ठानि गतः' इति सापेक्षत्वान्न समासः। एवं नानाभावम्, नानाभूय, नाना भूत्वा गत इति। तथा अन्वग्भावम्, अन्वग्भूय, अन्वग् भूत्वा गत इति। आनुकूल्ये एव समासाभिधानम्, तेन अन्वग् भूत्वा तिष्ठति शत्रुः॥१३३०।

[दु०टी०]

भुवः। ननूपपदयोर्णम्, क्त्वाप्रत्ययश्च न कथं यथासङ्ख्यमिति? सत्यम्, चकारसम्बन्धाद् वाक्यद्वयं ततो वैषम्यमिति भावः। नामार्थप्रत्यये च्व्यर्थे कृञो भुवश्च वक्तव्यम्, नाप्रत्ययसहचरितो ना इत्युक्त; धाप्रत्ययसहचरितश्च धा इति। नाधावर्थौ यस्य प्रत्ययस्य स नाधार्थः, विनञ्भ्यां नानाञाविति संख्यायाः प्रकारे धा, द्वित्रिभ्यां धमुणेधा च, एकाद् धमुण् वेति प्रत्ययग्रहणं हिरुक्पृथक्शब्दयोर्निवृत्त्यर्थं 'हिरुक् कृत्वा गतः' इति असहायार्थत्वान्नाधार्थत्वमस्तीति क्त्वाणमौ स्याताम्, न नानाकृत्वा काष्ठानि गतः इति च्व्यर्थो नास्ति, प्रकृत्यवस्थाया अविवक्षितत्वान्नाप्रत्यय एव, न तदर्थमर्थग्रहणमुक्तम्। कश्चित् 'निरनुबन्धग्रहणे न सानुबन्धकस्य' (का० परि० ४८) इति सानुबन्धकार्थं विज्ञायते न वक्तव्यमिति मनसिकृत्य नोदयति कथमित्यादि। एवं द्विधाकारमिति। परिहारमाह– क्रियाविशेषणमेवेति। द्विधाकारो यस्मिन् करणे भवने चेत्यर्थः। नाम्नां युक्तार्थत्वात् समास इति। विभाषया समासोऽपि यथाभिधानमित्यर्थः। अव्ययत्वात् तरांतमांप्रत्ययौ नाभिधीयेते, न हि विनाकारम् इत्याद्ययुक्तो दृश्यते, न च पूर्वकालता अन्यथाकारमित्यादिषु च दृश्यते। यथा 'अन्यथाकारंतरां भुङ्क्ते, अन्यथाकारंतमां भुङ्क्ते' सूत्रकारवचनात्। तथेत्यादि। अनूच्यानुलोम्य इति न वक्तव्यमित्यर्थः। अन्वग्भावं तिष्ठति। अनुचरः सन् तिष्ठतीत्यर्थः॥१३३०।

[वि०प०]

भुवः। द्वयोरुपपदयोर्द्वाभ्यां प्रत्ययाभ्यां न यथासङ्ख्यम्। चकारसम्बन्धाद् वाक्यद्वयकल्पनया वैषम्यस्य विवक्षितत्वात्। कथमित्यादि। नाधार्थप्रत्यये च्व्यर्थे इति वक्तव्यम्। नाप्रत्ययेन सहचरितोऽर्थो ना, धाप्रत्ययेन सहचरितोऽर्थो धा। नाधावर्थौ यस्य स नाधार्थः प्रत्ययः। अर्थशब्दः प्रत्येकमभिसम्बध्यते, नार्थो धार्थश्च यः प्रत्ययः, तदन्ते च्व्यर्थे उपपदे कृञ्भुवोः क्त्वाणमाविति। अत्र नानाञौ नार्थौ। यदाह 'विनञ्भ्यां नानाञौ' इति। अत्र ञकारस्यानुबन्धत्वादेकरूप एव प्रत्यय इति। नैतदर्थमर्थग्रहणं किन्तर्हि धार्थार्थम्। धार्था हि बहवः प्रत्यया इति जिनेन्द्रबुद्धिस्त्वाह-वयं तु ब्रूमः- नार्थमप्यर्थग्रहणं कर्तव्यम्। अन्यथा 'निरनुबन्धग्रहणे न सानुबन्धकस्य' (का० परि० ४८) इति नाञो ग्रहणं न स्यादित्यभिप्रायः। धार्थाश्चत्वारः प्रत्ययाः। तद् यथासंख्यायाः प्रकारे धा, द्वित्रिभ्यां धमुणेधा च, एकाद् धमुण् वेति। 'अनानाकृतं नानाकृत्वा भुङ्क्ते, अनानाभूतं नानाभूत्वा गतः' इत्यादिषु च्व्यर्थो दर्शनीयः। प्रत्ययग्रहणादिह न भवति 'हिरुक् कृत्वा पृथक् गतः' इति-हिरुक्पृथक्शब्दयोरसहायार्थत्वान्नार्थत्वमस्तीति, तदिह न वक्तव्यमित्याह— क्रियेति। नानाकारो यस्मिन् भोजने गमने चेत्यादि, विशेषणमित्यर्थः।

नापीह णमन्तस्याव्ययत्वे नानाकारंतरामित्यादि तरांतमामोरभिधानं दृश्यते। न च पूर्वकालता प्रतीयते, अन्यथाकारंतराम् इत्यादिषु तरांतमांप्रत्ययौ दृश्येते एव। तथा च तत्रोक्तं क्त्वा पूर्वकालेऽस्त्येव, पक्षे समासोऽपि यथाभिधानं सिद्ध एवेत्याह— नाम्नाम् इत्यादि। यदप्युक्तं 'च्व्यर्थ' इति किम्? 'नानाकृत्वा काष्ठानि गतः' इति। अत्र प्रकृत्यवस्थानं विवक्षितम् इत्यच्व्यर्थता। तत्रापि समाधिमाह— सापेक्षत्वादिति। अपेक्ष्यन्ते काष्ठादीनीति भावः। एवमिति। तथा धार्थेऽपि द्विधाकारम्, द्विधाकृत्य, द्विधा कृत्वा। द्वैधंकारम् , द्वैधंकृत्य, द्वैधं कृत्वा। द्वेधाकारम्, द्वेधाकृत्य, द्वेधा कृत्वा, ऐकध्यंकारम्, ऐकध्यंकृत्य, ऐकध्यं कृत्वा। एवं भवतेरपि द्विधाभावमित्यादि। तथेति। अनूच्यानुलोम्य इति न वक्तव्यमित्यर्थः। आनुलोम्यमनुकूलता, परचित्ताराधनमिति यावत्॥१३३०।

[क०त०]

भुवः। पञ्ज्यां नाप्रत्ययसहचरित इति तदर्थवाचकत्वमेवात्र साहचर्यम्, वयं तु ब्रूम इति जिनेन्द्रबुद्धिवचनमिदम्।

[पाठान्तरम्—

टीकायां कश्चिद् आह— निरनुबन्धग्रहण इत्युक्तत्वादिति केचित्। जिनेन्द्र-बुद्धिस्त्वाह इति पूर्वग्रन्थ इत्याह— प्रत्ययग्रहणादिति। तथा च -'हिरुङ् नाना च वर्जने' इत्यमरः। ननु धात्वर्थ इत्यत्र धाप्रत्ययस्य प्रकार एवार्थः, नार्थ इत्यत्र नाप्रत्ययस्य कीदृशोऽर्थः? सत्यम्, नाप्रत्ययः प्रकृत्यर्थ एव क्रियते अनिर्दिष्टार्थत्वात्। यद्येवं विशब्दस्य विगतार्थः नाप्रत्ययेन तदर्थस्य द्योतितत्वाद् विनाशब्दोऽप्यभाव इत्यर्थः, नानाशब्दोऽप्यभावार्थः कथन्न स्यात् कृञ एव हि नानेति? सत्यम्, स्वभावादेवैकप्रकाराभाव उच्यते, तर्हि असहायार्थत्वादिति न सङ्च्छते? सत्यम्, असहायशब्दस्य सहायभाव एवार्थः नानाशब्दस्यापि एकाभाव इत्यभावमात्रमवलम्ब्य सादृश्यं नास्तीत्युक्तम्, असहायार्थत्वादिति कश्चित् पाठस्तदा विद्यमानार्थत्वादित्यर्थः। 'हिरुङ् नाना च वर्जने' इत्यमरेण यदुक्तं तद्भेदमवलम्ब्येति स्थितम्। टीकायां क्त्वाणमौ स्यातामिति प्रत्ययग्रहणाभावे स्यातामित्यर्थः]॥१३३०।

[समीक्षा]

'तूष्णीभावम्' इत्यादि शब्दों की सिद्धि उक्त की तरह 'णम्-णमुल्-क्त्वा' प्रत्ययों से की गई है। पाणिनि का सूत्र है— "तूष्णीमि भुवः" (अ० ३।४।६३)। कातन्त्रव्याख्याकारों ने जो अन्य शब्दरूप सिद्ध किए हैं, उनके लिए पाणिनि ने "नाधार्थप्रत्यये च्व्यर्थे, अन्वच्यानुलोम्ये" (अ० ३।४।६२,६४) ये दो सूत्रे बनाए हैं। प्रकृत विषय की दृष्टि से उभयत्र प्रायः समानता ही है।

[रूपसिद्धि]

१-६. मुखतोभावम्, मुखतोभूय, मुखतो भूत्वा आस्ते।

तूष्णीम्भावम्, तूष्णीम्भूय, तूष्णीम् भूत्वा आस्ते।

'मुखत:- तूष्णीम्' शब्दों के उपपद में रहने पर 'भू' धातु से प्रकृत सूत्र द्वारा 'णम् क्त्वा' प्रत्यय, क्त्वा का समास होने पर यबादेश, ऊकार को वृद्धि, आवादेश तथा वैभक्तिकार्य।।१३३०।

## १३३१. कर्तरि कृत: [४।६।३१]

[सूत्रार्थ]

कर्ता कारक अर्थ में कृत्संज्ञक प्रत्यय होते हैं।।१३३१।

[दु०वृ०]

कर्तरि कारके कृत्संज्ञका: प्रत्यया वेदितव्या:। करोतीति कर्ता, कारक:, पच:, नन्दन:। निराकाङ्क्षेषु वाक्येषु परिभाषेयं शेषभूता। ख्युट: करणेनाघ्रातत्वान्न पाक्षिकी प्रवृत्ति:।।१३३१।

[दु०टी०]

कर्तरि०। गुपादिभ्य आयवदनिर्दिष्टकालार्थास्तृजादय: स्वार्थे प्राप्ता: कर्तर्येव यथा स्युरिति वचनम्। घञादीनां वाच्य: सिद्धताख्यभावस्त्यादीनां च साध्यताख्य इति तत्र भावग्रहणं युक्तम्। नासौ स्वार्थ इति निराकाङ्क्षेष्वित्यादि। एतेन तेषामस्य चैकवाक्यतामाह— ख्युडादिवाक्यानि नार्थान्तराकाङ्क्षाणि भवन्ति, करणादीनामर्थानां नामाख्याते निर्देशान्न तेषामयं शेष इति, यदि पुनरियं लिङ्गवती स्याद् यथा अनेन तृजादीनामन्वाख्यायते तथा ख्युडादीनामपि विशेषाभावात् तेऽपि कर्तरि करणादिषु च स्युर्वचनसामर्थ्यात् पर्यायेणेत्यनिष्टरूपं स्यात्। सत्यपि शन्तृङादीनां सार्वधातुकत्वे परोक्षातिदेशे कर्तृकर्मभावानुयोगान्निराकाङ्क्षाणां विधानं यथासम्बन्धं न विरुध्यते परस्मैपदात्मनेपदभावेनेति।।१३३१।

[वि०प०]

कर्तरि०। निराकाङ्क्षेष्विति। निश्चिता आकाङ्क्षा येषु तानि निराकाङ्क्षाणि तेषु निराकाङ्क्षेष्वित्यर्थ:। शेषभूतेति। शेषं भूता शेषभूता, अवयवत्वं प्राप्तेत्यर्थ:। एतेन विध्यङ्गशेषभूतेयं न लिङ्गवतीति दर्शितम्। सा हि प्रत्येकं प्रत्ययविधिषूपप्रतिष्ठमाना तै: सहैकवाक्यतामापद्यते– "वुण्तृचौ कर्तरि, अच् पचादिभ्यश्च" (४।२।४७,४८) कर्तरीति। तर्हि ख्युडादिवाक्यानामप्ययं शेष: स्यात्, विशेषाभावात्। तत: करणे पक्षे कर्तरि च ख्युट् स्यात्? तदयुक्तम्, अनाकाङ्क्षत्वात् तेषाम्। यानि हि वाक्यानि असमाप्त्यर्थतयाऽर्थमाकाङ्क्षन्ति, तेषामेवायं शेष इति। तथाहि वुण्तृचौ भवत: इत्युक्तेऽर्थविशेषाकाङ्क्षा जायते कस्मिन्नर्थे तौ भवत: इति तृजादिवाक्यानामेवायं शेषो

युज्यत इति। ख्युडादिवाक्यानि तु साक्षान्निर्दिष्टार्थत्वान्न साकाङ्क्षाणि, न हि परिपूर्णस्याकाङ्क्षा न्याय्येति न तेषां शेष इत्याह— ख्युट इत्यादि। यदि पुनरियं लिङ्गवती स्यात् तदा भिन्नैर्वाक्यैर्विहितानां प्रत्ययानामर्थविधानं स्यात्। तथा च सति तृजादीनामिव ख्युडादीनामपि करणे कर्तरि च प्रसङ्गः स्यात्। एकस्था हि लिङ्गवती सकलं शास्त्रमभिज्वलयतीति॥१३३१।

[क०त०]

कर्तरि०। अर्थज्ञानं करोतीति कृत्। कृञः कर्तरि क्विप्, अथ अनियमे नियमकारिणी परिभाषा, तत् कथं ख्युटः प्रयोगे प्रवर्तिष्यते करण इत्युक्ते (परिभाषेति करण-) नियमस्य विद्यमानत्वात्? सत्यम्। न तत् सूत्रं किन्तर्हि युक्तिप्राप्तं सा पुनरेषैव युक्तिः, यतः साकाङ्क्षेषु प्रवर्तते परिभाषा, न चाकाङ्क्षेषु तेषामाकाङ्क्षायाः पूर्णत्वाद् वेत्यनया युक्त्या अनियमे नियमकारिणी परिभाषा न तु नियम इति साध्वेवोक्तम्, वृत्तौ ख्युट इति, तदेव पूर्वपक्षसिद्धान्तायां स्फुटीकर्तुं **पञ्जीकारोऽप्याह**— तर्हीत्यादि। विशेषाभावादिति। साकाङ्क्षेषु परिभाषा प्रवर्तते न चाकाङ्क्षेष्विति विशेषाभावादित्यर्थः। तदयुक्तमित्यादिना च स एव विशेषः प्रतिपादित इत्यर्थः। कर्तरि ख्युटः प्रसङ्गः स्यादिति । ननु कथमयं प्रसङ्ग इति अनियमे नियमकारिणी परिभाषेति न्यायस्य सत्त्वात्? सत्यम् ,लिङ्गवतीपक्षे न्यायोऽयं नास्तीति **कश्चित्**। नियमेऽनियमे वा लिङ्गवत्त्वमादाय प्रवर्तत इति **अन्यः**।

[**पाठान्तरम्— टीकायां** गुपादिभ्य इत्यादि। तर्हि कर्तर्यप्राप्तौ विधिरेवायं स्यान्न परिभाषा? सत्यम्। कृत्शब्दस्यान्वर्थबलात् सामान्यकारके प्राप्नोति अनिर्दिष्ट-कालार्थत्वाच्च स्वार्थेऽपि च, अतः कर्तर्यपि स्यात् ततश्च परिभाषा भवत्येव। यत्तु स्वार्थे प्राप्ते इत्युक्तम्, तत्र स्वार्थेऽपीति अपिशब्दोऽध्याहर्तव्यः। यद् वा कृदित्यस्यार्थद्वयमवलम्ब्य स्वार्थोऽपि प्राप्तः इति गदितः। यस्य निर्दिष्टार्थे भवति घञादिविधायकवाक्ये भावग्रहणं व्यर्थम्। अथ "अकर्तरि च कारके " (४।५।४) इत्यस्य विद्यमानत्वात् कथम् अनिर्दिष्टार्थता। नैवम्, सृ स्थिरेत्यादिविशेषविधानमवश्यं कर्तव्यम्, ततश्च पदरुजेत्यपनीय घञिति पृथग् योगः क्रियताम्। पृथग्योगबलात् स्वार्थे स्यात्, स च स्वार्थो भाव एवेति किं भावग्रहणेनेत्याह-घञादीनामिति। युक्तमिति विशेषभावार्थम्, न तु स्वार्थमात्रार्थमिति भावः, तर्हि शन्तृङादिविधायकानामयं विशेषः स्यादित्याह-सत्यपीत्यादि। निराकाङ्क्षत्वात् तेषामयं शेष इति सङ्कलितार्थः]॥१३३१।

[समीक्षा]

जिन कृत्प्रत्ययों के अर्थ सूत्रों में साक्षात् निर्दिष्ट नहीं हैं, उन सभी प्रत्ययों का विधान कर्ता अर्थ में आचार्य शर्ववर्मा तथा पाणिनि दोनों के ही द्वारा किया गया है। पाणिनि का सूत्र है— "कर्तरि कृत् " (अ० ३।४।६७)। इस प्रकार उभयत्र समानता ही है।

[विशेष वचन]

१. निराकाङ्क्षेषु वाक्येषु परिभाषेयम् (दु० वृ०)।

२. एकस्था हि लिङ्गवती सकलं शास्त्रमभिज्वलयति (वि० प०)।

३. अनियमे नियमकारिणी परिभाषा (क०त०)।

[रूपसिद्धि]

१. कर्ता। कृ+तृच्+सि। अर्थज्ञानं करोति। 'डु कृञ् करणे' (७।७) धातु से कर्ता अर्थ में "वुण्तृचौ" (४।२।४७) सूत्र द्वारा 'तृच्' प्रत्यय, "नाम्यन्तयोर्धातुविकरणयोर्गुणः" (३।५।१) से 'ऋ' को गुण 'अर्', कर्तृ की लिङ्गसंज्ञा, 'सि' प्रत्यय, "आ सौ सिलोपश्च" (२।१।६४) से तृ-घटित 'ऋ' को 'आ' आदेश तथा 'सि' प्रत्यय का लोप।

२. कारकः। कृ+वुण्+सि। अर्थज्ञानं करोति। 'कृ' धातु से वुण् प्रत्यय, 'वु' को 'अक' आदेश, इज्वद्भाव, "अस्योपधाया दीर्घो वृद्धि०" (३।६।५) इत्यादि से ऋकार को वृद्धि-आर् तथा विभक्तिकार्य।

३. पचः। पच्+अच्+सि। पचति। 'पच्' धातु से कर्ता अर्थ में "अच् पचादिभ्यश्च" (४।२।४८) से अच् प्रत्यय तथा विभक्तिकार्य।

४. नन्दनः। नन्द्+यु-अन+सि। नन्दयति। 'टु नदि समृद्धौ' (१।२५) धातु से कर्ता अर्थ में 'यु' प्रत्यय, 'अन' आदेश तथा विभक्तिकार्य।।१३३१।

## १३३२. भावकर्मणोः कृत्यक्तखलर्थाः [४।६।४७]

[सूत्रार्थ]

भाव तथा कर्म अर्थ में कृत्यसंज्ञक (तव्य, अनीय, य, क्यप्, घ्यण्) प्रत्यय, 'क्त' प्रत्यय तथा खल्- प्रत्ययार्थक प्रत्यय होते हैं।।१३३२।

[दु०वृ०]

पूर्वस्यापवादोऽयम्। भावे कर्मणि च कृत्य-क्त-खलर्थाश्च वेदितव्याः। शयितव्यं भवता, भोक्तव्य ओदनो भवता, आसितं भवता, कृतः कटो भवता, ईषदाढ्यम्भवं भवता, ईषत्करः कटो भवता, ईषत्पानं भवता, ईषत्पानः सोमो भवता। अर्थादकर्मकेभ्यो भावे सकर्मकेभ्यः कर्मणीति।।१३३२।

[दु० टी०]

भाव०। भावस्यैकत्वादेकवचनम्। शयितं भवद्भ्यां भवद्भिरिति। सकर्मकेभ्योऽपि कर्माविवक्षायां भावे। यथा कर्तव्यं देवदत्तेनेति।।१३३२।

[वि०प०]

भाव०। ईषदाढ्यम्भवमिति। "कर्तृकर्मणोश्च भूकृञोः" (४।५।१०३) इति भावे खल्। न विद्यते कर्म येषां प्रयोगे ते **अकर्मकाः**। तद्विपरीताश्च सकर्मका इत्यर्थो न्यायसिद्धः। विषयनियममाह— अर्थादित्यादि। सकर्मकेभ्योऽप्यविवक्षितकर्मत्वाद् भावे— कर्तव्यं देवदत्तेन, कृतं देवदत्तेनेति। कथन्तर्हि गतं ग्रामं देवदत्तेनेति, सकर्मकत्वाद् भावे? सत्यम्, अकर्मकविवक्षयैव केवलं भावेऽपि धात्वर्थकृता व्याप्तिरस्तीति ग्राममिति द्वितीया। यथा कटं कृत्वा घटं कर्तुं गतः इति। आख्याते सकर्मकाद् भावे नाभिधीयते। यथा ग्रामो गम्यते देवदत्तेनेति।।१३३२।

[क०त०]

भाव०। भावस्यैकत्वादिति **टीकायां** भविष्यति। यद्यपि कर्तृभेदेन शयनव्यक्तिभेदस्तथापि जातेरेकत्वादेकवचनम्, व्यक्तौ तु द्विवचनादिकं भवत्येवेति भावः। सकर्मकेभ्योऽपीत्यादि। विशेषकर्मविवक्षायां कृतं कार्यं न निवर्तते इति भावप्रत्ययस्थित एवेति।।१३३२।

[समीक्षा]

कृत्यसंज्ञक प्रत्यय, क्त-प्रत्यय तथा खलर्थक प्रत्ययों का विधान दोनों ही आचार्यों ने भाव-कर्म अर्थों में किया है। पाणिनि का सूत्र है- "तयोरेव कृत्यक्तखलर्थाः" (अ०३।४।७०)। इस प्रकार उभयत्र पूर्ण समानता ही है।

[विशेष वचन]

१. सकर्मकेभ्योऽपि कर्माविवक्षायां भावे (दु० टी०)।

[रूपसिद्धि]

१-८. **शयितव्यं** भवता। शी+तव्य-सि। **भोक्तव्य** ओदनो भवता। भुज् +तव्य+सि। **आसितं** भवता। आस्+क्त+सि। **कृतः** कटो भवता। कृ+क्त+सि। **ईषदाढ्यम्भवं** भवता। ईषदाढ्य+भू+खल्+सि। **ईषत्करः** कटो भवता। ईषत्+कृ+खल्+सि। **ईषत्पानं** भवता। ईषत् +पा+यु-अन+सि। **ईषत्पानः** सोमो भवता। ईषत्+पा+यु-अन+सि। गुण, इडागम आदि कार्य प्राप्ति के अनुसार होते हैं। 'खल्' प्रत्यय के अर्थ में 'यु' प्रत्यय भी होता हैं, अतः 'पानम्, पानः' उदाहरण यहाँ दिए गए हैं।।१३३२।

## १३३३. आदिकर्मणि क्तः कर्तरि च [४।६।४८]

[सूत्रार्थ]

भूतकालिक आदि क्रियाक्षण में जो 'क्त' प्रत्यय विहित है, वह कर्ता अर्थ में होता है। सम्भव होने पर कर्म अर्थ में भी इसका विधान साधु माना जाता है।। १३३३।

[दु०वृ०]

आदिक्रियायां यः क्तो विहितः स: कर्तरि वेदितव्यश्चकाराद् यथाप्राप्तं च। प्रकृतः कटं भवान्, प्रकृतः कटो भवता। प्रसुप्तो भवान्, प्रसुप्तं भवता। प्रशब्द आदिक्रियाद्योतकः। बहूनां क्रियाक्षणानामादिक्रियाक्षणोऽतीत इति भविष्यति कटे कटशब्दस्तादर्थ्यात्।।१३३३।

[दु०टी०]

आदि०। आदिश्चासौ कर्म चेति आदिकर्मेति विग्रहः। आदिक्रियायामिति। नात्र कर्मशब्दः साधनार्थो युज्यते तस्यैकत्वादादिविशेषणमनर्थकं स्यादित्याह— बहूनामित्यादि। आद्यो यः क्रियाक्षणः स निष्पन्नत्वादतीतः स्यादिति "निष्ठा" (४/३/९३) इत्यनेन क्तो युज्यते आदिकर्मणीति कर्तृविशेषणं चैतत्। आदिकर्मविषये कर्तरीति धातोर्विशेषणम्। आदिक्रियायामिति। यद्येवमादिग्रहणमेवास्तां किं कर्मग्रहणेन। आदिविषये कर्तरि आदिविषये धातोरर्थात् क्रियैवादिः प्रतीयते? सत्यम्, प्रतिपत्तिरियं गरीयसीति। उक्तार्थानामप्रयोगोऽनुक्तानामप्रयोग इति यथायोगं द्वितीया तृतीया च दर्शिता। अथ आदिक्रियाक्षणे कटोऽनभिनिष्पन्न एव करणीभूतवीरणादय एव तदानीं सन्तीति। न च त एव तदवस्थाः, कथं 'प्रकृतः कटः' इति भूतकालाभिधायिना प्रकृतशब्देन कटशब्दस्य सामानाधिकरण्यम् आद्येन क्रियाक्षणेन वीरणानां यो विशेषः आहितस्तत्र कटशब्दो वर्तत इत्याह— भविष्यतीत्यादि।।१३३३।

[वि०प०]

आदि०। कर्मशब्दः क्रियावचनः, न तु "यत् क्रियते तत् कर्म" (२।४।१३) इति कारकवचनः, तस्य कटादेरेकत्वादादिविशेषणानर्थक्यप्रसङ्गाद् बहुषु क्रियाक्षणेषु आदिविशेषणमर्थवद् भवतीत्याह— आदिक्रियायामिति। यथाप्राप्तं चेति। भावे कर्मणि चेत्यर्थः। बहूनामित्यादि। एतेन "निष्ठा" (४।३।९३) इत्यनेनैवातीते क्तप्रत्ययः, न तु यत्नान्तरं विधेयमिति दर्शितम्। आद्यस्य हि क्रियाक्षणस्य परिनिष्पन्नत्वादतीतत्वमस्तीति। ननु चादिभूतक्रियाक्षणे कटोऽपरिनिष्पन्न एव कटकरणभूता वीरणादय एव तदानीं सन्तीति कथं 'प्रकृतः कटः' इत्यतीत-क्रियाक्षणाभिधायिना प्रकृतशब्देन कटशब्दस्य सामानाधिकरण्यमिति? सत्यम्, आद्येन क्रियाक्षणेन यो वीरणेष्वाहितो विशेषस्तत्र कटशब्दो वर्तते तादर्थ्यात्, स चातीत इत्याह— भविष्यतीति। ननु यदि आद्यक्रियाक्षणाहिते विशेषे कटशब्दस्तत् कथं भविष्यति वर्तत इति? न हि अयमेवाहितो विशेषः, नाप्ययं कटार्थः। न चायमतीतः, येन सामानाधिकरण्यम्? सत्यम्। विषयसप्तमीयम्। तत्रायमर्थो भविष्यति। कटविषये योऽसौ विशेषस्तत्र कटशब्दस्तादर्थ्यात् कटार्थत्वादस्येति।।१३३३।

[क०त०]

आदि०। आदिक्रिया च क्रियायाः प्रथमोऽवयवः। तत्र प्राद्यवच्छेदेन धातुर्वर्तत इति भावनीयः। तत् कथं भविष्यति वर्तत इत्याहितविशेषे कटे कटशब्दतादर्थ्यादिति वृत्तौ वक्तुं युज्यत इति भावः। न ह्ययमित्यादि। अयं वस्तुगत्या यो भविष्यदर्थ एव कटः स एव नासावाहितविशेष इत्यर्थः। नापीति। अयं भविष्यति न कटो न कटार्थः। एतेन तादर्थ्यादिति यदुक्तं तदपि न सङ्गच्छते। न चेति । अत्राप्ययमित्यनेन भविष्यत्कटपरामर्शः। अत एव नासावतीतः। अतः प्रकृत इत्यनेन सामानाधिकरण्यमपि नोपपद्यते इति भावः। सत्यमित्यादि सुगमम्।

[पाठान्तरम्—

टीकायामादिविशेषणमनर्थकं स्यादिति नहि कर्मणि आद्यवयवे कर्मत्वमस्ति। क्रियायास्तु आद्यवयवेति क्रियात्वमस्तीति आदेः कर्मत्वं तत्राविरुद्धम् अकर्मकसमूहो यदादिकर्म तस्मिन्नित्यस्तु वाक्यार्थ इति चेत्, न। भावकर्मणोरित्यनेन सिद्धत्वात्। किञ्च कर्मशब्दः क्रियावचन एव गृह्यते श्रुतत्वात्? सत्यम्, प्रतिपत्तिरित्यादि। आदौ कर्तरीत्युक्ते सामानाधिकरण्यप्रतीतिरपि स्यादिति भावः]॥१३३३।

[समीक्षा]

भूतकालिक आदिक्रियाक्षण में जो 'क्त' प्रत्यय विहित है, उसे कर्ता तथा यथासम्भव कर्म अर्थ में दोनों ही आचार्यों ने निर्दिष्ट किया है। पाणिनि का सूत्र है— "आदिकर्मणि क्तः कर्तरि च" (अ० ३।४।७१)। इस प्रकार उभयत्र पूर्ण समानता है।

[रूपसिद्धि]

१. प्रकृतः कटं भवान्। प्र+कृ+सि। प्रकृत सूत्र के निर्देशानुसार यहाँ 'क्त' प्रत्यय कर्तृवाच्य में हुआ है।

२-४. प्रकृतः कटो भवता। यहाँ क्तप्रत्यय कर्मवाच्य में विहित है। प्रसुप्तो भवान्। 'क्त' प्रत्यय कर्तृवाच्य में है। प्रसुप्तं भवता। क्त-प्रत्यय कर्मवाच्य में हुआ है॥१३३३।

## १३३४. गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुह-जीर्यतिभ्यश्च [४।६।४९]

[सूत्रार्थ]

गत्यर्थक, अकर्मक, श्लिष्, शीङ्, स्था, आस्, वस्, जन्, रुह एवं 'जॄ' धातु से 'क्त' प्रत्यय कर्तृवाच्य, भाववाच्य तथा कर्मवाच्य में होता है॥१३३४।

[दु०वृ०]

गत्यर्थेभ्योऽकर्मकेभ्यः श्लिषादिभ्यश्च कर्तरि क्तो भवति यथाप्राप्तं च। गतो ग्रामं भवान्, गतो ग्रामो भवता। प्राप्तो ग्रामं भवान्, प्राप्तो ग्रामो भवता। गतमनेन,

प्राप्तमनेन। अकर्मकेभ्यः— शयितो भवान्, शयितं भवता। श्लिषादयः सोपसर्गाः सकर्मकाः। श्लिष् आलिङ्गनार्थः। आश्लिष्टो गुरुं भवान्, आश्लिष्टो गुरुर्भवता। अधिशयितः खट्वां भवान्, अधिशयिता खट्वा भवता। उपस्थितो गुरुं भवान्, उपस्थितो गुरुर्भवता, उपासितो गुरुं भवान्, उपासितो गुरुर्भवता। वस निवासार्थः- अनूषितो गुरुं भवान्, अनूषितो गुरुर्भवता। अनुजातो माणवको माणविकाम्, अनुजाता माणविका माणवकम्। आरूढो वृक्षं भवान्, आरूढो वृक्षो भवता। अनुजीर्णो वृषलीं भवान्, अनुजीर्णा वृषली भवता॥१३३४।

[दु०टी०]

गत्यर्था०। श्लिषादीनामकर्मकत्वात् सिध्यति, किमेषां ग्रहणेनेत्याह— श्लिषादय इति। **'श्रिषु श्लिषु प्रुषु प्लुषु उष दाहे'** (१।२२९) इत्यस्य न ग्रहणम्, 'वस आच्छादने' (२।४७) इत्यस्य च न ग्रहणम् अनभिधानात्। **'निरनुबन्धग्रहणे न सानुबन्धकस्य'** (का० परि० ४८) इति **'लुग्विकरणालुग्विकरणयोरलुग्-विकरणस्य'** (व्या० परि० ४२) इत्यन्ये। 'जृष् झृष् वयोहानौ' (३।१८) इति दिवादौ यना निर्देशं न प्रयोजयति, अर्थस्याभेदादिति चिन्त्यमेतत्॥१३३४।

[वि०प०]

गत्यर्था०। श्लिषादीनामकर्मकत्वादेव सिध्यति किमुपादानमित्याह— श्लिषादय इत्यादि। वसेर्यजादित्वात् सम्प्रसारणे **"शासिवसिघसीनां च"** (३।८।२७) इति षत्वम्। जीर्यतीति यना निर्देशात् 'जृष् झृष् वयोहानौ' (३।१८) इति दैवादिकस्य परिग्रहः। 'जॄ वयोहानौ' (८।२०) इति क्रैयादिकस्य निरासः। इदं च फलशून्यम्, अर्थाभेदादिति लक्ष्यते॥१३३४।

[क०त०]

गत्यर्था०। श्लिषादय इति। उपसर्गाभावे श्लिष्यति कामपीति **जयदेवे** अन्तर्भूतेनर्थतया सकर्मकत्वात्। प्राप्येत्यादि। गम्यमानक्रियायोगाद् वा। अनुजात इति। अनुपूर्वो जनिस्तत्पूर्वीकरणपूर्वके जन्मनि सकर्मकः। अनूषितः इत्यत्र इट्, पूजापूर्वकनिरासोऽर्थः। अनुजीर्ण इत्यत्राकर्षणपूर्वकवयोहानिरित्यर्थः॥१३३४।

[समीक्षा]

गत्यर्थक इत्यादि धातुओं से 'क्त' प्रत्यय का विधान कर्ता- कर्म तथा भाव अर्थ में दोनों ही आचार्यों द्वारा किया गया है। पाणिनि का सूत्र है— "गत्यर्थाकर्मकश्लिष-शीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" (अ०३।४।७२)। अतः उभयत्र समानता है।

[विशेष वचन]

१. श्लिषादयः सोपसर्गाः सकर्मकाः (दु०वृ०)।

२. इदं च फलशून्यम्, अर्थाभेदात् (वि०प०)।

(रूपसिद्धि)

१. गतो ग्रामं भवान्। गम्+क्त+सि। यहाँ 'क्त' प्रत्यय कर्तृवाच्य में हुआ है।

२. गतो ग्रामो भवता। गम्+ क्त+सि। यहाँ 'क्त' प्रत्यय कर्मवाच्य में हुआ है।

३-२४. 'शयितो भवान्' इत्यादि २२ अन्य शब्द दुर्गवृत्ति में द्रष्टव्य हैं, जिनमें सूत्रपठित धातुओं से कर्ता-कर्म तथा भाव अर्थ में 'क्त' प्रात्यय हुआ है॥१३३४।

## १३३५. दाशगोघ्नौ सम्प्रदाने [४।६।५०]

[सूत्रार्थ]

सम्प्रदान कारक के अर्थ में 'दाश-गोघ्न' शब्द निपातन से सिद्ध होते हैं॥१३३५।

[दु०वृ०]

एतौ निपात्येते सम्प्रदानेऽर्थे। 'दाशृ दाने' (१।५८७)। दाशते यस्मै स दाशः। गां हन्ति यस्मै आगतायातिथये स गोघ्नोऽतिथिः। निपातनाद् अच्-टकौ। अर्घार्हा ऋत्विगादय एव, तद्योग्यतयाप्युच्यन्ते॥१३३५।

[दु०टी०]

दाश०। ननु 'गोघ्न' इति चाण्डालादेरप्यभिधानं स्यात्, यस्मादयमपि मित्रायागताय दातुं गां हन्तीति? सत्यम्, 'यल्लक्षणेनानुत्पन्नं तत् सर्वं निपातनात् सिद्धम्' (का० परि० ३१) इति। अथ विशेषोऽपि सिद्ध इति ऋत्विगादेरभिधानम्। यदा तु तस्मै दातुं गौर्न हन्यते तदापि स्यादभिधानम्। योग्यतया यथा अपचन्नपि सूपकारः पाचक इत्याह— अर्घार्हा इति॥१३३५।

[वि०प०]

दाश०। ननु 'गोघ्नः' इति चाण्डालादेरभिधानं प्राप्नोति? सोऽपि मित्रायागताय गां हन्ति? सत्यम्, अर्थविशेषेऽपि निपातनादेवेत्याह— अर्घार्हा इति। यतः कुतश्चिद् वैगुण्यात् तेभ्यो दातुं गौर्न हन्यते तदा तेषामभिधानं न प्राप्नोतीत्याह— तद्योग्यतयापीति। यथा अपचन्नपि सूपकारः पचनयोग्यतया पाचक इति॥१३३५।

[क०त०]

दाश०। गां हन्ति यस्मै इति, दातुमिति गम्यमानत्वात् सम्प्रदानता॥१३३५।

[समीक्षा]

'दाश-गोघ्न' शब्दों की सिद्धि सम्प्रदान अर्थ में निपातन से दोनों ही आचार्यों ने की है। पाणिनि का सूत्र है— "दाशगोघ्नौ सम्प्रदाने" (अ० ३।४।७३)। अतः उभयत्र समानता ही है।

[विशेष वचन]

१. अपचन्नपि सूपकारः पचनयोग्यतया पाचकः (वि० प०)।

[रूपसिद्धि]

१. दाशः। दाश्+अच्+सि। दाशते यस्मै। 'दाशृ दाने' (१।५८७) धातु से निपातनविधि द्वारा 'अच्' प्रत्यय तथा विभक्तिकार्य।

२. गोघ्नः। गो+हन्+टक्+सि। गां हन्ति यस्मै आगतायातिथये। 'गो' शब्द के उपपद में रहने पर 'हन् हिंसागत्योः' (२।४) धातु से निपातन द्वारा 'टक्' प्रत्यय, उपधा अकार का लोप, हकार को घकार तथा विभक्तिकार्य।।१३३५।

## १३३६. भीमादयोऽपादाने [४।६।५१]

[सूत्रार्थ]

'भीम' आदि शब्द अपादान अर्थ में निपातन द्वारा सिद्ध होते हैं।।१३३६।

[दु०वृ०]

एते निपात्यन्तेऽपादाने। बिभेत्यस्मादिति **भीमः, भीष्मः। चरुः, प्रस्कन्दः, प्रपतनः समुद्रः, स्रुवः।** एते औणादिका यथाकथंचिद् व्युत्पाद्याः।।१३३६।

[दु०टी०]

भीम०। बिभेत्यादिभ्यो मगादयः प्रत्ययाः प्रयोगानुसारेण योज्याः। एते इत्यादि। यदि तर्ह्येते उणादयः प्रत्ययाः क्रियाकारकसम्बन्धाभावाद् अपादाने एतेषां वृत्तिर्नास्तीति? सत्यम्, **रूढिशब्देष्वपि कश्चित् क्रियाकारकसम्बन्धो दृश्यते।** यथा तैलपायिकादिशब्दानामपीति भावः।।१३३६।

[समीक्षा]

'भीम-भीष्म' आदि शब्दों की सिद्धि अपादान अर्थ में निपातन द्वारा दोनों ही व्याकरणों में की गई है। पाणिनि का सूत्र है— "भीमादयोऽपादाने" (अ० ३।४।७४)। अतः उभयत्र पूर्णतया समानता ही है।

[विशेष वचन]

१. औणादिका यथाकथञ्चिद् व्युत्पाद्याः (दु० वृ०)।

२. रूढिशब्देष्वपि कश्चित् क्रियाकारकसम्बन्धो दृश्यते (दु० टी०)।

[रूपसिद्धि]

१-२. **भीमः, भीष्मः।** भी+मक्+सि, भी+स्+मक्+सि। बिभेत्यस्मात्। 'ञि भी भये' (२।६८) धातु से निपातन द्वारा मक् प्रत्यय, सकारागम तथा विभक्तिकार्य।

३-७. **चरुः।** चर्+उ+सि। चरत्यस्मात्। **प्रस्कन्दनः।** प्र+स्कन्द्+यु— अन+सि। प्रस्कन्दत्यस्मात्। **प्रपतनः।** प्र+पत्+यु-अन+ सि। प्रपतत्यस्मात्। **समुद्रः। स्रुवः।** स्रु+क+सि। स्रवत्यस्मात्। चर् आदि धातुओं से 'उ' आदि प्रत्यय तथा विभक्तिकार्य।।१३३६।

## १३३७. ताभ्यामन्यत्रोणादयः [४।६।५२]

[सूत्रार्थ]

सम्प्रदान-अपादान कारकों से भिन्न कारक में उणादि प्रत्यय होते हैं ।।१३३७।

[दु०वृ०]

ताभ्यां सम्प्रदानापादानाभ्यामन्यत्र कारके उणादयो भवन्ति। कृत्त्वादुणादयः कर्तरि प्राप्ताः कर्मादिष्वपि कथ्यन्ते। करोतीति कारुः। वातीति वायुः। कृष्यते इति कृषिः। तन्यते इति तन्तुः।।१३३७।

[समीक्षा]

सम्प्रदान–अपादान कारकों से भिन्न कारक में उणादि प्रत्ययों का विधान दोनों ही व्याकरणों में किया गया है। पाणिनि का सूत्र है— "ताभ्यामन्यत्रोणादयः" (अ० ३।४।७५)। अतः उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१. **कारुः**। कृ+उण्+सि। करोति। 'कृ' से उण् प्रत्यय, ऋकार को वृद्धि-आर् तथा विभक्तिकार्य।

२. **वायुः**। वा+आय्+उण्+सि। वाति। 'वा' धातु से उण् प्रत्यय, आयि आदेश तथा विभक्तिकार्य।

३. **कृषिः**। कृष्+इक् +सि। कृष्यते। 'कृष्' धातु से इक् प्रत्यय, गुणनिषेध तथा विभक्तिकार्य।

४. **तन्तुः**। तन्+तुन्+सि। तन्यते। 'तन्' धातु से तुन् प्रत्यय तथा विभक्तिकार्य।।१३३७।

## १३३८. क्तोऽधिकरणे ध्रौव्यगतिप्रत्यवसानार्थेभ्यः [४।६।५३]

[सूत्रार्थ]

अकर्मक, गत्यर्थक तथा प्रत्यवसानार्थक (भोजनार्थक) धातुओं से अधिकरण-कर्म - कर्ता -भाव अर्थ में 'क्त' प्रत्यय होता है ।।१३३८।

[दु०वृ०]

ध्रुवो निश्चलः, स च क्रियाविशेषणम्, तस्य भावो **ध्रौव्यम्**। अचलात्मक-क्रियात्मकत्वाद् ध्रौव्यार्था अकर्मका उच्यन्ते। प्रत्यवसानं भोजनम्। ध्रौव्यार्थेभ्यो गत्यर्थेभ्यः प्रत्यवसानार्थेभ्यश्चाधिकरणे क्तो वेदितव्यो यथाप्राप्तं च। इदमेषामासितम्, आसितमेभिः, आसितो भवान्, इदमेषां यातम्, इह तैर्यातम्, ग्रामस्तैर्यातः, ग्रामस्ते याताः। अधिकरणं कर्म कर्ता च यथासम्भवं क्तेनोक्तमिति लिङ्गार्थमात्रे प्रथमैव। इदमेषां भुक्तम्, पीतम्। इह

तैर्भुक्त ओदन:, पीतं पय:। भोजनार्थात् कर्तर्यपि स्यादिति व्यवहित: पाठ:। कथं भुक्ता विप्रा:, पीता गाव इति? अन्यत्रापि चेति वचनात् तद्योगाद् अर्शआदित्वाद् वा। देवश्चेद् वृष्ट: सम्पन्ना: शालय इति शालिहेतव: सम्पन्ना इत्यतीतता।।१३३८।

[दु०टी०]

क्तोऽपि०। ध्रौव्यार्था अकर्मका:। प्रत्यवसानार्था इति। प्रत्यवपूर्व: स्यतिर्भोजने वर्तते इति भाव:। भोजनार्थादित्यादि। भावकर्मणो: कृत्यक्तखलर्थास्तदनन्तरमादिकर्मणि क्त: कर्तरि चेति, तत: श्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ततो गत्यर्थाकर्मकाभ्यामधिकरणे च, तत: प्रत्यवसानार्थाच्च। एवं सति क्तध्रौव्यगतिग्रहणं न वक्तव्यं स्यात् , अनन्तरत्वात् तर्हि कर्तरीति। अथोच्यते पृथग्योगकरणमनर्थकं स्यात्, नैवम्। एवमिह प्रकृतं कथं कर्तुरपकर्षो निश्चीयते, अत्र चकारकरणात् तर्हि, प्रतिपत्तिरियं गरीयसीति। किञ्च वरमक्षराधिक्यं न पुनर्योगविभाग: इति कथमित्यादि। अन्यत्रापि चेति। "कृत्ययुटोऽन्यत्रापि" (४।५।९२) इत्यपिशब्दस्य बहुलार्थत्वात् कर्तरि भवति। अथवा पानं पीतं भोजनं भुक्तं यथा दण्डयोगाद् दण्ड: पुरुष इति। पानं पीतं तदस्यास्तीति वा, ननु अविवक्षितकर्मकत्वात् कर्तरि सिध्यति? नैवम्, अनयो: कर्मणो योगाभावे क्तेऽपि तद्भावाद् यथा कृतपूर्वी कटमिति। यथा विप्रा भुक्ता ओदनम्, पीता गावो जलमिति देवश्चेत्यादि कारणे कार्योपचाराद् यथा 'आयुर्घृतम्' इति न दोष:।।१३३८।

[वि०प०]

क्तो०। इदमेषामासितमिति। अधिकरणवाचिना क्तान्तेन सम्बन्धविवक्षया षष्ठी। आस्यतेऽस्मिन्निति विगृह्याधिकरणे क्त:। "आदिकर्मणि क्त: कर्तरि च" (४।६।४८) इति तदनन्तरम् "श्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" इति, तत: "अधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्य:" इति कृते पूर्वस्मिन् गत्यर्थाकर्मकग्रहणम्, इह च क्तग्रहणं कृतं स्यादित्याह— भोजनार्थादित्यादि। यथैव हि ध्रौव्यगत्यर्थाभ्यां कर्तरि च भवति तथा प्रत्यवसानार्थाच्च स्याद् एकयोगत्वात्। अथ प्रत्यवसानार्थाच्चेति पृथग् योग: करिष्यते, ततोऽधिकरणे इह चकाराच्च यथाप्राप्तत्वाद् भावकर्मणोरपि चेत् 'वरमक्षराधिक्यं न पुनर्योगविभाग:' इति। व्यवहित: पाठ इति "दाशगोघ्नौ सम्प्रदाने" (४।६।५०) इत्यादिभिस्त्रिभिर्योगैर्व्यवहितेऽस्य सूत्रस्य पाठ इत्यर्थ:।

अत्र ध्रौव्यार्थेभ्योऽधिकरणभावकर्तृषु गत्यर्थेभ्योऽधिकरणभावकर्तृकर्मसु प्रत्यवसानार्थेभ्योऽधिकरणभावकर्मसु क्तो दर्शित:, यथाप्राप्तं चेति वचनात्। कथमिति। "कृत्ययुटोऽन्यत्रापि च" (४।५।९२) इत्यपिशब्दस्य बहुलार्थत्वात्। भुञ्जते स्म, पिबन्ति स्मेति कर्तर्यपि भवति। तद्योगादिति। अथवा भोजनं भुक्तम्, पानं पीतमिति भाव एव प्रत्यय:। भुक्तयोगात् पीतयोगाच्च विप्रा गावश्च भुक्ता: पीता उच्यन्ते। यथा

दण्डयोगाद् दण्डः पुरुष इति। अर्शआदित्वाद् वेति। अर्शआदित्वादस्त्यर्थे भुक्तं पीतं वा एषामस्तीति अत्-प्रत्ययो वा। एवं भुक्ता विप्रा ओदनम्, पीता गावो जलम् इत्यपि भवति। यथा कृतपूर्वी कटमिति। देवश्चेदिति। कारणे कार्योपचाराद् यथा 'आयुर्घृतम्' इति। अतोऽतीतें क्तप्रत्ययो न दुष्यतीति॥१३३८।

[क०त०]

क्तोऽधिकरणे०। तद्योगादिति पृथगेवायं सिद्धान्तः। शालिंहेतव इति। वृष्ट्यनन्तरकाले शालिसम्पत्त्यभाव इत्युपचारः क्रियते। बहुकालानन्तरं शालिसम्पत्ति-समये प्रयोगे पुनः सुतरां शालयः सम्पन्ना इति सिध्यत्येव। ननु कर्मणोऽविवक्षा-यामकर्मकत्वादेरेव भविष्यति किं गत्यादिग्रहणेन। न च वक्तव्यम्-पश्चात् कथं कर्मवद्-भाव इति कृतपूर्वी कटमित्यादौ पश्चात् कर्मविवक्षाया दृष्टत्वादिति चेत्, नैवम्। यस्मादकर्मकविवक्षायां भावप्रत्यये कृते सति अकर्मकविवक्षाया युक्तत्वम्, भावे धात्वर्थकृता व्याप्तिरस्तीति न्यायात्। न त्वधिकरणादौ अकर्मकविषयप्रत्यये कर्मविवक्षा युक्तिमतीति। अन्यथा अकर्मकग्रहणस्य व्यावृत्तिरेव कुत्र भविष्यतीति। टीकायामन्य आह— इति तन्मते पारिभाषिकोऽयमर्थ इति॥१३३८।

[समीक्षा]

अकर्मक आदि धातुओं से अधिकरण आदि अर्थों में 'क्त' प्रत्यय का विधान दोनों ही व्याकरणों में किया गया है। पाणिनि का सूत्र है— "क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः" (अ० ३।४।७६)। इस प्रकार उभयत्र समानता है।

[विशेष वचन]

१. अचलात्मकक्रियात्मकत्वाद् ध्रौव्यार्था अकर्मका उच्यन्ते (दु० वृ०)।

२. प्रतिपत्तिरियं गरीयसी (दु० टी०)।

[रूपसिद्धि]

१. इदमेषाम् आसितम्। आसितम् एभिः। आसितो भवान्। आस्+इट्+क्त+सि। 'आस उपवेशने' (२।४५) धातु से क्रमशः अधिकरण, भाव तथा कर्ता अर्थ में प्रकृत सूत्र द्वारा 'क्त' प्रत्यय, इडागम तथा विभक्तिकार्य।

२. इदमेषां यातम्। इह तैर्यातम्। ग्रामस्तैर्यातः। ग्रामस्ते याताः। 'या प्रापणे' (२।१६) धातु से अधिकरण, कर्म, कर्ता अर्थों में 'क्त' प्रत्यय तथा विभक्तिकार्य।

३. इदमेषां भुक्तम्। इह तैर्भुक्त ओदनः। 'भुज्' धातु से अधिकरण-कर्म अर्थों में 'क्त' प्रत्यय तथा विभक्तिकार्य।

४. इदमेषां पीतम्। इह तैः पीतं पयः। 'पा पाने' (१।२६४) धातु से अधिकरण -कर्म अर्थों में 'क्त' प्रत्यय तथा विभक्तिकार्य॥१३३८।

# १३३९. युवुझामनाकान्ताः [४।६।५४]

[सूत्रार्थ]

'यु' को अन, 'वु' को अक तथा 'झ' को अन्त आदेश होता है।।१३३९।

[दु०वृ०]

एषां स्थाने 'अन-अक-अन्त' इत्येते आदेशा भवन्ति यथासङ्ख्यम्। नन्दनः, पाचकः, गण्डयन्तः, मण्डयन्तः। "गण्डिमण्डिजिनन्दिभ्यो झच्" (कात०उ०३।१६)। कथं भुज्युः, मृत्युः? "भुजिमृङ्भ्यां युक्त्युकौ" (कात० उ० २/३४)। औणादिकस्य बहुलत्वात् कृदधिकाराच्च। ऊर्णाः सन्त्यस्य ऊर्णायुः।।१३३९।

[वि०प०]

युवु०। ऊर्णायुरिति। ऊर्णाशब्दादस्त्यर्थे युस्तद्धित इति।।१३३९।

[क०त०]

यु०। वृत्तौ मृत्युरिति पाठो नास्ति, मृङस्त्यको विधानादिति कश्चित्। युक्-त्युक्प्रत्यययोरपि युर्विद्यते इति कथमस्य नान इत्यर्थो निगदित इत्यन्यः।।१३३९।

[समीक्षा]

शर्ववर्मा तथा पाणिनि दोनों ने ही 'यु-वु-झ' प्रत्ययों के स्थान में क्रमशः 'अन-अक-अन्त' आदेश किए हैं। पाणिनि के एतदर्थ दो सूत्र हैं— "युवोरनाकौ, झोऽन्तः" (अ० ७।१।१,३)। इस प्रकार पाणिनीय सूत्रद्वयप्रयुक्त गौरव के अतिरिक्त उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१. नन्दनः। नन्द्+यु-अन+सि। 'टुनदि समृद्धौ' (१।२५) धातु से "नन्द्यादेर्युः" (४।२।४९) सूत्र द्वारा 'यु' प्रत्यय, प्रकृत सूत्र से 'यु' को 'अन' आदेश तथा विभक्तिकार्य।

२. पाचकः। पच्+वुण्-अक+सि। 'डु पचष् पाके' (१।६०३) धातु से "वुण्-तृचौ" (४।२।४७) सूत्र द्वारा 'वुण्' प्रत्यय, प्रकृत सूत्र से 'वु' को 'अक' आदेश, उपधादीर्घ तथा विभक्तिकार्य।

३-४. गण्डयन्तः। गण्ड्+झच्-अन्त+सि। मण्डयन्तः। मण्ड्+झच्-अन्त+सि। 'गडि वदनैकदेशे' (१।१३१) तथा 'मडि भूषायाम्' (१।१०३) धातुओं से "गण्डिमण्डिजिनन्दिभ्यो झच्" (कात० उ०३।१६) सूत्र द्वारा 'झच्' प्रत्यय, प्रकृतसूत्र से 'झ' को 'अन्त' आदेश, इडागम, गुण, अयादेश तथा विभक्तिकार्य।।१३३९।

## १३४०. समासे भाविन्यनञः क्त्वो यप् [४।६।५५]

[सूत्रार्थ]

नञ्भिन्न अव्यय का क्त्वाप्रत्ययान्त शब्द के साथ समास होने पर क्त्वा प्रत्यय के स्थान में 'यप्' आदेश होता है।।१३४०।

[दु०वृ०]

नञोऽन्यस्याव्ययस्य क्तान्तेनैव समासे भाविनि क्त्वाप्रत्ययस्य यबादेशो भवति। प्रणम्य, आपृच्छ्य, प्रदीव्य, अपेत्य, अधीत्य। भाविग्रहणमुपदेशयबर्थम्, तेन पञ्चमोपधाप्रभृतीनां दीर्घादयो न स्युः, तोऽन्तश्च स्यात्। खाट्कृत्य, कन्यामलंकृत्य, सत्कृत्य, असत्कृत्य, अन्तर्हत्य, कणेहत्य, मनोहत्य? पयः पिबति, यावत् पिबति तावत् तृप्त इत्यर्थः। पुरस्कृत्य, अस्तंकृत्य, अच्छगत्य, अच्छव्रज्य, अच्छोद्य, अदः-कृत्य चिन्तयति, तिरोभूय, तिरस्कृत्य, उपाजेकृत्य, अन्वाजेकृत्य, साक्षात्कृत्य, मध्येकृत्य, पदेकृत्य, निवचनेकृत्य, उरसिकृत्य, मनसिकृत्य, हस्तेकृत्य, पाणौकृत्य, प्राध्वंकृत्य, उपनिषत्कृत्य, जीविकाकृत्य।

अनुकरणं च कृता भूषणादरानादरेष्वलं सदसत्। अग्रहणेऽन्तस्तृप्तौ च कणेमनसी पुरोऽस्तं च। अच्छ च गत्यर्थवदिभिरनुपदेशेऽदस् तिरोऽन्तर्द्धौ तिरस् उपाजेऽन्वाजे। साक्षात्प्रभृतीनि च कृञा वा। मध्ये पदे निवचने। अनत्याधान उरसि मनसि। नित्यं हस्ते पाणावुद्वाहे बन्धने प्राध्वम्। उपनिषदौपम्ये जीविका च पूर्वे समस्ताश्च। समास इति किम्? तिरः कृत्वा, उपाजे कृत्वा। अनञ इति किम्? अकृत्वा। पर्युदासोऽयम्। तेन ससंख्यात्र स्यात्-परमकृत्वा।।१३४०।

[दु०टी०]

समासे०। नञोऽन्यस्येत्यादि। पर्युदासोऽयमिति वक्ष्यति '**नञिव युक्तमन्य-सदृशाधिकरणे तथा ह्यर्थगतिः**' (का० परि० ४९) इत्यव्ययो गम्यते। ननु समासे क्त्वेति वचनात् तदन्तेन धातुना गम्यते इत्याह— क्त्वान्तेनेत्यादि। समास इति विषयसप्तमी न भावसप्तमी, भविष्यति हि भाविनीति वचनात्। अथवा नञोऽन्यस्य समास इति विषये क्त्वा यब् भवति। स्नात्वा कालकः, पीत्वा स्थिरक इति वाक्यम्, तथा स्नात्वा कालको भवति, पीत्वा स्थिरको भवतीति गम्यमानत्वाद् भवतिर्न प्रयुज्यते कुतश्चोद्यं पूर्वस्यापि स्यादिति। अथवा अनञ इति पञ्चमी नञोऽन्यस्मा-दव्ययात् परस्य क्त्वो यबिति वचनाद् धातुव्यवधानेऽपि भवति। **कश्चिद्** आह–– समास इति। निर्धारणे सप्तमी जातावेकवचनम्, तदा धात्वपेक्षया बहुत्वमस्तीति न निर्धारणं विरुध्यते सूत्रत्वाद् बहुवचनस्य स्थाने एकवचनं वा समासेषु मध्ये क्त्वान्तस्य यबादेशो निर्दिष्टस्य क्त्वाप्रत्ययस्य कृदधिकारात् कृञः क्त्वेति, सूत्रत्वादेव षष्ठ्यर्थे सप्तम्येकवचनं समासस्य क्त्वान्तस्येत्यर्थस्तदिह न प्रयोजयति भावीत्याद्यन्तरङ्गम्, पुनरेषामेकपदाश्रयत्वाद् यबादेशस्य तु बहिरङ्गत्वसमाश्रयत्वात्।

दीर्घादिषु कृतेषु प्रणम्येत्यादीनि न सिध्यन्ति। न च 'निमित्ताभावे नैमित्तिकस्याप्यभाव:' (का० परि० २७) इति 'असिद्धं बहिरङ्गमन्तरङ्गे' (का० परि० ३३) इति न्यायात्। एवं चेत् तर्हि भाविग्रहणं किमर्थम्, यपि च "अदो जग्धि:" (४।१।८२) इत्यत्र यब्ग्रहणमन्तरङ्गं भविष्यतीति? सत्यम्, धुट्यगुणे जग्धौ सिद्धे यपि चेति यदाह तज्ज्ञापयत्याचार्य:– दीर्घादीन् बहिरङ्गो यब् बाधत इति। तथा च तत्र स्वमतसाधनार्थं परमतमाह— तथा चेति। परो ब्रूते जग्धिरपि यत् तत् कस्मात् सिद्धम् "अदस्ति किति" (अ० २।४।३६) विधानात्। क्त्वेति ककार: सुखप्रतिपत्त्यर्थ:, पकारस्तागमार्थ:। आर्याबन्धेनोदाहरणं क्रमेण दर्शयति– अनुकरणमित्यादि। 'खाडिति कृत्वा निष्ठीवति' इतिशब्देन व्यवधानान्न स्यात्। अलं सदसदिति। भूषणेऽलमादरे सत्, अनादरेऽसदिति यथासङ्ख्यम्। अन्तर्ग्रहणेऽर्थे ग्रहणं स्वीकरणं तस्मादन्यद् अग्रहणम्। 'कणे-मनसि' सप्तम्यन्तप्रतिरूपकौ तृप्तावर्थे। अग्रार्थे पुरस्शब्द:, अनुपलब्ध्यर्थेऽस्तंशब्द:। अच्छशब्दोऽभिशब्दार्थे गत्यर्थैर्वदिना च। अनुपदेशो बुद्ध्या परामर्शनम्, अदस्शब्दोऽव्ययमेवात्र न त्यदादिपठित इति। अन्तर्द्धाविति। अन्तर्द्धिर्व्यवधानम्। तत्र तिरस्, 'उपाजे- अन्वाजे' शब्दौ विभक्तिप्रतिरूपकौ। दुर्बलस्य सामर्थ्याधाने वर्तेते। साक्षात्प्रभृतय इह गृह्यन्ते। क्त्वान्तानां नित्यसमासोऽभिधानात्। अथ सह तिरसा वर्तन्ते इति सतिरांसि। उपाजे-अन्वाजे-साक्षात्प्रभृतीनि कृतद्वन्द्वानि करोतिना वेत्यर्थ:।

साक्षात्, मिथ्या, चिन्ता, भद्रा, रोचना, अमा, आस्था, अस्ना, अद्धा, प्राजर्या, प्राजरुहा, बीजर्य्या, बीजरुह, प्रवाहा, समुसर्य्या, लवणमुष्णं च, शीतम् उदकम्, आर्द्रम्, लवणमादय: स्वभावान्मान्ता:, अग्लौ, वशे, विकपने, विहसने, प्रकपणे, प्रहसने सप्तम्यन्तप्रतिरूपका:, एते प्रादुस्-आविस्-नमस्-मध्ये-पदे-निवचने-शब्दाश्च सप्तम्यन्तरूपका इति साक्षात्प्रभृतीनि।

वचनानामभावो निवचने, अत्याधानमुपश्लेषस्ततोऽन्यत्रेति हस्तिन: पदे कृत्वा शिर: शेते। आर्यासमाप्तिं यावत् कृञोऽधिकार:। उरसि मनसीति। उरसि कृत्वा अभ्युपगम्येत्यर्थ:, मनसि कृत्वा निश्चित्येत्यर्थ:। अनत्याधान इति किम्? उरसि कृत्वा पाणिं शेते। नित्यं हस्ते पाणावुद्वाहे इति नित्यशब्दो वानिवृत्त्यर्थ:। उद्वाहो दारकर्म। प्राध्वमव्ययमानुकूल्ये वर्तते तदेवानुकूल्यं बन्धननिमित्तं यदा भवति, इह न स्यात् प्राध्वं कृत्वा शकटं शकटस्यानुकूल्यम् अध्वनिबन्धनहेतुकम्। उपनिषच्छब्द औपम्ये जीविकाशब्दश्चौपम्ये इत्यर्थ:। उपनिषदमिव जीविकामिव कृत्वेत्यर्थ:। एते पूर्वोक्ता अव्यया: सर्वे त्याद्यन्तात् कृदन्ताच्च यथानिर्दिष्टा: पूर्वे वेदितव्या:। समस्ताश्च कृद्भिरितीह व्यवस्थाया अभिधानत इति।

एवम् ऊर्यादयश्च। ऊरी-ऊररीशब्दावङ्गीकारे विस्तारे च। ऊरीकृत्य ऊररीकृत्य वदति। पाणीकृत्य, तालीकृत्य? अतालीकृत्य, वेतालिकृत्य, घुषिकृत्य, सकलीकृत्य। सकलादयो हिंसायाम्। गुलगुधा पीडार्थे, गुलुगुधाकृत्य। सजुः सहार्थे, सजुःकृत्य, फलूकृत्य, फलीकृत्य, आक्लूकृत्य। फलादयो विकारे। आलम्बीकृत्य, केवालीकृत्य, देवालीकृत्य, वाङ्गालीकृत्य, मसमसाकृत्य, समसमाकृत्य, आलम्ब्यादयो हिंसायाम्। श्रौषट्कृत्य, वौषट्कृत्य, स्वाहाकृत्य, स्वधाकृत्य, प्रादुष्कृत्य। एवं च्व्यन्ता डाजन्ताश्च। शुक्लीकृत्य, पटपटाकृत्य।।१३४०।

[वि०प०]

समासे०। नञोऽन्यस्येति। पर्युदासोऽयमिति वक्ष्यति। स च सदृशग्राहीति। नञोऽन्यस्याव्ययस्येत्यर्थः। क्तप्रत्ययस्य श्रुतत्वात् तदन्तेनापि धातुना समासो गम्यते इत्याह— क्तान्तेनैवेति। तेन स्नात्वाकालकः, पीत्वास्थिरकः इति समासेऽपि पूर्वस्य क्त्वो यप् न भवतीति। यस्तु मन्यते वाक्यमेवेदं न समासः। स्नात्वाकालको भवति, पीत्वास्थिरको भवतीति गम्यमानत्वात् तदा देश्यमेव नास्तीति भावीत्यादि। भविष्यतीति भावी समासः। तस्मिन् विषये यबादेशो भवन् समासनिष्पत्तेः प्राग् उपदिश्यमानस्येव क्त्वो यबित्यर्थः, तेन तकारस्य धुटः क्षणमपि स्थितेरभावात् "पञ्चमोपधाया धुटि चागुणे" (४।१।५५) इति दीर्घत्वम्। वनतितनोत्यादिना पञ्चमलोपः, आतश्चाद् भवतीति "च्छ्वोः शूटौ पञ्चमे च" (४।१।५६) इति न भवति तोऽन्तश्च स्यादिति। दीर्घत्वादेरिवोपसर्गसम्बन्धादपि प्राग् भविष्यति। समासे यपि कृते तोऽन्त इत्यर्थः। नन्वत्र साधनायत्तत्वात् क्रियायाः प्रत्ययकार्यमेवेत्युक्तम्? सत्यम्। किन्त्वेतस्मिन् सति तदुक्तम्, अन्यथा समासानन्तरं यबिति कथमुपसर्गसम्बन्धः पूर्वं न स्यात् समासस्योभयपददर्शितत्वादिति।

खाट्कृत्येत्यादीनामुदाहरणानामार्याभिरभिधानव्यवस्थामाह— अनुकरणं च कृतेति। पूर्वे समस्ताश्चेति वक्ष्यति, तेनायं सम्बन्धः। अनुकरणं त्याद्यन्तात् कृदन्ताच्च पूर्वं निपतति, कृता कृदन्तेन च समस्यते। चकारात्र केवलम् अनुकरणम् प्रादय उपसर्गाश्चेति सूचयति। एवमुत्तरत्रापि। खाडिति कृत्वा निष्ठीवतीत्यत्र न भवति इतिशब्देन व्यवधानात्। भूषणेति। भूषणं मण्डनं तत्रालम्, आदरः प्रीत्या सम्भवः, तत्र सत्। अनादरः परिभवः, तत्रासत्। यथोक्तार्थादन्यत्र न भवति। अलं कृत्वा, न कर्तव्यमित्यर्थः। सत् कृत्वा, विद्यमानमित्यर्थः। असत् कृत्वा, अविद्यमानमित्यर्थः। अग्रहणेऽन्तरिति। ग्रहणं स्वीकारस्ततोऽन्यद् अग्रहणम्। ग्रहणे न भवति। अन्तर्हत्वा मूषिकं गतः, श्येनो गृहीत्वा गत इत्यर्थः। तृप्तौ चेति। चकार आर्यापूरकः। कणे इति सप्तम्यन्तं प्रतिरूपकमेवाव्ययम्। मनश्च तृप्तावर्थे। तृप्तेरन्यत्र न भवति। तण्डुलस्य कणे हत्वा मनो हत्वा गतः। मनश्चित्तमित्यर्थः। पुरोऽस्तं चेति पुरस् इत्यग्रार्थे सान्तमव्ययम्,

तमित्यनुपलब्धौ, अन्यत्र न भवति। पुरः कृत्वा, नगरीः कृत्वेत्यर्थः। अस्तं कृत्वा, तमित्यर्थः। अच्छ चेति। अच्छशब्दोऽभिशब्दार्थेऽव्ययः। वदिना च चकार यापूरणे। गत्यर्थवदिभिरिति किम्? अच्छ कृत्वा। अव्ययादन्यत्र न भवति, कमच्छं गत्वा। अनुपदेशेऽदसिति। स्वबुद्ध्या परामर्शोऽनुपदेशः। अव्ययोऽयमदः-दो न त्यदादिपठितः। अन्यत्र अदः कृत्वा कुण्डं गतः, परस्य कथयेत्यर्थः।

तिरोऽन्तर्द्धाविति। अन्तर्द्धिर्व्यवधानम्। अन्यत्र तिरो भूत्वा स्थितः। अनृजुर्भूत्वा तः। पार्श्वतः तिर्यग् भूत्वा इत्यर्थः। कृञो विभाषाऽस्य वक्ष्यते इत्यत्रोदाहृतम्। रसिति। अन्तर्द्धौ वर्तमानस्तिरःशब्दः। 'उपाजे-अन्वाजे' शब्दौ विभक्त्यन्त-रूपकौ दुर्बलस्य बलाधाने वर्तमानौ। वेति विभाषयेत्यर्थः। पक्षे तिरस्कृत्वा, जेकृत्वा, अन्वाजेकृत्वा।

साक्षात्प्रभृतीनि च्व्यर्थवृत्तीनि अच्व्यन्तानि गृह्यन्ते। असाक्षात् साक्षात् करोति ात्कृत्वा। एवम् अमिथ्या मिथ्या करोति मिथ्याकृत्वा। च्व्यन्तानां तु नित्यसमास भिधीयते साक्षात्कृत्य। यदा तु न च्व्यर्थवृत्तिता किन्तर्हि साक्षात्कृतस्य क्षतामुपगतस्यैव किञ्चिदन्यत् क्रियते, तदा साक्षात्कृत्वेत्येतदेव स्यात् न यप् साभावात्। साक्षात्, मिथ्या, चिन्ता, भद्रा, रोचना, अमा, आस्था, अस्ना न्ना), प्राजर्या, प्राजरुहा, बीजर्या, बीजरुहा, संस्सर्या, अर्थे (अग्लौ), अग्नौ वशे, पने, प्रकपने,विहसने, प्रहसने। एते सप्तम्यन्तप्रतिरूपकाः। लवणम्, उष्णम्, म् , उदकम् , आर्द्रम्। एते स्वभावान्मान्ताः। नमस्, प्रादुस्, आविस्। इति ात्प्रभृतीनि। एषां यथादर्शनमर्थः कथ्यते— साक्षात् प्रत्यक्षे सादृश्ये च। मिथ्या तार्थे। चिन्ता मानसव्यापारे। भद्रा आलोचनप्रशंसायाम्। रोचना दीप्तिप्रशंसयोः। नेति केचिद् दीप्तौ पठन्ति। अमा रहःसमवायसहयोगसामर्थ्येषु। आस्था आदरे ज्ञायां च। अस्ना निर्मलीकरणे। केचिद् अप्नेति पाठं मन्यन्ते। घस्लृ अदने इत्यस्य न्तस्य नञ्समासे आकारान्तो निपात इति तदास्यार्थान्तरानभिधानात् यर्थवृत्तितैव गम्यते, तथा प्राजर्यादीनां चतुर्णाम्। तथाहि सङ्गतार्थस्य र्याशब्दस्य प्रादिसमासे प्राजर्येति निपातः। कैश्चिद् अत्र प्राजुरेत्यभिधीयते। प्रपूर्वाद् : कुरप्रत्यये रूपं प्राजरुहेति। प्राजपूर्वाद् रुहेर्मूलविभुजादित्वात् कः। बीजर्येति। ार्येति समासे आर्याशब्दस्याकारलोपो निपातनात्।

बीजरुहेति। बीजाद् रोहतीति पूर्ववत् कप्रत्ययः। गणपाठाच्चैषामव्ययानामा-न्तता। संसर्या प्रयोजने संवरणे च, अर्थे शब्दः प्रयोजने निवृत्तौ च। अग्लौ तैक्ष्ण्ये, अस्वातन्त्र्ये, विकपने प्रकपने च वैरूप्ये। विकपने हिंसायां प्रकपने सन्तापे इत्येके। ने उत्साहे सामर्थ्ये च तथा प्रहसन इति। लवणं रुच्यर्थे, उष्णमभिनवे, नादरे, उदकं क्लेदे द्रव्ये च। आर्द्रं सोदकाभिनवयोः, नमस् प्रणामे, प्रादुस् स् प्राकाश्ये। एतेऽर्थाः प्रसिद्धाः। प्रयोगानुसारेणान्येऽप्युदाहरणीयाः। अत एव

साक्षात्प्रभृतीनां वृत्तावर्थो न दर्शितः। अलमादीनां भूषणादय इवेति। मध्य इति। कृञेति सर्वत्रानुवर्तते। वेतीति नित्याबाधे। एते पाणौपर्यन्ताः सप्तम्यन्तप्रतिरूपका अव्ययाः। पक्षे मध्येकृत्वा, पदेकृत्वा। वचनानामभावो निवचनम्-निवचनेकृत्वा। वाचं नियम्येत्यर्थः। अत्याधानमुपश्लेषः, ततोऽन्यदनत्याधानं तस्मिन्निति। अन्यत्र न भवति— हस्तिनः पदेकृत्वा शिरः शेते।

उरसीति। उरसिकृत्य, अभ्युपगम्येत्यर्थः। मनसिकृत्य, निश्चित्येत्यर्थः। अनत्याधान इत्येव- उरसि कृतवा पाणिं शेते। उद्वाहो विवाहः। बन्धन इति। प्राध्वमव्ययमानुकूल्ये वर्तते, तच्चेदानुकूल्यं बन्धनहेतुकं भवति। बन्धेन हेतुना भवतीत्यर्थः। इह न भवति 'प्राध्वं कृत्वा शकटं गतः' इति। प्रगतोऽध्वानं प्राध्वम् "उपसर्गादध्वन्" (२।६।७३-३२) इति राजादित्वादत्। केचिद् इह लाक्षणिकत्वान्न भवतीत्याशङ्क्य बन्धनग्रहणमनव्ययस्यापि समासार्थं समर्थयन्ते। तेन यदा बन्धनेन शक्यस्याध्वनि सामर्थ्यलक्षणम् आभिमुख्यलक्षणमानुकूल्यं विवक्ष्यते, तदा प्राध्वंकृत्य शकटं गतः इति स्यात्। तदयुक्तम्, अबन्धनहेतुकानुकूल्यनिवृत्तिफलत्वाद् बन्धनग्रहणस्य कथं ज्ञापकत्वम्, कथं वाऽनव्ययस्य मकारान्ततेति चिन्त्यम्। समासे हि द्वितीयालोपोऽस्तीति।

उपनिषदौपम्ये, जीविका चेति। उपनिषदमिव कृत्वा, जीविकामिव कृत्वा इत्यनव्ययवाक्येनार्थकथनम्। उपनिषद् रहस्ये, जीविका जीवनोपाये। पूर्वे समस्ताश्चेति। एतेऽव्ययाः सर्वे धातोः पूर्वे कृतसमासाश्च कृद्भिरित्युक्तमेव। एवम् ऊर्यादिच्विडाचोऽपि वेदितव्याः। 'ऊरीकृत्य, ऊररीकृत्य' एतावङ्गीकरणे विस्तारे च। पाम्पीत्ययं विध्वंसे माधुर्ये च पाम्पीकृत्य। अपरे त्वाहुः— करुणबिलापे पाम्पीकृत्य। 'ताली, आताली' एतौ वर्णे। अपरे एतावुत्तमे इत्याहुः। वेताली वैरूप्ये। केचिन्न पठन्त्येव। धूसी (ली) कान्ते, आकाङ्क्षायामित्यपरे। 'सकला, संशकला, भ्रंशकला, आलम्बी, लोष्टी, केवाली, शेवाली, पर्याली, वर्षाली, सम्मसा' एते दश हिंसायाम्। अपरे सकलादयश्चत्वारः परिभवे। आलम्ब्यादयोऽपि चत्वारः प्राकाश्ये, अन्त्यौ द्वौ चूर्णे संवरणे चेत्याहुः। गुलगुधा पीडायाम्, क्रीडायामित्यपरे। सजूः सहार्थे। 'फल्गु' फली, आक्ली, विक्ली' एते चत्वारो विकारे। अपरे त्वाहुः-आद्यौ क्रीडासम्पत्तौ, अन्त्यौ विकारे, विभागे इत्यन्ये।

'वषट्, श्रौषट्, वौषट्, स्वाहा, स्वधा' एते पञ्च हविर्दाने। अन्ये सामान्येन देवतासम्प्रदाने विशेषस्तु वषट् अग्नये, स्वधा पितृभ्य इत्याहुः। इतरे वषट् पूजायाम्, स्वधा तृप्तिप्रीत्योरित्याहुः। अन्ये प्रीत्यभिवादने चेत्याहु;। श्रत् श्रद्धायां दधातिप्रयोगेषु युज्यते श्रद्धाय श्रद्धां कृत्वा इत्यर्थः। प्रादुस् आविस् प्राकाश्ये। इत्यूर्यादयः। 'प्रादुस्-आविस्' शब्दौ साक्षात्प्रभृतिषु पठ्येते। तेनानयोः कृञा वा समासो भवति-प्रादुष्कृत्य

ादुष्कृत्वा। आविष्कृत्य, आविष्कृत्वा। अत्र प्रादुराविषो: पाठ: कृञोऽन्यत्र नित्यार्थ:। ्वं प्रादुर्भूय, आविर्भूय। एवं च्व्यन्ता डाजन्ताश्च— शुक्लीकृत्य, पटपटाकृत्य। च्व्डाचौ कृभ्वस्तिष्वभिधीयेते, ऊर्यादयोऽपि तेभ्य एव प्राक् सिद्धा इत्युक्तम्। ्तरस्कृत्वा, उपाजेकृत्वेति। सतिरस् इत्यादिना विकल्पविधानादिह पक्षे समासो न भवति।।१३४०।

[क०त०]

समा०। क्त्वान्तेनैवेति। परभूतेन क्त्वान्तेन नञ्भिन्नस्याव्ययस्य पूर्ववर्तिन इति, तु पूर्ववर्तिना क्त्वान्तेनेति **विशेषणविशेष्यभावस्य प्रयोक्तुरायत्तत्वात्**। दीर्घादिकं न ्यादिति। ननु तथापि किमर्थं भाविग्रहणं निमित्ताभावे नैमित्तिकस्याप्यभावो भविष्यति। ्वम्, 'असिद्धं बहिरङ्गमन्तरङ्गे' (का० परि० ३३) इति न्यायाद् दीर्घादे: स्थिति: ्यात्। तथाहि अन्तरङ्गे नैमित्तिकाभावे कर्तव्ये बहिरङ्गो यबसिद्ध: स्यादिति ्डादिर्भवत्येवेति भाविग्रहणम्। यद् वा 'उपेत्य' इत्यादौ प्राक् समासे पश्चाद् यपि सति ्त्वान्तत्वाभावात् तकारागमो न स्यात्। एतदर्थं क्रियमाणमन्यदपि विषयीकरोतीति ्भाविग्रहणस्थितौ समासस्य भावित्वं यब्विधानस्य पूर्वत्वं ततश्च तकारागमादेरपि ्र्वत्वं बोध्यम्। अन्यथा समासाद् यप: पूर्वत्वे को लाभ:।

पञ्च्यां तेनेत्यादि। ननु यथा क्त्वान्तेन समासस्तथाव्ययेनापि भवति, तत् कथं ्त्युदाहरणं संगच्छते? सत्यम्, चिन्त्यमेतदिति दुर्गादित्य:। सान्तयोरव्यययो— ्हणमिति अन्य:। वस्तुतस्तु प्रसज्यार्थे नञि गृह्यमाणे सति नञोऽभावे क्त्वान्तेन ्मासे सति यप् स्यादिति सूत्रार्थ: स्यात्। तथा च सत्यत्रापि स्यात्। पर्युदासे तु नञ: ्दृशस्य क्त्वान्तेन समासे यप् स्यादित्यर्थे नञ्सदृशस्य पूर्वत्वं क्त्वान्तस्य परत्वमिति ्मो लभ्यते। तेनात्रापि स्यादित्याह— तेनेति। तेन पर्युदासेन नञा सिद्धमित्यन्वय:। ्नु नञ् प्रसज्यवृत्ति: कथन्न स्यादिति चेद् न, अनञ इति समासदर्शनात्? अन्यथा ्सज्यनञ: क्रियासम्बन्धात् समासाभाव: स्यात्। यस्तु प्रसज्येऽपि क्वचित् समासो ्श्यते, स तु न सर्वत्र। अकर्तरीत्यत्र कारकग्रहणेन ज्ञापितत्वात्।

भूषणेत्यादि। यथासंख्यादिति पूर्वेणैव संगच्छते, अन्यथा एकस्यार्थद्वये ्र्तमानत्वेऽपि प्रतिषेधार्थ:। 'अलङ्कृत्वा' इत्यत्र न भविष्यति। ननु भाविग्रहणं किमर्थं **यपि चादो जग्धि:''** (४।१।८२) इत्यत्र यप्ग्रहणम् अन्तरङ्गबाधकं भविष्यतीत्याह- ्टीकायामेवं चेत् तर्हीति।

[पाठान्तरम्-स्वमतसाधनार्थं परमतमाह— तथा चेति। ल्यबिति परमते यप: ्ञ्ज्ञा, तीति तादावित्यर्थ:। कितीति। कानुबन्ध इत्यर्थ:। अर्द्धार्यया देश्यमुक्त्वा पर: ्नद्धान्तयति इडिति इट्प्रभृतीनामपि यप् बाधक: स्यादित्यर्थ:। तत: कृतमिति ल्यब्- ्ग्रहणं कृतमित्यर्थ:। भाविग्रहणं कृतमित्यर्थं कुर्वन्त्यन्ये। तत्सिद्धेरिति। तेषामिट्-

प्रभृतीनां सिद्धेरित्यर्थः। इट्प्रभृतयोऽपि सिद्धा भवन्तु इत्यर्थ इति यावत्! परमतं दूषयति— नैवमिति। स्वमतमाह-एतेष्वित्यादि। एतेषु क्त्वामात्रस्य यप् स्यात्, किन्तु इटः स्थितिः स्यादित्यर्थः। निर्दिश्यमानमनादृत्याह— अथ कथञ्चिदित्यादि। तथाप्यसिद्धमिति न्यायेन सेट्त्वाद् गुणी स्यात् ततश्च सम्प्रसारणाभावः। दीर्घ एवेति, प्रणम्येत्यादाविति शेषः। संप्रसारणं च न स्यादिति प्रव्रश्च्येत्यत्रेति शेषः]।।१३४०।

[समीक्षा]

'प्रणम्य, उपेत्य, अधीत्य' आदि शब्दों की सिद्धि के लिए कातन्त्रकार ने क्त्वा को 'यप्' आदेश तथा पाणिनि ने 'ल्यप्' आदेश किया है। पाणिनि का सूत्र है— "समासेऽनञ्पूर्वे क्त्वो ल्यप्" ( अ० ७।१।३७)। पाणिनि ने लकारानुबन्ध की योजना लित्स्वर के लिए की है, कातन्त्रकार ने स्वरविधान नहीं किया है। अतः उभयत्र समानता ही है।

[विशेष वचन]

१. क्त्वान्तानां नित्यसमासोऽभिधानात् (दु० टी०)।

२. एतेऽर्थाः प्रसिद्धाः, प्रयोगानुसारेणान्येऽप्युदाहरणीयाः (वि० प०)।

३. चिन्त्यमेतदिति दुर्गादित्यः (क० त०)।

[रूपसिद्धि]

१. प्रणम्य। प्र+नम्+क्त्वा-यप्+सि। 'प्र' उपसर्गपूर्वक 'णम प्रह्वत्वे शब्दे च' (१।१५९) धातु से क्त्वा प्रत्यय, समास, क्त्वा को यप् आदेश, 'प्' अनुबन्ध का प्रयोगाभाव तथा विभक्तिकार्य।

२-५. आपृच्छ्य। आङ्+प्रच्छ्+क्त्वा-यप्+सि। प्रदीव्य। प्र+दिवु+क्त्वा-यप्+सि। उपेत्य। उप+इण्+क्त्वा-यप्+सि। अधीत्य। अधि+इङ्+क्त्वा-यप्+सि। आङ्पूर्वक प्रच्छ्, प्रपूर्वक दिव्, उपपूर्वक इण् तथा अधिपूर्वक इङ् धातु से क्त्वाप्रत्यय, समास, यप् आदेश तथा विभक्तिकार्य। 'खाट्कृत्य, अलंकृत्य, सत्कृत्य, असत्कृत्य, अन्तर्हत्य, कणेहत्य, मनोहत्य, पुरस्कृत्य, साक्षात्कृत्य, जीविकाकृत्य' आदि प्रयोगों में भी प्रकृत सूत्र से क्त्वा को यप् आदेश होता है।।१३४०।

## १३४१. चजोः कगौ धुड्घानुबन्धयोः [४।६।५६]

[सूत्रार्थ]

धुट्संज्ञक वर्ण के परे रहते तथा घकारानुबन्ध वाले प्रत्यय के परे रहते चकार-जकार के स्थान में क्रमशः ककार-गकार आदेश होते हैं।।१३४१।

[दु०वृ०]

चजोः कगौ भवतो धुटि घानुबन्धे च प्रत्यये परे। निमित्तेन तु सम्बन्धस्याविवक्षितत्वान्न यथासङ्ख्यम्। पक्ता, भोक्ता। पाकः, भोगः। भुग्नः, रुग्णः। इति नित्यमपि नत्वं अन्तरङ्गत्वाच्चवर्गस्य किरस्ति। अघानुबन्धे कृति व्यावृत्तिः स्यादिति धुड्ग्रहणम्।। १३४१।

[दु०टी०]

चजो:। धुड्घानुबन्धयो: परयोर्धातोश्चजो: कगौ भवत इति विवक्षा धुड्घानुबन्धयोश्चजाविति सम्बन्धस्याविवक्षा इत्याह— चजोरिति। कुतो यथासङ्ख्यमनुदेश: समानामित्यर्थ:। नित्यमित्यादि। परान्नित्यम्, नित्यादन्तरङ्गं बलीय इत्यर्थ:। अन्तरङ्गं पुन: प्रकृत्याश्रयत्वात् तेन चवर्गस्य किरसवर्णे भवतीति कृत्यघानुबन्धे न भवतीति प्रतिपद्येतेति न पुनर्भूतपूर्वधुडवधारणार्थं धुड्ग्रहणम् इत्यर्थ:। निष्ठायामनिटो धातोरिति **कश्चिद्** आह। तेन अर्जसर्जप्रभृतीनां निषेध: सिद्धो भवति, तदसत्। **अभिधानादेव** घ्यण्घञौ न दृश्येते। अत एव न कवर्गादिव्रज्-यजामिति अर्चिशुचिरुचियाचीनां च विशेषप्रतिषेधमाह। किञ्च शुचे: शोक:, रुचे रोक:। निष्ठायां सेटोऽपि कत्वं न दृश्यते, **अभिधानात्**। 'अर्च्य:, अर्च:' इति घ्यणि घञि न भवति। दृश्यते च घञि अर्क:, रुचेर्मक् रुक्म इत्यादि।।१३४१।

[वि०प०]

चजो:। धुड्घानुबन्धयो: परयोर्यो धातुस्तस्य चजो: कगाविति कार्यिकार्ययोरेव यथासङ्ख्यमित्याह– निमित्तेनेत्यादि । धुटि चस्य क:, घानुबन्धे जस्य ग: इति सम्बन्धो न विवक्षित इति। अथ किमर्थं धुड्ग्रहणम्– चवर्गस्य किरसवर्णे इति धुटि कत्वमस्त्येव? सत्यम्। भूतपूर्वधुट्प्रतिपत्त्यर्थम्, तेन **"ल्वाद्योदनुबन्धाच्च"** (४।६।१०४) इति नित्यत्वान्नत्वेऽपि स्यात्, तदयुक्तम् इत्याह— भुग्न इति। परान्नित्यम् , नित्यादन्तरङ्गं बलीय इति भाव:। परिहारमाह— अघानुबन्ध इत्यादि। चजो: कगौ घानुबन्ध इति कृते तृजादौ घानुबन्धे व्यावृत्ति: स्यात्, आख्यातिकलक्षणमपि प्रवर्तितुमर्हति।।१३४१।

[क०त०]

चजो:। सम्बन्धस्याविवक्षितत्वादिति। ननु कथमिदमुच्यते प्रवचर्चिरुचि-याचित्यजामिति घ्यणि कत्वगत्वप्रतिषेधादेव निमित्ताभ्यां कार्ययोर्यथासङ्ख्यं न भविष्यतीति? सत्यम्। तस्मादेव प्रतिषेधवचनाद् विवक्षा, न तु विशेषणविशेष्यभावस्य प्रयोक्तुरायत्तत्वादिति बोध्यम्। किरस्तीति अन्तरङ्गत्वात् कत्वेऽपि कृते 'भुक्न:' इत्येव स्यात्। न च धुटां तृतीय: इत्यादिना तृतीयो भविष्यतीति वाच्यम्, चतुर्थेष्वेवेति नियमात्? सत्यम्, एतदर्थमपि धुड्ग्रहणमिति बोध्यम्। यत्तु घानुबन्धे कृति व्यावृत्ति: स्यादिति प्रयोजनमुक्तं तन्मुख्यतयेति बोध्यम्। कथं तस्य मुख्यतेति चेत्, "चवर्गस्य किरसवर्णे" (३।६।५५) इत्यत्र 'गिरसवर्णे' इति कृते गत्वस्य सिद्धत्वात्।

ननु सिद्धान्ते तु 'भुग्न:' इत्यादौ अन्तरङ्गत्वाद् गत्वे कृतेऽनन्तरत्वाद् "अघोषे प्रथम:" (२।३।६१) कथन्न स्यादिति, न च सकृद्बाधितत्वादिति वाच्यम्, 'भोग:' इत्यादौ चरितार्थत्वात्। न च धुट्प्रत्ययेऽनर्थकता, गकारस्य कत्वेऽपि सार्थकत्वात्। अन्यथा घानुबन्धे कृति व्यावृत्ति: स्यात्? सत्यम्, कत्वे कृते निमित्ताभावे नैमित्तिकस्याप्यभावो भविष्यति।।१३४१।

[समीक्षा]

'वक्ता, भोगः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में चकार को ककार तथा जकार को गकारादेश किया गया है। अन्तर यह है कि कातन्त्रकार ने प्रकृत आदेश साक्षात् किया है, अतः अर्थावबोध में सुविधा होती है, जबकि पाणिनि चवर्ग को कवर्गादेश का विधान करके ज्ञानगौरव ही सिद्ध करते हैं। उनका सूत्र है— "चोः कुः" (अ० ८।२।३०)। इस प्रकार यहाँ कातन्त्रीय उत्कर्ष कहा जाएगा।

[रूपसिद्धि]

१-२. पक्ता। पच्+ तृच्+सि। भोक्ता। भुज्+तृच्+सि। 'पच्-भुज्' धातुओं से "वुण्तृचौ" (४।२।४७) सूत्र द्वारा 'तृच्' प्रत्यय, 'नामिनश्चोपधाया लघोः" (३।५।२) से भुज् धातु की उपधा उकार को गुण, प्रकृत सूत्र से चकार को ककार-जकार को गकार तथा विभक्तिकार्य।

३-४. पाकः। पच्+घञ्+सि। भोगः। भुज्+घञ्+सि। 'पच्-भुज्' धातुओं से 'घञ्' प्रत्यय, उपधादीर्घ-गुण, चकार को ककार— जकार को गकार तथा विभक्तिकार्य।

५-६. भुग्नः। भुज्+क्त+सि। रुग्णः। रुज्+क्त+सि। 'भुज्-रुज्' धातुओं से 'क्त' प्रत्यय, तकार को नकार, प्रकृत सूत्र से जकार को गकार तथा विभक्तिकार्य।।१३४१।

## १३४२. न्यङ्क्वादीनां हश्च घः [४।६।५७]

[सूत्रार्थ]

'न्यङ्कु' इत्यादि शब्दों में 'च्-ज्' को 'क्-ग्' आदेश तथा 'ह्' को 'घ्' आदेश होता है।।१३४२।

[दु० वृ०]

'न्यङ्कु' इत्येवमादीनां चजोः कगौ भवतो हश्च घो भवति। नावञ्चेरुः— न्यङ्कुः। "भृ-मृ-तृ-चरि-त्सरि-तनि-मस्जि-शीङ्भ्य उः" (कात० उ० १।५)- मद्गुः। "प्रथिम्रथिभ्रस्जां सम्प्रसारणं सलोपश्च" (द्र०, कात० उ० १।११)- भृगुः। "स्फायीतन्चिवञ्चीत्यादीनां रक्" (कात० उ० २।१४)— तक्रम्, वक्रम्। असुन्- उच्यतेऽस्मिन्निति ओकः। व्यतिषङ्गः, अवसर्गः, सन्जेः, सृजेश्च पचाद्यच्। श्वपाकः, मांसपाकः, कपोतपाकः, उलूकपाकः। कर्मण्यण्। दूरे पच्यते स्वयमेव, फले पच्यते स्वयमेव- दूरेपाकः, फलेपाकः। पचाद्यच्। गणनिपातनाद् उपधाया दीर्घत्वं सप्तम्याश्चालुक्। क्षणेपाक इति केचित्। फलेपाकः। मेहतीत्यच् मेघो जलद एव। अवदाघः, निदाघः। अर्हतेः अर्घम्, घञि संज्ञायाम्। अन्यत्र अवदाहः, निदाहः, अर्हः।।१३४२।

[वि०प०]

न्यङ्कु०। मद्गुरिति। मस्जेर्जकारस्य गत्वे "धुटां तृतीयः" (२।३।६०) इति सकारस्य दकारः।।१३४२।

[समीक्षा]

'न्यङ्कुः-भृगुः' इत्यादि शब्दरूपों की सिद्धि दोनों ही व्याकरणों में च् को क् तथा ज् को ग् आदेश से की गई है। अन्तर यह है कि कातन्त्रकार साक्षात् चकार को ककार तथा जकार को गकार आदेश करते हैं, जबकि पाणिनि ने चवर्ग को कवर्गादेश का सामान्य निर्देश करके गौरव उपस्थित किया है। उनका सूत्र है— "न्यङ्क्वादीनां च" (अ० ७।३।५३)। इस प्रकार कातन्त्रकार का उत्कर्ष द्रष्टव्य है।

[रूपसिद्धि]

१. न्यङ्कुः। नि+अञ्चु+उ+सि। 'नि' उपसर्गपूर्वक 'अन्चु गतिपूजनयोः' (१।४८) धातु से "नावञ्चेः" (कात०उ० १।१४) सूत्र द्वारा 'उ' प्रत्यय, प्रकृत सूत्र से चकार को ककार, सन्धिकार्य तथा विभक्तिकार्य।

२-३. मद्गुः। मस्ज्+उ+सि। भृगुः। भ्रस्ज्+उ+सि। 'मस्ज्, भ्रस्ज्' धातुओं से 'उ' प्रत्यय, जकार को गकार तथा विभक्तिकार्य।

४-५. तक्रम्। तन्च्+रक्+सि। वक्रम्। वन्च्+रक्+सि। 'तन्च्, वन्च्' धातुओं से 'रक्' प्रत्यय, नलोप, चकार को ककार तथा विभक्तिकार्य।

६-१९. ओकः। वच्+असुन्+सि। व्यतिषङ्गः। वि+अति+सन्ज्+अच्+सि। अवसर्गः । अव+सृज्+अच्+सि। श्वपाकः। श्वन्+पच्+अण्+सि। मांसपाकः। मांस+पच् +अण्+सि। कपोतपाकः। कपोत+पच्+अण्+सि। उलूकपाकः। उलूक+पच्+अण्+सि। दूरेपाकः। दूरे+पच्+अच्+सि। फलेपाकः। फले+पच्+अच्+सि। क्षणेपाकः। क्षणे +पच् + अच्+सि। मेघः। मिह्+अच्+सि। अवदाघः। अव+दह+घञ्+सि। निदाघः। नि+दह्+घञ् +सि। अर्घम्। अर्ह्+घञ्+सि। प्रकृत सूत्र से चकार को ककार, जकार को गकार तथा हकार को घकारादेश॥१३४२।

## १३४३. न कवर्गादिव्रज्यजाम् [४।६।५८]

[सूत्रार्थ]

'कवर्गादि-व्रज्-अज्' धातुघटित चकार को ककार तथा जकार को गकारादेश नहीं होता है॥१३४३।

[दु०वृ०]

कवर्गादेर्व्रजेरजेश्च चजोः कगौ न भवतः। कुजः, खर्जः, गर्जः, प्रव्राजः, उदाजः, आज्यं घृतम्। वन्चेर्गताविति वक्तव्यम्। वच्यत इति वञ्चं गता वणिजः। गन्तव्यं गता इत्यर्थः। गताविति किम्? वङ्क्यं काष्ठम्। वन्चिरत्र कौटिल्ये॥१३४३।

[दु० टी०]

न कव०। कवर्गादिश्च व्रजिश्च अज् चेति द्वन्द्वः। उदाज इति समुदोरजः इत्यस्याविषयत्वाद् भावे घञ्। आज्यमिति। रूढित्वात् तत्र व्यवस्थितवाधिकाराद् वा

अजेर्वीभावो न भवति। केचिन्नोदाहरन्त्येव। आज्यं घृतमेव रूढमिति। राजेश्च वक्तव्यम्- राजः। तथा च राजस्यापत्यं राज्य इति, नैवं रूढित्वात् सिध्यति विशिष्ट एवासौ। अन्य आह— राजेऽसमासे इति गर्गादिषु पाठान्न गत्वमिति राजेर्घ्यण् दृश्यते॥१३४३।

[वि०प०]

न कव०। उदाज इति। "समुदोरजः पशुषु" (४।५।५१) इत्यस्याविषयत्वाद् भावे घञ्। तत्र घञल्क्यप्सु च न स्यादिति वचनादजेर्वीरादेशो न स्यात्। अत एव प्रतिषेधाद् वा। तथा आज्यमिति घ्यणि वीर्न भवति रूढत्वात्। वक्तव्यमिति। अभिधानादिति हेतुः ॥१३४३।

[समीक्षा]

'कुजः, समाजः, परिव्राजः' आदि शब्दरूपों की सिद्धि के लिए दोनों ही व्याकरणों में 'क्-ग्' आदेशों का निषेध किया गया है। अन्तर यह है कि कातन्त्रकार ने एक ही सूत्र द्वारा 'च्' के 'क्' तथा 'ज्' के 'ग्' आदेश का निषेध किया है, परन्तु पाणिनि ने दो सूत्रों में 'च्-ज्' के कवर्गादेश का निषेध करके गौरव को ही आश्रय दिया है। पाणिनि के सूत्र हैं— "न क्वादेः, अजिव्रज्योश्च" (अ० ७।३।५९, ६०)। इस प्रकार कातन्त्र में उत्कर्ष कहा जा सकता है।

[रूपसिद्धि]

१-७. **कुजः**। कुज्+घञ्+सि। **खर्जः**। खर्ज्+घञ्+सि। **गर्जः**। गर्ज्+घञ्+सि। **प्रव्राजः**। प्र+व्रज्+घञ्+सि। **उदाजः**। उद्+अज्+घञ्+सि। **आज्यम्**। अज्+घ्यण्+सि। **वञ्च्यम्**। वन्च्+घ्यण्+सि। 'वञ्च्यम्' में चकार को ककारादेश तथा शेष छह प्रयोगों में जकार को गकारादेश प्रकृत सूत्र द्वारा नहीं हुआ है॥१३४३।

## १३४४. घ्यण्यावश्यके [४।६।५९]

[सूत्रार्थ]

आवश्यक अर्थ में विहित घ्यण् प्रत्यय के परे रहते चकार को ककार तथा जकार को गकारादेश नहीं होता है॥ १३४४।

[दु०वृ०]

अवश्यम्भावे गम्यमाने घ्यणि चजोः कगौ न भवतः। अवश्यपाच्यम्, अवश्यभोज्यम्। आवश्यक इति किम्? पाक्य ओदनः॥१३४४।

[क०त०]

घ्यण्या०। "ऋवर्णव्यञ्जनान्ताद् घ्यण्" (४।६।३५)इत्यनेन सामान्यत्वाद् यदावश्यके घ्यण् तदायं प्रतिषेधः॥१३४४।

[समीक्षा]

'अवश्यपाच्यम्, अवश्यभोज्यम्' इत्यादि शब्दरूपों के सिद्ध्यर्थ ककार-गकार

आदेशों का निषेध दोनों ही व्याकरणों में किया गया है। घ्यण्-ण्यत् प्रत्ययों में 'घ्-त्' अनुबन्धों की योजना अपने अपने व्याकरण के अनुसार की गई है। पाणिनि का सूत्र है— "ण्य आवश्यके" (अ० ७।३।६५)। यहाँ पाणिनीय कवर्ग का निर्देश गौरवाधायक होने से कातन्त्रकार के निर्देश में उत्कर्ष कहा जाएगा।

[रूपसिद्धि]

१-२. **अवश्यपाच्यम्।** अवश्य+पच्+घ्यण्+सि। **अवश्यभोज्यम्।** अवश्य+भुज्+घ्यण्+सि। प्रकृत सूत्र द्वारा चकार को ककार तथा जकार को गकार आदेश का निषेध।।१३४४।

## १३४५. प्रवचर्चिरुचियाचित्यजाम् [४।६।६०]

[सूत्रार्थ]

'प्र' उपसर्ग-पूर्वक वच् धातु तथा 'ऋच्-रुच्-याच्-त्यज्' धातुओं से 'घ्यण्' प्रत्यय के परे रहते चकार को ककार तथा जकार को गकारादेश नहीं होता है।।१३४५।

[दु०वृ०]

अनावश्यकार्थं वचनम्। एषां चजोः कगौ न भवतो घ्यणि परे। प्रवाच्यः पाठविशेषः, तद्वान् ग्रन्थोऽप्युच्यते इति शब्दविषयता। 'ऋच् स्तुतौ' (५।२६) - अर्च्यः। रोच्यः, याच्यः, त्याज्यः। कथं शोच्यः? हेत्विनन्ताद् यः।।१३४५।

[दु०टी०]

प्रवच०। प्रवाच्य इति। "**वचोऽशब्दे**" (४।६।६१) इति प्रतिषेधो न प्राप्नोतीत्यर्थः। **अन्यः** पुनराह— प्रपूर्वस्यैव वचोऽशब्द इति कत्वप्रतिषेधो यथा स्याद् अन्योपसर्गपूर्वस्य मा भूद् अधिवाक्यमाह। ननु ऋचेर्ऋदुपधात् क्यपो भवितव्यम्? सत्यम्, अत एव वचनाद् घ्यण् विज्ञायते। कथमित्यादि। शुचेरपि पाठः कर्तव्यो इत्याह— हेतावर्थे इन् स्वरान्तलक्षणो य इत्यर्थः। तथा यजेरपि याज्यः, पूजयतेः पूज्य इति। **केचिद्** यजं पठन्ति, त्यजेरनुपसंख्यानम् इनन्तत्वात्।।१३४५।

[वि०प०]

प्रवच०। प्रवाच्य इत्यादि। यः शिशूनां दीयते पाठः स **प्रवाच्य** इति। एतेन "वचोऽशब्दे" (४।६।६१) इति वक्ष्यमाणेन न सिध्यतीति दर्शितम्। अर्च इति। अत एव वचनाद् ऋदुपधादपि ऋचेर्घ्यण्। कथमिति। इनन्तात् शुचेः स्वराद् यप्रत्ययो न घ्यण् इत्यर्थः। **अन्ये** तु निष्ठायामनिटो धातोरिति विशेषमाचक्षाणाः इह सेट्त्वान्न भवतीति मन्यन्ते, तदयुक्तं घञि दर्शनात्। यथा शोकः। एवं रुचेः रोकः, ऋचेः अर्कः। अत एव सूत्रकारो कवर्गादिव्रज्यजाम् इत्यादीनां सेटामपि केषाञ्चिदविशेषेण प्रतिषेधमाह।।१३४५।

[समीक्षा]

'प्रवाच्यम्, याज्यम्' आदि शब्दों में दोनों ही शाब्दिक आचार्यों ने 'च्-ज्' को

'क् -ग्' आदेशों का निषेध किया है। अन्तर यह है कि पाणिनि का कवर्गादेशनिषेध सामान्य निर्देश है। पाणिनि का सूत्र है— "यजयाचरुचप्रवचर्चश्च" (अ० ७।३।६६)। फलतः 'क्-ग्' आदेशों का साक्षात् निषेध करने से कातन्त्रकार ने अर्थावबोध में सरलता प्रस्तुत की है।

[रूपसिद्धि]

१-५. **प्रवाच्यः**। प्र+वच्+घ्यण्+सि। **अर्च्यः**। ऋच्+घ्यण्+सि। **रोच्यः**। रुच्+घ्यण्+सि। **याच्यः**। याच्+घ्यण्+सि। **त्याज्यः**। त्यज्+घ्यण्+सि। प्रकृत सूत्र द्वारा चकार को ककार तथा जकार को गकार आदेश का निषेध॥१३४५।

## १३४६. वचोऽशब्दे [४।६।६१]

[सूत्रार्थ]

शब्दभिन्न विषय में घ्यण् प्रत्यय के परे रहते 'वच्' धातु-घटित चकार को ककारादेश नहीं होता है॥१३४६।

[दु० वृ०]

वचेर्घ्यणि को न भवति अशब्दविषये। वाच्यम्। अशब्द इति किम्? वाक्यं पदसमुदायः। वक्रवाक्यरचनारमणीय इत्यपि स्यात्॥१३४६।

[वि० प०]

वचो०। कथमधिवाक्यं दशरात्रस्य दशमं दिनमुच्यते? यस्मिन् याज्ञिका मौनमाचरन्ति इत्यशब्दविषयत्वात् प्रतिषेधः स्यादिति? सत्यम्, सञ्ज्ञाशब्दोऽयं यथाकथञ्चिद् व्युत्पाद्यते इति न दोषः, असंज्ञायाम् अधिवाच्यमिति प्रतिषेध एव। वक्रेत्यादि। वाक्यस्य रचना **वाक्यरचना**, वक्रा चासौ वाक्यरचना चेति तया रमणीयो ग्रन्थः। इह समासेनोत्तरकालं ग्रन्थशब्दो गम्यते, नावयवेन वाक्यशब्देन तत् कथं शब्दविषयतेति न शङ्कनीयम्, अवयवोऽपि वाक्यशब्दः शब्दप्रवृत्तिरेवेत्याह— इत्यपि स्यादिति॥१३४६।

[समीक्षा]

'वाच्य-अवाच्य' आदि शब्दों के सिद्ध्यर्थ ककारादेश का निषेध दोनों ही व्याकरणों में किया गया है। पाणिनि का सूत्र है— "वचोऽशब्दसंज्ञायाम्" (अ० ७।३।६७)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१. **वाच्यम्**। वच्+घ्यण्+सि। 'वच भाषणे' (२।३०) धातु से "ऋवर्णव्यञ्जनान्ताद् घ्यण्" (४।२।३५) सूत्र द्वारा 'घ्यण्' प्रत्यय, उपधादीर्घ, "चजोः कगौ धुड्घानुबन्धयोः" (४।६।५६) से प्राप्त ककारादेश का प्रकृत सूत्र द्वारा निषेध तथा विभक्तिकार्य॥१३४६।

## १३४७. निप्राभ्यां युजः शक्ये [४।६।६२]

[सूत्रार्थ]

शक्य अर्थ में होने वाले घ्यण् प्रत्यय के परे रहते 'नि-प्र' उपसर्गों से परवर्ती 'युज्' धातु में जकार को गकारादेश नहीं होता है।।१३४७।

[दु०वृ०]

निप्राभ्यां परस्य युजेः शक्येऽर्थे घ्यणि गो न भवति । नियोक्तुं शक्यः नियोज्यो भृत्यः। एवं प्रयोज्यो भृत्यः। शक्य इति किम्? नियोक्तुमर्हति नियोग्यः, प्रयोग्यः प्रभुः।।१३४७।

[दु०टी०]

निप्रा०। गुणभूतायामेव शक्यतायामभिधानम्। न हि स्वामिनि नियोज्यप्रयोज्य-शब्दौ रूढाविति 'युजिर् योगे' (६।७) इति, न तु 'युज समाधौ' (३।११५), निप्राभ्यामसंबन्धात्।।१३४७।

[वि०प०]

निप्रा०। गुणभूते शक्येऽभिधानम्, अत आह— भृत्य इति। नहि नियोज्य-प्रयोज्यशब्दौ स्वामिनि रूढौ। "शकि च कृत्याः" (४।५।१०९) इति घ्यण्। नियोक्तुमर्हतीति। "कृत्ययुटोऽन्यत्रापि" (४।५।९२) इति वचनादर्हत्यर्थे कर्तरि घ्यण् ।।१३४७।

[क०त०]

निप्रा०। नहीत्यादि। स्वामिनि तु नियोग्यः प्रभुरिति कर्तरि भवति। भृत्ये तु कदाचिदपि नियोग्य इति न स्याद् अनभिधानात्। पूर्ववदिति भव्यगेयादिवदित्यर्थः।।१३४७।

[समीक्षा]

'प्रयोज्य-नियोज्य' शब्दों के सिद्ध्यर्थ उभयत्र गकारादेश का निषेध किया गया है। अन्तर यह है कि कातन्त्रकार ने साक्षात् गकारादेश का निषेध किया है, जबकि पाणिनि निपातनविधि का निर्देश करते हैं— "प्रयोज्यनियोज्यौ शक्यार्थे" (अ०७।३।६८)। इस प्रकार कातन्त्रीय निर्देश में सरलता कही जा सकती है।

[विशेष वचन]

१. गुणभूतायामेव शक्यतायामभिधानम् (दु० टी०)।

२. भृत्ये तु कदाचिदपि नियोग्य इति न स्याद् अनभिधानात् (क० त०)।

[रूपसिद्धि]

१-२. नियोज्यो भृत्यः। नि+युज्+घ्यण्+सि। नियोक्तुं शक्यः। प्रयोज्यो भृत्यः। प्र+युज्+घ्यण्+सि। प्रयोक्तुं शक्यः। 'नि-प्र' उपसर्ग-पूर्वक 'युजिर् योगे' (६।७) धातु से 'घ्यण्' प्रत्यय, लघूपध गुण, प्रकृत सूत्र द्वारा गकारादेश का निषेध तथा विभक्तिकार्य ।।१३४७।

## १३४८. भुजोऽन्ने [४।६।६३]

[सूत्रार्थ]

भक्ष्य अर्थ में घ्यण् प्रत्यय के परे रहते भुज्-धातुघटित जकार को गकारादेश नहीं होता है।।१३४८।

[दु०वृ०]

भुजो०। भक्ष्येऽर्थे घ्यणि गो न भवति। भोज्यमन्नम्, भोज्यं पयः। अन्न अति किम्? भोग्या भूः, भोग्यः कम्बलः।।१३४८।

[दु०टी०]

भुजो०। अयमप्यनावश्यकार्थमारम्भः। भोज्यमन्नम् अभ्यवहार्यमुच्यते। ननु भुजिरयं भक्षणे भक्षिश्च खरादिद्रव्यसाधने? यथा भोज्यं भक्ष्यं पेयं लेह्यम्, नैवमभ्यवहारार्थमात्रे दृश्यते— अब्भक्षा, वायुभक्षेति। अभक्ष्यो ग्राम्यकुक्कुटः इत्यनुसारेणाधिकरणक्रियार्थः सामान्यशब्दः एव न्याय्यः पक्ष इत्याह— भोज्यमित्यादि। भोग्य इति पालने भुजिरत्र। यजादयो यज्ञाङ्गे, इनन्ता एव सञ्ज्ञाशब्दाः। न च भाषायां प्रयुज्यन्ते। याजः, प्रयाजः, अनुयाजः, उपयाजः, उपांशुयाजः, ऋतुयाजः।।१३४८।

[वि०प०]

भुजो०। अत्तव्यम् अन्नम्। अभ्यवहार्यं भक्ष्यमिति पर्यायः। यजादयोऽपि यज्ञाङ्गे इति वक्तव्यम्। यजेः— प्रयाजः, उपयाजः, अनुयाजः, उद्याजः, ऋतुयाजः। अस्मन्मते एते सञ्ज्ञाशब्दाः यथाकथञ्चिद् व्युत्पाद्या इति यजेरिनन्तादल्प्रत्ययेनापि सिध्यन्तीति। न चैते भाषायां दृश्यन्ते।।१३४८।

[क०त०]

भुजो०। अन्नमदनीयम्, न तु भक्तपर्यायः। भोग्य इत्यादि, भुजिरत्र पालने।।१३४८।

[समीक्षा]

'भोज्य' शब्द में जकार को गकारादेश का निषेध उभयत्र किया गया है। अन्तर यह है कि कातन्त्रकार ने इसका साक्षात् निर्देश किया है, जबकि पाणिनि निपातनविधि का निर्देश करते हैं— "भोज्यं भक्ष्ये" (अ० ७।३।६९)। इस प्रकार कातन्त्रीय निर्देश में लाघव (स्पष्टता) कहा जा सकता है।

[विशेष वचन]

१. अस्मन्मते एते सञ्ज्ञाशब्दा यथाकथञ्चिद् व्युत्पाद्याः (वि० प०)।

[रूपसिद्धि]

१-२. भोज्यमन्नम्, भोज्यं पयः। भुज्+घ्यण्+सि। 'भुज्' धातु से 'घ्यण्' प्रत्यय, लघूपधगुण, प्रकृत सूत्र द्वारा गकारादेश का निषेध तथा विभक्तिकार्य।।१३४८।

## १३४९. भुजन्युब्जौ पाणिरोगयोः [४।६।६४]

[सूत्रार्थ]

'पाणि-रोग' अर्थों में घञ्प्रत्ययान्त 'भुज-न्युब्ज' शब्द निपातन से सिद्ध होते हैं।।१३४९।

[दु०वृ०]

भुजन्युब्जौ घञन्तौ पाणिरोगयोरर्थयोर्यथासङ्ख्यं निपात्येते। भुज्यतेऽनेनेति भुजः पाणिः, न्युब्जितः शेतेऽस्मिन्निति न्युब्जो रोगविशेषः। 'व्यञ्जनाच्च' (४।५।९९) इति घञ्। पाणिरोगयोरिति किम्? भोगः, न्युद्गः। गत्वे दोपध इष्यते ।।१३४९।

[दु०टी०]

भुज०। गत्व इत्यादि। उब्जिरयं बकारोपध एव वर्णागमो वर्णविपर्ययश्चेत्यादिना दकारोपधो घञि भवति, न्यङ्क्वादिपाठाद् वा। ननु भुजति भुनक्ति वा भुजः, नाम्युपधलक्षणे क न्युब्जयतीति इनन्तात् पचाद्यचि कृते न्युब्जः सिध्यति, करणाधिकरणयोरपि कर्तृत्व-विवक्षास्ति। यथा दात्रं लुनाति, स्थाली पचति। तथा घञपि करणाधिकरणयोर्भवति, अभिधानात्। सत्यम्, प्रतिपत्तिगौरवनिरासार्थं निपातनम्।।१३४९।

[क०त०]

भुज०। अन्नमदनीयं न तु भक्तपर्यायः। भोग्य इत्यादि। भुजिरत्र पालने।।१३४९।

[समीक्षा]

पाणि अर्थ में 'भुज' शब्द तथा रोग अर्थ में 'न्युब्ज' शब्द दोनों ही व्याकरणों में निपातन से सिद्ध किए गए हैं। निपातन से यहाँ गकारादेश तथा गुणादेश नहीं होता है। पाणिनि का सूत्र है— "भुजन्युब्जौ पाण्युपतापयोः" (अ० ७।३।६१)। अतः यहाँ उभयत्र समानता ही है।

[रूपसिद्धि]

१-२. भुजः। भुज्+घञ्+सि। भुज्यतेऽनेन। न्युब्जः। नि+उब्ज्+घञ्+सि। न्युब्जितः शेतेऽस्मिन्। 'भुज्' तथा नि-पूर्वक 'उब्ज्' धातु से घञ्, निपातन द्वारा गकार-गुण आदेशों का अभाव तथा विभक्तिकार्य।।१३४९।

## १३५०. दृग्दृशदृक्षेषु समानस्य सः [४।६।६५]

[सूत्रार्थ]

'दृक्-दृश-दृक्ष' के परे रहते समान को 'स' आदेश होता है। इस सूत्रवचन की सामर्थ्य के कारण 'दृश्' धातु से 'क्विप्-टक्-सक्' प्रत्ययों का भी होना सिद्ध होता है।।१३५०।

[दु०वृ०]

समानस्य दृगादिषु सो भवति, वचनात् क्विप्-टक्-सकश्च। सदृक्, सदृशः, सदृक्षः। योगविभागात् पक्षादिषु च– सपक्षः, सज्योतिः। यथेष्टं समासः। पक्षज्योतिर्जनपदनाभिरात्रि-बन्धु-तीर्थ-पत्न्यः पक्षादयः। रूपादौ वा— सरूपः, समानरूपः। रूप-नाम-गोत्र-स्थान-वर्ण-वचन-वयोधर्म-जातीयोदरोदर्यं रूपादि। सब्रह्मचारीति नित्यम्॥१३५०।

[क० त०]

दृग्०। योगविभागादिति। आदौ "समानस्य सः" इति योगः। सब्रह्मचारीति। **'एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः' इत्यमरः।** अत एव सञ्ज्ञाशब्दत्वाद् भेददर्शनार्थं पक्षादिषु ब्रह्मचारिशब्दो न पठितः॥१३५०।

[समीक्षा]

'सदृक्, सदृशः, सदृक्षः' शब्दरूपों में दोनों ही शाब्दिक आचार्यों ने समान को 'स' आदेश किया है। पाणिनि ने सूत्र में 'दृक्-दृश' शब्दों का ही पाठ किया है। 'दृक्ष' का निर्देश वार्त्तिक सूत्र में मिलता है— "दृग्दृशवतुषु" (अ० ६।३।८९), "दृक्षे चेति वक्तव्यम्" (वा० सू०)। इस प्रकार कातन्त्रीय निर्देश में उत्कर्ष सिद्ध होता है।

[रूपसिद्धि]

१.५. **सदृक्।** समान-स+दृश्+क्विप्+सि। **सदृशः।** समान-स+दृश्+टक्+सि। **सदृक्षः।** समान-स+दृश्+सक्+सि। **सपक्षः।** समान-स+पक्ष्+घञ्+सि। **सज्योतिः।** समान-स+ज्योतिष्+क्विप्+सि। सर्वत्र प्रकृत सूत्र द्वारा समान को 'स' आदेश॥१३५०।

## १३५१. इदमी [४।६।६६]

[सूत्रार्थ]

'दृक्-दृश-दृक्ष' के परे रहते 'इदम्' शब्द को 'ई' आदेश होता है॥१३५१।

[दु०वृ०]

इदमीर्भवति दृगादिषु। ईदृक्, ईदृशः, ईदृक्षः। अभेदबलात् सर्वस्य॥ १३५१।

[समीक्षा]

'ईदृशः' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'इदम्' शब्द को 'ई' आदेश किया गया है। पाणिनि का सूत्र है— "इदंकिमोरीश्की" (अ० ६।३।९०)। इस प्रकार पाणिनीय शकारानुबन्ध के अतिरिक्त उभयत्र समानता ही है।

[रूपसिद्धि]

१-३. **ईदृक्।** इदम्-ई+दृश्+क्विप् । **ईदृशः।** इदम्-ई+दृश्+टक्+सि। **ईदृक्षः।** इदम् -ई+दृश्+सक्+सि। सर्वत्र 'इदम्' शब्द को 'ई' आदेश तथा विभक्तिकार्य॥१३५१।

# १३५२. किम् की [४।६।६७]

[सूत्रार्थ]

'दृक्-दृश-दृक्ष' के परे रहते 'किम्' शब्द को 'की' आदेश होता है।।१३५२।

[दु०वृ०]

किम् दृगादिषु कीर्भवति। कीदृक्, कीदृशः, कीदृक्षः। इदं किं परिमाणमस्य **इयान्, कियान्।** डियन्तुः सद्यआद्यत्वात्।।१३५२।

[क०त०]

किम्०। इदं किमित्यादि। परिमाणे वन्तुः।।१३५२।

[समीक्षा]

'कीदृशः' इत्यादि शब्दों की सिद्धि के लिए उभयत्र 'किम्' को 'की' आदेश किया गया है। पाणिनि का सूत्र है—"इदंकिमोरीश्की" (अ० ६।३।९०)। इस प्रकार उभयत्र समानता ही है।

[रूपसिद्धि]

१-३. **कीदृक्।** किम्-की+दृश्+क्विप्+सि। **कीदृशः।** किम्-की+दृश्+टक्+सि। **कीदृक्षः।** किम्-की+दृश्+सक्+सि। सर्वत्र 'किम्' को 'की' आदेश तथा विभक्तिकार्य।।१३५२।

# १३५३. अदोऽमूः [४।६।६८]

[सूत्रार्थ]

'दृक्-दृश-दृक्ष' के परे रहते 'अदस्' शब्द को 'अमू' आदेश होता है।।१३५३।

[दु०वृ०]

अदसोऽमूर्भवति दृगादिषु। अमूदृक्, अमूदृशः, अमूदृक्षः। **केचिद्** 'अमूकादृक्, अमूकादृशः, अमूकादृक्षः' इति, तदा यत्न एव।।१३५३।

[वि०प०]

अदो०। केचिदिति। अग्युक्तस्य न भवति। "आ सर्वनाम्नः" (४।६।६९) इत्याकार एव भवति, दस्य मकारः कार्य इति उत्त्वं माद् इत्यस्त्येव। यत्न एवेति। अभिधानादत्र न भवतीति। अन्ये तु 'आगमा यद्गुणीभूतास्ते तद्ग्रहणेन गृह्यन्ते' (का० परि० १४) इति साकोऽपि स्यादिति यत्नार्थं मन्यते।।१३५३।

[क०त०]

अदो०। केचिदिति तन्मते साको न स्यात्।।१३५३।

[समीक्षा]

'अमूदृशः' आदि शब्दों के सिद्ध्यर्थ कातन्त्रकार ने 'अदस्' शब्द को 'अमू' आदेश करके लाघव या सरलता उपस्थित की है, जबकि पाणिनि एतदर्थ "अदसोऽसेर्दादु दो मः" (अ० ८।२।८०) से उत्त्व-मत्त्व का विधान करते हैं। इस प्रकार पाणिनीय निर्देश में गौरव तथा कातन्त्रीय निर्देश में लाघव स्पष्ट है।

[रूपसिद्धि]

१-३. अमूदृक्। अदस्-अमू+दृश्+क्विप्+सि। अमूदृशः। अदस्-अमू+दृश्+टक्+सि। अमूदृक्षः। अदस्-अमू+दृश्+सक्+सि। सर्वत्र 'अदस्' शब्द को अमू आदेश तथा विभक्तिकार्य॥१३५३।

## १३५४. आ सर्वनाम्नः [४।६।६९]

[सूत्रार्थ]

'दृक्-दृश-दृक्ष' के परे रहते सर्वनामसंज्ञक शब्दों के अन्तिम वर्ण को आकारादेश होता है॥१३५४।

[दु०वृ०]

सर्वनाम्नो दृगादिष्वा भवति। तादृक्, तादृशः, तादृक्षः। भवादृगिति। अन्तरङ्गत्वान्नलोपः। अन्यादृगिति। आ सर्वनाम्नः इति वचनादन्यशब्दादपि दृशः क्विप्-टक्-सकः। यत् तद् एतत् परिमाणमस्य— यावान्, तावान्, एतावानिति सद्यआद्यत्वात्। परिमाणे वन्तुरात्त्वं चेति॥ १३५४।

[वि०प०]

आ सर्व०। भवादृगिति। नलोपः पुनः "व्यञ्जनान्तस्य यत्सुभोः" (२।५।४) इत्यनेन यदि पुनर्नित्यत्वात् पूर्वमाकारः स्यात् तदा व्यञ्जनान्तत्वाभावान्नलोपो न स्यात्। भवानिव दृश्यते इति विग्रहः॥१३५४।

[क०त०]

आ०। सर्वनाम्न इति वचनादिति। ननु आ त्यदादेरिति क्रियताम्? नैवम्। एवं कृते वक्ष्यमाणे कथं सर्वद्र्यङ् इति? सत्यम्, 'आ' इत्येवं सूत्रं कर्तव्यम्। अर्थाद् दृगादिषु त्यदादिरेव सम्भवति। नचादसोऽनुवृत्तिः स्यादिति वाच्यम् आदेशान्तरेणाप्रा-तत्वात्। परत्र तु सर्वनामग्रहणमवश्यं कर्तव्यम्। अतोऽत्र 'सर्वनाम्नः' इत्यस्य व्यापकवचनस्य सामर्थ्यमभ्युपगतम्। यत्तु पञ्जिकायाम् 'आ त्यदादेः' इति क्रियतामित्युक्तम्, तत् प्रथमकक्षायामिति बोध्यम्॥१३५४।

[समीक्षा]

'तादृशः' इत्यादि शब्दों के सिद्ध्यर्थ उभयत्र आकारादेश किया गया है। पाणिनीय व्याकरण में 'दृक्ष' के परे रहते आकारादेश वार्त्तिकवचन से होता है— "दृक्षे चेति वक्तव्यम्"। पाणिनि का सूत्र है— "आ सर्वनाम्नः" (अ० ६।३।९१)। इस प्रकार कातन्त्र में उत्कर्ष कहा जा सकता हैं।

[रूपसिद्धि]

१-४. तादृक्। तद्+दृश्+क्विप्+सि। तादृशः। तद्+दृश्+टक्+सि। तादृक्षः। तद् +दृश्+सक्+सि। भवादृक्। भवत्+दृश्+क्विप्+सि। सर्वत्र प्रकृत सूत्र से अन्तिम वर्ण को आकारादेश॥ १३५४।

## १३५५. विष्वग्देवयोश्चान्त्यस्वरादेरद्र्यञ्चतौ क्वौ [४।६।७०]

[सूत्रार्थ]

क्विप्-प्रत्ययान्त अन्चु धातु के परे रहते सर्वनामसंज्ञक शब्द, विष्वक् तथा देव शब्द में अन्तिम स्वर से लेकर अग्रिम अवयव के स्थान में 'अद्रि' आदेश होता है।।१३५५।

[दु०वृ०]

विष्वग्देवयो: सर्वनाम्नश्चान्त्यस्वरादेरवयवस्याञ्चतौ क्विबन्ते परेऽद्रिरादेशो भवति। विष्वगञ्चतीति **विष्वद्र्यङ्। देवद्र्यङ्।** सर्वद्र्यङ्, यद्र्यङ्, अदद्र्यङ्, अमूद्र्यङ्।।१३५५।

[क०त०]

विष्वक्। मूर्धन्यमध्योऽयं विष्वक्शब्द:।।१३५५।

[समीक्षा]

'विष्वद्र्यङ्' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में 'अद्रि' आदेश किया गया है। पाणिनि का सूत्र है— "विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये" (अ०६।३।९२)। इस प्रकार उभयत्र समानता ही है।

[रूपसिद्धि]

१-७. **विष्वद्र्यङ्।** विष्वक्+अन्च्+क्विप्+सि। विष्वगञ्चति। **देवद्र्यङ्।** देव+अन्च् +क्विप्+सि। देवान् अञ्चति। **सर्वद्र्यङ्।** सर्व+अन्च्+क्विप्+सि। सर्वानञ्चति। **यद्र्यङ्।** यद्+अन्च्+क्विप्+सि। **तद्र्यङ्।** तद्+अन्च्+क्विप्+सि। **अदद्र्यङ्।** अदस्+अन्च् +क्विप् +सि। **अमुद्र्यङ्।** अदस्+अन्च्+क्विप्+सि। क्रमश: अक्-अ-अद्-अस् के स्थान में प्रकृत सूत्र से 'अद्रि' आदेश तथा विभक्तिकार्य।।१३५५।

## १३५६. सहसन्तिरसां सध्रिसमितिरय: [४।६।७१]

[सूत्रार्थ]

क्विप्-प्रत्ययान्त 'अन्च्' धातु के परे रहते सह को 'सध्रि', सम् को 'समि' तथा तिरस् को 'तिरि' आदेश होता है।। १३५६।

[दु०वृ०]

एषां सध्रि-समि-तिरीत्येते आदेशा भवन्ति यथासङ्ख्यम् अञ्चतौ क्विबन्ते परे। सहाञ्चतीति **सध्र्यङ्**, समञ्चतीति **सम्यङ्**, तिरोऽञ्चतीति **तिर्यङ्**।।१३५६।

[क०त०]

सह०। सध्रिसमितिरय इति सविभक्तिकत्वेऽपि अस्वरता न स्यात्। 'तिर्यङ् तिरश्चि:" (२।२।५०) इत्यत्र तिर्यङ्निर्देशात्।।१३५६।

[समीक्षा]

'तिर्यङ्' आदि शब्दों के सिद्ध्यर्थ 'सध्रि' आदि आदेश दोनों ही व्याकरणों में किए गए हैं । एतदर्थ पाणिनि ने तीन सूत्र बनाए हैं— "समः समि, तिरसस्तिर्यलोपे, सहस्य सध्रिः" (अ० ६।३।९३-९५)। इस प्रकार सूत्रत्रयप्रयुक्त पाणिनीय गौरव तथा एकसूत्रप्रयुक्त कातन्त्रीय लाघव कहा जा सकता है।

[रूपसिद्धि]

१-३. सध्र्यङ्। सह+अन्च्+क्विप्+सि। सहाञ्चति। सम्यङ्। संम्+अन्च्+क्विप्+सि। समञ्चति। तिर्यङ्। तिरस्+अन्च्+क्विप्+सि। तिरोऽञ्चति। प्रकृत सूत्र द्वारा सह को सध्रि, सम् को समि तथा तिरस् को तिरि आदेश तथा विभक्तिकार्य।।१३५६।

## १३५७. रुहेर्धो वा [४।६।७२]

[सूत्रार्थ]

क्विप् प्रत्यय के परे रहते 'रुह्' धातुघटित हकार को धकारादेश विकल्प से होता है।। १३५७।

[दु०वृ०]

रुहेर्हकारस्य धकारो भवति वा क्वौ परे। विरोहतीति वीरुत्, वीरुधौ, वीरुधः। वीरुट्, वीरुहौ, वीरुहः। वेर्ह्रस्वस्य दीर्घता। व्यवस्थितविभाषया विपूर्वस्यैव। तेन 'भूरुट्, भूरुहौ, भूरुह':।।१३५७।

[समीक्षा]

'वीरुत्, वीरुधौ' इत्यादि शब्दों के सिद्ध्यर्थ पाणिनि तथा वार्त्तिककार का कोई निर्देश प्राप्त नहीं होता है। काशिकाकार ने न्यङ्क्वादि गण में 'न्यग्रोधः, वीरुत्' शब्द पढ़ने के बाद इनमें धकारादेश का निर्देश किया है— "न्यग्रोधः, वीरुत्' इत्यत्र न्यक्पूर्वस्य रुहेः पचाद्यचि विपूर्वस्य क्विपि धकारो विधीयते– न्यग् रोहयतीति न्यग्रोधः, विरोहयतीति वीरुत्" (का०वृ० ७।३।५३)। इस प्रकार कातन्त्रकार का प्रकृत निर्देश उत्कर्षाधायक ही कहा जा सकता है।

[रूपसिद्धि]

१-३. वीरुत्, वीरुधौ, वीरुधः। वि+रुह्+क्विप्+सि, औ, जस्। 'वि' उपसर्ग-पूर्वक 'रुह जन्मनि प्रादुर्भावे' (१।५६७) धातु से क्विप् प्रत्यय, सर्वापहारी लोप, प्रकृत सूत्र से हकार को धकार तथा विभक्तिकार्य।।१३५७।

## १३५८. मो नो धातोः [४।६।७३]

[सूत्रार्थ]

'क्विप्' प्रत्यय के परे रहते धातुपठित मकार को नकारादेश होता है।।१३५८।

[दु० वृ०]

धातोर्मकारस्य नकारो भवति क्वौ परे। शमु— प्रशान्। तमु-प्रतान्। नोऽदन्त इत्यस्य च लोप:। क्वौ स्थानिवद्भावाद् ''लिङ्गान्तनकारस्य'' (२।३।५६) लोपो न भवति। धातुग्रहणं वा— निवृत्त्यर्थम्।।१३५८।

[क० त०]

मो०। न इत्यत्राकारो नोच्चारणार्थ:, निरित्यकरणात्। इकारोक्त: सविभक्तिरादेशोऽस्वर इति। ननु नकारस्य मकार इत्यर्थ: कथन्न स्यात्? नैवम्, कार्यिनिमित्तमित्यादिक्रमत्वात्। स्थानिवद्भावादित्यादि। ननु लोपविधौ स्थानिवद्भावप्रतिषेध: कथन्न स्यादिति चेत्, न, अकारकरणात्। यदि नकारलोपो भविष्यति तदा किमकारकरणेन। न च मकाराभावमात्रं फलम्, तदा हि मलोपं कुर्वीत, नैवम्। ''स्वरे धातुरनात्'' (४।६।७५) इत्यत्र नकारकरणस्य फलमस्ति नकारान्त इति विवरणात्, किं च क्विपि मकारलोपविधाने विसर्गान्त: स्यात्। नकारविधाने तु निर्विसर्गान्त इति। किञ्च सम्बोधने नकारस्थिति: स्यादिति नकारकरणसामर्थ्याद् वक्तुं पार्यते इत्यकारग्रहणम्।।१३५८।

[समीक्षा]

'प्रशान्, प्रतान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में मकार को नकारादेश किया गया है। पाणिनि का सूत्र है— ''मो नो धातो:'' (अ० ८।२। ६४)। अत: पूर्णतया उभयत्र समानता है।

**[विशेष वचन]**

१. धातुग्रहणं वानिवृत्त्यर्थम् (दु० वृ०)।

[रूपसिद्धि]

१-२. प्रशान्। प्र+शम्+क्विप्+सि। प्रतान्। प्र+तम्+क्विप्+सि। 'प्र' उपसर्गपूर्वक 'शमु उपशमे, तमु काङ्क्षायाम्' (३।४२, ४३) धातुओं से 'क्विप्' प्रत्यय, उपधादीर्घ, प्रकृत सूत्र से मकार को नकार तथा विभक्तिकार्य।।१३५८।

## १३५९. वमोश्च [४।६।७४]

[सूत्रार्थ]

'व्-म्' के परे रहते धातुघटित मकार को नकारादेश होता है।।१३५९।

[दु० वृ०]

वमो: परयोर्धातोर्मकारस्य नो भवति। जगन्वान्। गन्मा। ''सर्वधातुभ्यो मन्'' (कात० उ० ४।२८)।।१३५९।

[समीक्षा]

'जगन्वान्' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही शाब्दिक आचार्यों ने मकार को नकारादेश किया है। पाणिनि का सूत्र है— ''म्वोश्च'' (अ० ८।२।६५)। अत: उभयत्र समानता है।

[रूपसिद्धि]

१. जगन्वान्। गम्+क्वन्सु+सि। 'गम्' धातु से "क्वन्सुकानौ परोक्षावच्च" (४।४।१) से 'क्वन्सु' प्रत्यय, परोक्षावद्भाव से द्विर्वचनादि, प्रकृत सूत्र से मकार को नकार तथा विभक्तिकार्य।

२. गन्मा। गम्+मन्+सि। 'गम्' धातु से "सर्वधातुभ्यो मन्" (कात० उ० ४।२८) से 'मन् ' प्रत्यय, प्रकृत सूत्र से मकार को नकारादेश तथा विभक्तिकार्य ॥१३५९।

## १३६०. स्वरे धातुरनात् [४।६।७५]

[सूत्रार्थ]

स्वर वर्ण के परे रहते नकारान्त शब्द धातु के ही रूप में माना जाता है, परन्तु आकारादेश की निवृत्ति नहीं होती ॥ १३६०।

[दु०वृ०]

नकारान्तः स्वरे परे धातुरेव भवति। अनात् आकारो न निवर्तते इत्यर्थः। प्रशामौ, प्रतामौ, जग्मुषः, जग्मुषी। तदाश्रित एव स्वरे। तेन प्रशान् अत्रेति। स्वर इति किम् ? प्रशान्भ्याम्। ये चेष्यते— प्रशाममिच्छति प्रशाम्यति। प्रशामे हितं प्रशाम्यम्॥१३६०।

[वि०प०]

स्वरे०। धातुरेव भवतीत्युक्ते "पञ्चमोपधाया०" (४।१।५५) इति कृतस्य दीर्घस्यापि निवृत्तिः स्यादिति प्रतिषेधमाह— अनादिति। न आत् अनात्। एतदेव स्पष्टयति— आकारो न निवर्तते इति। जग्मुष इति। अघुट्स्वरेत्यादिना वन्सेर्वशब्दस्योत्त्वे मकार आयातः। ततः "गमहन०" (३।६।४३) इत्यादिनोपधालोपे रूपमिदम्। एवं जग्मुषीति। एतेन पूर्वाभ्यां कृतस्य नकारस्य निवृत्तिर्दर्शिता। प्रशाम्यतीति। "नाम्न आत्मेच्छायां यिन्" (३।२।५) प्रशाम्यमिति। "यदुगवादितः" (२।६।११) इति यत् प्रत्ययः॥१३६०।

[क० त०]

स्वरे०। अथ नस्वर इति कथन्न कुर्यात्। मस्य स्वरे नकारो न स्यादिति। अथ पूर्वं प्रवृत्तो नकारः कथं निषिध्यत इति चेद् वचनात् स्वरविषये न स्यादित्यिर्थः करिष्यते इति? सत्यम्, जगन्वांसावित्यादि न स्यादिति। सिद्धान्ते तु प्रश्लेष एव विषयत्वे कारणाभावात्॥१३६०।

[समीक्षा]

'प्र' पूर्वक 'शमु' इत्यादि धातुओं से 'औ-जस्' आदि प्रत्ययों में 'प्रशामौ, प्रशामः' इत्यादि शब्दरूप दोनों ही व्याकरणों में सिद्ध होते हैं। अन्तर यह है कि कातन्त्र में नकारादेश का विधान पद में नहीं किया गया है। अतः इसमें नकारादेश की निवृत्ति के लिए प्रकृत सूत्र स्वतन्त्ररूप से बनाना पड़ा। पाणिनीय व्याकरण में नकारादेश पद

क्रो विहित है, अत: 'प्रशामौ' इत्यादि में नकारादेश की प्रवृत्ति ही नहीं हो पाती है। फलत: उसकी निवृत्ति के लिए सूत्र बनाने की आवश्यकता भी नहीं होती। इस प्रकार अपने अपने व्याकरण की शैली के अनुसार यह भेद हुआ है। सामान्यतया तो उभयत्र समानता ही कही जा सकती है।

[रूपसिद्धि]

१-४. **प्रशामौ।**, प्र+शम्+क्विप्+औ। **प्रतामौ।** प्र+तम्+क्विप्+औ। **जग्मुष:।** गम्+क्वन्सु+ङस्। **जग्मुषी।** गम्+क्वन्सु+ई+सि। सर्वत्र मकार के नकारादेश की निवृत्ति तथा विभक्तिकार्य।।१३६०।

## १३६१. अर्त्तीण्घसैकस्वरातामिड्वन्सौ [४।६।७६]

[सूत्रार्थ] 'क्वन्सु' प्रत्यय के परे रहते 'ऋ,इण्,घस्, एकस्वरविशिष्ट आकारान्त' धातुओं से इडागम होता है ।।१३६१।

[दु०वृ०] अर्त्तीण्घसैकस्वरादन्तानामेव वन्साविड् भवत्यादि: । स्रादिनियमेन परोक्षावद्भावादिट् सिद्धो नियम्यते । आरिवान् , ईयिवान् , जक्षिवान् , आदिवान्, पेचिवान्, दिदिवान्, पपिवान् । दरिद्राञ्चकृवान् इत्यामा भाव्यम् । अर्त्यादिग्रहणादेव वन्सौ द्विर्वचने सति । एकस्वरा ग्रहीतव्या नैकत्वं वचनादिण:। एषामिति किम् ? बभज्वान्, जजागर्वान् ।।१३६१।

[दु०टी०] अर्त्तीण्० । ननु कथं नियम इति **"घोषवत्योश्च कृति"** (४।६।८०) इत्यनेनेट्प्रतिषेधाद् विधिरयमस्तु का क्षति: । बुद्धिभेदमात्रं स्रादिनियम: प्रकृतिलक्षणस्य प्रत्ययलक्षणस्य-च प्रतिषेधस्य विषये वर्तमान: प्रतिषेधं कुर्वन्निटं प्रतिप्रसूयति । यदि पुन: स्रादिनियम; प्रकृतिलक्षणमेव प्रतिषेधमेकस्वरस्येत्त्वं निवर्तयति न प्रत्ययलक्षणम् , तदा विधि:, **"घोषवत्योश्च कृति"** (४।६।८०) इत्यत्र कृद्ग्रहणम् । नियमपक्षे **"रुदादे: सार्वधातुके "** (३।७।३) इतीट् 'रुदिव:, रुदिम:' इति। प्रतिषेधस्य बाधितत्वादिट् न प्राप्नोतीति विधिपक्षे परोक्षार्थं च । रुरुदिवेति । अथ विपरीतनियम: कथन्न स्यात् —वन्सावेव नान्यत्रेति । तदा वन्सोरनियतत्वाद् बभूवान् इत्यादौ स्यात् । नैवम् , वन्सावेव सप्तमीनिर्देशाद् इटा प्रकृतीनां सम्बन्धो न वन्सोरिति कथं नियम: । टकारानुबन्धबलादिट् पुनर्वन्सोरेव स्यादिति विधिपक्षे षष्ठीसप्तम्योरभेद इति सप्तम्यापि निर्दिश्यते । यथा "हनृदन्तात् स्ये" इति वक्तव्यम् ।

अर्त्यादिग्रहणादेवेति । आदिग्रहणेन इण्घसादय उच्यन्ते । यदि पुनरिह द्विर्वचनानपेक्षया एकस्वरा गृह्यन्ते तदा अर्त्यादिग्रहणमनर्थकम् । एते ह्येकस्वरा इत्यर्थ: परादपीटो नित्यत्वाद् द्विर्वचने सत्येकस्वरत्वात् प्रतिपत्तव्या भवन्त्येव। एकस्वरग्रहणसामर्थ्याच्च न कश्चिद् अकृते द्विर्वचनेऽनेकस्वर: संभवति,

यन्निवृत्त्यर्थमेकस्वरग्रहणं क्रियते चकासादीनामामा भाव्यमिति भावः । नैवम् , एकस्वरस्य सम्बन्धिनि वन्साविति संभाव्येत, यदा जागर्तेराम् विभाषा तत्र "ऊर्णोतेश्च" (३।६।८५) निवृत्तिः स्यात् तर्हि न जागृऊर्णुभ्याम् अति विदध्यात् , अत्त्यादिग्रहणं न कृतं स्यात् ? सत्यम् । "चकास्कास्प्रत्ययान्तेभ्यः" (३।२।१७) इत्यत्र चकास्ग्रहणमनेकस्वरोपलक्षणम् । "कर्तुरायिः सलोपश्च" (३।२।८) इत्यत्र आयेश्च लोप इति । नैवम्, द्वयं सूत्रकारस्य मतम् ततश्चिरिजिविदरिद्रामपि निवृत्तिः स्यात् ।

श्रुतपालोऽप्याह— दरिद्रातेसम् नास्ति "आत औ णलः" इत्यौकारसामर्थ्यात् प्रश्लिष्टावर्णस्थौकार इतरोऽपि श्लिष्टावर्णस्थौकारः। तत्र प्रयत्नोपादानोपरतेर्भेदाद् गौरवमिति। तस्मादत्त्यादिग्रहणस्य ज्ञापकता युक्ता। आरिवान् इति "अस्यादेः सर्वत्र" (३।३।१८) इत्यभ्यासस्य दीर्घत्वे "ऋकारे च" (३।३।२०) इति नकारागमः, तत इट्, "रम् ऋवर्णः" (१।२।१०) इति रत्वम्, ततो **'निमित्ताभावे नैमित्तिकस्याप्यभावः'** (का० परि० २७) इति नकारो निवर्तते। अथवा नकारकरणमनर्थकम् इति यदा इट् क्रियते ततो रत्वम् इति।

ईयिवानिति। अभ्यासस्य दीर्घ इणः परोक्षायाम् इति कृते दीर्घात् परलोपो न भवति। आस्तां दीर्घात् परलोपः एकस्वराद् भवतीति मन्यसे. नैवम्। इटि सति इणश्चेति यत्वेऽनिष्टरूपं स्यादित्याह— नैकत्वं वचनादिण इति। जक्षिवानिति। इटि सत्युपधालोपे अघोषे प्रथमस्ततो यत्वम् आदिवान्, पेचिवानिति। "अस्यादेः सर्वत्र" (३।३।१८) इति दीर्घत्वे दीर्घात् परलोपः, अस्यैकव्यञ्जनमध्ये इत्यादिना एत्वमभ्यास-लोपश्चेत्येकस्वरत्वाद् ददिवान्, पपिवानिति आदन्तादिटि सत्याकारलोप इति॥१३६१।

[वि०प०]

अत्तीण्०। "स्रुवृभृस्तुद्रुश्रुस्रुवः" (३।७।३५) एव परोक्षायामिति नियमात् 'पेचिव, शेकिव' इत्यादाविव परोक्षावद्भावाद् वन्साविड् भविष्यति किमनेनेत्याह— स्रादीति। अयमर्थः– "इडागमोऽसार्वधातुक०" (३।७।१) इत्यादिनेट्प्राप्तौ "घोषवत्योश्च कृति" (४।६।८०) इति प्रतिषिद्धः पुनः स्रादिनियमात् सिद्धोऽनेन नियम्यते। अत एव एवकारः सूत्रार्थे दर्शितः। वन्सावेवेति प्रकृतिनियमस्तु न भवति, तदा हि वन्सोरनियतत्वाद् 'बभज्वान्' इत्यादाविट् स्यात् 'पेचिव, शेकिव' इत्यादौ न स्यात्। तत् पुनर्व्याख्यानतो विशेषार्थप्रतिपत्तेरिति। आरिवानिति। ऋधातोर्वन्सौ द्विर्वचनम्। ऋवर्णस्याकारः, अस्यादेः सर्वत्रेति दीर्घः, ऋकारे चेति नकारागमः, ततोऽनेनेट्, "रम् ऋवर्णः" (१।२।१०) इति रत्वे निमित्ताभावान्नकारनिवृत्तिः। यद् वा नकारो व्यर्थत्वान्न क्रियते।

ईयिवानिति। इणः क्वन्सौ द्विर्वचनम्, "दीर्घ इणः परोक्षायामगुणे" (३।३।१७) इति दीर्घः, अनेनेट् दीर्घात् परलोपापवादः, इणश्चेति यत्वम्।

जक्षिवानिति। अदेर्वा परोक्षायामिति घस्लृगादेशः, द्विर्वचनम्, इटि कृते गमहनेत्यादिनोपधालोपे, "अघोषेष्वशिटां प्रथमः" (३।८।९) इति घस्य कत्वम् ; "शासिवसिघसीनां च" (३।८।२७) इति षत्वम्। एकस्वरमुदाहरति— आदिवान्, पेचिवानिति। अदेः पचेः क्वन्सौ द्विर्वचने सति एकत्र "अस्यादेः सर्वत्र" (३।३।१८) इति दीर्घः, परलोपः। अन्यत्र "अस्यैकव्यञ्जनमध्ये " (३।४।५१) इत्यादिना एत्वे अभ्यासलोपे चैकस्वरत्वात् पश्चादिट्। आदन्तमुदाहरति- ददिवान्, पपिवानिति। द्विर्वचने कृतेऽनेकस्वरत्वादिटि सति "आलोपोऽसार्वधातुके"(३।४।२७) इत्याकारलोपः। दरिद्रातेः कथन्न स्यादिति? नैवम्, चकास्ग्रहणमनेकस्वरोपलक्षणम् इत्युक्तम्, अतोऽस्य आम्प्रत्ययो व्यवधायक इत्याह— दरिद्राञ्चकृवान् इति। आमि "दरिद्रातेरसार्वधातुके" (३।६।३४) इत्याकारलोपः, आमः कृञनुप्रयोगः। अर्त्यादीति। आदिग्रहणेनेण्घसादन्ताः कथ्यन्ते। यदि पुनः प्रागेव द्विर्वचनादेकस्वरा गृह्यन्ते तदा अर्तीण्घसातां ग्रहणमनर्थकं स्यात् , एषामप्येकस्वरत्वादेव सिद्धेरिति। यद्येवम् अर्तिघसादन्तानां द्विर्वचने सत्यनेकस्वरत्वादिट् न स्यादिति युक्तमेषां ग्रहणम्। इणस्तु द्विर्वचनेऽभ्यासदीर्घत्वे निरपवादे च दीर्घात् परलोपे सत्येकस्वरत्वादिट् सिद्ध्यत्याह— नैकत्वं वचनादिण इति। एकस्वरत्वं न ग्रहीतव्यम्, वचनादिण उपादानाद् अतः प्राप्तोऽपि परलोपो न भवति। यदि पुनरिह परलोपः स्यात् तदेटि सति इणश्चेति यत्वेऽनिष्टरूपं स्यादिति। बभज्वान्, जजागर्वानिति। क्वन्सौ यण्वद्भावाद् भञ्जेरनुषङ्गलोपः, जागर्तेश्च "यणाशिषोर्यः" (३।६।१३) इति गुणः॥१३६१।

[क०त०]

अर्तीण्०। कृतद्विर्वचनस्यैकस्वरत्वमिति श्लोकेनाह-अर्त्यादीति पञ्जी। पञ्ज्यां पेचिवेत्यादि। ननु यदि प्रकृतिनियमे गृह्यमाणे पेचिवेत्यादाविट् न स्यात् तदा स्रादिनियमस्य कुत्र फलम्? सत्यम्, अर्त्यादिभ्योऽन्यत्र ददृशिवेत्यादौ द्विर्वचने कृतेऽनेकस्वरे नियमस्य फलम् बोध्यमिति व्याख्यानादिति। इड्वन्सावित्यत्र कार्यिनिमित्तयोर्व्यतिक्रमनिर्देशादित्यर्थः। यद् वा "थलि च सेटि" (३।४।५२) इति वचनात्, यद् वा "पचिवचि०" (३।७।१८) इत्यादिप्रतिषेधात् । अन्यथैकस्वराणां वन्सावेवेति नियमादेव प्रतिषेधः सिद्ध इति भावः। यद् वा वन्साविति सप्तमीनिर्देशात्, अन्यथा वन्सोरागमत्वे षष्ठ्येव युज्यते इति धातुनैवेटः सम्बन्धात् प्रकृत्यवधारणम्।

ननु कथमयं नियमार्थो यतः इडागम इत्यादिना प्राप्तः पचिवचीत्यादिना निषिद्धः। पुनः स्रादिनियमात् प्राप्तो "घोषवत्योश्च कृति" (४।६।८०) इति निषिद्धोऽनेन विधीयते इति क्रमः। ततश्च विषयः स्यादित्याह - टीकायां नन्वित्यादि।

[पाठान्तरम्-टीकायां नन्वित्यत्र समादधते? का क्षतिरिति नियमं स्फुटयति। शादीति प्रकृतिलक्षणस्य पचिवचीत्यादिना विहितस्य प्रत्ययलक्षणस्य "घोषवत्योश्च

कृति'' (४।६।८०) इति विधास्यमानत्वात्। प्रतिप्रसूयते इति तदा जग्मिमेति विशेषः। अत्रायं क्रमेण साध्यः। इडागम इत्यादिना प्राप्तः अनिडेक इत्यादिना ''घोषवत्योश्च कृति'' (४।६।८०) इत्यनेन च निषिद्धः पुनरर्त्त्यादिनियमात् प्राप्तोऽर्त्त्यादिभ्योऽनेन नियम्यते इति, यदि पुनरिति प्रागेवोक्तोऽस्य क्रमस्तदा नियमपक्षे ''घोषवत्योश्च कृति'' (४।६।८०) इत्यत्र कृद्ग्रहणं किमर्थं यतः कृद्ग्रहणस्याख्यातिके घोषवति व्यावृत्तिराख्यातिकपरोक्षायामेव, ततः स्रादिनियमे चेत्याह- घोषवत्योश्च कृतीत्यत्रेत्यादि। अबाधितत्वादिति सार्वधातुक इति विशेषः। विधिपक्ष इति। अत्र हि नियमेऽपि घोषवत्योश्च कृतीति प्रतिषेधः स्यादिति कृद्ग्रहणम्। अन्यथा रुरुदिवेति न स्रादिनियमव्यावृत्तेस्तु थलि सेटि प्रत्यये च परे इति। परोक्षायां चेति। चकारेण रुरुदिवेत्यपि फलमिति सूच्यते। **अयमत्र सङ्कलितार्थः**- यदायं योगो नियमार्थस्तदा घोषवत्योश्च कृतीत्यस्य विषयेऽपि स्रादिनियमः प्रवर्तते। अत एव परोक्षावद् भूते वन्साविति सिद्धेऽयमपि नियमः, किन्तु घोषवत्योश्च कृतीत्यत्र कृद्ग्रहणं विना सामान्यघोषवति तौ च प्रतिषेधः स्यात्, तत्र स्रादिनियमात् परोक्षाविषयकघोषवतीट् स्यात्। सार्वधातुकविषयकघोषवति तौ च प्रतिषेधो न स्यादिति कृद्ग्रहणम्, सार्वधातुके इत्थं यदा पुनरयं विधिस्तदा घोषवत्योश्च कृतीत्यस्य विषये स्रादिनियमो न प्रवर्तते। अत एव परोक्षावद् भूते वन्सुप्रत्यये इटोऽप्राप्तावयं विधिर्घोषवत्योश्च कृतीत्यत्र कृद्ग्रहणं विना परोक्षाविषयकघोषवत्यपि इटि न स्यादिति स्रादिनियमाविषयत्वादिति परोक्षार्थं च कृद्ग्रहणम्। सप्तमीनिर्देशादिति। विधौ वन्साविति सप्तमीनिर्देशः। व्यावृत्त्यादेर्निमित्तत्वेन सम्बन्धार्थम्, अन्यथा वन्साविति कृते न स्यादिति भावः। अथ परत्वाद्- द्विर्वचनात् प्रागिट् स्यात्, कथं द्विर्वचने सत्येकस्वरो गृहीत इत्याह— परादपीति।

अथ चकास्प्रभृतयोऽनेकस्वरा सन्ति, नैवम्। तत्रामेवास्ति इत्याह- चकासादीनामिति। अतः इड्वन्साविति कृतेऽप्येकस्वरप्राप्तावेकस्वरग्रहणं द्विर्वचने सत्येकस्वरत्वं भविष्यतीति भावः। कथमर्त्त्यादिग्रहणं ज्ञापयति उक्तयुक्त्या एकस्वरग्रहणादेव द्विर्वचने सति एकस्वरप्राप्तावर्त्त्यादीनां द्विर्वचनेऽनेकस्वरत्वान्न स्यादिति। अप्राप्तौ विधानार्थमेव स्यान्न ज्ञापकमिति भावः। समाधत्ते एकस्वर-सम्बन्धिनीति तदेति जागृर्णुभ्यामनेकस्वराभ्यां व्यावृत्तेः सम्भवान्मूलधातुरेवैकस्वरो ग्राह्य इत्यर्त्त्यादीनामपि सिध्यतीति भावः। तथैव पूर्वपक्षयति—तर्हीत्यादि।

**अयमभिप्रायः**— यदि मूलधातोरेकस्वरो ग्राह्यस्तदा जागृर्णुभ्यामेव व्यावृत्तेः सम्भवस्तदा जागृर्णुभ्यामिति निषेध एव क्रियताम्, इड्वन्साविति सूत्रमास्ताम् एकस्वरग्रहणमपि न कार्यमिति, तस्मादेकस्वरग्रहणं द्विर्वचने सति एकस्वरार्थं भविष्यति। मूलधातोरेकस्वरत्वभावेन व्यावृत्त्यभावात् जागृर्णुभ्यां चेति निषेध एवास्ति।

ततश्चार्त्यादिग्रहणं विध्यर्थमेव स्यान्न ज्ञापकार्थमिति। अत्र समाधत्ते—सत्यमित्यादि। एतेनैकग्रहणस्य मूलधातुषु व्यावृत्तेः सम्भवाद् ज्ञापकं न युक्तम्, किन्तु अर्त्यादीनामेव ज्ञापकं युक्तमिति प्रतिपादितम्। स्वमतदार्ढ्यार्थं दर्शयति— श्रुतपाल इति। पाणिनिप्रक्रियायाः अणः संज्ञा णकारो वृद्ध्यर्थमकारः सुखार्थः। औकारसामर्थ्यादित्ययं भावः। "दरिद्रातेरसार्वधातुके" (३।६।३४) इत्यत्राकारलोप औकारेण सस्वरत्वे सत्योकारस्य प्रयोजनम्। अन्यथा ओकारविधानेऽपि पपाविति सिध्यति। तस्माद् दरिद्रातेराम् नास्तीति। प्रश्लिष्टेति। प्रशब्दोऽत्र संश्लेषो विश्लिष्टश्चेति दरिद्रातेराकारलोपे पूर्वभावाद् विश्लिष्टता। अवर्णस्थ इति पाठे तत्सम्बन्धी न विहित इत्यर्थः। प्रयत्नेति। यदुपादानमुच्चारणं तेनानयोपरतिर्विच्छेदस्तद्भेदादित्यर्थः]॥१३६१।

[समीक्षा]

'आरिवान्, पेचिवान्, पपिवान्' इत्यादि शब्दरूपों में दोनों ही व्याकरणों में इडागम किया गया है। अन्तर यह है कि 'ऋ' आदि तीन धातुओं से पाणिनि ने थल् प्रत्यय के परे रहते ही इडागम किया है, जब कि कातन्त्रकार 'वन्सु' प्रत्यय के परे रहते इडागम करते हैं। पाणिनि के दो सूत्र हैं— "इडत्त्यर्तिव्ययतीनाम्, वस्वेकाजाद्घसाम्" (अ० ७।२।६६,६७)। सामान्यतया उभयत्र समानता ही कही जा सकती है।

[रूपसिद्धि]

१-८. आरिवान्। ऋ+क्वन्सु+सि। ईयिवान्। इण्+क्वन्सु+सि। जक्षिवान्। घस्+क्वन्सु+सि। आदिवान्। अद्+क्वन्सु+सि। पेचिवान्। पच्+क्वन्सु+सि। ददिवान्। दा+क्वन्सु+सि। पपिवान्। पा+क्वन्सु+सि। दरिद्राञ्चकृवान्। दरिद्रा+आम्+कृ+क्वन्सु+सि। 'ऋ' आदि धातुओं से 'क्वन्सु' प्रत्यय, द्विर्वचनादि, इडागम तथा विभक्तिकार्य॥१३६१।

## १३६२. गमहनविदविशदृशां वा [४।६।७७]

[सूत्रार्थ]

'गम्-हन्-विद्-विश्-दृश्' धातुओं से वैकल्पिक इडागम होता है॥१३६२।

[दु०वृ०]

अप्राप्ते विभाषेयम्। एषां वन्साविड् भवति वा। जग्मिवान्-जगन्वान्। जघ्निवान्-जघन्वान्। विविदिवान्-विविद्वान्। बहुभिः सविकरणैः साहचर्याल्लाभार्थस्य विदेर्ग्रहणम्। विविशिवान्-विविश्वान्। ददृशिवान्-ददृश्वान्॥१३६२।

[दु०टी०]

गम०। सत्ताविचारार्थयोरात्मनेपदित्वाद् वन्सुरेव नास्ति तत्र लाभज्ञानार्थयोर्मध्ये लाभार्थस्यैव ग्रहणमित्याह-बहुभिरिति। न पुनर्लुग्विकरणेनैव ज्ञानार्थस्य ग्रहणं युक्तमित्यर्थः॥१३६२।

[वि०प०]

गम०। जगन्वानिति। म्वोश्चेति मकारस्य नकारः। गमहनोरिटि उपधालोपे हन्तेर्लुप्तोपधस्य चेति घत्वम्। सत्ताविचारार्थयोरात्मनेपदित्वात् क्वन्सुरेव नास्ति। परस्मैपदित्वाल्लाभार्थज्ञानार्थाभ्यामस्ति, तत्रादादिकस्य ज्ञानार्थस्य न ग्रहणमिति युक्तिमाह-बहुभिरिति। न पुनर्हन्तिना एकेन लुग्विकरणेन सहचरितस्य ज्ञानार्थस्य ग्रहणं युक्तमिति भावः॥१३६२।

[समीक्षा]

'जगन्वान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ उभयत्र वैकल्पिक इडागम किया गया है। पाणिनि ने दृश् धातु का सूत्र में पाठ नहीं किया है। उसकी पूर्ति वार्त्तिककार ने की है— "विभाषा गमहनविदविशाम्" (अ०७।२।६८), "दृशेश्चेति वक्तव्यम्" (वा०)। इस प्रकार कातन्त्र का उत्कर्ष सिद्ध है।

[रूपसिद्धि]

१-५. जग्मिवान्, जगन्वान्। गम्+क्वन्सु+सि। जघ्निवान्, जघन्वान्। हन्+क्वन्सु+सि। विविदिवान्, विविद्वान्। विद्+क्वन्सु+सि। विविशिवान्, विविश्वान्। विश्+क्वन्सु+सि। ददृशिवान्, ददृश्वान्। दृश+क्वन्सु+सि। 'गम्' आदि धातुओं से क्वन्सु प्रत्यय, द्विर्वचनादि, प्रकृत सूत्र से वैकल्पिक इडागम तथा विभक्तिकार्य॥१३६२।

## १३६३. दाश्वान् साह्वान् मीढ्वांश्च [४।६।७८]

[सूत्रार्थ]

'दाश्वान्, साह्वान्, मीढ्वान्' शब्द क्वन्सुप्रत्ययान्त निपातन से सिद्ध होते हैं॥१३६३।

[दु०वृ०]

एते क्वन्सुप्रत्ययान्ता निपात्यन्ते।

**अद्विर्वचनमनिट्त्व च सहेर्दीर्घो मिहेरपि।**
**ढत्वं च खल्वतन्त्रत्वात् सर्वाणि वचनानि च॥१३६३।**

[दु०टी०]

दाश्वान्०। अद्विरिति श्लोकः। दाश्वानित्यादि। प्रत्येकं लुप्तप्रथमैकवचनं तच्चातन्त्रम्, तेन दाश्वांसौ, दाश्वांस इति योज्यम्॥१३६३।

[वि०प०]

दाश्वान्०। यदिह निपात्यं तदनुष्टुभा दर्शयति— अद्विर्वचनमित्यादि। 'दाशृ दाने' (१।५८७)। दत्वं चेति। क्वन्सोर्वकारस्य दन्त्योष्ठ्यत्वाद् धुट्त्वं नास्ति। "हो ढः" (३।६।५६) इत्यनेन ढत्वं न सिध्यतीति निपात्यते। प्रत्येकं प्रथमैकवचनस्य निपातेषु

दर्शितत्वाद् द्विवचनबहुवचने विभक्त्यन्तराणि च न सम्भवन्तीति कस्यचिदाशङ्का स्यात्। अतस्तन्निरासार्थमाह-अतन्त्रत्वादिति। सूत्रे वचनमप्रधानम्। अतो दाश्वांसौ, दाश्वांसः, दाश्वांसमित्याद्यपि भवति॥१३६३।

[समीक्षा]

'दाश्वान्, साह्वान्, मीढ्वान्' ये तीनों शब्द उभयत्र निपातनविधि से सिद्ध किए गए हैं। अनिट्त्व-दीर्घ आदि कार्य यहाँ निपातन से अभीष्ट हैं। पाणिनि का सूत्र है— "दाश्वान् साह्वान् मीढ्वांश्च" (अ० ६।१।१२)। इस प्रकार उभयत्र पूर्णतः समानता ही है।

[रूपसिद्धि]

१. दाश्वान्। दाशृ+क्वन्सु+सि। 'दाशृ दाने' (१।५८७) धातु से क्वन्सु प्रत्यय, निपातन से द्विर्वचन - इडागम का अभाव तथा विभक्तिकार्य।

२-३. साह्वान्। सह्+क्वन्सु+सि। मीढ्वान्। मिह्+क्वन्सु+सि। 'सह्' धातु में उपधादीर्घ, मिह्-धातुगत हकार को ढकारादेश तथा विभक्तिकार्य॥१३६३।

## १३६४. न श्र्युवर्णवृृतां कानुबन्धे [४।६।७९]

[सूत्रार्थ]

ककारानुबन्ध वाले असार्वधातुक प्रत्यय के परे रहते श्रि-उवर्णान्त-वृञ्-वृङ् धातु तथा ॠकारान्त धातुओं से इट् का आगम नहीं होता है॥१३६४।

[दु०वृ०]

श्रयतेरुवर्णान्तस्य वृञ्वृङोर्ॠकारान्तस्य च कानुबन्धेऽसार्वधातुके नेड् भवति। श्रितः, श्रितवान्, श्रित्वा। युतः, युतवान्, युत्वा। रुतः, रुतवान्, रुत्वा। लूनः, लूनवान्, लूत्वा। वृतः, वृतवान्, वृत्वा। कीर्णः, कीर्णवान्, कीर्त्वा। वचनाद् विकृतेऽपि स्यात्। 'शेश्रियितः, लोलुवितः' इति सिद्धये एकस्वरमनुवर्तयन्ति एके, तेषामूर्णोतेर्वक्तव्यमेव-प्रोर्णुतः, प्रोर्णुतवान्॥१३६४।

[दु०टी०]

न श्र्यु०। वचनादित्यादि। श्रीत्यादीनां यः कानुबन्धस्तस्मिन् विषये श्रुतत्वात् श्रयत्यादिभ्य इट् न भवतीति विशेषणात् कुत इयादेशे कृते पुनरिट्प्रसङ्ग इत्यर्थः। अथवा द्वावेवानिट्पक्ष इति निर्धारितं तत्र दृष्टावसरत्वाद् इह न भवति। तथा चाह— 'सकृद्बाधितो विधिर्बाधित एव' (का०परि०३६) इति प्रकृतिवृत्तौ पुनर्वृत्त्या विधिर्निष्ठितस्येति वा। इरग्रहणमुपलक्षणम् उरादेशे निपूर्तः, पूर्तः। शेश्रियित इति। 'अर्त्तीण्घसैकस्वरातीम्' (४।६।७६) इत्यत्र एकविभक्तियुक्तस्याप्यनुवर्तनमिहेष्यते एकस्वरस्येत्यर्थः। नैतत् सूत्रकारमतम्, भाषायां चेक्रीयितलुगन्तस्याप्रयोगात्॥१३६४।

[वि०प०]

न श्र्युवर्ण०। शेश्रियित इति। श्रिञो लूञश्च चेक्रीयितं द्विर्वचनादौ कृते चेक्रीयितस्य लुकि सति अनेकस्वरत्वान्निष्ठायामिट्। तत इयुवौ। **अयं पुनर्मन्यते चेक्रीयितलुगन्तस्य भाषायामप्रयोगात् किम् ''अर्त्तीण्घसैकस्वराताम्''** (४।६।७६) इत्यादावेकविभक्ति-युक्तस्यैकस्वरमात्रस्यानुवर्तनेनेति॥१३६४।

[क०त०]

न०। ऋतः सौत्रस्य नाशङ्का। तृषिमृषीत्यादिना सेट् क्त्वि सेटि गुणाभिधानात्, व्याप्तिन्यायाद् वा। ननु **'आगमादेशयोरागमो विधिर्बलवान्'** (का०परि०४०) इति न्यायात् प्रागिटः प्रसक्तौ निषेधोऽयम्। ततश्चाविकृते कथं स्याद् इत्याह— वचनादित्यादि। श्रयत्यादीनां सम्बन्धी यः कानुबन्धस्तस्मिन् विषये श्रुतत्वात् श्रयत्यादिभ्य इड् न भवतीति व्याख्यानादेवेत्यर्थः। अथ वचनाद् इत्यस्य आतः प्रतिषेधवचनादित्यर्थः कथं नोच्यते, नैवम्। वचनादिरादेशस्य पाक्षिकी वृत्तिः स्यादित्यस्यापि सुवचत्वात् सर्वथा इटोऽभावे प्रमाणाभावात्। न स्यादिति। इट् न स्यादित्यर्थः। स्यादिति पाठे प्रतिषेधः स्यादित्यर्थः। शेश्रियित इत्यादि। अथ ''प्रत्ययलुकां चानाम्'' (४।१।४) इत्यनेन इयादेशस्य निषेधः कथन्न स्यात्? सत्यम्, 'सर्वविधिभ्यो लोपविधिर्बलवान्' (का० परि० ४४) इति न्यायात् प्रागेव चेक्रीयितलोपः, ततश्च इटीयादेशादिः, अतो यस्मिन् धात्वेकदेशो लुप्तस्तस्मिन्नेव प्रत्यये प्रतिषेधस्योक्तत्वात् कथमत्र प्रतिषेधप्राप्तिः स्यादिति॥१३६४।

[समीक्षा]

'श्रितः, वृतवान्, लूनः, श्रित्वा' इत्यादि प्रयोगों के सिद्ध्यर्थ पाणिनि तथा शर्ववर्मा दोनों ने ही इडागम का निषेध किया है। पाणिनि का सूत्र है— ''श्र्युकः किति'' (अ०७।२।११)। अतः उभयत्र समानता ही है।

[विशेष वचन]

१. 'शेश्रियितः, लोलुवितः' इति सिद्ध्यर्थमेकस्वरमनुवर्तयन्त्येके (दु०वृ०)।

२. नैतत् सूत्रकारमतम्, भाषायां चेक्रीयितलुगन्तस्याप्रयोगात् (दु०टी०।द्र०-वि०प०)।

[रूपसिद्धि]

१-३. श्रितः, श्रितवान्, श्रित्वा। श्रि+क्त, क्तवन्तु, क्त्वा+सि। 'श्रिञ् सेवायाम्' (१।६०४) धातु से क्त-क्तवन्तु-क्त्वा प्रत्यय, 'क्-उ' अनुबन्धों का प्रयोगाभाव, प्रकृत सूत्र से इडागम का निषेध तथा विभक्तिकार्य।

४-१८. युतः, युतवान्, युत्वा। यु+क्त, क्तवन्तु, क्त्वा+सि। रुतः, रुतवान्, त्वा। रु+क्त, क्तवन्तु, क्त्वा+सि। लूनः, लूनवान्, लूत्वा। लू+क्त, क्तवन्तु, त्वा+सि। वृतः, वृतिवान्, वृत्वा। वृङ्-वृञ्+क्त, क्तवन्तु, क्त्वा-सि। कीर्णः, ीर्णवान्, कीर्त्वा। कृ+क्त, क्तवन्तु, क्त्वा+सि। प्रक्रिया पूर्ववत्॥१३६४।

## १३६५. घोषवत्त्योश्च कृति [४।६।८०]

[सूत्रार्थ]

कृत्सञ्ज्ञक घोषसंज्ञक वर्ण (घोषवदादि कृत्प्रत्यय) तथा 'ति' प्रत्यय के परे ते इडागम का निषेध होता है॥१३६५।

[दु०वृ०]

घोषवति तौ च कृत्यसञ्ज्ञके नेड् भवति। ईश्वरः, दीप्रः, शर्म्मा, दीप्तिः, ागर्त्तिः, बुद्धिः तिक् च-तन्तिः, सन्तिः। कथं निगृहीतिः, निपठितिः, निकुचितिः, सन्निहितिः, आलोचितिः? मण्डूकप्लुतिवाधिकाराद् ग्रहादेरिड् भवति। अपचितिरिति जायां निष्कृतौ चेष्यते। कथं शस्त्रम्? आगमस्यानित्यत्वात्। पत्रमिति। "युग्यं पत्रे" ३।१।१२१) इति निर्देशात्॥१३६५।

[दु०टी०]

घोष०। कृदवयवोऽपि घोषवान् वर्णः कृदुच्यते उपचारात्। वर्णग्रहणे तदादावित्येक ते न्यायः पुनः कृद्विषयो घोषवान् कृत्संज्ञकश्च तिरिति एकापि सप्तमी अर्थवशाद् द्यते। अत एव कृतीत्येकवचनम्, तेन रुदिवः, रोदितीति सिद्धम्। कथमित्यादि। न ग्रहादेरित्यपि वक्तव्यम्। सङ्ग्रहमाह— मण्डूक इत्यादि। चायतेश्चिभावः क्तौ क्तव्यो नेत्याह— अपपूर्वाच्चिनोतेर्भविष्यति। अपपूर्वश्चिनोतिरपचये पूजायां निष्कृतौ नेकार्थत्वाद् धातूनां प्रकरणाद् विशिष्टोऽर्थ इति। चायतेस्तु क्तौ नाभिधानम्, नहि तिरिति प्रयोगे दृश्यते। शस्त्रमित्यादि। **अभिधानलक्षणा हि कृत्तद्धितसमासा** ते॥१३६५।

[वि०प०]

घोष०। जागर्त्तिरिति। 'जागुः कृत्यशन्तृङ्व्योः' (४।१।८) इति यण्वद्भावात्' **यणाशिषोर्ये**" (३।६।१३) इति गुणः। तिक् चेति। "**तिक्कृतौ सञ्ज्ञायामाशिषि**" ।५।११२) इति तिक्। न केवलं स्त्रियां क्तिरित्ययमपीत्यर्थः। चायतेश्चिभावः क्तौ वक्तव्यः इत्याह— अपचितिरिति। **अनेकार्थत्वाद् धातूनाम्** अपपूर्वश्चिनोतिरपचये जायां निष्कृतौ च वर्तते, चायतेस्तु क्तौ अपचातिरिति नाभिधीयते। कथमित्यादि। स्यतेऽनेनेति, पद्यतेऽनेनेति विग्रहे "**नीदापशसुयुयुज०**" (४।४।६१) इत्यादिना ॥१३६५।

[क०त०]

घोष०। यद्यपि कृतोरिति द्विचनं युज्यते, तथापि कृज्जातिमाश्रित्यैकवचनम्। वृत्तौ तिक् चेति क्तिग्रहणे क्तिमात्रं कृतं स्यात्। तिकश्च ग्रहणे तिक्मात्रं कृतं स्यात्, अत उभयोर्ग्रहणमिति भावः। भणितिरित्यादिप्रयोगश्च नञा निर्दिष्टस्यानित्यत्वादिति बोध्यम्। पञ्ज्यां चायतेश्चिभावः क्तावित्यादि क्तावित्युपलक्षणं तिक्यपीति। टीकायां 'रुदिवः' इति वेदितव्यः इति तेन कृद्ग्रहणेनेत्यर्थः॥१३६५।

[समीक्षा]

'ईश्वरः, दीप्रः, बुद्धिः, तन्तिः' इत्यादि शब्दरूपों के सिद्ध्यर्थ इडागम का निषेध दोनों व्याकरणों में किया गया है। अन्तर यह है कि कातन्त्रकार ने घोषवदादि तथा ति-प्रत्यय को एक ही सूत्र में पढ़ा है, जबकि पाणिनि ने वशादि (कातन्त्रीय घोषवदादि) प्रत्ययों में तथा ति-प्रत्यय में इडागम के निषेधार्थ पृथक् सूत्र बनाये हैं। पाणिनि के सूत्र हैं— "नेड्वशि कृति, तितुत्रतथसिसुसरकसेषु च" (अ०७।२।८,९)। इस प्रकार कातन्त्रकारीय उत्कर्ष सिद्ध होता है।

[विशेष वचन]

१. मण्डूकप्लुतिवाधिकाराद् ग्रहादेरिड् भवति (दु०वृ०)।

२. अपचितिरिति पूजायां निष्कृतौ चेष्यते (दु०वृ०,दु०टी०,वि०प०)।

३. अनेकार्थत्वाद् धातूनां प्रकरणाद् विशिष्टोऽर्थः (दु०टी०,वि०प०)।

[रूपसिद्धि]

१-८. **ईश्वरः।** ईश्+वर+सि। **दीप्रः।** दीप्+र+सि। **शर्म्मा।** शॄ+मन्+सि। **दीप्तिः।** दीप्+क्ति+सि। **जागर्त्तिः।** जागृ+क्ति+सि। **बुद्धिः।** बुध+क्ति+सि। **तन्तिः।** तन्+तिक्+ सि। **सन्तिः।** सन्+तिक्+सि। 'ईश्' आदि धातुओं से 'वर' आदि प्रत्यय तथा प्रकृत सूत्र से इडागम का निषेध॥१३६५।

## १३६६. वेषुसहलुभरुषविषान्ति [४।६।८१]

[सूत्रार्थ]

तकारादि असार्वधातुक प्रत्यय के परे रहते 'इष्-सह्-लुभ्-रुष्-विष्' धातुओं से इडागम विकल्प से होता है॥१३६६।

[दु०वृ०]

एषान्तकारादावसार्वधातुके वेड् भवति। एष्टा, एषिता। सोढा, सहिता। लोब्धा, लोभिता। रोष्टा, रोषिता। वेष्टा, वेषिता। उदनुबन्धः किम्? **'इष गतौ, इष आभीक्ष्ण्ये वा'** (३।१३;८।४५)- एषिता नित्यम्॥१३६६।

[दु०टी०]

–वेषु०। 'लुभ गार्ध्ये, लुभ विमोहने' (३।७३;५।२९) इति विशेषाभावाद् भाष्ये ग्रहणात् प्रतिषेध इति स्मृतिः। परादपीटो नित्येन विकरणेन व्यवहितं सार्वधातुकमित्याह— तदा सार्वधातुक इति। तीति अन्तग्रहणानुवर्तनमत्रेति। विधिरत्रेति यस्य विधिस्तदादौ वर्णग्रहणमित्यर्थः। कृतीति न वर्तते अधिकारस्येष्टत्वात्।।१३६६।

[वि०प०]

वेषु०। परमपीह वेटं बाधित्वा नित्यत्वाद् भवता विकरणेन सार्वधातुकस्य व्यवहितत्वादाह— तकारादावसार्वधातुक इति। एवमुत्तरत्रापि। कृतीत्यपि न स्मर्यतेऽनिष्टत्वादिति।।१३६६।

[क०त०]

वेषु०। वा-धातुर्नाशङ्क्यते आदन्तत्वेन प्रतिषेधस्य सिद्धत्वात्।।१३६६।

[समीक्षा]

'एष्टा-एषिता, लोब्धा-लोभिता' इत्यादि शब्दरूपों के सिद्ध्यर्थ विकल्प से इडागम दोनों ही व्याकरणों में किया गया है। 'इषु-सह्-लुभ्-रुष्' इन चार धातुओं में समानता है, परन्तु कातन्त्र में पाँचवीं धातु 'विष्' पढ़ी गई है। पाणिनि ने 'रिष्' धातु का ही केवल पाठ किया है। उनका सूत्र है— "तीषसहलुभरुषरिषः" (अ०७।२।४८)। अतः उभयत्र पर्याप्त समानता है।

[विशेष वचन]

१. कृतीति न वर्तते, अधिकारस्येष्टत्वात् (दु०टी०)।

२. कृतीत्यपि न स्मर्यतेऽनिष्टत्वात् (वि०प०)।

[रूपसिद्धि]

१-५. एषिता, एष्टा। इषु+इट्+तृच्+सि। सहिता, सोढा। सह्+इट्+तृच्+सि। लोभिता, लोब्धा। लुभ्+इट्+तृच्+सि। रोषिता, रोष्टा। रुष्+इट्+तृच्+सि। वेषिता, वेष्टा। विष्+इट्+तृच्+सि। 'इषु-सह्-लुभ्-रुष-विष्' धातुओं से तृच् प्रत्यय, प्रकृत सूत्र से वैकल्पिक इडागम तथा विभक्तिकार्य। इडागम के अभाव में 'एष्टा' इत्यादि रूप।।१३६६।

## १३६७. रधादिभ्यश्च [४।६।८२]

[सूत्रार्थ]

रधादिगणपठित धातुओं से उत्तरवर्ती यकारादिभिन्न व्यञ्जनादि असार्वधातुक प्रत्यय के परे रहते उससे पूर्व में इट् का आगम विकल्प से होता है।।१३६७।

[दु०वृ०]

तीति न वर्तते पृथग्वचनात् टानुबन्धलिङ्गाद् रधादिभ्यश्च परस्यासार्वधातुकस्य व्यञ्जनादेरयकारादेरादिरिड् भवति वा। रत्स्यति, रधिष्यति। नङ्क्ष्यति, नशिष्यति। आवृत्करणं रधादिः। 'ररन्धिव, ररन्धिम' इति क्रादिनियमान्नित्यमिट्।।१३६७।

[दु०टी०]

रधा०। पूर्ववदिहासार्वधातुकमागमि- टानुबन्धलिङ्गादिति। यथा सार्वधातुकस्यादिरिति तथा अयकारादेरित्यपि, तेन रध्यादिति कुत इट्प्रसङ्ग इत्यर्थः। आवृत्करणं 'रध-तृप-दृप-मुह-द्रुह-ष्णुह-ष्णिह-नश' अष्टौ रधादयः। 'ररन्धिव' इत्यादि सूत्रेण प्रकृतिलक्षणस्य प्रतिषेधस्य नियमेन व्यवस्थितविभाषया नित्यमिति भावः। अन्य आह भवितव्यमेव विभाषया। तथा चाख्याते 'ररन्धिव, रेध्व' इति परत्वाद् रधादिभ्यश्च विभाषयेति कैश्चिद् उक्तम्।।१३६७।

[समीक्षा]

'रत्स्यति, रधिष्यति' इत्यादि प्रयोगों के सिद्ध्यर्थ दोनों ही व्याकरणों में वैकल्पिक इडागम का विधान किया गया है। पाणिनि का सूत्र है— "रधादिभ्यश्च" (अ०७।२।४५)। इस प्रकार उभयत्र पूर्ण समानता ही है।

[विशेष वचन]

१. अन्य आह भवितव्यमेव विभाषया (दु०टी०)।

[रूपसिद्धि]

१-२. रधिष्यति, रत्स्यति। रध्+इट्+स्यति। नशिष्यति, नङ्क्ष्यति। नश्+इट्+स्यति। 'रध्-नश्' धातुओं से भविष्यन्ती- प्रथमपुरुष-एकवचन 'स्यति' प्रत्यय, प्रकृत सूत्र से वैकल्पिक इडागम। इडागम के अभाव में रत्स्यति, नङ्क्ष्यति रूप।।१३६७।

## १३६८. स्वरतिसूतिसूयत्यूदनुबन्धात् [४।६।८३]

[सूत्रार्थ]

'स्वृ-सू' एवं ऊकारानुबन्ध वाली धातुओं से परवर्ती यकारादिभिन्न व्यञ्जनादि असार्वधातुक प्रत्यय के आदि में इट् का आगम विकल्प से होता है।।१३६८।

[दु०वृ०]

स्वरतेः सूतेः सूयतेरूदनुबन्धाच्च परस्यासार्वधातुकस्य व्यञ्जनादेरयकारादेरादिरिड् भवति वा। स्वर्ता, स्वरिता। सोता, सविता। सुवतेस्तु नित्यम्— सविता। निगोढा, निगूहिता। विधोता, विधविता। धुत्वा धूत्वा च सिद्धम्।

स्वरिष्यतीति परत्वाद् विकल्पो न स्यात्, व्यवहितवावचनात्, तथा स्वृसूङोश्च कानुबन्धे नित्यं स्यात्— स्वृत्वा, सूत्वेति। अपतिनिष्कुषोरिति प्रतिषेधात् निष्कुषेर्वैडस्तीति गम्यते। असार्वधातुकस्य व्यञ्जनादेरयकारादेरिति— निष्कोष्टा, निष्कोषिता॥१३६८।

[दु०टी०]

स्वरति०। सूतेरसार्वधातुकमेव ज्ञेयम्, अन्येषां साहचर्यात्। 'स्वृ शब्दे' (१।२७१), तिब्निर्देश इह श्रुतिसखार्थः। 'षूङ् प्राणिगर्भविमोचने'(२।५४) अादादिकः, 'षूङ् प्राणिप्रसवे' (३।८१) दैवादिकः, 'षूङ् प्रेरणे' (५।१८) तौदादिकः। यद्येवं षूङ् आस्ताम्, अङानुबन्धत्वादेव सुवतेर्निवृत्तिः? सत्यम्, यथा स्वरतेस्तिब्निर्देशः सुखार्थस्तथानयोरपीति। अन्यस्तु 'लुग्विकरणालुग्विकरणयोर्लुग्विकरणस्यैव ग्रहणम्' (व्या०-परि०४३) इति ज्ञापनार्थं तिप्करणमत्राङ्गीकृतम्। धुनोतेः "उतोऽयुरुनुस्नुक्षुक्ष्णुवः" (३।७।१५) इति इट्प्रतिषेधः, इतरेषां प्राप्तौ विभाषेयम्। स्वरिष्यतीति। अथवा 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधकः' (व्या०परि०४२) इति "ऋतोऽवृङ्वृञः" (३।७।१६) इति योगं बाधते न "हनृदन्तात् स्ये" (३।७।७) इति। तथा "न श्र्युवर्णवृतां कानुबन्धे" (४।६।७९) इति 'पूर्वपरयोः परविधिर्बलवान्' (कलाप०-पृ० २२८) इति परस्येष्टवाचित्वाद् वा॥१३६८।

[वि०प०]

विरति०। 'षूङ् प्राणिगर्भविमोचने' (२।५४) इत्यदादौ 'षूङ् प्राणिप्रसवे' (३।८१) इति दिवादौ 'सोता, सविता' द्वयोरेव इदमुदाहरणमभेदेन दर्शितम्। न च लुग्विकरणस्य सूतेरनन्तरं सार्वधातुकमिति, तस्याप्यादिरिट् स्यादिति वाच्यम्, अन्त्यादिभिः साहचर्यात्। सुवतेरिति। 'षु प्रेरणे' (५।१८) तौदादिकादित्यर्थः। धूञो विकल्पः कर्तव्यो नेत्याह— विधौतेति। धुनोतेः "उतोऽयुरुनुस्नुक्षुक्ष्णुवः" (३।७।१५) इति इट्प्रतिषेधोऽस्ति। धुनातेस्तु दीर्घान्तत्वादिडस्तीति विकल्पः सिद्धः, न चार्थभेदोऽस्ति, द्वयोरपि कम्पनार्थत्वात्। स्वरिष्यतीत्यादौ "हनृदन्तात् स्ये" (३।७।७) इति नित्यमिडित्यर्थः। तथेति। "ऋतोऽवृङ्वृञः, न श्र्युवर्णवृतां कानुबन्धे" (३।७।१६,४।६।७९) इत्यनयोः कानुबन्धे नित्यं प्रतिषेधः, न तु परत्वादनेन विकल्प इति भावः। अपतीत्यादि। अन्यथा पतेः "इवन्तर्द्ध०" (३।७।३३) इत्यादिना वेट्त्वात् प्रतिषेधो युज्यते। निष्कुषेस्तु वेट्त्वाभावात् प्राप्त्यभावे "न डीश्वी०" (४।६।९०) इत्यादावनर्थकः प्रतिषेध इति॥१३६८।

[क०त०]

स्वरति०। स्वृ सूङिति कृते सिध्यति तिब्निर्देशः स्पष्टार्थः। साहचर्यादिति। अथवा टानुबन्धलिङ्गादेवासार्वधातुकमिति लभ्यते, कुतः सार्वधातुके स्यादिति शङ्का। कायामथवेति। अथ "हनृदन्तात् स्ये" (३।७।७) इत्यपि बोध्यम्, तत्राह— पूर्वपरयोरिति॥१३६८।

[समीक्षा]

'सोता, सविता, गोप्ता, गोपिता' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में वैकल्पिक इडागम किया गया है। पाणिनि का सूत्र है— "स्वरतिसूतिसूयतिधूञूदितो वा" (अ०७।२।४४)। अतः उभयत्र समानता ही है।

[विशेष वचन]

१. तिब्निर्देश इह श्रुतिसुखार्थः (दु०टी०)।

२. तिब्निर्देशः सुखार्थः (दु०टी०; क०त०-स्पष्टार्थः)।

३. इतरेषां प्राप्तौ विभाषेयम् (दु०टी०)।

४. परस्येष्टवाचित्वाद् वा (दु०टी०)।

[रूपसिद्धि]

१-८. **स्वरिता**, स्वर्ता। स्वृ+इट्+तृच्+सि। **सविता**, सोता। सू+इट्+तृच्+सि। **निगूहिता**, निगोढा। नि+गुहू+इट्+तृच्+सि। **विधविता**, विधोता।–वि+धू+इट्+तृच्+सि। 'स्वृ, सू, गुहू, धूञ्' धातुओं से तृच् प्रत्यय, प्रकृत सूत्र से वैकल्पिक इडागम, गुण, अवादेश तथा विभक्तिकार्य। इडागम के अभाव में 'स्वर्ता' आदि शब्दरूप साधु माने जाते हैं।।१३६८।

## १३६९. उदनुबन्धपूक्लिशां क्त्वि [४।६।८४]

[सूत्रार्थ]

क्त्वा प्रत्यय के परे रहते उकारानुबन्ध वाली धातुओं से तथा 'पूङ्-क्लिश्' धातुओं से वैकल्पिक इडागम होता है।।१३६९।

[दु०वृ०]

उदनुबन्धात् पुवः क्लिशश्च क्त्वाप्रत्यये इड् भवति वा। शमु-शान्त्वा, शमित्वा। पूञ् पूङ् वा-पूत्वा, पवित्वा। क्लिश्-क्लिष्ट्वा, क्लिशित्वा। उदनुबन्धस्य क्लिशेश्च प्राप्ते विभाषा, पुवः कानुबन्धेऽप्राप्त एव।।१३६९।

[दु०टी०]

उदनु०। 'क्लिश उपतापे' (३।१०४) इत्यस्य ग्रहणम्। 'क्लिशू उपतापे' (८।४२) इत्यस्योदनुबन्धबलादेव विकल्पः सिद्ध इति पूङो ङानुबन्धं पठन्त्येके। चेक्रीयितलुगन्तनिवृत्त्यर्थं 'पूङ् निवृत्तौ विशेषभावे' (१।४६५-पूङ् पवने) इति पोपवित्वा, पवित्वा। पुव इति। पूङ्पूञोः **"न श्र्युवर्णवृतां कानुबन्धे"** (४।६।७९) सति प्राप्त एवेत्यर्थः। देदिवित्वेति। **"उदनुबन्धपूक्लिशां क्त्वि"** (४।६।८४) इति विशेषोऽस्ति। अयं तु चेक्रीयितलुगन्तस्य चेति **चूर्णीकारमतं** भाषायामपीति उदनुबन्धं प्रति वाऽधिकारः स्पष्टार्थ एव। उदनुबन्धस्य हि क्त्वि नित्यमिडस्ति वचनबलाद् विकल्पः सिध्यतीति।।१३६९।

[वि०प०]

उदनुबन्ध०। क्लिशेश्चेति। 'क्लिश उपतापे' (३।१०४) इत्यस्य ग्रहणं न तु 'क्लिशू विबाधने' (८।४२) इति। अस्योदनुबन्धत्वाद् विकल्पः सिद्ध एवेति। पुव इति। पूञ्पूङोस्तु "न श्र्युवर्णवृताम्" (४।६।७९) इत्यादिना नित्यमिटप्रतिषेधे प्राप्ते वचनम् इत्यर्थः। इह पूङ इति ङानुबन्धो नाद्रियते।।१३६९।

[क०त०]

उद०। पोपवित्वेति। न चानेन विकल्पाभावेऽपि "न श्र्युवर्ण०" (४।६।७९) इत्यादिना नित्यं निषेधः कथं न स्यादिति वाच्यम्, न श्र्युवर्णवृतां यः कानुबन्ध इति सम्बन्धात्। अयं तु चेक्रीयितलुगन्तस्य विकल्प इति विकल्पप्रकरणत्वादनेनैव विकल्पः, न तु उदनुबन्धत्वं प्रति इडागम इत्यत्रेति बोध्यम्।।१३६९।

[समीक्षा]

'शान्त्वा, शमित्वा' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में विकल्प से इट् आगम किया गया है। एतदर्थ पाणिनि के तीन सूत्र हैं— "क्लिशः क्त्वानिष्ठयोः पूङश्च, उदितो वा" (अ० ७।२।५०, ५१, ५६)। इस प्रकार पाणिनि का सूत्रत्रयप्रयुक्त गौरव असन्दिग्धरूप में कहा जा सकता है।

[विशेष वचन]

१. ऊदनुबन्धस्य क्लिशेश्च प्राप्ते विभाषा, पुवः कानुबन्धेऽप्राप्त एव (दु०वृ०)।

२. चेक्रीयितलुगन्तस्य चेति चूर्णीकारमतं भाषायामपि (दु०टी०)।

३. वाऽधिकारः स्पष्टार्थ एव (दु०टी०)।

[रूपसिद्धि]

१-३. **शमित्वा, शान्त्वा**। शमु+इट्+क्त्वा+सि। **पवित्वा, पूत्वा**। पू+इट्+क्त्वा+सि। **क्लिशित्वा, क्लिष्ट्वा**। क्लिश्+इट्+क्त्वा+सि। 'शम्, पू, क्लिश्' धातुओं से क्त्वा प्रत्यय, 'क्' अनुबन्ध का प्रयोगाभाव, प्रकृत सूत्र से वैकल्पिक इडागम तथा विभक्तिकार्य। इडागम के अभावपक्ष में 'शान्त्वा, पूत्वा, क्लिष्ट्वा' रूप सिद्ध होते हैं।।१३६९।

## १३७०. जॄव्रश्च्योरिट् [४।६।८५]

[सूत्रार्थ]

क्त्वा प्रत्यय के परे रहते 'जॄ+व्रश्चू' धातुओं से इट् का आगम होता है।।१३७०।

[दु०वृ०]

जॄव्रश्चिभ्यां क्त्वि इड् भवति। जरीत्वा, जरित्वा। व्रश्चित्वा। लाक्षणिकत्वाद् जृष्— जीर्त्वा। व्रश्चेर्वचनान्नित्यमिडिति पुनरिड्ग्रहणम् उत्तरत्र वा-निवृत्त्यर्थम्।।१३७०।

[दु०टी०]

जॄ०। इटो दीर्घ इति योगविभागात् पक्षे दीर्घः-जरीत्वा। लाक्षणिकत्वादिति। निरनुबन्धः क्रैयादिक इह गृह्यते, न जॄषेति षानुबन्धो दैवादिक इत्यर्थः। भाष्ये त्वविशेष एव गृह्यते। व्रश्चेरित्यादि। 'व्रश्चू छेदने' (५।१९) इत्यस्माद् ऊदनुबन्धाद् विभाषा सिद्धा। जॄधातोश्च "न श्र्युवर्णवृतां कानुबन्धे" (४।६।७९) इति प्रतिषेधाद् विभाषाऽपि न सम्बध्यते साहचर्यादिति भावः। तस्मादुत्तरार्थं क्रियमाणमिहापि सुखार्थं भवतीति न दोषः॥१३७०।

[वि०प०]

जॄ०। कथं जरीत्वेति? सत्यम्। "इटो दीर्घो ग्रहेरपरोक्षायाम्" (३।७।१२) इत्यत्र योगविभागाद् इटः पक्षे दीर्घः। लाक्षणिकत्वादिति। तत् पुनः "योऽनुबन्धोऽप्रयोगी" (३।८।३१) इति वचनानुप्रवेशात्। 'जॄ वयोहानौ' (८।२०) क्रैयादिको गृह्यते, 'जॄष् झॄष् वयोहानौ' (३।१८) दैवादिको निरस्यते इति। ननु इडधिकारे किमर्थं पुनरिड्ग्रहणम्? नित्यार्थमिति चेत्, न। विकल्पाधिकारे हि व्रश्चिग्रहणमनर्थकं स्यात्, ऊदनुबन्धत्वात् स्वरतिसूतीत्यादिनैव विकल्पः सिद्धस्तत्साहचर्यात् जॄधातोरपि "न श्र्युवर्ण०" (४।६।७९) इत्यादिना निषिद्धेटोऽपि नित्यमिड् भवति? सत्यम्, उत्तरार्थं क्रियमाणमिह सुखार्थमित्याह— व्रश्चेरित्यादि॥१३७०।

[क०त०]

जॄ०। उत्तरत्र वानिवृत्त्यर्थमिति। ननु 'लुभो विमोहने' (४।६।८६) इति सूत्रोपादानाद् वाधिकारो निवर्त्तिष्यते, अन्यथा "वेषुसह०" (४।६।८१) इत्यादिना विकल्पः सिद्ध एव? सत्यम्, क्त्वाप्रत्यये विमोहने विभाषा विमोहनादन्यत्र न स्याद् इत्येतदर्थमपि सूत्रं स्यादिति पुनरिड्ग्रहणम्॥१३७०।

[समीक्षा]

'जरित्वा-जरीत्वा-व्रश्चित्वा' शब्दरूपों के सिद्ध्यर्थ दोनों ही शाब्दिकाचार्यों ने इडागम का विधान किया है। पाणिनि का सूत्र है— "जॄव्रश्च्योः क्त्वि" (अ०७।२।५५)। इस प्रकार उभयत्र पूर्ण समानता ही है।

[विशेष वचन]

१. भाष्ये त्वविशेष एव गृह्यते (दु०टी०)।

२. उत्तरार्थं क्रियमाणमिहापि सुखार्थं भवति (दु०टी०)।

[रूपसिद्धि]

१-३. जरीत्वा, जरित्वा। जॄ+इट्+क्त्वा+सि। व्रश्चित्वा। व्रश्च्+इट्+क्त्वा+सि। 'जॄ-व्रश्च्' धातुओं से क्त्वा प्रत्यय, इडागम, दीर्घ तथा विभक्तिकार्य॥१३७०।

## १३७१. लुभो विमोहने [४।६।८६]

[सूत्रार्थ]

क्त्वा प्रत्यय के परे रहते विमोहनार्थक लुभ् धातु से इट् का आगम होता है।।१३७१।

[दु०वृ०]

विमोहने लुभेः क्त्वीड् भवति। लुभित्वा। गार्द्ध्ये तु लुभित्वा, लुब्ध्वा।।१३७१।

[वि०प०]

लुभो०। गार्द्ध्ये त्विति। वेषुसहेत्यादिना विकल्प एव। यद्यपि 'लुभ गार्द्ध्ये' (३।७३) पठ्यते, तथाप्यनेकार्थत्वाद् विमोहनेऽपि वर्तते। विमोहनमाकुलीकरणम्। लुभित्वा। अनाकुलम् आकुलीकृत्येत्यर्थः। तथा उत्तरत्रापि। 'विलुभिताः केशाः' इति। अनाकुला आकुलीकृता इत्यर्थः।।१३७१।

[क०त०]

लु०। यद्यपीत्यादि। एतेन 'लुभो विमोहने' (४।६।८६) इति तुदादौ पाठो नास्तीति।।१३७१।

[समीक्षा]

'लुभित्वा' प्रयोग के सिद्ध्यर्थ दोनों ही व्याकरणों में इडागम किया गया है। पाणिनि का सूत्र है— "लुभो विमोहने" (अ०७।२।५४)। अतः उभयत्र साम्य ही है।

[रूपसिद्धि]

१. लुभित्वा। लुभ्+इट्+क्त्वा+सि। 'लुभ विमोहने' (५।२९) धातु से क्त्वा प्रत्यय, प्रकृत सूत्र से इडागम तथा विभक्तिकार्य।।१३७१।

## १३७२. क्षुधिवसोश्च [४।६।८७]

[सूत्रार्थ]

क्त्वा प्रत्यय के परे रहते 'क्षुध-वस्' धातुओं से इडागम होता है।।१३७२।

[दु०वृ०]

चकारेण लुभो विमोहने इत्यनुकृष्यते उत्तरार्थम्। क्षुधिवसोश्च क्त्वीड् भवति। क्षुधित्वा, उषित्वा। प्रतिषेधबाधकमिदम्।।१३७२।

[दु०टी०]

क्षुधि०। राधिरुधीत्यादिना वसतिघसेः साद् इत्यनेन च प्रतिषेधे प्राप्ते वस्तेः पुनरिडस्त्येव। व्यञ्जनादेर्व्युपधस्यावो वेति पक्षे गुणः- क्षोधित्वा। उषित्वेति वसतेर्यण्वद्भावात् सम्प्रसारणम्।।१३७२।

[वि०प०]

क्षुधि०। 'वस निवासे' (१।६।१४) इत्यस्य ग्रहणम् आच्छादनार्थस्य सिद्धत्वाद् वचनं नियमार्थं भवत्विति न वाच्यम्, **'विधिनियमसम्भवे विधिरेव ज्यायान्'** (का०परि०८४) इति। प्रकृतेः श्रुतश्चकारः इति न्यायाच्चकारेण लुभो विमोहने इत्यनुकृष्यते विशेषणत्वादिति बोध्यम्। **टीकायां** क्षोधित्वेति यन्मते गुणी क्त्व इत्यत्र क्षुधपाठो नास्ति, तन्मतमिदमिति॥१३७२।

[समीक्षा]

'क्षुधित्वा, उषित्वा' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में इडागम किया गया है। पाणिनि का सूत्र है— "वसतिक्षुधोरिट्" (अ०७।२।५२)। अतः उभयत्र समानता ही है।

[विशेष वचन]

१. प्रतिषेधबाधकमिदम् (दु०वृ०)।

[रूपसिद्धि]

**१-२. क्षुधित्वा।** क्षुध्+इट्+क्त्वा+सि। **उषित्वा।** वस्+इट्+क्त्वा+सि। 'क्षुध्-वस्' धातुओं से क्त्वा प्रत्यय, प्रकृत सूत्र से इडागम, सम्प्रसारण तथा विभक्तिकार्य॥१३७२।

## १३७३. निष्ठायां च [४।६।८८]

[सूत्रार्थ]

निष्ठासञ्ज्ञक 'क्त-क्तवन्तु' प्रत्ययों के परे रहते 'क्षुध्-वस्-लुभ्' धातुओं से इट् आगम होता है॥१३७३।

[दु०वृ०]

क्षुधिवसिभ्यां विमोहने लुभश्च निष्ठायामिड् भवति। क्षुधितः, क्षुधितवान्। उषितः, उषितवान्। लुभितः, लुभितवान्। गार्ध्ये तु व्यावृत्त्या विभाषापि बाध्यते— लुब्धः, लुब्धवान्॥१३७३।

[दु०टी०]

निष्ठा०। इह चकार **उक्तसमुच्चयार्थः** इति पूर्वोक्तश्चकारो 'लुभो विमोहने' इत्यस्यानुकर्षणार्थः। कथं प्रकृतेः श्रुतश्चकारः प्रकृतिमेवानुकर्षति, ननु तमिति गम्यते। नैवम्, **लोके** गौरो देवदत्तस्तमानयेत्युक्ते स आनीयमानः स्वविशेषणं जहाति तथात्रापीति। किञ्च श्रुतत्वात् सामान्यमश्रुतम्, अतो विशिष्टश्रुतस्यानुकर्षणमित्यर्थः। यद्यपि लुभ गार्ध्ये तथाप्यनेकार्था हि धातव इति विमोहने वर्तते। विमोहनमाकुलीकरणम् । लुभिताः केशाः, विलुभितानि पदानीति। नन्वाकुलग्रहणमेव कथन्न कुर्यात्, विशिष्टे यथा स्यादिति आकुलमात्रे मा भूत्। तथाहि— **'दधद् विलुभितं वातैः केशवो बर्हिपिच्छकम्'**। वेषुसहेत्यादिना विकल्पेट्त्वान्निष्ठायां नित्यमिट्प्रतिषेधे प्राप्ते नित्यम् इड् विधीयते॥१३७३।

[वि०प०]

निष्ठा। गार्ध्ये त्वित्यादि। वेषुसहेत्यादिना विकल्पे प्राप्ते इत्यर्थः। ननु चानेन वेट्त्वात् "न डीश्वी०" (४।६।९०) इत्यादिना निष्ठायामिट्प्रतिषेधे प्राप्ते 'लुभो विमोहने' इत्यनेन व्यावृत्त्या विभाषापि बाध्यते? सत्यम्; एवं युज्यते। विमोहनस्य व्यावृत्त्या 'लुब्धः, लुब्धवान्' इतीड् न भवति। विकल्पस्तर्हि कथन्न स्यादित्याह— विभाषापीति। न डीश्वीत्यादिवचनेन विभाषापि बाध्यते इति भावः॥१३७३।

[समीक्षा]

'क्षुधितः, उषितवान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ कातन्त्र तथा पाणिनीय दोनों ही व्याकरणों में इडागम का विधान किया है। पाणिनि के दो सूत्र हैं— "वसतिक्षुधोरिट्, लुभो विमोहने" (अ०७।२।५२,५४)। अन्तर यह है— कातन्त्रकार ने क्त्वा तथा निष्ठाप्रत्यय में इडागमार्थ पृथक् सूत्र बनाये हैं, जबकि पाणिनि ने एतदर्थ दोनों प्रत्ययों का समावेश एक ही सम्बद्ध सूत्र में किया है। इस प्रकार प्रायः उभयत्र समानता ही है।

[रूपसिद्धि]

१-६. **क्षुधितः, क्षुधितवान्।** क्षुध्+इट्+क्त, क्तवन्तु+सि। **उषितः, उषितवान्।** वस+इट्+क्त, क्तवन्तु+सि। **लुभितः, लुभितवान्।** लुभ+इट्+क्त, क्तवन्तु+सि। 'क्षुध्' इत्यादि धातुओं से 'क्त-क्तवन्तु' प्रत्यय, प्रकृत सूत्र से इडागम, वकार को सम्प्रसारण तथा विभक्तिकार्य॥१३७३।

## १३७४. पूक्लिशोर्वा [४।६।८९]

[सूत्रार्थ]

निष्ठासञ्ज्ञक 'क्त-क्तवन्तु' प्रत्ययों के परे रहते 'पू-क्लिश' धातुओं से वैकल्पिक इडागम होता है॥१३७४।

[दु०टी०]

पू०। पू-इति पूङ्पूञोः सामान्येन ग्रहणम्। एतयोः "न श्र्युवर्णवृतां कानुबन्धे" (४।६।७९) इतीट्प्रतिषेधे प्राप्ते पक्षे इड् विधीयते। क्लिशेर्निरनुबन्धस्य नित्यमिट्प्राप्ते उदनुबन्धस्य वेट्त्वान्निष्ठायां नित्ये प्राप्ते विभाषेयम्। केचिद् अत्र पूङ इति ङानुबन्धं पठन्ति। तदापि "शीङ्पूङ्घृषि०" (४।१।१५) इत्यादिना चेक्रीयितलुगन्तस्य 'पोपुवितः, पोपुवितवान्' नित्यमिट् सिद्धो भाषायामपि॥१३७४।

[वि०प०]

पू०। पूङ्पूञोः सामान्येन ग्रहणम् अविशेषनिर्देशात्। तथा क्लिशेरपि। न ह्यत्र 'निरनुबन्धग्रहणे न सानुबन्धकस्य' (का०परि०४८) इत्यादृतम्। तत्र पुवः क्लिशेश्च "उदनुबन्धपूक्लिशां क्त्वि" (४।६।८४) इति वेट्त्वाद् उदनुबन्धस्य क्लिशेः

स्वरतिसूतीत्यादिना वेट्त्वान्निष्ठायां नित्ये प्रतिषेधे प्राप्ते विकल्प इष्यते। ननु यदि पूञोऽपीह ग्रहणं तदा इटि कृते निष्ठायां पुवितः, पुवितवानिति अनिष्टरूपं स्यात् "शीङ्पूङ्धृषि०" (४।१।१५) इत्यादिगुणसूत्रेऽस्य ग्रहणात्? सत्यम्। तत्रोक्तम्, उत्तरत्र वावचनान्नित्यमिहेति पूञो गुणो न स्याद् विकल्प एव कृतः स्याद् अर्थस्याभेदात्। न चासौ युज्यते तद्विरुद्धस्य नित्यस्योत्तरत्र वावचनेन समर्थितत्वादिति पूञोऽपि गुणः स्यादेव। तत्र ङकारः सुखार्थः यथा पूङ इति। वयन्तु पश्यामः- सूत्रे इह ङानुबन्ध एव पाठः। पूञस्तु पूत इत्येव भवति॥१३७४।

[क०त०]

पू०। असाविति विकल्प इत्यर्थः। क्लिशेर्निरनुबन्धस्य क्लिश ऊदनुबन्धस्य नित्य इट् प्राप्त इत्यादि ऊदनुबन्धपूक्लिशामित्यत्र यन्मते क्लिशग्रहणं नास्ति तन्मतमित्यर्थः। क्लिशेर्निरनुबन्धस्य विकल्पेट्त्वादिति कुत्रचित् पाठस्तदा सङ्गच्छते एव नित्यमिट् सिद्ध इति चेक्रीयितलुगन्तस्य वेट्त्वभावादिडागम इत्यनेन नित्यमिट् सिद्ध इत्यर्थः॥१३७४।

[समीक्षा]

'पवितः, क्लिशितवान्' इत्यादि शब्दों के सिद्ध्यर्थ वैकल्पिक इडागम का विधान दोनों ही व्याकरणों में किया गया है। पाणिनि के दो सूत्र हैं— "क्लिशः क्त्वानिष्ठयोः, पूङश्च" (अ०७।२।५०,५१)। इस प्रकार उभयत्र प्रायः समानता ही है।

[विशेष वचन]

१. चेक्रीयितलुगन्तस्य नित्यमिट् सिद्धो भाषायामपि (दु०टी०)।

२. तत्र ङकारः सुखार्थः (वि०प०)।

[रूपसिद्धि]

१-४. पवितः, पूतः। पू+इट्+क्त+सि। पवितवान्, पूतवान्। पू+इट्+क्तवन्तु+सि। क्लिशितः, क्लिष्टः। क्लिश्+इट्+क्त+सि। क्लिशितवान्, क्लिष्टवान्। क्लिश्+इट्+क्तवन्तु+ सि। 'पू-क्लिश्' धातुओं से 'क्त-क्तवन्तु' प्रत्यय, प्रकृत सूत्र से, वैकल्पिक इडागम तथा विभक्तिकार्य। इडागम के अभाव में 'पूतः' इत्यादि शब्दरूप सिद्ध होते हैं॥१३७४।

## १३७५. न डीश्वीदनुबन्धवेटामपतिनिष्कुषोः [४।६।९०]

[सूत्रार्थ]

निष्ठासंज्ञक 'क्त-क्तवन्तु' प्रत्ययों के परे रहते डी-श्वि-ईदनुबन्ध तथा वैकल्पिक इडागम वाली धातुओं से इडागम नहीं होता है पत् तथा निष्कुष् धातुओं को छोड़कर॥१३७५।

[दु०वृ०]

एभ्यो धातुभ्यः पतिनिष्कुषवर्जितेभ्यो निष्ठायां नेड् भवति। उड्डीनः, उड्डीनवान्। शूनः, शूनवान्। दीपी-दीप्तः, दीप्तवान्। ओ लस्जी-लग्नः, लग्नवान्। लस्जेरोदनुबन्धत्वाद् इड् भवेण्णत्वं स्याद् ईदनुबन्धः किमिति चेत्? सविकल्पकं वा ज्ञापकं स्यादिति, तथा डीश्वी च कर्तव्यौ। विकल्पेटां च गुहू-गूढः, गूढवान्। शमु-शान्तः, शान्तवान्। अपतिनिष्कुषोरिति किम्? पतितः, पतितवान्, निष्कुषितः, निष्कुषितवान्। कथं दरिद्रितः, दरिद्रितवान्? एकस्वरोऽत्र स्मर्तव्यः। अपतिनिष्कुषोरिति **पर्युदासाद्** वा।।१३७५।

[दु०टी०]

न डी०। श्विडीङावोदनुबन्धौ डीयेति यणं पठन्त्येके। तेन भौवादिकस्य डीङः डयितः, डयितवानिति। लस्जेरित्यादि। ओदनुबन्ध एव ज्ञापको निष्ठायामिडभावः, स हि नत्वार्थ उपदिश्यते। नत्वं चौदनुबन्धादनन्तरस्य निष्ठातकारस्य विधीयते। यदि पुनरिट् स्याद् व्यवधानार्थत्वान्नत्वमेव न स्यादित्यर्थः। वाग्रहणेनैतत् सूचितम्, इटा व्यवधानबलान्न भवतीति स्वादय ओदनुबन्धास्तत्र पाठाद् डीङोदनुबन्ध इत्यर्थः। 'टु ओ श्वि' (१।६१६)-ननु श्वयतेः सम्प्रसारणे कृते **''न श्र्युवर्णवृतां कानुबन्धे''** (४।६।७९) इति प्रतिषेधो भविष्यति परत्वादिट् स्यान्नित्यं सम्प्रसारणम्। इह पुनरनित्य इति? सत्यम्, तत्र विहितविशेषणमुक्तम् **'सकृद् बाधितो विधिर्बाधित एव'** (का०परि०५७) इति, तस्मात् श्वयतिग्रहणमेव तयोर्लिङ्गं भविष्यतीति स्थितम्।

विकल्पेटां चेति। उदनुबन्धत्वाद् वेत्युक्तम्। एवं गाहू-गाढः, गाढवान्। **''उदनुबन्धपूक्लिशां वा''** (४।६।८४) इत्युक्तम्। वृध्-वृद्धः, वृद्धवान्। **''गमहनविदविशां वा''** (४।६।७७) इत्यत्रान्विकरणस्य विदेर्ग्रहणात् तस्यैव निष्ठायामिट्प्रतिषेधो वेत्तेरिट् भवत्येव— विदितः, विदितवान्। ननु कृतादेर्वापि सेऽसिचीति वेट्त्वेऽपि 'कृती-चृती-नृती' एषामीदनुबन्धः प्रतिपदोक्तयोगे लिङ्गम्। तेन तृचि अनिट्त्वमनपेक्ष्य ये मन्यन्ते तन्मतमाश्रित्योक्तम्। एतच्च यथाकथञ्चित् कृतीप्रभृतीनाम्, न तु वेट्त्वेनानिट्त्वं क्वचिद् व्यभिचरति। यथा बुद्धम्, घुधितम्। अपतीत्यादि। नित्यात्वतां वेट् थलीति पतितः, पतितवानित्यत्र प्रतिषेधो न स्यात्। **अन्य** आह- नञा निर्दिष्टत्वात् सिद्धिर्न विभाषा तस्य च विकृत इत्यनेन **''इवन्तर्द्ध०''** (३।७।३३) इत्यादिना प्राप्तः प्रतिषिध्यते, निष्कुषेश्चात एव वर्जनाद् वेट्त्वमुक्तमेव। कथमित्यादि। **'अर्त्तीण्घसैकस्वराताम्'** (४।६।७६) इति योगविभागादित्यर्थः। अथवा पतिनिष्कुषावेकस्वरौ तत्सदृशा वेटोऽप्येकस्वरा इत्यर्थः।।१३७५।

[वि०प०]

न डी०। डीश्विभ्यां "ल्वाद्योदनुबन्धाच्च" (४।६।१०४) इति निष्ठातकारस्य नत्वम्, श्वयतेस्तु यजादित्वात् सम्प्रसारणम्, "तद् दीर्घमन्त्यम्" (४।१।५२) इति दीर्घः। लस्जेः "स्कोः संयोगाद्योरन्ते च" (३।६।५४) इति सलोपे, जकारस्य गत्वे चान्तरङ्गत्वात् पश्चान्निष्ठातकारस्य नत्वम्। ननु ओदनुबन्धोऽस्य निष्ठातकारस्य नत्वार्थः पठ्यते, नत्वं चानन्तरस्य निष्ठातकारस्या यदि इट् स्यात् तदा तेन व्यवधानान्नत्वं न स्याद् इत्योदनुबन्धो व्यर्थः स्यात्, तस्मादोदनुबन्ध एवेडभावस्य ज्ञापको भवितव्य इति किमनुबन्धेनेत्याह— लस्जेरिति। चेत्शब्दः किमित्यस्यानन्तरम् आशङ्कार्थो द्रष्टव्यः। सविकल्पमिति। कदाचिद् इडागमोऽपि स्यादिति भावः। वाशब्देन तु ओदनुबन्धबलाद् इटा व्यवहितस्यापीति पक्षान्तरमाह- तथेति। ष्वादय ओदनुबन्धा इति डीङः ओदनुबन्धत्वम्, श्वयतेस्तु साक्षादेव। तथा पूर्वोक्तादेव हेतोरिति। ननु डीङ्धातुर्भौवादिकोऽप्यस्ति न चायमोदनुबन्ध इति तदर्थः पाठः कथन्न स्यात्? सत्यम्, ओदनुबन्धपक्षे तदिदमुक्तम्। भौवादिकपक्षे त्ववश्यं कार्यं डीङ्ग्रहणम्। इदमयुक्तमेवेत्यन्ये। इह ओदनुबन्धस्यैव डीङो ग्रहणं शयतिना साहचर्यात्। भौवादिकस्य तु डयितः, डयितवान् इति इट् स्यादेव। अत एव केचित् शीङ्-पूङ्-इत्यादौ डीङ्ग्रहणं गुणार्थमाचक्षते।

वृत्तिकारस्य तु मतम्- शीङ्पूङित्यादौ डीङ्ग्रहणाभावाद् भौवादिकस्यापीट्-प्रतिषेधः, अन्यथा गुणार्थं डीङ्ग्रहणं कुर्यात्। न च निष्ठाया नत्वाभावः शङ्कनीयः। दैवादिकस्यैव पाठोऽयं यन्नर्थ ओदनुबन्धार्थश्चेति। तदिदमुक्तं डयतेरेवायं निर्देशः श्यन्नर्थ ओदनुबन्धार्थश्चेति॥१३७५।

[क०त०]

न डी०। लग्न इत्यादि। अथान्तरङ्गत्वाद् गत्वेऽपि कृते "अघोषे प्रथमः" (२।३।६१) इति कथन्न स्यात् तस्याप्यन्तरङ्गत्वात्। न च सकृद्बाधितत्वादिति वाच्यम्, भुग्नः इत्यादिसिद्धेः। नच निमित्ताभावे नैमित्तिकस्याप्यभावो भविष्यति, तदा हि गकारस्याप्यभावः स्यात्? सत्यम्, कृतेऽपि कत्वे "धुटां तृतीयः" (२।३।६०) इति प्रवर्तते। ननु चतुर्थेष्वेवेति नियमान्न स्यादिति वाच्यम्, लक्ष्यदृष्ट्या नियमाभावस्य दृष्टत्वात्। अन्यथा 'रुग्णः, भुग्नः' इत्यपि कथं स्यादिति।

पञ्ज्यां भौवादिकपक्षे त्विति अस्मिन् पक्षे भौवादिकस्य 'डीतः, डीतवान्' इति कश्चित्। वृत्तिकारस्येति। वृत्तिकारमते 'डीनः, डीनवान्' इत्येव भवति। न च भौवादिकस्य नत्वाभावशङ्का स्यादित्याह- न चेति। पाठोऽयमिति दिवादेरिति शेषः। श्यन्नर्थो यन्नर्थ इत्यर्थ ओदिदर्थ इति ओदनुबन्धार्थ इत्यर्थः। एति गच्छतीति व्युत्पत्त्या परक्रियायामनुबन्धसञ्ज्ञायां तदिदमुक्तमिति धातुवृत्ताविति शेषः।

[पाठान्तरम्-टीकायां परत्वादिति। पुनः पूर्वपक्षयति- नित्यमिति। तत्र समाधानमाह— सत्यमित्यादि। यद्यपि तत्र विहितविशेषणं नोक्तम्, तथापि श्रुतत्वेन श्युवर्णादिसम्बन्धिकानुबन्ध इति व्याख्यानं पर्यवसितम्। सत्यमित्यादि। तत्रेदमप्यङ्गीकृतं स्रादेरेवानिट्पक्ष इति। तत्रेटि सति न स्यात् सकृद्बाधितत्वादिति। तेन तत्रादावेव यत इत्याश्रितम्। तयोरिति श्रुतव्याख्यानात् प्रागनिट्पक्षयोरित्यर्थः। ननु कृतादेर्वापीत्यादि पूर्वपक्षसमाधानमाह- कृतीति। प्रतिपदोक्तेत्यादिसूत्रोक्तवेटां ग्रहणार्थमित्यर्थः। पचादीनां च यद्यपि तृचि नित्यानिट्त्वं नास्ति, थलि वेट्त्वमपि नित्यात्वतामिति। ये भिन्नं वक्तव्यमाद्रियन्ते तृचि नेट् इति न सम्बध्नन्ति तेषां मतमिदमिति। पूर्वोक्तसिद्धान्तो युक्त इति मन्यमानस्य मतमाह-अन्य आहेति। विभाषेति। नित्यात्वतामिति विभाषा न विहितेत्यर्थः, किन्तु पचप्रभृतीनां निषेधोऽस्ति, तेषां थलि नञा निर्दिष्टस्यानित्यत्वात् पक्षे न निषेध इति कुतः पचप्रभृतीनां प्रसङ्गस्तर्हि कृतीप्रभृतीनामीदनुबन्धोऽनर्थकस्तत्राह तस्येति। एतन्मतमयुक्तमिति लक्ष्यते, तस्मान्नञा निर्दिष्टमनित्यमिति न्यायात् पक्षे वेट्त्वमस्त्येव। तस्मात् कृत्यादीनामीदनुबन्धो ज्ञापयति वेट्त्वं नानिट्त्वं व्यभिचरत्यपीति। तेन 'बुद्धम्, बुधितम्' इत्यादि। बुधु उदनुबन्ध इति कश्चित् तन्मतमिदमुक्तम्। स्वमते तु युधिव्यधीत्यत्र बुध्यतीति यना निर्देशाद् दैवादिकस्यानिड् भौवादिकस्येडस्त्येवेति सिद्धं बोध्यम्]॥१३७५।

[समीक्षा]

'शूनः, लग्नवान्, गूढः' इत्यादि शब्दरूपों की सिद्धि दोनों व्याकरणों में इडागम के निषेध से की गयी है। एतदर्थ पाणिनि के दो सूत्र हैं— "श्वीदितो निष्ठायाम्, यस्य विभाषा" (अ०७।२।१४,१५)। पाणिनीय सूत्रद्वयप्रयुक्त गौरव को छोड़कर शेष तो उभयत्र समानता ही है।

[विशेष वचन]

१. अन्य आह- नञा निर्दिष्टत्वात् सिद्धिः (दु०टी०)।

२. केचित् शीङ्-पूङ्-इत्यादौ डीङ्ग्रहणं गुणार्थमाचक्षते (वि०प०)।

३. वृत्तिकारस्य तु मतं शीङ्पूङित्यादौ डीङ्ग्रहणाभावात् (वि०प०)।

४. वृत्तिकारमते डीनः, डीनवान् इत्येव भवति (क०त०)।

[रूपसिद्धि]

१-१२. उड्डीनः, उड्डीनवान्। उद्+डीङ्+क्त, क्तवन्तु+सि। शूनः, शूनवान्। श्वि+क्त, क्तवन्तु+सि। दीप्तः, दीप्तवान्। दीप्+क्त, क्तवन्तु+सि। लग्नः, लग्नवान्। लस्जी+क्त, क्तवन्तु+सि। गूढः, गूढवान्। गुहू+क्त, क्तवन्तु+सि। शान्तः, शान्तवान्। शमु+क्त, क्तवन्तु+सि। उद्-उपसर्गपूर्वक डीङ्, श्वि इत्यादि धातुओं से क्त, क्तवन्तु प्रत्यय, प्रकृत सूत्र से इडागम का निषेध, तकार को नकारादेश, उकार को दीर्घ तथा विभक्तिकार्य॥१३७५।

## १३७६. आदनुबन्धाच्च [४।६।९१]

[सूत्रार्थ]

निष्ठासंज्ञक प्रत्ययों के परे रहते आकारानुबन्ध वाली धातुओं से इडागम नहीं होता है॥१३७६।

[दु०वृ०]

आदनुबन्धाच्च धातोर्निष्ठायां नेड् भवति। ञि मिदा-मिन्नः, मिन्नवान्। ञि क्षिदा- क्षिण्णः, क्षिण्णवान्। **चकारोऽनुक्तसमुच्चयार्थः**। तेन जपिवमिभ्यां वा— जप्तः, जपितः। वान्तः, वमितः। व्याङ्भ्यां श्वसः- विश्वस्तः, विश्वसितः। आश्वस्तः, आश्वसितः। कर्तरि कर्मणि चायं प्रतिषेधो भावादिकर्मणोर्वेति वक्ष्यति॥१३७६।

[समीक्षा]

'मिन्नः, स्विन्नवान्' आदि प्रयोगों के सिद्ध्यर्थ दोनों ही आचार्यों ने इडागम का प्रतिषेध किया है। पाणिनि का सूत्र है— "आदितश्च" (अ०७।२।१६)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-४. **मिन्नः, मिन्नवान्**। ञि मिदा+क्त, क्तवन्तु+सि। **क्षिण्णः, क्षिण्णवान्**। ञि क्षिदा+क्त, क्तवन्तु+सि। 'मिदा-क्षिदा' धातुओं से क्त-क्तवन्तु प्रत्यय, प्रकृत सूत्र से इडागम का निषेध, दकार-तकार को नकारादेश तथा विभक्तिकार्य॥१३७६।

## १३७७. भावादिकर्मणोर्वा [४।६।९२]

[सूत्रार्थ]

भाव तथा आदिकर्म अर्थ में विहित निष्ठासञ्ज्ञक प्रत्ययों के परे रहते इट् का आगम विकल्प से होता है॥१३७७।

[दु०वृ०]

आदनुबन्धाद् धातोर्भावे आदिक्रियायां च निष्ठायामिड् भवति वा। मिन्नम्, मेदितमनेन। प्रमिन्नः, प्रमेदितो भवान्। वेट्त्वात् सिद्धे **योगविभागो** ज्ञापयति— यदर्थस्य विभाषा, तदर्थस्यैव प्रतिषेध इति। तेन गम-हन-विद-विश-दृशां वेति साहचर्याल्लाभार्थस्य विदेर्ग्रहणे ज्ञानार्थस्य प्रतिषेधो न स्यात्-विदितः, विदितवान्॥१३७७।

[दु०टी०]

भावा०। वेट्त्वादिति। हृषेर्लोमसु विभाषा निष्ठायां तुष्टौ न भवति-हृषितः, हृषितवान्। एतदुक्तं भवति भावादिकर्मणोर्वेतीयं विभाषा कर्तरि कर्मणि च निष्ठायां प्रतिषेधनिमित्तं भविष्यति। कस्यांचिन्निष्ठायां प्रतिषेध इत्येवमापन्नम्, तस्माद्

योगविभागो ज्ञापयतीत्यर्थः। ननु चैतज्ज्ञापयितव्यमेव एष न्यायो यद्विशिष्टो यदुच्यते तदन्यविशिष्टस्य न भवतीति। नहि स्वरतेर्विभाषया पचतेः प्रतिषेधो भविष्यति, अप्रस्तुतस्य रहितत्वात्। सत्यवस्थाभेदे उपलक्षणानां व्यापारो नात्यन्तं भेदे? सत्यम्। इदमलिङ्गं युक्तं भवति, एकस्यैव तावद् धातोर्भावकर्मभ्यां कर्त्रा च सञ्ज्ञा भिद्यमानस्य स एवायम् इत्युपलक्षणमशक्यमाश्रयितुं किं पुनर्यत्र प्रतिपदाद् धात्वर्थभेदाच्च मुख्यमनानात्वे श्रुतिभेदादवधारणमात्रं तत्रोपलक्षणं स्यादिति।

केचिदाहुः "यस्य विभाषा" (अ० ७।२।१५) इति भावकर्मणोरेव प्रतिषेधः स्यादिति। तत्र युक्तम्। विभाषाप्रवृत्तिवैयर्थ्याद् यदि तावन्नित्य एव प्रतिषेधो विभाषाऽनर्थिका। अथ पक्षे प्रतिषेधः, प्रतिषेधो विभाषयैवोभयरूपत्वाद् विभाषाविषय- श्चान्यत्र प्रत्ययान्तविकृत्यर्थः प्रतिषेधः कथं विभाषाविषयमवगाहते, तस्माद्दोदनुबन्धस्य निष्ठायां प्रतिषेधस्तन्निमित्तेनैव स्यात्। नहि प्रत्यय उपाधिरभिधेयत्वात् तथापि संसर्गमात्रमुपाधिरुच्यते, एवमपि समानप्रत्यये विभाषाविषये प्रतिषेधस्य वृत्तेर्वैयर्थ्यात् प्रत्ययं परित्यज्यान्योपाधिराश्रीयते। यद्येवं गमादीनां क्वन्सौ विभाषा क्वन्सुः कर्तरीति कर्तर्येव निष्ठायां प्रतिषेधो भवितव्यः, न भावकर्मणोः।

अत्र केचिदाहुः— यत्र धात्वर्थस्यानुरूपं गृह्यते तत्र भवितव्यः, यदा विदिर्लाभार्थे ज्ञानार्थे इति भेदः। कर्तृकर्मसम्बन्धे च सत्यपि धात्वर्थस्य स्वरूपादप्रच्युतिरभिन्न एवोपाधिरिति। एवं सति योगविभागोऽनर्थकः। यद्यपि गृह्यादिकर्मणि धात्वर्थभेदः स्यात्, भावे तु को धात्वर्थभेदः। अथ साधनसंसर्ग एवात्रापि स एव विद्यते। एवन्तर्हि आचार्यप्रवृत्तिर्ज्ञापयति— क्त्वि विभाषानिमित्तः प्रतिषेधः इति। शकेः कर्तरि विभाषेति **अन्ये**— शक्तो घटः कर्तुम्, शकितो घटः कर्तुम् इति॥१३७७।

**[वि०प०]**

भावा०। आदनुबन्धाच्च भावकर्मणोर्वेत्येकयोगे भावादिकर्मणोर्विकल्पे विहिते वेट्त्वमादनुबन्धानामस्तीति पूर्वेण कर्तरि कर्मणि च नित्यं प्रतिषेधो भविष्यति किं **योगविभागेनेत्याह—वेट्त्वादित्यादि**। यद्येवम् **"उदनुबन्धपूक्लिशां क्त्वि"** (४।६।८४) इति क्त्वाप्रत्यये भावविषये विभाषेति भाव एव निष्ठायां प्रतिषेधः स्यात्, न कर्त्रादौ। नैष दोषः, आश्रीयमाणो हि धर्मो भेदको भवति। न च क्त्वाप्रत्ययस्य भावलक्षणोऽर्थः सन्नपि विकल्पस्य निमित्तत्वेनाश्रीयते इति। भवत्येवोदनुबन्धानामिट्- प्रतिषेधः। तथा च ड्वनुबन्धात् त्रिमक् तेन निर्वृत्त इति। **कश्चिदाह**— शकेः कर्मणि वेति वक्तव्यमिति शक्तो घटः कर्तुम्, शकितो घटः कर्तुम्, तथैव **पुनरभिधानादित्यर्थः**॥१३७७।

[क० त०]

भाव०। वेट्त्वादिति। अन्यथा विदो विकल्पेट्त्वाद् रूपसाम्यादयमपि द्विविरिति, ज्ञानार्थस्यापि प्रतिषेधः स्यादिति भावः। **पञ्चम्यामाश्रीयमाण** इति क्त्वाप्रत्ययस्य भावलक्षणोऽर्थोऽर्थापत्त्या प्राप्तः। अत्र तु साक्षाद् भावकर्मणोरित्याश्रीयत इति। ननु यत्रार्थापत्त्या भावार्थस्य प्राप्तिस्तद्विषयेऽप्यन्यस्मिन्नर्थे निष्ठायां प्रतिषेधो न स्यादित्याशङ्क्य दृष्टान्तस्वरूपं ज्ञापकमाह-तथा चेति। निर्वृत्त इत्यत्र कर्मणि क्तप्रत्यये इट्प्रतिषेध इति भावः।

[पाठान्तरम्- टीकायामप्रच्युतस्येति यद्विशिष्टस्य यदुच्यते तत्स्वरूपाप्रच्युतस्येत्यर्थः, किं पुनरिति तत्रोपलक्षणादित्यनेनान्वयः, उपाधिरिति विशेषणमित्यर्थः। संसर्गमात्र इति न त्वभिधेयमेव विशेष इति भावः]॥१३७७।

[समीक्षा]

'भिन्नमनेन, प्रमेदितो भवान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में विकल्प से इडागम का विधान किया गया है। पाणिनि का सूत्र है— "विभाषा भावादिकर्मणोः" (अ०७।२।१६)। अतः उभयत्र समानता ही है।

[विशेष वचन]

१. योगविभागो ज्ञापयति— यदर्थस्य विभाषा तदर्थस्यैव प्रतिषेधः (दु०वृ०)।

२. कश्चिदाह-शकेः कर्मणि वेति वक्तव्यम् (वि०प०)।

[रूपसिद्धि]

**१-२ मेदितम्,** भिन्नमनेन। ञि मिदा+इट्+क्त+सि। **प्रमेदितः,** प्रभिन्नो भवान्। भिद् धातु से 'क्त' प्रत्यय, प्रकृत सूत्र से भाव तथा आदिक्रिया अर्थ में वैकल्पिक इडागम, धातु की उपधा को गुण तथा विभक्तिकार्य, इडागम के अभाव में दकार-तकार को नकारादेश होकर 'भिन्नम्, प्रभिन्नः' रूप॥१३७७।

## १३७८. क्षुभि-वाहि-स्वनि-ध्वनि-फणि-कषि-घुषां क्ते नेड् मन्थ-भृश-मनस्तमोऽनायास-कृच्छ्राविशब्दनेषु [४।६।९३]

[सूत्रार्थ]

'क्त' प्रत्यय के परे रहते मन्थ अर्थ में क्षुभ् धातु, भृश अर्थ में वाह् धातु, मनस् अर्थ में स्वन् धातु, अन्धकार अर्थ में ध्वन् धातु, अनायास अर्थ में फण् धातु, कृच्छ्र अर्थ में कष् धातु तथा विशब्दन अर्थ में घुष् धातु से इट् का आगम नहीं होता है॥१३७८।

[दु०वृ०]

एभ्यो मन्थादिष्वर्थेषु क्ते नेड् भवति यथासङ्ख्यम्। क्षुब्धो मन्थः। चलितो मन्थ इत्यर्थः। मन्थ इति द्रवद्रव्यालोडिताः सक्तव उच्यन्ते। 'वाहृ प्रयत्ने' (१।४५२)।

वाढं भृशम्। अत्रावृत्त्यातिशयोऽभ्युपगमश्च गृह्यते, न तु शीघ्रार्थः। स्वान्तं मनः। वाह्येष्वविक्षिप्तमित्यर्थः। ध्वान्तं तमः। 'फण गतौ' (१।५३८) फाण्टम्। अनायास-निर्यातत्वात् सद्यो भिषजोद्धृतौषधं द्रवद्रव्यमेवेष्यते। कष शिष-कष्टोऽग्निः; कष्टः पर्वतः। कृच्छ्रहेतुत्वात् कृच्छ्रं गहनमप्युच्यते। कृच्छ्रं दुःखम्। सति मुख्ये गौणेऽप्यभिधानम्। **'घुषिर् शब्दे'** (१।४५६) इति भ्वादौ- घुष्टा रज्जुः। घुष्टं शरीरम्। 'घुषिर् विशब्दने' (१।२०५;९।१४६) इति चुरादौ। विशब्दने तु स्यादिट्। अवघुषितं वाक्यमाह। विशब्दन इति प्रतिषेधाच्चुरादाविन् स्याद् विभाषयेति। तेनेदं सिद्धम्—

**'महीपालवचः श्रुत्वा जुघुषुः पुष्पमानवाः'** इति। अनेकार्थत्वाद् भौवादिक एव वा विशब्दनेऽपीति। स्वाभिप्रायं शब्देनाविष्कृतवन्त इत्यर्थः।

मन्थादिष्विति किम्? क्षुभितः, वाहितः, स्वनितः, ध्वनितः, फणितः, कषितः, घुषितः। तथा भिन्नाधिकरणेऽपि— क्षुभितं मन्थेन, वाहितं भृशेन, स्वनितं मनसा, ध्वनितं तमसा, फणितम् अनायासेन, कषितं कृच्छ्रेण, घुषितं शरीरेण। कथम् उद्घुष्टं कोकिलयेति? प्रकृत्यर्थविशेषणात्। कथं क्षुब्धः समुद्र इति? उपमानाद् भविष्यति ॥१३७८।

**[दु०टी०]**

क्षुभि०। मन्थादिष्वर्थेष्विति। यदा मन्थादयः क्तवाच्या भवन्ति, तदेट्प्रतिषेधः। यदा तु भावे क्तः पदान्तरवाच्यास्तु मन्थादयस्तदा भवन्तीति। एतदुक्तं भवति— क्षुभ्यादीनां मन्थादिविषये इति न सम्बन्धोऽनभिधानात्। क्षुब्धो मन्थ इत्यादि। चलितो मन्थ इति क्षुभिना मन्थविषयं चलनमभिधीयते। फाण्टमित्यनायासं यदश्रपितमपिष्टं द्रव्यम् उदकसम्पर्कमात्राद् विभक्तरसकर्षोऽयमित्येके। अग्निना तप्तं यत् किञ्चिद् वस्तु इत्यपरे। अविद्यमानायासपुरुषोऽन्यो वा फाण्टमित्यपरे। 'फाण्टचित्रास्त्रपाणयः' इति कथमिदम्? तथा च **'प्रोद्घुष्टं परपुष्टया तव भवत्युच्चैर्वचोऽनेकशः'**। अविशब्दे वर्तमानस्यात्र घुषिरित्यन्तमभिधानात् प्राप्तम्॥१३७८।

**[वि०प०]**

क्षुभि०। आवृत्त्येति। पौनःपुन्येनेत्यर्थः। अनायासनिर्यातत्वादिति— अल्पप्रयास-साध्यत्वादित्यर्थः। न विद्यते आयासो यत्र तदनायासं द्रवद्रव्यमेव कथ्यते। इह कृच्छ्रे कष्टोऽग्निरित्येतदेव स्यात् 'कष्टः पर्वतः' इति गहने न स्यात्। न हीह कृच्छ्रगहनयोः कष इति सूत्रमस्तीत्याह— कृच्छ्रहेतुत्वादिति। गहनमपीति। न केवलमितरं कृच्छ्रकारणम् अग्न्यादिकं कृच्छ्रमित्यपिशब्दार्थः। कृच्छ्रमित्यादि। ननु यदि कृच्छ्रं दुःखं तस्मिन्नेव स्यात्, न तत्कारणेऽग्न्यादौ? सत्यम्। कृच्छ्रकारणमपि कृच्छ्रमिहोच्यते एतदिति खलु गौणम् मुख्याभावे स्यादित्याह— सतीति। मुख्येऽपि भवतीति। कष्टं वर्तते दुःखमित्यर्थः।

विशब्दनप्रतिषेधादिति। नानाशब्दनं विशब्दनम्, यदि पुनश्चुरादेर्नित्यम् इन् स्यात् तदाऽस्मिन् सूत्रे विशब्दनप्रतिषेधो व्यर्थः स्यात्। चौरादिक एव विशब्दने वर्तते स चेनन्तः सन् घुषिरेव भवति। अनेकस्वरश्चासौ एकस्वराधिकारश्चेह वर्तते इति प्राप्तेरभावः। तथेति। यदा मन्थादयः क्तान्तानां क्षुब्धादीनामभिधेया भवन्ति, न तु विषयास्तदायं प्रतिषेधः। अत्र तु भावे क्त इति विषयत्वं मन्थादीनां कथमिति। तथा च दृश्यते— **'प्रोद्घुष्टं परपुष्टया तव भवत्युच्चैर्वचोऽनेकशः'** इति। परिहारमाह— प्रकृत्यर्थेति। प्रकृतेरर्थोऽवि-शब्दलक्षणस्तस्य विशेषणादिदमुक्तं भवति। अविशब्दन एवार्थे वर्तमानस्य घुषेरिडभावः। कोकिलयेति पदान्तरसम्बन्धाद् विशब्दनावगम इति॥१३७८।

[क०त०]

क्षुभि०। एकापीयं सप्तमी द्विधा भिद्यतेऽभिधानात्। तथाहि मन्थादिष्वभिधेयेषु यः क्त इति अविशब्दने वर्तमानस्य घुषेश्च य इति सक्तव इति। स च समवाये इत्यस्य रूपम्। गहनमिति अनवगाह्यमित्यर्थः। जुघुषुरिति। अन्यथा प्रत्ययान्तत्वादाम् स्यात्। अनेके चेत्यादि। ननु यद्यनेकार्थत्वाद् भौवादिकोऽपि विशब्दने वर्तते तर्हि कथं ज्ञापकम्, तद्व्यावृत्त्यर्थमेव विशब्दनग्रहणं स्यादिति। नैवम्, प्रयोगसिद्ध्यर्थमनेकार्थस्याङ्गीकारस्तत्र न युज्यते व्यावृत्तेर्मुख्यत्वादिति भावः। पञ्ज्यां पौनःपुन्येनेति। एतेन भृशशब्दस्य वारद्वयमुच्चारणमिति बोध्यम्। ननु तथापि कथम् अतिशयाभ्युपगमयोरेव ग्रहणं वृत्तावुक्तम्? सत्यम्, इष्टिरियं कष्टोऽग्निरित्येव स्यादिति। नन्वग्नेरेव पर्वतस्यापि कृच्छ्रहेतुत्वात् तत् कथमिदमुक्तम्? सत्यम्, अग्ने कृच्छ्रहेतुता स्पर्शादिना साक्षादेवानुभूयते, पर्वतस्य तु न साक्षादिति, किन्तु तत्स्थव्यालादिद्वारा परम्परयेति भेददर्शनार्थमिदमुक्तं तस्य विशेषणादिति तु विशेषणत्वादित्यर्थः। तस्य विशेषणत्वमेव स्फुटयति— इदमित्यादि। एतेन विशब्दने पदं निष्पाद्य पश्चाद् विशब्दनार्थः प्रतीयते इति प्रतिपादितम्॥१३७८।

[समीक्षा]

'क्षुब्ध-स्वान्त-ध्वान्त' इत्यादि शब्दरूपों की सिद्धि दोनों ही व्याकरणों में इडागम के निषेध से की गई है। अन्तर यह है कि कातन्त्रकार ने इट् का निषेध किया है, जबकि पाणिनि निपातन से इन शब्दों को सिद्ध करते हैं, 'कष्टम्, घुष्टा' में उन्होंने भी इट् का प्रतिषेध ही किया है। उनके तीन सूत्र है—"क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु, कृच्छ्रगहनयोः कषः, घुषिरविशब्दने" (अ०७।२।१८,२२,२३)। इस प्रकार विधिभेद होने पर भी सामान्यतया उभयत्र समानता ही है।

[रूपसिद्धि]

१-७. क्षुब्धो मन्थ:। क्षुभ्+क्त+सि। बाढं भृशम्। बाह्+क्त+सि। स्वान्तं मन:। ान्+क्त+सि। ध्वान्तं तम:। ध्वन्+क्त+सि। फाण्टम्। फण्+क्त+सि। कष्टोऽग्नि:, कष्ट: ्तं:। कष्+क्त+सि। घुष्टा रज्जु:, घुष्टं शरीरम्। घुष्+क्त+आ+सि। 'क्षुभ्' इत्यादि तुओं से क्त-प्रत्यय, इट् का प्रतिषेध तथा विभक्तिकार्य।।१३७८।

## ३७९. लग्नम्लिष्टविरिब्धा: सक्ताविस्पष्टस्वरेषु [४।६।९४]

[सूत्रार्थ]

सक्त अर्थ में क्त-प्रत्ययान्त 'लग्न' शब्द, अविस्पष्ट अर्थ में 'म्लिष्ट' शब्द था स्वर अर्थ में 'विरिब्ध' शब्द निपातन से सिद्ध होता है।।१३७९।

[दु०वृ०]

लग्नादय: क्तान्ता: सक्तादिष्वर्थेषु यथासङ्ख्यं निपात्यन्ते। लगे— लग्नं सक्तम्, ेगितमन्यत्। म्लेच्छ— म्लिष्टम् अविस्पष्टम्। म्लेच्छितमन्यत्। रेभृ-विरिब्ध: स्वर:। ो ध्वनिरत्र। विरेभितमन्यत्। अन्ये तु विरिभितमिति प्रत्युदाहरन्ति रिभिं सौत्रं धातुं चेति। धृष्टो विश्वस्त इति धृषेरादनुबन्धत्वात् शसोश्चोदनुबन्धत्वाद् वेडिति प्रतिषेध: गल्भ्य एव रूढ:। अन्यत्र धर्षितो विश्वसित: इत्यभिधानान्नञोऽनित्यत्वाद् वा।।१३७९।

[वि०प०]

लग्न०। 'धृषिशसी वैयात्ये' इति न वक्तव्यम् इत्याह-धृष्ट इत्यादि। वैयात्यं गल्भ्यम् अविनीततेति यावत्।।१३७९।

[समीक्षा]

'लग्न-म्लिष्ट-विरिब्ध' शब्दों की सिद्धि दोनों ही व्याकरणों में निपातन से गई हैं। पाणिनि का सूत्र है— "क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि न्थमन- स्तम:सक्ताविस्पष्टस्वरानायासभृशेषु" (अ०७।२।१८)। अत: उभयत्र पूर्ण मानता है।

[विशेष वचन]

१. अन्ये तु विरिभितमिति प्रत्युदाहरन्ति (दु०वृ०)।

२. रिभिं सौत्रं धातुं मत्वा (दु०वृ)।

३. वेडिति प्रतिषेध: प्रागल्भ्य एव रूढ: (दु०वृ०)।

[रूपसिद्धि]

१-३. लग्नं सक्तम्। लगे+क्त+सि। म्लिष्टम् अविस्पष्टम्। म्लेच्छ्+क्त+सि। रिब्ध: स्वर:। 'लगे' इत्यादि धातुओं से सक्त इत्यादि अर्थों में 'क्त' प्रत्यय, ृत सूत्र से निपातन द्वारा इडागम का प्रतिषेध तथा विभक्तिकार्य।।१३७९।

## १३८०. परिवृढदृढौ प्रभुबलवतोः [४।६।९५]

[सूत्रार्थ]

प्रभु अर्थ में 'परिवृढ' शब्द तथा बलवान् अर्थ में 'दृढ' शब्द निपातन से सिद्ध होता है॥१३८०।

**[दु०वृ०]**

एतौ प्रभुबलवतोरर्थयोर्यथासङ्ख्यं निपात्येते। परिपूर्वस्य बृंहतेरिडभावो नलोपश्च, तथा दृंहेश्च। बृहदृंहौ प्रकृत्यन्तरे तयोरपीत्येके। परिवृढः प्रभुः, दृढो बलवान्। स्थूलोऽपि दृढो बलवानेवाभिधीयते। कथं परिवृढय्य गतः? परिवृढादिन् समासाभावाद् यप् न स्यात्? सत्यम्, तत्करोतीति सिद्धे 'संग्राम युद्धे' इति **गणपाठो** ज्ञापयति— नाममात्रादिन्निति। अपचायितः, अपचित इति चायिना चिञा च पूजावृत्तिना सिद्धम्। कथं वृत्तो पारायणं विप्रेण, वृत्तो गुणश्छात्रेणेति? अन्तर्भूतेनर्थवृत्तेर्भविष्यति। इनन्तस्यापि वर्तितो गुणोऽनेनेति भवितव्यमिति मतम्। **अन्ये** तु इनोऽध्ययने वृत्तमिति निपातयन्ति॥१३८०।

**[वि०प०]**

परिस्थूलोऽपीति सन् बलवानेव दृढशब्देनाभिधीयते, न तु स्थूलमात्रम्। अतः स्थूले निपातो न विधेयः। यदाह— दृढः स्थूलबलयोरिति। कथमित्यादि। रशब्दः ऋतो लघोर्व्यञ्जनादेरिति रशब्दादेशः **"लघुपूर्वोऽय् यपि"** (४।१।३८) इतीनोऽयादेशः। इह परिवृढादिनि कृते **"ते धातवः"** (३।२।१६) इति वचनात् परिवृढीत्यस्य धातुत्वं न धातुमात्रस्य समासो येन यप् स्याद् इति **पूर्वपक्षार्थः**? सत्यम् इत्यादिपरिहारस्या**यमर्थः**- नायं परिवृढादिन् किन्तर्हि वृढात्। अतो वृढीत्यस्यैव धातुत्वं परिशब्देन चोपसर्गेण समासे यप् सिध्यति, यदि पुनः सोपसर्गसमुदायादिन् स्यात् तदा 'संग्राम युद्धे' इति धातुत्वार्थः पाठो न कृतः स्यात्— सङ्गतो ग्रामः **सङ्ग्रामः**, तत् करोतीति इनि कृते सोपसर्गस्य धातुत्वसिद्धिः।

आत्मनेपदार्थः पाठो न धातुत्वार्थश्चेद् एवन्तर्हि 'ग्राम युद्धे' इति पठितव्यं स्यात्। एवमपि संशब्देन युक्तः प्रयोगो युज्यते। यथा इङिकोः केवलयोः पाठेऽप्यधिना योगोऽभिधीयते अधीते, अध्येतीति। तस्मात् सोपसर्गस्य धातुत्वार्थ एव पाठ इति ज्ञापकत्वान्न विरुध्यते। अपचायित इत्यादि। एतेनापपूर्वाच्चायेः पक्षे चिभावो न वक्तव्य इति दर्शितम्। कथमित्यादि। वृतिरयमकर्मकस्तत्कथं कर्मणि प्रत्यय इत्याह— अन्तर्भूतेनर्थेत्यादि। तत्र यथा **"ड्वनुबन्धात् त्रिमक् तेन निर्वृत्ते"** (४।५।६८) इत्यभिधानादन्यत्राप्यन्तर्भूतकारितार्थत्वात् सकर्मकस्य वृतेः कर्मणि प्रत्यये रूपम्, तथेदमपीत्यर्थः। मतमिति **वररुचेः** सम्मतमित्यर्थः। **अन्ये** त्विति। तथा च **"णेरध्ययने वृत्तम्"** (अ०७।२।२६) इति सूत्रमधीयते॥१३८०।

[क०त०]

परि०। 'तृहि वृहि वृद्धौ' (१।२।४७) इति भ्वादिः, 'तृहू तृन्हू हिंसार्थे'(५।६९) ति तुदादिः। अत्र तृन्हूरिति तकारवानेव पाठः-अतांक्षीदिति तत्रोदाहृतत्वात्। अत्र ] निपातनाद् 'दृढः' इत्यत्र दकार इति बोद्धव्यम्। तर्हि कथम् डभावनलोपयोरेवापेक्षया तथाशब्दः समुच्चये? सत्यम्, निपातनमपेक्ष्य तथाशब्दः समुच्चये इति बोध्यम्, कथमन्यथा तकारस्य दकारः स्यात्। ढे ढलोपे दीर्घ इति दीर्घत्वं प्राप्तम्, ततो ह्रस्वोऽपि निपातनीय इति, नैवम्, सञ्ज्ञापूर्वकत्वादतो न स्याद् त्युक्तत्वात्। "णेरध्ययने वृत्तम्" (अ०७।२।२६) इति परः।

अस्यार्थः- णेरिनन्तवृतो धातोरध्ययनविषये वृत्तमिति निपात्यते इति; तत् कथमित्याह— कथमिति। सिद्धान्तमाह-अन्तर्भूतेनर्थवृत्तेरिति। पञ्ज्यां स्थूलोऽपीत्यादि। तत्रायं विशेषः परमते। स्थूलत्वं प्रवृत्तिनिमित्तमादाय बलवत्यभिधानम्। स्वमते तु बलवत्त्वमादाय स्थूले तात्पर्यमिति। किन्तर्हि वृढाविति। ननु कथमिदमुच्यते परिवृढ इत्यस्य निपातितत्वात् समुदायादेव स्यात्? सत्यम्, यद्यपि समुदायात् क्रियते तथापि अर्थापत्त्या वृढादेव। यथा— परमोपकुम्भम् इत्यत्र कर्मधारयादपि विभक्तिर्विहिता अर्थापत्त्याऽव्ययाभावादिति। अर्थापत्तिश्चात्र 'संग्राम युद्धे' (९।२१९) इति ज्ञापकोपन्यास एव। अथ समुदायोपसर्गसहितादेव यथा स्यादित्येतदर्थो गणे पाठः। तत्राह— एवमपीति। ननु किमति 'ग्राम युद्धे' इति न कृतः पाठः, नाममात्रादिन्निति पक्षस्तु तत्र नामाधिकारादेव सिध्यति। तथा च टीकायां 'स्वमनायत' इत्यादावप्यडागमः उपसर्गात् परो भूत इति दर्शितवान् सुमनायेति समुदायस्य धातुत्वे सुशब्दात् पूर्वमेव स्यात्। तथा च आशिषयतीति नास्तीत्यन्त्यस्वरलोपः यल्लिङ्गादिन् स्यानेकस्वरत्वाभावात् 'संग्राम युद्धे' (९।२१९) इति गणपाठादेव तत्र नामाधिकार इत्यन्यः, अन्यथा न स्यादिति मन्ये।।१३८०।

[समीक्षा]

'परिवृढ- दृढ' शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में निपातनविधि का आश्रय लिया गया है। एतदर्थ पाणिनि के दो सूत्र हैं— "दृढः स्थूलबलयोः, प्रभौ परिवृढः" (अ०७।२।२०, २१)। पाणिनीय सूत्रद्वयप्रयुक्त गौरव के अतिरिक्त तो उभयत्र समानता ही कही जा सकती है।

[विशेष वचन]

१. गणपाठो ज्ञापयति— नाममात्रादिन्निति (दु०वृ०)।

२. मतमिति। वररुचेः सम्मतमित्यर्थः (वि०प०)।

३. सिद्धान्तमाह— अन्तर्भूतेनर्थवृत्तेरिति (क०त०)।

[रूपसिद्धि]

१. परिवृढः प्रभुः। परि+वृह+क्त+सि। 'परि' उपसर्गपूर्वक 'वृन्ह' (१।२४७; ९।१७०) धातु से 'क्त' प्रत्यय, प्रकृत सूत्र से निपातन द्वारा इडागम का अभाव, नलोप, हकार को ढकार, तकार को धकार, धकार को ढकार, पूर्ववर्ती ढकार का लोप तथा विभक्तिकार्य।

२. दृढो बलवान्। दृन्ह+क्त+सि। 'दृहि' (१।२४७) धातु से 'क्त' प्रत्यय आदि कार्य पूर्ववत्।।१३८०।

## १३८१. संनिविभ्योऽर्देः [४।६।९६]

[सूत्रार्थ]

'क्त' प्रत्यय के परे रहते 'सम्-नि-वि' उपसर्गपूर्वक 'अर्द' (१।१६) धातु से इडागम नहीं होता है।।१३८१।

[दु०वृ०]

संनिविभ्यः परस्यार्दतेः क्ते नेड् भवति। समर्णः, न्यर्णः, व्यर्णः। निष्ठायामनिपातेष्वित्यन्ये।।१३८१।

[वि०प०]

संनि०। "दाद् दस्य च" (४।६।१०२) इति नत्वे रेफात् परस्य नस्य णत्वम्, ततः परस्य टवर्गयोगेणेति। निष्ठायामिति। निपातेषु "लग्नम्लिष्टविरिब्धाः" (४।६।९४) इत्यादिषु सूत्रेषु क्तस्यैवाधिकारो निपातस्य क्तान्तरूपयोगित्वाद् अनिपातसूत्रेषु निष्ठाधिकार एवेत्यन्ये। अयं तु मन्यते क्षुभिवाहीत्यतः क्ताधिकार एवानन्तरो युज्यते। न खलु परोऽपि व्यवहितां निष्ठामधिकृत्य क्तवन्तुना प्रयोगं दर्शितवानिति।।१३८१।

[क०त०] संनि०। ननु कथं समर्णवानित्याह— निष्ठायामिति। अनिपातेषु सूत्रेषु निष्ठायां परतो भवत्यविशेषादित्यन्ये। स्वमते तु समर्णवानिति न स्यादेव। पञ्ज्यां पर इति तृतीयवादीत्यर्थः।।१३८१।

[समीक्षा]

'समर्ण-न्यर्ण-व्यर्ण' शब्दरूपों की सिद्धि दोनों ही आचार्यों ने इडागम के निषेध से की है। पाणिनि का सूत्र है— "अर्देः संनिविभ्यः" (अ०७।२।२४)। अतः उभयत्र समानता ही है।

[विशेष वचन]

१. स्वमते तु समर्णवानिति न स्यादेव (क०त०)।

२. पञ्ज्यां पर इति तृतीयवादीत्यर्थः (क०त०)।

[रूपसिद्धि]

१-३. समर्ण्णः। सम्+अर्द्+क्त+सि। न्यर्ण्णः। नि+अर्द्+क्त+सि। व्यर्ण्णः। वि+अर्द्-क्त+सि। 'सम्-नि-वि' उपसर्ग-पूर्वक 'अर्द्' धातु से 'क्त' प्रत्यय, प्रकृत सूत्र से इट् का निषेध, दकार को नकार, नकार को णकार तथा विभक्तिकार्य॥१३८१।

## १३८२. सामीप्येऽभेः [४।६।९७]

[सूत्रार्थ]

'क्त' प्रत्यय के परे रहते सामीप्य अर्थ की विवक्षा में 'अभि' उपसर्ग-पूर्वक 'अर्द्' धातु से इडागम नहीं होता है॥१३८२।

[दु०वृ०]

अभेः परस्यार्दतेः क्ते नेड् भवति सामीप्येऽर्थे। अभ्यर्ण्णा सेना। सामीप्ये इत्यर्थः। अनतिदूर इत्येके, अभिधानात्॥१३८२।

[वि०प०]

सामीप्ये०। अनतीति यत्रातिदूरं नाप्यतिसमीपम्, तत्र सामीप्यशब्दो वर्तते। कथमभिधानादित्यर्थः, तथा च परसूत्रम् "अभेश्चाविदूर्ये" (अ०७।२।२५) इति। आविदूर्य्यमिति। विदूरमतिदूरम्, ततोऽन्यदविदूरम्, तस्य भाव **आविदूर्य्यमिति** तदयुक्तम्, सामीप्यमात्रमभिधीयते। तथा **चाभिधानकाण्डे** विशेषणेनैव निबद्धः **'उपकण्ठान्तिकाभ्यर्ण्णसमीपसन्निधिनिकटासन्नम्'** इति॥१३८२।

[समीक्षा]

'अभ्यर्ण' शब्दरूप के सिद्ध्यर्थ दोनों ही व्याकरणों में इडागम का निषेध किया गया है। पाणिनि का सूत्र है— "अभेश्चाविदूर्ये" (अ०७।२।२५)। अतः उभयत्र समानता ही है।

[विशेष वचन]

१. अनतिदूर इत्येके, अभिधानात् (दु०वृ०)।

[रूपसिद्धि]

१. अभ्यर्ण्णा, सेना। अभि+अर्द्+क्त+आ+सि। अभि-उपसर्गपूर्वक 'अर्द्' धातु से 'क्त' प्रत्यय, इट् का निषेध, दकार को नकार, नकार को णकार, स्त्रीलिङ्ग में 'आ' प्रत्यय तथा विभक्तिकार्य॥१३८२।

## १३८३. वा रुष्यमत्वरसंघुषास्वनाम् [४।६।९८]

[सूत्रार्थ]

'क्त' प्रत्यय के परे रहते 'रुष्-अम्-त्वर्-संघुष्-आस्वन्' धातुओं से इट् आगम का विकल्प से निषेध होता है॥१३८३।

[दु०वृ०] एभ्यः क्ते नेड् भवति वा। रुष्टः, रुषितः। "वेषुसहलुभरुष०" (४।६।८१) इत्यादिना वेट्त्वात् प्रतिषेधः प्राप्तः। 'अम गतौ' (१।१६०). न तु 'अम रोगे' इति, इनन्तत्वाद् अभ्यान्तः, अभ्यमितः। तूर्णः, त्वरितः। आदनुबन्धाच्चेति प्रतिषेधः प्राप्तः। संघुष्टम्, संघुषितं वाक्यमाह। संघुष्टौ, संघुषितौ दम्पौ। सम्-पूर्वस्य घुषेरविशब्दनेऽपि परत्वादयमेव। आङ्पूर्वस्य स्वनः- आस्वान्तः, आस्वनितो मृदङ्गः। आस्वान्तम्, आस्वनितं मनः। परत्वान्मनोऽभिधानेऽप्ययमेव॥१३८३।

[वि०प०]

वा०। तूर्ण इति। स्त्रिव्यविमविज्वरीत्यादिनोट् ॥१३८३।

[क०त०]

वा०। इनन्तादिति। एतेनैकस्वराधिकारोऽनुवर्तनीय एवेति। न च विकल्पपक्षे कथत्र स्यादिति वाच्यम्, साहचर्येण भौवादिकस्यैव ग्रहणम्। प्रतिषेधे प्राप्ते इति विभाषेति भावः। संघुष्टमिति, कथनीयमित्यर्थः[1]॥१३८३।

[समीक्षा]

'रुष्टः, रुषितः' इत्यादि शब्दों की सिद्धि दोनों ही व्याकरणों में वैकल्पिक इट्- निषेध से की गयी है। पाणिनि का सूत्र है— "रुष्यमत्वरसंघुषास्वनाम्" (अ०७।२।२८)। इस प्रकार उभयत्र समानता ही है।

[विशेष वचन]

१. परत्वान्मनोऽभिधानेऽप्ययमेव (दु०वृ०)।

२. साहचर्येण भौवादिकस्यैव ग्रहणम् (क०त०)।

[रूपसिद्धि]

१-५. रुष्टः, रुषितः। रुष्+क्त+सि। अभ्यान्तः, अभ्यमितः। अभि+अम्+क्त+सि। तूर्णः, त्वरितः। त्वर्+क्त+सि। संघुष्टम्, संघुषितं वाक्यमाह। सम्+घुष+क्त+सि। आस्वान्तः, आस्वनितो मृदङ्गः। 'रुष' इत्यादि धातुओं से 'क्त' प्रत्यय, प्रकृत सूत्र से वैकल्पिक इडभाव, दीर्घ, टकारादेश तथा विभक्तिकार्य। इडागमपक्ष में 'रुषितः' आदि शब्दरूप साधु होते हैं॥१३८३।

## १३८४. हृषेर्लोमसु [४।६।९१]

[सूत्रार्थ]

'क्त प्रत्यय के परे रहते लोम अर्थ में हृष् धातु से इडागम का विकल्प से निषेध होता है॥१३८४।

[दु०वृ०]

लोमसु वर्तमानाद् हृषेः क्ते नेड् भवति वा। हृष्टानि, हृषितानि लोमानि। हृष्टम्, हृषितं लोमभिः। हृष्टाः, हृषिताः केशाः। 'हृषु आलीक्ये' (१।२३१)

१. कमनीयमिति पाठान्तरम्।

इत्यस्योदनुबन्धत्वान्निष्ठायामनिट्। 'हृष तुष्टौ' (३।६७) इत्ययं तु सेट्। उभयोरपि विभाषेयम्। लोमान्यङ्गजानि मूर्धजानि च गृह्यन्ते। यथा— 'त्यक्तलोमनखं स्पृष्ट्वा शौचं कर्तव्यम्' इति स्मृतिः। हृषिर्लोमसु वर्तमानो लोमकर्तृकः। लोमस्विति किम्? हृष्टश्छात्रः इत्यलीकार्थस्य। हृषितश्छात्र इति तुष्टार्थस्य। लोमस्वित्युपलक्षणम्, तेन विस्मय-प्रतिघातयोश्च वा स्यात्— हृष्टः, हृषितः। छात्रो विस्मित इत्यर्थः। हृष्टाः, हृषिता दन्ताः। प्रतिहता इत्यर्थः॥१३८४।

[वि०प०]

हृषेः। लोमस्विति विषयसप्तमी, अतो हृष्टं लोमभिरित्यभिधेयेऽपि भवति हृष्टानोति, उद्गतानीत्यर्थः। उद्यमेऽत्र हृषिम्, 'हृषु अलीके' (१।२३१) इति— 'अलीकं त्वप्रियेऽनृते' इत्यमरः। तस्य भाव आलीक्यम् अप्रियत्वम् असत्यत्वं वेति कश्चित्। अलीकमुत्साह इत्यन्ये। उभयोरपीति। 'निरनुबन्धग्रहणे न सानुबन्धकस्य' (का०परि०४८) इत्यनेन दीर्घत्वम्। "न पदान्त०" (का०परि०१०) इत्यादिना प्रतिषेधादित्यर्थः। सत्यमिति। धातूनामन्त इन् येषामवयव इति बोध्यमित्यर्थः। अङ्गजानीति। मूर्धव्यतिरिक्ताङ्गजानीत्यर्थः, मूर्धजानीति पृथगुपादानात्। क्रियाभिधायी धातुः कथं नाम्नि वर्तते इत्याह— हृषिरित्यादि॥१३८४।

[समीक्षा]

'हृष्टानि, हृषितानि' शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में विकल्प से इडागम का निषेध किया गया है। पाणिनि का सूत्र है— "हृषेर्लोमसु" (अ०७।२।२९)। इस प्रकार उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१-३. हृष्टानि, हृषितानि लोमानि। हृष्+क्त+जस्। हृष्टम्, हृषितं लोमभिः। हृष्+ क्त+सि। हृष्टाः, हृषिताः केशाः। हृष्+क्त+जस्। 'हृषु अलीके' (१।२३१) धातु से 'क्त' प्रत्यय, प्रकृत सूत्र से वैकल्पिक इट् का निषेध तथा विभक्तिकार्य॥१३८४।

## १३८५. दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताश्चेनन्ताः [४।६।१००]

[सूत्रार्थ]

इन्प्रत्ययान्त दम् आदि धातुओं से 'दान्त-शान्त-पूर्ण-दस्त-स्पष्ट-छन्न-ज्ञप्त' शब्द वैकल्पिक निपातनविधि द्वारा सिद्ध होते हैं॥१३८५।

[दु०वृ०]

एते इनन्ता निपात्यन्ते वा। दान्तः, दमितः। शान्तः, शमितः। पूरी दैवादिकश्चौरादिकश्च-पूर्णः, पूरितः। दसु- दस्तः, दासितः। स्पश— स्पष्टः, स्पाशितः।

छद खट्ट संवरणे— छन्नः, छादितः। मारणतोषणनिशामनेषु ज्ञा मानुबन्धश्च— ज्ञप्तः, ज्ञपितः। इट्प्रतिषेधे इनो लुग् निपात्यते। ज्ञपेर्वेट्त्वान्नित्यमिट्प्रतिषेधे प्राप्ते।।१३८५।

[वि०प०]

दान्त०। इनो लुक् चेति। "निष्ठेटीनः" (४।१।३६) इति व्यावृत्त्या अनिटि निष्ठायां कारितलोपो न स्यादित्यर्थः। ज्ञपेरिति। अन्येषामिटि नित्ये प्राप्ते इत्यर्थादुक्तम्। ननु कथं ज्ञपेर्नित्यं प्रतिषेधः? यावता "न डीश्वी०" (४।६।९०) इत्यादावेकस्वरोऽत्र कर्तव्य इत्युक्तम्। ज्ञपिश्चेनन्तोऽनेकस्वर इति। तथा च वेटामेकस्वरस्मृत्येत्यादि दर्शितम्? सत्यम्, एवं मन्यते इनो लुकि निपाते सत्येकस्वर एवायम्, एकदेशविकृतस्यानन्यवद्भावादिति ज्ञपिरेवायमिति नित्यं प्रतिषेधः स्यादिति न दोषः।।१३८५।

[क०त०]

दान्त०। दम चेति न केवलं पूरी दैवादिकश्चौरादिकश्च, किन्तु दसधातुरपीत्यर्थः। नन्विनन्तस्यैव वेट्त्वमित्याह— **पञ्ज्यामेकदेशविकृतस्येति।** **टीकायां** स्थानिवदिति न्याये सत्यपिनोपधाया दीर्घत्वम्। **'न पादान्त०'** (का०परि०१०) इत्यादिना प्रतिषेधादित्यर्थः। सत्यमिति। धातूनामन्त इन् येषामवयव इति बोध्यम्।।१३८५।

[समीक्षा]

'दान्तः-दमितः, शान्तः-शमितः' इत्यादि शब्दरूपों की सिद्धि दोनों ही व्याकरणों में वैकल्पिक इट्-प्रतिषेध द्वारा की गई है। पाणिनि का सूत्र है— "वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" (अ०७।२।२७)। इस प्रकार उभयत्र पूर्ण समानता ही है।

[रूपसिद्धि]

१-७. **दान्तः**, दमितः। दम्+क्त+सि। **शान्तः**, शमितः। शम्+क्त+सि। **पूर्णः**, पूरितः। पूर्+क्त+सि। **दस्तः**, दासितः। दस्+क्त+सि। **स्पष्टः**, स्पाशितः। स्पश्+क्त+सि। **छन्नः**, छादितः। छद्+क्त+सि। **ज्ञप्तः**, ज्ञपितः। ज्ञप्+क्त+सि। 'दम्- शम्' इत्यादि धातुओं से 'क्त' प्रत्यय, प्रकृत सूत्र द्वारा वैकल्पिक इट्निषेध तथा विभक्तिकार्य। इडागमपक्ष में 'दमितः' इत्यादि शब्दरूप सिद्ध होते हैं।।१३८५।

## १३८६. रान्निष्ठातो नोऽपॄमूर्च्छिमदिख्याध्याभ्यः [४।६।१०१]

[सूत्रार्थ]

रेफ से परवर्ती निष्ठासंज्ञक क्त-क्तवन्तु प्रत्यय-घटित तकार को नकारादेश होता है पॄ, मूर्च्छ, मद्, ख्या तथा ध्या धातुओं को छोड़कर।।१३८६।

[दु० वृ०]

रेफात् परस्य निष्ठातकारस्य नकारो भवति, न तु पूमूर्च्छिमदिख्याध्याभ्य:। शीर्ण:, शीर्णवान्। गुरी-अवगूर्ण:, अवगूर्णवान्। यदि रश्रुतिरपि स्यात् कृतमिति णत्वं न स्याद् ऋकारावयवेन व्यवधानात्। चरितमित्यत्र निष्ठावयवेनेटा व्यवधानात्। कृतस्यापत्यं कार्त्तिरिति 'असिद्धं बहिरङ्गमन्तरङ्गे' (का० परि० ३३) इति। प्रतिषेध: किम्? पृ-पूर्त्त:। मूर्च्छा- मूर्त्त:। मदिख्याध्याभ्य: पराभ्यां प्राप्ते- मत्त:, ख्यात:, ध्यात:॥१३८६।

[वि० प०]

रात्रिष्ठा०। ऋकारे त्रय: स्वरभागा: सन्ति तन्मध्यवर्ती रेफस्तुरीयभाग: इति नेदं दर्शनमादृतम्। आदृतपक्षेऽपि न दोष इत्याह— यदीति। रादिति पञ्चम्या निर्दिष्टे परस्यानन्तरस्यैव, न व्यवहितस्येत्यर्थ:॥१३८६।

[क० त०]

रात्०। ऋकारे रेफश्रुतिर्नास्त्येव, यदि स्यात् तथापि नत्वं न स्याद् इत्याह— यदीति। ऋकारावयवेनेति स्वरेणेत्यर्थ:। निष्ठावयवेनेत्यादि निष्ठाग्रहणेनेटो ग्रहणम्, न तु निष्ठायास्तकारग्रहणेनेति भाव:।

[पाठान्तरम्— तस्मात् पूर्वं नञ्पाठोऽस्ति। धातुनेति रेफान्तधातुनेत्यर्थ:। येन विधिस्तदन्तस्येति न्यायाद् यदि च सम्बन्ध: स्यात् तदा धूर्वप्रभृतेर्धूर्ण इति न स्याद् धातो रेफान्तत्वाभावात्। जातेराधार इत्यादिवत्र जातिरित्यर्थ:। पौर्णिरिति। तकारोपधात् 'पूरी आप्यायने' इत्यस्यौत्वे सति इदं रूपमिति पाठेऽनुपसर्गात् "फुल्लक्षीब०" इत्यादिना फलेरुत्वं कृत्वा निष्ठातकारस्य लत्वनिपात:। यत्रौकारो निपात्यते तत्रैव बहुलमिति वृद्धावुकारभावे नेत्त्वाभावोऽपि स्यादिति। असिद्धवदभावे आदृतस्तदा उत्वमुपधाया नत्वमिति पाठो बोद्धव्य:। एतादृशोऽपि निर्देशो भवतीति शिष्यबोधार्थ:। अन्यथेति। क्तग्रहणं क्षुभिवाहीत्यत्र त-क्तवन्त्वोरेकदेशस्यापि परिग्रहणार्थमित्यर्थ:]॥१३८६।

[समीक्षा]

'शीर्ण:, शीर्णवान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में तकार को नकारादेश किया गया है। पाणिनि का सूत्र है— "रदाभ्यां निष्ठातो न: पूर्वस्य च द:" (अ० ८।२।४२)। इस प्रकार प्राय: उभयत्र समानता ही है।

[विशेष वचन]

१. ऋकारे त्रय: स्वरभागा: सन्ति तन्मध्यवर्ती रेफस्तुरीयभाग इति नेदं दर्शनमादृतम् (वि० प०)।

२. एतादृशोऽपि निर्देशो भवतीति शिष्यबोधार्थ: (क० त०)।

[रूपसिद्धि]

१-४. शीर्णः, शीर्णवान्। शॄ+क्त, क्तवन्तु+सि। अवगूर्णः, अवगूर्णवान्। अव+गुरी+क्त, क्तवन्तु+सि। 'शॄ हिंसायाम्' (८।१५) तथा अव-उपसर्गपूर्वक 'गुरी उद्यमे' (५।१०८) धातु से क्त-क्तवन्तु प्रत्यय, ॠकार को इर्-उर् आदेश, दीर्घ, प्रकृत सूत्र से तकार को नकार, नकार को णकार तथा विभक्तिकार्य।।१३८६।

## १३८७. दाद् दस्य च [४।६।१०२]

[सूत्रार्थ]

दकार से परवर्ती निष्ठाप्रत्ययगत तकार तथा धातुघटित दकार को भी नकारादेश होता है।।१३८७।

[दु०वृ०]

दकारात् परस्य निष्ठातकारस्य नकारो भवति दस्य च नो भवति। भिन्नः, भिन्नवान्।।१३८७।

[समीक्षा]

'मिन्नः, भिन्नः' इत्यादि शब्दों की सिद्धि के लिये धातुघटित दकार से परवर्ती तकार को तथा धातुगत दकार को नकारादेश करना पड़ता है। एतदर्थ पाणिनि का सूत्र है— "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" (अ०८।२।४२)। यह ज्ञातव्य है कि रेफ- दकार से परवर्ती तकार के स्थान में नकारादेश के लिये कातन्त्रकार ने भिन्न भिन्न दो सूत्र बनाये हैं, जबकि पाणिनि का एतदर्थ एक ही सूत्र है। परन्तु रेफ से परवर्ती केवल तकार को ही नकारादेश है और दकार से परवर्ती तकार को तो नकारादेश होता ही है, साथ ही धातुघटित दकार को भी नकारादेश करना पड़ता है। इस प्रकार पृथक् सूत्र बनाने से ही अर्थावबोध में लाघव होता है। अतः कातन्त्र में उत्कर्ष कहा जा सकता है।

[रूपसिद्धि]

१-२. मिन्नः, मिन्नवान्। मिद्+क्त, क्तवन्तु+सि। 'ञि मिदा स्नेहने' (१।४७४, ३।७७) धातु से क्त-क्तवन्तु प्रत्यय, प्रकृत सूत्र से तकार-दकार को नकारादेश तथा विभक्तिकार्य।।१३८७।

## १३८८. आतोऽन्तस्थासंयुक्तात् [४।६।१०३]

[सूत्रार्थ]

अन्तस्थासंज्ञक वर्णों से युक्त आकारान्त धातु से परवर्ती निष्ठातकार के स्थान में नकारादेश होता है।।१३८८।

[दु०वृ०]

अन्तस्थासंयुक्तादाकारान्तात् परस्य निष्ठातकारस्य नकारो भवति। ग्लानः, ग्लानवान्। विश्राणः, विश्राणवान्। धात्वधिकारात्- निर्य्यातः, निर्य्यातवान्।।१३८८।

[क०त०]

आतो०। अन्तस्थासंयुक्तादिति किमर्थमिति अन्तस्थाया इत्यास्तामित्यर्थः। टीकायां स च धात्वर्थ इति धात्वर्थः स्यात्॥१३८८।

[समीक्षा]

'ग्लानः, ग्लानवान्' इत्यादि शब्दों के सिद्ध्यर्थ दोनों ही व्याकरणों में नकारादेश किया गया है। पाणिनि का सूत्र है— "संयोगादेरातो धातोर्यण्वतः" (अ० ८।२।४३)। इस प्रकार उभयत्र समानता ही है।

[रूपसिद्धि]

१-४. ग्लानः, ग्लानवान्। ग्लै+क्त, क्तवन्तु+सि। **विश्राणः, विश्राणवान्।** वि+श्रै+क्त, क्तवन्तु+सि। 'ग्लै-विश्रै' धातुओं से क्त-क्तवन्तु प्रत्यय, ऐकार को आकारादेश, प्रकृत सूत्र से तकार को नकार तथा विभक्तिकार्य॥१३८८।

## १३८९. ल्वाद्योदनुबन्धाच्च [४।६।१०४]

[सूत्रार्थ]

लूञ् आदि तथा ओकारानुबन्ध वाली धातुओं से परवर्ती निष्ठातकार को नकारादेश होता है॥१३८९।

[दु०वृ०]

लूञादिभ्य ओदनुबन्धेभ्यश्च परस्य निष्ठातकारस्य नकारो भवति। लूञ्-लूनः, लूनवान्। ज्या-जीनः, जीनवान्। रुजो-रुग्णः, रुग्णवान्। भुजो-भुग्नः, भुग्नवान्। स्वादय ओदनुबन्धाः— 'षूङ् प्राणिप्रसवे' (२।५४,३।८१) सूनः, सूनवान्। दूङ्-दूनः, दूनवान्। गणकृतस्यानित्यत्वात् पूञो नाशे-पूना यवागूः, विनष्टेत्यर्थः। नाश इति किम्? धूतं धान्यम्। कम्पितमित्यर्थः। दुग्वोर्दीर्घश्च— विदूनः, विदूनवान्। विगूनः, विगूनवान्। **चकारोऽनुक्तसमुच्चयार्थस्तेन** ॠल्वादिभ्यश्च क्तेः— कीर्णिः, गीर्णिः, लूनिः, पूनिः, धूनिः। ल्यी चेति यावत् ल्वादिस्ततो वृत्करणात्। हाज्याग्लाभ्यश्च— हानिः, जानिः, ग्लानिः॥१३८९।

[वि०प०]

ल्वा०। जीनः, जीनवानिति। ग्रह्यादिसूत्रेण सम्प्रसारणे "तद् दीर्घमन्त्यम्" (४।१।५२) इति दीर्घः। स्वादय ओदनुबन्धा इति दिवादौ परिभाषितमेतत्। दुग्वोर्दीर्घश्चेति। 'टु दु उपतापे, गु पुरीषोत्सर्गे' (४।१०,५।१०५)। हाज्येति। जहातेरीत्वं जिनातेः सम्प्रसारणं क्तावपि न भवत्यनभिधानात्। **केचिद्** एतेभ्यः स्त्रियां क्तिप्रत्ययापवादं निप्रत्ययं मन्यमानाः हाज्याग्लाभ्यो निरिति वृत्तिपाठं मन्यन्ते, तदसङ्गतमित्यपरे। एवं सति स्त्रीप्रकरणे एवेदं निर्दिशेद् यथादर्शनान्तरमिति॥१३८९।

[का०त०]

"ल्वाद्यो०। अनुबन्धग्रहणमन्तरेण सन्ध्यक्षराणामाकारे भूतपूर्वौकारान्तानामित्याशङ्क्यते। ननु ग्रहधातुः किमिति ल्वादौ पठ्यते यस्माद् इटा व्यवहितत्वाद् गृहीतः इति न प्रयोजनम्। तत्रापि मण्डूकप्लुत्या इडस्तीत्युक्तत्वात्? सत्यम्, उभयपदार्थं तत्र पाठः।एतेन तत्र पाठबलादिटा व्यवहितेऽपि नत्वं स्यादिति देश्यं निरस्तम्, उभयपदेनैव पाठस्य कृतार्थत्वात्॥१३८९।

[समीक्षा]

'लूनः, लूनवान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में नकारादेश किया गया है। एतदर्थ पाणिनि के दो सूत्र हैं— "ल्वादिभ्यः, ओदितश्च" (अ०८।२।४४,४५)। अतः पाणिनीय सूत्रद्वयप्रयुक्त गौरव को छोड़कर अन्य प्रकार की तो उभयत्र समानता ही है।

[विशेष वचन]

१. केचिद् वृत्तिपाठं मन्यन्ते। तदसङ्गतमित्यपरे (वि०प०)।

२. तत्रापि मण्डूकप्लुत्या इडस्तीत्युक्तत्वात् (का०त)।

[रूपसिद्धि]

**१-१३. लूनः, लूनवान्।** लू+क्त, क्तवन्तु+सि। **जीनः, जीनवान्।** ज्या+क्त, क्तवन्तु+सि। **रुग्णः, रुग्णवान्।** रुजो+क्त, क्तवन्तु+सि। **भुग्नः, भुग्नवान्।** भुजो+क्त, क्तवन्तु+सि। **सूनः, सूनवान्।** सू+क्त, क्तवन्तु+सि। **दूनः, दूनवान्।** दू+क्त, क्तवन्तु+सि। **पूना यवागूः।** पू+क्त+आ+सि। 'लूञ्-छेदने' आदि धातुओं से क्त-क्तवन्तु प्रत्यय, प्रकृत सूत्र से निष्ठा-तकार को नकारादेश तथा विभक्तिकार्य॥१३८९।

## १३९०. व्रश्चेः क च [४।६।१०५]

[सूत्रार्थ]

'ओ व्रश्चू छेदने' धातु से परवर्ती निष्ठातकार को नकार तथा धातु के अन्त में विद्यमान शकार को ककारादेश होता है॥१३९०।

[दु०वृ०]

व्रश्चेः परस्य निष्ठातकारस्य नकारो भवति कादेशश्चान्ते। व्रश्चेरेव श्रुतत्वात् शोपधस्य व्रश्चेर्धुट्यन्तलोपे सति षत्वबाधकं कत्वं स्यात्। वृक्णः, वृक्णवान्॥१३९०।

[समीक्षा]

'वृक्णः, वृक्णवान्' शब्दरूपों के सिद्ध्यर्थ उभयत्र नकार-ककारादेश की व्यवस्था की गयी है। एतदर्थ पाणिनि के दो सूत्र हैं— "ओदितश्च, चोः कुः" (अ०८।२।४४,३०)। इस प्रकार पाणिनीय सूत्रद्वयप्रयुक्त गौरव को छोड़कर अन्य प्रकार की तो सामान्यतया समानता ही है।

[रूपसिद्धि]

**१-२. वृक्णः, वृक्णवान्।** ओ व्रश्चू+क्त, क्तवन्तु+सि। 'व्रश्चू' धातु से क्त-क्तवन्तु प्रत्यय, तकार को नकार, चकार का लोप, शकार को ककार, सम्प्रसारण तथा विभक्तिकार्य॥१३९०।

## १३९१. क्षेर्दीर्घात् [४।६।१०६]

[सूत्रार्थ]

दीर्घान्त क्षिधातु से उत्तरवर्ती निष्ठातकार को नकारादेश होता है।।१३९१।

[दु०वृ०]

दीर्घान्तात् परस्य क्षेर्निष्ठातकारस्य नकारो भवति। क्षीणः क्षीणवान्। दीर्घादिति किम्? क्षितायुर्जाल्मः। क्षितकस्तपस्वी।।१३९१।

[वि०प०]

क्षे०। क्षेर्निष्ठायां चेति दीर्घः। क्षितायुरिति आक्रोशदैन्ययोश्च वेति।।१३९१।

[क०त०]

क्षे०। **पञ्ज्यां** क्षेर्दीर्घ इति दीर्घत्वमिति। ननु कथमिदमुक्तं निष्ठायां चेति दीर्घविधानात्? सत्यम्, अत्रार्थकथनमेतत्। कुत्रचिन्निष्ठायां चेति दीर्घत्वमिति पाठः। धातोरतिदिश्यमान इयादेशः कथमनुकरणं लिङ्गस्य स्यादित्याह— टीकायां[1] प्रकृतेरपीति।

[पाठान्तरम्—

टीकायां प्रकृतिरपीति विभक्तिरपीति लिङ्गविभक्तिरित्यर्थः। अत्र हेतुमाह— भेदे हीत्यादि। अभेदे प्रकृतिवादिन्यायस्यावतारः। अस्याभावे कथं स्यादिति भावः। समाधत्ते आतिदेशिकानामिति लिङ्गस्यापि विद्यमानत्वात् स्यादिति भावः। उपसंहरति— नैतदिति। अतिदेशाद् धात्वतिदेशात् लिङ्गत्वं न स्यादिति नैतदित्यर्थः। स्पष्टयति नैर्देशिकीति। निर्देशोऽत्र लिङ्गं लैङ्गिकार्थः। क्षीयते इति देश्यं समाधत्ते किमनेनेति। सूत्रत्वाद् ह्रस्वस्यापीयादेश इति शङ्का स्यादिति भावः]।१३९१।

[समीक्षा]

'क्षीणः, क्षीणवान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में नकारादेश किया गया है। पाणिनि का सूत्र है— "क्षियो दीर्घात्" (अ०८।२।४६)। अतः उभयत्र साम्य है।

[रूपसिद्धि]

**१-२. क्षीणः, क्षीणवान्।** क्षि+क्त, क्तवन्तु+सि। 'क्षि निवासगत्योः' (५।१७) धातु से क्त-क्तवन्तु प्रत्यय, "क्षेर्दीर्घः" (४।१।४०) से धातुगत इकार को दीर्घ, प्रकृत सूत्र से निष्ठातकार को नकार, नकार को णकार तथा विभक्तिकार्य।।१३९१।

## १३९२. श्योऽस्पर्शे [४।६।१०७]

[सूत्रार्थ]

स्पर्शभिन्न अर्थ में वर्तमान श्यैङ् धातु से परवर्ती निष्ठातकार को नकारादेश होता है।।१३९२।

---

१. सूत्रस्यास्य टीकापाठो नोपलभ्यते साम्प्रतम्। कलापतत्त्वार्णवव्याख्याकारेण स दृष्टः स्यादिति सम्भाव्यते।

[दु०वृ०]

अस्पर्शे वर्तमानात् श्यायतेर्निष्ठातकारस्य नकारो भवति। शीनं घृतम्, शीनवद् घृतम्। अस्पर्श इति प्रसज्योऽयं नञ्। शीतं वर्तते, शीतं जलम्। गुणभूतोऽपि स्पर्शो नत्वप्रतिषेधस्य सम्प्रसारणस्य च निमित्तं भवति, न तु रोगे। तेन प्रतिशीनमिति नत्वं स्यादेव॥१३९२।

[वि०प०]

श्यो०। अस्पर्श इत्यादि। अभावमात्रवृत्तिः। प्रसज्यः स्पर्शो यदि न भवति। स्पर्शस्याभावमात्रं चेदित्यर्थः। तेन यत्रापि स्पर्शनिमित्तकः शब्दोऽस्य प्रधानस्तत्रापि स्पर्शस्य सम्भवात् प्रतिषेधः, यथा शीतमिति। एकत्र भावप्रधानम्, अन्यत्र जलम्। गुणेति गुणभूतता स्पर्शस्य, न त्वप्रतिषेधस्य सम्प्रसारणस्य चेति "द्रवघनस्पर्शयोः श्यः" (४।१।४६) इत्यनेनेति। गौणमुख्यपरिभाषात्र तत्र च नाद्रियते इति, अन्यथा 'शीतः स्पर्शः' इत्यत्रैव स्यादिति भावः। केचित् प्रसज्यबलादत्र लाघवमेवास्तु सम्प्रसारणस्य तु कथं गुणभूतस्पर्शे निमित्तम्, मुख्ये हि कार्यसम्प्रत्यये इत्याशङ्का नियमस्यायोगादिति परिहरन्ति। द्वन्द्वे ह्यल्पस्वरस्य पूर्वत्वनियमः कृतः। स च "द्रवघनस्पर्शयोः श्यः" (४।१।४६) इति स्पर्शशब्दस्याल्पस्वरस्य परनिपातं कुर्वता सूत्रकारेणेत्युक्तः स्पर्शोऽत्रानियमेन मुख्यो गौणो वा सम्प्रसारणस्य निमित्तमित्यस्यार्थस्य संसूचनार्थः॥१३९२।

[क०त०]

श्यो०। नन्विति। गुणवाचकोऽत्र स्पर्शो गृह्यते, न च रोगवाचकः। तेनेति। स्पर्शग्रहणेनेत्यर्थः। पञ्ज्यां केचिद् इत्यादि। अयं तु मन्यते गमकत्वादल्पस्वरस्यापि परनिपातो यथा एषसपर इत्यादि। किन्तु गौणमुख्यपरिभाषाया अनादरणं युक्तमिति नियमस्यायोग्यत्वमेव प्रकटयति-द्वन्द्वे हीति॥१३९२।

[समीक्षा]

'शीनम्, शीनवत्' इत्यादि प्रयोगों के सिद्ध्यर्थ कातन्त्रकार तथा पाणिनि दोनों ने ही नकारादेश का विधान किया है। पाणिनि का सूत्र है— "श्योऽस्पर्शे" (अ०८।२।४७)। अतः उभयत्र पूर्ण समानता ही है।

[विशेष वचन]

१. केचित् प्रसज्यबलादत्र लाघवमेवास्तु (वि०प०)।

२. परनिपातं कुर्वता सूत्रकारेणेत्युक्तः (वि०प०)।

३. अयं तु मन्यते गमकत्वादल्पस्वरस्यापि० (क०त०)।

[रूपसिद्धि]

१-२. शीनं घृतम्, शीनवद् घृतम्। श्यै+क्त, क्तवन्तु+सि। 'श्यैङ् गतौ' (१।४५९) धातु से क्त-क्तवन्तु प्रत्यय, सम्प्रसारण, प्रकृत सूत्र से तकार को नकार तथा विभक्तिकार्य॥१३९२।

## १३९३. अनपादानेऽन्चेः [४।६।१०८]

[सूत्रार्थ]

अपादान से भिन्न अर्थ में वर्तमान 'अन्च्' धातु से परवर्ती निष्ठातकार को नकारादेश होता है॥१३९३।

[दु० वृ०]

अनपादाने वर्तमानाद् अन्चेर्निष्ठातकारस्य नकारो भवति। समक्नः, समक्नवान्। संसक्त इत्यर्थः। अनपादान इति किम्? उदक्तमुदकम्। कूपादुद्धृतमित्यर्थः। व्यक्तमिति अन्जे रूपम्। अञ्चितः, अञ्चितवान् इतीटा व्यवधानात्। पूजायामञ्चतेरिडभावो नलोपश्च नेष्यते॥१३९३।

[वि० प०]

अन०। व्यक्तमिति। अन्चिरिह प्रकाशने वर्तते, अन्चेस्तु प्रकाशने व्यक्तमिति नत्वं नाभिधीयते॥१३९३।

[क० त०]

अनपादाने०। अनपादाने इति विषयसप्तमीयम्, अन्यद् उदक्तमुदकं कूपादिति प्रत्युदाहृतम्। पञ्चम्यामन्यस्त्विति। प्रकाशने क्तो न विधीयते इत्यर्थः। कस्मान्न वक्तव्यमित्याह— टीकायामञ्जेर्विज्ञापनादिति॥१३९३।

[समीक्षा]

'समक्नः, समक्नवान्', इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में नकारादेश किया गया है। पाणिनि का सूत्र है— "अञ्चोऽनपादाने" (अ०८।२।४८)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-२. समक्नः, समक्नवान्। सम्+अन्च्+क्त, क्तवन्तु+सि। 'सम्' उपसर्गपूर्वक 'अन्चु गतिपूजनयोः' (१।४८) धातु से क्त-क्तवन्तु प्रत्यय, नलोप, जकार को गकार, गकार को ककार, प्रकृत सूत्र से तकार को नकार तथा विभक्तिकार्य॥१३९३।

## १३९४. अविजिगीषायां दिवः [४।६।१०९]

[सूत्रार्थ]

विजिगीषा अर्थ से भिन्न अर्थ में वर्तमान 'दिव' धातु से परवर्ती निष्ठातकार को नकारादेश होता है॥१३९४।

[दु० वृ०]

अविजिगीषायां वर्तमानाद् दिवो निष्ठातकारस्य नकारो भवति। आद्यूनः, आद्यूनवान्। अविजिगीषायामिति किम्? द्यूतं वर्तते। विजिगीषया ह्यक्षपातः क्रियते। सिनोतेः कर्मकर्तरि ग्रासे वक्तव्यम्। सिनो ग्रासः। स्वयमेव बद्ध इत्यर्थः॥१३९४।

[वि० प०]

अवि०। "च्छ्वोः शूटौ पञ्चमे च" (४।१।५६) इति वकारस्योट् सिनोतेरिति वक्तव्यम्। व्याख्येयमभिधानादित्यर्थः॥१३९४।

[क०त०]

अवि०। आद्यूनः। 'आद्यूनः स्यादौदरिको विजिगीषाविवर्जितः' इत्यमरः। सिनो ग्रासः इति ग्रासशब्देन कवल उच्यते। कर्मकर्तृकस्थले एव प्रयोगोऽयम्। अन्यत्र सितः शृङ्खलया चौरः॥१३९४।

[समीक्षा]

'आद्यूनः, आद्यूनवान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में नकारादेश किया गया है। पाणिनि का सूत्र है— ''दिवोऽविजिगीषायाम्'' (अ०८।२।४९)। अतः उभयत्र समानता है।

[रूपसिद्धि]

१-२. आद्यूनः, आद्यूनवान्। आङ्+दिव्+क्त, क्तवन्तु+सि। 'आङ्' उपसर्गपूर्वक ''दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिषु'' (३।१) धातु से क्त-क्तवन्तु प्रत्यय, ''च्छ्वोः शूटौ पञ्चमे च'' (४।१।५६) सूत्र से वकार को ऊट्, इकार को यकार, प्रकृत सूत्र द्वारा तकार को नकार तथा विभक्तिकार्य॥१३९४।

## १३९५. ह्रीघ्रात्रोन्दनुदविन्दां वा [४।६।११०]

[सूत्रार्थ]

'ह्री-घ्रा-त्रा-उन्द्-नुद्-विद्' धातुओं से परवर्ती निष्ठा-तकार को वैकल्पिक नकारादेश होता है॥१३९५।

[दु०वृ०]

एभ्यो निष्ठातकारस्य नकारो वा। ह्रीणः, ह्रीणवान्। ह्रीतः, ह्रीतवान्। घ्राणः, घ्राणवान्। घ्रातः, घ्रातवान्। त्राणः, त्राणवान्। त्रातः, त्रातवान्। उन्दी— समुन्नः, समुन्नवान्। समुत्तः, समुत्तवान्। नुद-नुन्नः, नुन्नवान्। नुत्तः, नुत्तवान्। 'विद विचारे' (६।२४)-विन्नः, विन्नवान्। वित्तः, वित्तवान्। व्यवस्थितविभाषया नित्यं संज्ञायाम्-देवत्रातः। तथा—

**विचारार्थाद् विभाषैव ज्ञानार्थान्नित्यमिड् यतः।**
**भोगादन्यत्र लाभार्थात् सत्तार्थाच्च विदेः सदा।।१३९५।**

[वि०प०]

ह्री०। निन्दायामर्थे च्छ्रा इति प्रकृत्यन्तरम्, तस्यापीत्येके छ्राणः, छ्राणवान्। छ्रातः, छ्रातवान्। ह्रीधातोरप्राप्तेऽन्येषां प्राप्ते विकल्प उच्यते। व्यवस्थित इत्यादि। संज्ञायां त्रायतेर्नित्यं भवतीत्यर्थः। केचित् संज्ञायामपि विकल्पयन्तीति भोगादन्यत्र लाभार्थादिति। भित्तर्णवित्ताः शकलाधमर्णभोगेषु इति वचनाद् भोगे प्रतीते च वित्तमेव, ततोऽन्यत्र सदा विन्नम्, एवं सत्तार्थादपीति।

ज्ञानार्थाद् विदिं नित्यं स्यादिटा व्यवधानतः।
वित्तं विन्नं विचारार्थात् सत्तार्थाद् विन्नमेव च।।
वित्तमेव तु लाभार्थात् प्रतीतधनयोर्भवेत्।
अन्यत्र विन्नमेवेति सुधियः स्मृतिमाश्रिताः।।१३९५।

[क०त०]

ह्री०। दस्य चेति प्रवर्तने न समुन्नः इत्यादावुभयत्र नत्वम्। तथेति, व्यवस्थितविभाषाश्रयणादित्यर्थः। पङ्क्त्यामन्यत्रेति। प्रतीतधनयोरन्यत्रेत्यर्थः।।१३९५।

[समीक्षा]

'नुन्नः, त्राणः, घ्राणवान्' इत्यादि शब्दरूपों के सिद्ध्यर्थ पाणिनि तथा कातन्त्रकार दोनों ही आचार्यों ने वैकल्पिक नकारादेश किया हैं। पाणिनि का सूत्र है— "नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्" (अ०८।२।५६)। इस प्रकार उभयत्र पूर्ण समानता ही है।

[विशेष वचन]

१. व्यवस्थितविभाषया नित्यं संज्ञायाम्— देवत्रातः (दु०वृ०)।

२. केचित् सञ्ज्ञायामपि विकल्पयन्तीति (वि०प०)।

[रूपसिद्धि]

१-१२. ह्रीणः, ह्रीतः। ह्री+क्त+सि। ह्रीणवान्, ह्रीतवान्। ह्री+क्तवन्तु+सि। घ्राणः, घ्रातः। घ्रा+क्त+सि। घ्राणवान्, घ्रातवान्। घ्रा+क्तवन्तु+सि। त्राणः, त्रातः। त्रा+क्त+ सि। त्राणवान्, त्रातवान्। त्रा+क्तवन्तु+सि। समुन्नः, समुत्तः। सम्+उन्द+क्त+सि। समुन्नवान्, समुत्तवान्। सम्+उद्+क्तवन्तु+सि। नुन्नः, नुत्तः। नुद्+क्त+सि। नुन्नवान्, नुत्तवान्। नुद्+क्तवन्तु+सि। विन्नः, वित्तः। विद्+क्त+सि। विन्नवान, वित्तवान्। विद्+क्तवन्तु+सि। 'ह्री-घ्रा' इत्यादि धातुओं से क्त-क्तवन्तु प्रत्यय, प्रकृत सूत्र द्वारा वैकल्पिक नकारादेश, नकार को णकार तथा विभक्तिकार्य।।१३९५।

## १३९६. क्षैशुषिपचां मकवाः [४।६।१११]

[सूत्रार्थ]

क्षै-शुष्-पच धातुओं से परवर्ती निष्ठातकार के स्थान में क्रमशः 'म-क-व' आदेश होते हैं।।१३९६।

[दु०वृ०]

एभ्यो निष्ठातकारस्य यथासङ्ख्यं मकवा भवन्ति। क्षामः, क्षामवान्। शुष्कः, शुष्कवान्। पक्वः, पक्ववान्। 'द्वयोर्विभाषयोर्मध्ये यो विधिः स नित्य एव' (का०परि०११) ।।१३९६।

[क०त०]

क्षै०। अथ 'पक्वः' इत्यत्रान्तरङ्गत्वाद् धुटि कृतस्य ककारस्य निमित्ताभावे नैमित्तिकाभावः कथन्न स्यात्। वकारे कृते धुटोऽभावादिति चेत्, न। 'असिद्धं बहिरङ्गमन्तरङ्गे' (का०परि० ४३) इति न्यायात्।।१३९६।

[समीक्षा]

'क्षामः, शुष्कः, पक्वः' शब्दों की सिद्धि दोनों ही आचार्यों ने तकार को 'म-क-व' आदेशों द्वारा की है। एतदर्थ पाणिनि ने पृथक् पृथक् तीन सूत्र किये हैं— "शुषः कः, पचो वः, क्षायो मः" (अ०८।२।५१-५३)। पृथक् ३ सूत्रों से प्रयुक्त गौरव को छोड़कर अन्य प्रकार की तो उभयत्र समानता है।

[रूपसिद्धि]

१-६. **क्षामः, क्षामवान्**। क्षै+क्त, क्तवन्तु+सि। **शुष्कः शुष्कवान्**। शुष+क्त+क्तवन्तु+सि। **पक्वः, पक्ववान्**। पच+क्त, क्तवन्तु+सि। 'क्षै-शुष्-पच्' धातुओं से क्त-क्तवन्तु प्रत्यय, क्रमशः निष्ठातकार को 'म-क-व' आदेश तथा विभक्तिकार्य।।१३९६।

## १३९७. वा प्रस्त्यो मः [४।६।११२]

[सूत्रार्थ]

'प्र' उपसर्गपूर्वक 'स्त्यै शब्दसंघातयोः' (१।२५७) धातु से उत्तरवर्ती निष्ठातकार को विकल्प से मकारादेश होता है।।१३९७।

[दु०वृ०]

प्रपूर्वस्य स्त्यायतेर्निष्ठातकारस्य मो भवति वा। प्रस्तीमः, प्रस्तीमवान्। प्रस्तीतः, प्रस्तीतवान्। मत्वान्नित्यं सम्प्रसारणमेवेति।।१३९७।

[क०त०]

वा०। अथ 'प्रस्तीतः, प्रस्तीतवान्' इत्यत्र "आतोऽन्तस्थायुक्तात्" (४।६।१०३) इति निष्ठायां नत्वं कथन्न स्यादित्याह— नत्वान्नित्यं सम्प्रसारणमिति।।१३९७।

[समीक्षा]

'प्रस्तीमः, प्रस्तीतः' इत्यादि शब्दों की सिद्धि के लिये दोनों ही आचार्यों ने निष्ठातकार को विकल्प से मकारादेश किया है। पाणिनि का सूत्र है— "प्रस्त्योऽन्यतरस्याम्" (अ०८।२।५४)। अतः उभयत्र समानता ही है।

[रूपसिद्धि]

१-२. **प्रस्तीमः**, प्रस्तीतः। प्र+स्त्यै+क्त+सि। **प्रस्तीमवान्**, प्रस्तीतवान्। प्रपूर्वक 'स्त्यै' धातु से क्त-क्तवन्तु प्रत्यय, धातुगत 'या' को सम्प्रसारण, वैकल्पिक मकारादेश तथा विभक्तिकार्य।।१३९७।

## १३९८. निर्वाणोऽवाते [४।६।११३]

[सूत्रार्थ]

वातभिन्न अर्थ में 'निर्वाण' शब्द निपातन से सिद्ध होता है॥१३९८।

[दु०वृ०]

निर्वाण इति निपात्यते वातविषयश्चेद् धात्वर्थो न भवति। निर्वाणोऽग्निः, दीप्त्युपरमे वर्तते। निर्वाणो भिक्षुः, रागादिप्रशमनेऽत्र। अवात इति किम्? निर्वाणो वातः। निरोधोऽत्र। कथं निर्वाणो दीपो वातेन? अत्र वातः करणं न त्वाधारः। निर्वातं वातेनेति भावेऽपि वात एव कर्ता॥१३९८।

[वि०प०]

निर्वाण०। अवात इत्याधारसप्तमीयम् अत आह— वातविषयकश्चेदिति। एवं हि वातविषये धातोरर्थो भवति। यदि वात एव कर्ता स्यात् तस्मादवातकर्तरीत्यर्थः। न त्वाधार इति। क्रियाया वातः कर्ता न भवति किन्तर्हि करणं साधकतमत्वात्। कर्ता तु प्रदीप एवेति णत्वन्न विरुध्यते। निर्वातमिति। **भावो हि भवितारमन्तरेण न भवति।** न चेह वातादन्यः कर्ताऽस्तीति वातस्य कर्तृत्वम्॥१३९८।

[क०त०]

निर्वा०। अवात इति व्यतिक्रमनिर्देशान्नञ्निश्चयः। अन्यथा वाते निर्वाण इति कृतं स्यात्। वात एव कर्तेति। यतः क्रियाश्रयः कर्ता, अतः कर्ता क्रियाभावो भवत्येव। टीकायाम् अन्यस्त्विति। वातेऽर्थे वाच्ये इत्यर्थः॥१३९८।

[समीक्षा]

वातभिन्न अर्थ में 'निर्वाण' शब्द दोनों ही व्याकरणों में निपातनविधि से निष्पन्न किया गया है। पाणिनि का सूत्र है— "निर्वाणोऽवाते" (अ०८।२।५०)। अतः उभयत्र समानता ही है।

[विशेष वचन]

१. भावो हि भवितारमन्तरेण न भवति (वि०प०)।

२. यतः क्रियाश्रयः कर्ता, अतः कर्ता क्रियाभावो भवत्येव (क०त०)।

[रूपसिद्धि]

१-२. निर्वाणोऽग्निः। निर्वाणो भिक्षुः। निर्+वा+क्त-न-ण+सि। 'निर्' उपसर्गपूर्वक 'वा गतिगन्धनयोः' धातु से 'क्त' प्रत्यय, प्रकृत सूत्र द्वारा निपातन से निष्ठातकार को नकार, नकार को णकारादेश तथा विभक्तिकार्य॥१३९८।

## १३९९. भित्तर्णवित्ताः शकलाधमर्णभोगेषु [४।६।११४]

[सूत्रार्थ]

शकल (खण्ड) अर्थ में 'भित्त' शब्द, अधमर्ण अर्थ में 'ऋण' शब्द तथा भोग अर्थ में 'वित्त' शब्द निपातन से सिद्ध होता है॥१३९९।

**[दु०वृ०]**

भित्तादयः क्तान्ताः शकलादिष्वर्थेषु यथासङ्ख्यं निपात्यन्ते। भित्तं शकलमिति पर्यायः। 'ऋ गतौ' (१।२७५) ऋणं शोध्यम्। ऋणेऽधमोऽधमर्णः, तद्विषये निपातनम्। **अधमर्णग्रहणं** कालान्तरदेयविनिमयोपलक्षणम्, तेनोत्तमर्णविषयेऽपि स्यात्। विद्लृ-वित्तं द्रव्यम्। भुज्यते इति **भोग** उच्यते। वित्तमिव वित्तम् **उपचारात्** प्रतीतेऽप्यभिधीयते॥१३९९।

**[वि०प०]**

भित्त०। ऋणेऽधमः इति राजदन्तादिदर्शनाद् ऋणशब्दस्य परनिपातः, स च ऋणेऽधमः, यो गृहीत्वा प्रतिदास्यतीति। अधमर्णेत्यादि। यस्मिन् कालेऽधमर्णो गृह्णाति तस्माद् य आगामी कालः कालान्तरम्, तत्र देयम्। तेन विनिमयः परिवर्तस्तस्योप- लक्षणार्थम्, न तु स्वार्थप्रतिदानार्थमेव, ततः किमित्याह— तेनेति। ऋणे उत्तमः **उत्तमर्णः**, यो दत्त्वा ग्रहीष्यति। तत्र यद्यधमर्णग्रहणमुपलक्षणं न स्यात् तदा उत्तमर्ण इति न सिध्यति। इहाधमर्णस्याभावात् तदुपलक्षणत्वे सति तस्मिन्नपि तदपि सिध्यति कालान्तरविनिमयस्योत्तमर्णत्वाभावात् सोऽपि प्रयच्छन् कालान्तरे यद् देयं तेन विनिमयं करोति। प्रतीते वित्तन्न वक्तव्यम् इत्याह— वित्तमेवेति। यथा वित्तं **लोके** प्रतीतम्, तद्वदपरोऽपि। यः प्रतीतो ज्ञातः सोऽपि वित्त उपचारादित्यर्थः॥१३९९।

**[क०त०]**

भित्त०। यदि शोध्येऽर्थेऽधमर्णविषये ऋण इति निपातस्तदोत्तमर्णो न सिद्ध्यतीत्याह— अधमर्ण इत्यादि। प्रतीतेऽपीति। आख्यातेऽपीत्यर्थः। '**टीकायामन्वाख्यान** इति करणे युट्। अनेककर्मयोगादिति। अनेकक्रियायोगादित्यर्थः॥१३९९।

**[समीक्षा]**

'भित्त-ऋण-वित्त' शब्दों की सिद्धि दोनों ही आचार्यों ने निपातनविधि से की है। पाणिनि ने एतदर्थ ३ सूत्र बनाए हैं— "वित्तो भोगप्रत्यययोः, भित्तं शकलम्, ऋणमाधमर्ण्ये" (अ०८।२।५८,५९,६०)। सूत्रत्रयप्रयुक्त गौरव को छोड़कर अन्य प्रकार की तो उभयत्र समानता ही है।

**[विशेष वचन]**

१. अधमर्णग्रहणं कालान्तरदेयविनिमयोपलक्षणम् (दु०वृ०)।

२. टीकायामन्वाख्यान इति करणे युट् (क०त०)।

**[रूपसिद्धि]**

**१-३ भित्तं शकलम्।** भिद्+क्त+सि। **ऋणं** शोध्यम्। ऋ+क्त+सि। **वित्तं** द्रव्यम्। विद्+क्त+सि। 'भिद्-ऋ-विद्' धातुओं से 'क्त' प्रत्यय, निपातन से 'भिद्-विद्' धातुओं के बाद निष्ठा-तकार को नकार का निषेध, 'ऋ' धातु से उत्तरवर्ती निष्ठा-तकार को नकारादेश तथा विभक्तिकार्य॥१३९९।

## १४००. अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः [४।६।११५]

**[सूत्रार्थ]**

उपसर्ग से परवर्ती न होने पर 'फुल्ल-क्षीब-कृश-उल्लाघ' शब्द निपातन से सिद्ध होते हैं॥१४००।

[दु०वृ०]

एते क्तान्ता निपात्यन्ते न चेद् उपसर्गात् परा भवन्ति। 'दल ञि फला विशरणे' (१।१६५), निष्ठातकारस्य लत्वम्-फुल्ल:। क्तवन्तोरपि लत्वमित्येके फुल्लवान्। क्षीबृकृशिभ्याम् उत्पूर्वाच्च लाघे: परस्य निष्ठातकारस्य लोप इडभावश्च— क्षीब:, कृश:, उल्लाघ:। अनुपसर्गादिति किम्? प्रफुल्त:, प्रक्षीबित:, प्रकृशित:, प्रोल्लाघित:। कथं संप्रफुल्ल:, उत्फुल्ल:? 'फुल्ल विकसने' (१।१७८) इत्यचा सिद्धम्। परिकृश इति केन सिद्धम्? वचनं तु रूपान्तरं स्यादिति।।१४००।

[वि०प०]

अनुपसर्गात्०। चरफलोरुदस्येति फलेरस्योत्वम्। केनेति। नाम्युपधलक्षणेन कप्रत्ययेनेत्यर्थ:। यद्येवं तेनैव न्यायेन फुल्लादयोऽपि सिद्धा इत्याह— वचनं त्विति। निष्ठायां फलत: क्षीबित: इत्यादि प्रयोगो मा भूदित्यर्थ:।।१४००।

[क०त०]

अनु०। निष्ठातकारस्येति व्यवस्थितवास्मरणाद् बोध्यम्। व्यञ्जनतकारस्यैव लोप इति बोध्यम्। अत: क्षीबादीनामकारान्तता 'टीकायां निपातेन विज्ञायते इति। फुल्लवानित्यादेरपि फुल्लादिभागस्य सूत्रेण निपातनं विज्ञाप्यते इत्यर्थ:। मन्यन्ते इति केचिदित्यर्थ:। स्वमतमाह— न हीत्यादि।।१४००।

[समीक्षा]

'फुल्ल-क्षीब-कृश-उल्लाघ' शब्दों की सिद्धि दोनों ही व्याकरणों में निपातनविधि से की गयी है। पाणिनि का सूत्र है— "अनुपसर्गात् फुल्लक्षीबकृशोल्लाघा:" (अ०८।२।५५)। अत: उभयत्र समानता ही है।

[विशेष वचन]

१. वचनं तु रूपान्तरं स्यादिति (दु०वृ०)।

२. क्तवन्तोरपि लत्वमित्येके-फुल्लवान (दु०वृ०)।

३. अत: क्षीबादीनामकारान्तता टीकायां निपातेन विज्ञायते (वि०प०)।

[रूपसिद्धि]

१-५. **फुल्ल:**। ञि फला+क्त+सि। **फुल्लवान्**। ञि फला+क्तवन्तु+सि। **क्षीब:**। क्षीबृ+क्त+सि। **कृश:**। कृश्+क्त+सि। **उल्लाघ:**। उद्+लाघ्+क्त+सि। 'फला' धातु से 'क्त' प्रत्यय, उपधा अकार को उकार, निपातन से निष्ठातकार को लकार। 'क्षीबृ-कृश्-उद्+लाघ' धातुओं से 'क्त' प्रत्यय, निपातन से निष्ठातकार का लोप, अकारान्तता तथा विभक्तिकार्य।।१४००।

## १४०१. अवर्णादूटो वृद्धि: [४।६।११६]

[सूत्रार्थ]

धातु अथवा अधातु से सम्बद्ध अवर्ण से परवर्ती ऊट् को वृद्धि होती है।।१४०१।

[दु०वृ०]

धातोरधातोर्वा अवर्णात् परस्योटो वृद्धिर्भवति। शव्— शौ:, शावौ, शाव:। धावु- धौत:, धौतवान्। अवनम् ऊति:, पटस्योति: पटौति:। जनानवतीति— जनौ:, जनावौ, जनाव:। ऊट इति किम्? अद्योढा, कदोढा। औरिति सिद्धे वृद्धिग्रहणं मङ्गलार्थम्।।१४०१।

।।इत्याचार्यदुर्गसिंहकृतायां दौर्गसिंह्यां वृत्तौ चतुर्थे कृत्प्रत्ययाध्याये षष्ठः क्त्वाप्रत्ययादिपादः समाप्तः।।



[वि०प०]

अवर्णात्०। 'शव गतौ, धावु गतिशुद्ध्योः' (१।२३८;५७०)। "च्छ्वोः शूटौ पञ्चमे च"(४।१।५६) इत्यूट्। वृद्धौ सत्याम् "ओकारे औ औकारे च" (१।२।७) इत्यौत्वम्। अधातोर्दर्शयति- अवनम् औरिति। श्रिव्यवीत्यादिनोट्। पटस्योतिः पटौतिः। एवं जनपूर्वाद् अवतेः क्विपि कृतेऽपीति। ननु अवर्णेनोटो वृद्धिरित्युच्यताम्, अवर्णेन सह वृद्धिरूटो भविष्यति। एवं च सति "ओकारे औ औकारे च" (१।२।७) इति प्रक्रियागौरवं च निरस्तं भवति? सत्यम्, अवर्णादिति पञ्चमीनिर्देशो वर्णमात्रप्रतिपत्त्यर्थः। अन्यथा धातुप्रस्तावाद् धातोरवर्णात् स्यादिति। अत एव धातोरधातोर्वेत्युक्तमेवेति।।१४०१।

।।इत्याचार्यश्रीमत्त्रिलोचनदासकृतायां कातन्त्रवृत्तिपञ्जिकायां चतुर्थे कृत्प्रत्ययाध्याये षष्ठः क्त्वाप्रत्ययादिपादः समाप्तः।।



[क०त०]

अव०। ऊट इति किमिति, ऊत इत्यास्ताम् इत्याशङ्कार्थः। टीकायाम्[1] अवर्णादिति वर्णग्रहणान्मन्यते इति, अन्यथा आत इति कुर्यादिति भावः। उपपदविधाविति। सप्तम्युक्तमुपपदमित्यर्थः। गमकत्वात् सम्बन्ध इत्येतद् वृत्तौ मङ्गलार्थमिति सापेक्षत्वेऽपि समास इति बोध्यम।।१४०१।

।।इत्याचार्यश्रीरघुनन्दनभट्टाचार्यशिरोमणिकृते कलापतत्त्वार्णवे चतुर्थे कृत्प्रत्ययाध्याये षष्ठः क्त्वाप्रत्ययादिपादः समाप्तः।।



[समीक्षा]

'पटौतिः, जनौः, प्रष्ठौहः' इत्यादि शब्दरूपों के सिद्ध्यर्थ दोनों ही व्याकरणों में ऊट् (पाणिनि-ऊठ्) के परे रहते वृद्धिविधान किया गया है। अन्तर यह है कि पाणिनीय व्याकरण में प्रक्रिया के अनुसार अवर्ण तथा ऊठ् दोनों के स्थान में वृद्धि एकादेश होता है, जबकि कातन्त्रकार केवल वकारस्थानिक ऊट् को ही वृद्ध्यादेश करते हैं। पाणिनि का सूत्र है— "एत्येधत्यूठ्सु" (अ०६।१।८९)। प्रक्रियाभेद के अतिरिक्त तो सामान्यतया उभयत्र समानता ही कही जा सकती है।

१. सूत्रस्यास्य टीकाग्रन्थो मया नोपलब्धः।

[विशेष वचन]

१. वृद्धिग्रहणं मङ्गलार्थम् (दु०वृ०)।

२. अवर्णादिति पञ्चमीनिर्देशो वर्णमात्रप्रतिपत्त्यर्थः (वि०प०)।

३. वृत्तौ मङ्गलार्थमिति सापेक्षत्वेऽपि समास इति बोध्यम् (क०त०)।

[रूपसिद्धि]

१-१०. शौः, शावौ, शावः। शव्+ऊट्+क्विप्+सि, औ, जस्। धौतः, धौतवान्। धावु+ऊट्+क्त, क्तवन्तु+सि। ऊतिः। अव्+ऊट्+क्ति+सि। पटौतिः। पट+ऊति+सि। जनौः, जनावौ, जनावः। जन+अव्+ऊट्+क्विप्+सि, औ, जस्। 'शव्-धाव्-अव्' धातुओं से 'क्विप्-क्त-क्तवन्तु-क्ति' प्रत्यय, वकार को ऊट्, प्रकृत सूत्र से वृद्धि तथा विभक्तिकार्य।।१४०१।।

।।इति सम्पादकीयसमीक्षायां चतुर्थे कृत्प्रत्ययाध्याये षष्ठः क्त्वाप्रत्ययादिपादः समाप्तः।।



# समाप्तश्चतुर्थोऽध्यायः, ग्रन्थश्चापि समाप्तः।



## स्वीकृतयोजनानुसारं प्रकाशितकातन्त्रव्याकरणस्य परिचयः

| भागः | खण्डम् | प्रकरणम् | पृ०सं० | मूल्यम् | प्रकाशनसमयः |
|---|---|---|---|---|---|
| प्रथमः | | सन्धिप्रकरणम् | ४५० | रु० ३५०/- | १९९७ ई० |
| द्वितीयः | प्रथमम् | षड्लिङ्गप्रकरणम् | ६२५ | रु० ५००/- | १९९८ ई० |
| द्वितीयः | द्वितीयम् | कारक-समास-तद्धितप्रकरणानि | ८०० | रु० ६००/- | १९९९ ई० |
| तृतीयः | प्रथमम् | आख्यातस्य त्रयः पादाः | ५६० | रु० ४८०/- | २००० ई० |
| तृतीयः | द्वितीयम् | आख्यातस्य पञ्च पादाः | ६५८ | रु० ५००/- | २००३ ई० |
| चतुर्थः | (प्रकाश्यमानः) | कृत्प्रकरणम् | ८१९ | | २००५ ई० |
| योगः | | | | | |
| ४ | ६ | ४ | ३९१२ | रु०२४३०/-(५ खण्डों का) | |



# परिशिष्टम् - १= सूत्रपाठः

## चतुर्थाध्याये प्रथमः सिद्धिपादः

### (कृत्प्रकरणम् , वररुचिप्रणीतानि सूत्राणि)

सिद्धिरिज्वद् ञ्णानुबन्धे[१]। हन्तेस्तः[२]। न सेटोऽमन्तस्यावमिकमिचमाम्[३]। प्रत्ययलुकां चानाम्[४]। सार्वधातुकवच्छे[५]। ङे न गुणः[६]। के यण्वच्च योक्तवर्जम्[७]। जागुः कृत्यशन्तृङ्व्योः[८]। गुणी क्त्वा सेडरुदादिक्षुधकुशक्लिशगुधमृडमृदवदवसग्रहाम्[९]। स्कन्दस्यन्दोः क्त्वा[१०]। व्यञ्जनादेर्व्युपधस्यावो वा[११]। तृषिमृषिकृशिवञ्चिलुञ्च्यृतां च[१२]। थफान्तानां चानुषङ्गिणाम्[१३]। जान्तनशामनिटाम्[१४]। शीङ्पूङ्धृषिक्ष्विदिस्विदिमिदां निष्ठा सेट्[१५]। मृषः क्षमायाम्[१६]। भावादिकर्मणोर्वोदुपधात्[१७]। ह्लादो ह्रस्वः[१८]। छादेर्घेस्-मन्-त्रन्-क्विप्सु[१९]। दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे[२०]। नामिनोऽम् प्रत्ययवच्चैकस्वरस्य[२१]। ह्रस्वादेरुषोर्मोऽन्तः[२२]। सत्यागदास्तूनां कारे[२३]। गिलेऽगिलस्य[२४]। उपसर्गादसुदुर्भ्यां भेः प्राग् भात् खल्घञोः[२५]। आङो यि[२६]। उपात् प्रशंसायाम्[२७]। वा कृति रात्रेः[२८]। पुरंदरवाचंयमसर्वंसहद्विषंतपाश्च[२९]। धातोस्तोऽन्तः पानुबन्धे[३०]। ओदौद्भ्यां कृद् यः स्वरवत्[३१]। जिक्ष्योः शक्ये[३२]। क्रीञस्तदर्थे[३३]। वेर्लोपोऽपृक्तस्य[३४]। य्वोर्व्यञ्जनेऽये[३५]। निष्ठेटीनः[३६]। नाल्विष्ण्वाय्यान्तेत्नुषु[३७]। लघुपूर्वोऽय् यपि[३८]। मीनात्यादिदादीनामाः[३९]। क्षेर्दीर्घः[४०]। निष्ठायां च[४१]। स्फायः स्फीः[४२]। प्यायः पीः स्वाङ्गे[४३]। शृतं पाके[४४]। प्रस्त्यः सम्प्रसारणम्[४५]। द्रवघनस्पर्शयोः श्यः[४६]। प्रतेश्च[४७]। वाऽभ्यवाभ्याम्[४८]। न वेज्योर्यपि[४९]। व्यश्च[५०]। सम्परिभ्यां वा[५१]। तद् दीर्घमन्त्यम्[५२]। वः क्वौ[५३]। ध्याप्योः[५४]। पञ्चमोपधाया धुटि चागुणे[५५]। छ्वोः शूटौ पञ्चमे च[५६]। श्रिव्यविमिविज्वरित्वरामुपधया[५७]। राल्लोप्यौ[५८]। वनतितनोत्यादिप्रतिषिद्धेटां धुटि पञ्चमोऽच्चातः[५९]। यपि च[६०]। वा मः[६१]। न तिकि दीर्घश्च[६२]। उन्देर्मनि[६३]। घञीन्धेः[६४]। स्यदो जवे[६५]। रञ्जेर्भावकरणयोः[६६]। वुष् -घिनिणोश्च[६७]। बृंहेः स्वरेऽनिटि वा[६८]। यमगनतनगमां क्वौ[६९]। विड्वनोरा[७०]। धुटि खनिसनिजनाम्[७१]। ये वा[७२]। सनस्तिकि वा[७३]। स्फुरिस्फुल्योर्घञ्योतः[७४]। इज्जहातेः क्त्वि[७५]। द्यतिस्यतिमास्थां त्यगुणे[७६]। वा छाशोः[७७]। दधातेर्हिः[७८]। चरफलोरुदस्य[७९]। दद् दोऽधः[८०]। स्वरादुपसर्गात् तः[८१]। यपि चादो जग्धिः[८२]। घञलोर्घस्लृः[८३]। क्तक्तवन्तू निष्ठा[८४]।

सूत्रसंख्या-८५५+८४=९३९



## द्वितीयः पादः

धातोः[१]। सप्तम्युक्तमुपपदम्[२]। तत् प्राङ् नाम चेत्[३]। तस्य तेन समासः[४]। नाव्ययेनानमा[५]। तृतीयादीनां वा[६]। कृत्[७]। वाऽसरूपोऽस्त्रियाम्[८]। तव्यानीयौ[९]। स्वराद् यः[१०]। शकिसहिपवर्गान्ताच्च[११]। आत्खनोरिच्च[१२]। यमिमदिगदां त्वनुपसर्गे[१३]। चरेराङि चागुरौ[१४]। पण्यावद्यवर्या विक्रेयगर्ह्यानिरोधेषु[१५]। वह्यं करणे[१६]। अर्यः स्वामिवैश्ययोः[१७]। उपसर्या काल्या प्रजने[१८]। अजर्यं संगते च[१९]। नाम्नि वदः क्यप् च[२०]। भावे भुवः[२१]। हनस्त च[२२]। वृञ्दृजुषीणशासुस्तुगुहां क्यप्[२३]। ऋदुपधाच्चाक्लृपिचृतेः[२४]। भृञोऽसंज्ञायाम्[२५]। ग्रहोऽपिप्रतिभ्यां वा[२६]। पदपक्ष्ययोश्च[२७]। वौ नीपूञ्भ्यां कल्कमुञ्जयोः[२८]। कृवृषिमृजां वा[२९]। सूर्यरुच्याव्यथ्याः कर्तरि[३०]। भिद्योद्ध्यौ नदे[३१]। पुष्यसिध्यौ नक्षत्रे[३२]। युग्यं पत्रे[३३]। कृष्टपच्यकुप्ये संज्ञायाम्[३४]। ऋवर्णव्यञ्जनान्ताद् घ्यण्[३५]। आसुयुवपिलपित्रपिदभिचमां च[३६]। उवर्णादावश्यके[३७]। पाधोर्मानसामिधेन्योः[३८]। प्राङोर्नियोऽसंमतानित्ययोः स्वरवत्[३९]। संचिकुण्डपः क्रतौ[४०]। राजसूयश्च[४१]। सांनाय्यनिकाय्यौ हविर्निवासयोः[४२]। परिचाय्योपचाय्यावग्नौ[४३]। चित्याग्निचित्ये च[४४]। अमावस्या वा[४५]। ते कृत्याः[४६]। वुण्तृचौ[४७]। अच् पचादिभ्यश्च[४८]। नन्द्यादेर्युः[४९]। ग्रहादेर्णिन्[५०]। नाम्युपधप्रीकृगृज्ञां कः[५१]। उपसर्गे त्वातो डः[५२]। धेड्दृशिपाघ्राध्मः शः[५३]। साहिसातिवेद्युदेजिचेतिधारिपारिलिम्पविन्दां त्वनुपसर्गे[५४]। वा ज्वलादिदुनीभुवो णः[५५]। समाङोः स्रुवः[५६]। अवे ह्रसोः[५७]। दिहिलिहिश्लिषिश्वसिव्यध्यतीण्श्यातां च[५८]। ग्रहेर्वा[५९]। गेहे त्वक्[६०]। शिल्पिनि वुष्[६१]। गस्थकः[६२]। ण्युट् च[६३]। हः कालव्रीह्योः[६४]। आशिष्यकः[६५]। प्रुस्रुसृल्वां साधुकारिणि[६६]।

### सूत्रसंख्या-९३९+६६=१००५



## तृतीयः पादः

कर्मण्यण्[१]। ह्वावामश्च[२]। शीलिकामिभक्ष्याचरिभ्यो णः[३]। आतोऽनुपसर्गात् कः[४]। नाम्नि स्थश्च[५]। तुन्दशोकयोः परिमृजापनुदोः[६]। प्रे दाज्ञः[७]। समि ख्यः[८]। गष्टक्[९]। सुरसीध्वोः पिबतेः[१०]। हृञोऽज् वयोऽनुद्यमनयोः[११]। आङि ताच्छील्ये[१२]। अर्हश्च[१३]। धृञः प्रहरणे चादण्डसूत्रयोः[१४]। धनुर्दण्डत्सरुलाङ्गलाङ्कुशयष्टितोमरेषु ग्रहेर्वा[१५]। स्तम्बकर्णयो रमिजपोः[१६]। शंपूर्वेभ्यः सञ्ज्ञायाम्[१७]। शीङोऽधिकरणे च[१८]। चरेष्टः[१९]। पुरोऽग्रतोऽग्रेषु सर्तेः[२०]। पूर्वे कर्तरि[२१]। कृञो हेतुताच्छील्यानुलोम्येष्वशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु[२२]। तदाद्याद्यन्तानन्तकारबहुबाह्वहर्दिवाविभानिशाप्रभाभाश्चित्रकर्तृनान्दीकिंलिपिलिबिबलिभक्तिक्षेत्रजङ्घाधनुररुःसंख्यासु च[२३]। भृतौ

कर्मशब्दे[२४]। इः स्तम्बशकृतोः[२५]। हरतेर्दृतिनाथयोः पशौ[२६]। फलेमलरजःसु ग्रहेः[२७]। देववातयोरापेः[२८]। आत्मोदरकुक्षिषु भृञः खिः[२९]। एजेः खश्[३०]। शुनीस्तनमुञ्जकूलास्यपुष्पेषु धेटः[३१]। नाडीकरमुष्टिपाणिनासिकासु ध्मश्च[३२]। विध्वरुस्तिलेषु तुदः[३३]। असूर्योग्रयोर्दृशः[३४]। ललाटे तपः[३५]। मितनखपरिमाणेषु पचः[३६]। कूल उद्रुजोद्वहोः[३७]। वहंलिहाभ्रंलिहपरंतपेरंमदाश्च[३८]। नदेः खः प्रियवशयोः[३९]। सर्वकूलाभ्रकरीषेषु कषः[४०]। भयर्तिमेघेषु कृञः[४१]। क्षेमप्रियमद्रेष्वण् च[४२]। भावकरणयोस्त्वाशिते भुवः[४३]। नाम्नि तृभृवृजिधारितपिदमिस्महां संज्ञायाम्[४४]। गमश्च[४५]। उरोविहायसोरुरविहौ च[४६]। डोऽसंज्ञायामपि[४७]। विहङ्गतुरङ्गभुजङ्गाश्च[४८]। अन्यतोऽपि च[४९]। हन्तेः कर्मण्याशीर्गत्योः[५०]। अपात् क्लेशतमसोः[५१]। कुमारशीर्षयोर्णिन्[५२]। टग् लक्षणे जायापत्योः[५३]। अमनुष्यकर्तृकेऽपि च[५४]। हस्तिबाहुकपाटेषु शक्तौ[५५]। पाणिघताडघौ शिल्पिनि[५६]। नग्नपलितप्रियान्धस्थूलसुभगाढ्येष्वभूतलद्भावे कृञः ख्युट् करणे[५७]। भुवः खिष्णुखुकञौ कर्तरि[५८]। भजो विण्[५९]। सहश्छन्छसि[६०]। वहश्च[६१]। अनसि डश्च[६२]। दुहः को घश्च[६३]। विट् क्रमिगमिखनिसनिजनाम्[६४]। मन्त्रे श्वेतवहुक्थशंसपुरोडाशावयजिभ्यो विण्[६५]। आतो मन्क्वनिब्वनिब्विचः[६६]। अन्येभ्योऽपि दृश्यन्ते[६७]। क्विप् च[६८]। वहे पञ्चम्यां भ्रंशेः[६९]। स्पृशोऽनुदके[७०]। अदोऽनन्ने[७१]। क्रव्ये च[७२]। ऋत्विग्दधृक्स्रग्दिगुष्णिहश्च[७३]। सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि[७४]। कर्मण्युपमाने त्यदादौ दृशष्टक्सकौ च[७५]। नाम्न्यजातौ णिनिस्ताच्छील्ये[७६]। कर्तर्युपमाने[७७]। व्रताभीक्ष्ण्ययोश्च[७८]। मनः पुंवच्चात्र[७९]। खश्चात्मने[८०]। करणेऽतीते यजः[८१]। कर्मणि हनः कुत्सायाम्[८२]। क्विब् ब्रह्मभ्रूणवृत्रेषु[८३]। कृञः सुपुण्यपापकर्ममन्त्रपदेषु[८४]। सोमे सुञः[८५]। चेरग्नौ[८६]। विक्रिय इन् कुत्सायाम्[८७]। दृशेः क्वनिप्[८८]। सहराज्ञोर्युधः[८९]। कृञश्च[९०]। सप्तमीपञ्चम्यन्ते जनेर्डः[९१]। अन्यत्रापि च[९२]। निष्ठा[९३]। ङ्वनिप् सुयजोः[९४]। जीर्यतेरन्तृन्[९५]।

**सूत्रसंख्या-१००५+९५=११००**



## चतुर्थः पादः

क्वन्सुकानौ परोक्षावच्च[१]। वर्तमाने शन्तृङानशावप्रथमैकाधिकरणामन्त्रितयोः[२]। लक्षणहेत्वोः क्रियायाः[३]। वेत्तेः शन्तुर्वन्सुः[४]। आनोऽत्रात्मने[५]। ई तस्यासः[६]। आन्मोन्त आने[७]। पूङ्यजोः शानङ्[८]। शक्तिवयस्ताच्छील्ये[९]। इङ्धारिभ्यां शन्तृङ्कृच्छ्रे[१०]। द्विषः शत्रौ[११]। सुञो यज्ञसंयोगे[१२]। अर्हः प्रशंसायाम्[१३]। तच्छीलतद्धर्मतत्साधुकारिष्वा क्वेः[१४]। तृन्[१५]। भ्राज्यलंकृञ्भूसहिरुचिवृतिवृधिचरिप्रजनापत्रपेनामिष्णुच्[१६]।

मदिपतिपचामुदि[१७]। जिभुवो: स्नुक्[१८]। ग्लाम्लास्थाक्षिपचिपरिमृजां स्नु:[१९]। त्रसिगृध्धिधृषिक्षिपां क्नु:[२०]। शमामष्टानां घिनिण्[२१]। युजभजभुजद्विषद्रुहदुह-दुषाङ्क्रीडत्यजानुरुधाङ्यमाङ्यसरन्जाभ्याङ्हनां च[२२]। समिसृजिपृचिज्वरित्वराम्[२३]। वौ विचकत्थश्रम्भुकषलषाम्[२४]। प्रे द्रुमथवदवसलपाम्[२५]। परौ सृदहो:[२६]। क्षिपरटवदवादिदेविभ्यो वुण् च[२७]। निन्दहिंसक्लिशखादानेकस्वरविनाशिव्याभाषासूयां वुञ्[२८]। देविक्रुशोश्चोपसर्गे[२९]। क्रुधिमण्डिचलिशब्दार्थेभ्यो यु:[३०]। रुचादेश्च व्यञ्जनादे:[३१]। जुचंक्रम्यदंद्रम्यसृगृधिज्वलशुचलषपतपदाम्[३२]। न यान्तसूददीपदीक्षाम्[३३]। शृकमगम-हनवृषभूस्थालषपतपदामुकञ्[३४]। वृङ्भिक्षिलुण्टिजल्पिकुट्टां षाक:[३५]। प्रे जुसुवोरिन्[३६]। जीण्दृक्षिविश्रिपरिभूवमाभ्यमाव्यथां च[३७]। दयिपतिगृहिस्पृहिश्रद्धातन्द्रानिद्राभ्य आलु:[३८]। शदिसदिधेड्दासिभ्यो रु:[३९]। स्रादिघसां मरक्[४०]। मिदिभासिभन्जां घुर:[४१]। छिदिभिदिविदां कुर:[४२]। जागुरूक:[४३]। चेक्रीयितान्तानां यगिजपिदंशिवदाम्[४४]। तस्य लुगचि[४५]। ततो यातेर्वर:[४६]। करिरिपिसिभासीशस्थाप्रमदां च[४७]। सृजीण्नशां क्वरप्[४८]। गमस्त च[४९]। दीपिकम्प्यजसिहिंसिकमिस्मिनमां र:[५०]। सनन्ताशंसिभिक्षामु:[५१]। बिन्दिरिच्छू च[५२]। आदृवर्णोपधालोपिनां किर्द्वे च[५३]। तृषिधृषिस्वपां नजिङ्[५४]। शृवन्द्योरारु:[५५]। भियो लुकौ च[५६]। क्विब् भ्राजिपृधुर्वीभासाम्[५७]। द्युतिगमोर्द्वे च[५८]। भुवो डुर्विशंप्रेषु[५९]। कर्मणि धेट: ष्ट्रन्[६०]। नीदाप्शसुयुयुजस्तुतुदसिसिचमिहपतदंशनहां करणे[६१]। हलसूकरयो: पुव:[६२]। अर्तिलूधूसूखनिसहिचरिभ्य इत्रन्[६३]। पुव: संज्ञायाम्[६४]। ऋषिदेवतयो: कर्तरि[६५]। ञ्यनुबन्धमतिबुद्धिपूजार्थेभ्य: क्त:[६६]। उणादयो भूतेऽपि[६७]। भविष्यति गम्यादय:[६८]। वुण्तुमौ क्रियायां क्रियार्थायाम्[६९]। भाववाचिनश्च[७०]। कर्मणि चाण्[७१]। शन्त्रानौ स्यसंहितौ शेषे च[७२]।

## सूत्रसंख्या-११००+७२=११७२



## पञ्चम: पाद:

पदरुजविशस्पृशोचां घञ्[१]। सृ स्थिरव्याध्यो:[२]। भावे[३]। अकर्तरि च कारके संज्ञायाम्[४]। सर्वस्मात् परिमाणे[५]। इङाभ्यां च[६]। उपसर्गे रुव:[७]। समि दुव:[८]। युद्रुवोरुदि च[९]। श्रिनीभूभ्योऽनुपसर्गे[१०]। क्षुश्रुभ्यां वौ[११]। स्त्रश्च प्रथनेऽशब्दे[१२]। प्रे चायज्ञे[१३]। छन्दोनाम्नि च[१४]। प्रे द्रुस्तुश्रुव:[१५]। नियोऽवोदो:[१६]। निरभ्यो: पूल्वो:[१७]। यज्ञे समि स्तुव:[१८]। उन्न्योर्ग्रिर:[१९]। किरो धान्ये[२०]। नौ वृञ:[२१]। उदि श्रिपुवो:[२२]। ग्रहश्च[२३]। अवन्योराक्रोशे[२४]। प्रे लिप्सायाम्[२५]। समि मुष्टौ[२६]। परौ यज्ञे[२७]। वावे वर्षप्रतिबन्धे[२८]। प्रे रश्मौ[२९]। वणिजां च[३०]। वृणोतेराच्छादने[३१]। आङि रुप्लुवो:[३२]। परौ भुवोऽवज्ञाने[३३]। चेस्तु हस्तादाने[३४]। शरीरनिवासयो: कश्चादे:[३५]। संघे चानौत्तराधर्ये[३६]।

परिन्योर्नीणोर्द्यूताभ्रेषयोः[३७]। व्युपयोः शेतेः पर्याये[३८]। अभिविधौ भाव इनुण्[३९]। कर्मव्यतीहारे णच् स्त्रियाम्[४०]। स्वरवृदृगमिग्रहामल्[४१]। उपसर्गेऽदेः[४२]। नौ ण च[४३]। मदेः प्रसमोर्हर्षे[४४]। व्यधजपोश्चानुपसर्गे[४५]। स्वनहसोर्वा[४६]। यमः संन्युपविषु च[४७]। नौ गदनदपठस्वनाम्[४८]। क्वणो वीणायां च[४९]। पणः परिमाणे नित्यम्[५०]। समुदोरजः पशुषु[५१]। ग्लहोऽक्षेषु[५२]। सर्तेः प्रजने[५३]। ह्वो हुश्चाभ्युपनिविषु च[५४]। आङि युद्धे[५५]। भावेऽनुपसर्गस्य[५६]। हन्तेर्वधिश्च[५७]। मूर्तौ घनिश्च[५८]। प्राद् गृहैकदेशे घञ् च[५९]। अन्तर्घनोद्घनौ देशात्याधानयोः[६०]। करणेऽयोविद्रुषु[६१]। परौ डः[६२]। नौ निमिते [६३]। समुदोर्गणप्रशंसयोः[६४]। उपात् क आश्रये[६५]। स्तम्बेऽच्च[६६]। ट्वनुबन्धादथुः[६७]। ड्वनुबन्धात् त्रिमक् तेन निर्वृत्ते[६८]। याचिविछिप्रछियजिस्वपिरक्षियतां नङ्[६९]। उपसर्गे दः किः[७०]। कर्मण्यधिकरणे च[७१]। स्त्रियां क्तिः[७२]। सातिहेतियूतिजूतयश्च[७३]। भावे पचिगापास्थाभ्यः[७४]। व्रजयजोः क्यप्[७५]। समजासनिसदनिपतिशीङ्सुविद्यटिचरिमनिभृञिणां संज्ञायाम्[७६]। कृञः श च[७७]। सर्तेर्यश्च[७८]। इच्छा[७९]। शंसिप्रत्ययादः[८०]। गुरोश्च निष्ठा सेटः[८१]। षानुबन्धभिदादिभ्यस्त्वङ्[८२]। भीषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलिदोलिभ्यश्च[८३]। आतश्चोपसर्गे[८४]। ईषिश्रन्थ्यासिवन्दिविदिकारितान्तेभ्यो युः[८५]। कीर्तीषोः क्तिश्च[८६]। रोगाख्यायां वुञ्[८७]। संज्ञायां च[८८]। पर्यायार्हर्णेषु च[८९]। प्रश्नाख्यानयोरिञ् च वा[९०]। नञ्यन्याक्रोशे[९१]। कृत्ययुटोऽन्यत्रापि च[९२]। नपुंसके भावे क्तः[९३]। युट् च [९४]। करणाधिकरणयोश्च[९५]। पुंसि संज्ञायां घः[९६]। गोचरसंचरवहव्रजव्यजक्रमापणनिगमाश्च[९७]। अवे तॄस्त्रोर्घञ्[९८]। व्यञ्जनाच्च[९९]। उदङ्कोऽनुदके[१००]। जालमानायः[१०१]। ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्[१०२]। कर्तृकर्मणोश्च भूकृञोः[१०३]। आद्भ्यो य्वदरिद्रातेः[१०४]। शासुयुधिदृशिधृषिमृषां वा[१०५]। इच्छार्थेष्वेककर्तृकेषु तुम्[१०६]। कालसमयवेलाशक्त्यर्थेषु च[१०७]। अर्हतौ तृच्[१०८]। शकि च कृत्याः[१०९]। प्रैष्यातिसर्गप्राप्तकालेषु[११०]। आवश्यकाधमर्ण्ययोर्णिन्[१११]। तिक्कृतौ संज्ञायामाशिषि[११२]। धातुसम्बन्धे प्रत्ययाः[११३]।

## सूत्रसंख्या-११७२+११३=१२८५



## षष्ठः पादः

अलंखल्वोः प्रतिषेधयोः क्त्वा वा[१]। मेङः[२]। एककर्तृकयोः पूर्वकाले[३]। परावरयोगे च[४]। णम् चाभीक्ष्ण्ये द्विश्च पदम्[५]। विभाषाग्रेप्रथमपूर्वेषु[६]। कर्मण्याक्रोशे कृञः खमिञ्[७]। स्वादौ च[८]। अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्[९]। यथातथयोरसूयाप्रतिवचने[१०]। दृशो णम् साकल्ये[११]। यावति विन्दजीवोः[१२]। चर्मोदरयोः पूरेः[१३]। वर्षप्रमाण ऊलोपश्च वा[१४]। चेलार्थे क्रोपेः[१५]। निमूलसमूलयोः कषः[१६]। शुष्कचूर्णरूक्षेषु पिषः[१७]। जीवे ग्रहः[१८]। अकृते कृञः[१९]। समूले हन्तेः[२०]। करणे[२१]। हस्तार्थे ग्रहवर्तिवृताम्[२२]। स्वार्थे पुषः[२३]। स्नेहने पिषः[२४]। बन्धोऽधिकरणे[२५]। संज्ञायां च[२६]। कर्त्रोर्जीवपुरुषयोर्नशिवहिभ्याम्[२७]।

ऊर्ध्वे शुषिपूरोः[२८]। कर्मणि चोपमाने[२९]। कषादिषु तैरेवानुप्रयोगः[३०]। तृतीयायामुपदंशेः[३१]। हिंसार्थाच्चैककर्मकात्[३२]। सप्तम्यां च प्रमाणासत्त्योः[३३]। उपपीडरुधकर्षश्च[३४]। अपादाने परीप्सायाम्[३५] । द्वितीयायां च[३६]। स्वाङ्गेऽध्रुवे[३७]। परिक्लिश्यमाने च[३८]। विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः[३९]। तृष्यस्वोः क्रियान्तरे कालेषु[४०]। नाम्न्यादिशिग्रहोः[४१]। कृञोऽव्ययेऽयथेष्टाख्याने क्त्वा च[४२]। तिर्यच्यपवर्गे[४३]। स्वाङ्गे तसि[४४]। भुवस्तूष्णीमि च[४५]। कर्तरि कृतः[४६]। भावकर्मणोः कृत्यक्तखलर्थाः[४७]। आदिकर्मणि क्तः कर्तरि च[४८]। गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च[४९]। दाशगोघ्नौ सम्प्रदाने[५०]। भीमादयोऽपादाने[५१]। ताभ्यामन्यत्रोणादयः[५२]। क्तोऽधिकरणे ध्रौव्यगतिप्रत्यवसानार्थेभ्यः[५३]। युवुझामनाकान्ताः[५४]। समासे भाविन्यनञः क्त्वो यप्[५५]। चजोः कगौ धुड्घानुबन्धयोः[५६]। न्यङ्क्वादीनां हश्च घः[५७]। न कवर्गादिव्रज्यजाम्[५८]। घ्यण्यावश्यके[५९]। प्रवचर्चिरुचियाचित्यजाम्[६०]। वचोऽशब्दे[६१]। निप्राभ्यां युजः शक्ये[६२]। भुजोऽन्ने[६३]। भुजन्युब्जौ पाणिरोगयोः[६४]। दृग्दृशदृक्षेषु समानस्य सः[६५]। इदमी[६६]। किम् की[६७]। अदोऽमूः[६८]। आ सर्वनाम्नः[६९]। विष्वग्देवयोश्चान्त्यस्वरादेरद्र्यञ्चतौ क्वौ[७०]। सहसंतिरसां सध्रिसमितिरयः[७१]। रुहेर्धो वा[७२]। मो नो धातोः[७३]। वमोश्च[७४]। स्वरे धातुरनात्[७५]। अर्तीण्घसैकस्वरातामिड् वन्सौ[७६]। गमहनविदविशदृशां वा[७७]। दाश्वान् साह्वान् मीढ्वांश्च[७८]। न श्र्युवर्णवृतां कानुबन्धे[७९]। घोषवत्योश्च कृति[८०]। वेषुसहलुभरुषरिषां ति[८१]। रधादिभ्यश्च[८२]। स्वरतिसूतिसूयत्यूदनुबन्धात्[८३]। उदनुबन्धपूक्लिशां क्त्वि[८४]। जॄव्रश्चोरिट्[८५]। लुभो विमोहने[८६]। क्षुधिवसोश्च[८७]। निष्ठायां च[८८]। पूक्लिशोर्वा[८९]। न डीश्वीदनुबन्धवेटामपतिनिष्कुषोः[९०]। आदनुबन्धाच्च[९१]। भावादिकर्मणोर्वा[९२]। क्षुभिवाहिस्वनिध्वनिफणिकषिघुषां क्ते नेड् मन्थभृशमनस्तमोऽनायासकृच्छ्राविशब्दनेषु[९३]। लग्नम्लिष्टविरिब्धाः सक्ताविस्पष्टस्वरेषु[९४]। परिवृढदृढौ प्रभुबलवतोः[९५]। संनिविभ्योऽर्देः[९६]। सामीप्येऽभेः[९७]। वा रुष्यमत्वरसंघुषास्वनाम्[९८]। हृषेर्लोमसु[९९]। दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताश्चेनन्ताः[१००]। रात्रिष्ठातो नोऽपूमूर्छिमदिख्याध्याभ्यः[१०१]। दाद् दस्य च[१०२]। आतोऽन्तःस्थासंयुक्तात्[१०३]। ल्वाद्योदनुबन्धाच्च[१०४]। व्रश्चेः क च[१०५]। क्षेर्दीर्घात्[१०६]। श्योऽस्पर्शे[१०७]। अनपादानेऽन्चेः[१०८]। अविजिगीषायां दिवः[१०९]। ह्रीघ्रात्रोन्दनुदविन्दां वा[११०]। क्षैशुषिपचां मकवाः[१११]। वा प्रस्त्यो मः[११२]। निर्वाणोऽवाते[११३]। भित्तर्णवित्ताः शकलाधमर्णभोगेषु[११४]। अनुपसर्गात् फुल्लकृशोल्लाघाः[११५]। अवर्णादूटो वृद्धिः[११६]। १

**सूत्रसंख्या- १२८५+११६ = १४०१**

## इति कातन्त्रसूत्रपाठः



# परिशिष्टम् - २

आचार्यदुर्गसिंहविरचितानि

# कातन्त्रोणादिसूत्राणि



नमस्कृत्य गिरं भूरिशब्दसन्तानकारणम्।
उणादयोऽभिधास्यन्ते बालव्युत्पत्तिहेतवे।।

**प्रथमः पादः**

१. कृवापाजिमिस्वदिसाध्यशूदूसनिजनिचरिचटिभ्य उण्[१]। २. किञरयोः श्रिणभ्याम्[२]। ३. वहिरहितलिपंशिभ्य उण्[३]। ४. कृके वचो-घुण्[४]। ५. भृमृतृचरित्सरितनिमस्जिशीङ्भ्य उः[५]। ६. पट्यसिवसिहनिमनित्रपीन्दिकन्दिबन्धिवह्यणिभ्यश्च[६]। ७. स्यन्देः सम्प्रसारणं धश्च[७]। ८. मनिजनिनमां मधजतनाकाश्च[८]। ९. रज्जुतर्कुवल्गुफल्गुशिशुरिपुपृथुलघवः[९]। १०. इषिधृषिभिदिगृधिमृदिपृभ्यः कुः[१०]। ११. कृग्रो ऋत उर् च[११]। १२. अर्तेरूर् च[१२]। १३. भ्रस्जेः सलोपश्च[१३]। १४. नावञ्चेः[१४]। १५. अपष्ट्वादयः[१५]। १६. आङ्परयोः खनिशृभ्यां डुः[१६]। (पाठा०-उपे गः-बं०सं० १।१८)। १७. मद्यकिवासिमथिचतिभ्य उरः[१७]। १८. मकुरदर्दुरविधुरासुराः[१८]। १९. सावशेराप्तौ[१९]। २०. अवमह्योष्टिषः[२०]। २१. रुहेर्वृद्धिश्च[२१]। २२. किल्विषाव्यथिषौ[२२]। २३. तिमिरुधिमदिमन्दिचन्दिवधिरुचिशुषिभ्यः किरः[२३]। २४. अजिरादयः[२४]। २५. शलिमण्डिभल्लिभ्य ऊकञ्[२५]। २६. सितनिगमिमसिसच्यवधाञ्क्रुशिभ्यस्तुन्[२६]। २७. कमिमनिजनिवसिहिभ्यश्च[२७]। २८. केत्वादयः[२८]। २९. स्तनिहृषिपुषिगदिमदिभ्य इनः इत्नुः[२९]। ३०. मृग्रोरुतिः[३०]। ३१. कृषिचमितनिधनिबधिसर्जिखर्जिभ्य ऊः[३१]। ३२. ग्रो दोऽन्तश्च[३२]। ३३. दरिद्रातेर्यालोपश्च[३३]। ३४. कच्छ्वादयः[३४]। ३५. हसृतडिरुहियूषिभ्य इतिः[३५]। ३६. शमेर्ढः[३६]। ३७. अनुनासिकान्ताड् डः[३७]।३८. वरण्डादयः[३८]। ३९. कमेरठः[३९]। ४०. शकिशमिवहिभ्योऽलः[४०]। ४१. वृषलादयः[४१]। ४२. कणेष्ठः[४२]। ४३. पतिचण्डिभ्यामालञ्[४३]। ४४. कुणिपीङ्भ्यां कालः[४४]। ४५. शीङो वालवलञौ[४५]। ४६. इल्वलपल्वलशुक्लतण्डुलशिथिलचषालमालाः[४६]। (पाठा०-इल्वलादयश्च- बं. सं० १।४८)। ४७. सारिरङ्गः[४७]। ४८. शृङ्गभृङ्गाङ्गानि[४८]। ४९. मुदिगृभ्यां गग्गौ[४९]। ५०. शृदृभ्यामदिः[५०]। ५१. धृञः षोऽन्तोऽगुणश्च[५१]। ५२. युष्यसिभ्यां मदिक्[५२]। ५३. अर्तिहुसुधृक्षिणीपदभायास्तुभ्यो मः[५३]। ५४. ग्रसेरा च[५४]। ५५. इन्धियुधिश्याधूहिभ्यो मक्[५५]। ५६. घर्मसीमाग्रीष्माधमाः[५६]। ५७. दुजिरुचितिजां घ्मक्[५७]। ५८. भियः सुरन्तो वा[५८]।

।। इति श्रीदुर्गसिंहकृतोणादिसूत्रपाठे प्रथमः पादः समाप्तः ।।



## द्वितीयः पादः

५९. अशिलटिखटिविशिभ्यः क्वः[१]। ६०. शर्वजिह्वाग्रीवाः[२]। ६१. वृषितक्षिराजिधन्विप्रदिवियुभ्यः कनिः[३]। ६२. नञि जहातेः[४]। ६३. पूषादयः[५]। ६४. हकृञ्भ्यामेणुः[६]। ६५. दाभारिवृञ्भ्यो नुः[७]। ६६. सूविषिभ्यां यण्वत्[८]। ६७. धेन्वादयः[९]। ६८. रमिकासिकुषिपातृवचिरिचिसिचिगुभ्यस्थक्[१०]। ६९. अवे भृञः[११]। ७०. न्युदोः शीङ्गाभ्याम्[१२]। ७१. पृष्ठयूथप्रोथाः[१३]। ७२. स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिरुदिमदिमन्दिचन्द्युन्दीदिभ्यो रक्[१४]। ७३. सुसूधाञ्गृधिश्विधितिवृतिछिदिमुदितृपिदम्भिशुभिभ्यश्च[१५]। ७४. तम्यमिजीनां दीर्घश्च[१६]। ७५. शूद्रादयः[१७]। ७६. व्रश्चिकृषिभ्यां किकः[१८]। ७७. मूषिकसिमिकौ[१९]। ७८. क्रिय इकः[२०]। ७९. श्याहञवद्रुदक्षिभ्य इनः[२१]। ८०. वृजिनाजिनेरिणविपिनतुहिनमहिनानि[२२]। ८१. वचिप्रच्छिश्रिद्रुरुप्रुज्वां क्विब् दीर्घश्च[२३]। ८२. परौ व्रजेश्च[२४]। ८३. तनेः कयः[२५]। ८४. हञो दोऽन्तश्च[२६]। ८५. रातेर्डैः[२७]। ८६. गमेर्डोः[२८]। ८७. ग्लानुदिभ्यां डौः[२९]। ८८. भ्रमेर्डूः[३०]। ८९. दमेर्डोस्[३१]। ९०. सर्तेरयूः[३२]। ९१. शीङो धुक्[३३]। ९२. भुजिमृङोर्युक्त्युकौ[३४]। ९३. कृपृवृञ्निधाञ्भ्यो नः[३५]। ९४. धृषेर्धिष च[३६]। ९५. हनेर्जघश्च[३७]। ९६. दिवेः ऋन्[३८]। ९७. नञि च नन्देर्दीर्घश्च[३९]। ९८. यतेश्च[४०]। ९९. नियो डानुबन्धश्च[४१]। १००. स्वस्रादयः[४२]। १०१. ऋतृसृधृञ्धम्यश्यविवृतिग्रहिभ्योऽनिः[४३]। १०२. अर्चिशुचिरुचिहुसृपिछदिछर्दिभ्य इसिः[४४]। १०३. ज्योतिरादयः[४५]। १०४. ऋपृवपिचक्षिजनितनिधनिभ्य उस्[४६]। १०५. एतेरिज्वत्[४७]। १०६. चतिकटशृवृञ्भ्यष्ट्वरः[४८]। १०७. नौ सदेः[४९]। १०८. छित्वरादयः[५०]। १०९. इणुजिकृषिभ्यो नक्[५१]। ११०. बन्धेर्ब्रधिश्च[५२]। १११. धावसिद्रुभ्यो नः[५३]। ११२. रास्नासास्नास्थूणावीणाः[५४]। ११३. पातेः पः[५५]। ११४. नीपादयः[५६]। ११५. इणभीकापाशल्यर्चिकृदाधाराभ्यः कः[५७]। ११६. मूकादयः[५८]। ११७. शङ्केरुन्युन्तौ[५९]। (पाठा०—शकेरुन्युन्त्युनोन्ताः- बं० सं० २।११९)। ११८. ऋकृतृवृञ्दमिदार्यर्जिभ्य उनः[६०]। ११९. मिथुनफाल्गुनौ[६१]। १२०. कृधूवाभ्यः सरक्[६२]। १२१. भीशीङ्भ्यामानकः[६३]। १२२. शिङ्घेराणकः[६४] (पाठा०- वातेरायसः, सूतेश्चकः— बं. सं० २।१२५,१२६)। १२३. इषेः किकः (कीकः)[६५]। १२४. तिन्तिडीकादयः[६६]। १२५. घृसिदूभ्यः क्तः[६७]। १२६. जर्ततातपलितसुरतलोष्टाः[६८]। १२७. स्पृहेराय्यः[६९]।

सूत्रसंख्या–५८+६९=१२७

।। इति श्रीदुर्गसिंहकृतोणादिसूत्रपाठे द्वितीयः पादः समाप्तः ।।



## तृतीयः पादः

१२८. वृञ एण्यः[१]। १२९. अर्तेरन्यः[२]। १३०. हो हिरश्च[३]। १३१. पर्जन्यपुण्ये[४]। १३२. अमिनक्षिकडिभ्योऽत्रः[५]। १३३. भृञोऽतः[६]। १३४. पृषिरञ्जिभ्यां यण्वत्[७]। १३५. आङि वसेरथः[८]। १३६. जूवृभ्यामूथः[९]। १३७. अतिचमिगभियुभ्योऽसः[१०]। १३८. वेतसवाहसदिवसपनसाः[११]। १३९. कृशृशलिगर्दिरासिवलिवल्लिभ्योऽभः[१२]। १४०. ऋषिवृषिभ्यां यण्वत्[१३]। १४१. इः सर्वधातुभ्यः[१४]। १४२. गृनाम्युपधात् किः[१५]। १४३. गण्डिमण्डिभ्यां ञ्जः[१६]। १४४. जिविशिवसिभासिवहिनन्दिहिसाधिभ्यश्च[१७]। १४५. कुडो ररक्[१८]। १४६. अङ्गिमदिमन्दिकडिमृजिभ्य आरः[१९]। १४७. सर्तेरपष्षोऽन्तश्च[२०]। १४८. विटपादयः[२१]। १४९. वृतेस्तिकः[२२]। १५०. कृतिभिदिलतिभ्यो यण्वत्[२३]। (पाठा०-कृतभिदिलभितूलिनतिभ्यो यण्वत्--बं०सं०३।१५५)। १५१. इष्यशिभ्यां तकः[२४]। १५२. दूगृभ्यां भः[२५]। १५३. इणो यण्वत्[२६]। १५४. वीपतिभ्यां तनः[२७]। १५५. सञ्ज्यसिभ्यां क्थिः[२८]। १५६. सारेरथिः[२९]। १५७. अङ्ग्यतिभ्यानुलीथी[३०]। १५८. नीदलिभ्यां मिः[३१]। १५९. ऊर्मिभूमिरश्मयः[३२]। १६०. इषेः सुक्[३३]। १६१ अविजृस्तृतन्त्रिभ्य ईः[३४]। १६२. लक्ष्मेर्मोऽन्तश्च[३५]। १६३. व्रातप्रमीः[३६]। १६४. कृगृजागृभ्यः क्विः[३७]। १६५. छव्यादयः[३८]। १६६. खञ्जेराकः[३९]। १६७. बलाकादयः[४०]। १६८. अर्तेरत्रिः[४१]। १६९. अञ्जेरलिः[४२]। १७०. मृकणिभ्यामीचिः[४३]। १७१. रातेस्त्रिः[४४]। १७२. दुषेरिक.[४५]। १७३. कृतृभ्यामीषः[४६]। १७४. शिरीषादयः[४७]। १७५. कृशृशौण्ड्भ्य ईरः[४८]। १७६. क्षीरोशीरगम्भीराः[४९]। १७७. अगिश्रुश्रियुवहिभ्यो निः[५०]। १७८. सृणिवेणिवृष्णिधृष्णिपार्ष्णिचूर्णयः[५१]। १७९. पातेर्डतिः[५२]। १८०. भूस्वदिभ्यः क्रिः[५३]। १८१. पृणातेः कुषः[५४]। १८२. हन्तेरूषः[५५]। १८३. मञ्जूषादयः[५६]। १८४. शकादिभ्योऽटः[५७]। १८५. जटामर्कटौ[५८]। १८६. वहलादिभ्य इत्रोत्रौ[५९]। १८७. खर्जिकर्पिमसिपिञ्जादिभ्य ऊरोलौ[६०]। १८८. सर्तेर्वः[६१]। १८९. उल्बादयः[६२]। १९०. शविकमिभ्यां दः[६३]। १९१. कुन्दादयः[६४]। १९२. पीम्यो रुः[६५]। १९३. जत्र्वादयः[६६]। १९४. योरागूः[६७]।

सूत्रसंख्या-१२७+६७=१९४

।। इति श्रीदुर्गसिंहकृतोणादिसूत्रपाठे तृतीयः पादः समाप्तः ।।



## चतुर्थः पादः

१९५. जनिमनितसिभ्यो युः[१]। १९६. ह्रीकृशिभ्यां कुगानुकौ[२]। १९७. मन्यतेः किरत उच्च[३]। १९८. अहिकम्प्योर्नलोपश्च[४]। १९९. शृवस्निवपिराजिवृहनिनभिभ्य इञ्[५]। २००. अजिजन्यतिरशिपणिभ्यः[६]। २०१. वेञो ङिः[७]। २०२. नीविः[८]। २०३. सख्यादयः[९]। २०४. दृञ्दसिभ्यां त्निः[१०]। २०५. वहिवस्यर्तिभ्योऽतिः[११]। (पाठा०- हन्तेरहश्च— बं० सं० ४।२२१)। २०६. क्षिपिध्रुविलिखिलङ्गिदमिभ्यो वुक्[१२]। २०७. हो ढं च[१३]। २०८. कृषेर्वृद्धिर्वा[१४]। २०९. कृञादिभ्यो वुः[१५]। २१०. शमेः खः[१६]। २११. मुहेर्मूर् च[१७]। २१२. शिखा[१८]। २१३. गमेर्गः[१९]। २१४. जनेर्घः[२०]। २१५. कचेश्छः[२१]। २१६ कृतॄकृपिभ्यः कीटः[२२]। २१७. शमेर्डः[२३]। (पाठा०-गमेर्धः— बं० सं० ५।२२४)। २१८. सूचेः स्मः[२४]। २१९. अदि भुवो डुतः[२५]। २२०. रुदिहृश्यादिभ्य इतः[२६]। २२१. मृगृवाहस्यमिदमिलूपूभ्यस्तः[२७]। २२२. सर्वधातुभ्यो मन्[२८]। २२३ मायाछायासस्यादयः[२९]। २२४. सन्ध्यादयः[३०]। २२५. रुचिभुजिभ्यां किष्यः[३१]। २२६. मदेः स्यः[३२]। २२७. मद्यशिवासिभ्यः सरः[३३]। (पाठा०-देविवठिभ्रमिवासिभ्योऽरः- बं.सं० ५।२३४)। २२८. शृगातेः करः[३४]। २२९. पुषो यण्वत्[३५]। २३०. स्तृणातेष्टत्[३६]। २३१ काठिचकिभ्यामोरः[३७]। २३२. घुणेर्डोरः[३८]। २३३. सर्वधातुभ्यः ष्ट्रन्[३९]। (पाठा०- उष्ट्र., बं०सं० ५।२४१ )। २३४. चिमिदिभ्यां त्रक्[४०]। २३५. पूञो ह्रस्वश्च[४१]। २३६. सिमेर्नन्तश्च[४२]। २३७. कुटेर्मलः[४३]। २३८. व्रश्चेः सक्[४४]। २३९. स्रुवश्चिक्[४५]। २४०. चतेर्वारः[४६]। २४१. गमेरिनिः[४७]। २४२. आङि णिनिः[४८]। २४३. भूस्थाभ्यां णिनिः[४९]। २४४. परमेष्ठी[५०]। २४५. धृवमिकुभ्यः शक्[५१]। २४६. कीनाशाङ्कुशौ[५२]। २४७. वृतॄवादिहनिमनिकस्यशिकषेभ्यः षः[५३]। २४८. कृञः पासः[५४]। २४९. वशेः कनसिः[५५]। २५०. सर्वधातुभ्योऽसुन्[५६]। (पाठा०- पुरोवयःपयस्सु धाञोऽगुणः- बं.सं. ५।२५७) । २५१. चन्द्रे मातेः[५७]। २५२. अनेहसोऽप्सरसोऽङ्गिरसः[५८]। २५३. उषिरञ्जिभृभ्यो यण्वत्[५९]। २५४. यजेः शिश्च[६०]। २५५.उषेर्जश्च[६१]। २५६. वचेः सोऽन्तश्च[६२]। २५७. स्रुरीभ्यां तोऽन्तश्च[६३]। २५८. शीङः फोऽन्तश्च[६४]। २५९. छादेर्नश्च[६५]। २६०. अमेर्भोऽन्तश्च[६६]। २६१. अर्तेरुश्च[६७]। २६२. कृतेः स्नक्[६८]। २६३. श्लिषेरितोऽच्च[६९]। २६४. तिजेर्दीर्घश्च[७०]।

सूत्रसंख्या-१९४+७०=२६४

।। इति श्रीदुर्गसिंहकृतोणादिसूत्रपादे चतुर्थः पादः समाप्तः ।।



## पञ्चमः पादः

शब्दात्मिका या त्रिजगद् बिभर्ति
स्फुरद्-विचित्रार्थसुधां स्रवन्ती।
या ऋद्धिरीड्या हृदये सदैव
मुखे च सा मे वशमस्तु नित्यम्।।

उणादिविषये प्रसिद्धं पञ्चमं पादं प्रकाशयन्नाह—

२६५. अभातीशेः कुः[१]। २६६. नौ धाञश्च[२]। २६७. दंशेः कनिः[३]। २६८. मङ्घेर्नतुगवन्तश्च[४]। २६९. सहेः षण् कनेर्लुक् च[५]। २७०. बृंहेः क्मानच्च हात् पूर्वः[६]। २७१. सृपिकपिललिभ्य आटक्[७]। २७२. तरतेरसुट्[८]। २७३. मिथिलसिभ्यां कुनः[९]। २७४. वदेरान्यः प्रशंसायाम्[१०]। २७५ वचेर्मिनिन् चस्य गः[११]। २७६. प्रीञोऽङ्गुक्[१२]। २७७. पञ्चेरालः[१३]। २७८. व्रियो ह्रिर्दीर्घश्च[१४]। २७९. आशौ शुषेः सानक्[१५]। २८०. विषेः कानः[१६]। २८१. कृपेः कणश्च[१७]। २८२. गमेश्छो मलुक् च[१८]। २८३. कपितमिमृणिपलिकुलिवलिलिभ्यः कालः[१९]। २८४. सर्तेर्गोऽन्तश्च[२०]। २८५. पलेराशः[२१]। २८६ तृपतिभ्यानङ्गः[२२]। २८७. मृदिकुरिभ्यां कवत्[२३]। २८८. रौतेरुक्[२४]। २८९. उषितृषिभ्यां क्रः[२५]। २९०. पणिकितिभ्यामवक्[२६]। २९१. परेरमः[२७]। २९२. सिनोतेर्मोऽन्तो हक्[२८]। २९३. तो दीर्घश्च[२९]। २९४. यसिपनिभ्यां कः[३०]। २९५. अंहेरिः[३१]। २९६. तनोतेर्डवत्[३२]। २९७. सृणातेः पक् ऊर् व[३३]। २९८. कलेरङ्कः[३४]। २९९ अबिकम्बिभ्यामुः[३५]। ३००. मुरेर्धनिः[३६]। ३०१. नौतेरत्यनौ[३७]। ३०२. सपेस्तिततितनः[३८]। ३०३. विस्योः श्यतेर्डातिडतौ नः शात् पूर्वः[३९]। ३०४. अशेरीतिः[४०]। ३०५. सहेरस्रम्[४१]। ३०६. शमेर्डतः[४२]। ३०७. पञ्चेरनिः[४३]। ३०८. अशेस्तोऽन्तश्च[४४]। ३०९. यजेरुसिः[४५]। ३१०. मुहेरुगूतकौ क्षणे[४६]। ३११. कुलेटालेरिलुक् डश्च[४७]। ३१२. अनेः शुः[४८]। ३१३. तनित्यजियजिभ्यो डदिः[४९]। ३१४. कायतेर्डतिडिमौ[५०]। ३१५. इणो दमक् तदश्च[५१]। ३१६. खण्डेर्गक्[५२]। ३१७. कुटिजटिभ्यां किलः[५३]। ३१८. पटेरैलः[५४]। ३१९. सहेरुरिः[५५]। ३२०. अमेर्धुः[५६]। ३२१. हसेर्वः[५७]। ३२२. किरतेरूरो रत्वम्[५८]। ३२३. प्रथेरमः[५९]। ३२४. स्वृभृभ्यां गः[६०]। ३२५. पतेर्नी[६१]। ३२६. शमिकमिभ्यां बलः[६२]। ३२७. उषिकुषिगार्तिभ्यस्थः[६३]। ३२८. माङः सः[६४]। ३२९. मनेर्दीर्घश्च[६५]। ३३०. अमेः शुकः[६६]। ३३१. हञो म्यः[६७]।

सूत्रसंख्या–२६४+६७=३३१

।। इति श्रीदुर्गसिंहकृतोणादिसूत्रपाठे पञ्चमः पादः समाप्तः ।।



## षष्ठः पादः

३३२. पटिकमिमुशिकुशिभ्यः कलः[१]। ३३३. कुटेः कीरः[२]। ३३४. तरेः करः[३]। ३३५.पतिवपिशुकिवक्ययगिभ्यो रक्[४]। ३३६. दुनोतेर्दीर्घश्च[५]। ३३७. पुलिनलिबलिमलिद्रुहिभ्यः क्रिनः[६]। ३३८. खलेरीनश्च[७]। ३३९. दृणातेर्घक्[८]। ३४०. तमेरूलञ् बोऽन्तश्च[९]। ३४१. मनेरुष्यः[१०]। ३४२. मानेरुष[११]। ३४३. मृडस्त्यः[१२]। ३४४. कृषेरटः[१३]। ३४५. कृभूभ्यां कनः[१४]। ३४६. कुटेष्मिमक्[१५]। ३४७. कबेरायः[१६]। ३४८.वलिमलिगोमिभ्योऽयः[१७]। ३४९. शृणातेराव:[१८]। ३५०. मडिकुडिमङ्गिभ्योऽलः[१९]। ३५१. कन्देररः[२०]। ३५२. कुलेः किशः[२१]। ३५३. पटिजाटेभ्यामलिञ्[२२]। ३५४. राते रिफः[२३]। ३५५. लिशेः सक्[२४]। ३५६. ध्वनेः क्षो दीर्घश्च[२५]। ३५७. दीधीङो डितिः[२६]। ३५८. अतेस्त्रिः[२७]। ३५९. वचेरालाटौ दीर्घश्च[२८]। ३६०. खलेरतिकः[२९]। ३६१. नञि पतेर्यः[३०]। ३६२. कलेरशः[३१]। ३६३. हृञष्टीतकन्[३२]। ३६४. उन्देः ककः[३३]। ३६५. पातेरकः[३४]। ३६६. उन्देरनो नलोपश्च[३५]। ३६७. सिनोतेर्नः[३६]। ३६८. द्यतेरिच्च[३७]। ३६९. मुहेर्धक् हस्य गः[३८]। ३७०. सचेर्लिलश्च चस्य लुक्[३९]। ३७१. कुरः कक[४०]। ३७२. आप्नोतेः क्विप् ह्रस्वः[४१]। ३७३. वन्देस्त्रश्छादेशश्च[४२]। ३७४ कलेरहः[४३]। ३७५. उम्भेरिक् द्विश्च[४४]। ३७६. नमिभमिभ्यामञ्[४५]। ३७७. कूजेरिलो जः किश्च[४६]। ३७८. मयतेरूरोखौ[४७]। ३७९. अङ्गेरुलः[४८]। ३८०. कनिचनिभ्यामकः[४९]। ३८१. चटिवटिकटिभ्य उश्च[५०]। ३८२. अशेर्मकः[५१]। ३८३. नङ्गेः कधः[५२]। ३८४. दिवेर्डिविः[५३]। ३८५. कलेरिङ्गः[५४]। ३८६. वसेरिष्ठः[५५]। ३८७. उङो मक्[५६]। ३८८. अशिकुषिभ्यां सिक्[५७]। ३८९. अतेर्मन् दीर्घश्च[५८]। ३९०. वनिस्तस्य धः[५९]। ३९१. धिषेर्न्यक्[६०]। ३९२. जलेर्मञ्[६१]। ३९३. क्लिशेः कोरो ललोपश्च[६२]। ३९४ उबेराधः[६३]। ३९५. कनेरुटो मकिश्च[६४]। ३९६. सुखेः को मुखिश्च[६५]। ३९७. महेर्हरस्य घः[६६]। ३९८. मुहेर्गुणश्च[६७]। ३९९. सानमेरिन् दीर्घश्च[६८]।

सूत्रसंख्या–३३१+६८=३९९

।। इति श्रीदुर्गसिंहकृतोणादिसूत्रपाठे षष्ठः पादः समाप्तः ।।

।।समाप्तश्च कातन्त्रोणादिसूत्रपाठः।।



## परिशिष्टम् – २

# वर्णानुक्रमेण उणादिसूत्रसूची

| क्र०सं० | सूत्राणि | पाद-सूत्र-संख्या |
|---|---|---|
| १. | अंहे रिः | ५।३१ |
| २. | अगिश्रुश्रियुवहिभ्यो ऽनिः | ३।५० |
| ३. | अङ्गिमदिमन्दिकडिमृजिभ्य आरः | ३।१९ |
| ४. | अङ्गेरुलः | ६।४८ |
| ५. | अङ्ग्यतिभ्यामुलीथी | ३।३० |
| ६. | अजिजन्यतिरशिपणिभ्यश्च | ४।६ |
| ७. | अजिरादयः | १।२४ |
| ८. | अञ्जेरलिः | ३।४२ |
| ९. | अतिचमिरभियुभ्योऽसः | ३।१० |
| १०. | अतेर्मन् दीर्घश्च | ६।५८ |
| ११. | अतेस्त्रिः | ६।२७ |
| १२. | अदिभुवो डुतः | ४।२५ |
| १३. | अनुनासिकान्ताड्डः | १।३७ |
| १४. | अनेः शुः | ५।४८ |
| १५. | अनेहोऽप्सरोऽङ्गिरसः | ४।५ |
| १६. | अपष्ठ्वादयः | १।१५ |
| १७. | अभात्वीशेः कुः | ५।१ |
| १८. | अमिनक्षिकडिभ्योऽत्रः | ३।५ |
| १९. | अमेः शुकः | ५।६६ |
| २०. | अमेर्धुः | ५।५६ |
| २१. | अमेर्भोऽन्तश्च | ४।६६ |
| २२. | अर्चिशुचिहुसृपि० | २।४४ |
| २३. | अर्तिहुसुधृक्षि० | १।५३ |
| २४. | अर्तेरत्निः | ३।४१ |
| २५. | अर्तेरन्यः | ३।२ |
| २६. | अर्तेरुश्च | ४।६७ |
| २७. | अर्तेरूर् च | १।१२ |
| २८. | अवमह्योष्टिषः | १।२० |
| २९. | अविकम्बिभ्यामुः | ५।३५ |

।। समाप्ता वर्णानुक्रमेण उणादिसूत्रसूची ।।



# परिशिष्टम् - ३

## कातन्त्र-पाणिनीय सूत्रों की तुलनात्मक सारिणी

| | | | | | |
|---|---|---|---|---|---|
| १. | का० | सिद्धिरिज्वद् ञ्णानुबन्धे | ४।१।१ | इज्वद्भाव | लाघव |
| | पा० | अचो ञ्णिति इत्यादि | ७।२।११५ | वृद्धि आदि | गौरव |
| २. | का० | हन्तेस्तः | ४।१।२ | तकारादेश | उत्कर्ष |
| | पा० | हन्तेस्तोऽचिण्णलोः | ७।३।३२ | ,, | अपकर्ष |
| ३. | का० | न सेटोऽमन्तस्यावमिकमिचमाम् | ४।१।३ | वृद्धिनिषेध | साम्य |
| | पा० | नोदात्तोपदेशस्य मान्तस्यानाचमेः | ७।३।३४ | ,, | ,, |
| ४. | का० | प्रत्ययलुकां चानाम् | ४।१।४ | गुणवृद्धिनिषेध | साम्य |
| | पा० | न धातुलोप आर्धधातुके | १।१।४ | ,, ,, | ,, |
| ५. | का० | सार्वधातुकवच्छे | ४।१।५ | सार्वधातुकवद्भाव | साम्य |
| | पा० | तिङ्शित् सार्वधातुकम् | ३।४।११३ | सार्वधातुकसंज्ञा | ,, |
| ६. | का० | ङे न गुणः | ४।१।६ | गुणनिषेध | लाघव |
| | पा० | क्ङिति च | १।१।५ | ,, | गौरव |
| ७. | का० | के यण्वच्च योक्तवर्जम् | ४।१।७ | यण्वत् कार्य | लाघव |
| | पा० | क्ङिति च, वचिस्वपि०, ग्रहिज्या० | १।१।५, ६।१।१५, १६ | गुणनिषेधादि | गौरव |
| ८. | का० | जागुः कृत्यशन्तृङ्व्योः | ४।१।८ | यण्वत् कार्य | साम्य |
| | पा० | जाग्रोऽविचिण्णल्ङित्सु | ७।३।८५ | गुणादेश | ,, |
| ९. | का० | गुणी क्त्वा सेडरुदादि० | ४।१।९ | गुणादेश | लाघव |
| | पा० | न क्त्वा०, पूङः, नोपधात्०, वञ्चि०, तृषिमृषि०, रलो व्युपधाद्० | १।२।१८, २२-२६ | ,, | गौरव |
| १०. | का० | स्कन्दस्यन्द्वोः क्त्वा | ४।१।१० | गुणीभाव | गौरव |
| | पा० | क्त्वि स्कन्दिस्यन्द्वोः | ६।४।३१ | नलोपाभाव | लाघव |
| ११. | का० | व्यञ्जनादेर्व्युपधस्यावो वा | ४।१।११ | वैकल्पिक गुणी क्त्वा | लाघव |
| | पा० | रलो व्युप०, क्ङिति च | १।२।२६, १।५ | किद्वद्भाव, गुणनिषेध | गौरव |
| १२. | का० | तृषिमृषिकृशिवञ्चिलुञ्च्यृतश्च | ४।१।१२ | वैकल्पिक गुणी क्त्वा | लाघव |
| | पा० | वञ्चिलुञ्च्यृतश्च, तृषिमृषि०, क्ङिति च १।२।२४, २५; १।५ | | किद्वद्भाव गुणनिषेध | गौरव |
| १३. | का० | थफान्तानां चानुषङ्गिणाम् | ४।१।१३ | वैकल्पिक गुणी क्त्वा | साम्य |
| | पा० | नोपधात् थफान्ताद् वा | १।२।२३ | वैकल्पिक कित् क्त्वा | ,, |
| १४. | का० | जान्तनशामनिटाम् | ४।१।२३ | वैकल्पिक गुणी क्त्वा | साम्य |
| | पा० | नोपधात् थफान्ताद् वा | १।२। २३ | वैकल्पिक कित् क्त्वा | ,, |
| १५. | का० | शीङ्पूङ्धृषिक्षिदिस्विदिमिदां निष्ठा सेट् | ४।१।१५ | गुणी क्त-क्तवन्तु | लाघव |
| | पा० | निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः | १।२।१९ | किद्भाव का निषेध | गौरव |

| | | | | | |
|---|---|---|---|---|---|
| १६. | का० | मृष: क्षमायाम् | ४।१।१६ | गुणी सेट् निष्ठा | लाघव |
| | पा० | मृषस्तितिक्षायाम् | १।२।२२ | किद्भाव का निषेध | गौरव |
| १७. | का० | भावादिकर्मणोर्वोदुपधात् | ४।१।१७ | वैकल्पिक गुणी सेट् निष्ठा | लाघव |
| | पा० | उदुपधाद् भावादिकर्मणोरन्यतरस्याम् | १।२।२१ | वैकल्पिक कित् निष्ठा | गौरव |
| १८. | का० | ह्लादो ह्रस्व: | ४।१।१८ | आकार को ह्रस्व | साम्य |
| | पा० | ह्लादो निष्ठायाम् | ६।४।९५ | ,, ,, | ,, |
| १९. | का० | छादेर्घेस्मन्त्रन्क्विप्सु च | ४।१।१९ | आकार को ह्रस्व | साम्य |
| | पा० | छादेर्घे०, इस्मन्त्रन्० | ६।४।९६,९७ | ,, ,, | ,, |
| २०. | का० | दीर्घस्योपपदस्यानव्ययस्य खानुबन्धे | ४।१।२० | ह्रस्वादेश | साम्य |
| | पा० | खित्यनव्ययस्य | ६।३।६६ | ,, | ,, |
| २१. | का० | नामिनोऽम् प्रत्ययवच्चैकस्वरस्य | ४।१।२१ | अम् का आगम | साम्य |
| | पा० | इच एकाचोऽम् प्रत्ययवच्च | ६।३।६८ | ,, | ,, |
| २२. | का० | ह्रस्वारुषोर्मोऽन्त: | ४।१।२२ | मकारागम | साम्य |
| | पा० | अरुर्द्विषदजन्तस्य मुम् | ६।३।६७ | मुमागम | ,, |
| २३. | का० | सत्यागदास्तूनां कारे | ४।१।२३ | मकारागम | साम्य |
| | पा० | कारे सत्यागदस्य | ६।३।७० | मुमागम | ,, |
| २४. | का० | गिलेऽगिलस्य | ४।१।२४ | मकारागम | साम्य |
| | पा० | गिलेऽगिलस्य०-गिलगिले चेति वक्तव्यम् | ६।३।७०-वा० | मुमागम | ,, |
| २५. | का० | उपसर्गादसुदुर्भ्यां लभे: प्राग्० | ४।१।२५ | मकारागम | सरलता |
| | पा० | उपसर्गात् खल्घञो:, न सुदुर्भ्यां० | ७।१।६७,६८ | नुम्-अनुस्वार-परसवर्ण | दुरूहता |
| २६. | का० | आङो यि | ४।१।२६ | मकारागम | सरलता |
| | पा० | आङो यि | ७।१।६५ | नुम्-अनुस्वार-परसवर्ण | दुरूहता |
| २७. | का० | उपात् प्रशंसायाम् | ४।१।२७ | मकारागम | सरलता |
| | पा० | उपात् प्रशंसायाम् | ७।१।६६ | नुमागमादि | दुरूहता |
| २८. | का० | वा कृति रात्रे: | ४।१।२८ | मकारागम | सरलता |
| | पा० | रात्रे: कृति विभाषा | ६।३।७२ | मुमागम | दुरूहता |
| २९. | का० | पुरन्दरवाचंयमसर्वंसहद्विषन्तपाश्च | ४।१।२९ | निपातन से सिद्धि | लाघव |
| | पा० | अरुर्द्विषद०, वाचंयमपुरन्दरौ च | ६।३।६७,६९ | ,, | गौरव |
| ३०. | का० | धातोस्तोऽन्त: पानुबन्धे | ४।१।३० | तकारागम | लाघव |
| | पा० | ह्रस्वस्य पिति कृति तुक् | ६।१।७१ | तुगागम | गौरव |
| ३१. | का० | ओदौद्भ्यां कृद् य: स्वरवत् | ४।१।३१ | स्वरवद्भाव | साम्य |
| | पा० | धातोस्तन्निमित्तस्यैव | ६।१।८० | वान्तादेश | ,, |

| | | | | | |
|---|---|---|---|---|---|
| ३२. | का० | जिक्ष्योः शक्ये | ४।१।३२ | स्वरवद्भाव | साम्य |
| | पा० | क्षय्यजय्यौ शक्यार्थे | ६।१।८१ | निपातनविधि | ,, |
| ३३. | का० | क्रीञस्तदर्थे | ४।१।३३ | स्वरवद्भाव | साम्य |
| | पा० | क्रय्यस्तदर्थे | ६।१।८२ | निपातनविधि | साम्य |
| ३४. | का० | वेर्लोपोऽपृक्तस्य | ४।१।३४ | वि-का लोप | साम्य |
| | पा० | वेरपृक्तस्य | ६।१।६७ | ,, | ,, |
| ३५. | का० | य्वोर्व्यञ्जनेऽये | ४।१।३५ | 'य्-व्' का-लोप | साम्य |
| | पा० | लोपो व्योर्वलि | ६।१।६६ | ,, | ,, |
| ३६. | का० | निष्ठेटीनः | ४।१।३६ | इन् प्रत्यय का लोप | साम्य |
| | पा० | निष्ठायां सेटि | ६।४।५२ | णिच् प्रत्यय का लोप | ,, |
| ३७. | का० | नाल्विष्णवाय्यान्तेत्नुषु | ४।१।३७ | इन्-लोप का निषेध | साम्य |
| | पा० | अयामन्ताल्वाय्येत्न्विष्णुषु | ६।४।५५ | अयादेश | ,, |
| ३८. | का० | लघुपूर्वोऽय् यपि | ४।१।३८ | अयादेश | साम्य |
| | पा० | ल्यपि लघुपूर्वात् | ६।४।५६ | ,, | ,, |
| ३९. | का० | मीनात्यादिदादीनामा | ४।१।३९ | आकारादेश | साम्य |
| | पा० | मीनातिमिनोतिदीङां ल्यपि च | ६।१।५० | ,, | ,, |
| ४०. | का० | क्षेर्दीर्घः | ४।१।४० | दीर्घादेश | साम्य |
| | पा० | क्षियः | ६।४।५९ | ,, | ,, |
| ४१. | का० | निष्ठायां च | ४।१।४१ | दीर्घादेश | साम्य |
| | पा० | निष्ठायामण्यदर्थे | ६।४।६० | ,, | ,, |
| ४२. | का० | स्फायः स्फी | ४।१।४२ | स्फी-आदेश | साम्य |
| | पा० | स्फायः स्फी निष्ठायाम् | ६।१।२२ | ,, | ,, |
| ४३. | का० | प्यायः पीः स्वाङ्गे | ४।१।४३ | पी-आदेश | साम्य |
| | पा० | प्यायः पीः | ६।१।२८ | ,, | ,, |
| ४४. | का० | शृतं पाके | ४।१।४४ | निपातनविधि | साम्य |
| | पा० | शृतं पाके | ६।१।२७ | ,, | ,, |
| ४५. | का० | प्रस्त्यः सम्प्रसारणम् | ४।१।४५ | सम्प्रसारण | साम्य |
| | पा० | स्त्यः प्रपूर्वस्य | ६।१।२३ | ,, | ,, |
| ४६. | का० | द्रवघनस्पर्शयोः श्यः | ४।१।४६ | सम्प्रसारण | साम्य |
| | पा० | द्रवमूर्तिस्पर्शयोः श्यः | ६।१।२४ | ,, | ,, |
| ४७. | का० | प्रतेश्च | ४।१।४७ | सम्प्रसारण | साम्य |
| | पा० | प्रतेश्च | ६।१।२५ | सम्प्रसारण | साम्य |
| ४८. | का० | वाऽभ्यवाभ्याम् | ४।१।४८ | वैकल्पिक सम्प्रसारण | साम्य |
| | पा० | विभाषाऽभ्यवपूर्वस्य | ६।१।२६ | वैकल्पिक सम्प्रसारण | साम्य |
| ४९. | का० | न वेज्योर्यपि | ४।१।४९ | सम्प्रसारण का निषेध | साम्य |
| | पा० | ल्यपि च, ज्यश्च | ६।१।४१,४२ | सम्प्रसारण का निषेध | साम्य |

| | | | | | |
|---|---|---|---|---|---|
| ५०. | का० | व्येञश्च | ४।१।५० | सम्प्रसारण का निषेध | साम्य |
| | पा० | व्यश्च | ६।१।४३ | सम्प्रसारण का निषेध | साम्य |
| ५१. | का. | संपरिभ्यां वा | ४।१।५१ | वैकल्पिक सम्प्रसारण | लाघव |
| | पा० | विभाषा परेः | ६।१।४४ | वैकल्पिक सम्प्रसारण | गौरव |
| ५२. | का० | तद् दीर्घमन्त्यम् | ४।१।५२ | दीर्घादेश | साम्य |
| | पा० | हलः | ६।४।२ | दीर्घादेश | साम्य |
| ५३. | का० | वः क्वौ | ४।१।५३ | दीर्घादेश | साम्य |
| | पा० | अन्येषामपि दृश्यते | ६।३।१३७ | दीर्घादेश | साम्य |
| ५४. | का० | ध्याप्योः | ४।१।५४ | दीर्घादेश | उत्कर्ष |
| | पा० | ध्यायतेः सम्प्रसारणं च | ३।२।१७८-वा०,, | | अपकर्ष |
| ५५. | का० | पञ्चमोपधाया धुटि चागुणे | ४।१।५५ | दीर्घादेश | साम्य |
| | पा० | अनुनासिकस्य क्विझलोः क्ङिति | ६।४।१५ | दीर्घादेश | साम्य |
| ५६. | का० | च्छ्वोः शूटौ पञ्चमे च | ४।१।५६ | श् -ऊट् आदेश | साम्य |
| | पा० | च्छ्वोः शूडनुनासिके च | ६।४।१९ | ऊठ् आदेश | साम्य |
| ५७. | का० | श्रिव्यविमविज्वरित्वरामुपधया | ४।१।५७ | ऊट् आदेश | साम्य |
| | पा० | ज्वरत्वरश्रिव्यविमवामुपधायाश्च | ६।४।२० | ऊठ् आदेश | साम्य |
| ५८. | का० | राल्लोप्यौ | ४।१।५८ | 'छ् -व् ' का लोप | साम्य |
| | पा० | राल्लोपः | ६।४।२१ | 'छ् -व् ' का लोप | साम्य |
| ५९. | का० | वनतितनोत्यादिप्रतिषिद्धेटां धुटि पञ्चमोऽच्चातः | ४।१।५९ | लोप-अकारादेश | साम्य |
| | पा० | अनुदात्तोपदेशवनतितनोत्यादीनाम० | ६।४।३७ | लोप-अकारादेश | साम्य |
| ६०. | का० | यपि च | ४।१।६० | पञ्चम वर्ण का लोप | लाघव |
| | पा० | वा ल्यपि | ६।४।३८ | अनुनासिक का लोप | गौरव |
| ६१. | का० | वा मः | ४।१।६१ | मकार का लोप | लाघव |
| | पा० | वा ल्यपि | ६।४।३८ | अनुनासिक का लोप | गौरव |
| ६२. | का० | तिकि दीर्घश्च | ४।१।६२ | दीर्घ-लोपनिषेध | साम्य |
| | पा० | न क्तिचि दीर्घश्च | ६।४।३९ | दीर्घ-लोपनिषेध | साम्य |
| ६३. | का० | उन्देर्मनि | ४।१।६३ | नकार का लोप | लाधव |
| | पा० | अवोदैधौद्मप्रश्रथहिमश्रथाः | ६।४।२९ | निपातनविधि | गौरव |
| ६४. | का० | घञीन्धेः | ४।१।६४ | नकार का लोप | लाघव |
| | पा० | अवोदैधौद्मप्रश्रथहिमश्रथाः | ६।४।२९ | निपातनविधि | गौरव |
| ६५. | का० | स्यदो जवे | ४।१।६५ | निपातनविधि | साम्य |
| | पा० | स्यदो जवे | ६।४।२८ | निपातनविधि | साम्य |
| ६६. | का० | रञ्जेर्भावकरणयोः | ४।१।६६ | नकार का लोप | साम्य |
| | पा० | घञि च भावकरणयोः | ६।४।२७ | नकार का लोप | साम्य |
| ६७. | का० | वुष्-घिणिनोश्च | ४।१।६७ | नकार का लोप | सरलता |
| | पा० | घिनुणि च, रञ्जेरुप०,रजकरजनरजःसूप० | ६।४।२४-वा० | ,, | दुरूहता |

| | | | | | |
|---|---|---|---|---|---|
| ६८. | का० | बृंहेः स्वरेऽनिटि वा | ४।१।६८ | वैकल्पिक नलोप | सरलता |
| | पा० | अनिदितां हल उपधायाः क्ङिति | ६।४।२४ | नलोप की संभावना | दुरूहता |
| ६९. | का० | यममनतनगमां क्वौ | ४।१।६९ | लोप-अकारादेश | सरलता |
| | पा० | गमः क्वौ, गमादीनामिति वक्तव्यम् | ६।४।४०,-वा० | ,, | दुरूहता |
| ७०. | का० | विड्वनोरा | ४।१।७० | आकारादेश | साम्य |
| | पा० | विड्वनोरनुनासिकस्यात् | ६।४।४१ | ,, | साम्य |
| ७१. | का० | धुटि खनिसनिजनाम् | ४।१।७१ | आकारादेश | साम्य |
| | पा० | जनसनखनां सञ्झलोः | ६।४।४२ | आकारादेश | साम्य |
| ७२. | का० | ये वा | ४।१।७२ | वैकल्पिक आकारादेश | साम्य |
| | पा० | ये विभाषा | ६।४।४३ | वैकल्पिक आकारादेश | साम्य |
| ७३. | का० | सनस्तिकि वा | ४।१।७३ | वैकल्पिक आकारादेश | साम्य |
| | पा० | सनः क्तिचि लोपश्चास्यान्यतरस्याम् | ६।४।४५ | वैकल्पिक आकारादेश | साम्य |
| ७४. | का० | स्फुरिस्फुल्योर्घञ्योतः | ४।१।७४ | वैकल्पिक आकारादेश | विधिभेद |
| | पा० | स्फुरतिस्फुलत्योर्घञि | ६।१।४७ | नित्य आकारादेश | विधिभेद |
| ७५. | का० | इज्जहातेः क्त्वि | ४।१।७५ | इकारादेश | साम्य |
| | पा० | जहातेश्च क्त्वि | ७।४।४३ | हि–आदेश | साम्य |
| ७६. | का० | द्यतिस्यतिमास्थां त्यगुणे | ४।१।७६ | इकारादेश | साम्य |
| | पा० | द्यतिस्यतिमास्थामित् ति किति | ७।४।४० | इकारादेश | साम्य |
| ७७. | का० | वा छाशोः | ४।१।७७ | वैकल्पिक इकारादेश | साम्य |
| | पा० | शाछोरन्यतरस्याम् | ७।४।४१ | इकारादेश | साम्य |
| ७८. | का० | दधातेर्हिः | ४।१।७८ | 'हि'–आदेश | साम्य |
| | पा० | दधातेर्हिः | ७।४।४२ | 'हि'–आदेश | साम्य |
| ७९. | का० | चरफलोरुदस्य | ४।१।७९ | उकारादेश | साम्य |
| | पा० | ति च | ७।४।८९ | उकारादेश | साम्य |
| ८०. | का० | दद् दोऽधः | ४।१।८० | दत् आदेश | साम्य |
| | पा० | दो दद् घोः | ७।४। ४६ | दथ् आदेश | साम्य |
| ८१. | का० | स्वरादुपसर्गात् तः | ४।१।८१ | तकारादेश | साम्य |
| | पा० | अच उपसर्गात् तः | ७।४।४७ | तकारादेश | साम्य |
| ८२. | का० | यपि चादो जग्धिः | ४।१।८२ | जग्धि-आदेश | साम्य |
| | पा० | अदो जग्धिर्ल्यप् ति किति | २।४।३६ | जग्धि-आदेश | साम्य |
| ८३. | का० | घञलोर्घस्लृ | ४।१।८३ | घस्लृ-आदेश | साम्य |
| | पा० | घञपोश्च | २।४।३८ | घस्लृ-आदेश | साम्य |
| ८४. | का० | क्तक्तवन्तू निष्ठा | ४।१।८४ | निष्ठासंज्ञा | साम्य |
| | पा० | क्तक्तवतू निष्ठा | १।१।२६ | निष्ठासंज्ञा | साम्य |



| | | | | | |
|---|---|---|---|---|---|
| ८५. | का० | धातोः | ४।२।१ | धात्वधिकार | साम्य |
| | पा० | धातोः | ३।१।९१ | धात्वधिकार | साम्य |
| ८६. | का० | सप्तम्युक्तमुपपदम् | ४।२।२ | उपपद संज्ञा | साम्य |
| | पा० | तत्रोपपदं सप्तमीस्थम् | ३।१।९२ | उपपद संज्ञा | साम्य |
| ८७. | का० | तत् प्राङ् नाम चेत् | ४।२।३ | धातुपूर्व प्रयोग | उत्कर्ष |
| | पा० | उपसर्जनं पूर्वम् | २।२।३० | सम्भावना प्रयोग | अपकर्ष |
| ८८. | का० | तस्य तेन समासः | ४।२।४ | समासविधान | साम्य |
| | पा० | उपपदमतिङ् | २।२।१९ | समासविधान | साम्य |
| ८९. | का० | नाव्ययेनानमा | ४।२।५ | समास-प्राग्भाव का निषेध | साम्य |
| | पा० | अमैवाव्ययेन | २।२।२० | समासविधान का निषेध | साम्य |
| ९०. | का० | तृतीयादीनां वा | ४।२।६ | वैकल्पिक समास-प्राग्भाव | साम्य |
| | पा० | तृतीयाप्रभृतीन्यन्यतरस्याम् | २।२।२१ | वैकल्पिक समास-प्राग्भाव | साम्य |
| ९१. | का० | कृत् | ४।२।७ | कृत् संज्ञा | साम्य |
| | पा० | कृदतिङ् | ३।१।९३ | कृत् संज्ञा | साम्य |
| ९२. | का० | वाऽसरूपोऽस्त्रियाम् | ४।२।८ | बाधकविधान | साम्य |
| | पा० | वाऽसरूपोऽस्त्रियाम् | ३।१।९४ | बाधकविधान | साम्य |
| ९३. | का० | तव्यानीयौ | ४।२।९ | तव्य-अनीय प्रत्यय | लाघव |
| | पा० | तव्यत्तव्यानीयरः | ३।१।९६ | तव्यत् आदि प्रत्यय | गौरव |
| ९४. | का० | स्वराद् यः | ४।२।१० | य-प्रत्यय | साम्य |
| | पा० | अचो यत् | ३।१।९७ | यत् -प्रत्यय | साम्य |
| ९५. | का० | शकिसहिपवर्गान्ताच्च | ४।२।११ | य-प्रत्यय | साम्य |
| | पा० | पोरदुपधात् ,शकिसहोश्च | ३।१।९८,९९ | यत्-प्रत्यय | साम्य |
| ९६. | का० | आत्खनोरिच्च | ४।२।१२ | य-प्रत्यय, इकारादेश | लाघव |
| | पा० | अचो यत्, ईद् यति, ई च खनः | ३।१।९७,६।४।६५, ३।१।१११ | ,, | गौरव |
| ९७. | का० | यमिमदिगदां त्वनुपसर्गे | ४।२।१३ | य-प्रत्यय | साम्य |
| | पा० | गदमदचरयमश्चानुपसर्गे | ३।१।१०० | यत्-प्रत्यय | साम्य |
| ९८. | का० | चरेराङि चागुरौ | ४।२।१४ | य-प्रत्यय | उत्कर्ष |
| | पा० | गदमदचरयम०, चरेराङि चागुरौ | ३।१।१००-वा० | यत् -प्रत्यय | अपकर्ष |
| ९९. | का० | पण्यावद्यवर्या विक्रेयगर्ह्यानिरोधेषु | ४।२।१५ | निपातनविधि | साम्य |
| | पा० | अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु | ३।१।१०१ | निपातनविधि | साम्य |
| १००. | का० | वह्यं करणे | ४।२।१६ | निपातनविधि | साम्य |
| | पा० | वह्यं करणम् | ३।१।१०२ | निपातनविधि | साम्य |
| १०१. | का० | अर्यः स्वामिवैश्ययोः | ४।२।१७ | निपातनविधि | साम्य |
| | पा० | अर्यः स्वामिवैश्ययोः | ३।१।१०३ | निपातनविधि | साम्य |
| १०२. | का० | उपसर्या काल्या प्रजने | ४।२।१८ | निपातनविधि | साम्य |
| | पा० | उपसर्या काल्या प्रजने | ३।१।१०४ | निपातनविधि | साम्य |

| | | | | | |
|---|---|---|---|---|---|
| १०३. | का० | अजर्यं सङ्गते च | ४।२।१९ | निपातनविधि | साम्य |
| | पा० | अजर्यं सङ्गतम् | ३।१।१०५ | निपातनविधि | साम्य |
| १०४. | का० | नाम्नि वदः क्यप् च | ४।२।२० | क्यप् -य प्रत्यय | साम्य |
| | पा० | वदः सुपि क्यप् च | ३।१।१०६ | क्यप् -यत् प्रत्यय | साम्य |
| १०५. | का० | भावे भुवः | ४।२।२१ | क्यप् प्रत्यय | साम्य |
| | पा० | भुवो भावे | ३।१।१०७ | क्यप् प्रत्यय | साम्य |
| १०६. | का० | हनस्त च | ४।२।२२ | क्यप् -तकारादेश | साम्य |
| | पा० | हनस्त च | ३।१।१०८ | क्यप्-तकारादेश | साम्य |
| १०७. | का० | वृञ्दृजुषीण्शासुस्तुगुहां क्यप् | ४।२।२३ | क्यप् प्रत्यय | साम्य |
| | पा० | एतिस्तुशास्वृदृजुषः क्यप् | ३।१।१०९ | क्यप् प्रत्यय | साम्य |
| १०८. | का० | ऋदुपधाच्चाक्लृपिचृतेः | ४।२।२४ | क्यप् प्रत्यय | साम्य |
| | पा० | ऋदुपधाच्चाक्लृपिचृतेः | ३।१।११० | क्यप् प्रत्यय | साम्य |
| १०९. | का० | भृञोऽसंज्ञायाम् | ४।२।२५ | क्यप् प्रत्यय | साम्य |
| | पा० | भृञोऽसंज्ञायाम् | ३।१।११२ | क्यप् प्रत्यय | साम्य |
| ११०. | का० | ग्रहोऽपिप्रतिभ्यां वा | ४।२।२६ | क्यप् प्रत्यय | उत्कर्ष |
| | पा० | प्रत्यपिभ्यां ग्रहेश्छन्दसि | ३।१।११८ | क्यप् प्रत्यय | अपकर्ष |
| १११. | का० | पदपक्ष्ययोश्च | ४।२।२७ | क्यप् प्रत्यय | साम्य |
| | पा० | पदास्वैरिबाह्यापक्ष्येषु च | ३।१।११९ | क्यप् प्रत्यय | साम्य |
| ११२. | का० | वौ नीपूङ्भ्यां कल्कमुञ्जयोः | ४।२।२८ | क्यप् प्रत्यय | उत्कर्ष |
| | पा० | विपूयविनीयजित्या मुञ्जकल्कहलिषु | ३।१।११७ | निपातनविधि | अपकर्ष |
| ११३. | का० | कृवृषिमृजां वा | ४।२।२९ | क्यप् प्रत्यय | लाघव |
| | पा० | मृजेर्विभाषा, विभाषा कृवृषोः | ३।१।११३,१२० | क्यप् प्रत्यय | गौरव |
| ११४. | का० | सूर्यरुच्याव्यथ्याः कर्तरि | ४।२।३० | निपातनविधि | साम्य |
| | पा० | राजसूयसूर्यमृषोद्यरुच्यकुप्य० | ३।१।११४ | निपातनविधि | साम्य |
| ११५. | का० | भिद्योद्ध्यौ नदे | ४।२।३१ | निपातनविधि | साम्य |
| | पा० | भिद्योद्ध्यौ नदे | ३।१।११५ | निपातनविधि | साम्य |
| ११६. | का० | पुष्यसिध्यौ नक्षत्रे | ४।२।३२ | निपातनविधि | साम्य |
| | पा० | पुष्यसिध्यौ नक्षत्रे | ३।१।११६ | निपातनविधि | साम्य |
| ११७. | का० | युग्यं पत्रे | ४।२।३३ | निपातनविधि | साम्य |
| | पा० | युग्यं च पत्रे | ३।१।१२१ | निपातनविधि | साम्य |
| ११८. | का० | कृष्टपच्यकुप्ये संज्ञायाम् | ४।२।३४ | निपातनविधि | साम्य |
| | पा० | राजसूयसूर्यमृषोद्यरुच्य० | ३।१।११४ | निपातनविधि | साम्य |
| ११९. | का० | ऋवर्णव्यञ्जनान्ताद् घ्यण् | ४।२।३५ | घ्यण् प्रत्यय | साम्य |
| | पा० | ऋहलोर्ण्यत् | ३।१।१२४ | ण्यत् प्रत्यय | साम्य |
| १२०. | का० | आसुयुवपिरपिलपित्रपिदभिचमां च | ४।२।३६ | घ्यण् प्रत्यय | साम्य |
| | पा० | आसुयुवपिरपिलपित्रपिचमश्च | ३।१।१२६ | ण्यत् प्रत्यय | साम्य |

| | | | | | |
|---|---|---|---|---|---|
| १२१. | का० | उवर्णादावश्यके | ४।२।३७ | घ्यण् प्रत्यय | साम्य |
| | पा० | ओरावश्यके | ३।१।१२५ | ण्यत् प्रत्यय | साम्य |
| १२२. | का० | पाधोर्मानसामिधेन्योः | ४।२।३८ | घ्यण् प्रत्यय | साम्य |
| | पा० | पाय्यसान्नाय्यनिकाय्यधाय्या मान० | ३।१।१२९ | ण्यत् प्रत्यय | साम्य |
| १२३. | का० | प्राङोर्नियोऽसम्मतानित्ययो० | ४।२।३९ | घ्यण् -स्वरवद्भाव | साम्य |
| | पा० | आनाय्योऽनित्ये, प्रणाय्योऽसंमतौ | ३।१।१२६,१२८ | निपातनविधि | साम्य |
| १२४. | का० | सञ्चिकुण्डपः क्रतौ | ४।२।४० | घ्यण् प्रत्यय | साम्य |
| | पा० | क्रतौ कुण्डपाय्यसञ्चाय्यौ | ३।१।१३० | ण्यत् प्रत्यय | साम्य |
| १२५. | का० | राजसूयश्च | ४।२।४१ | निपातनविधि | साम्य |
| | पा० | राजसूयसूर्यमृषोद्यरुच्य० | ३।१।११४ | निपातनविधि | साम्य |
| १२६. | का० | सान्नाय्यनिकाय्यौ हविर्निवासयोः | ४।२।४२ | निपातनविधि | साम्य |
| | पा० | पाय्यसान्नाय्यनिकाय्यधाय्या० | ३।१।१२९ | निपातनविधि | साम्य |
| १२७. | का० | परिचाय्योपचाय्यावग्नौ | ४।२।४३ | निपातनविधि | साम्य |
| | पा० | अग्नौ परिचाय्योपचाय्यसमूह्याः | ३।१।१३० | निपातनविधि | साम्य |
| १२८. | का० | चित्याग्निचित्ये च | ४।२।४४ | निपातनविधि | साम्य |
| | पा० | चित्याग्निचित्ये च | ३।१।१३२ | निपातनविधि | साम्य |
| १२९. | का० | अमावस्या वा | ४।२।४५ | निपातनविधि | साम्य |
| | पा० | अमावस्यदन्यतरस्याम् | ३।१।१२२ | ,, ,, | साम्य |
| १३०. | का० | ते कृत्याः | ४।२।४६ | कृत्यसञ्ज्ञा | साम्य |
| | पा० | कृत्याः प्राङ् ण्वुलः | ३।१।९५ | ,, | साम्य |
| १३१. | का० | वुण्तृचौ | ४।२।४७ | वुण्-तृच् प्रत्यय | साम्य |
| | पा० | ण्वुल्तृचौ | ३।१।१३३ | ण्वुल्-तृच् प्रत्यय | साम्य |
| १३२. | का० | अच् पचादिभ्यश्च | ४।२।४८ | अच् प्रत्यय | साम्य |
| | पा० | नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः | ३।१।१३४ | अच् प्रत्यय | साम्य |
| १३३. | का० | नन्द्यादेर्युः | ४।२।४९ | यु-प्रत्यय | साम्य |
| | पा० | नन्दिग्रहिपचादिभ्यो० | ३।१।१३४ | ल्यु-प्रत्यय | साम्य |
| १३४. | का० | ग्रहादेर्णिन् | ४।२।५० | णिन् प्रत्यय | साम्य |
| | पा० | नन्दिग्रहिपचादिभ्यो० | ३।१।१३४ | णिन् प्रत्यय | साम्य |
| १३५. | का० | नाम्युपधप्रीकृगृज्ञां कः | ४।२।५१ | क-प्रत्यय | साम्य |
| | पा० | इगुपधज्ञाप्रीकिरः कः | ३।१।१३५ | क-प्रत्यय | साम्य |
| १३६. | का० | उपसर्गे त्वातो डः | ४।२।५२ | ड-प्रत्यय | साम्य |
| | पा० | आतश्चोपसर्गे | ३।१।१३६ | ड-प्रत्यय | साम्य |
| १३७. | का० | धेड्दृशिपाघ्राध्मः शः | ४।२।५३ | श-प्रत्यय | साम्य |
| | पा० | पाघ्राध्माधेट्दृशः शः | ३।१।१३७ | श-प्रत्यय | साम्य |
| १३८. | का० | साहिसातिवेद्युदेजिचेति० | ४।२।५४ | श-प्रत्यय | साम्य |
| | पा० | अनुपसर्गाल्लिम्पबिन्दधारि० | ३।१।१३८ | श-प्रत्यय | साम्य |

